विश्वेश्वरानन्द-वैदिकशोध-संस्थान-प्रकाशनम् —२७७
V. V. Research Institute Publication —277



विश्वेश्वरानन्द-भारतभारती-ग्रन्थमाला-२०
Vishveshvaranand Indological Series—20

संपादकः — विश्वबन्धुः
Editor — VISHVA BANDHU





भारते होशिआरपुरे वि. वै. शो. सं. मुद्रागृहे ।
शास्त्रिणा देवदत्तेन संमुद्राप्य प्रकाश्यते ॥

Printed and Published by DEV DUTTA SHASTRI
at the V. V. R. I. Press, Hoshiarpur (Pb., India)

V. I. Series—20

# ṚGVEDA

*with*

The Padapāṭha and the available portions of the Bhāṣya-s by Skandasvāmin and Udgītha, the Vyākhyā by Veṅkaṭamādhava and Mudgala's Vṛtti based on Sāyaṇa-bhāṣya

*Edited,*

Critically, and annotated with text-comparative data from original manuscripts and other available materials

*By*

VISHVA BANDHU

*In collaboration with*

BHĪM DEV, AMAR NĀTH, K. S. RĀMASWĀMI SĀSTRĪ AND PĪTĀMBAR DATTA

## PART II

(Maṇḍala I, Sūkta-s 81—191)

HOSHIARPUR

Vishveshvaranand Vedic Research Institute

1963

वि. भाभा. ग्रन्थमाला—२०

# ऋग्वेदः

स च

पदपाठेन च यथोपलम्भं **स्कन्दस्वाम्युद्गीथीये** भाष्ये, **वेङ्कटमाधवीया** व्याख्या, **सायण**भाष्यानुसारिणी **मुद्गलीया** वृत्तिर् इत्येतैश्च पाठविमर्शौपयिकैः पाठभेदादिटिप्पणैश्च संयोज्य

भीमदेवः, अमरनाथः, के. एस्. रामस्वामिशास्त्री, पीताम्बरदत्त इत्येषां सायुज्यभाजा

**विश्वबन्धुना**

संपादितः



तत्र चाऽयं

प्रथममण्डलस्य ८१–१९१ सूक्तात्मकः

२यो भागः



होशिआरपुरम्

विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्

२०२० वि.

प्रथमं संस्करणम्, २०२० वि.

प्रकाशकृत् — विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्,
साधु-आश्रमः (प.गृ.), होशिआरपुरम् (पं., भारतम्)।



FIRST EDITION, 1963

*Publishers:*

**Vishveshvaranand Vedic Research Institute,**
**Sadhu Ashram (P.O.), Hoshiarpur (Pb. India)**





Prepared and Published under the Patronage of the Government of India in the Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.

अथ

# ऋग्वेदे सभाष्ये

## प्रथमं मण्डलम्

### [ ८१ ]

इन्द्रो मदा॑य वावृधे॒ शव॑से वृत्र॒हा नृभि॑ः ।
तमिन्म॒हत्स्वा॒जिषू॒तेम॒र्भे॑ हवामहे॒ स वाजे॑षु॒ प्र नो॑ऽविषत् ॥ १ ॥

इन्द्र॑ः । मदा॑य । व॒वृ॒धे॒ । शव॑से । वृ॒त्र॒ऽहा । नृऽभि॑ः ।
तम् । इत् । म॒हत्ऽसु॑ । आ॒जिषु॑ । उ॒त । ई॑म् । अर्भे॑ । ह॒वा॒म॒हे॒ । सः । वाजे॑षु । प्र । न॒ः । अ॒वि॒ष॒त् ॥ १ ॥

**स्कन्द०** 'चत्वार्यैन्द्राणि सूक्तानि' चत्वार्येतानीन्द्रदेवत्यानि । तमिन्महत्सु इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यः इन्द्रः मदाय वव्रृधे स्तोमेन स्तुतिभिश्च वर्धते । शवसे बलाय च । वृत्रहा नृभिः यष्टृभिर्मनुष्यैः[1] । तम् वयम् महत्सु आजिषु सङ्ग्रामेषु उत अर्भे अल्पे । हवामहे सङ्ग्रामे आह्वयामः । आहूतश्च सन् सः वाजेषु सङ्ग्रामेषु प्र नः अविषत् प्रकर्षेण अस्मान् रक्षतु ॥ १ ॥

**वेङ्कट०**

[2]'इन्द्रो मदा॑य वावृधे' [3]माधवो व्याचिकीर्षति[3] ।
सर्वानुदात्तशब्दानाम् आदावर्थं प्रदर्शयन् ॥ १ ॥

भवन्ति सर्वानुदात्ता आदेशा युष्मदस्मदोः ।
भवन्ति चेद्वाक्यमध्ये वाम्नौ वो नश्च तेमयौ ॥ २ ॥

'ऋचां त्वः पोष॑म्'[4] इत्यादौ त्वशब्दश्च निहन्यते ।
चादीनां वाक्यमध्यस्थाश् चवाहस्मादयस्तथा[5] ॥ ३ ॥

उदाहरणमेतेषां बाहुल्यान्न प्रदर्श्यते ।
'हिर॑ण्यकर्णम्' इत्यस्मात् 'मणिग्रीवं[6]' निहन्यते ॥ ४ ॥

लौकिकाः कथयन्त्यर्थान् म्लेच्छैः शब्दैश्च साधुभिः[7] ।
उच्चैः प्रयुञ्जते कांश्चित् पदार्थानन्यथाऽपरान् ॥ ५ ॥

यथा घटश्च रज्जुश्च चार्थो नीचैः प्रयुज्यते ।
स्थाणुर्वा पुरुषो वेति वार्थश्चैव तथाविधः ॥ ६ ॥

---

१. नास्ति ति. २. पृ ३५६ * द्र. ३-३. व्याचिख्यासति माधवः अ. ४. ऋ १०,७१,११.
५. 'इचवाहाहावदय॰ वि[1] लपं; ॰श्चवाहामादयः वि[2]. ६. ऋ १,१२२,१४. ७. शब्दैरसाधुभिः ल शोधः.

अर्थस्वभावात्सर्वेषां शब्दानामुच्चनीचता ।
स्वभावं तं विजानन्ति लौकिका न त्वलौकिका. ॥ ७ ॥

य उदात्ता निपातेषु नूनंह्येवकिलादयः ।
उच्चैः प्रदर्शनीयोऽर्थस्तेषामिति विनिश्चयः ॥ ८ ॥

उदात्तेषूपसर्गेषु तदर्थः प्रस्फुटो भवेत् ।
समस्तेष्वनुदात्तानां नीचैरर्थं प्रदर्शयेत् ॥ ९ ॥

विस्पष्टमुक्तमेतच्च प्रागाख्यातार्थनिर्णये[1] ।
'हिर॑ण्यकर्णम्[2]' इत्यत्र कारणं तत्र वक्ष्यते ॥१०॥ इति[3] ।

गोतमः । इन्द्रः सोमाय ववृधे । बलाय च शत्रुहा[4] मरुद्भिः । तम् एव महत्सु सङ्ग्रामेषु अपि चाल्पे सङ्ग्रामे हवामहे । सः अस्मान् युद्धेषु[5] प्ररक्षतु ॥ १ ॥

मुद्गल० 'इन्द्रो मदाय' इति नवर्चमष्टमं सूक्तम् । रहूगणपुत्रः गोतम ऋषिः । पङ्क्तिश्छन्दः । इन्द्रो देवता ॥

वृत्रहा वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्य हन्ता इन्द्रः मदाय हर्षार्थम् शवसे बलार्थं च नृभिः यज्ञस्य नेतृभिर्ऋत्विग्भिः ववृधे स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या हि देवता प्राप्तबला सती प्रवर्धते । तम् इत् तमेवेन्द्रम् महत्सु प्रभूतेषु आजिषु सङ्ग्रामेषु हवामहे अस्माकं रक्षणायाऽऽह्वयामहे । उत अपि च ईम् एनम् अर्भे अल्पे सङ्ग्रामे हवामहे[6] । अस्माभिराहूतः सः च इन्द्रः वाजेषु सङ्ग्रामेषु नः अस्मान् प्र अविषत् प्रावतु प्रकर्षेण रक्षतु ॥ १ ॥

**असि॒ हि वी॑र॒ सेन्यो॑ऽसि॒ भूरि॑ पराद॒दिः ।**
**असि॑ द॒भ्रस्य॑ चिद् वृ॒धो यज॑मानाय शिक्षसि सुन्व॒ते भूरि॑ ते॒ वसु॑ ॥ २ ॥**

असि॑ । हि । वी॒र॒ । सेन्यः॑ । असि॑ । भूरि॑ । प॒रा॒ऽद॒दिः ।
असि॑ । द॒भ्रस्य॑ । चि॒त् । वृ॒धः । यज॑मानाय । शि॒क्ष॒सि॒ । सु॒न्व॒ते । भूरि॑ । ते॒ । वसु॑ ॥ २ ॥

स्कन्द० हि-शब्दः पदपूरणः । असि भवसि त्वं हे वीर ! सेन्यः स्वामिन्ययमिदमर्थे यत्प्रत्ययो[7] द्रष्टव्यः । मरुदादिसेनानां पतिः । अथवा 'सेन्यशब्दोऽत्र सेव्यवचनः[8] । 'असेन्या वः पणयो वचांसि' ( ऋ १०,१०८,६ ) इति यथा । सेन्यः सर्वस्य असि न कस्यचित्सेवक इत्यर्थः । असि भूरि परादद्दिः पराशब्दोऽत्र सु इत्येतस्य स्थाने । 'यो अर्यो मर्तभोजनं परादादाति' ( ऋ १,८१,६ ) इति यथा । बहुधनस्य[9] सुष्ठु शोभनं[10] वा दाता असि । अथवा । 'मा नो मघेव निष्षपी परा दाः' ( ऋ १,१०४,५ ) इत्यादिषु दर्शनात् परादादातिः विनाशार्थः ।

---

१. प्रख्यातार्थविनिर्णये वि[2]. २. ऋ १,१२२,१४. ३. नास्ति अ[1] वेंकअ. ४. नास्ति वि[1] अ[1]. ५. युद्धे वि[1] अ[2]. ६. नास्ति मूको. ७. यप्रत्य° मूको. ८-८. °शब्दो सेन्य° ति. ९. बहुवचनस्य धनस्य ति. १०. °भनां अ; °भनो ति.

बहुनोऽपि शत्रुबलस्य विनाशयिताऽसीत्यर्थः। असि दभ्रस्य चित् वृधः अल्पस्यापि च[1] स्वाश्रितस्य वर्धयिताऽसि। यजमानाय शिक्षसि ददासि धनानि सुन्वते सोमाभिषवं कुर्वते। भूरि ते वसु बहु ते[2] धनम्। प्रभूतधनश्चासीत्यर्थः ॥ २ ॥

**वेङ्कट०** असि हि वीर! सेनाह्ः। असि च भूरेर्धनस्य परादाता[3]। असि क्षुद्रस्य वर्धयिता। यजमानाय वसु प्रयच्छसि सुन्वते। भूरि च ते[4] धनम् इति[5] ॥ २ ॥

**मुद्गल०** हे वीर! शत्रुक्षेपणकुशलेन्द्र! त्वम् सेन्यः सेनाह्ः असि भवसि। त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः। हि यस्मादेवं तस्मात् भूरि प्रभूतं शत्रूणां धनम् परादविः परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता असि भवसि। दभ्रस्य चित् अल्पस्यापि तव स्तोतुः वृधः वर्धयिता असि। तथा यजमानाय सुन्वते यागं कुर्वते पुरुषाय शिक्षसि अपेक्षितं धनं ददासि। यस्मात् ते तव वसु धनम् भूरि बहुलमक्षय्यं[6] विद्यते, तस्मात् ददासीति भावः ॥ २ ॥

यदुदीरत आजयो धृष्णवे धीयते धना।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ३ ॥

यत्। उत्ऽईरते। आजयः। धृष्णवे। धीयते। धना।
युक्ष्व। मदऽच्युता। हरी इति। कम्। हनः। कम्। वसौ। दधः। अस्मान्। इन्द्र। वसौ। दधः ॥ ३ ॥

**स्कन्द०** यत् यदा उदीरते [7]प्रेरयन्ति। उच्चारयन्ति[7] तव स्तुतीरित्यर्थः। के। आजयः आजिशब्दः सङ्ग्रामवचनः (तु० निघ २, १७)। तात्स्थ्याच्चात्र[8] ताच्छब्द्यं द्रष्टव्यम्। मञ्चाः क्रोशन्तीति यथा। सङ्ग्रामस्था योद्धारः। धृष्णवे अभिभवित्रे च योद्ध्रे[9]। धीयते धना द्वितीयैकवचनस्यायम् आकार आदेशः। धनम्। अथवैवमन्यथास्यार्धर्चस्यार्थयोजना। यदोदीरते उदीर्यन्ते [10]उच्चार्यन्ते इत्यर्थः[10]। आजयः। अजेर्गत्यर्थस्येदं रूपम्। त्वां प्रति गन्त्र्यः स्तुतयः। धृष्णवे च तुभ्यम् धीयते[11] धना। धिनोतेः प्रीणनार्थस्य रूपम्। धना आहुतिरिहाभिप्रेता। प्रीणयित्री सोमाहुतिरित्यर्थः। यदेति वचनात् तदेत्यध्याहार्यम्। तदा[12] युक्ष्व स्वरथे नियुङ्क्ष्व मदच्युता च्यवतिर्गतिकर्मा (तु. निघ २,१४)। मदकरं सोमं प्रति गन्तारौ हरी। युक्त्वा[13] च आगत्य कम् हनः कम् वसौ दधः कञ्चिज्जहि कञ्चिद्धने[14] स्थापय। यो हन्तव्यस्तं जहि, यस्मै धनं दातव्यं तस्मै धनं देहीत्यर्थः। तत्र च अस्मान् इन्द्र! वसौ दधः ॥ ३ ॥

**वेङ्कट०** यदा उत्तिष्ठन्ति[16] सङ्ग्रामाः[17] तदानीम् धृष्णवे[18] योद्ध्रे धनानि दीयन्ते, तुभ्यं हवींषि। स त्वम् योजय सोमं प्रति गन्तारौ स्वाश्वौ। योजयित्वा च [19]कम् चन जहि[19] कम् चन अर्थे स्थापय[20]। तत्रास्मान् इन्द्र! धने स्थापयेति[5] ॥ ३ ॥

---

१. नास्ति कु; चार्थे अ. २. नास्ति अ कु. ३. दाता वि[1] अ[2]. ४. नास्ति वि[1]. ५. नास्ति कु. ६. °य्यं धनम् मै[1]. ७-७. °यति उच्चारयति कु. ८. °च्चात्र ति. ९. °द्ध्रे परिदृष्टस्यापि अ. १०-१०. °च्चारयन्त्वित्यर्थः मूको. ११. दीयते अ. १२. नास्ति अ. १३. नास्ति ति. १४. युङ्क्ष्व मूको. १५. °द्धनेन ति. १६. °ति वि[1]; तिष्ठ° वि[1] अ[1]. १७. °मः वि[1]. १८. °वे अभिभवित्रे वि[1] अ[2]. १९-१९. नास्ति वि[1]. २०. स्वाश्रय वि[1] अ[2].

मुद्गल० अत्रेदमाख्यानम्—रहूगणपुत्रो गोतमः कुरुसृञ्जयानां राज्ञां पुरोहित आसीत्। तेषां राज्ञां परैः सह युद्धे सति स ऋषिः अनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति। यत् यदा आजयः सङ्ग्रामाः उदीरते उद्गच्छन्ति उत्पद्यन्ते, तदानीम् धना धनम् धृष्णवे यो धृष्णुर्धर्षयिता शत्रूणां जेता भवति तस्मै धीयते निधीयते। जयतो धनं भवतीत्यर्थः। हे इन्द्र! त्वं तादृशेषु युद्धेषु प्रवृत्तेषु मदच्युता शत्रूणां मदस्य गर्वस्य च्यावयितारौ हरी त्वदीयावश्वौ युक्ष्व रथे योजय। योजयित्वा च कम् कञ्चित् राजानं तव परिचरणमकुर्वन्तम् हनः हन्याः। कम् कञ्चन त्वां परिचरन्तम् वसौ वसुनि धने दधः स्थापयसि। अतो जयपराजययोस्त्वमेव कारयिताऽसि। तस्मात् हे इन्द्र! अस्मान् अस्मदीयान् राज्ञः वसौ धने दधः स्थापय॥ ३॥

**क्रत्वा॑ म॒हाँ अ॑नु॒ष्व॒धं भी॒म आ वा॑वृधे॒ शवः॑।**
**श्रि॒य ऋ॒ष्व उ॑पा॒कयो॒र्नि शि॒प्री हरि॑वान् दधे॒ हस्त॑यो॒र्वज्र॑माय॒सम्॥ ४॥**

क्रत्वा॑। म॒हान्। अ॒नु॒ऽस्व॒धम्। भी॒मः। आ। व॒वृ॒धे॒। शवः॑।
श्रि॒ये। ऋ॒ष्वः। उ॒पा॒कयोः॑। नि। शि॒प्री। हरि॑ऽवान्। द॒धे॒। हस्त॑योः। वज्र॑म्। आ॒य॒सम्॥ ४॥

स्कन्द० क्रत्वा कर्मणा महान् अनुष्वधम् अन्विति पश्चाद्भावे। 'स्वधा' (निघ २,७) इत्यन्ननाम। सोमलक्षणस्यान्नस्य पश्चात्। सोमपानानन्तरमित्यर्थः। भीमः भयानकः। आ ववृधे आभिमुख्येन वर्धयति। आत्मीयम् शवः। सोमं पीत्वा बलवान् भवतीत्यर्थः। श्रिये श्यर्थं च। ऋष्वः वीर्येण शरीरेण वा महान्। कस्य श्यर्थम्। उच्यते। उपाकयोः 'उपाके' (निघ २,१६) इत्यन्तिकनाम। अत्र तु[1] तात्स्थ्यात् द्यावापृथिव्योर्वर्तते। अन्तिकस्थयोः द्यावापृथिव्योः। कस्य पुनः द्यावापृथिव्यावन्तिकस्थे। इन्द्रस्य। तथाह्यसौ ते उभे अपि क्षणेनैकेन[2] सञ्चरते। अथवा परस्परस्यान्तिकस्थे द्यावापृथिव्यौ। यावद्धि मक्षिकायाः पत्रं तावत् द्यावापृथिव्योरन्तरम् इत्युपनिषद्विदः[3] पौराणिकाश्चाचक्षते। तेनोपपन्नमनयोः परस्परान्तिकस्थानत्वम्। शिप्री 'शिप्रे हनू नासिके वा' (या ६,१७)। तद्वान्। अथवा 'शिप्राः शीर्षसु वितताः' (ऋ ५,५४,११) इति प्रयोगदर्शनात्[4] शिप्राशब्दः शिरस्त्राणवचनः। तद्वान् शिप्री। हरिवान् इन्द्रः नि दधे निधत्ते स्थापयति[5] हस्तयोः वज्रम् आयसम्। इन्द्रो हि वृष्ट्यर्थं हस्ताभ्यां वज्रं गृह्णाति। वृष्ट्युत्तरकालं हि द्यौर्विमला सम्पन्नसस्या[6] च [7]पृथिवी श्रीमत्यौ भवतः। अत एतदुच्यते—श्रिय ऋष्व उपाकयोः इति[7]॥ ४॥

वेङ्कट० कर्मणा महान् सोमपानानन्तरम् भीमः वर्धयति बलम् श्यर्थं दर्शनीयः। अन्तिकयोरुभयोः पार्श्वस्थयोः हस्तयोः आयसम् आयुधम् नि दधे [8]हनूमान् हरिवान्[8]॥ ४॥

मुद्गल० क्रत्वा कर्मणा महान् सर्वाधिकः भीमः शत्रूणां भयङ्कर इन्द्रः अनुष्वधम् 'स्वधा' इत्यन्ननाम। स्वधायाम्। विभक्त्यर्थेऽव्ययीभावः। सोमलक्षणान्नस्य पाने सतीत्यर्थः। शवः आत्मीयं

१. नास्ति ति. २. लक्षणे° अ. ३. °पनिषदः ति. ४. दर्शनात् लि. ५. °यति इति अ लि. ६. आपन्न° ति. ७-७. नास्ति कु. ८-८. हरिवान् हनुमान् वि[1-2] अ[1-2] ल लपं; °हनु° वि[3] अ[3].

बलम् आ वव्रृधे आभिमुख्येन प्रावर्धयत् । तदनन्तरम् ऋष्वः दर्शनीयः शिप्री शिप्रे हनू तद्युक्तः हरिवान् अश्वोपेत इन्द्रः उपाकयोः समीपवर्तिनोः हस्तयोः बाह्वोः आयसम् अयोमयम् वज्रम् श्रिये सम्पदर्थम् नि दधे निदधाति स्थापयति। सोमपानेन हृष्टः प्रबल इन्द्रः शत्रूणां हननाय हस्ते वज्रं गृह्णातीति तात्पर्यार्थः ॥ ४ ॥

**आ प॑प्रौ पार्थि॑वं॒ रजो॑ बद्ब॒धे रो॑च॒ना दि॒वि ।**
**न त्वावाँ॑ इन्द्र॒ कश्च॒न न जा॒तो न ज॑निष्यते॒ऽति॒ विश्वं॑ ववक्षिथ ॥५॥**

आ । प॒प्रौ । पार्थि॑वम् । रजः॑ । ब॒द्ब॒धे । रो॒च॒ना । दि॒वि ।
न । त्वाऽवा॑न् । इन्द्र॒ । कः । च॒न । न । जा॒तः । न । ज॒नि॒ष्य॒ते । अति॑ । विश्व॑म् । व॒व॒क्षि॒थ ॥५॥

**स्कन्द०** [1]आ पप्रौ आपूरयति पार्थिवम् रजः लोकम् । केन । सामर्थ्याद् वृष्टिद्वारेण† । बद्बधे बध्नाति[1] । रोचना दीप्तानि नक्षत्रादीनि । क्व[2] । दिवि द्युलोके । नक्षत्रादीनां हि दिवि व्यवस्थितानां [3]धर्मो मूलम्[3] । स च वृष्टिमूलम् । अत इदमुच्यते[4] । बद्बधे रोचना दिवीति । तदेतत् गोषूक्ती चाश्वसूक्ती च वक्ष्यतः । [5]"इन्द्रेण रोचना दिवो दृळ्हानि' (ऋ ८,१४,९) इति । अथवा बद्बधे रोचनेति[5] आदित्योऽत्र रोचनोऽभिप्रेतः । द्वितीयैकवचनस्यायमाकारादेशः । महत्तमस्तन्वन्तं[6] वृत्रं हत्वा दर्शनार्थं दिवि सूर्यमारोपितवानित्यर्थः । [7]तदेतत् सव्येनाप्युक्तम्[7] । 'वृत्रं यदिन्द्र' (ऋ १,५१,४) इत्यादिना । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । न त्वावान् त्वत्सदृश[6] इदानीं तावत् हे इन्द्र! न[6] कः [7]चन कश्चिदपि[7] । न पूर्वस्मिन् काले जातः । न अप्यागामिकाले जनिष्यते । किं तर्हि । अति विश्वम् ववक्षिथ अतीत्युपसर्गात् विश्वमिति कर्मश्रुतेर्योग्यक्रियापदाध्याहारः । ववक्षिथेत्यपि च यद्यपि वक्तेर्वा वहतेर्वा साभ्यासस्य रूपम् । तथापि[8] 'ववक्षिथ, विवक्षस' (निघ ३, ३) इति महन्नामसु पाठात् वचनवहनयोश्चासम्भवादनेकार्थतायाश्च धात्वन्तराणामपि प्रसिद्धत्वात् ववक्षतिर्महद्भावार्थः । अतीत्य सर्वास्त्वं[9] महान् भवसीत्यर्थः ॥ ५ ॥

**वेङ्कट०** आपूरयामास पार्थिवम् लोकं कामैः । बबन्ध दिवि नक्षत्राणि । न त्वत्सदृशः इन्द्र! । न[10] कः चिदपि जातः । [11]न अपि[11] जनिष्यते । अतिवहसि [12]स त्वं[12] सर्वम्[13] ॥ ५ ॥

**मुद्गल०** इन्द्रः स्वतेजसा पार्थिवम् पृथिव्याः सम्बन्धि वस्तुजातम् रजः अन्तरिक्षलोकञ्च आ पप्रौ आपूरयति । तथा दिवि द्युलोके रोचना रोचमानानि दीप्तानि नक्षत्राणि बद्बधे बबन्ध स्थापितवान् । अतो हे इन्द्र! न त्वावान् त्वत्सदृशः कः चन नास्ति[6] । न जातः नोत्पन्नोऽस्ति । न च जनिष्यते । उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वम् विश्वम् सर्वं रक्षितव्यं जगत् अति ववक्षिथ अतिशयेन वोढुमिच्छसि । सर्वस्य जगतो निर्वाहको भवसीत्यर्थः[14] ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये प्रथमो वर्गः ॥

---

१-१. नास्ति अ.　† °द्वारेण च ति.　२. क्वचित् अ ति.　३-३. धर्ममूलं ति.　४. °ते वृष्टिद्वारेण ति.
५-५. नास्ति ति.　६. नास्ति मूको.　७-७. नास्ति मूको.　८. तथापि अ; नास्ति ति.　९. सर्वस्त्वम् अ; सर्वांश्च ति.　१०. नास्ति वि[1] अ[2].　११-११. नास्ति लपं　१२-१२. नास्ति वि[1] अ[2] लपं.
१३. °र्वम् त्वमेव वहसीत्यर्थः वि[1] अ[2].　१४. °र्थः न पूरणः मूको.

यो अर्यो मर्तभोजनं परादर्दाति दाशुषे ।
इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥ ६ ॥

यः । अर्यः । मर्तऽभोजनम् । पराऽददाति । दाशुषे ।
इन्द्रः । अस्मभ्यम् । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ॥ ६ ॥

**स्कन्द०** यः अर्यः ईश्वरः मर्तभोजनम् 'भोजनम्' ( निघ २,१० ) इति धननाम । उपभोग्यशब्दपर्यायो वा । मनुष्योपभोग्यं धनं मनुष्योपभोग्यं वान्नादि[1] । पराददाति परेत्येष सु इत्येतस्य स्थाने । सुष्ठु ददाति । दाशुषे यजमानाय । यच्छब्दाद् तच्छब्दश्चाध्याहार्यः । सः इन्द्रः अस्मभ्यम् अपि शिक्षतु ददातु । वयमपि हि दाश्वांस एवेत्यर्थः । परस्तु ऋक्शेषः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । विभजाऽऽत्मीयं धनं स्तोतृभ्यो यष्टृभ्यश्च । कस्मात् । उच्यते । यस्मात्[2] भूरि ते वसु प्रभूतं तव धनम् । तस्मिंश्च विभागेऽहमपि भक्षीय भजेय । लभेयेत्यर्थः । तव स्वभूतस्य राधसः । षष्ठीनिर्देशादेकदेशमिति शेषः[3] । विभजमानो मह्यमपि भागं[4] देहीत्यर्थः ॥ ६ ॥

**वेङ्कट०** यः[5] उदारः मनुष्याणां भोजनमन्नं प्रयच्छति यजमानाय । सः[6] इन्द्रः अस्मभ्यम् ददातु । 'वि भज इन्द्र ! बहु हि ते धनम् । अहं तव धनम् भजेय ॥ ६ ॥

**मुद्गल०** अर्यः स्वामी यः इन्द्रः मर्तभोजनम् सर्वैर्मनुष्यैरुपभोग्यमन्नम्[7] दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय पराददाति प्रयच्छति सः इन्द्रः अस्मभ्यम् शिक्षतु तादृशमन्नं ददातु । अवशिष्टपादद्वयं प्रत्यक्षकृतम् । हे इन्द्र ! अस्मभ्यं दातुं धनम् वि भज विभक्तं कुरु । यतः ते तव वसु धनम् भूरि बहुलमसंख्यातमतः तव राधसः धनस्यैकदेशम् भक्षीय भजेय प्राप्नुयाम् ॥ ६ ॥

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥ ७ ॥

मदेऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः ।
सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ॥ ७ ॥

**स्कन्द०** मद इति 'यस्य च भावेन' ( पा २,३,३७ ) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः[8] । मदेमदे प्राप्ते । सोमेन मत्तो मत्तस्सन्नित्यर्थः । हि-शब्दस्तु पदपूरणः । नः[9] अस्मभ्यम् ददिः दाता । यूथा यूथानि गवाम् बह्वीर्गाः[10] इत्यर्थः । ऋजुक्रतुः ऋजुकर्मा ऋजुप्रज्ञो वा इन्द्रः । परोऽर्धर्चो भिन्नं वाक्यम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता योज्या । यस्त्वं ददिः यूथा गवां सः सम् गृभाय सम्यक् गृहाण[11] । पुरु शता [12]बहूनि शतानि[12] । उभयाहस्त्या उभाभ्यां हस्ताभ्याम् । कस्य पुरु शता । उच्यते । वसु षष्ठ्यर्थे प्रथमैषा । वसूनां धनानाम् । गृहीत्वा च शिशीहि श्यतिः संस्कारार्थः । संस्कुरु ।

---

१. वान्नाद्यादि ति. २. नास्ति ति. ३. वाक्यशेषः ति. ४. विभागं ति. ५. नास्ति वि[१]. ६. नास्ति वि[१]. ७. °भोज्यम° मूको सा. ७. °ध्याहार्यः ति. ८. नास्ति अ. ९. यह्वी° ति. १०. ग्रहणाय ति. १०-१०. बहुशता ति.

दानयोग्यानि कुर्वित्यर्थः । संस्कृत्य च रायः धनानि आ भर आहर । देह्यस्मभ्यमित्यर्थः ॥ ७ ॥

**वेङ्कट०** सोमस्य मदेमदे हि अस्मभ्यं दाता गोयूथानाम् ऋजुकर्मा । स त्वं पुरूणि शतानि धनानि[1] सङ्गृहाण । सङ्गृह्य चोभाभ्यां हस्ताभ्याम् आ भर वसूनि । धनेन[2] चास्मान् तीक्ष्णीकुरु[3] ॥ ७ ॥

**मुद्गल०** मदेमदे सोमपानेन हर्षेहर्षे सति ऋजुक्रतुः ऋजुकर्मा स इन्द्रः नः अस्मभ्यम् गवाम् यूथा ददिः हि गोयूथानां दाता खलु । हे इन्द्र! स त्वम् पुरु पुरूणि प्रभूतानि शता शतसंख्याकानि । अपरिमितानीत्यर्थः । वसु वसूनि धनानि उभयाहस्त्या उभाभ्यां हस्ताभ्याम् सम् गृभाय अस्मभ्यं दातुं सम्यक् गृहाण । शिशीहि अस्मान् तीक्ष्णीकुरु । निशितबुद्धियुक्तान् कुर्वित्यर्थः । रायः धनानि हस्तयोः स्थितानि आ भर आहर प्रयच्छ ॥ ७ ॥

मादयस्व सुते सचा शवसे शूर राधसे ।
विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥ ८ ॥

मादयस्व । सुते । सचा । शवसे । शूर । राधसे ।
विद्म । हि । त्वा । पुरुऽवसुम् । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥ ८ ॥

**स्कन्द०** मादयस्व तृप्यस्व सुते सचा सह सर्वैर्ऋत्विग्भिरभिषुतेऽस्मिन् सोमे । अथवा सचेत्येतन्मादयस्वेत्येतेन सम्बध्यते । सह तृप्यस्व । केन । सामर्थ्यात् स्वसखैर्मरुद्भिः । किमर्थम् । उच्यते । शवसे हे[4] शूर ! राधसे च । आत्मनो बलं प्राप्तुमस्मभ्यं च धनं दातुमित्यर्थः । किञ्च विद्म हि त्वा हिशब्दो यस्मादर्थे । यस्माज्जानीमः त्वाम्[5] । पुरुवसुम् बहुधनम् । यस्मादिति वचनात् तस्मादित्यध्याहार्यम्[6] । तस्मात् कामान् उप ससृज्महे उपसृजामः त्वयि निक्षिपामः । यावत्किंचिद् याच्यं[7] तत्[8] 'सर्वं त्वां[9] याचामह इत्यर्थः । [10]यतश्चैतदेवम् अथ[10] एतस्मात्कारणात् नः अस्माकम् अविता तैस्तैर्धनैस्तर्पयिता[11] भव । तानि धनानि देहीत्यर्थः ॥ ८ ॥

**वेङ्कट०** मादयस्व अस्मान् सुते सोमे सहायभूतः बलेन च धनेन च । विद्म हि त्वाम्[12] बहुधनम् अतस्त्वयि कामान् अभिलषितान् उपसृजामः । अथ अस्माकम् अविता भव ॥ ८ ॥

**मुद्गल०** हे शूर! शौर्यवन्निन्द्र! सुते सोमेऽभिषुते सति आगत्य सचा अस्माकं सखा सन् मादयस्व तेन सोमेन तृप्तो भव । किमर्थम् । शवसे बलार्थम् राधसे अस्माकं धनार्थं च । त्वा त्वाम् पुरुवसुम् बहुधनम् विद्म हि वयं जानीमः खलु । अतः अस्मदीयान् कामान् मात्रा गवा वत्सानिव त्वया उप ससृज्महे हि । त्वया खल्वेकीकुर्मः । अथ अनन्तरम् नः अस्माकम् अविता अभिलषितफलप्रदानेन रक्षिता भव ॥ ८ ॥

---

१. नास्ति वि[1]. २. धनानि वि[1] अ[2]. ३. °कुरु संस्कुरु दानयोग्यान् कुरु वि[1] अ[1]. ४. नास्ति अ. ५. तम् अ कु. ६. °हार्यः अ; तदेत्यध्या° ति. ७. वाच्यम् अ. ८. नास्ति अ ति. ९-९. सर्वस्वम् ति. १०-१०. त्रुटितम् ति. ११. तैर्ध° अ. १२. त्वा वि[1] अ[2].

एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।
अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥ ९ ॥

एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् ।
अन्तः । हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः । वेदः । आ । भर ॥९॥

**स्कन्द०** एते ते तव। साकाङ्क्षत्वात् प्रसादेनेति[1] वाक्यशेषः। तव वा स्वभूताः हे इन्द्र! जन्तवः मनुष्याः विश्वम् पुष्यन्ति वार्यम् 'वारि' ( निघ १,१२ ) इत्युदकनाम। तत्र भवम्। यावत् किंचिदुदकभवं तत् सर्वं त्वत्प्रभवया वृष्ट्या पुष्णन्तीत्यर्थः। किञ्च अन्तः[2] हि अन्तःशब्दोऽत्र तात्स्थ्यात् अन्तस्थे मनसि वर्तते। हिशब्दो यस्मादर्थे। ख्यः इति चष्टेः पश्यतिकर्मणः ख्यादेशः। यस्मादत्यन्तभक्तं मनः अन्तस्थं पश्यसि। भक्ततां जानासीत्यर्थः। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्मात् तेषाम् अदाशुषाम् स्वभूतम् नः अस्माकम् अर्थाय वेदः धनम् आ भर आहर[2]। अभक्तानां[3] धनमाहृत्य भक्तेभ्यः[4] अस्मभ्यं देहीत्यर्थः ॥ ९ ॥

**वेङ्कट०** अमी तव स्वभूताः मनुष्याः विश्वम् धनम् पुष्यन्ति। त्वम् हि अयजमानानां धनम् ईश्वरः अन्तः [5]ख्यः। अन्तःपूर्वः[5] ख्यातिस्तिरोधानार्थः। तेषाम् धनम् अस्मभ्यम् आ भर ॥ ९ ॥

**मुद्गल०** हे इन्द्र! ते तव स्वभूताः एते जन्तवः यजमानलक्षणा जनाः विश्वम् सर्वम् वार्यम् सर्वैर्भजनीयं हविः पुष्यन्ति वर्धयन्ति। अदाशुषाम् हविषामदातॄणाम् जनानाम् अन्तः मध्ये विद्यमानम् वेदः धनम्[6] अर्यः सर्वेषां स्वामी त्वम् ख्यः हि पश्यसि हि। जानासीत्यर्थः। तेषाम् अयजमानानाम् वेदः धनम् नः अस्मभ्यम् आ भर आहर, प्रयच्छेति यावत्। अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वात् व्यर्थमेव भवेत्। अतस्तस्य धनस्य सार्थकत्वाय[7] तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः ॥ ९ ॥

इति प्रथमाष्टके षष्ठाध्याये द्वितीयो वर्गः ॥

## [ ८२ ]

उपो षु शृणुही गिरो मघवन् मातथा इव ।
यदा नः सूनृतावतः कर आदर्थयास इद् योजा न्विन्द्र ते हरी ॥ १ ॥

उपो इति । सु । शृणुहि । गिरः । मघऽवन् । मा । अतथाःऽइव ।
यदा । नः । सूनृताऽवतः । करः । आत् । अर्थयासे । इत् । योज । नु । इन्द्र । ते । हरी इति ॥१॥

**स्कन्द०** उप इत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। उपगम्य सुष्ठु शृणुहि अस्मदीया गिरः। हे[8] मघवन्!

---

१. सप्रसा° ति. २. नास्ति कु. ३. भक्तानाम् ति. ४. नास्ति ति. ५-५. ख्यातः भक्तमन्तः ख्यः पश्यसि भक्तं जानासीत्यर्थः पूर्वं वि° भ°. ६. नास्ति मै°. ७. °त् यत् मूको. ८. नास्ति भ.

मा अतथाः इव तनु विस्तारे । आगमनविषयश्चात्र विस्तारोऽभिप्रेतः, नान्यः । मा गमनविस्तारं कार्षीः[1] । शीघ्रमागच्छ मा विलम्बिष्ठा इत्यर्थः । इवशब्दस्तु अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः ( तु. या ७,३१ ) इति पदपूरणः । यदा नः अस्मान् सूनृतावतः 'सूनृता' ( निघ २,७ ) इत्यन्ननाम । अन्नवतः[2] । करः करिष्यसि । यदाऽस्मभ्यमन्नं दास्यसीत्यर्थः । आत् तदा । इत्-शब्दस्तु पदपूरणः । अर्थयासे प्रार्थयेथाः । किम् । सामर्थ्याद्धविः । इदानीं तु निर्धनानामस्माकं स्तुतीरेव केवलाः शृण्वित्यर्थः । तदर्थम् योज[3] रथे नियुङ्क्ष्व । नु क्षिप्रं हे इन्द्र! ते तव स्वभूतौ योग्यौ वा हरी ॥ १ ॥

**वेङ्कट०** उप एव शृणुहि स्तुतीः । मघवन्! मा भूस्त्वमसत्य[4] इव । यदा त्वम् अस्मान् स्तुतिमतः करोषि, अनन्तरमेव[5] त्वं[6] स्तुतीः प्रार्थयसे । एवं तत् तव व्रतम् । [7]मा इदानीम्[7] अतथाः इव भूः । योजय[8] शीघ्रमश्वाविहाऽऽगमनाय ॥ १ ॥

**मुद्गल०** 'उपो षु' इति षडृचं नवमं सूक्तम्[1] । गोतम ऋषिः[1] । अन्त्या जगती[1] । आद्याः पङ्क्तयः । इन्द्रो देवता[1] ॥

हे मघवन्! धनवन्निन्द्र! गिरः अस्मदीयाः स्तुतीः उपो उपैव सु शृणुहि उपगत्य सम्यक् शृणु । अतथाः इव पूर्वं यथाविधस्त्वं तद्विपरीतः मा भूः । अस्मासु पूर्वं[10] यथाऽनुग्रहबुद्धियुक्तस्तथाविध एव भवेत्यर्थः । अपि च नः अस्मान् सूनृतावतः प्रियसत्यात्मिका वाक् सूनृता । तया स्तुतिरूपया वाचा युक्तान् यदा करः करोषि । आत् अनन्तरं त्वमपि अर्थयासे इत् अर्थयस एव [11]याचयस एव[11], न तूदास्से । अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः । अतो हे इन्द्र! ते हरी त्वदीयावश्वौ नु क्षिप्रम् योज रथे योजय ॥ १ ॥

**अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।**
**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ २ ॥**

अक्षन् । अमीमदन्त । हि । अव । प्रियाः । अधूषत ।
अस्तोषत । स्वऽभानवः । विप्राः । नविष्ठया । मती । योज । नु । इन्द्र । ते । हरी इति ॥२॥

**स्कन्द०** वृद्धिश्राद्धिकश्रावणेऽस्या[12] ऋचो विनियोगः । अक्षन् इति अदेर्भक्षणार्थस्यायं लुङि घस्लादेशः । वृद्धिश्राद्धान्नं भक्षितवन्तः अमीमदन्त हि । मादयतिस्तृप्त्यर्थः, हिशब्दस्तु[13] पदपूरणः चार्थे वा । तृप्ताश्च[14] । के । सामर्थ्यात् पितरः । कीदृशाः । प्रियाः इष्टाः[1] । कस्य । सामर्थ्यादस्माकं भवतो वेन्द्रस्य वा । अव[15] अधूषत धूञ् कम्पने । कम्पितवन्तश्च । किम् । अतितृप्त्या वा स्वगात्रमस्मान् वा । परिचर्यावैगुण्यभयेन सुष्ठ्वाध्याताः[16] यत्नेन वाऽस्माभिः परिचरिता इत्यर्थः । अस्तोषत स्तुताश्चास्माभिः स्वभानवः स्वदीप्तयः । अपराश्रयविभूतय इत्यर्थः । विप्राः मेधाविनः । नविष्ठया मती मन्यतिरर्चतिकर्मा ( तु. निघ ३.१४ )। नवतमया स्तुत्या । कृतवृद्धिश्राद्धा यागयोग्या इति समस्तार्थः ।

---

१. नास्ति ति.   २. नवतः अ.   ३. योजय अ.   ४. °त्यम् वि[3] अ[2].   ५. °मेव एव ल.   ६. नास्ति वि[3] अ[2]; एवं ल.   ७-७. नेदा° मूको.   ८. °यसि वि[3] अ[2].   ९. नास्ति मे[2].   १०. पूर्व्यम् मूको.   ११-११. नास्ति मे[2].   १२. अक्षवृद्धि° मूको.   १३. °शब्दः अ.   १४. °तृप्तार्थश्च अ.   १५. नास्ति मूको.   १६. सुष्ठु आध्मा° कु ति.

एतत् ज्ञात्वाऽस्मद्यज्ञमागन्तुम् योज। अथवैवमन्यथास्या ऋचोऽर्थयोजना। अक्षन्नमीमदन्त च प्रियाः[1] तव। के। सामर्थ्यात्त्वदनुचरा मरुदादयः। मादयित्वा च[2] अवाधूषत भयेन कम्पितवन्तः शत्रून्। अस्तोषत स्तुताश्चास्माभिः स्वभानवः विप्राश्च। अथवा अयमात्मन[3] एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः। स्तुतवन्तश्च[4] वयं भवन्तम् इत्यर्थः। स्वभानवः भवत्प्रसादादपराश्रयविभूतयः। विप्राश्च। सानुचरस्य भवतो वयं यागं स्तुतीश्च कृतवन्तः [5]इति समस्तार्थः[5]। [6]एतत् ज्ञात्वा† स्वगृहं गन्तुं योज[6] ॥ २ ॥

**वेङ्कट०** भुक्तवन्तः तृप्ताश्चासन्[7]। [8]भुक्तशिष्टाश्च इषः[8] अवधूतवन्तः। अस्तोषत त्वाञ्च स्वदीप्तयः मेधाविनः नवतरया स्तुत्या तव स्तोतार इति[9] ॥ २ ॥

**मुद्गल०** हे इन्द्र! त्वया दत्तान्यन्नानि अक्षन् यजमाना भुक्तवन्तः। भुक्त्वा च अमीमदन्त हि तृप्ताश्चासन्। प्रियाः स्वकीयास्तनूः अव अधूषत अकम्पयन् आस्वादनहर्षेण। तदनन्तरम् स्वभानवः स्वायत्तदीप्तयः विप्राः मेधाविनस्ते नविष्ठया नवितृतमया मती मत्या स्तुत्या अस्तोषत अस्तुवन्। अन्यत् पूर्ववत् ॥ २ ॥

सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥ ३ ॥

सुऽसंदृशम्। त्वा। वयम्। मघऽवन्। वन्दिषीमहि।
प्र। नूनम्। पूर्णऽवन्धुरः। स्तुतः। याहि। वशान्। अनु। योज। नु। इन्द्र। ते। हरी इति ॥३॥

**स्कन्द०** [10]सुखं शोभनो वा यः संदृश्यते स सुसंदृक् तम्† सुसंदृशम् ‡त्वा त्वाम्‡ वयम् हे मघवन्! वन्दिषीमहि। स्तुतवन्त इत्यर्थः[10]। एतत् ज्ञात्वा नूनम् निश्चयेन। पदपूरणो वा नूनंशब्दः। पूर्णवन्धुरः रथस्य सारथिस्थानं वन्धुर इत्युच्यते[11]। तत्[12] पूर्णं यस्य स पूर्णवन्धुरः। मातलिना स्वसारथिनाधिष्ठितरथ इत्यर्थः। स्तुतः सन्[13] अस्माभिः प्र याहि वशान् अनु वश कान्तौ। कान्तान् देशान् प्रति। यत्रेष्टं तत्रेत्यर्थः। मा विलम्बिष्ठाः। किं तर्हि। योज ॥ ३ ॥

**वेङ्कट०** सुष्ठु स्तोतॄन् संपश्यन्तम् त्वा वयम् मघवन्! स्तुमः। प्र याहि क्षिप्रम् पूर्णवन्धुरः[14] स्तुतः स्तोतृभिः मनुष्यान् प्रति। रथः पूर्णवन्धुरो[14] भवति [15]स्थित इन्द्र इति[15] ॥ १३ ॥

**मुद्गल०** हे मघवन्! इन्द्र! सुसंदृशम् सुष्ठु अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम् त्वा त्वाम् वयम् वन्दिषीमहि स्तुवीमहि स्तुतिकर्तारो भूयास्मेत्याशास्महे। अस्माभिर्वन्दिभिः स्तुतः त्वम् पूर्णवन्धुरः स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन् वशान् अनुकामयमानान् यजमानान् प्रति नूनम् प्र याहि अवश्यं प्रतिष्ठस्व। योज इत्यादि पूर्ववत्[16] ॥ ३ ॥

---

१. प्रियः कु. २. नास्ति अ कु. ३. यदात्म° ति. ४. स्तुव° मूको. ५-५. इत्यर्थः ति. ६-६. नास्ति अ. † °त्वा नूनं निश्चयेन ति. ७. °सन् प्रिया इषः वि[1] अ[2]. ८-८. शिष्टा° वि[1]; °ष्टात्व(?स्त्वि)षो वि[1] अ[2]. ९. नास्ति कु. १०-१०. नास्ति अ. † नास्ति ति. ‡-‡ त्वा ति. ११. उच्यते अ कु. १२. तम् अ. १३. सः ति. १४. °बन्धुरः ल. १५-१५. स्थितः कु. १६. °त् सु सद्दशमिति मै[2].

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ ४ ॥

सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति । गोऽविदम् ।
यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति । योज । नु । इन्द्र । ते । हरी इति ॥ ४ ॥

**स्कन्द०** घ इति पदपूरणः, एवार्थे वा । सः एव तम् तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यस्तवात्मन आरोहणः[1] तम् । वृषणम् वर्षितारम् रथम् अधि तिष्ठाति [2]त्वत्प्रसादात्त्वदनुचरभूतः सन् आरोहति[2] । गोविदम् सास्नादिमतीनां गवामुदकानां वा लब्धारम्[3] । यः[4] किं करोति । उच्यते । यः पात्रम् हारियोजनम् हरी योजनौ यस्य स हरियोजनः इन्द्रः । तद्देवत्यं [5]हारियोजनम् । सोमस्य पूर्णम्[5] हे इन्द्र ! चिकेतति जानाति । ज्ञानेन चात्र तत्पूर्वकं[6] करणं लक्ष्यते । ज्ञात्वा करोतीत्यर्थः । त्वमपि च तस्यैव यागेषु गन्तुम् योज ॥ ४ ॥

**वेङ्कट०** सः खलु तम्[7] त्वदीयम् रथम् कामानां वर्षितारं पशूनां लम्भयितारम् अधितिष्ठति । यः पात्रम् हारियोजनाख्यं सोमपूर्णं तव हरिवतः प्रज्ञापयति ॥ ४ ॥

**मुद्गल०** सः घ स खल्विन्द्रः वृषणम् कामाभिवर्षकम् गोविदम् गवां लम्भयितारम् तम् रथम् अधि तिष्ठाति ईदृशे रथेऽधितिष्ठतु आरूढो भवतु । हे इन्द्र ! यः रथः हारियोजनम् एतत्संज्ञकं धानामिश्रितम् पूर्णम् सोमेन पूर्णम् पात्रम् चिकेतति ज्ञापयति, तं रथमधितिष्ठेति पूर्वेणान्वयः । अधिष्ठाय हे इन्द्र ! ते हरी त्वदीयावश्वौ नु क्षिप्रम् योज योजय ॥ ४ ॥

युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।
तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ॥ ५ ॥

युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतो इति शतऽक्रतो ।
तेन । जायाम् । उप । प्रियाम् । मन्दानः । याहि । अन्धसः । योज । नु । इन्द्र । ते । हरी इति ॥ ५ ॥

**स्कन्द०** युक्तः ते[8] अस्तु रथस्य दक्षिणः दक्षिणपार्श्वस्थो [9]हरिः, उत सव्यः हे[9] शतक्रतो ! । तेन सव्येन[10] दक्षिणेन च हरिणा तद्युक्तेन[10] वा रथेनात्मीयाम् जायाम् प्रियाम् उप याहि मन्दानः[11] भूतेऽयं वर्तमानकालप्रत्ययो द्रष्टव्यः । तृप्तः । केन । [9]उच्यते । अन्धसः तृतीयार्थे[9] षष्ठ्येषा । सोमलक्षणेनान्नेन । मा च[12] विलम्बिष्ठाः । किं तर्हि । योज ॥ ५ ॥

**वेङ्कट०** युक्तः ते अस्तु[13] दक्षिणपार्श्वस्थोऽश्वः, अपिच सव्यपार्श्वस्थः । तेन रथेनेहागतः पीतसोमः सन् अभिमताम् इन्द्राणीं सोमेन तृप्यन् उपगच्छ ॥ ५ ॥

---

१. °हणम् अ. २-२. देवयुमिति अ. ३. °ब्धारः ति. ४. नास्ति कु ति. ५-५. नास्ति अ. ६. ···पूर्व° ति. ७. त्वम् कु. ८. नास्ति ति. ९. सव्यं च ति. १०. युक्तेन ति. ११. त्रुटितम् ति. १२. चिद कु; नास्ति वि[1] अ[2].

**मुद्गल०** हे शतक्रतो! बहुकर्मन्निन्द्र! ते त्वदीये रथे दक्षिणः दक्षिणपार्श्वस्थोऽश्वः युक्तः अस्तु। उत अपि च सव्यः वामपार्श्वस्थोऽपि युक्तोऽस्तु। तेन रथेन अन्धसः सोमलक्षणस्यान्नस्य पानेन मन्दानः मत्तस्त्वम् प्रियाम् प्रीणयित्रीम् जायाम् उप याहि। सा यत्र वर्तते तत्र गच्छेत्यर्थः। तदर्थं हे इन्द्र! त्वदीयावश्वौ रथे क्षिप्रं योजय। अनयोत्तरया च पीतसोमस्येन्द्रस्य गृहं प्रति प्रस्थानं प्रतिपाद्यते[1] ॥ ५ ॥

युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः।
उत त्वा सुतासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदः ॥ ६ ॥

युनज्मि। ते। ब्रह्मणा। केशिना। हरी इति। उप। प्र। याहि। दधिषे। गभस्त्योः।
उत। त्वा। सुतासः। रभसाः। अमन्दिषुः। पूषण्ऽवान्। वज्रिन्। सम्। ऊँ इति। पत्न्या। अमदः॥

**स्कन्द०** युनज्मि ते तव स्वभूतेन स्तुतिलक्षणेन ब्रह्मणा तृतीयानिर्देशात् स्तुवन्निति[2] वाक्यशेषः। केशिना[3] केशवन्तौ हरी। ताभ्यां युक्ताभ्यां स्वगृहं प्रति उप प्र याहि। कस्मात्। उच्यते। यस्मात्[4] दधिषे धारयसि। किम्। सामर्थ्यात् 'नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम्' (ऋ १,८१,४) इत्यादिषु दर्शनाच्च वज्रम्। क्व। गभस्त्योः बाहुनामैतत् (तु. निघ २,४)। इह तु तत्सम्बन्धात् हस्तयोर्वर्तते। यस्माद्वज्रहस्तोऽसि। वज्रहस्तत्वाच्च न ते कश्चिद्गमनप्रतिबन्धे वर्तितुं शक्नोतीत्यर्थः। यस्माच्च त्वा त्वाम् सुतासः अभिषुताः अस्मदीयाः सोमाः रभसाः। महन्नामैतत् (तु. निघ ३,३)। महान्तः। उत् अमन्दिषुः उन्मदितवन्तः। स्त्रीसम्भोगाभिलाषिणं कृतवन्त इत्यर्थः। गत्वा च पूषण्वान् पूषन्-शब्दोऽत्र पुष्टिवचनः। अस्मदीयैः सोमैरुत्पादितबलः सन्नित्यर्थः। हे वज्रिन्! सम् उ पत्न्या अमदः उकारः पदपूरणः। पत्नीशब्दोऽपि भार्यावचनः। स्वभार्यया सह सममदः[5] सम्मोदस्व। क्रीडेत्यर्थः ॥ ६ ॥

**वेङ्कट०** 'उपो षु शृणुहि' (ऋ १,८२,१) इत्यादिना मन्त्रेण तव अश्वौ रथे योजयामि प्रशस्तकेशौ। ताभ्यां त्वम् उप प्र याहि। त्वं हि स्वहस्तयोः[6] धारयसि[7] धनम्। त्वाम् सुताः सोमा तीव्राः उत् अमन्दिषुः। स त्वं पूष्णा पत्न्या सह मादयेति[8] ॥ ६ ॥

**मुद्गल०** हे इन्द्र! केशिना केशयुक्तौ शिखावन्तौ ते हरी त्वदीयावश्वौ ब्रह्मणा स्तोत्ररूपेण मन्त्रेण युनज्मि रथे संयोजयामि। तेन रथेन उप प्र याहि त्वद्गृहमुपगच्छ[9]। गभस्त्योः बाह्वोरश्वबन्धकान् रश्मीन् दधिषे धारयस्व। त्वा त्वाम् सुतासः यज्ञेऽभिषुताः सोमाः रभसाः वेगवन्तः। तीव्राः क्षिप्रं मदकारिण इत्यर्थः। उत् अमन्दिषुः उत्कृष्टमदयुक्तमकार्षुः। हे वज्रिन्! अतस्त्वं स्वगृहं गत्वा पूषण्वान् सोमपानजनितया पुष्ट्या युक्तः सन् पत्न्या स्वभार्यया सह सम् अमदः सम्यगेव तृप्तो भव ॥ ६ ॥

इति प्रथमाष्टके षष्ठाध्याये तृतीयो वर्गः ॥

---

१. प्रतिपद्यते मूको. २. °वन्तीति अ. ३. नास्ति अ. ४. नास्ति ति. ५. सम्मदः अ कु. ६. स हस्तयोः वि[1,2] अ[1] ल लर्प; हस्तयोः वि[3] अ[2] कु. ७. °ति वि[1,2] अ[2] कु ल लर्प. ८. मादय कु. ९. °मुपागच्छ मूको.

[ ८३ ]

अश्वा॑वति प्रथ॒मो गोषु॑ गच्छति सुप्रा॒वीरि॑न्द्र॒ मर्त्य॒स्तवो॒तिभि॑ः ।
तमित् पृ॑णक्षि॒ वसु॑ना॒ भवी॑यसा॒ सिन्धु॑मापो॒ यथा॒भितो॒ विचे॑तसः ॥ १ ॥

अश्व॑ऽवति । प्र॒थ॒मः । गोषु॑ । ग॒च्छ॒ति॒ । सु॒प्र॒ऽअ॒वीः । इन्द्र॑ । मर्त्यः॑ । तव॑ । ऊ॒तिऽभिः॑ ।
तम् । इत् । पृ॒ण॒क्षि॒ । वसु॑ना । भवी॑यसा । सिन्धु॑म् । आपः॑ । यथा॑ । अ॒भितः॑ । वि॒ऽचे॑तसः ॥ १ ॥

**स्कन्द०** अश्वावति[1] **अश्वसहिते**[2] । **क** । **सामर्थ्यात् अन्ने** । प्रथमः **अग्र्यः** । गोषु **च**[3] गच्छति **प्राप्नोति** । **अश्वसहितमन्नं गाश्च सर्वप्रथमं**[4] **लभत इत्यर्थः** । सुप्रावीः **शोभनः**[5] **प्राविता** [6]**रक्षिता त्वं यस्य स**[6] **सुप्रावीः** । हे इन्द्र ! मर्त्यः **मनुष्यः** तव ऊतिभिः **पालनैः**[7] । **तृतीयानिर्देशात् पाल्यमान इति वाक्यशेषः** । **यस्त्वयाऽऽत्मीयैः पालनैः पाल्यत इत्यर्थः** । तम् **एव त्वम्** पृणक्षि **पृची सम्पर्केऽन्यत्र** । **इह तु सामर्थ्यात् पूरणार्थः** । **पूरयसि** । वसुना **धनेन** । भवीयसा **भूयसा बहुतरेण**[3] । सिन्धुम् आपः यथा **सिन्धुर्नदी,**[8] **तां यथा आपः** अभितः विचेतसः **विविधप्रज्ञानाः पूरयन्ति तद्वत्** ॥ १ ॥

**वेङ्कट०** अश्वावति **गृहे प्रथममेव** गोषु गच्छति **सुष्ठु**[9] **प्ररक्ष्यमाणः**[10] इन्द्र ! मर्त्यः [11]तव **रक्षणैः**[11] । तम् **एव त्वं पूरयसि धनेन बहुतरेण** । सिन्धुम् आपः यथा **विविधं ज्ञायमाना नानादिग्भ्यः**[12] **समागताः** अभितः **पूरयन्ति** ॥ १ ॥

**मुद्गल०** **'अश्वावति' इति षडृचं दशमं** [13]**सूक्तम्** । **गोतम ऋषिः** । **जगती छन्दः** । **इन्द्रो देवता**[13] ॥

हे इन्द्र ! **यः** मर्त्यः **मनुष्यः** तव ऊतिभिः **त्वदीयैः रक्षणैः** सुप्रावीः **सुष्ठु प्ररक्षितो भवति** । **स मर्त्यः** अश्वावति **बहुभिरश्वैर्युक्ते गृहे वर्तमानः** गोषु **प्राप्तव्येषु** प्रथमः गच्छति । **सर्वेभ्यो यजमानेभ्यः पूर्वमेव गोमान् भवतीत्यर्थः** । **त्वम्** तम् इत् **तमेव पुरुषम्** भवीयसा **बहुतरेण शतसहस्रादिसंख्यायुक्तेन** वसुना **धनेन** पृणक्षि **सम्पृक्तं सम्पूर्णं करोषि** । **दृष्टान्तः** । विचेतसः **विशिष्टज्ञानहेतुभूताः** आपः यथा अभितः **सर्वासु दिक्षु** सिन्धुम् **समुद्रं पूरयन्ति तद्वत्** ॥ १ ॥

आपो॒ न दे॒वीरुप॑ यन्ति हो॒त्रिय॑म॒वः प॑श्यन्ति॒ वित॑तं॒ यथा॒ रजः॑ ।
प्रा॒चैर्दे॒वासः॒ प्र ण॑यन्ति देव॒युं ब्र॑ह्म॒प्रियं॑ जोषयन्ते व॒रा इ॑व ॥ २ ॥

आपः॑ । न । दे॒वीः । उप॑ । य॒न्ति॒ । हो॒त्रिय॑म् । अ॒वः । प॒श्य॒न्ति॒ । वि॒ऽत॑तम् । यथा॑ । रजः॑ ।
प्रा॒चैः । दे॒वासः॑ । प्र । न॒य॒न्ति॒ । दे॒व॒ऽयुम् । ब्र॒ह्म॒ऽप्रिय॑म् । जो॒ष॒य॒न्ते॒ । व॒राः॑ऽइ॑व ॥ २ ॥

---

१. नास्ति मूको. २. सहितैः अ. ३. नास्ति ति. ४. सर्वं प्र° मूको. ५. °भनप्रवि° कु. ६-६. नास्ति ति. ७. पुनरुक्तः ति. ८. नदीनाम् ति. ९. नास्ति वि[1] अ[2]. १०. रक्ष्य° वि[1] अ[2]; °माणं वि[2]. ११-११. तवारक्षणैः वि[1] अ[2]. १२. °दिभ्यः ल अ[1]; प्रदिग्भ्यः वि[1] अ[1]. १३-१३. नास्ति मै[2].

**स्कन्द०** "तमित् पृणक्षि' इति[1] तच्छब्दः पूर्वस्या ऋच इहानुषक्तव्यः। तमेव[2] आपः न देवीः यथा एकधनालक्षणा[3] आपो देव्यः होत्रियम् होतुः स्वभूतं चमसमुपगच्छन्ति तद्वत् उप यन्ति सेवार्थमुपगच्छन्ति। के। सामर्थ्यात् सर्वमनुष्याः। अथवा 'तमित् पृणक्षि' इत्यनुषक्तव्यः [4]तं शब्द[4] इहार्थात् षष्ठ्यन्तो[5] विपरिणमयितव्यः। आपो नेति नशब्द उपरिष्टादुपचार उपमार्थीयत्वात्, अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः (तु. या ७,३१) इति पदपूरणः। तस्यैव एकधनालक्षणा आपो होतृचमसमुपगच्छन्ति। स एव सोमेन यजत इत्यर्थः। 'तमेव च अवः अधस्तात्' स्थिताः सर्वमनुष्या उपरि वर्तमानम् पश्यन्ति। कथम्। विततम् यथा रजः ज्योती रज उच्यते। यथेदमादित्याख्यं विततं ज्योतिः पश्यन्ति तद्वत्। 'तमेव आदित्यसदृशं' सर्वमनुष्याः पश्यन्तीत्यर्थः। तमेव प्राचैः प्रगमनैः देवासः प्र नयन्ति प्रकर्षेण नयन्ति। क्व। स्वर्गे वा इष्टेषु वा धनादिषु। स्वर्गं धनानि[6] वा प्रापयन्तीत्यर्थः। देवयुम् देवकामिनम्। ब्रह्मप्रियम् स्तुतिप्रियम्। नित्यं स्तोतारमित्यर्थः। जोषयन्ते सेवन्ते च। वराः इव यथा वराः[7] परया प्रीत्या वधूः[8] सेवन्ते तद्वत्॥ २॥

**वेङ्कट०** आपः इव देव्यः प्रवणम् होत्रियम् धिष्ण्यं देवाः स्तोत्रश्रवणार्थमुपगच्छन्ति। अधस्तात् पश्यन्ति विततम् यथा तेजोऽधोमुखं भवति। प्राचीनञ्च प्र नयन्ति देवकामं देवाः, स्तोत्रप्रियं मनुष्यं तं सेवन्ते वराः इव कन्याः[9]॥ २॥

**मुद्गल०** होत्रियम् होतुः स्वभूतं चमसम् देवीः देव्यो द्योतमानाः आपः न यथा आपः उप यन्ति उपगच्छन्ति तद्वदुपरि वर्तमाना देवा एतमेव चमसम् अवः अवस्तात्[10] पश्यन्ति। होतृचमसे अस्माकं सोमाभिषवाय आपः पूरिता इति तेषां दृष्टिरप्यस्मिन् संलग्नाऽभूत्। दृष्टान्तः। विततम् विस्तीर्णम् रजः ज्योतिः सूर्यसम्बन्धि यथा निरन्तरमवः अवस्तात् पतति तद्वत्। देवयुम् देवान् कामयमानमेतं चमसम् प्राचैः प्राचीनम् उत्तरवेद्यभिमुखं होमकाले प्र नयन्ति होमार्थं प्रणीतम् ब्रह्मप्रियम् ब्रह्मणा सोमलक्षणेनान्नेन प्रीतं सन्तृप्तम्, पूरितमित्यर्थः। जोषयन्ते देवासः सर्वे देवास्तं चमसं सेवन्ते। वराः इव कन्यकाम्। यथा वरा [11]"ममेयं भविष्यति"[11] ममेयं भविष्यतीति कन्यकां सेवन्ते, एवं देवा अपि ममायं सोमो ममायं सोम इत्यस्य पार्श्वे वर्तन्त इत्यर्थः। एवमपोनप्त्रीयविनियोगानुसारेण योजितं मन्त्रस्यानुष्ठेयार्थप्रकाशकत्वात्। यदा तु रात्रिपर्यायेऽस्य विनियोगस्तदा त्वेवं व्याख्येयम्। हे इन्द्र! देव्यः आपो यथा[12] निम्नदेशमुपगच्छन्त्येवं देवास्त्वदीयं स्तोत्रं शुश्रूषमाणा होत्रियं होतृसम्बन्धि धिष्ण्यस्थानमुपगच्छन्ति। उपगत्य चावस्ताद् यथावत् पश्यन्ति विततं ज्योतिः। देवयुं देवानात्मन इच्छन्तमेनं शंसितारमागताः सर्वे देवाः प्राचीनं प्रणयन्ति अग्रतो धारयन्ति। ब्रह्मप्रियं स्तोत्रप्रियं त्वां शंसन्तं वराः कन्यका इव सेवन्ते॥ २॥

अधि॒ द्व॒योर॑दधा उ॒क्थ्यं१॒॑ वचो॑ य॒तस्रु॑चा मिथु॒ना या स॑प॒र्यतः॑।
अस॑यत्तो व्र॒ते ते॑ क्षेति॒ पुष्य॑ति भ॒द्रा श॒क्तिर्यज॑मानाय सुन्व॒ते॥ ३॥

---

१-१. नास्ति अ. २. तदेव अ. ३. एकधानाल° कु ति. ४-४. सच्छ° अ; तच्छ° ति. ५. षष्ठ्या ति. ६. धनादि अ. ७. °राश्च ति. ८. वधूं कु ति. ९. कन्याम् वि[1] अ[2]. १०. अवस्ताद् मूको. ११-११. नास्ति मूको. १२. न मूको.

अधि । द्वयोः । अदधाः । उक्थ्यम् । वचः । यतऽस्रुचा । मिथुना । या । सपर्यतः ।
असम्ऽयत्तः । व्रते । ते । क्षेति । पुष्यति । भद्रा । शक्तिः । यजमानाय । सुन्वते ॥ ३ ॥

**स्कन्द०** अधिः उपरिभावे । द्वयोः अदधाः शुद्धोऽप्ययं[1] दधातिः निपूर्वार्थे द्रष्टव्यः । [2]व्यत्ययेन च मध्यमः प्रथमपुरुषस्य[2] । न्यदधात् । कः । सामर्थ्यात् अध्वर्युः । कयोः पुनरुपरि किं वा यदधात् । हविर्धानाच्छादनार्थयोश्छदिषोरुपरि तृतीयच्छदिः[3] । कुत एतत् । हविर्धानप्रवहणानुवचनस्य उपान्ते अस्या ऋचो विनियोगात् । तत्र च हविर्धानाच्छादनार्थानां त्रयाणां[4] छदिषां क्रमेण निधानात् । तथाहि तैत्तिरीयाणां वचनम्—"'विष्णो रराटमसि' ( तै १,२,१३,३ ) इति मध्यमं छदिरभिनिदधाति, 'विष्णोः श्नप्त्रे स्थः' ( तै १,२,१३,३ ) इति [5]अन्ये अभितो[5] भवतः" इति । तथा चैतरेयब्राह्मणम्—'अधि द्वयोरदधा उक्थ्यम् वचः' इति । 'द्वयोर्ह्येतत् तृतीयं छदिरधिनिधीयते' ( ऐब्रा १,२९ ) इति । अथवा द्वयोरिति द्वे अत्र हविर्धानस्य ये द्वार्ये स्थूणे ते उच्येते । तयोर्ह्युपरि रराटी निधीयते । ब्राह्मणे च सैव तृतीयाच्छादकत्वात्तृतीयं छदिरुच्यते[6] । केन न्यदधात् । उच्यते । उक्थ्यम् वचः उक्थ्यमिति प्रशस्यनाम ( तु. निघ ३,८ ) । तृतीयार्थे चोभयत्र द्वितीया । प्रशस्येन विष्णोः श्नप्त्रे स्थः' इत्यादिना मन्त्रेण । कस्य स्वभूतम् । उच्यते । यतस्रुचा मिथुना या इत्यादि । कथं पुनरस्यार्धर्चस्य ऐन्द्रत्वम् । इन्द्रार्थमध्वर्युः[7] न्यदधात् इत्येवमिन्द्रस्य प्राधान्यश्रवणात्[8] । अथवा अदधाः इति इन्द्र एवोच्यते, नाध्वर्युः । एवं चार्थयोजना कार्या । अधिशब्दः 'अधिपरी अनर्थकौ' ( पा १,४,९३ ) इत्येवं कर्मप्रवचनीयः पदपूरणः । द्वयोः स्वभूतमदधाः आत्मीये च मनसि दधासि धेहि[9] वा । शृणोषि शृणु वेत्यर्थः[10] । उक्थ्यं प्रशस्यं स्तुतिलक्षणं वचः । यौ द्वौ किं कुरुतः । उच्यते । यतस्रुचा यागार्थमुद्यतस्रुचौ । मिथुना स्त्रीपुंसौ । दम्पती इत्यर्थः । या यौ । सपर्यतः भवन्तं परिचरतः । किञ्च असंयत्तः संयत्नवान् संयत्तः । कृतप्रयत्न इत्यर्थः । न संयत्तः[11] असंयत्तः । विनैव क्लेशेनेत्यर्थः[12] । व्रते यागाख्ये कर्मणि । सप्तमीनिर्देशात् वर्तमानः[13] [14]इति शेषः[14] । ते तव स्वभूते । त्वां यजन्नित्यर्थः । क्षेति निवसति स्वस्मिन् स्थाने । पुष्यति च सर्वाभिः पुष्टिभिः । यस्तव यागं करोति सोऽक्लिश्यन् स्वस्थाने निवसति, सर्वपुष्टिभिश्च पुष्यतीत्यर्थः । किञ्च भद्रा शोभना शक्तिः शग्धि पूर्धि इति याच्ञाकर्मसु पाठात् शक्तिर्याच्ञाकर्मा[15] ( तु. निघ ३,१९ ) । याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते । त्वदीयं दानमित्यर्थः । कस्मै । उच्यते । यजमानाय सुन्वते सोमाभिषवं कुर्वते यजमानाय । प्रभूतमुत्कृष्टं च धनं त्वं[16] ददासीत्यर्थः ॥ ३ ॥

**वेङ्कट०** द्यावापृथिव्योः प्रशस्यम् वचः अधि अदधाः । यतस्रुचौ ये मिथुनभूते त्वाम् पूजयतो यज्ञप्रवर्तनात् । तव व्रते शत्रुभिः असंयत्तः सुखमेव निवसति,[17] पुष्यति च प्रजया पशुभिः । कल्याणं भवति बलम् सुन्वते यजमानाय ॥ ३ ॥

---

१. °प्यत्र अ. २-२. प्रत्ययेन च पुरुषस्य अ. ३. तृतीयश्छदिः(°र्दि) अ कु. ४. °णां हविषां अ. ५-५. येऽभितः मूको. ६. तृतीयत्वाच्छा° अ; छदिरित्यु° ति. ७. °ध्वर्यु मूको. ८. श्रवणात् ति. ९. धे कु; धेए अ. १०. चेत्य° अ कु. ११. नास्ति अ ति. १२. क्लेशेनैव° अ. १३. °मानाः मूको. १४-१४. नास्ति ति. १५. °र्याच्ञार्थः ति. १६. च ति. १७. वसति वि°.

**मुद्गल०** हे इन्द्र! द्वयोः हविर्धानयोः उक्थ्यम् उक्थं शस्त्रम्, तद्योग्यम् वचः 'युजे वाम्' ( ऋ १०,१३,१ ) इत्यादिमन्त्ररूपं वचनम् अधि अदधाः निहितवानसि। कीदृशयोर्हविर्धानयोः। यतस्रुचा यताः संबद्धाः स्रुचो ग्रहचमसादिलक्षणानि पात्राणि ययोस्ते। मिथुना युगलरूपेण वर्तमाने या ये हविर्धाने त्वाम् सपर्यतः पूजयतः, तयोरित्यर्थः। किञ्च ईदृग्रूपहविर्धानयुक्तो यजमानः असंयत्तः शत्रुभिः सह युद्धार्थमनभिगतः सन् ते व्रते त्वदीये कर्मणि क्षेति निवसति। पुष्यति च प्रजया पशुभिश्च पुष्टो भवति च। सुन्वते त्वद्देवत्ये यागे सोमाभिषवं कुर्वतो यजमानाय यजमानस्य भद्रा कल्याणी शक्तिः उत्कृष्टं बलं भवति। एतत्सर्वं हविर्धानयोरुक्थ्यस्य वचसोऽधिनिधानेन त्वया कृतमित्यर्थः ॥ ३ ॥

**आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।**
**सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ॥ ४ ॥**

आत् । अङ्गिराः । प्रथमम् । दधिरे । वयः । इद्धऽअग्नयः । शम्या । ये । सुऽकृत्यया ।
सर्वम् । पणेः । सम् । अविन्दन्त । भोजनम् । अश्वऽवन्तम् । गोऽमन्तम् । आ । पशुम् । नरः ॥

**स्कन्द०** आत् इति पदपूरणः। अङ्गिराः इति बहुवचनस्य स्थाने एकवचनम्। अङ्गिरस ऋषयः। प्रथमम् दधिरे दत्तवन्तः तुभ्यम्। वयः हविर्लक्षणमन्नम्। इद्धाग्नयः प्रज्वलिताहवनीयादिकाः। अङ्गिरसोऽपि त्वां प्रथममिष्टवन्तः, किं पुनरन्य ऋषय इत्यर्थः। ये किं लब्धवन्तोऽङ्गिरसः। उच्यते। शम्या ये सुकृत्यया 'शमी' ( निघ २,१ ) इति कर्मनाम। शोभना क्रिया अनुष्ठानं यस्याः सा सुकृत्या। ये त्वद्यागकर्मणा शोभनानुष्ठानेन। सर्वम् पणेः पणिनाम्नोऽसुरस्य स्वभूतम्। समविन्दन्त सम्यग्लब्धवन्तः। भोजनम् धनम् अश्वावन्तम् अश्वैस्सहितम्। गोमन्तम् गोभिस्सहितम्[1]। पशुम् जात्यपेक्षमेतदेकवचनम्[2]। पशुजातं च। आकारस्तु पदपूरणः मर्यादायां वा। मर्यादया लब्धवन्तः। नरः मनुष्याः सन्तः ॥ ४ ॥

**वेङ्कट०** आ दधिरे अङ्गिरसः[3] प्रथमम् हविः[4] सम् इद्धाग्नयः कर्मणा ये शोभनकरणेन, ते सर्वम् एव असुरात्[5] भोजनम्[6] त्वया सहायेन [7]अविन्दन्त अश्वावन्तम्[7] गोमन्तम् च पशुसङ्घं नेतारोऽङ्गिरसः ॥४॥

**मुद्गल०** यदा पणिभिर्गावोऽपहृतास्तदानीम् अङ्गिराः अङ्गिरसः प्रथमम् पूर्वमग्रतः वयः हविर्लक्षणमन्नम् दधिरे इन्द्रार्थं सम्पादितवन्तः। आत् अनन्तरं तादृशाः[8] ये अङ्गिरसः इद्धाग्नयः प्रज्वलिताग्नियुक्ताः सन्तः सुकृत्यया शोभनकरणोपेतया शम्या कर्मणा शोभनेन यागेन इन्द्रमयजन्निति शेषः। ते नरः यज्ञस्य नेतारोऽङ्गिरसः पणेः एतन्नाम्नोऽसुरस्य सम्बन्धि सर्वम् भोजनम् धनम् सम् अविन्दन्त समलभन्त। कीदृशम्। अश्वावन्तम् अश्वैर्युक्तम् गोमन्तम् गोभिर्युक्तम्। आ समुच्चये। गवाश्वव्यतिरिक्तम् पशुम् अन्यत्पशुजातं च समविन्दन्त ॥ ४ ॥

**यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।**
**आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥ ५ ॥**

---

१. गोभिश्च स° ति. २. °पेक्षमेकव° ति. ३. °रसम् वि[2]. ४. नास्ति वि[1] अ[2]. ५. °रान् वि[2] लपं. ६. भोजम् वि[1]. ७-७. त्वां स्व° वि[1]; समलभतो(न्ता)स्वव° वि[1]. ८. °शायेन्द्राय मूको.

यज्ञैः। अथर्वा। प्रथमः। पथः। तते। ततः। सूर्यः। व्रतऽपाः। वेनः। आ। अजनि।
आ। गाः। आजत्। उशना। काव्यः। सचा। यमस्य। जातम्। अमृतम्। यजामहे ॥ ५ ॥

**स्कन्द०** यज्ञैः इन्द्रदेवत्यैः अथर्वा नाम ऋषिः प्रथमः सर्वत उत्कृष्टः अग्र्यो वा पथः प्रज्ञागमनमार्गान् इन्द्रस्यात्मनो वा स्वर्गगमनमार्गान् तते[1] विस्तीर्णान्[2] चकार। ततः तेभ्य एव यज्ञेभ्यः सूर्यः आदित्यः व्रतपाः प्रकाशकरणद्वारेण सर्वकर्मणां पालयिता वेनः मेधावी कान्तो वा आ अजनि आजात उत्पन्नः। धर्मायत्तत्वात् कृत्स्नस्य जगत उत्पत्तेः यज्ञानां च धर्मत्वादिदमुच्यते ततः सूर्यो व्रतपा वेन आजनीति। तैरेव च[3] यज्ञैरिन्द्रदेवत्यैः आ गाः आजत् अज गतिक्षेपणयोः। आगतवान् प्राप्तवान्। लब्धवानित्यर्थः। किम्। गाः। कः। उशना नाम ऋषिः काव्यः कविपुत्रः। सचा सह। केन। सामर्थ्यात् पुत्रैः पौत्रैश्च। एतत् ज्ञात्वा वयमपि यमस्य जातम् अमृतम् यजामहे यम इति यज्ञनाम[4] शाकपूणिना पठितम्। षष्ठी चात्र 'यजेश्च करणे' (पा २,३,६३) इत्येवं तृतीयार्थे द्रष्टव्या। यज्ञेन यजामहे इत्यर्थः। कम्। प्रकरणाद् इन्द्रम्। कीदृशम्। जातममृतं जन्मवन्तं मरणवर्जितमित्यर्थः। अथवा यमोऽत्राऽऽदित्य एव। षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः। आदित्यसकाशाज्जातममृतं यजामह इति। इन्द्रो हि वर्षासु[5] रसादानेनाऽनुगृह्यमाणः कर्मात्मना आदित्याज्जायते ॥ ५ ॥

**वेङ्कट०** पणिभिरपहृतासु गोषु यज्ञैः कृतैः अथर्वा पूर्वं [6]मार्गान् कृतवान्[6]। ततः अन्धकारविनाशार्थं कर्मणां पालयिता कान्तः सूर्यः प्रादुरभूत्। ततोऽन्धकारे विनष्टे कविपुत्रः उशना सह सर्वा एव गाः आ आजत्। असुरनियमनार्थं प्रादुर्भूतमिन्द्रम्[7] यजामहे ॥ ५ ॥

**मुद्गल०** पणिभिरपहृतासु गोषु अथर्वा एतत्संज्ञः ऋषिः यज्ञैः इन्द्रदेवत्यैरनुष्ठितैर्यागैः पथः गोसम्बन्धिनो मार्गान् प्रथमः तते तनुते। सर्वेभ्य ऋषिभ्यः पूर्वमेव कृतवानित्यर्थः। ततः तदनन्तरम् व्रतपाः व्रतानां कर्मणां पालयिता वेनः कान्तः सूर्यः सूर्यरूप[8] इन्द्रः आ अजनि गवां प्रदर्शनाय आविरभूत्। ततोऽथर्वा ताः गाः आ आजत् आभिमुख्येन प्राप्नोत्। तादृशस्येन्द्रस्य काव्यः कवेः पुत्रः उशना भृगुः सचा असुरनिरसनाय सहायोऽभूत्। यमस्य असुराणां नियमनार्थम् जातम् प्रादुर्भूतम् अमृतम् मरणरहितं तमिन्द्रम् यजामहे हविर्भिः पूजयामः ॥ ५ ॥

बर्हिर्वा यत् स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि।
ग्रावा यत्र वदति कारुरुक्थ्य१स्तस्येदिन्द्रो अभिपित्वेषु रण्यति ॥ ६ ॥

बर्हिः। वा। यत्। सुऽअपत्याय। वृज्यते। अर्कः। वा। श्लोकम्। आऽघोषते। दिवि।
ग्रावा। यत्र। वदति। कारुः। उक्थ्यः। तस्य। इत्। इन्द्रः। अभिऽपित्वेषु। रण्यति ॥ ६ ॥

**स्कन्द०** यत् स्वपत्याय इति[9] षष्ठ्यर्थे एते[1] प्रथमाचतुर्थ्यौ। बर्हिः वा यस्य यजमानस्य स्वपत्यस्य वृज्यते

---

१. नास्ति अ ति. २. °र्णान्वा अ ति. ३. नास्ति अ कु. ४. यज्ञ इति अ. ५. नास्ति ति. ६-६. आगात् वि[1] अ[1]. ७. प्रादुरभूत् तमि° वि[1] अ[2]. ८. नास्ति मै[2]. ९. एषा अ ति.

वृजिरत्र सामर्थ्यात् स्तरणार्थः । स्तीर्यते नित्यम् । अर्कः वा स्तोताऽत्राऽर्क उच्यते । 'अर्को यद्वो मरुतो हविष्मान्' । ( ऋ १,१६७,६ ) इति यथा । स्तोता वा । श्लोकम् स्तुतिशब्दम् आघोषते आघोषयति । श्रावयतीत्यर्थः । दिवि द्युलोके । अत्यन्तमुच्चैः स्तौतीत्यर्थः । ग्रावा अभिषवग्रावा[1] यत्र षष्ठ्यर्थे एषा सप्तमी । यस्य[2] स्वभूतः । वदति अभिषवकाले शब्दं करोति । कीदृशः । कारुः स्तोता । यावदत्राभिषवग्रावा अभिषवं करोति, तावत् स्तुतयः प्रवर्तन्त इति तदायत्तत्वात् स्तुतीनामभिषवग्रावैव[3] स्तोतेत्युच्यते, स्तोतृसादृश्याद्वा । उक्थ्यः प्रशस्यः । तस्य एव इन्द्रः । अभिपित्वेषु च[4] पततेर्गतिकर्मण इदं रूपम् । अभिगमनकालेषु[5] । रण्यति रमते । तमेवाभिगच्छन्निन्द्रः प्रतीयते, नाऽन्यमित्यर्थः ॥ ६ ॥

**वेङ्कट०** यस्मिन् मनुष्ये शोभनाय कर्मणे बर्हिः वा वृज्यते । होता वा स्तुतिशब्दम्[6] उच्चैर्घोषयति[7] अन्तरिक्षे । तत्र हि वाचमुच्चारयति । यत्र वा सोमाभिषवकृत् ग्रावा प्रशस्यः शब्दं करोति । तस्य एव अभिगमनेषु[8] इन्द्रः रमते ॥ ६ ॥

**मुद्गल०** स्वपत्याय शोभनाऽपतनहेतुभूताय कर्मणे बर्हिः वा यत् यदा वृज्यते छिद्यते । अध्वर्युणा यागार्थमाह्रियते । अर्कः वा स्तोत्रनिष्पादको होता वा श्लोकम् स्तुतिरूपां वाचम् दिवि द्योतमाने यज्ञे यत् यदा आघोषते उच्चारयति । यत्र यस्मिन् काले ग्रावा अभिषवार्थं प्रवृत्त उपलः वदति शब्दं करोति । दृष्टान्तः । कारुः उक्थ्यः लुप्तोपममेतत् । उक्थस्य शस्त्रस्य शंसिता[9] कारुः स्तोता यथाऽभिमतशब्दं करोति, तद्वत् तस्य इत् पूर्वोक्तस्य सर्वस्य अभिपित्वेषु अभिप्राप्तिषु इन्द्रः रण्यति रमते । अस्मदीयो यागो भविष्यतीति शब्दं करोति ॥ ६ ॥

इति प्रथमाष्टके षष्ठाध्याये चतुर्थो वर्गः ॥

## [ ८४ ]

### असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
### आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ १ ॥

असावि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो इति । आ । गहि ।
आ । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यः । न । रश्मिऽभिः ॥ १ ॥

**स्कन्द०** असावि अभिषुतः[10] सोमः अस्माभिः हे इन्द्र! ते[4] त्वदर्थम् । एतत् ज्ञात्वा हे[11] शविष्ठ! बलवत्तम! धृष्णो! अभिभवितः! शत्रूणाम् आ गहि आगच्छ । आगतं च त्वा पृणक्तु इन्द्रियम् पृचिरत्र पूरणार्थः । 'तमित् पृणक्षि' ( ऋ ६.१५,११ ) इति यथा । इन्द्रियमित्यत्रापि स्वार्थे घच्प्रत्ययः[12] । इन्द्र एवेन्द्रियः[13] । आपूरयतु त्वामिन्द्रमस्मदीयः[14] सोम इत्यर्थः । अथवा इन्द्रियं वीर्यमुच्यते । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः इन्द्रियशब्दः । आपूरयतु त्वां वीर्यवदस्मदीयं

---

१. नास्ति मूको. २. यः ति. ३. °ग्रावेव अ ति. ४. नास्ति कु. ५. °काले अ. ६. स्तुतिशब्दैः ल कु. ७. सा(श्रा)वयति वि[२] अ[२]. ८. अधिगमेषु वि[२] अ[२]; वाधिग° कु. ९. हिंसिता मूको. १०. °ष्टुतः अ. ११. हि अ. १२. घन्प्र° मूको. १३. एवैन्द्रि° अ; °न्द्रियम् ति. १४. °सदिन्द्रियः ति; °सदीयम् अ.

सोमादिहविरित्यर्थः । कथं पुनरापूरयतु । उच्यते । रजः सूर्यः न रश्मिभिः रजःशब्दः अत्र[1] [1]लोक-वचनः । यथा सूर्यः पार्थिवलोकम् अन्तरिक्षं वा† निरन्तरं रश्मिना पूरयति तद्वत्[2] ॥ १ ॥

**वेङ्कट०** सुतः सोमः इन्द्र! तुभ्यम्, बलवत्तम! अभिभवितः! आगच्छ। आपूरयतु त्वां बलम् अन्तरिक्षम् इव सूर्यः रश्मिभिः[3] ॥ १ ॥

**मुद्गल०** 'असावि' इति विंशत्यृचमेकादशं सूक्तम्। गोतम ऋषिः। आदितः षडनुष्टुभः। सप्तम्याद्यास्तिस्र उष्णिहः। दशम्याद्यास्तिस्रः पङ्क्तयः। त्रयोदश्याद्यास्तिस्रो गायत्र्यः। षोडशाद्यास्तिस्रस्त्रिष्टुभः। एकोनविंशी बृहती। विंशी सतोबृहती। इन्द्रो देवता ॥

हे इन्द्र! ते त्वदर्थम् सोमः असावि अभिषुतोऽभूत्। हे शविष्ठ! अतिशयेन बलवन्! अत एव धृष्णो! शत्रूणां धर्षयितः! इन्द्र! आ गहि देवयजनदेशमागच्छ। आगतञ्च त्वा त्वाम् इन्द्रियम् सोमपानोत्थं प्रभूतं सामर्थ्यम् आ पृणक्तु आ पूरयतु। रजः अन्तरिक्षम् रश्मिभिः किरणैः सूर्यः न यथा सूर्यः पूरयति तद्वत् ॥ १ ॥

**इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम्। ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥२॥**

इन्द्रम्। इत्। हरी इति। वहतः। अप्रतिधृष्टऽशवसम्।
ऋषीणाम्। च। स्तुतीः। उप। यज्ञम्। च। मानुषाणाम् ॥ २ ॥

**स्कन्द०** [4]इन्द्रम् इत् हरी वहतः अप्रतिधृष्टशवसम् अप्रत्यभिभूतपूर्वबलम्‡ ऋषीणाम् च स्तुतीः उप उप-शब्दोऽत्र[4] प्रतिशब्दस्यार्थे। ऋषीणां च स्तुतीः प्रति। यज्ञम् च मानुषाणाम् मनुष्याणां[5] स्वभूतम् ॥२॥

**वेङ्कट०** इन्द्रम् अश्वौ वहतः अप्रत्यभिभूतबलम् ऋषीणाम् च स्तुतीः मनुष्याणाम् च यज्ञम् प्रति ॥ २ ॥

**मुद्गल०** अप्रतिधृष्टशवसम् केनाप्यप्रतिधर्षितबलम्। अहिंसितबलमित्यर्थः। इन्द्रम् इत् इन्द्रमेव ऋषीणाम् वसिष्ठादीनाम् मानुषाणाम् अन्येषां मनुष्याणाम् च स्तुतीः यज्ञम् च हरी अश्वौ उप वहतः समीपं प्रापयतः। यत्रयत्र स्तुवन्ति यत्रयत्र यजन्ते तत्रतत्र सर्वत्रेन्द्रमश्वौ प्रापयत इत्यर्थः ॥ २ ॥

**आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी।**
**अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ ३ ॥**

आ। तिष्ठ। वृत्रऽहन्। रथम्। युक्ता। ते। ब्रह्मणा। हरी इति।
अर्वाचीनम्। सु। ते। मनः। ग्रावा। कृणोतु। वग्नुना ॥ ३ ॥

**स्कन्द०** आ तिष्ठ आरोह हे वृत्रहन्! रथम् युक्ता युक्तेन ते अस्माभिः ब्रह्मणा तृतीयानिर्देशात् स्तुवद्भिरिति[6]

---

१. नास्ति कु ति. २-२. नास्ति अ. † नास्ति कु. ३. बलैः कु. ४-४. नास्ति अ.
‡ °पूर्वं बलम् ति. ५. नास्ति अ ति. ६. स्तुतिभिरिसि ति.

वाक्यशेषः। कौ। हरी। आस्थितस्य च अर्वाचीनम् अस्मद्यज्ञगमनाभिमुखं[1] सुष्ठु ते तव मनः अयमभिषवग्रावा कृणोतु वग्नुना स्वेनाभिषवशब्देन ॥ ३ ॥

**वेङ्कट०** [2]आतिष्ठ वृत्रहन्[2] रथम्। युक्तौ[3] ते ब्रह्मणा अश्वौ। तव मनः अभिषवग्रावा घोषशब्देन अस्मदभिमुखं सुष्ठु करोतु ॥ ३ ॥

**मुद्गल०** हे वृत्रहन्! शत्रूणां हन्तरिन्द्र! रथम् आ तिष्ठ आरोह। यस्मात् ते हरी त्वदीयावश्वौ ब्रह्मणा स्तोत्रलक्षणेन मन्त्रेण युक्ता रथेऽस्माभिर्योजितौ तस्मात् त्वं रथमातिष्ठ। ते मनः त्वदीयं मनश्च ग्रावा अभिषवार्थं प्रवृत्तः पाषाणः वग्नुना वचनीयेनाभिषवशब्देन अर्वाचीनम् अस्मदभिमुखम् सु कृणोतु सुष्ठु करोतु ॥ ३ ॥

इमिमन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्। शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादने ॥४॥

इमम्। इन्द्र। सुतम्। पिब। ज्येष्ठम्। अमर्त्यम्। मदम्।

शुक्रस्य। त्वा। अभि। अक्षरन्। धाराः। ऋतस्य। सदने ॥ ४ ॥

**स्कन्द०** इमम् हे इन्द्र! सुतम् सोमम् पिब ज्येष्ठम् प्रशस्यतमम् अमर्त्यम् अमरणधर्माणम्। नित्यमित्यर्थः। [4]मदम् मदकरमित्यर्थः[4]। शुक्रस्य शुक्राख्यग्रहस्य[5] शुक्लवर्णस्य वा सोमस्य[6]। त्वा अभि अक्षरन्। अभिशब्दः 'अभिरभागे' (पा १, ४, ९१) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः। त्वां प्रति अक्षरन् क्षरितवत्य[7] इत्यर्थः[8]। धाराः ऋतस्य यज्ञस्य सम्बन्धिनि सादने स्थाने वेद्याख्ये ॥ ४ ॥

**वेङ्कट०** इमम् इन्द्र! सुतम् पिब। प्रशस्यम् अमरणसाधनं सोमम्। सोमस्य धाराः त्वाम् अभि अक्षरन्[9] यज्ञगृहे[10] ॥ ४ ॥

**मुद्गल०** हे इन्द्र! सुतम् अभिषुतम् इमम् सोमम् पिब। कीदृशम्। ज्येष्ठम् अतिशयेन प्रशस्यम् मदम् मदकरम् अमर्त्यम् अमारकम्। सोमपानजन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः। तथा ऋतस्य यज्ञस्य सम्बन्धिनि सदने गृहे वर्तमानाः शुक्रस्य दीप्तस्यास्य सोमस्य धाराः त्वा त्वाम् अभि अक्षरन् आभिमुख्येन सञ्चलन्ति त्वां प्राप्नुवन्ति। स्वयमेवागच्छन्तीत्यर्थः ॥ ४ ॥

इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन। सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥५॥

इन्द्राय। नूनम्। अर्चत। उक्थानि। च। ब्रवीतन।

सुताः। अमत्सुः। इन्दवः। ज्येष्ठम्। नमस्यत। सहः ॥ ५ ॥

---

१. °मुखत्वम् ति. २-२. नास्ति वि[1]. ३. युक्ता वि[1] लपं; मु (?यु) क्ता वि[3] अ[1]. ४-४. नास्ति अ; °करम् कु. ५. °ख्यस्य ग्र° ति अ. ६. नास्ति ति. ७. अक्षरित° ति. ८. नास्ति कु. ९. रक्षन् वि[3] अ[3]. १०. यज्ञ··· वि[1]; यज्ञ लपं.

**स्कन्द०** नूनम् इति पदपूरणः क्षिप्रार्थो वा, सामर्थ्यात्। इन्द्रार्थं क्षिप्रम् अर्चत उच्चारयत [1]याज्यानुवाक्यादिलक्षणाः स्तुतीः[1] हे मदीयाः पुत्राः पौत्राः च ऋत्विजो वा। उक्थानि च [2]शस्त्राणि च[2] ब्रवीतन। किं कारणम्। उच्यते। यस्मात् सुताः[3] अभिषुताः[4] अमत्सुः[5] तर्पितवन्तः इन्दवः सोमाः ज्येष्ठम् प्रशस्यतममिन्द्रम् नमस्यत नमस्कारैश्च पूजयत। सहः बलनामैतत् ( तु. निघ २,९ )। अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम्। सहस्विनं बलवन्तम् इन्द्रम्॥ ५॥

**वेङ्कट०** [6]इन्द्राय क्षिप्रं स्तुत, शस्त्राणि च ब्रूत। सुताः सोमा एनम् अमत्सुः। †तमिमं मत्तं† ज्येष्ठम् सहस्वन्तं ‡स्तोत्रैः शस्त्रैश्च‡ नमस्यत इति$[6] ॥ ५॥

**मुद्गल०** हे ऋत्विजः! इन्द्राय नूनम् क्षिप्रम् अर्चत पूजनं कुरुत। एतदेव स्पष्टीक्रियते। उक्थानि अप्रगीतमन्त्रसाध्यानि स्तोत्राणि च ब्रवीतन ब्रूत। सुताः अभिषुताः इन्दवः सोमाश्च अमत्सुः आगतमेनमिन्द्रं मत्तं कुर्वन्तु। अनन्तरम् ज्येष्ठम् प्रशस्यतमम् सहः सहस्विनं बलवन्तं तमिन्द्रम् नमस्यत नमस्कुरुत॥ ५॥

इति प्रथमाष्टके षष्ठाध्याये पञ्चमो वर्गः॥

## नकिष्ट्वद् रथीतरो हरी यदिन्द्र यच्छसे। नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥६॥

नकिः। त्वत्। रथिऽतरः। हरी इति। यत्। इन्द्र। यच्छसे।
नकिः। त्वा। अनु। मज्मना। नकिः। सुऽअश्वः। आनशे ॥ ६॥

**स्कन्द०** नकिः इति निपातो न कश्चिदित्यस्यार्थे[7]। न कश्चित् त्वत्तो रथीतरः प्रकृष्टतरो रथी[8]। कस्मात्। उच्यते। हरी यत् यस्मात् हे इन्द्र! यच्छसे अत्यन्तप्रवृद्धवेगावपि नियच्छसि। निरोद्धुं शक्नोषीत्यर्थः। किञ्च नकिः त्वा अनु मज्मना अनुशब्दोऽत्र 'उपोऽधिके च' ( पा १,४,८७ ) इत्यनेन कर्मप्रवचनीयेन समानार्थं आधिक्यवचनः। 'मज्मना'[9] ( निघ २,९ ) इति बलनाम। न कश्चित्त्वत्तोऽधिको बलेनेत्यर्थः। नापि कश्चित् शोभनाश्वयुक्तोऽपि आनशे व्याप्तिकर्मायम् ( तु. निघ २,१८)। भवन्तं बलेन व्याप्नोति। सदृशोऽपि न[10] कश्चित् बलेनास्तीत्यर्थः॥ ६॥

**वेङ्कट०** [11]न कश्चित् त्वत्तः रथीतरः भवति। यदि त्वम् इन्द्र! अश्वौ नियच्छसि, न कश्चित् त्वाम् अनु बलेनाभिभवति, न कश्चन स्वश्वः¶ गच्छन्तं व्याप्नोति[11] ॥ ६॥

**मुद्गल०** हे इन्द्र! त्वम् यत् यस्मात् हरी एतत्संज्ञावश्वौ यच्छसे रथे योजयसि। तस्मात् त्वत् त्वत्तोऽन्यः कश्चित् रथीतरः अतिशयेन रथवान् नकिः नास्ति। अन्येषामीदृगश्वयुक्तरथाभावात्। त्वा अनु[12] त्वामनुलक्ष्य मज्मना बलेन सदृशोऽपि नकिः नह्यस्ति। स्वश्वः शोभनाश्वोऽन्यश्च त्वाम्

---

१-१. °णां स्तुतिम् अ. २-२. नास्ति कु. ३. °ताः सोमाः ति. ४. °ष्टुताः अ. ५. नास्ति अ. ६-६. नास्ति वि[1]. †-†. मर्त्यं वि[3] अ[2]; °मत्त वि[2]; °मत्तो वि[1] कु ल लपं. ‡-‡ स्तोत्रैश्श° वि[3] अ[2]; स्तोत्रशस्त्रैः वि[1,2] अ[1] कु ल लपं. $ नास्ति कु. ७. कश्चनेत्य° ति. ८. रथीः कु ति. ९. °ज्मन् कु. १०. नास्ति अ ति. ११-११. नास्ति वि[1]. ¶ °श्वो न वि[3] अ[1,2]. १२. नास्ति मूको.

नकिः आनशे न प्राप । इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशो बलवानश्ववान् लोके कश्चिदपि नास्तीत्यर्थः ॥ ६ ॥

य एक इद् विदयते वसु मर्ताय दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ७ ॥

यः । एकः । इत् । विऽदयते । वसु । मर्ताय । दाशुषे । ईशानः । अप्रतिऽस्कुतः । इन्द्रः । अङ्ग ॥७॥

**स्कन्द०** य एकः इत् एव विदयते विविधं ददाति । वसु मर्ताय दाशुषे यजमानाय । ईशानः सर्वस्येश्वरः । अप्रतिष्कुतः स्कुञ् आप्रवणे । आप्रवणमागमनं प्रवतेर्गत्यर्थत्वात् । अन्येनाप्रतिगतः अप्रतिष्कुतः । युद्धे अभियुञ्जानः अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः । कोऽसौ । उच्यते । इन्द्रः । अङ्ग इति तु निपातः[1] पदपूरणो वा क्षिप्रार्थो वा । सामर्थ्याद् विदयत इत्येतेन सम्बन्धयितव्यः । क्षिप्रं विदयत इति । यच्छब्दश्रुतेश्चास्या ऋचः तच्छब्दमध्याहृत्य उत्तरयचैकवाक्यता योज्या । य इन्द्रो विदयते वसु सः ॥ ७ ॥

**वेङ्कट०** [2]यः एकः एव विविधं[2] प्रयच्छति धनम् मर्ताय दाशुषे, ईश्वरः शत्रुभिरप्रतिशब्दितः सः इन्द्रः । अङ्ग इति कञ्चन सम्बोधयति ॥ ७ ॥

**मुद्गल०** यः इन्द्रः एकः इत् एक एव दाशुषे हविर्दत्तवते मर्ताय मनुष्याय यजमानाय वसु धनम् विदयते विशेषेण ददाति । अङ्ग क्षिप्रम् अप्रतिष्कुतः परैरप्रतिशब्दितः । प्रतिकूलशब्दरहित इत्यर्थः । एवम्भूतः सः इन्द्रः क्षिप्रम् ईशानः सर्वस्य जगतः स्वामी भवति ॥ ७ ॥

कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद् गिर इन्द्रो अङ्ग ॥८॥

कदा । मर्तम् । अराधसम् । पदा । क्षुम्पम्ऽइव । स्फुरत् ।
कदा । नः । शुश्रवत् । गिरः । इन्द्रः । अङ्ग ॥ ८ ॥

**स्कन्द०** कदा मर्तम् अराधसम् 'राधः' (निघ २, १०) इति धननाम । अधनम् । दारिद्र्यात् यष्टुमसमर्थमित्यर्थः । पदा पदेन । क्षुम्पमिव स्फुरत् क्षुम्पमहिच्छत्रकमुच्यते । स्फुर स्फुल सञ्चलने । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । यथा वायुरन्यो वा [3]कश्चित् सर्पच्छत्रकं[3] चालयति तद्व-च्चालयति[4] । न कदाचिदपीत्यर्थः । निरादरत्वाद्धैतदनेन[5] प्रकारेणाख्यायते । अधनस्योपरि अत्यन्तनिरादर इन्द्र इत्यर्थः । यत एवमतः सधनत्वात्[6] कृतयागा वयं ब्रूमः । कदा नः शुश्रुवत् श्रोष्यति स्तुतिलक्षणा गिरः इन्द्रः अङ्ग । अथवैवं[7] पूर्वोक्तयोरर्धर्चयोरेकवाक्यता । न कदाचिदप्यधनं पादेन चालयतीन्द्रः । वयञ्चाधनाः, अतो भीता ब्रूमः । कदा नः शुश्रुवत् गिर इन्द्रो

---

१. °पातनात् कु ति. २-२. नास्ति वि[1]. ३-३. °हिपच्छत्रकम् अ. ४. नास्ति अ. ५. चैतदनेन अ; निरादरत्वं चैत° ति. ६. साधन° अ. ७. नास्ति मूको.

अङ्ग इति। अथवैवमन्यथास्या ऋचः[1] अर्थयोजना। कदा मर्तमराधसं [2]हविर्लक्षणेन धनेन[2] रहितं अयष्टारमित्यर्थः। पदा क्षुम्पमिव स्फुरत्। स्फुरति स्फुलतीति[3] वधकर्मसु पाठात् (तु. निघ ३,१९) स्फुरतिरिह वधार्थः। यथा कश्चित् क्षुम्पं पादेनाक्रम्य हन्ति तद्वद्धनिष्यति। चूर्णयिष्यतीत्यर्थः। कदा वाऽस्माकं यष्टॄणां श्रोष्यति गिर इन्द्रो अङ्गेति। अयष्टॄन् कदा निग्रहीष्यति यष्टॄंश्चास्मान् स्तुतिश्रवणे न अनुग्रहीष्यतीत्यर्थः॥ ८॥

**वेङ्कट०** [4]कदा मनुष्यम् अनाराधयन्तं[4] पादेन अहिच्छत्रमिवानायासेन अवस्फुरति। वधकर्मा स्फुरतिः। कदा नः [5]शृणोति गिरः[5]॥ ८॥

**मुद्गल०** अराधसम् हविर्लक्षणेन राधसा धनेन रहितम् अयष्टारमित्यर्थः। एवंविधम् मर्तम् मनुष्यम् इन्द्रः पदा पादेन क्षुम्पमिव अहिच्छत्रकमिव कदा स्फुरत् स्फुरिष्यति। यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति। एवमिन्द्रोऽपि कदा अस्मच्छत्रून् हनिष्यतीत्यर्थः। स्फुरतिर्वधकर्मा। नः अस्माकं यष्टॄणां गिरः स्तुतिलक्षणा वाचः इन्द्रः कदा कस्मिन् काले अङ्ग क्षिप्रम् शुश्रवत् श्रोष्यतीति वितर्क्यते॥ ८॥

## यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति। उग्रं तत् पत्यते शव इन्द्रो अङ्ग॥९॥

यः। चित्। हि। त्वा। बहुऽभ्यः। आ। सुतऽवान्। आऽविवासति।
उग्रम्। तत्। पत्यते। शवः। इन्द्रः। अङ्ग॥ ९॥

**स्कन्द०** चित् हि इति पदपूरणौ। यः यजमानः त्वा त्वाम् बहुभ्यः आ[1] बहुभ्य इत्यापादानश्रुतेरा इति च[1] उपसर्गाद्योग्यक्रियापदाध्याहारः। बहुभ्योऽन्येभ्यो यजमानेभ्य आकृष्य। आत्मीयसकाशमानीये-त्यर्थः। सुतवान् [6]सुतेन सोमेन[6] तद्वान्। आविवासति मर्यादया परिचरति। उग्रम् तत् चतुर्थ्यर्थे प्रथमैषा। तस्मै पत्यते ऐश्वर्यकर्मायं पठितः (तु. निघ २,२१)। इह तु दानैश्वर्ययोः परस्परेण सम्बन्धादैश्वर्येण दानं प्रतिपद्यते। दानार्थ एव वा सामर्थ्यात् पत्यतिः। ददातीत्यर्थः। किम्। शवः बलम्। कः। उच्यते। भवान् इन्द्रः अङ्ग क्षिप्रम्। पदपूरणो वा अङ्गशब्दः। अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना। तदिति षष्ठ्यर्थे प्रथमा। पत्यत इत्यस्यैश्वर्यार्थ एव। इदम्[7] उग्रं[8] तस्य स्वभूतं शवः पत्यते यावतः कस्यचिद् ईशितव्यं तस्य[9] 'सर्वस्येष्टे इन्द्रः[9]'। व्यत्ययेन इयं सम्बोधनप्रथमास्थाने अव्यतिरिक्तप्रातिपदिकार्थे प्रथमा। हे[10] इन्द्रेत्यर्थः॥ ९॥

**वेङ्कट०** यः[11] चित् हि त्वा [12]बहुभ्यः मनुष्येभ्यः[12] एकः सुतसोमः[13] परिचरति। तस्य उद्गूर्णं बलं सर्वेषामीष्टे। सः[14] इन्द्रः इति अवगच्छेति[15]॥ ९॥

---

१. नास्ति ति. २-२. धनेन हविर्लक्षणेन अ. ३. स्फुलति ति. ४-४. नास्ति वि; °नाधारय° वि[3] अ[2]. ५-५. नास्ति वि[2]; गिरः पर्वतेषूपगूढं तदविन्दत् लर्प. ६-६. सुते सोमे मनः ति. ७. नास्ति अ ति. ८. इह ति. ९-९. सर्वस्येन्द्र इष्टः अ; °स्येन्द्र इत्यर्थः ति. १०. नास्ति अ. ११. यत् ल. १२-१२. मनुष्येभ्यो बहुभ्यः वि[3] अ[2]; नास्ति वि[1]. १३. सुतः सोमः वि[2]. १४. नास्ति वि[3] अ[2]. १५. नास्ति वि[3] कु; °गच्छ कु.

**मुद्गल०** बहुभ्यः **मनुष्येभ्यः सकाशात्** यः चित् हि **य एव खलु यजमानः** आ सुतावान् **अभिषुतसोमयुक्तः सन्** हे **इन्द्र**! त्वा **त्वाम्** आविवासति **परिचरति**। तत् **तस्मै यजमानाय यत्**[१] उग्रम् **उद्गूर्णम्** शवः **बलम्** इन्द्रः अङ्ग **क्षिप्रम्** पत्यते **पातयति प्रापयति** ॥ ९ ॥

**स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः।**
**या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १० ॥**

स्वादोः। इत्था। विषुऽवतः। मध्वः। पिबन्ति। गौर्यः।
याः। इन्द्रेण। सऽयावरीः। वृष्णा। मदन्ति। शोभसे। वस्वीः। अनु। स्वऽराज्यम् ॥ १० ॥

**स्कन्द०** स्वादोः मृडस्य। इत्था **अमुत्र देवलोके**। विषुवतः **विषु व्याप्तावित्यस्य**[२] **विषुशब्दो व्याप्तिवचनः। व्याप्तिमतः। प्रभूतस्येत्यर्थः अथवा विषुशब्दः वैषम्यपर्यायः, वैषम्यवतः दुरवगतस्येत्यर्थः**[३]। मध्वः **मधुसदृशस्वादुकस्य। सामर्थ्यादुदकस्य**[४]। **षष्ठीनिर्देशाच्चैकदेशमिति शेषः**[५]। **द्वितीयार्थे वा सर्वत्र षष्ठी। स्वादु विषुवत् मधुसदृशस्वादु चोदकं** पिबन्ति गौर्यः। याः **इत्येतत् पिबन्तीत्येतेन सम्बद्ध्यते। कुत एतत्।** [६]**उत्तरस्यामृचि धेनुशब्देन प्रत्यवमर्शनात्। याः गावः पिबन्ति गौर्यः गौरवर्णाः** इन्द्रेण **सह** सयावरीः सह **गन्त्र्यः। कीदृशेन। उच्यते।** वृष्णा **वर्षित्रा। यत्र यत्रेन्द्रो**[६] **गच्छति तत्र तत्र तस्य पश्चात् गन्त्र्यः। न केवलममुत्रैव देवलोके** मदन्ति च[७] **किं तर्हि।** अनु स्वराज्यम् **स्वराज्यं प्रति।** [८]**यत्र यत्र देशे**[८] **इन्द्रस्याधिपत्यं तत्र सर्वत्रेत्यर्थः। यच्छब्दश्रुतेः च**[७] **अस्या ऋचः उत्तरयैकवाक्यता**[९] ॥ १० ॥

**वेङ्कट०** **स्वादुरसस्य इत्थं व्याप्तिमतः सोमस्य** पिबन्ति[१०] **गौरवर्णा** गावः याः इन्द्रेण वृष्णा [११]**सह गच्छन्त्यः**[११] **पीत्वा सोमम्** मदन्ति **शोभार्थम्**[१२]। **ताः वसुमत्यः** अनु आसते स्वराज्यम्[१३] ॥ १० ॥

**मुद्गल०** स्वादोः **स्वादुभूतस्य रसयुक्तस्य** इत्था विषूवतः **इत्थमनेन प्रकारेण सर्वेषु यज्ञेषु व्याप्तियुक्तस्य** मध्वः **मधुररसस्य सोमस्य**। 'क्रियाग्रहणं कर्तव्यम्' ( पाम १,४,३२ ) **इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी**[१४]। **एवंविधं सोमम्** गौर्यः **गौरवर्णा** गावः पिबन्ति। याः **गावः** शोभसे शोभार्थम् वृष्णा **कामाभिवर्षकेण** इन्द्रेण सयावरीः **सह यान्त्यो गच्छन्त्यः सत्यः** मदन्ति **हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः।** वस्वीः **पयःप्रदानेन निवासकारिण्यस्ता** गावः स्वराज्यम् **स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वं तदनुलक्ष्यावस्थिता इति** शेषः ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये षष्ठो वर्गः ॥

**ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः।**
**प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ ११ ॥**

---

१. तत् मूको. २. °वित्यत्र ति. ३ त्रुटितम् ति. ४. नास्ति ति. ५. वाक्यशेषः ति. ६-६. नास्ति ति. ७. नास्ति अ कु. ८-८. यत्र देशे यत्र यत्र च देशे ति. ९. उत्तरयैक° ति. १०. नास्ति वि[२]. ११-११. सहाग° वि[१-३] अ[१,२] कु ल. १२. °मनार्थं वि[१,२] लपं. १३. स्वाराज्यम् वि[१-३]. १४. °त्वाद्वितीयार्थे मूको.

ताः। अस्य। पृशनऽयुवः। सोमम्। श्रीणन्ति। पृश्नयः।
प्रियाः। इन्द्रस्य। धेनवः। वज्रम्। हिन्वन्ति। सायकम्। वस्वीः। अनु। स्वऽराज्यम्॥ ११ ॥

**स्कन्द०** या गौरवर्णाः गावः अमुत्र देवलोके यत्र चेन्द्रस्याधिपत्यं तत्र सर्वत्र पिबन्ति मदन्ति च। [1]ताः अस्य पृशनायुवः पृशनाशब्दः अमृतरूपरसवचनः[1]। युशब्दोऽपि[2] तद्वदर्थे। अमृतरूपपयोलक्षणरसवत्यः। सोमम् श्रीणन्ति [3]पृश्नयः पृश्निशब्दो वर्णविशेषवचनः। पुरस्तात् च गौर्यं इति वर्णोपादानाद् इहान्तर्णीतमत्वर्थो† द्रष्टव्यः। गौरवर्णाः। ‡प्रियाः इन्द्रस्य धेनवः। दुह्यन्ते‡ या गावः ता धेनव उच्यन्ते। न च सोममेव केवलम् §श्रीणन्ति। किं तर्हि[3]§। वज्रम् हिन्वन्ति हिनोतिः[4] वृद्ध्यर्थः। वज्रं चेन्द्रस्य स्वभूतं वर्धयन्ति। कीदृशम्। सायकम् षो अन्तकर्मणि। शत्रूणाम् अन्तकरम्। अनु[5] स्वराज्यम्। यत्रयत्रेन्द्रस्याधिपत्यं तत्रतत्र सर्वत्र ॥ ११ ॥

**वेङ्कट०** [6]ताः धेनवः इन्द्रस्य स्पर्शनकामाः स्वपयसा सोमम् श्रीणन्ति गावः। प्रियाः इन्द्रस्य धेनवः शत्रूणामन्तकरम् आयुधं च† प्रेरयन्ति‡[6] ॥ ११ ॥

**मुद्गल०** ताः पूर्वोक्ताः अस्य इन्द्रस्य पृशनायुवः स्पर्शनकामाः पृश्नयः नानावर्णा गाव इन्द्रेण पातव्यम् सोमम् पयसा श्रीणन्ति मिश्रीकुर्वन्ति। इन्द्रस्य प्रियाः प्रीतिहेतुभूतास्ताः धेनवः सायकम् शत्रूणामन्तकरम् वज्रम् आयुधम् हिन्वन्ति शत्रुषु प्रेरयन्ति। इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः। अन्यत् पूर्ववत् ॥ ११ ॥

ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १२ ॥

ताः। अस्य। नमसा। सहः। सपर्यन्ति। प्रऽचेतसः।
व्रतानि। अस्य। सश्चिरे। पुरूणि। पूर्वऽचित्तये। वस्वीः। अनु। स्वऽराज्यम्॥ १२ ॥

**स्कन्द०** ताः एव अस्य[7] इन्द्रस्य स्वभूतम् नमसा पयोलक्षणेनान्नेन सहः सेनालक्षणं बलम् सपर्यन्ति परिचरन्ति। सेनामप्यस्य पयः पाययन्तीत्यर्थः। प्रचेतसः इन्द्रस्य गवां वा इदं विशेषणम्। प्रवृद्धप्रज्ञानस्येन्द्रस्य[8] प्रवृद्धप्रज्ञाना वा गावः। किम्। व्रतानि कर्माणि वृत्रवधादीनि अस्य इन्द्रस्य सम्बन्धीनि। सश्चिरे सश्चतिर्गतिकर्मा (तु. निघ २,१४)। गच्छन्ति प्राप्नुवन्ति। कुर्वन्तीत्यर्थः। पुरूणि बहूनि। कीदृशस्य। उच्यते। पूर्वचित्तये पूर्वा प्रथमा अत्यन्तोत्कृष्टा चित्तिर्ज्ञानं यस्य स पूर्वचित्तिः। षष्ठ्यर्थे चात्र चतुर्थी। अत्यन्तोत्कृष्टज्ञानस्येन्द्रस्येत्यर्थः। कर्माणि वृत्रवधादीनि यानीन्द्रस्य तान्यपि तस्य सहायभूता गावः कुर्वन्तीत्यर्थः। वस्वीः अनु स्वराज्यम् इत्युक्तार्थः ॥ १२ ॥

**वेङ्कट०** ताः अस्य अन्नेन बलम् [9]परिचरन्ति प्रचेतसः[9]। व्रतानि च अस्य वृत्रवधादीनि बहूनि अभ्यगच्छन् पूर्वमेव ज्ञातुम् ॥ १२ ॥

---

१-१. ···मृत° मूको. २. युव° कु. ३-३. नास्ति अ. † °तण्यर्थः मूको. ‡-‡ ···मुह्यन्ते मूको. §-§ किं तर्हि कु; किं तर्हि श्रीणन्ति ति. ४. हिन्वतिः मूको. ५. ते अनु कु अ ति. ६-६. नास्ति वि[1] लपं. † च युद्धे वि[3] अ[2]. ‡ °यति कु. ७. नास्ति ति. ८. संप्रवृ° ति. ९-९. °चर···तसः वि[1] अ[1].

**मुद्गल०** प्रचेतसः प्रकृष्टज्ञानाः ताः गावः अस्य इन्द्रस्य सहः बलम् नमसा स्वकीयेन पयोरूपेणान्नेन सपर्यन्ति परिचरन्ति । पुरूणि बहूनि अस्य इन्द्रस्य व्रतानि शत्रुवधादिरूपाणि वीर्यकर्माणि सश्चिरे सेचिरे । ज्ञायन्ते[1] इत्यर्थः । किमर्थम् । पूर्वचित्तये युयुत्सूनां [2]शत्रूणां पूर्वमेव[2] प्रज्ञापनाय । अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यज्यन्त इति तेषां बोधनायेत्यर्थः । अन्यत् पूर्ववत् ॥ १२ ॥

## इन्द्रो॑ द॒धीचो॑ अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः । ज॒घान॑ नव॒तीर्नव॑ ॥ १३ ॥

इन्द्रः॑ । द॒धीचः॑ । अ॒स्थऽभिः॑ । वृ॒त्राणि॑ । अप्र॑तिऽस्कुतः । ज॒घान॑ । न॒व॒तीः । नव॑ ॥ १३ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते— 'कालकञ्जा नामासुराः । तैर्वध्यमाना देवा[3] भगवन्तं ब्रह्माणं प्रणम्योचुः । वधोपायमेषां विधत्स्वेति । तान् ब्रह्मा प्रत्युवाच । दध्यङ्नामा[4] ऋषिः । तमुपगच्छत । स चोपायं विधास्यते इति । ते तमुपगम्योचुः । ब्रह्मणा वयं प्रहिता इति । स योगैश्वर्यध्यानेना-गमनप्रयोजनमवेत्य[5] प्राणानुत्ससर्ज । ततस्तदस्थिभिरिन्द्रस्तानसुराञ्जघान' इति । तदेतदुच्यते । इन्द्रः दधीचः अस्थभिः वृत्राणि शत्रूनसुरान् अप्रतिष्कुतः अप्रतिगतः । केनचिदप्रतियोध्यमान इत्यर्थः । जघान नवतीः नव नवनवतिसंख्याकान्[6] । दशोत्तराण्यष्टौ शतानीत्यर्थः ॥ १३ ॥

**वेङ्कट०** इन्द्रः दधीचः ऋषेः अस्थिभिः जघान नवतीः नव चासुरान् अप्रतिकृतः ॥ १३ ॥

**मुद्गल०** अत्र शाट्यायनिन इतिहासमाचक्षते— 'आथर्वणस्य दधीचो जीवतो दर्शनेनाऽसुराः पराबभूवुः । अथ तस्मिन् स्वर्गतेऽसुरैः पूर्णा पृथिव्यभवत् । अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ पप्रच्छ तत्रत्यान् नेह किमस्य किंचित्परिशिष्टमङ्गमस्तीति । तस्मा अवोचन् अस्त्येतदाश्वं शीर्षं येन शिरसाऽश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् । तदन्विच्छतेति । तद्धान्वैषिषुः । तच्छर्यणावत्यनुविद्याजहुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुरा-ञ्जघान' इति । अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः इन्द्रः आथर्वणस्य दधीचः एतत्संज्ञकस्यर्षेः अस्थभिः अश्वशिरःसम्बन्धिभिरस्थिभिः नवतीः नव नवसंख्याका नवतीर्दशोत्तरा-ष्टशतसंख्याकाः । तथाहि । लोकत्रयवर्तिनो देवाञ्जेतुमादावासुरी माया त्रिधा सम्पद्यते । त्रिविधा अतीताऽनागतवर्तमानकालभेदेन तत्कालवर्तिनो देवान् जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति । एवं नव सम्पद्यते । पुनरप्युत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते । पुनः सात्त्वि-कादिगुणत्रयभेदेन त्रैगुण्ये सत्येकोत्तराशीतिः सम्पद्यते[7] । एवं चतुर्भिस्त्रिकैर्गुणितायाः मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः सम्पद्यन्ते । एवंविधानि मायारूपाणि वृत्राणि आवरकाण्यसुरजातानि जघान हतवान् ॥ १३ ॥

## इ॒च्छन्नश्व॑स्य॒ यच्छिरः॒ पर्व॑ते॒ष्वप॑श्रितम् । तद्वि॑दच्छर्य॒णाव॑ति ॥ १४ ॥

इ॒च्छन् । अश्व॑स्य । यत् । शिरः॑ । पर्व॑तेषु । अप॑ऽश्रितम् । तत् । वि॒द॒त् । श॒र्य॒णाऽव॑ति ॥ १४ ॥

---

१. ज्ञायते मूको. २-२. शत्रूणामेव मूको. ३. नास्ति अ ति. ४. ॰नाम कु. ५. ॰प्रयोजन॰॰॰ ति. ६. ॰संख्यान् कु; ॰संख्या ति. ७. ॰द्यन्ते मै[2].

**स्कन्द०** अत्रापीतिहासमाचक्षते — 'इन्द्र आथर्वणाय दधीचे मध्वाख्यं परं ब्रह्म प्रोवाच[1] । प्रोच्य चैनमुवाच । नेदं कस्मैचिद् वक्तव्यमिति । यदि वक्ष्यसि शिरस्ते पतिष्यतीति । तमश्विनौ मध्वर्थिनावागम्योचतुः । प्रब्रूहि नौ परं ब्रह्मेति । स तौ प्रत्युवाच । शिरःपातभयान्न प्रब्रवीमीति । तौ तं प्रत्यूचतुः । अन्यत् ते[2] आवां शिरः प्रतिदध्वहे । तेन[3] प्रब्रूहीति । स तथेति प्रतिपेदे । ततोऽस्याश्विनौ[4] शिरश्छित्वा अश्वशिर आदधाते । तेनासौ तावध्यापयाञ्चकार' इति । तदेतत् कक्षीवान् वक्ष्यति — 'आथर्वणायाश्विना' ( ऋ १,११७,२२ ) इति । [5]तथा च[5] 'दध्यङ् ह यत्' ( ऋ १,११६,१२ ) इति । ततोऽस्य तदश्वशिरः पपात । अथाश्विनौ स्वमेव[6] शिरः प्रत्याधायाश्वशिर इन्द्रभयात् शर्यणावति पर्वते निदधाते । तदन्वेषमाण इन्द्रोऽलभत । अश्वस्य अवयवभूतम् यत् शिरः मधुनो ब्रह्मणः प्रवक्तुः पर्वतेषु अपश्रितम् आश्रितम् । इन्द्रभयादश्विभ्यां स्थापितमित्यर्थः । तत् विदत् तद्रूपं[7] ज्ञातवान् लब्धवान् । क्व । शर्यणावति पर्वते ॥ १४ ॥

**वेङ्कट०** अन्विच्छन्नभवत् यत् अश्वस्य शिरः पर्वतेषु अवगूढम्[8], तत् अविन्दत् शर्यणावति सरसि । अत्र शाट्यायनकम् — 'दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास । तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते । स ह स्वर्गं लोकमुच्चक्राम । स हेन्द्रोऽसुरैः अभिवाढ[9] उवाच । क्व नु स दध्यङ्ङभवदिति[10] । तस्मै होचुः । स्वर्गं वै भगवः स लोकमुदक्रामदिति । स होवाच नह्यस्येह किञ्चित् परिशिष्टमस्तीति । तस्मै होचुः आसीदेतदाश्वं शीर्षं येनाश्विभ्यां [11]देव ! वेदं[11] प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । तद्वा अन्विच्छतेति । तद्धान्वैषिषुः' । इच्छन्नश्वस्येत्यादिकमुक्त्वाह — 'शर्यणावद्ध नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते[12] । तदनुविद्याऽऽजहुः[13] । तदस्मै प्रायच्छन्[14] । तद्ध स्मासुराणां प्रकाशेऽधारयन्[15] । तद्ध स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते । स ह तैरेवास्थिभिः [16]नव नवतीः[16] जघानासुराणाम्' ( तु. जैब्रा ३,६४; ६५ ) इति ॥ १४ ॥

**मुद्गल०** पर्वतेषु पर्ववत्सु गिरिषु अपश्रितम् अपगत्य स्थितम् अश्वस्य अश्वसम्बन्धि दधीचः यत् शिरः इच्छन् इन्द्रो वर्तते । शर्यणावति एतत्संज्ञे सरसि तत् शिरः विदत् अज्ञासीत् । ज्ञात्वा तदाहृत्य तदीयैरस्थिभिर्वृत्राणि जघानेति पूर्वस्यामृचि सम्बन्धः ॥ १४ ॥

**अत्राह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म् । इ॒त्था च॒न्द्रम॑सो गृ॒हे ॥ १५ ॥**

अत्र॑ । अह॑ । गोः । अ॒म॒न्व॒त॒ । नाम॑ । त्वष्टुः॑ । अ॒पी॒च्य॑म् । इ॒त्था । च॒न्द्रम॑सः । गृ॒हे ॥ १५ ॥

**स्कन्द०** अत्र[17] अह इति विनिग्रहार्थीय एवार्थे । गोः वाङ्नामात्र ( तु. निघ १,११ ) । गोशब्दः स्तुतिवचनो वा ( तु. निघ ३,१६ ) । 'गोभिर्यदीमन्ये अस्मत्' ( ऋ ८,२,६ ) इति यथा । स्तुतिलक्षणायाः[18] वाचः स्तुतेर्वा । अमन्वत[19] मनु अवबोधने । अवबुध्यन्ते । के । सामर्थ्यात् ऋषयः । किम् । नाम स्थानम् । यावती काचित् स्तुतिः सर्वाऽत्रैवेन्द्रे[20] व्यवस्थितेत्येवमृषयो मन्यन्त इत्यर्थः । त्वष्टुः पञ्चमीनिर्देशादपेत्येति वाक्यशेषः । देवमात्रोपलक्षणार्थं चात्र[21] त्वष्टृग्रहणं

---

१. उवाच अ कु. २. त्वा कु. ३. नास्ति ति. ४. अतोस्या° ति; ततस्तस्या° अ. ५-५. नास्ति ति. ६. यमेव ति. ७. पदरूपं अ कु; त्रुटितम् ति. ८. अगगू° वि[1] अ[2] लपं. ९. °भूत कु; °वाळ्हा वि[1] अ[2]. १०. °ध्यङभ° ल. ११-११. नास्ति वि[1]; देवं वि[1] अ[2]. १२. 'स्कन्द' मूको. १३. °जभ्रुः वि[1]. १४. °यच्छत् कु. १५. °धारयत् कु. १६-१६. नवतीर्नव वि[1] अ[2]. १७. नास्ति कु ति. १८. °लक्षणा कु अ[2]. १९. नास्ति ति. २०. सर्वत्रैवेन्द्रस्य ति; सर्वत्रेन्द्रे अ कु. २१. च ति.

द्रष्टव्यम् । सर्वेभ्यो देवेभ्योऽपेत्येत्यर्थः । कीदृशं नाम । उच्यते । अपीच्यम् अन्तर्हितनामधेयमेतत् । (तु. निघ ३,२५) अन्तर्हितम् । तत्सम्बन्धिहरिरथवज्रमरुदादिस्तुतिद्वारेणेत्यर्थः । क्व स्थिते इन्द्रे । उच्यते । इत्था अमुत्र[1] । चन्द्रमसः गृहे स्थाने । अन्तरिक्षे द्युलोके वेत्यर्थः । सप्तमीनिर्देशात् स्थित इति वाक्यशेषः । यास्कस्तु मन्यते । अत्राहेत्यत्र अत्रशब्देन ऋगन्त्यं चन्द्रमसो गृहं प्रतिनिर्दिश्यते । चन्द्रमसश्च गृहं चन्द्रमण्डलम् । गौरित्यपि सुषुम्नो नाम सूर्यरश्मिश्चन्द्रमसं गतः अम्मयत्वात् [2]चन्द्रमण्डलस्य ततः प्रतिहतः सन् परावृत्य ज्योत्स्नारूपेण पृथिव्यां दीप्यते, स उच्यत इति । एवमेकवाक्यता — अत्र चन्द्रमसो गृहे चन्द्रमण्डले गोः† सुषुम्नाख्यस्य सूर्यरश्मेरमन्वत ज्ञातवन्त इत्यर्थः । के[2] । सामर्थ्यात् रश्मयः । नमनं[3] नाम व्यवस्थानम् । त्वष्टुरादित्यादपेत्य अपीच्यमन्तर्हितं परित्यज्यादित्यरश्मितां[4] चन्द्ररश्मिरूपेणावस्थितस्येत्यर्थः । एतदयोग्यम् । न तावदत्रशब्देन चन्द्रमसो गृहं प्रतिनिर्देष्टुं शक्यम् । इत्थाशब्देन तस्य प्रतिनिर्देशादित्थाशब्दस्य चामुत्रशब्दपर्यायत्वात्[5] अत्रामुत्रेत्येतयोश्च[6] सन्निकृष्टविप्रकृष्टप्रतिनिर्देशार्थयोरेकत्रार्थे विरुद्धत्वात् । नापि गोशब्देन सुषुम्नः [7]शक्यो वक्तुम्,[7] अनैन्द्रत्वप्रसङ्गात् । गोशब्देन हि सुषुम्नस्य प्रतिनिर्देशे सुषुम्नदेवतोऽयं मन्त्रः स्यात् । गुणप्रधानभावविपर्ययाद्वा चन्द्रदेवतः । न कथञ्चिदप्यैन्द्रः । ऐन्द्राणि चैतानि सूक्तानि । तत्र प्रकरणं बाध्येत । तस्मात् पूर्व एवार्थः ॥ १५ ॥

**वेङ्कट०** अत्र यास्कः — "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम् । आदित्यतोऽस्य दीप्तिर्भवतीति । 'सुषुम्णः[8] सूर्यरश्मिश्चन्द्रमा गन्धर्वः' (तै ३,४,७,१) इत्यपि[9] निगमो[10] भवति । सोऽपि गौरुच्यते । 'अत्राह गोरमन्वत' इति (या २,६), अत्र ह गोः सममंसतादित्यरश्मयः[11] स्वं नाम । [12]अपीच्यम् अपचितमपगतमपिहितमन्तर्हितं[12] वा । अमुत्र चन्द्रमसो गृहे" (या ४,२५) इति । [13]अत्र चन्द्रमसः गृहे मण्डले गोः सुषुम्णाख्यादित्यरश्मेः‡ सकाशात् तदेकदेशभूता रश्मयः अन्तर्हितं नमनं कर्तुम् अमन्वत । गूढं तत्र वसन्ति । त्वष्टा त्विषेर्दीप्तिकर्मण इति[13] । तच्चैतदिन्द्रकृतम्[14] इत्यैन्द्रत्वम् ॥१५॥

**मुद्गल०** अत्र अह अस्मिन्नेव गोः गन्तुः चन्द्रमसः गृहे मण्डले त्वष्टुः दीप्तस्यादित्यस्य सम्बन्धि अपीच्यम् रात्रावन्तर्हितं स्वकीयं यत् नाम तेजस्तदादित्यस्य रश्मयः इत्था इत्थमनेन प्रकारेण अमन्वत अजानन् । उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति । तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्त इत्यर्थः । एतदुक्तं भवति । यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्याऽहनीव नैशं तमो निवार्य सर्वं प्रकाशयति । ईदृग्भूततेजोयुक्तः सूर्यश्चेन्द्र एव, द्वादशस्वादित्येषु चेन्द्रस्यापि परिगणितत्वात् । अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेति इन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रो देवतेत्येतदुपपन्नं भवति । ईदृग्भूतस्य तेजस आश्रयत्वेन चन्द्रमसः प्राधान्यविवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते ॥ १५ ॥

इति प्रथमाष्टके षष्ठाध्याये सप्तमो वर्गः ॥

## को अ॒द्य यु॑ङ्क्ते धु॒रि गा ऋ॒तस्य॒ शिमी॑वतो भा॒मिनो॑ दुर्हृणा॒यून् ।
## आ॒सन्नि॑षून् हृ॒त्स्वसो॑ मयो॒भून् य ए॑षां भृ॒त्यामृ॒णध॒त् स जी॑वात् ॥ १६ ॥

---

१. चामु° अ. २-२. च ··· ति. † गाः अ कु. ३. नास्ति ति. ४. °रश्मिकाः कु अ. ५. चात्रश° मूको. ६. अत्रामुत्रयोश्च ति. ७-७. °क्यम् वक्तुं ति. ८. °षुम्नः वि[1] कु. ९. इति वि[2] अ[2]. १०. गमनो वि[1]. ११. सममन्वमंसता° वि[1]; सम[म]न्वतां वि[2] अ[2]. १२-१२. अपिच्यमपचितमपगतमपहृत° वि[1]; °मपरितमपगतमपहृतमन्त° वि[2] अ[2]. १३-१३. नास्ति वि[1] अ[2]. ‡ °षुम्नाख्यादादि° वि[1] अ[1] कु. १४. °कृत मूको.

कः। अद्य। युङ्क्ते। धुरि। गाः। ऋतस्य॑। शिमी॑ऽवतः। भामिनः। दुःऽहृणायून्।
आसन्ऽइषून्। हृत्सुऽअसः। मयःऽभून्। यः। एषाम्। भृत्याम्। ऋणधत्। सः। जीवात् ॥ १६ ॥

**स्कन्द०** कः पुण्यवान् अद्य युङ्क्ते धुरि धुरायां[1] [2]नियुङ्क्ते गाः गोशब्दोऽत्र वाजिवचनः। 'एतौ मे गावौ प्रमरस्य युक्तौ' (ऋ १०,२७,२०) इति यथा। वाजिनः ऋतस्य सत्यस्य सर्वगामिनो वेन्द्रस्य स्वभूतानि। कस्य। पुण्यवतः[2] अद्य[3] हरीन् रथे नियुज्येन्द्रो[4] यज्ञमागच्छति। उपालम्भो वा। कीदृशान् हरीन्। उच्यते। शिमीवतः[5] 'शिमी' (निघ २,१) इति कर्मनाम। कर्मवतः। भामिनः शत्रूणामुपरि क्रोधवतः। अथवा शिमीवतः भामिनः इत्येते षष्ठ्येकवचनान्ते इन्द्रस्य विशेषणे। पराणि तु हरीणाम्। दुर्हृणायून् पापक्रोधान्। निर्मूलशत्रूच्छेदकरक्रोधानित्यर्थः। आसन्निषून् आस्ये इषवो येषां ते आसन्निषवः। हरयो हि सङ्ग्रामकाले शत्रूणामुपरि वेगवत इषून् वमन्ति। ते आसन्निषव उच्यन्ते[6] तान् आसन्निषून्। हृत्स्वसः हृदयेषु ये अस्यन्ति क्षिपन्तीषून् ते हृत्स्वसः तान् हृत्स्वसः[7]। हृदयवेधिन इत्यर्थः। मयोभून् स्तोतॄणां सुखस्य भावयितॄन्। यः एषाम् भृत्याम् भृतिम्[8] ऋजीषलक्षणां धानालक्षणां[9] च ऋणधत् ऋद्धिं करोति सः जीवात् सुजीवितं जीवति। स एव पुण्यकर्मेत्यर्थः ॥ १६ ॥

**वेङ्कट०** कः इदानीम् युङ्क्ते इन्द्रस्य[10] [11]रथस्य धुरि[11] अश्वान् कर्मवतः क्रोधवतः हिंसामिच्छतः निरस्यमानेषून् हृदयेषु च विध्यतः। सुखस्य भावयितॄन्। यः एषाम् अश्वानां यवसैः भरणं समर्धयति[12]। [13]सः जीवति[13] लब्धान्नः ॥ १६ ॥

**मुद्गल०** अद्य अस्मिन् कर्मणि ऋतस्य गच्छत इन्द्रसम्बन्धिनो रथस्य धुरि अश्ववहनप्रदेशे गाः गतिमतोऽश्वान् कः युङ्क्ते को नाम नियोक्तुं शक्नोति। न कोऽपीत्यर्थः। कीदृशानश्वान्। शिमीवतः वीर्यकर्मोपेतान् भामिनः तेजसा युक्तान् दुर्हृणायून् परैर्दुःसहेन क्रोधेन युक्तान्। हृणीयतिः क्रुध्यतिकर्मा। आसन्निषून् आसनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान्। हृत्स्वसः हृत्सु शत्रूणां हृदयेष्वस्यन्ति स्वकीयपादं क्षिपन्तीति हृत्स्वसः। मयोभून् मयसः सुखस्य भावयितॄन्। स्वकीयानां सुखप्रदानित्यर्थः। यः यजमानः एषाम् ईदृशानामश्वानाम् भृत्याम् भरणक्रियां रथवाहनक्रियाम् ऋणधत् समर्धयति स्तौतीति यावत्। सः यजमानः जीवात् जीवनवान्भवेत् ॥ १६ ॥

**क ई॑षते तु॒ज्यते॒ को बि॑भाय॒ को मं॑सते॒ सन्त॒मिन्द्रं॒ को अन्ति॑।**
**कस्तो॒काय॒ क इभा॑यो॒त रा॒येऽधि॑ ब्रव॒त् त॒न्वे॒३ को जना॑य ॥ १७ ॥**

कः। ईषते। तुज्यते॑। कः। बिभाय। कः। मंसते। सन्त॑म्। इन्द्र॑म्। कः। अन्ति॑।
कः। तोकाय॑। कः। इभा॑य। उत। राये। अधि॑। ब्रवत्। तन्वे॑। कः। जना॑य ॥ १७ ॥

**स्कन्द०** कः ईषते ईषतिः[14] गतिकर्मा (तु. निघ २,१४)। प्रायेण च सर्वत्र भयपूर्वके गमने वर्तते। कोऽत्रेन्द्रात् भीतस्तच्छन्नः पलायते। तुज्यते हिंस्यते इन्द्रेण। कः बिभाय बिभेतीन्द्रात्। न किञ्चिदागतस्येन्द्रस्य लिङ्गं दृश्यते, येनात्रेन्द्र आगत इत्यनुमीयेतेत्यर्थः। कः वा मंसते मन्यते।

---

१. धुरम् कु. २-२. नास्ति ति. ३. नास्ति कु ति. ४. °युङ्क्तेन्द्रः ति. ५. नास्ति ति. ६. इत्यु° ति. ७. °स्तान् ति. ८. नास्ति कु. ९. ऋद्ध ति. १० °न्द्रस्य सर्वगतस्य वि¹ अ². ११-११. रथधुरि मूको. १२. समर्धय° कु; समर्पय° वि¹ अ². १३-१३. नास्ति वि¹ अ². १४. इषतीति ति.

पश्यत्येवेत्यर्थः। सन्तम् तिरः सतः इति प्राप्तस्य नामनी (तु. या ३,२०)। तेनात्र[1] [2]सच्छब्दः प्राप्तवचनः[2]। प्राप्तम् इन्द्रम् कः वा अन्ति अन्तिके। सन्निकृष्टस्थमित्यर्थः[3]। प्रत्यक्षेणाप्यागत इन्द्रो नैवात्रोपलभ्यते इत्यर्थः। कः वा तोकाय अपत्यार्थम्। कः वा इभाय हस्त्यर्थम्। [4]उत राये धनार्थम्[4]। अधि ब्रवत्। अधिशब्दः[5] 'अधिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः। ब्रवीति। ज्ञापयतीन्द्रमित्यर्थः। तन्वे कः[6] आरोग्यादियुक्तशरीरार्थम्। को वा विज्ञापयति परिचारकजनार्थं वा। आगते इन्द्रे योऽनुरूपो[7] व्यवहारः अपत्यप्रार्थनादिः, तं [8]कुर्वन् अन्योऽपि[8] न दृश्यते,[9] येन आगत इन्द्र इत्येतत् अर्थात् परिकल्प्येतेत्यर्थः। एवमियमप्यागमनविलम्बनात् [10]परिदेवना वा उपालम्भो[10] वा ॥ १७ ॥

**वेङ्कट०** कः इह भीतः पलायते। कः वा हिंस्यते। कः बिभेति। कः वा अन्तिके तिष्ठन्तम् इन्द्रम् भीतो जानाति। पूरण एकः किंशब्दः। कः पुत्रार्थम्, [11]कः गजार्थं[11] को वा धनार्थम् अधिब्रवीति। पुत्रादिकं मदीयं रक्षेति वचनमधिवचनम्। कः वा शरीरार्थं भटार्थं[12] च। आगते सति इन्द्रे एतानि चिह्नानि भवन्ति, आगतः किमिहेन्द्र इति प्रश्नः ॥ १७ ॥

**मुद्गल०** अनुग्रहीतरि इन्द्रे आगते सति कः ईषते शत्रोर्भीतः सन् को निर्गच्छति न कोऽपीत्यर्थः। कः तुज्यते को हिंस्यते शत्रुभिर्हिंस्योऽपि कश्चिन्नास्तीत्यर्थः। कः यजमानः बिभाय बिभेति। इन्द्रे रक्षके सति भयमपि नोत्पद्यते, दूरे तस्य शत्रुकृता हिंसा। अन्ति अन्तिके समीपे सन्तम् अस्माकं रक्षकत्वेन वर्तमानम् इन्द्रम् कः पुरुषः मंसते जानाति। वयमेव जानीमो नान्य इत्यर्थः। युद्धे सहायार्थमिन्द्र आगते सति कः यजमानः तोकाय पुत्राय अधि ब्रवत् हे इन्द्र! अस्मदीयं पुत्रं रक्षेत्येवंरूपम् अधिवचनं पक्षपातेन वचनम्। ब्राह्मणाय अधिब्रूयादिति यथा। एवंरूपमधिवचनं को यजमानः कुर्यात्। स्वयमेवेन्द्रो रक्षतीति भावः। इभाय गजाय कः अधिब्रवत्। उत अपि च राये शत्रुभिरपह्रियमाणाय धनाय कोऽधिब्रवत्। अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात्। न कोऽपीत्यर्थः। अपि च तन्वे स्वकीयाय शरीराय जनाय परिजनाय[13] च कः अधिब्रवत्[14]। शरीररक्षार्थञ्चेन्द्रस्याधिवचनं नापेक्षितम्। स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः ॥ १७ ॥

को अ॒ग्निमी॑ट्टे ह॒विषा॑ घृ॒तेन॑ स्रु॒चा य॑जाता ऋ॒तुभि॑र्ध्रु॒वेभिः॑।
कस्मै॑ दे॒वा आ व॑हाना॒शु होम॒ को मं॑सते वी॒तिहो॑त्रः सु॒दे॒वः ॥ १८ ॥

कः। अ॒ग्निम्। ई॒ट्टे॒। ह॒विषा॑। घृ॒तेन॑। स्रु॒चा। य॒जा॒तै॒। ऋ॒तुऽभिः॑। ध्रु॒वेभिः॑।
कस्मै॑। दे॒वाः। आ। व॒हा॒न्। आ॒शु। होम॑। कः। मं॒स॒ते॒। वी॒तिऽहो॑त्रः। सु॒ऽदे॒वः ॥ १८ ॥

**स्कन्द०** कः अग्निम् ईट्टे[15]। ईडिरत्र सामर्थ्यात् पूजार्थः। पूजयति। हविषा घृतेन घृताख्येन स्रुचा यजातै चरुपुरोडाशादिहविःपूर्णया स्रुचा यजातै ऋतुभिः ध्रुवेभिः सप्तम्यर्थे

---

१. तेनास्य ति. २. °ब्दाः प्राप्तवचनाः ति. ३. °कृष्टमि° अ कु. ४-४. नास्ति ति. ५. °ब्दोऽत्र ति. ६. नास्ति अ. ७. °रूपे अ. ८-८. कुर्वन्नित्यर्थः। अन्योपि ति. ९. विद्यते ति. १०-१०. °देवनोपाल° ति. ११-११. नास्ति वि[1] अ[2], १२. नास्ति वि[1] अ[1], १३. नास्ति मै[2]. १४. ब्रूयात् मै[2]. १५. °ट्टे अग्निमीळते ति.

तृतीया। ऋतुषु ध्रुवेषु। नियतेषु यागकालेष्वित्यर्थः। कस्मै देवाः इन्द्रादयः आ वहान् आवहन्ति प्रापयन्ति आत्मानम्। आगच्छन्तीत्यर्थः। आशु क्षिप्रम् होम हूयते यस्मिंस्तद्धोम[1]। यागस्थानमित्यर्थः। अथवा होमेति तादर्थ्यचतुर्थ्या लुक्। होमाय। होमार्थमित्यर्थः। कः वा मंसते कर्मण्ययं व्यत्ययेन कर्तृशब्दो द्रष्टव्यः। ज्ञायते लोकेन। कीदृशः। वीतिहोत्र वेति[2] इति कान्तिकर्मसु पाठात् वेतिरिह कान्त्यर्थः (तु. निघ २,६)। शोभना देवा यस्य सः सुदेवः। [3]अविलम्बितयज्ञत्वादेव प्रियतज्ञ[3] देवानामानुग्राह्यं लोकोऽवगच्छतीत्यर्थः। एवमियमप्यागमनविलम्बनात् परिदेवना वा[4] उपालम्भो वा॥ १८॥

**वेङ्कट०** हविः संभृत्य[5] इन्द्रयागार्थम् कः अग्निम् सामिधेनीभिः स्तौति। को वा घृतेन हविषा स्रुचा करणभूतया ध्रुवैः ऋतुभिः सह प्रयाजदेवताभिरग्निं यजते। कस्मै[6] देवाः शीघ्रमावहन्ति हूयमानं हविः। कः वा प्रियमन्त्रः[7] कल्याणदेवः देवेभ्यः कामान् वाञ्छति॥ १८॥

**मुद्गल०** कः यजमानः अग्निम् ईट्टे इन्द्रार्थं हविर्निरूप्याग्निं स्तौति। इन्द्राय हविर्निर्वापोऽपि सम्यक् कर्तुं न शक्यते इन्द्रस्य दुर्विज्ञानत्वात्। को वेन्द्रयागार्थमग्निम् स्रुचा जुह्वा ध्रुवेभिः ध्रुवैर्नित्यैः ऋतुभिः वसन्तादिकालैरुपलक्षितेन घृतेन हविषा यजातै यजेत्। कस्मै यजमानाय होम ह्वातव्यं प्रशस्यं धनम् आशु शीघ्रम् देवाः आ वहान् आवहन्ति प्रयच्छन्ति। न कस्मा अपीत्यर्थः। इन्द्र एव धनस्य दाता नान्ये देवा इतीन्द्रः स्तूयते। वीतिहोत्रः प्राप्तयज्ञः सुदेवः शोभनदेवताकः कः यजमानः मंसते इन्द्रं सम्यग् जानाति। न कोऽपीत्यर्थः। बहुविधेन स्तोत्रेण चिरकालोपासनेन चेन्द्रः प्रत्यक्षो भवति, नान्येन प्रकारेणेति तात्पर्यार्थः॥ १८॥

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम्।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः॥ १९॥

त्वम्। अङ्ग। प्र। शंसिषः। देवः। शविष्ठ। मर्त्यम्।
न। त्वत्। अन्यः। मघऽवन्। अस्ति। मर्डिता। इन्द्र। ब्रवीमि। ते। वचः॥ १९॥

**स्कन्द०** अङ्ग[8] 'अङ्ग इति क्षिप्रनाम' (या ५,१७)। 'क्षिप्रं त्वम् प्र शंसिषः प्रशंस देवः!' हे शविष्ठ! मर्त्यम् स्तोतारं मनुष्यम्। न च त्वत् त्वत्तः अन्यः मघवन्! अस्ति मर्डिता सुखयिता स्तोतॄणाम्। यत एवमतः हे इन्द्र! ब्रवीमि [10]ते स्तुतिलक्षणं वचः[10]। स्तौमि त्वामित्यर्थः॥ १९॥

**वेङ्कट०** त्वम् अङ्ग प्र शंसिषः[11] सुष्टुतमिति[13] देवः बलवत्तम! मनुष्यम्। न त्वत्तः अन्यः सुखयिता मघवन्! अस्ति। ततः तुभ्यमहम् ब्रवीमि स्तोत्रम् इति[12]॥ १९॥

**मुद्गल०** अङ्ग शविष्ठ! हे बलवत्तमेन्द्र! देवः द्योतमानः त्वम् मर्त्यम् मरणधर्माणं त्वां स्तुतवन्तं

---

१. °द्धोमम् अ कु. २. अवतिः अ; आहवेति ति. ३-३ किमवि° अ; किमविलम्बितयज्ञत्वाद्देवप्रिय° ति. ४. एषा मूको. ५. संहृत्य° वि[1] अ[2]; संभृत्य° वि[1]. ६. तस्मै वि[1] अ[2]. ७. °यमन्त्रः वि[1]; °यज्ञः अ[1]; °यजतः वि[2] अ[2]. ८. नास्ति मूको. ९-९. नास्ति मूको. १०-१०. नास्ति अ; ते वचः कु. ११. शंसः वि[1], शंस अ[2]. १२. सुष्ठुतममिति अ[1] क; सुष्ठमिति वि[1,2] लपं. १३. नास्ति कु.

पुरुषम् प्र शंसिषः सम्यगनेन स्तुतमिति प्रशंस । हे मघवन्! धनवन्! इन्द्र! त्वदन्यः त्वत्तोऽन्यः कश्चित् मर्डिता सुखयिता न अस्ति । अतः कारणात् ते तुभ्यमिदं स्तुतिलक्षणम् वचः ब्रवीमि उच्चारयामि ॥ १९ ॥

मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदा चना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥ २० ॥

मा । ते । राधांसि । मा । ते । ऊतयः । वसो इति । अस्मान् । कदा । चन । दभन् ।
विश्वा । च । नः । उपऽमिमीहि । मानुष । वसूनि । चर्षणिऽभ्यः । आ ॥ २० ॥

स्कन्द० ... ... ... ... ... ... ॥ २० ॥

वेङ्कट० वासयित इन्द्र! तव धनानि पालनानि च कदाचिदपि मा अस्मान् दभन्, विश्वानि उपमिमीहि अस्मभ्यम् मनुष्यहित! वसूनि द्रष्टृभ्यः ॥ २० ॥

मुद्गल० हे वसो! निवासयित इन्द्र! ते तव सम्बन्धीनि राधांसि भूतानि अस्मान् कदा चन कदाचिदपि मा दभन् मा विनाशयन्तु । तथा[1] ऊतयः गन्तारः ते त्वदीया मरुतश्च मा दभन् । हे मानुष! मनुष्यहितेन्द्र! चर्षणिभ्यः मन्त्रद्रष्टृभ्यः नः अस्मभ्यम् विश्वा विश्वानि सर्वाणि वसूनि धनानि च आ उपमिमीहि सर्वतोऽपहृत्यास्मत्समीपे कुरु । सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छेत्यर्थः ॥ २० ॥

इति प्रथमाष्टके षष्ठाध्याये अष्टमो वर्गः ।

इति प्रथमे मण्डले त्रयोदशोऽनुवाकः ॥

[ ८५ ]

प्र ये शुम्भन्ते जनयो न सप्तयो यामन् रुद्रस्य सूनवः सुदंससः ।
रोदसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः ॥ १ ॥

प्र । ये । शुम्भन्ते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः ।
रोदसी इति । हि । मरुतः । चक्रिरे । वृधे । मदन्ति । वीराः । विदथेषु । घृष्वयः ॥ १ ॥

स्कन्द० ... ... ... ... ... ... ॥ १ ॥

वेङ्कट० प्रकर्षेण अलङ्कुर्वते ये [2]जायाः इव, अश्वाः इव[2] च गमने रुद्रस्य पुत्राः सुकर्माणः । द्यावापृथिवी[3] हि[4] मरुतः चक्रिरे वर्धनाय । मदन्ति च वीराः यज्ञेषु घर्षणशीला वृक्षाणाम् इति[5] ॥ १ ॥

---

१. यथा मूको. २-२. जायाश्चा इव वि[1] अ[2]; जायाः इव वि[1]. ३. पृथिव्योः वि[1,2] अ[1] कु ल; पृथिव्यो लपं. ४. नास्ति वि[1] अ[2]. ५. नास्ति कु.

**मुद्गल०** चतुर्दशेऽनुवाके नव सूक्तानि । तत्र 'प्र ये' इति द्वादशर्चं प्रथमं सूक्तम् । गोतम ऋषिः । पञ्चमीद्वादश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । मरुतो देवताः ॥

ये मरुतः यामन् यामनि गमने निमित्तभूते सति प्र शुम्भन्ते प्रकर्षेण स्वकीयानि अङ्गान्यलङ्कुर्वन्ति जनयः न जाया इव । यथा योषितः स्वाङ्गान्यलङ्कुर्वन्ति तद्वत् । कीदृशाः मरुतः । सप्तयः सर्पणशीलाः रुद्रस्य सूनवः रोदयति सर्वमन्तकाल इति रुद्रः परमेश्वरः, तस्य पुत्राः । सुदंससः शोभनकर्माणः । एतदेवोपपादयति । हि यस्मात् मरुतः रोदसी द्यावापृथिव्यौ वृधे वृष्टिप्रदानादिना वर्धनाय चक्रिरे कृतवन्तः । अतः सुदंसस इत्यर्थः । वीराः विशेषेण शत्रुक्षेपणशीलाः । घृष्वयः घर्षणशीलाः । महीरुहशिलोच्चयादेर्भञ्जका इत्यर्थः । एवम्भूतास्ते मरुतः विदथेषु यज्ञेषु मदन्ति सोमपानेन हृष्यन्ति ॥ १ ॥

**त उ॑क्षि॒तासो॑ महि॒मान॑माशत दि॒वि रु॒द्रासो॒ अधि॑ चक्रिरे॒ सदः॑ ।**
**अर्च॑न्तो अ॒र्कं ज॒नय॑न्त इन्द्रि॒यमधि॒ श्रियो॑ दधिरे॒ पृश्नि॑मातरः ॥ २ ॥**

ते । उ॒क्षि॒तासः॑ । म॒हि॒मान॑म् । आ॒श॒त॒ । दि॒वि । रु॒द्रासः॑ । अधि॑ । च॒क्रि॒रे॒ । सदः॑ ।
अर्च॑न्तः । अ॒र्कम् । ज॒नय॑न्तः । इ॒न्द्रि॒यम् । अधि॑ । श्रियः॑ । द॒धि॒रे॒ । पृश्नि॑ऽमातरः ॥ २ ॥

**स्कन्द०** ... ... ... ... ... ... ... ॥ २ ॥

**वेङ्कट०** ते वर्षबिन्दुभिः सिक्ताः महत्त्वं प्रापन् दिवि च अधि सदनम् अकुर्वन् अर्चन्तः अर्चनीयमिन्द्रम् जनयन्तः च बलम् श्रियः अधि दधिरे ॥ २ ॥

**मुद्गल०** ये पूर्वोक्तगुणविशिष्टाः ते मरुतः उक्षितासः देवैरभिषिक्ताः सन्तः महिमानम् महत्त्वम् आशत आप्नुवन् । रुद्रासः रुद्रस्य पुत्रा मरुतः दिवि द्योतमाने नभसि सदः सदनं स्थानम् अधि चक्रिरे अधिकं सर्वोत्कृष्टं कृतवन्तः । अर्कम् अर्चनीयमिन्द्रम् अर्चन्तः पूजयन्तः इन्द्रियम् इन्द्रस्य लिङ्गं वीर्यम् जनयन्तः । 'प्रहर भगवो जहि वीरयस्व' (ऐब्रा ३,२० ) इत्येवंरूपेण वाक्येनोत्पादयन्तः । पृश्निमातरः पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः श्रियः ऐश्वर्याणि अधि दधिरे आधिक्येनाऽधारयन् ॥ २ ॥

**गोमा॑तरो॒ यच्छु॒भय॑न्ते अ॒ञ्जिभि॑स्त॒नूषु॑ शु॒भ्रा द॑धिरे वि॒रुक्म॑तः ।**
**बाध॑न्ते॒ विश्व॑मभिमा॒तिन॒मप॒ वर्त्मा॑न्येषा॒मनु॑ रीयते घृ॒तम् ॥ ३ ॥**

गोऽमा॑तरः । यत् । शु॒भय॑न्ते । अ॒ञ्जिऽभिः॑ । त॒नूषु॑ । शु॒भ्राः । द॒धि॒रे॒ । वि॒रुक्म॑तः ।
बाध॑न्ते । विश्व॑म् । अ॒भि॒ऽमा॒तिन॑म् । अप॑ । वर्त्मा॑नि । ए॒षा॒म् । अनु॑ । री॒य॒ते॒ । घृ॒तम् ॥ ३ ॥

**स्कन्द०** ... ... ... ... ... ... ... ॥ ३ ॥

**वेङ्कट०** गोमातरः[1] 'पृश्नियै[2] वै पयसो मरुतो जाताः[3]' (तै २,२,११,२) इति ब्राह्मणम् । यदा ते

---

१. नास्ति ल कु.　२. पृश्नैर्दै कु.　३. जातः कु.

आत्मानम् मरुतः आभरणैः अलङ्कुर्वते तदा अङ्गेषु कल्याणा मरुतः विशिष्टदीप्तिमतः सुवर्णमयान् कवचान् दधिरे। सर्वम् शत्रुम् अप बाधन्ते। तथा एषाम् मार्गान् उदकम् [1]अनु गच्छति[1]। यत्र गच्छन्ति[2] भवति तत्रोदकम् इति[3] ॥ ३ ॥

**मुद्गल०** गोमातरः गोरूपा भूमिर्माता येषां ते मरुतः अञ्जिभिः रूपाभिव्यञ्जकैराभरणैः यत् यदा शुभयन्ते स्वकीयान्यङ्गानि शोभायुक्तानि कुर्वन्ति तदानीम् शुभ्राः दीप्ता मरुतः तनूषु स्वकीयेषु शरीरेषु विरुक्मतः विशेषेण रोचमानानलङ्कारान् दधिरे धारयन्ति। अपि च विश्वम् सर्वम् अभिमातिनम् शत्रुम् अप बाधन्ते हिंसन्ति। एषाम् मरुताम् वर्त्मानि मार्गान् अनुसृत्य घृतम् क्षरणशीलमुदकम् रीयते स्रवति। यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः ॥ ३ ॥

वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।
मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ॥ ४ ॥

वि । ये । भ्राजन्ते । सुऽमखासः । ऋष्टिऽभिः । प्रऽच्यवयन्तः । अच्युता । चित् । ओजसा ।
मनःऽजुवः । यत् । मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वम् ॥ ४ ॥

**स्कन्द०** ... ... ... ... ... ... ॥ ४ ॥

**वेङ्कट०** वि भ्राजन्ते ये सुयज्ञाः आयुधैः[4] प्रच्यावयन्तः अच्युतानि अपि पर्वतादीनि बलेन। मनोवेगाः यदा यूयं पृषद्वर्णा अश्वाः रथेषु आयुङ्ग्ध्वम्। वर्षिता गणो येषां ते वृषव्राताः। तदा तेषां मार्गमनुगच्छति[5] इति[3] ॥ ४ ॥

**मुद्गल०** सुमखासः शोभनयज्ञाः ये मरुतः ऋष्टिभिः आयुधैः वि भ्राजन्ते विशेषेण दीप्यन्ते। ते मरुतः अच्युता चित् च्यावयितुमशक्यानि दृढानि पर्वतादीन्यपि ओजसा स्वकीयेन बलेन प्रच्यावयन्तः प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति। उत्तरार्धः प्रत्यक्षकृतः। हे मरुतः! मनोजुवः मनोवद्वेगगतयः वृषव्रातासः वृष्ट्युदकसेचनसमर्थसप्तसङ्घात्मकाः यूयम् रथेषु आत्मीयेषु पृषतीः पृषद्भिः श्वेतबिन्दुभिर्युक्ताः मृगीः यत् यदा आ अयुग्ध्वम् आभिमुख्येन नियुक्ता अकुरुध्वम्। तदानीं पर्वतादिकं प्रच्यवते इत्यर्थः ॥ ४ ॥

प्र यद् रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः ।
उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम ॥ ५ ॥

प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वम् । वाजे । अद्रिम् । मरुतः । रंहयन्तः ।
उत । अरुषस्य । वि । स्यन्ति । धाराः । चर्मऽइव । उदऽभिः । वि । उन्दन्ति । भूम ॥ ५ ॥

---

१-१. नास्ति वि[1] अ[2]. २. °ति ऊ. ३. नास्ति कु. ४. नास्ति वि[1] अ[2]. ५. °न्ति वि[1] अ[2]

**स्कन्द०** ... ... ... ... ... ... ॥ ५ ॥

**वेङ्कट०** प्र अयुङ्ग्ध्वम्[1] यदा रथेषु अश्वाः बले सति अद्रिम् अपि। मरुतः उत्क्षिपन्तः। तदानीं दीप्तस्य मारुतस्य गणस्य सकाशात् धाराः पतन्ति। तेऽमी सर्वां भूमिं खल्वल्पपरिमाणम् चर्म इव उदकैः विविधं क्लेदयन्ति ॥ ५ ॥

**मुद्गल०** हे मरुतः! पृषतीः यत् यदा रथेषु प्र अयुग्ध्वम् प्रायूयुजत[2]। किं कुर्वन्तः। वाजे अन्ने निमित्तभूते सति अद्रिम् मेघम् रंहयन्तः वर्षणार्थं प्रेरयन्तः। उत तदानीम् अरुषस्य आरोचमानस्य सूर्यस्य सकाशात् वृष्ट्युदकधाराः भवन्तः वि स्यन्ति विमुञ्चन्ति। विमुक्तास्ताश्च धाराः उद्भिः उदकैः चर्म इव परिमितमल्पं चर्म यथा अप्रयत्नेन क्लेद्यते एवम् भूम सर्वां भूमिम् वि उन्दन्ति विशेषेण आर्द्रां कुर्वन्ति ॥ ५ ॥

आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः।
सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ॥ ६ ॥

आ। वः। वहन्तु। सप्तयः। रघुऽस्यदः। रघुऽपत्वानः। प्र। जिगात। बाहुऽभिः।
सीदत। आ। बर्हिः। उरु। वः। सदः। कृतम्। मादयध्वम्। मरुतः। मध्वः। अन्धसः ॥६॥

**स्कन्द०** ... ...। सीदत बर्हिः। कस्मात्। उच्यते। यस्मात् उरु विस्तीर्णम् वः[3] युष्माकम् सदः स्थानम् अस्माभिः कृतम्। आसद्य च मादयध्वम् तर्पयतास्मान् हे मरुतः! मध्वः अन्धसः तृतीयार्थे चात्र[4] षष्ठी। षष्ठी निर्देशाद्वैकदेशेनेति[5] शेषः[6]। मधुस्वादेन सोमलक्षणेनान्नेन मधुस्वादस्य वा सोमलक्षणस्यान्नस्यैकदेशेनेत्यर्थः ॥ ६ ॥

**वेङ्कट०** [7]आ वहन्तु[7] युष्मान् अश्वा लघुगामिनः[8] लघुपातिनः प्र जिगात च[9] शत्रून् बाहुभिः आ सीदत च बर्हिः। विस्तीर्णं स्थानं युष्माकम् कृतम् मधुसदृशेन सोमेन मादयध्वम् ॥ ६ ॥

**मुद्गल०** हे मरुतः! वः युष्मान् सप्तयः सर्पणशीला अश्वाः आ वहन्तु अस्मद्यज्ञं प्रापयन्तु। कीदृशाः सप्तयः। रघुष्यदः लघु शीघ्रं स्यन्दमानाः[10]। वेगेन गच्छन्त इत्यर्थः। रघुपत्वानः शीघ्रं पतन्तो यूयम् बाहुभिः स्वकीयैर्हस्तैरस्मभ्यं दातव्यं धनमाहृत्य प्र जिगात प्रकर्षेण गच्छत। हे मरुतः! वः युष्माकम् सदः सदनं वेदिलक्षणं स्थानम् उरु विस्तीर्णम् कृतम् यत्र यदास्तीर्णम् बर्हिः तत् आ सीदत तस्मिन् बर्हिष्युपविशत। उपविश्य च मध्वः मधुरस्य अन्धसः सोमलक्षणस्यान्नस्य पानेन मादयध्वम् तृप्ता भवत ॥ ६ ॥

इति प्रथमाष्टके षष्ठाध्याये नवमो वर्गः ॥

---

१. प्रायुङ्ध्वम् वि[1,2] अ[1] कु ल लपं; प्रायध्वं वि[1] अ[2].　२. °युजम् मूको.　३. नास्ति अ.
४. °त्र स्तुतिक्षिणं वचः अ.　५. निर्देशाच्चैक° मूको.　६. वाक्यशेषः ति.　७-७ आवोवहन्तु वि[1] लपं,
८. °पादिनः वि[1].　९. नास्ति लपं.　१०. स्पन्द° मै[2].

तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥ ७ ॥

ते । अवर्धन्त । स्वऽतवसः । महिऽत्वना । आ । नाकम् । तस्थुः । उरु । चक्रिरे । सदः ।
विष्णुः । यत् । ह । आवत् । वृषणम् । मदऽच्युतम् । वयः । नः । सीदन् । अधि । बर्हिषि । प्रिये ॥

**स्कन्द०** ते[1] मरुतः अवर्धन्त सर्वप्रकारां [2]वृद्धिं प्राप्ताः[2] । स्वतवसः आत्मबलाः । महित्वना [3]स्वेन माहात्म्येन[3] । आ नाकम् तस्थुः [4]दिवं चाऽऽस्थिताः[4] । तत्र उरु चक्रिरे सदः स्थानमात्मनः । किञ्च विष्णुः यज्ञनामैतत् ( तु. निघ ३,१७ ) । सप्तम्यर्थे चात्र प्रथमा । अन्तर्णीतमत्वर्थो वा विष्णुशब्दः । यज्ञे यज्ञवान् वा यजमानः । यत् यदा । ह-शब्दस्तु पदपूरणः । आवत् तर्पयति । वृषणम् मदच्युतम् बहुवचनस्य स्थाने उभयत्र एकवचनं गणापेक्षं वा[5] । मदच्युतम्[6] इति च्यवतिर्गतिकर्मा (तु. निघ २,१४) वर्षितॄन् सोमलक्षणञ्च मदं प्रति गन्तॄन् मरुतः मरुद्गणं वेत्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा वयः न पक्षिण इव सीदन् सीदन्ति मरुतः । अधि बर्हिषि प्रिये[7] प्रियस्य [8]वेद्यां विस्तीर्णस्य[8] बर्हिष[9] उपरि । यज्ञे यदा यजमानो मरुतः तर्पयति[10] तदा [11]पक्षिण इव[11] शीघ्रमागत्य मरुतो वेद्यां बर्हिषि निषीदन्तीत्यर्थः ॥ ७ ॥

**वेङ्कट०** ते अवर्धन्त स्वबलाः माहात्म्येन । दिवञ्चास्थिताः विस्तीर्णमासनम् चक्रिरे । यज्ञः यदा[12] रक्षति वर्षितारं शत्रुमदस्य च्यावकं मरुद्गणम् । तदा सोमं पातुं मरुतः प्रिये बर्हिषि पक्षिण इव शीघ्रमागत्य[13] सीदन्ति ॥ ७ ॥

**मुद्गल०** ते मरुतः अवर्धन्त वृद्धिं गताः । कीदृशाः । स्वतवसः स्वाश्रयबलाः । नान्यस्य कस्यचिद्बलमपेक्षन्ते । वृद्धिं प्राप्य च महित्वना महिम्ना महत्त्वेन नाकम् स्वर्गम् आ तस्थुः आस्थितवन्तः । सदः सदनं नभोलक्षणं स्थानं च स्वकीयनिवासाय उरु विस्तीर्णम् चक्रिरे । यत् येभ्यो मरुद्भ्यो यदर्थम् वृषणम् कामाभिवर्षकम् मदच्युतम् मदस्य हर्षस्य आ सेक्तारम् यज्ञम्[14] विष्णुः ह आवत् विष्णुरेवागत्य रक्षति ते मरुतः वयः न पक्षिणो यथा शीघ्रमागच्छन्ति एवं शीघ्रमागत्य बर्हिषि अधि अस्मदीये यज्ञे प्रिये प्रीतिकरे सीदन् सीदन्तु उपविशन्तु ॥ ७ ॥

शूरा इवेद् युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे ।
भयन्ते विश्वा भुवना मरुद्भ्यो राजान इव त्वेषसंदृशो नरः ॥ ८ ॥

शूराःऽइव । इत् । युयुधयः । न । जग्मयः । श्रवस्यवः । न । पृतनासु । येतिरे ।
भयन्ते । विश्वा । भुवना । मरुत्ऽभ्यः । राजानःऽइव । त्वेषऽसंदृशः । नरः ॥ ८ ॥

**स्कन्द०** शूराः इव इति इवशब्दः 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' ( तु. या ७,३१ ) इति पदपूरणः ।

---

१. हे ति. २-२. प्राप्ताः वृद्धिम् अ. ३. सेनामा° ति. ४-४. दिवश्च च स्थिताः ति. ५. नास्ति ति. ६. च्युतम् ति. ७. नास्ति अ ति. ८-८. वेद्यास्तीण° ति. ९. °र्हिषि अ. १०. °र्पयिष्यति मूको. ११-११. पक्षिवत् अ ति. १२. यथा वि[२]. १३. °गन्य वि[१] अ[२]. १३. नास्ति मै[२].

शूरा मरुतः । अथवा शूरा इत्युपमानश्रुतेरुपमानोपमेयसाधारणधर्माध्याहारः । शूरा इव जेतारः । यथा शूरा मनुष्या नियमेन शत्रूणां[1] जेतार एवं मरुत इत्यर्थः । युयुधयः न जग्मयः यथा च[2] [3]युद्धशीला मनुष्याः शत्रून् प्रति गमनशीला एवं मरुतः । श्रवस्यवः न श्रवोऽन्नं धनं कीर्तिर्वा, तत्कामाः श्रवस्यवः । यथा च[3] श्रवस्यवो मनुष्या एवं मरुतः । पृतनासु सङ्ग्रामेषु येतिरे प्रयत्नं कुर्वन्ति । किञ्च भयन्ते बिभ्यति विश्वा भुवना[4] सर्वाणि भूतानि मरुद्भ्यः । किञ्च राजानः इव यथा नित्यालङ्कृतशरीरत्वाद्राजान एवं मरुतः । त्वेषसंदृशः दीप्तदर्शनाः । उज्ज्वलरूपा इत्यर्थः । नरः मनुष्याकाराः ॥ ८ ॥

**वेङ्कट०** शूराः इव योद्धारः गच्छन्तः शत्रुभ्योऽन्नम् इच्छमानः इव युद्धेषु गच्छन्ति । द्वितीयो नकारः पूरणः । बिभ्यति च विश्वानि भुवनानि मरुद्भ्यः । राजानः इव अलङ्कृताः दीप्तसन्दर्शना नेतारः ॥ ८ ॥

**मुद्गल०** इत् समुच्चये । शूराः इव इत् शौर्योपेता युयुत्सवः पुरुषा इव च युयुधयः न शत्रुभिर्युध्यमानाः पुरुषा इव च जग्मयः शीघ्रं गच्छन्तो मरुतः श्रवस्यवः न श्रवोऽन्नमात्मन इच्छन्तः पुरुषा इव पृतनासु सङ्ग्रामेषु येतिरे प्रयतन्ते वृत्रादिभिर्युद्धे व्याप्रियन्ते । तादृशेभ्यः मरुद्भ्यः विश्वा भुवना सर्वाणि भूतानि भयन्ते बिभ्यति । ये नरः वृष्ट्यादेर्नेतारो मरुतः राजानः इव राजमाना नृपतय इव त्वेषसंदृशः दीप्तसन्दर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति । तेभ्य इत्यर्थः ॥ ८ ॥

**त्वष्टा यद् वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।**
**धत्त इन्द्रो नर्यपांसि कर्तवेऽहन् वृत्रं निरपामौब्जदर्णवम् ॥ ९ ॥**

त्वष्टा । यत् । वज्रम् । सुऽकृतम् । हिरण्ययम् । सहस्रऽभृष्टिम् । सुऽअपाः । अवर्तयत् ।
धत्ते । इन्द्रः । नरि । अपांसि । कर्तवे । अहन् । वृत्रम् । निः । अपाम् । औब्जत् । अर्णवम् ॥९॥

**स्कन्द०** त्वष्टा देवशिल्पी । यत् व्यत्ययेनात्र नपुंसकता । यम् वज्रम् सुकृतम् सुकरणम् । हिरण्ययम् हिरण्मयम् । सहस्रभृष्टिम् भृष्टयोऽत्राश्रय उच्यन्ते । सहस्राश्रिम् । स्वपाः सुकर्मा अवर्तयत् शुद्धोऽप्ययं सोपसर्गार्थो द्रष्टव्यः । निरवर्तयत् । कृतवानित्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तत् धत्ते इन्द्रः नरि गणापेक्षं चैकवचनम् । नराकारे मरुद्गणे । मनुष्याकाराणां मरुतां गणस्य वज्रमिन्द्रोऽर्पयतीत्यर्थः । [6]किमर्थम् । उच्यते[6] । अपांसि कर्तवे वृत्रवधादीनि कर्माणि कर्तुम् । अर्पितेन च तेन अहन् वृत्रम् हन्ति मेघं मरुद्गणः । हत्वा च निः अपाम् औब्जत् निरित्येषु [7]नि इत्यस्य स्थाने । उब्जतिः न्यग्भावार्थः । अपां सङ्घं नियमेन न्यग्भावयतीत्यर्थः:[7] । निर्गमनार्थे अपां संघं निरपातयदित्यर्थः । अथवाऽपामिति द्वितीयार्थे षष्ठी । उब्ज आर्जवे । वृत्रोदरान्तर्गता अपो भुवं प्रति गमनाय नियमेन ऋजूकरोतीत्यर्थः[8] । अर्णवम् वृत्रस्येदं विशेषणम् । उदकवन्तं मेघम् इति[9] ॥ ९ ॥

---

१. शूराणां ति अ.　२. नास्ति ति.　३-३. नास्ति अ.　४. भुवनानि ति.　५-५. नास्ति अ; इत्थमु° ति.　६-६. नास्ति मूको.　८. ऋजुं क° अ.　९. नास्ति कु.

**वेङ्कट०** त्वष्टा यत् आयुधम् सुकृतम् [1]हिरण्यालङ्कृतं सहस्रधारं[1] सुकर्मा इन्द्राय समर्पयामास, तं वज्रमधारयत् इन्द्रः नेतरि मरुद्गणे सहायभूते सति कर्माणि कर्तुम् । अथ वृत्रम् अहन् । हत्वा च अपाम् अर्णवम् मेघं निर्जघान ॥ ९ ॥

**मुद्गल०** स्वपाः शोभनकर्मा त्वष्टा विश्वनिर्माता यत् वज्रम् अवर्तयत् इन्द्रं प्रत्यागमयत् । दत्तवानित्यर्थः । कीदृशम् । सुकृतम् सम्यङ् निष्पादितम् हिरण्ययम् सुवर्णमयम् सहस्रभृष्टिम् अनेकाभिर्धाराभिर्युक्तम् । तद्वज्रम् इन्द्रः धत्ते धारयति । किमर्थम् । नरि सङ्ग्रामे अपांसि शत्रुहननादिलक्षणानि कर्माणि कर्तवे कर्तुम् । एवं वज्रं धृत्वा तेन वज्रेण वृत्रम्[2] वृष्ट्युदकस्यावरकम् अर्णवम् अर्णसोदकेन युक्तं मेघम् अहन् अवधीत् । अपाम् तेन निरुद्धा अपश्च[3] निः औब्जत् निःशेषेणाधोमुखमपातयत् । प्रवृष्टा अकरोदित्यर्थः ॥ ९ ॥

ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद् बिभिदुर्वि पर्वतम् ।
धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥ १० ॥

ऊर्ध्वम् । नुनुद्रे । अवतम् । ते । ओजसा । दादृहाणम् । चित् । बिभिदुः । वि । पर्वतम् ।
धमन्तः । वाणम् । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥ १० ॥

**स्कन्द०** ऊर्ध्वम् सन्तं मेघम् नुनुद्रे नुदन्ति प्रेरयन्ति । अवतम् अवपतितम् अधोगतम् । अधोमुखमित्यर्थः । अथवा 'अवतः' ( निघ ३,२३ ) इति कूपनाम । तत्सादृश्याच्चात्र तद्व्यपदेशः । बहूदकत्वादिना सादृश्येन कूपसदृशं मेघमूर्ध्वं प्रेरयन्ति, क्षिपन्तीत्यर्थः । ते मरुतः ओजसा स्वेन बलेन । दादृहाणम् [4]चित् अत्यन्तं दृढीभवन्तमपि[4] । [5]अत्यन्तं दृढमपीत्यर्थः[5] । बिभिदुः वि विभिन्दन्ति । पर्वतम् मेघं[7] शिलोच्चयं वा । धमन्तः ध्मा शब्दाग्निसंयोगयोः । शब्दयन्तः । उच्चारयन्त इत्यर्थः । वाणम् शब्दम् । महान्तं शब्दं कुर्वन्त इत्यर्थः । मरुतः सुदानवः शोभनदातारः । ईदृशान्यन्यान्यपि मदे सोमस्य मदे इति 'यस्य च भावेन भावलक्षणम्' ( पा २,३,३७ ) इत्येवं [8]सप्तमी । तच्छ्रुतेश्च[8] [9]लक्षणभूतयोग्यक्रियाध्याहारः । मदे सोमस्य प्राप्ते[9] । सोमेन मत्ताः सन्त इत्यर्थः । रण्यानि रमणीयानि कर्माणि चक्रिरे कुर्वन्ति ॥ १० ॥

**वेङ्कट०**

गोतमो मरुभूमिष्ठस्तुष्टाव मरुतस्तृषा ।
तस्मा उच्चिक्षिपुः कूपं दूरस्थं मरुतो बलात् ॥ १ ॥
शिलोच्चयं[10] च बिभिदुः यो मार्गस्य निरोधकः ।
आत्मीयं वाणवाद्यं च धमन्तो मरुतस्त्वमी ॥ २ ॥
सुदानाः सोममत्ताश्च रमणीयानि चक्रिरे ।
एवंविधानि कर्माणि शेषमुत्तरया वद ॥ ३ ॥ १० ॥

**मुद्गल०** अत्रेयमाख्यायिका । गोतम ऋषिः पिपासया पीडितः सन् मरुत उदकं ययाचे । तदनन्तरं मरुतोऽदूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषिसमीपे कूपमवस्थाप्य तत्पार्श्वे आहावञ्च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयाञ्चक्रुः ।

---

१-१. °कृतसह° वि[1]. २. निज° वि[1] अ[2]. ३. नास्ति मै[2]. ४. आपश्च मूको. ५-५. अत्यन्तदृढी° ति. ६-६. अत्यन्तदृढ° ति. ७. नास्ति अ ति. ८-८. सप्तमीश्रुतेश्च ति. ९-९. त्रुटितम् ति. १०. कः शिलो° ल.

अयमर्थोऽनयोत्तरया च प्रतिपाद्यते। ते मरुतः अवतम् कूपम् ऊर्ध्वम् उपरि यथा भवति तथा ओजसा स्वकीयेन बलेन नुनुद्रे प्रेरितवन्तः, उत्खातवन्त इत्यर्थः। एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो मरुतः मार्गमध्ये दद्दृहाणम् प्रवृद्धं गतिनिरोधकम् पर्वतम् चित् पर्ववन्तं शिलोच्चयमपि वि बिभिदुः विशेषेण बभञ्जुः। सुदानवः शोभनदानास्ते मरुतः वाणम् शतसंख्याभिस्तन्त्रीभिर्युक्तं वीणाविशेषम् धमन्तः वादयन्तः। सोमस्य मदे सोमपानेन हर्षे सति रण्यानि स्तुत्यानि रमणीयानि धनानि चक्रिरे स्तोतृभ्यः कुर्वन्ति ॥ १० ॥

जि॒ह्मं नु॑नुद्रेऽव॒तं तया॑ दि॒शासि॑ञ्च॒न्नुत्सं॒ गोत॑माय तृष्ण॒जे ।
आ ग॑च्छन्ती॒मव॑सा चि॒त्रभा॑नवः॒ कामं॒ विप्र॑स्य तर्पयन्त॒ धाम॑भिः ॥ ११ ॥

जि॒ह्मम्। नु॒नु॒द्रे। अ॒व॒तम्। तया॑। दि॒शा। आ॒सि॑ञ्चन्। उत्स॑म्। गोत॑माय। तृ॒ष्ण॒ऽजे[1]।
आ। ग॒च्छ॒न्ति॒। ई॒म्। अव॑सा। चि॒त्रऽभा॑नवः। काम॑म्। विप्र॑स्य। त॒र्प॒य॒न्त॒। धाम॑ऽभिः ॥ ११ ॥

स्कन्द० अत्रेतिहासमाचक्षते—'मरुषु गच्छंस्तृषितो गोतमो मरुतः आजुहाव। ते तस्मै वृष्टिं ददुः' इति। तदेतदुच्यते। जिह्मम् कुटिलं मेघम्। [2]अन्यस्यां दिशि[2] व्यवस्थितं सन्तमित्यर्थः। नुनुद्रे अवतम् तया। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यया गोतमो व्यवस्थितः[3] तया दिशा नुत्वा[4] असिञ्चन् क्षारितवन्तः उत्सम् कूपनामैतत् (तु. निघ ३,२३)। कूपसदृशं मेघम्। किमर्थम्। उच्यते। गोतमाय तृष्णजे 'स्वपितृषोर्नजिङ्' (पा ३,२,१७२) इत्येवं साधुकारिणि नजिङ्। सुष्ठु तृषितस्य मम गोतमनाम्नः ऋषेरर्थायेत्यर्थः। किञ्च आ गच्छन्ति यज्ञान् प्रति ईम् एते अवसा तर्पणेन पालनेन वा निमित्तेन। आत्मानं तर्पयितुं यष्टॄन् पालयितुं वेत्यर्थः[5]। चित्रभानवः विचित्रदीप्तयो मरुतः। आगत्य च कामम् इच्छाम् विप्रस्य मेधाविनः यष्टुः स्तोतुश्च तर्पयन्त तर्पयन्ति। पूरयन्ति[6] इत्यर्थः[7]। धामभिः धीयन्ते तानीति धामानि धनान्यत्राभिप्रेतानि तैः। अथवा धामानि स्थानानि। इह च परत्र च लोके अभिप्रेतैः स्थानैरित्यर्थः ॥ ११ ॥

वेङ्कट०　जिह्मम् तिर्यञ्चमित्यर्थो नोदनं प्रेरणं स्मृतम्।
[8]कूपम् तया दिशा यस्यां स्तोता वसति गोतमः ॥ १ ॥

स्थापयित्वाथ तं[8] कूपं कृत्वाऽऽहावं समीपतः।
उदसिञ्चंश्च तं कूपम् गोतमाय पिपासवे ॥ २ ॥

आगच्छन्त्येनम् अवसा मरुतश्चित्रदीप्तयः।
पुरस्तात् प्रादुरभवन् रक्षणार्थमथ स्वयम् ॥ ३ ॥

अथ[9] मेधाविनस्तस्य कामम् तैर्धारकैर्जलैः।
अतर्पयन्नृचोरर्थः[10] श्लोकैरित्थमुदीरितः[11] ॥ ४ ॥ ११ ॥

---

१. पपा. विमर्शापेक्षः (तु. वै १,१४९७ *b*). २-२ अस्याम् ति. ३. अवस्थितः ति. ४. गत्वा ति. ५. इत्यर्थः अ ति. ६. नास्ति कु ति. ७. नास्ति ति. ८-८. नास्ति वि[3]. ९. नास्ति वि[3]. १०. अतत्पय° वि[1]. ११. श्लोकैरर्थ° वि.

**मुद्गल०** मरुतः अवतम् उद्धृतं कूपं यस्यां दिशि ऋषिर्वसति तया दिशा जिह्मम् वक्रं तिर्यञ्चम् नुनुद्रे प्रेरितवन्तः । एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य तृष्णजे तृषिताय गोतमाय ऋषये तदर्थम् उत्सम् जलप्रवाहं कूपादुद्धृत्य असिञ्चन् आहावेऽवानयन् । एवं कृत्वा ईम् एनं स्तोतारमृषिम् चित्रभानवः विचित्रदीप्तयस्ते मरुतः अवसा ईदृशेन रक्षणेन सह आ गच्छन्ति तत्समीपं प्राप्नुवन्ति । प्राप्य च विप्रस्य मेधाविनो गोतमस्य कामम् अभिलाषम् धामभिः आयुषो धारकैरुदकैः तर्पयन्त अतर्पयन् ॥ ११ ॥

या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ॥ १२ ॥

या । वः । शर्म । शशमानाय । सन्ति । त्रिऽधातूनि । दाशुषे । यच्छत । अधि ।
अस्मभ्यम् । तानि । मरुतः । वि । यन्त । रयिम् । नः । धत्त । वृषणः । सुऽवीरम् ॥ १२ ॥

**स्कन्द०** या यानि वः युष्माकम् शर्म शर्माणि सुखानि गृहाणि वा । शशमानाय शशतिरर्चतिकर्माऽयम् ( तु. निघ ३,१४ ) । ताच्छील्ये चात्र शानच्[1] द्रष्टव्यः । स्तुतिकरणशीलस्य अर्थाय । सन्ति त्रिधातूनि धीयन्ते [2]प्राणिनां देहेष्विति[2] धातवः अन्नरसाः तैः[1] देवमनुष्योपभोग्यैः त्रिभिरप्युपेतानि त्रिधातूनि यच्छब्दात्तच्छब्दाध्याहारः । तानि दाशुषे अन्यस्मै अपि यजमानाय यच्छत दत्त । अधि अधिशब्दस्तु 'अधिपरी अनर्थकौ' ( पा १,४,९३ ) इत्येवं कर्मप्रवचनीयः पदपूरणः । न केवलाय दाशुषे । किं तर्हि । अस्मभ्यम् अपि तानि हे मरुतः ! वि यन्त विविधं धत्त । [3]रयिम् धनं[3] च नः अस्मभ्यम् धत्त वृषणः ! वर्षितारः ! । सुवीरम्[4] शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् ॥ १२ ॥

**वेङ्कट०** यानि युष्माकं गृहाणि स्तुवते सन्ति । तानि त्रिच्छदिष्काणि यजमानाय अधि यच्छत[5] । अस्मभ्यम् तानि मरुतः ! विविधं यच्छत[5] । रयिम् च नः धत्त हे वृषणः ! सुपुत्रम् ॥ १२ ॥

**मुद्गल०** हे मरुतः ! वः युष्माकं सम्बन्धीनि या यानि शर्म शर्माणि सुखानि । कीदृशानि । त्रिधातूनि पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि शशमानाय युष्मान् स्तुतिभिर्भजमानाय दातुं सम्पादितानि । पूर्वोक्तलक्षणानि शर्माणि यानि सन्ति यानि च दाशुषे हविर्दत्तवते यजमानाय अधि यच्छत अधिकं प्रयच्छथ । हे मरुतः ! तानि सर्वाणि शर्माणि अस्मभ्यम् वि यन्त विशेषेण प्रयच्छत । किञ्च हे वृषणः ! कामानां वर्षितारो मरुतः ! नः अस्मभ्यम् सुवीरम् शोभनैर्वीरैः पुत्रादिभिर्युक्तम् रयिम् धनम् धत्त दत्त ॥ १२ ॥

इति प्रथमाष्टके षष्ठाध्याये दशमो वर्गः ॥

---

१. नास्ति अ. २-२. प्राणिदेहे° ति. ३-३. धनं रयिम् अ. ४. सुवं.रैः अ. ५. °गच्छत लं.

[ ८६ ]

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ।

मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः । सुऽगोपातमः । जनः ॥ १ ॥

**स्कन्द०** हे मरुतः! यस्य क्षये गृहे । हि-शब्दः पदपूरणः । पाथ पिबथ सोमम् । दिवः पञ्चमीनिर्देशात् आगत्येति शेषः[1] । हे विमहसः! [2]विविधं महान्तः![2] । सः सुगोपातमः अतिशयेन[3] शोभना गोप्तारः [4]यस्य स सुगोपातमः[4] । मरुदादिभिर्देवैर्वा शोभनैर्गोप्तृभिरतिशयेन रक्ष्यते[5] इत्यर्थः ॥ १ ॥

**वेङ्कट०** मरुतः! यस्य गृहे पिबथ सोमम् दिवः आगत्य विशिष्टदीप्तयः!, सः [6]अत्यन्तं शोभनगोप्तृकः जनः[6] ॥ १ ॥

**मुद्गल०** 'मरुतो यस्य' इति दशर्चं द्वितीयं सूक्तम्[7] । गोतम ऋषिः[8] । गायत्री छन्दः[9] । मरुतो देवताः[9] ॥

हे विमहसः! विशिष्टप्रकाशाः! मरुतः! दिवः अन्तरिक्षलोकादागत्य यस्य हि यस्य खलु यजमानस्य क्षये यज्ञगृहे पाथ सोमं पिबथ, सः जनः जातो यजमानः सुगोपातमः शोभनैः पालकैरत्यन्तं युक्तो भवति ॥ १ ॥

यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् ॥ २ ॥

यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य । वा । मतीनाम् । मरुतः । शृणुत । हवम् ॥ २ ॥

**स्कन्द०** वा-शब्दोऽत्र चार्थे । यज्ञैः च निमित्तभूतैः । हे यज्ञवाहसः! 'यज्ञ उह्यते यान् प्रति ते' यज्ञवाहसः । यष्टव्या इत्यर्थः । विप्रस्य वा मतीनाम् मतयः स्तुतय इहोच्यन्ते, मन्यतेरर्चतिकर्मत्वात् ( तु. निघ ३,१४ )। तृतीयास्थाने षष्ठी । मेधाविनश्च मम स्वभूताभिः स्तुतिभिः निमित्तभूताभिः[1] । यागाननुभवितुं स्तुतीश्च श्रोतुमित्यर्थः । हे मरुतः! शृणुत हवम् आह्वानम् ॥ २ ॥

**वेङ्कट०** यज्ञैः वा हेतुभिः यज्ञस्य वोढारः! अथवा विप्रस्य स्तुतिभिस्तच्छुश्रूषया मरुतः! शृणुत ह्वानम् ॥ २ ॥

**मुद्गल०** हे यज्ञवाहसः! यज्ञस्य वोढारः! मरुतः! यूयम् यज्ञैः वा वा[9] इति[10] समुच्चये । यज्ञैश्च यजमानस्य मतीनाम् स्तुतीनां सम्बन्धिनः विप्रस्य वा अयजमानस्य मेधाविनश्च हवम् आह्वानम् शृणुत । यज्ञवतो यजमानस्य यागरहितस्य स्तोतुश्चाह्वानं भवद्भिः श्रोतव्यम् । यतो भवन्तो यज्ञस्य वोढारः स्तुतिप्रियाश्चेति भावः ॥ २ ॥

उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गन्ता गोमति व्रजे ॥ ३ ॥

---

१. वाक्यशेषः ति. २-२. °विभम° ति. ३. नास्ति अ ति. ४-४. नास्ति अ; त्रुटितम् ति. ५. रक्ष्यन्ते कु अ. ६-६. °न्तं (°न्त वि[1]) शोभनगोप्तृकः वि[1] अ[2]; अत्यन्त गोप्ता कु; °गोप्तृकः ल अ[1]; °गोपकः ल शोध:. ७. नास्ति मै[2]. ८-८. त्रुटितम् ति. ९. नास्ति ति. १०. नास्ति मूको.

उत । वा । यस्य॑ । वा॒जिनः॑ । अनु॑ । विप्र॑म् । अत॑क्षत । सः । गन्ता॑ । गोऽम॑ति । व्र॒जे ॥ ३ ॥

**स्कन्द॰** उत-शब्दोऽप्यर्थे । वा-शब्दश्चार्थे । **अपि च** यस्य **यजमानस्य** वाजिनः **हविर्लक्षणेनान्नेनान्नवतः**[1] **स्वभूतम्** अनु विप्रम् **अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । मेधाविनमृत्विजं** प्रति । अतक्षत **तक्षतिः करोतिकर्मान्यत्र । इह तु गमनार्थः । लडर्थे च लङ् । गच्छथ ।** सः गन्ता गोमति व्रजे । **प्राप्नोति गोभिः पूर्णं गोष्ठमित्यर्थः ॥ ३ ॥**

**वेङ्कट॰ अपि च** यस्य **हविष्मन्तः**[2] **ऋत्विजः मेधाविनं मरुद्गणम्** अनु अतक्षत **संस्कुर्वन्ति,** [3]**सः पदं**[3] **निधत्ते** गोमति व्रजे **सर्वदा इति**[4] ॥ ३ ॥

**मुद्गल॰** उत वा **अपि च** यस्य **यजमानस्य** वाजिनः **हविर्लक्षणान्नोपेता**[5] **ऋत्विजः** विप्रम् **मेधाविनं मरुद्गणम्** अनु अतक्षत **हविष्प्रदानादिना तीक्ष्णीकुर्वन्ति,** सः **यजमानः** गोमति **बहुभिर्गोभिर्युक्ते** व्रजे **गोष्ठे** गन्ता **गमनशीलो भवति ॥ ३ ॥**

## अ॒स्य वी॒रस्य॑ ब॒र्हिषि॑ सु॒तः सोमो॑ दिवि॑ष्टिषु । उ॒क्थं मद॑श्च शस्यते ॥ ४ ॥

अ॒स्य । वी॒रस्य॑ । ब॒र्हिषि॑ । सु॒तः । सोमः॑ । दिवि॑ष्टिषु । उ॒क्थम् । मदः॑ । च॒ । श॒स्य॒ते ॥ ४ ॥

**स्कन्द॰** अस्य **मम गोतमस्य यजमानस्य वा** वीरस्य **स्तुतिकरणशूरस्य स्वभूते** बर्हिषि सुतः सोमः दिविष्टिषु **द्यौरिष्यते गम्यते प्राप्यते याभिः ता दिविष्टयः स्वर्गफला इज्याः,**[6] **तासु ।** उक्थम् [7]मदः च शस्यते **उक्थं**[7] **शस्त्रमुच्यते । चशब्द उक्थात् परो द्रष्टव्यः । मदशब्दो हर्षकरवचनः । शस्त्रञ्च हर्षकरं शस्यत इत्यर्थः ॥ ४ ॥**

**वेङ्कट॰** अस्य वीरस्य **मम यज्ञे**[8] सुतः सोमः **दिवसागमनेषु शस्त्रं च मदकरम्** शस्यते[9] ॥ ४ ॥

**मुद्गल॰** दिविष्टिषु **यजनीयदिवसेषु** बर्हिषि **यज्ञे** वीरस्य **शत्रुक्षेपणकुशलस्य** अस्य **मरुद्गणस्य**[10] **यागाय** सोमः सुतः **ऋत्विग्भिरभिषुतो भवति ।** उक्थम् **मरुद्देवताकं शस्त्रम्** मदः च **मदिधातुना युक्ता** 'मरुतो देवाः सोमस्य मत्सन्' ( खि ५,५,९ ) **इत्यादिका मारुती निविच्च अस्य मरुद्गणस्य हर्षाय** शस्यते **होत्रा पठ्यते ॥ ४ ॥**

## अ॒स्य श्रो॑ष॒न्त्वा भुवो॒ विश्वा॒ यश्च॑र्ष॒णीर॒भि । सूरं॑ चित् स॒स्रुषी॒रिषः॑ ॥ ५ ॥

अ॒स्य । श्रो॒ष॒न्तु॒ । आ । भुवः॑ । विश्वाः॑ । यः । च॒र्ष॒णीः । अ॒भि । सूर॑म् । चि॒त् । स॒स्रुषीः॑ । इषः॑ ॥

**स्कन्द॰** अस्य **इति** 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' ( पा १, ४, ४० ) **इति सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । अस्मै मह्यं गोतमाय यजमानाय** वा आ श्रोषन्तु **आशृण्वन्तु दास्याम इत्येवं मरुतः ।** भुवः **भूमेः**[11] **। इह चामुत्र**[12] **च स्थानानीत्यर्थः । योऽयं किं करोतीत्युच्यते ।** विश्वाः यः चर्षणीः

---

१. °वन्तः कु. २. हविर्वहन्तः वि[1] अ[1]. ३-३ संपदं कु. ४. नास्ति कु. ५. °क्षणोपेताः मूको. ६. भुज्याः ति. ७-७. नास्ति ति. ८. °ज्ञेषु वि[1] अ[1]. ९. °से वि[1] लपं. १०. °स्य हर्षाय सस्यते मै[1]. ११. भूमिः ति. १२. अमुत्र ति.

अभि विश्वाश्च चर्षणीरिति कर्मश्रुतेरभीति चोपसर्गाद्योग्यक्रियाध्याहारः। सर्वा यो मनुष्यजातीरभिभवति। केन। सामर्थ्यात् स्तुतिभिः। अन्येभ्यो मनुष्येभ्योऽतिशयेन यो मरुतः स्तौतीत्यर्थः। न च केवलाया[1] भुवः[2]। किं तर्हि। सूरम् चित् चिच्छब्दोऽत्र चार्थे। सूर्यं च प्रति ससुषीः इषः अन्नकारणत्वात् आपोऽत्र[3] इष उच्यन्ते। याश्चेमाः रश्मिभिराह्रियमाणाः सूर्यं प्रति गता आगामिवृष्टिलक्षणाः अन्नकारणभूता आपः, ताश्चेत्यर्थः ॥ ५ ॥

**वेङ्कट०** मम शृण्वन्तु भावयितारः[4] सर्वान्[5] मनुष्यान्। यः अभिभवति सुवीर्यं पुरुषम्। ससुषीः इषः अन्नानि युद्धेऽभिगच्छति यो गणः ॥ ५ ॥

**मुद्गल०** अस्य यजमानस्य स्तुतिं मरुतः आ आभिमुख्येन श्रोषन्तु शृण्वन्तु। यः मरुद्गणः विश्वाः चर्षणीः सर्वाञ्छत्रुभूतान्मनुष्यान् अभि भुवः अभिभवति। तादृग्गणाकारा मरुतः शृण्वन्त्वित्यर्थः। सूरम् चित् स्तुतेः प्रेरयितारं यजमानमपि इषः मरुद्भिः प्रत्तान्यन्नानि सस्रुषीः प्राप्तानि भवन्तु ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये एकादशो वर्गः ॥

## पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम्। अवोभिश्चर्षणीनाम् ॥ ६ ॥

पूर्वीभिः। हि। ददाशिम। शरत्ऽभिः। मरुतः। वयम्। अवःऽभिः। चर्षणीनाम् ॥६॥

**स्कन्द०** पूर्वीभिः शरद्भिः इत्युभयत्र सप्तम्यर्थे तृतीया। शरच्छब्दश्च संवत्सरवचनः। हि-शब्दोऽप्यर्थे। पूर्वेष्वपि संवत्सरेषु। ददाशिम दत्तवन्तो हविर्युष्मभ्यं हे मरुतः! वयम् अवोभिः पालनैर्निमित्तभूतैः। पालनार्थमित्यर्थः। कस्य। चर्षणीनाम् पुत्रपौत्रादिमनुष्याणाम् ॥ ६ ॥

**वेङ्कट०** बह्वीभिः हि[6] दत्तवन्तः शरद्भिः मरुतः! वयम् भवद्भ्यो हवींषि मनुष्याणाम् रक्षणार्थम् इति[7] ॥ ६ ॥

**मुद्गल०** हे मरुतः! पूर्वीभिः बह्वीभिः शरद्भिः संवत्सरैः चर्षणीनाम् सर्वस्य द्रष्टॄणां सर्वज्ञानां भवतां सम्बन्धिभिः अवोभिः रक्षणैर्युक्ताः सन्तः वयम् ददाशिम युष्मभ्यं हवींषि दत्तवन्तः। हि यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्वीकरणायागच्छतेत्यर्थः ॥ ६ ॥

## सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः। यस्य प्रयांसि पर्षथ ॥ ७ ॥

सुऽभगः। सः। प्रऽयज्यवः। मरुतः। अस्तु। मर्त्यः। यस्य। प्रयांसि। पर्षथ ॥ ७ ॥

**स्कन्द०** सुभगः[7] 'भगः'[8] (निघ २,१०) इति धननाम। सुधनः सः हे[9] प्रयज्यवः! प्रकर्षेण यष्टव्याः! मरुतः! अस्तु मर्त्यः। यस्य स्वभूतानि प्रयांसि हविर्लक्षणान्यन्नानि पर्षथ पारयथ प्राप्नुथ। भक्षयथेत्यर्थः ॥ ७ ॥

---

१. केवला ति. २. भवति अ. ३. नास्ति ति. ४. वास° वि[1] अ[1]. ५. सर्वे वि[1] कु छ लपं; सर्वः वि[2] अ[2]. ६. नास्ति वि[1]. ७. नास्ति कु. ८. नास्ति अ.

**वेङ्कट०** 'सुभगः सः'[1] प्रकर्षेण यष्टव्याः! मरुतः! भवतु मर्त्यः, यस्य हवींषि आत्मानं नयथ ॥ ७ ॥

**मुद्गल०** हे प्रयज्यवः! प्रकर्षेण यष्टव्याः! मरुतः! सः मर्त्यः मनुष्यो यजमानः सुभगः अस्तु शोभनधनो भवतु। यस्य यजमानस्य प्रयांसि हविर्लक्षणान्यन्नानि पर्षथ आत्मनि सिञ्चथ। स्वीकुरुथेत्यर्थः ॥ ७ ॥

## शशमानस्य वा नरः स्वेदस्य सत्यशवसः। विदा कामस्य वेनतः ॥ ८ ॥

शशमानस्य। वा। नरः। स्वेदस्य। सत्यऽशवसः। विद। कामस्य। वेनतः ॥ ८ ॥

**स्कन्द०** शशमानस्य[2] शशमानः स्तुतिकरणशीलस्तस्य वा। हे नरः! मनुष्याकारा मरुतः!। स्वेदस्य प्रस्विन्नस्य वा युष्मत्परिचर्याश्रमेण। महता यत्नेन युष्मान् परिचरत इत्यर्थः। हे सत्यशवसः![3] विद कामस्य वेनतः विदेति विदिर्ज्ञानार्थः। ज्ञानेनात्र तत्पूर्वकं पूरणं लक्ष्यते। कामस्येति 'द्वितीयार्थे षष्ठी'[3]। वेनत इति वेनतिः कान्तिकर्मा (तु. निघ २,६)। पूरयत कामं[4] कामयमानस्येत्यर्थः ॥८॥

**वेङ्कट०** भजमानस्य वा नेतारः! खिन्नगात्रस्य वा श्रमेण सत्यबलाः! जानीत कामं कामयमानस्य ॥ ८ ॥

**मुद्गल०** हे सत्यशवसः! अवितथबलाः! नरः! नेतारो मरुतः! शशमानस्य युष्मान् स्तुतिभिः सम्भजमानस्य स्वेदस्य स्तावकमन्त्रोच्चारणजनितश्रमेण[5] स्विद्यमानगात्रस्य वेनतः कामयमानस्य। वाशब्दः समुच्चये। एवम्भूतस्य स्तोतुश्च कामस्य काममभिलाषम् विद लम्भयत। प्रयच्छतेत्यर्थः ॥ ८ ॥

## यूयं तत् सत्यशवस आविष्कर्त महित्वना। विध्यता विद्युता रक्षः ॥ ९ ॥

यूयम्। तत्। सत्यऽशवसः। आविः। कर्त। महिऽत्वना। विध्यत। विऽद्युता। रक्षः ॥ ९ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'अन्धकारे गोतमं रक्षांस्यभिदुद्रुवुः। स भीतस्तदपघातार्थम्[6] आभ्यामृगभ्यां मरुत उवाच'। यूयम् तत् हे सत्यशवसः! सर्वलोकप्रकाशं कुरुत। महित्वना स्वेन माहात्म्येन। किं तत्। उच्यते। विध्यत तापयत[7] विद्युता रक्षः। विद्युत्प्रजननेन रक्षांसि हतेत्यर्थः ॥ ९ ॥

**वेङ्कट०** यूयम् तत् सत्यबलाः! आविष्कुरुत बलम्। माहात्म्येन विध्यत च अशन्या युद्धे रक्षः ॥ ९ ॥

**मुद्गल०** हे सत्यशवसः! सत्यबलाः! अन्यैरप्रधृष्यबला मरुतः! यूयम् तत् वृत्रवधादिषु प्रसिद्धं युष्मदीयमाहात्म्यम् आविः कर्त आविष्कुरुत प्रकाशयत। विद्युता विद्योतमानेन महित्वना तेन महत्त्वेन माहात्म्येन रक्षः अस्माकमुपद्रवकारिणं राक्षसादिकम् विध्यत ताडयत। नाशयतेत्यर्थः ॥ ९ ॥

## गूहता गुह्यं तमो वि यात विश्वमत्रिणम्। ज्योतिष्कर्ता यदुश्मसि ॥ १० ॥

गूहत। गुह्यम्। तमः। वि। यात। विश्वम्। अत्रिणम्। ज्योतिः। कर्त। यत्। उश्मसि ॥१०॥

---

१-१. सः सुधनवः वि[1] अ[2]. २. नास्ति मूको. ३-३. नास्ति अ. ४. नास्ति कु. ५. °श्रमेण मै[1]. ६. त्रुटितम् ति. ७. ताडयत वि[1],

**स्कन्द०** किञ्च गूहत गुहू संवरणे। संवृणुत। अपनयतेत्यर्थः। गुह्यम् संवरणयोग्यम् अतिमहदेतत् तमः। वि यात यातिरत्र वधार्थः। 'अहेर्यातारं कमपश्यः' (ऋ १,३२,१४) इति,[१] 'यया वज्रिवः परियासि' (ऋ ६,३७,४) इति च[२] यथा। विविधं हत विश्वम् अत्रिणम् सर्वं भक्षयितारं रक्षः-पिशाचादिकम्। ज्योतिः च विद्युदाख्यम्[३] कर्त कुरुत यत् उश्मसि कामयामहे वयम् ॥ १० ॥

**वेङ्कट०** नाशयत नाशयितव्यम् तमः[४]। विविधं हत सर्वं रक्षः। ज्योतिः कुरुत यदा[५] वयं कामयामहे भवतः[६] ॥ १० ॥

**मुद्गल०** हे मरुतः! गुह्यम् गुहायां स्थितं सर्वत्र व्याप्य वर्तमानम् तमः अन्धकारम् गूहत संवृतं कुरुत। यथा अस्माभिर्न दृश्यते तथाऽदर्शनं प्रापयत। विनाशयतेत्यर्थः। विश्वम् सर्वम् अत्रिणम् अत्तारं राक्षसादिकम् वि यात विविधं यापयत, अस्मत्सकाशात् निर्गमयत। यत् ज्योतिः सूर्यादिकं वयम् उश्मसि कामयामहे तत् कर्त कुरुत ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये द्वादशो वर्गः ॥

## [ ८७ ]

**प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।**
**जुष्टतमासो नृतमासो अञ्जिभिर्व्यानज्रे के चिदुस्राइव स्तृभिः ॥ १ ॥**

प्रऽत्वक्षसः। प्रऽतवसः। विऽरप्शिनः। अनानताः। अविथुराः। ऋजीषिणः।
जुष्टऽतमासः। नृऽतमासः। अञ्जिऽभिः। वि। आनज्रे। के। चित्। उस्राःऽइव। स्तृऽभिः ॥१॥

**स्कन्द०** प्रत्वक्षसः[७] त्वक्षू तनूकरणे। प्रकर्षेण तनूकर्तारः शत्रूणाम्। प्रतवसः प्रकृष्टबलाः। विरप्शिनः 'विरप्शी' (निघ ३,५) इति महन्नाम। महान्तः। अनानताः अप्रणतपूर्वाः कस्यचित्। अविथुराः व्यथ भयचलनयोः। अभीरवः। ऋजीषिणः अन्तर्णीतमत्वर्थोऽत्र ऋजीषी। ऋजीषिणः। जुष्टतमासः प्रियतमाः अवितृतमा वा[८]। नृतमासः नृशब्देनात्र तदाकाराः तद्विषयं वा प्राशस्त्यं लक्ष्यते। अतिशयेन मनुष्याकाराः प्रशस्ता वेत्यर्थः। अञ्जिभिः 'इत्थंभूतलक्षणे' (पा २,३,२१) इत्येवमेषा तृतीया। अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति यथा[९]। रत्नप्रायैराभरणैः सम्बद्धाः वि आनज्रे अञ्जेर्व्यक्त्यर्थस्येदं रूपम्। व्यज्यन्ते। कथम्। के चित् उस्राः इव स्तृभिः 'उस्राः' (निघ १,५) इति रश्मिनाम। स्तृभिरित्यपि नक्षत्रनाम (तु. या ३,२०)। यथा केचिदुस्राश्चन्द्ररश्मयः [१०]ऋत्वा आदित्यरश्मयो वा[१०] नक्षत्रैः सम्बद्धाः सौम्यरूपा व्यज्यन्ते तद्वदित्यर्थः ॥ १ ॥

**वेङ्कट०** प्रकर्षेण शत्रूणां तनूकर्तारः[११] प्रकृष्टबलाः महान्तः अप्रणताः[१२] अनेकाकिनः तृतीयसवनेऽन्वयात्[१३]

---

१. °ति यथा अ. २. नास्ति अ ति. ३. उद्योताख्यं अ ति. ४. °मः रक्षः वि[१] अ[१,२] ल. ५. यद् कु. ६. नास्ति कु. ७. नास्ति ति कु. ८. च अ. ९. नास्ति ति. १०-१०. नास्ति कु; नादित्य° अ ति. ११. तत्कर्मा: वि[१] अ[२]. १२. अप्रणीताः वि[१] अ[२]. १३. °तीये सवने° वि[१] अ[२].

ऋजीषिणः पर्याप्ततमाः[1] नेतृतमाः आभरणैः व्यक्ता[2] अभवन्। के चित् रश्मयः इव प्रभाभिः इति मरुतो वदति ॥ १ ॥

**मुद्गल०** 'प्रत्वक्षसः' इति षडृचं तृतीयं सूक्तम्। गोतम ऋषिः। जगती छन्दः। मरुतो देवताः ॥

प्रत्वक्षसः शत्रूणां प्रकर्षेण तनूकर्तारः। शत्रुघातिन इत्यर्थः। यतः प्रतवसः प्रकृष्टबलोपेताः अत एव विरप्शिनः विविधजयघोषेणोपेताः[3]। अत एव अनानताः आनतिरहिताः सर्वोत्कृष्टा इत्यर्थः। अविथुराः अवियुक्ताः। सप्तगणसंघीभूता[4] इत्यर्थः। ऋजीषिणः प्रार्जयितारो रसानाम्[5]। जुष्टतमासः अतिशयेन यष्टृभिः सेविताः नृतमासः अतिशयेन मेघादेर्नेतार एवम्भूता मरुतः स्तृभिः स्वशरीरस्याच्छादकैः अञ्जिभिः रूपाभिव्यञ्जकैराभरणैः व्यानज्रे नभसि व्यक्ता दृश्यन्ते। दृष्टान्तः। के चित् उस्राः इव ये केचन सूर्यरश्मयो यथा नभसि दीप्यन्ते तद्वत् ॥ १ ॥

उ॒प॒ह्व॒रे॒षु॒ यद॑चि॑ध्वं य॒यिं वय॑इव मरुतः॒ केन॑ चित् प॒था ।
श्चोत॑न्ति॒ कोशा॒ उप॑ वो॒ रथे॒ष्वा घृ॒तमु॑क्षता॒ मधु॑वर्ण॒मर्च॑ते ॥ २ ॥

उ॒प॒ऽह्व॒रेषु । यत् । अचि॑ध्वम् । य॒यिम् । वय॑ःऽइव । म॒रु॒तः॒ । केन॑ । चि॒त् । प॒था ।
श्चोत॑न्ति । कोशा॑ः । उप॑ । वः॒ । रथे॑षु । आ । घृ॒तम् । उ॒क्ष॒त॒ । मधु॑ऽवर्णम् । अर्च॑ते ॥ २ ॥

**स्कन्द०** उपह्वरेषु गह्वरेषु पर्वतप्रदेशेषु अन्तरिक्षप्रदेशेषु वा व्यवस्थितं मेघसमूहम् यत् यदा अचिध्वम् चेतयध्वे ययिम् गन्तारम्[6]। नष्टारमित्यर्थः। यदेति वचनात्तदेत्यध्याहार्यम्। तदा वयः[7] इव पक्षिण इव हे मरुतः! केन चित् पथा केनापि मार्गेण। येनान्यः[8] कश्चिदपि गन्तुं न शक्नोति तेन केनापीत्यर्थः। साकाङ्क्षत्वात्[9] शीघ्रमिति वाक्यशेषः। गतानां च सताम् श्चोतन्ति कोशाः इत्यादि। अथवा यदचिध्वमित्येतदेव चनतेर्गतिकर्मण उपधाया इत्वम्। चितिरेव वा सामर्थ्यात् गत्यर्थो द्रष्टव्यः। यदा गच्छथ ययिं मेघसमूहं प्रति वय इव हे मरुतः! केनापि पथा तदा श्चोतन्ति क्षरन्ति कोशाः[9]। 'कोशः' ( निघ १,१० ) इति मेघनाम। अथवा चर्ममयेन रज्ज्वा बद्धेन[10] येन[11] कूपादुदकमुत्तार्यते स [12]कोश इत्युच्यते[12]। इह तु तत्सदृशत्वात् मेघाः कोशाः अभिप्रेताः। उदकपूर्णा मेघा इत्यर्थः। उप वः रथेषु उपशब्दः सामीप्ये। समीपे वः युष्माकं स्वभूतानाम्। यत्र प्रदेशे युष्मदीया रथा व्यवतिष्ठन्ते तत्र रथचक्रधाराभिः छिद्यमानाः मेघाः प्रक्षरन्तीत्यर्थः। आकारस्तु पदपूरणः मर्यादार्थो वा। मर्यादया[13] श्चोतन्तीति। य ईदृशा रथाः तान् प्रति ब्रूमः। घृतम् उक्षत वृष्टिलक्षणमुदकमुक्षत[14] सिञ्चत। पातयतेत्यर्थः। मधुवर्णम् मधुसदृशवर्णम्[15]। अर्चते स्तोतुरर्थाय ॥ २ ॥

**वेङ्कट०** यदा[16] अचिध्वम् सञ्चितमकुरुत मेघम्, पक्षिण इव मरुतः! [17]केन चित् पथा[17] शीघ्रं गच्छन्तः। तदानीम् उपक्षरन्ति मेघाः युष्माकम् रथेषु स्थिताः। तथा सति उदकं सिञ्चत मधुसदृशवर्णं परिचरते ॥ २ ॥

---

१. °मताः वि[2]; °मनाः लपं. २. अभ्यक्ताः वि[2] अ[2]. ३. विविधजयनगुणो मूको. ४. °गणसन्धिभू° मूको. ५. °नाम् सोमम् मूको. ६. हन्ता° ति. ७. योनान्यः ति. ८. त्रुटितम् ति. ९. नास्ति अ ति. १०. बध्वा अ. ११. नास्ति मूको. १२-१२. कोशमि° अ कु. १३. °दायाम् अ ति. १४. °लक्षणमुक्षत अ ति. १५. °दृशं वर्णं ति. १६. यथा वि[2]. १७-१७. नास्ति वि[2] अ[2].

मुद्गल० हे मरुतः! उपह्वरेषु उपह्वर्तव्येषु गन्तव्येष्वस्माकं सन्निकृष्टेषु नभसः प्रदेशेषु यत् यदा ययिम् गतिमन्तं मेघम् अचिध्वम् वर्षणसामर्थ्येनोपचितं कुरुथ। किं कुर्वन्तः। वयः इव पक्षिण इव केन चित् पथा केनचिदाकाशमार्गेण शीघ्रं गच्छन्तः। नभसि शीघ्रं वर्षणार्थं प्रवर्तमानैर्मरुद्भिर्मेघाः उपचीयन्ते इत्यर्थः। तदानीम् कोशाः मेघाः वः युष्माकम् रथेषु उप श्चोतन्ति जलं मुञ्चन्ति। यस्मादेवं तस्मात् हे मरुतः! यूयम् अर्चते युष्मान् हविर्भिः पूजयते मह्यं यजमानाय मधुवर्णम् मधुसदृशरूपं स्वच्छम् घृतम् वृष्ट्युदकम् आ समन्तात् उक्षत सिञ्चत। अस्मदभिलषितां वृष्टिं कुरुतेत्यर्थः॥ २॥

प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे।
ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः॥ ३॥

प्र। एषाम्। अज्मेषु। विथुराऽइव। रेजते। भूमिः। यामेषु। यत्। ह। युञ्जते। शुभे।
ते। क्रीळयः। धुनयः। भ्राजत्ऽऋष्टयः। स्वयम्। महिऽत्वम्। पनयन्त। धूतयः॥ ३॥

स्कन्द० एषाम् मरुताम् अज्मेषु अज गतिक्षेपणयोः। गमनकालेषु विथुरा इव व्यथ भयचलनयोः। भीतेव प्र रेजते प्रकर्षेण कम्पते भूमिः। न च केवलेष्वज्मेषु। किं तर्हि। यामेषु यत् ह युञ्जते हशब्दोऽत्र चार्थे। यदा[1] च यामेषु 'स्वरथेषु पृषतीः[2] अश्वाः[3] युञ्जते। किमर्थम्। शुभे 'शुभम्' (निघ १,१२) इत्युदकनाम। उदकार्थम्। यदा गच्छन्ति मरुतः सन्नह्यन्ति च मेघान् हन्तुं तदा भयेन कम्पते इत्यर्थः। किञ्च ते मरुतः क्रीळयः क्रीडनशीलाः धुनयः कम्पयितारः शत्रूणाम् भ्राजदृष्टयः दीप्तशक्तयः दीप्ततोरणा वा स्वयम् एवात्मीयम् महित्वम् माहात्म्यम् पनयन्त पनतिः स्तुत्यर्थः। स्तावयन्ति[4]। तथातथा स्वयमेवोपकुर्वन्ति यथायथा परितुष्टाः स्तोतारो मरुतां माहात्म्यं स्तुवन्तीत्यर्थः। धूतयः धवतेर्गतिकर्मण इदं रूपम् (तु. निघ २,१४)। गन्तारः[5] मेघान् यज्ञान् शत्रून् वा प्रति॥ ३॥

वेङ्कट० प्रकर्षेण चलति मरुताम् उत्क्षेपकेषु गमनेषु एकाकिनीव भूमिः, यदि खलु अमी युक्ता भवन्ति उदकार्थम्। ते क्रीडनशीलाः कम्पयितारः दीप्तायुधाः स्वयम् एव माहात्म्यं कथयन्ति धून्वन्तः॥ ३॥

मुद्गल० यत् ह यदा खलु एते मरुतः शुभे शोभनाय वृष्ट्युदकाय युञ्जते मेघान् सज्जीकुर्वन्ति, तदानीम् अज्मेषु मेघानामुत्क्षेपकेषु एषाम् मरुतां सम्बन्धिषु यामेषु मेघानां नियमनेषु सत्सु भूमिः पृथिवी प्र रेजते प्रकर्षेण कम्पते। दृष्टान्तः। विथुरा इव यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालम्बा सती कम्पते तद्वत्। ते तादृशाः क्रीळयः विहारशीलाः धुनयः चलनस्वभावाः भ्राजदृष्टयः दीप्यमानायुधा[6] मरुतः धूतयः पर्वतादीन् धून्वन्तः सन्तः महित्वम् स्वकीयं महिमानम् स्वयम् एव पनयन्त व्यवहरन्ति। प्रकटयन्तीत्यर्थः॥ ३॥

---

१. या ति.　२. नास्ति ति.　३. अश्वान् मूको.　४. स्नाप॰ अ ति.　५. नास्ति अ ति.
६. ॰युधा एवंभूतः मूको.

स हि स्वसृत् पृषदश्वो युवा गणो३ऽया ईशानस्तविषीभिरावृतः ।
असि सत्य ऋणयावानेद्योऽस्या धियः प्राविताथा वृषा गणः ॥ ४ ॥

सः । हि । स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः । अया । ईशानः । तविषीभिः । आऽवृतः ।
असि । सत्यः । ऋणऽयावा । अनेद्यः । अस्याः । धियः । प्रऽअविता । अथ । वृषा । गणः ॥४॥

**स्कन्द०** हि-शब्दः पदपूरणः । य उक्तगुणोऽसि [1]सः त्वम्[1] स्वसृत् स्वयंगामी । पृषदश्वः पृषद्वर्ण-वडवः[2] । युवा सदैव तरुणः गणः मरुताम् । ईशानः ईश्वरः । अया तविषीभिः अयेति बहुवचनस्य स्थाने व्यत्ययेनैकवचनम् । आभिस्तविषीभिः एतैरात्मीयैः सेनालक्षणैर्बलैः आवृतः नित्यपरिवृतः । असि सत्यः सत्यश्चासि । ऋणयावा यातिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । यानि स्तोतृणामृणानि तेषां यापयिता । अपगमयितेत्यर्थः । अनेद्यः प्रशस्यः । अस्याः च धियः कर्मणः प्रज्ञाया[3] वा प्राविता प्रकर्षेण रक्षिता । अथ वृषा गणः अपि च वर्षिता मरुद्गणः ॥ ४ ॥

**वेङ्कट०** सः हि स्वयमेव सर्ता पृषदश्वः तरुणः मरुद्गणः अनया [4]पृथिव्या ईशितव्यया[4] ईशानः बलैः आवृतः । असि सत्यकर्मा स्तोतृणाम् ऋणं प्रतिगन्ता[5] प्रशस्यः । अस्य कर्मणः [6]प्रकर्षेण रक्षिताऽसौ[6] वर्षिता च गणः ॥ ४ ॥

**मुद्गल०** सः हि गणः स खलु मरुद्गणः अया अस्य सर्वस्य जगतः ईशानः ईशनशीलो भवति । कीदृशः । स्वसृत् स्वयमेव सरन् । नह्यन्यः कश्चिदस्य मरुद्गणस्य प्रेरकोऽस्ति । पृषदश्वः पृषत्यः श्वेतबिन्द्वङ्किता मृग्योऽश्वस्थानीया यस्य स तथोक्तः । युवा नित्यतरुणः तविषीभिः अन्येषामसाधारणैर्बलैः आवृतः परिवेष्टितः सत्यः सत्कर्मार्हः ऋणयावा स्तोतृणामृणस्यापगमयिता । बहुलस्य धनस्य दातेत्यर्थः । अनेद्यः सर्वैरनिन्दितः वृषा जलानां वर्षिता । एवम्भूतो मरुद्गणः अस्याः धियः अस्मदीयस्यास्य कर्मणः अथ अनन्तरम् प्र अविता असि प्रकर्षेण रक्षिता भवति ॥ ४ ॥

पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा ।
यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ॥ ५ ॥

पितुः । प्रत्नस्य । जन्मना । वदामसि । सोमस्य । जिह्वा । प्र । जिगाति । चक्षसा ।
यत् । ईम् । इन्द्रम् । शमि । ऋक्वाणः । आशत । आत् । इत् । नामानि । यज्ञियानि । दधिरे ॥५॥

**स्कन्द०** पितुः पिता मरुतां रुद्रः । 'प्रत्नः' ( निघ ३,२७ ) इति पुराणनाम । षष्ठीनिर्देशात् यत् सकाशादिति वाक्यशेषः । जन्मना इति हेतौ तृतीया । रुद्राख्यस्य पितुः पुराणस्य सकाशाद्यत् मरुतां[7] जन्म तेन हेतुना । वदामसि उच्चारयामः । किम् । सामर्थ्यात् स्तुतीः । यस्माद्रुद्रात् पुराणाज्जातत्वादभिजनोपेता मरुतः, तस्मादेतान्[8] स्तुम इत्यर्थः । तस्मादेव च सोमस्य द्वितीयार्थे

---

१-१. नास्ति ति. २-२. °द्वर्णो बडवः अ कु; °द्वर्णबन्धः ति. ३. प्रज्ञया ति. ४-४. ईशितव्यः पृथिव्या ईशितव्यः कु; ईशितव्य पृथिव्येशितव्ये (?) ल. ५. प्रतिहि (?°ह)न्ता वि[१]; प्रतिगन्ता (?) ल. ६. °६णार° वि[१] अ[२]. ७. मरुतः ति. ८. °देतत् मूको.

षष्ठी। सोमं प्रति। मरुताम् जिह्वा प्र जिगाति प्रकर्षेण गच्छति। सोममपि यज्ञेषु तस्मादेव पिबन्तीत्यर्थः[1]। न च केवलेनैव जन्मना हेतुना। किं तर्हि। चक्षसा दर्शनेन च। यस्माच्च सर्वज्ञेयानां ज्ञातार इत्यर्थः। यस्माच्च ईम् एते मरुतः इन्द्रम् शमि वृत्रवधादौ कर्मणि ऋक्वाणः ऋच स्तुतौ। अर्चनमृक्[2] स्तुतिः, तद्वन्त ऋक्वाणः। सर्वस्तोतॄणां स्तुत्येत्यर्थः। आशत व्याप्नुवन्ति। यस्माच्च वृत्रवधादौ कर्मणीन्द्रेण सदृशाः। नेन्द्रान्न्यूना इत्यर्थः। [3]आत् अस्मात्। इत्[3] इच्छब्दस्तु पदपूरणः। नामानि यज्ञियानि दधिरे तैस्तैर्नामभिर्यज्ञेषु यष्टृभिरिज्यन्ते इत्यर्थः॥ ५॥

**वेङ्कट०** पितुः[4] पुराणस्य[5] स्तोत्रकुशलस्य सकाशात् जननेन[6] वयमपि स्तुतिकुशलाः[7] स्तुमः। सोमस्य सुतस्य दर्शनेन मम जिह्वा स्तोतुकामा[8] निर्गच्छति। यदैनम् इन्द्रम् कर्मणि स्तोत्रवन्तो मरुतः व्याप्नुवन्। अनन्तरमेव यज्ञियानि नामानि उदकानि प्रयच्छन्ति॥ ५॥

**मुद्गल०** प्रत्नस्य चिरन्तनस्य पितुः अस्माकं जनकस्य रहूगणस्य सकाशात् यज्जन्म तेन जन्मना वयम् वदामसि ब्रूमः। वक्ष्यमाणमस्माकं वृत्तान्तं पितोपदिष्टवान्, अतो वयं ब्रूमः। कोऽसौ वृत्तान्त इति चेदुच्यते। सोमस्य यज्ञेष्वभिषुतस्य[9] सोमद्रव्यस्य चक्षसा प्रकाशमानयाहुत्या सहिता जिह्वा स्तुतिरूपा वाक् प्र जिगाति मरुद्गणं प्रकर्षेण गच्छति। यज्ञेषु सोमाहुतिः स्तुतिश्च मरुद्भ्यः क्रियते। यत् यस्मात् ईम् एनम् इन्द्रम् शमि वृत्रवधादिरूपे कर्मणि ऋक्वाणः 'प्रहर भगवो जहि वीरयस्व' ( ऐब्रा ३,२० ) इत्येवंरूपया स्तुत्या युक्ताः सन्तः आशत प्राप्नुवन्, न पर्यत्याक्षुः। आत् इत् एवमिन्द्रप्राप्त्यनन्तरमेव यज्ञियानि यज्ञार्हाणि ईदृग्वान्यादृग्वा इत्येवमादीनि नामानि इन्द्रसकाशाल्लब्धानि दधिरे धृतवन्तः। तस्मादेषां यज्ञे सोमाहुतिः स्तुतिश्च क्रियते॥ ५॥

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः॥ ६॥

श्रियसे। कम्। भानुऽभिः। सम्। मिमिक्षिरे। ते। रश्मिऽभिः। ते। ऋक्वऽभिः। सुऽखादयः।
ते। वाशीऽमन्तः। इष्मिणः। अभीरवः। विद्रे। प्रियस्य। मारुतस्य। धाम्नः॥ ६॥

**स्कन्द०** श्रियसे सस्यसम्पत्तिलक्षणायै श्रियै[10]। कम् उदकम् भानुभिः दीप्तिभिः विद्युल्लक्षणाभिः। सम् मिमिक्षिरे मिह सेचने इत्यस्यैतद्रूपम्। सम्यक् सेक्तुमिच्छन्ति[11]। विद्युद्भिर्वर्षन्तीत्यर्थः। न च केवलाभिः। किं तर्हि। ते रश्मिभिः अश्वप्रग्रहैः। ते ऋक्वभिः स्तुतिमद्भिः। कैः। सामर्थ्यादश्वैः रथैर्वा। सर्वैश्चोपकरणैः वर्षन्तीत्यर्थः[12]। सुखादयः खादिरत्र कट्टारिकाकारो मरुतामायुधविशेषः कवच्या वा। उभयत्र हि खादिशब्दस्य दृष्टः प्रयोगः। 'त्वेषं गणं तवसं खादिहस्तम्' ( ऋ ५,५८,२ ), 'अंसेषु व ऋष्टयः पत्सु खादयः' ( ऋ ५,५४,११ )। शोभनाः खादयो येषां ते सुखादयः। अथवा अन्यथास्यार्धर्चस्यार्थयोजना। श्रियसे[13] कमिति कंशब्दः पदपूरणः सुखनाम

---

१. पिबतीत्य° ति॰ २. ऋक् ति. ३-३. नास्ति ति; आदस्मात् अ. ४. नास्ति वि[1]. ५. पुराणकुशलस्य वि[3] अ[2]. ६. जनेन वि[3] अ[2]. ७. स्तोत्रकु° कु. ८. स्तोतृ° ल; स्तात्रे° कु. ९. °ज्ञेऽभि° मै[1]. १०. नास्ति अ. ११. सेचितुमि° ति. १२. वहन्ती° मूको. १३. नास्ति ति.

वा। सस्यसम्पत्तिलक्षणायै श्रियै सुखाय च सर्वप्राणिनां भानुभिः सम्मिमिक्षिरे ते रश्मिभिः। भानुशब्दोऽत्रान्तर्णीतमत्वर्थः। सम्मिमिक्षिरे इति म्यक्षतेर्गतिकर्मणो रूपम्। रसानुप्रदानकाले दीप्तिमद्भिरादित्यरश्मिभिः सह सङ्गच्छन्ते ते मरुतः। ते[1] एव ऋक्वभिः स्तुतिमद्भिः[2] स्तोतृभिः सह यागकाले सङ्गच्छन्ते सुखादयः। किञ्च ते वाशीमन्तः वाशीशब्दोऽत्रायुधविशेषः[3]। 'वाशीमेको बिभर्ति' ( ऋ ८,२९,३ ) इति यथा। वाङ्नाम वा[4] वाशीशब्दः। तद्वन्तः। इष्मिणः इषिर्गत्यर्थः इच्छार्थो वा। गन्तारः शत्रून् प्रति। इषितारो वा स्तुतीनाम्। अथवा इट् इत्यन्ननाम ( तु. निघ २,७ )। तद्वन्त इष्मिणः। अभीरवः भयरहिताः। किञ्च विद्रे वेद्म्यहम् प्रियस्य मारुतस्य धाम्नः द्वितीयार्थेऽत्र षष्ठी। सर्वस्य प्रियं मारुतं धाम स्थानं वा नाम वा जन्म वा तेजो वा सामर्थ्यलक्षणम्॥ ६॥

**वेङ्कट०** [5]श्रयणायोदकं तेजोभिः सम् मिमिक्षिरे समाददुः ते रश्मिभिः बन्धकैः। ते रसाऽऽहरणशीलैर्भानुभिः† शोभनखादियुक्ताः। तथा वाशीमन्तः वाशी चाऽऽयुधम्‡। गन्तारः अभीरवः। लभेयाहं प्रियं मारुतं धामेति। वर्षकामस्य सूक्तम्[5]॥ ६॥

**मुद्गल०** ते पूर्वोक्ता मरुतः भानुभिः दीप्यमानैः सूर्यरश्मिभिः सह कम् वृष्ट्युदकम् श्रियसे श्रयितुं प्राणिभिः सेवितुम् सम् मिमिक्षिरे सम्यक् मेढुमिच्छन्ति। पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छन्ति। एवं वृष्टिमुत्पाद्य ते मरुतः ऋक्वभिः स्तुतिमद्भिर्ऋत्विग्भिः सह सुखादयः शोभनस्य हविषो भक्षयितारो भवन्ति। वाशीमन्तः शोभनया स्तुतिलक्षणया वाचोपेताः इष्मिणः गतिमन्तः अभीरवः भयरहिताः ते मरुतः प्रियस्य सर्वाभिमतस्य मारुतस्य मरुत्सम्बन्धिनः धाम्नः स्थानस्य सर्वाभिमतं मरुत्सम्बद्धं विशिष्टं स्थानं विद्रे लब्धवन्तः॥ ६॥

इति प्रथमाष्टके षष्ठाध्याये त्रयोदशो वर्गः॥

## [ ८८ ]

**आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः।**
**आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः॥ १॥**

आ। विद्युन्मत्ऽभिः। मरुतः। सुऽअर्कैः। रथेभिः। यात। ऋष्टिमत्ऽभिः। अश्वऽपर्णैः।
आ। वर्षिष्ठया। नः। इषा। वयः। न। पप्तत। सुऽमायाः॥ १॥

**स्कन्द०** आ इत्युपसर्गो यात इत्याख्यातेन सम्बध्यते[6]। विद्युन्मद्भिः विद्युता संयुक्तैः[7]। हे मरुतः! स्वर्कैः अर्चनमर्कः स्तुतिः। शोभनोऽर्को येषां ते स्वर्काः, तैः स्वर्कैः। सुष्ठु स्तुत्यैरित्यर्थः। रथेभिः आ यात अस्मान् प्रति। ऋष्टिमद्भिः शक्तिमद्भिः तोरणवद्भिर्वा। अश्वपर्णैः[4] अश्वपतनैः। किमर्थम्।

---

१. तम् अ. २. स्तुतिभिः अ. ३. विशेषः श्रिये च ति; °शेषः श्रियै वो अ; °शेषः कु. ४. नास्ति अ. ५-५. नास्ति वि[1]. † रसाभिसर° अ[2]; रसाःमर° वि[1]; °नुभिः (?) ल. ‡ वायु° वि[1] अ[2]. ६. °ते च ति. ७. °युनैः ति.

उच्यते। आ वर्षिष्ठया नः आ इत्युपसर्गः पतत[1] इत्याख्यातेन सम्बन्धयितव्यः। वर्षिष्ठया इषा इति हेतौ तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। नः इत्यपि तादर्थ्ये चतुर्थी। वृद्धतमेनास्मदर्थेन अन्नेन[2]। आयात। वृद्धतममन्नमस्मभ्यं दातुमित्यर्थः। कथञ्च पुनरायात। वयः न पक्षिण इव अत्यन्तशीघ्रम् आ पतत हे सुमायाः! सुप्रज्ञानाः![3] ॥ १ ॥

**वेङ्कट०** [4]आ यात दीप्तिमद्भिः मरुतः! स्वञ्चनैः रथैः ऋष्टिमद्भिः अश्वपक्षैः†। आ पतत् वृद्धतमेनान्नेन अस्मान् पक्षिण इव[4] सुकर्माणः! ॥ १॥

**मुद्गल०** 'आ विद्युन्मद्भिः' इति षड्डृचं चतुर्थं सूक्तम्। गोतम ऋषिः। आद्या षष्ठी च द्वे प्रस्तारपङ्क्ती। आद्यौ पादौ जागतौ तृतीयचतुर्थौ गायत्रौ यस्याः सा प्रस्तारपङ्क्तिः। द्वितीयाद्याः पङ्क्तयः। पञ्चमी विराड्रूपा। आदितस्त्रयः पादा एकादशका अन्त्योऽष्टकः सा विराड्रूपा। मरुतो देवताः ॥

हे मरुतः! मितं निर्मितमन्तरिक्षं प्राप्य रुवन्ति शब्दं कुर्वन्तीति मरुतः। रथेभिः आत्मीयैः आ यात अस्मदीयं यज्ञमागच्छत। कीदृशैः रथैः। विद्युन्मद्भिः विशिष्टदीप्तियुक्तैः। स्वर्कैः स्वर्चनीयैः शोभनगमनयुक्तैः। ऋष्टिमद्भिः ऋष्टयः शक्तिरूपाण्यायुधानि तद्वद्भिः। अश्वपर्णैः अश्वानां पतनं गमनं येषामस्ति तादृशैः। हे सुमायाः! शोभनकर्माणो मरुतः! वर्षिष्ठया प्रवृद्धया इषा अस्मभ्यं दातव्येनान्नेन सह नः अस्मान् प्रति वयः न पक्षिण इव शीघ्रम् आ पप्तत आपतत। आगच्छतेत्यर्थः ॥ १ ॥

**तेऽरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथतूर्भिरश्वैः।**
**रुक्मो न चित्रः स्वधितीवान् पव्या रथस्य जङ्घनन्त भूम ॥ २ ॥**

ते। अरुणेभिः। वरम्। आ। पिशङ्गैः। शुभे। कम्। यान्ति। रथतूःऽभिः। अश्वैः।
रुक्मः। न। चित्रः। स्वधितिऽवान्। पव्या। रथस्य। जङ्घनन्त। भूम ॥ २ ॥

**स्कन्द०** ते मरुतः अरुणेभिः अरुणैः रक्तवर्णैः वरम् उत्कृष्टं मेघं प्रति पिशङ्गैः कपिलैश्च शुभे उदकार्थम्। [6]"कम् इति[6] सुखनाम' ( या २,१४ )। सुखम्[7] आ यान्ति आगच्छन्ति। रथतूर्भिः रथे व्यवस्थिता ये त्वरन्ति तूर्वन्ति वा, मेघान् हिंसन्तीत्यर्थः, ते रथतुरः तैः रथतूर्भिः, अश्वैः। कथं पुनरायान्ति। रुक्मः न चित्रः स्वधितीवान् 'स्वधितिः' ( निघ २, २० ) इति वज्रनाम। यथायं रोचनः पूजनीयः आयुधवांश्च[8] भगवानादित्यः[9] भ्राजमान आगच्छति तद्वत्। आगत्य च पव्या चक्रधारया रथस्य जङ्घनन्त[10] घ्नन्ति[1]। भूम बहुपर्यायोऽयं भूमशब्दः। बह्वपि मेघजातम् ॥ २ ॥

**वेङ्कट०** ते अरुणैः पिशङ्गैः रथस्य तारकैः अश्वैः वर्षिष्ठम् कम् चन देशम्[11] आ यान्ति[12] उदकार्थम्। मणिः इव[13] चित्रः आयुधवान् मरुद्गणः। ते रथचक्रस्य धारया भूमिं घ्नन्ति मरुतः ॥ २ ॥

---

१. नास्ति अ. २. °न्नेन हेतुना अ. ३. °प्रज्ञा च अ ति. ४-४. नास्ति वि¹. † नास्ति कु. ६-६. नास्ति ति. ७. नास्ति मूको. ८. °धपरांश्च ति. ९. मवानादि° ति. १०. नास्ति ति. ११. देशे कु. १२. नयन्ति वि¹ अ². १३. अपि वि¹.

**मुद्गल०** ते **पूर्वोक्ता मरुतः** अरुणेभिः **अरुणवर्णैः** पिशङ्गैः **पिङ्गलवर्णैरुभयवर्णोपेतैः** रथतूर्भिः **रथस्य** प्रेरयितृभिः अश्वैः वरम् **देवानां वरीतारम्**[1] कम् शब्दयितारं **स्तुवन्तं यजमानम्** आ यान्ति **आगच्छन्ति । किमर्थम् ।** शुभे **तस्य शोभां कर्तुम् । तेषां मरुतां** गणः रुक्मः न **रोचमानं सुवर्णमिव** चित्रः **अतिशयेन दर्शनीयः** स्वधितीवान् **शत्रूणां खण्डकेन वज्रायुधेनोपेतः । एवंविधगणरूपास्ते** मरुतः रथस्य पव्या **चक्रधारया** भूम **भूमिम्** जङ्घनन्त **अत्यर्थं घ्नन्ति । स्तोतृरक्षणार्थमागतानां तेषां मरुतां भारमसहमाना भूमिरतिपीडिता बभूवेत्यर्थः ॥ २ ॥**

**श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा ।**
**युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ॥ ३ ॥**

श्रिये । कम् । वः । अधि । तनूषु । वाशीः । मेधा । वना । न । कृणवन्ते । ऊर्ध्वा ।
युष्मभ्यम् । कम् । मरुतः । सुऽजाताः । तुविऽद्युम्नासः । धनयन्ते । अद्रिम् ॥ ३ ॥

**स्कन्द०** कम् **इति पदपूरणः सुखनाम वा ।** श्रिये **सुखाय च**[2] **सर्वप्राणिनाम्** वः **युष्माकं स्वभूताः** अधि तनूषु **मेघशरीराणामुपरि**[3] **। साकाङ्क्षत्वाद्वर्तमाना इति वाक्यशेषः । मेघं छिन्दन्त इत्यर्थः ।** वाशीः **आयुधविशेषाः । अथवा व इत्येतत् तनूष्वित्येतेन सम्बध्यते न वाशीरित्यनेन**[4] **। युष्माकं शरीराणामुपरि वर्तमाना वाश्यः**[5] **। युष्माभिः**[6] **गृहीता इत्यर्थः । किं कुर्वन्तः**[7]**। उच्यते ।** मेधा वना न कृणवन्ते ऊर्ध्वा 'मेधः' ( निघ ३,१७ ) **इति यज्ञनाम । द्वितीयाबहुवचनस्य चात्र आकारादेशो द्रष्टव्यः**[8] **। वनशब्दो वृक्षसमूहवचनः । यज्ञान् ऊर्ध्वान् कुर्वन्ति वनानीव । यथा वृष्टिद्वारेण वनानि जनयन्ति । एवं यज्ञानपीत्यर्थः । किञ्च युष्मभ्यं युष्माकमर्थाय** कम् **सुखं** हे मरुतः ! सुजाताः ! तुविद्युम्नासः **द्युम्नं द्योततेः अन्नमिहाभिप्रेतम् । बहुहविर्लक्षणान्नाः**[9] **यजमानाः ।** धनयन्ते **धनीकुर्वन्ति । अभिषवार्थं परिगृह्णन्तीत्यर्थः ।** अद्रिम् **अभिषवग्रावाणम् । अथवा धन धान्ये इत्येतस्य**[10] **सामर्थ्यात् वृद्ध्यर्थस्य संस्कारार्थस्य वा रूपम् । अद्रिमित्यभिषवग्राव्णः**[11] **सम्बन्धादादरणाद्वा सोमोऽभिप्रेतः । वसतीवर्यैकधनाभिः**[12] **वर्धयन्ति संस्कुर्वन्ति वेत्यर्थः ॥ ३ ॥**

**वेङ्कट० शोभायै**[13] **भवति** वः **अङ्गेषु** वाशीः**। यज्ञान् वनानीव** मरुतः **ऊर्ध्वान्**[14] **कृण्वन्ति ।** युष्मभ्यम् मरुतः ! सुजाताः ! **बहुधनाः** कम्[15] **ग्रावाणमभिषवाय सञ्जिन्वन्ति ॥ ३ ॥**

**मुद्गल० हे मरुत !** वः **युष्माकम्** अधि तनूषु **शरीरेष्वंसप्रदेशेषु** वाशीः **शत्रूणामाक्रोशकम् आराख्यमायुधम्** श्रिये कम् **ऐश्वर्यार्थं वर्तते इति शेषः ।** कम् **इत्येतत्**[16] **पादपूरणम् । तादृशा मरुतः** वना न **उच्छ्रितान् वृक्षसमूहानिव** मेधा **मेधान् यज्ञान्** ऊर्ध्वा **ऊर्ध्वान् एकाहाहीनसत्ररूपेणोच्छ्रितान्** कृणवन्ते **यजमानैः कारयन्ति ।** हे सुजाताः ! **शोभनजननयुक्ताः !** मरुतः ! युष्मभ्यम् **युष्मदर्थम्** कम् **सुखकरम्** अद्रिम् **सोमाभिषवे प्रवृत्तं ग्रावाणम्** तुविद्युम्नासः **प्रभूतधनाः यजमानाः** धनयन्ते **धनं कुर्वन्ति । युष्माकं यागाय ग्रावभिरभिषुण्वन्तीत्यर्थः ॥ ३ ॥**

---

१. वरितारं मै[2]. २. नास्ति ति. ३. मेघरूपशरीराणा° अ ति. ४. °त्येतेन अ. ५. वाश्या मूको. ६. नास्ति अ. ७. कुर्वन्ति अ. ८. भवति ति. ९. °न्नाय ति. १०. कृते करय ति. ११. °ग्रावाण अ; °ग्रावाणाम् ति. १२. °भानाभिः कु. १३. शोभनार्थं कु; शोभनायै ल. १४. ऊर्ध्वं वि[3] अ[2]. १५. तम् वि[3] अ[2]. १६. नास्ति मूको.

अहानि गृध्राः पर्या व आगुरिमां धियं वार्कार्यां च देवीम् ।
ब्रह्म कृण्वन्तो गोतमासो अर्कैरूर्ध्वं नुनुद्र उत्सधिं पिबध्यै ॥ ४ ॥

अहानि । गृध्राः । परि । आ । वः । आ । अगुः । इमाम् । धियम् । वार्कार्याम् । च । देवीम् ।
ब्रह्म । कृण्वन्तः । गोतमासः । अर्कैः । ऊर्ध्वम् । नुनुद्रे । उत्सऽधिम् । पिबध्यै ॥ ४ ॥

**स्कन्द०** यागानामहःकालत्वात् अहानि इत्येतेन यागो लक्ष्यते। सप्तम्यर्थे चैषा प्रथमा। अहस्सु। यागकाले इत्यर्थः। गृध्राः अभिकाङ्क्षितारः फलानाम्। वः युष्माकं स्वभूतानाम्। परि आ आ अगुः पर्यागताः। प्राप्ताः कुर्वन्तीत्यर्थः। इमाम् धियम् यागाख्यं कर्म। वार्कार्याम् च। वृतैर्ऋत्विग्भिः[1] वाचा वा क्रियमाणत्वात् वार्कार्या स्तुतिरिहाभिप्रेता। ताम् च। कीदृशीम् देवीम् देवयोग्यां दीप्तां वा। स्वगुणैरत्यन्तोत्कृष्टामित्यर्थः। किञ्च ब्रह्म स्तुतिलक्षणम् कृण्वन्तः गोतमासः गोतमप्रभृतयः। अर्कैः मन्त्रैः सम्बद्धम् ऊर्ध्वम् नुनुद्रे प्रेरयन्ति। उत्क्षिपन्तीत्यर्थः। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः। वयं गोतमप्रभृतय उत्क्षिपाम इत्यर्थः। उत्सधिम् 'उत्सः' (निघ ३,२३) इति कूपनाम। धेट् पाने। कूप इव यः पीयते स उत्सधिः† अत्यन्तप्रभूतः सोमः। तमुत्सधिम्। किमर्थम्। उच्यते। पिबध्यै पातुम्। यूयं पास्यथेत्येवमित्यर्थः[2] ॥ ४ ॥

**वेङ्कट०** अहानि तृषिताः सर्वाण्येव गोतमाः युष्मान् परि आ आ अगुः। इदं कर्म च[3] दैवं वृतैर्ऋत्विग्भिः कर्तव्यम् अकुर्वन्। [4]कर्म कुर्वन्तः[4] गोतमाः ऊर्ध्वम् उत्क्षिप्तवन्तः स्तोत्रैः उत्सनिधानं कूपं पानाय ॥ ४ ॥

**मुद्गल०** तृषितैर्गोतमैः स्तुता मरुतस्तेभ्यो गोतमेभ्यो देशान्तरे वर्तमानं कूपमुत्खायानीय प्रददुः। एतद् दृष्ट्वा कश्चिदृषिर्ब्रूते। हे गोतमाः! गृध्राः जलाभिकाङ्क्षायुक्तान् वः युष्मान् अहानि शोभनोदकोपेतानि दिनानि परि आ अगुः पर्यागतानि परितः आभिमुख्येन प्राप्तानि। प्राप्य च वार्कार्याम् वार्भिरुदकैर्निष्पाद्याम् इमाम् धियम् ज्योतिष्टोमादिलक्षणं कर्म च देवीम् द्योतमानमकुर्वन्। येष्वहःसु ब्रह्म हविर्लक्षणमन्नम्[5] अर्कैः मन्त्रसाध्यैः स्तोत्रैः सह कृण्वन्तः मरुद्भ्यः कुर्वन्तः गोतमासः गोतमा ऋषयः उत्सधिम् उत्सो जलप्रवाहोऽस्मिन् धीयत इत्युत्सधिः कूपः तम् पिबध्यै स्वकीयपानाय ऊर्ध्वम् नुनुद्रे नुनुदिरे देशान्तरे वर्तमानं कूपमुत्खातवन्तः। एतदीयस्तोत्रैः स्तुता मरुतः कूपमुत्खातवन्त इति यत् तदेतदीयस्तोत्रकारितमिति एतेषूपचर्यते। एकः आकारः पदपूरणः[6] ॥ ४ ॥

एतत् त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।
पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून् ॥ ५ ॥

---

१. वृतैः ऋ° कु ति. २-२. नास्ति ति. † °त्सधीः अ. ३. नास्ति वि[1] अ[2]. ४-४. नास्ति वि[1] अ[2]. ५. लक्षण° मै[2]. ६. पूरणः मूको.

एतत् । त्यत् । न । योजनम् । अचेति । सस्वः । ह । यत् । मरुतः । गोतमः । वः ।
पश्यन् । हिरण्यऽचक्रान् । अयःऽदंष्ट्रान् । विऽधावतः । वराहून् ॥ ५ ॥

**स्कन्द०** युज्यन्ते प्राणवियोगादिना अनेन शत्रव इति योजनम् सेनालक्षणं बलमिहाभिप्रेतम् । एतत् युष्मदीयं बलम् न अचेति [1]चेत्यते । न[1] ज्ञायते केनचित् । सस्वः अन्तर्हितम् । ह-शब्दस्तु पदपूरणः[2] । देवतामाहात्म्यादन्तर्हितं[3] युष्मदीयं सेनालक्षणं बलं केनचिदपि न दृश्यत इत्यर्थः । यत् कीदृशम् । उच्यते । यत् हे मरुतः! गोतमः कर्मकर्तृश्रुतेः साकाङ्क्षत्वात् स्तुतवानिति वाक्यशेषः । वः युष्मान् । पश्यन् हिरण्यचक्रान् हिरण्यशब्दोऽत्र '[4]अथाप्यस्यां ताद्धितेन[4] कृत्स्नवन्निगमा भवन्ति' ( या २, ५ ) इत्येवं हिरण्मये वर्तते । हिरण्मयानि रथचक्राणि येषां ते हिरण्यचक्राः । तान् हिरण्यचक्रान् । हिरण्मयचक्ररथस्थानित्यर्थः[5] । अयोदंष्ट्रान् दंष्ट्रास्थानीयत्वाद्रथोद्धी[6] अत्र दंष्ट्रे उच्येते[7] । अयोमयरथोद्धीन्[8] । लोहमयोद्धीकरथस्थानित्यर्थः[9] । विधावतः इतश्चेतश्च विविधं धावतः । वराहून् वरमुत्कृष्टं श्रेष्ठमिति पर्यायाः[10] । हुशब्दोऽपि हन्तेर्वा ह्वयतेर्वा हरतेर्वा जुहोतेर्वाऽदनार्थस्य[11] । उत्कृष्टस्य शत्रोः हन्तॄन् आह्वातॄन् वा उदकस्य वाऽऽहर्तॄन् हविषो वा भक्षयितॄन् ॥ ५ ॥

**वेङ्कट०** एतत् स्तोत्रसंघटनं मया कृतम् एतत् इव ज्ञायते । न अन्यदस्त्यस्योपमानम् । प्रकाशितवान् गोतमः युष्माकम् यत् मरुतः । पश्यन् हिरण्यचक्रान् अयोदंष्ट्रान्[12] विधावतः [13]वराहून् उदारान्[13] भवतां रथान् । धनं रथेषु तिष्ठति ॥ ५ ॥

**मुद्गल०** हे मरुतः! एतत् योजनम् युज्यतेऽनेन देवतेति योजनम् एतत्सूक्तसाध्यं स्तोत्रम् । त्यत् न त्यत् प्रसिद्धमन्यदुत्कृष्टं स्तोत्रमिव अचेति सर्वैर्ज्ञायते । वः युष्मदर्थम् यत् यदेतत्सूक्तरूपं स्तोत्रं गोतमः ऋषिः सस्वः ह उच्चारितवान् खलु । किं कुर्वन् । हिरण्यचक्रान् हिरण्यमयचक्ररथारूढान् अयोद्रंष्टान् अयोमयीभिश्चक्रधाराभिर्युक्तान् विधावतः विविधमितस्ततः प्रवर्तमानान् [14]वराहून् वरस्योत्कृष्टस्य शत्रोर्हन्तॄन् । एवंभूतान् मरुतः पश्यन् सम्यग्जानन्[14] गोतमो यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सदस्माभिः सर्वैरुपलभ्यते[15] इत्यर्थः ॥ ५ ॥

**एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी ।**
**अस्तोभयद् वृथासामनु स्वधां गभस्त्योः ॥ ६ ॥**

एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति । वाघतः । न । वाणी ।
अस्तोभयत् । वृथा । आसाम् । अनु । स्वधाम् । गभस्त्योः ॥ ६ ॥

---

१-१. °त्यतेनेन अ. २. नास्ति अ ति. ३. °म्याद्दर्शितं अ कु. ४. अपि तद्धितः ति; °थापि ता° अ कु. ५. °ण्मयरथ° कु ति. ६. °थोन्धी मूको. ७. उच्यते मूको. ८. °मयरथोन्धीन् ति; अयोमयान् रथोन्धीन् अ कु. ९. °योन्धीक° मूको. १०. पर्यायः ति. ११. °र्वा दाना° अ कु; °र्वा अर्थस्य ति. १२. नास्ति वि[1] अ[2]. १३-१३. °हूदारान्(?) ल; भवतः वराहारान् वि[1] अ[2]. १४-१४. नास्ति मै[2]. १५. °लक्ष्यते मै[2].

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। या पुरापि स्तुतवती[1] एषा स्या सा वः युष्मान् हे मरुतः! अनुभर्त्री अनुशब्दोऽत्र धात्वर्थानुवादी, लम्बते प्रलम्बत इति यथा। बिभर्तिर्धारणार्थः। युष्मद्गुणानां धारयित्री। सकलयुष्मद्गुणसङ्कीर्तनयुक्तेत्यर्थः। प्रति स्तोभति प्रतीत्येषोऽभीत्येतस्य स्थाने। स्तोभतिरर्चतिकर्मा। अभिष्टोभति। वाघतः न ऋत्विङ्नामैतत्। ऋत्विज[2] इव। वाणी वागस्मदीया। न च स्वयमेव केवलं स्तौति। किं तर्हि। अस्तोभयत् अन्यैरपि स्वपुत्रैः पौत्रैश्च ऋत्विग्भिर्वा स्तावयति। वृथा अयत्नेन। अक्लेशेनेत्यर्थः। आसाम् अनु स्वधाम् गभस्त्योः अन्विति पश्चाद्भावे। 'स्वधा' (निघ २,७) इत्यन्ननाम। षष्ठ्यर्थे चात्र द्वितीया। 'गभस्ती' (निघ २,४) इति बाहुनाम। इह तु बाहुसम्बन्धाद् हस्तयोर्वर्तते। सप्तमीनिर्देशाच्च स्थितामिति[3] वाक्यशेषः। एषां पश्चाद्भविर्लक्षणानामन्नानां[4] हस्तयोः स्थितानाम्। हस्तस्थस्य हविषः प्रदानोत्तरकालमित्यर्थः॥ ६॥

**वेङ्कट०** सा एषा मदीया वाणी मरुतः! भवद्भ्यो हविषाम् अनुभर्त्री[5] युष्मान् प्रति स्तोभति, यथा ऋत्विजः[6]। हस्तयोः अन्नं दत्त्वा तदनन्तरमेव अनायासेन आभिः स्तुतिभिः मरुद्गणो गोतमम् अस्तोभयत् तेनान्नेन इति। अन्नकामस्येयं[7] स्तुतिः॥ ६॥

**मुद्गल०** हे मरुतः! स्या सा एषा अस्मदीया स्तुतिः वः युष्माकम् अनुभर्त्री युष्माननुहरन्ती युष्मद्गुणसदृशी प्रति स्तोभति प्रत्येकं स्तौति। तथा वाघतः न वाणी न सम्प्रत्यर्थे। इदानीम् ऋत्विक्सम्बन्धिनी वागपि वृथा अनायासेन आसाम् आभिर्ऋग्भिः अस्तोभयत् अस्तौत्। गभस्त्योः अस्मदीययोर्बाह्वोः स्वधाम् अनु बहुविधमन्नं मरुतः स्थापयन्ति। तामनुलक्ष्येत्यर्थः॥ ६॥

इति प्रथमाष्टके षष्ठाध्याये चतुर्दशो वर्गः॥

## [८९]

### आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः।
### देवा नो यथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥

आ। नः। भद्राः। क्रतवः। यन्तु। विश्वतः। अदब्धासः। अपरिऽइतासः। उत्ऽभिदः।
देवाः। नः। यथा। सदम्। इत्। वृधे। असन्। अप्रऽआयुवः। रक्षितारः। दिवेऽदिवे ॥१॥

**स्कन्द०** 'वैश्वदेवे द्वे सूक्ते' (तु. बृदे ३,१२२)। एते च द्वे सूक्ते विश्वदेवदेवत्ये। नः अस्मान्। भद्राः कल्याणाः। क्रतवः यज्ञाः। आ यन्तु आगच्छन्तु। विश्वतः सर्वतः। स्वतस्सम्बन्धिनश्चात्मनः सम्बन्धिनां च पुत्रादीनामस्माकं यज्ञा उपनयन्त्वित्यर्थः। कीदृशाः। उच्यते। अदब्धासः अहिंसिताः। यज्ञविध्वंसिभी रक्षआदिभिः अविगुणा इत्यर्थः। अपरीतासः अपरिगताः। अन्यैरप्राप्तपूर्वा इत्यर्थः। उद्भिदः उद्भिन्नामैकाहः, तत्प्रभृतयः। अथवा उद्भिन्दन्ति फलानीत्युद्भिदः। जनयितारः फलानामित्यर्थः। कथं पुनरायन्तु[8]। उच्यते। देवाः नः यथा सदम् इत् सदमिति

---

१. स्तुवती ति. २. °त्विजम् ति. ३. स्थितानामिति ति. ४. पश्चाद्भावानामन्नानां ति; °द्धविर्लक्षणानाम् कु. ५. अनुहर्त्री वि[1] अ[1]. ६. श्रुटितम् वि[1] अ[1]. ७. नास्ति मूको. ८. °यान्तु अ.

सदाशब्दपर्यायः । इच्छब्द एवार्थे । सदैव । वृधे वर्धनाय । असन् भवेयुः । अप्रायुवः अप्रमोषितारः आयुषः । जीवितस्य चानपहर्तार इत्यर्थः । अथवा प्रायुव इति अयतेर्गतिकर्मण इदं रूपम् । अप्रगन्तारः । नित्यसन्निहिता इत्यर्थः । अथवा प्रायुव इति यौते रूपम् । अन्यैरर्थैरप्रश्रिता बुद्धिर्येषां ते अप्रायुवः । अनाक्षिप्तचेतस्का इत्यर्थः । अत्यन्तं यत्नवन्त इत्यर्थः । रक्षितारः च दिवेदिवे अहन्यहनि ॥ १ ॥

**वेङ्कट०** आ यन्तु[1] अस्मान् सर्वतो भजनीयानि कर्माणि असुरैरहिंसितानि अपरिवृतानि च फलोद्भेदनानि । देवाः यथा अस्माकं सदैव वर्धनाय स्युः अप्रगच्छन्तः रक्षितारः च अहन्यहनि ॥ १ ॥

**मुद्गल०** 'आ नो भद्राः' इति दशर्चं पञ्चमं सूक्तम् । गोतमः ऋषिः । आदितः पञ्चर्चः सप्तमी च जगत्यः । षष्ठी विराट्स्थाना । 'नवकौ वैराजस्त्रैष्टुभश्च' ( ऋअ १,९,५ ) इत्युक्तलक्षणयोगात् । अष्टम्याद्यास्तिस्रस्त्रिष्टुभः । विश्वेदेवा देवताः ॥

नः अस्मान् क्रतवः अग्निष्टोमादयो महायज्ञाः विश्वतः सर्वस्मादपि दिग्भागात् आ यन्तु आगच्छन्तु । कीदृशाः क्रतवः । भद्राः समीचीनफलसाधनत्वेन कल्याणाः । अदब्धासः असुरैरहिंसिताः । अपरीतासः शत्रुभिरपरिगताः । अप्रतिरुद्धा इत्यर्थः । उद्भिदः शत्रूणामुद्भेत्तारः । यथा क्रतवस्तथा अप्रायुवः अप्रगच्छन्तः, स्वकीयं रक्षितव्यमपरित्यजन्तः, अत एव दिवेदिवे प्रतिदिवसम् रक्षितारः रक्षां कुर्वन्तः । एवंगुणविशिष्टाः सर्वे देवाः नः अस्माकम् सदम् इत् सदैव वृधे वर्धनाय असन् भवन्तु ॥ १ ॥

## देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।
## देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥ २ ॥

देवानाम् । भद्रा । सुऽमतिः । ऋजुऽयताम् । देवानाम् । रातिः । अभि । नः । नि । वर्तताम् ।
देवानाम् । सख्यम् । उप । सेदिम । वयम् । देवाः । नः । आयुः । प्र । तिरन्तु । जीवसे ॥२॥

**स्कन्द०** देवानाम् भद्रा कल्याणी सुमतिः शोभना परानुग्रहात्मिका बुद्धिः ऋजूयताम् ऋजवः सदाचारा मनुष्याः, तत्कामिनाम् । किञ्च देवानाम् रातिः दानम् अभि नः नि वर्तताम् अस्मान् प्रति निवर्तताम् । देवा अस्मभ्यं ददत्वित्यर्थः । किञ्च देवानाम् सख्यम् उप सेदिम उपगच्छेम वयम् इत्याशास्महे । किञ्च [2]देवाः नः[2] आयुः प्र तिरन्तु प्रवर्धयन्तु[3] जीवसे [4]चिरं जीवनाय[4] ॥ २ ॥

**वेङ्कट०** देवानाम् भजनीया सुमतिः ऋजुमिच्छताम् । देवानाम् दानम् अस्मान् अभि नि वर्तताम् देवानाम् सख्यम् उप-गच्छेम वयम् । देवाः नः आयुः वर्धयन्तु[5] जीवनाय ॥ २ ॥

**मुद्गल०** भद्रा सुखयित्री देवानाम् सुमतिः शोभनामतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः । कीदृशानाम् । ऋजूयताम् ऋजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम् । तथा देवानाम् रातिः दानम् नः अस्मान् अभि आभिमुख्येन नितराम् वर्तताम् । तदभिमतफलप्रदानमस्माकं भवत्वित्यर्थः । वयम् च तेषाम् देवानाम् सख्यम् सखित्वम् उप सेदिम प्राप्नुयाम[6] ।

---

१. यान्तु लपं. २-२. देवानां ति. ३. वर्धय° मूको. ४-४. चिरजीवनाय ति. ५. वर्धन्तु वि[1,2]. ६. प्राप्नवाम मूको.

तादृशाः देवाः नः अस्माकम् आयुः जीवसे जीवितुम् प्र तिरन्तु वर्धयन्तु ॥ २ ॥

तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥

तान् । पूर्वया । निऽविदा । हूमहे । वयम् । भगम् । मित्रम् । अदितिम् । दक्षम् । अस्रिधम् ।
अर्यमणम् । वरुणम् । सोमम् । अश्विना । सरस्वती । नः । सुऽभगा । मयः । करत् ॥ ३ ॥

**स्कन्द०** तान् पूर्वया[1] **पूर्वसङ्कल्पितया पूर्वर्षिप्रयुक्तया**[2] वा निविदा 'निवित्' ( निघ १,११ ) इति वाङ्नाम । वाचा स्तुतिलक्षणया हूमहे **आह्वयामः । कतमांस्तान् ।** भगम् मित्रम् अदितिम् दक्षम् च । **कीदृशम्** । अस्रिधम् न स्रेधति न व्यथत इति प्रयोगदर्शनात् स्रिधिः क्षयार्थः शोषणार्थो वा । अक्षयमशोषयितारं[3] वा । न च भगादीनेव केवलान्[4] । किं तर्हि । अर्यमणम् वरुणम् सोमम् अश्विना अश्विनौ च । किञ्च सरस्वती नः **अस्माकम्** सुभगा[5] **सुधना**[6] मयः करत् सुखं करोतु ॥ ३ ॥

**वेङ्कट०** तान् पूर्वया वाचा **ह्वयामः** वयम् **भगादीन्** दक्षम् **च अक्षयम्** । सरस्वती च[7] **अस्माकम्** सुभगा सुखं करोतु ॥ ३ ॥

**मुद्गल०** तान् विश्वान् देवान् पूर्वया **पूर्वकालीनया** निविदा **वेदात्मिकया वाचा** वयम् हूमहे **आह्वयामः** । देवानिति यत्सामान्येनोक्तं तदेव विव्रियते । भगम् **भजनीयम्** मित्रम् **प्रमीतेस्त्रायकम्** अदितिम् **अखण्डनीयां देवमातरम्** दक्षम् **सर्वस्य जगतो निर्माणे समर्थं प्रजापतिम्** अस्रिधम् **शोषणरहितं सर्वदैकरूपेण वर्तमानं मरुद्गणम्** अर्यमणम् **अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीत्यर्यमा सूर्यः** । वरुणम् **वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति राज्यभिमानी देवो वरुणः** । सोमम् **द्वेधाऽऽत्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम्** अश्विना **अश्ववन्तौ । एवं भूतान् सर्वान् देवानस्मद्रक्षणार्थमाह्वयाम इति पूर्वत्र सम्बन्धः । अस्माभिराहूता** सुभगा **शोभनधनोपेता** सरस्वती नः **अस्मभ्यम्** मयः **सुखम्** करत् **करोतु** ॥ ३ ॥

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः ।
तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥

तत् । नः । वातः । मयःऽभु । वातु । भेषजम् । तत् । माता । पृथिवी । तत् । पिता । द्यौः ।
तत् । ग्रावाणः । सोमऽसुतः । मयःऽभुवः । तत् । अश्विना । शृणुतम् । धिष्ण्या । युवम् ॥ ४ ॥

**स्कन्द०** **तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यद्वयमिच्छामः** तत् नः **अस्मान् प्रति** वातः मयोभु वातु भेषजम् **औषधम्** । वातु **गमयतु ददात्वित्यर्थः** । तत् **एव** माता पृथिवी[8]

---

१. नास्ति कु.　२. पूर्वप्र° अ कु.　३. °यितारः ति.　४. केवलम् ति.　५. नास्ति अ.
६. नास्ति ति.　७. वा वि[१].

तत् एव पिता द्यौः। विवाहकाले 'द्यौरहम्। पृथिवी त्वम्' ( तैब्रा ३,७,१,९ ) इति वरे वध्वां च द्युत्वपृथिवीत्वाध्यारोपात् सर्वमनुष्याणां च वधूवरमातापितृकत्वात् तद्धर्मेण[1] मातृत्वेन पितृत्वेन च व्यपदेशः पृथिव्या दिवश्चायम् 'तन्माता पृथिवी तत्पिता द्यौः' इति। तत् एव ग्रावाणः सोमसुतः सोमाभिषवकारिणः मयोभुवः यागद्वारेण सुखस्य भावयितारः। तत् एव हे अश्विनौ! शृणुतम् श्रवणेनात्र तत्पूर्वकं करणं लक्ष्यते। कुरुतम्। हे धिष्ण्या![2] धिषणा वाक्, तस्याः पुत्रौ!। अथवा 'धीः' ( निघ ३,९ ) इति प्रज्ञानाम। ष्णै वेष्टने। धीर्वेष्टयित्री सर्वार्थग्रहणसमर्था ययोः तौ धिष्णौ। धिष्णावेव धिष्ण्यौ। अत्यन्तप्रज्ञावित्यर्थः। युवम् युवामपि ॥ ४ ॥

**वेङ्कट०** तत् नः वातः सुखस्य भावयितृ आत्मीयम् भेषजम् वातु। तत् माता पृथिवी। तत् पिता द्यौः। तत् ग्रावाणः सोमस्य सोतारः सुखस्य भावयितारः। तत् अश्विनौ! युवामपि धिषणार्हौ! स्तुत्यर्हौ![3] शृणुतम् ॥ ४ ॥

**मुद्गल०** वातः वायुः तत् भेषजम् औषधम् नः अस्मान् वातु प्रापयतु, यद्भेषजम् मयोभु मयसः[4] सुखस्य भावयितृ। माता सर्वेषां जननी पृथिवी भूमिरपि तत् भेषजमस्मान् प्रापयतु। पिता वृष्टिप्रदानेन सर्वेषां रक्षिता द्यौः द्युलोकोऽपि तत् भेषजमस्मान् प्रापयतु। सोमसुतः सोमाभिषवं कृतवन्तः मयोभुवः मयसो यागफलभूतस्य सुखस्य भावयितारः ग्रावाणः अभिषवसाधनाः पाषाणाश्च तत् भेषजमस्मान् प्रापयन्तु। हे धिष्ण्या! धिषणा बुद्धिः, तदर्हौ! अश्विना! अश्विनौ! युवम् युवां तत् भेषजम् शृणुतम् ॥ ४ ॥

तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व॒यम्।
पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द् वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ ५ ॥

तम्। ईशा॑नम्। जग॑तः। त॒स्थुषः॑। पति॑म्। धि॒य॒म्ऽजि॒न्वम्। अव॑से। हू॒म॒हे॒। व॒यम्।
पू॒षा। नः॒। यथा॑। वेद॑साम्। अस॑त्। वृ॒धे। र॒क्षि॒ता। पा॒युः। अद॑ब्धः। स्व॒स्तये॑ ॥ ५ ॥

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यमन्येऽपि सर्वे आह्वयन्ति तम् पूषणम् ईशानम्[5] जगतः ईश्वरं जङ्गमस्य। तस्थुषः पतिम् स्थावरस्य च स्वामिनम्। धियंजिन्वम् 'जिन्वतिः प्रीतिकर्मा' ( या ६,२२ )। सर्वप्रज्ञानां प्रीणयितारम्। अवसे पालनायात्मनः। हूमहे आह्वयामः वयम्। कथं च पुनराह्वयामः। उच्यते। आहूतः पूषा नः अस्माकम् यथा वेदसाम् धनानां ज्ञानानां वा असत् भवेत् वृधे वर्धनाय। यथा नो धनवृद्धिकरो ज्ञानवृद्धिकरो वा स्याद्[6] इत्यर्थः। रक्षिता[7] पायुः पाता च सोमानाम्। अदब्धः अहिंसितः केनचित्। स्वस्तये 'स्वस्ति इत्यविनाशनाम' ( या ३,२१ )। अविनाशकरश्च स्यादित्यर्थः ॥ ५ ॥

**वेङ्कट०** तम् ईश्वरं जङ्गमस्य स्थावरस्य च पालयितारं कर्मणः प्रीणयितारं रक्षणाय ह्वयामः वयम्। पूषा अस्माकम् धनानां भवति यथा वर्धनाय रक्षोभ्यः रक्षिता पालकोऽहिंसितोऽविनाशाय ॥ ५ ॥

---

१ साधर्म्येण ति. २. धिष्ण्यौ अ कु. ३. नास्ति वि[1] अ[2]. ४. मयस्य मूको. ५ ईश्वरः ति कु. ६. स्याताम् अ. ७. °तां च ति.

**मुद्गल०** पूर्वार्धेनेन्द्रः स्तूयतेऽपरार्धेन पूषा। ईशानम् ऐश्वर्यवन्तम् अत एव जगतः जङ्गमस्य प्राणिजातस्य तस्थुषः स्थावरस्य च पतिम् स्वामिनम् धियंजिन्वम् धीभिः कर्मभिः प्रीणयितव्यम्। एवंभूतम् तम्[१] इन्द्रम् अवसे रक्षणाय वयम् हूमहे आह्वयामः[२]। पूषा नः अस्माकम् वेदसाम् धनानाम् वृधे वर्धनाय रक्षिता यथा असत् येन प्रकारेण भवति तेनैव प्रकारेण अदब्धः केनाप्यहिंसितः पूषा स्वस्तये अस्माकमविनाशाय पायुः पालको रक्षिता भवतु ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये पञ्चदशो वर्गः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥

स्वस्ति । नः । इन्द्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः ।
स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः । स्वस्ति । नः । बृहस्पतिः । दधातु ॥ ६ ॥

**स्कन्द०** दधातु इत्यन्त्यमाख्यातपदं सर्वत्रैवानुषक्तव्यम्। स्वस्ति नः इन्द्रः दधातु विधत्ताम्। करोत्वित्यर्थः। कीदृशः। वृद्धश्रवाः प्रवृद्धकीर्तिः[३] प्रवृद्धधनः प्रवृद्धान्नो वा। स्वस्ति नः पूषा विश्ववेदाः सर्वज्ञः सर्वधनो[४] वा। स्वस्ति नः[५] तार्क्ष्यः अरिष्टनेमिः 'नेमिः' (निघ २,२०) इति वज्रनाम। अहिंसितायुधः[६]। स्वस्ति नः बृहस्पतिः दधातु ॥ ६ ॥

**वेङ्कट०** स्वस्ति अस्माकम् इन्द्रः वृद्धान्नः। स्वस्ति नः पूषा विश्वधनः। स्वस्ति नः तार्क्ष्यः चाहिंसितायुधः। स्वस्ति अस्माकम् बृहस्पतिः च दधातु ॥ ६ ॥

**मुद्गल०** वृद्धश्रवाः वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं[७] वा[१] यस्य तादृशः इन्द्रः नः अस्माकम् स्वस्ति अविनाशम् दधातु विदधातु करोतु। विश्ववेदाः विश्वानि वेत्तीति विश्ववेदाः तादृशः पूषा पोषको देवः नः अस्माकम् स्वस्ति विदधातु। अरिष्टनेमिः अरिष्टोऽहिंसितो नेमिर्यस्यैवम्भूतः तार्क्ष्यः तृक्षस्य पुत्रो गरुत्मान् नः अस्माकम् स्वस्ति अविनाशं विदधातु। तथा बृहस्पतिः बृहतां देवानां पालयिता नः अस्माकम् स्वस्ति अविनाशं विदधातु ॥ ६ ॥

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥

पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभम्ऽयावानः । विदथेषु । जग्मयः ।
अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः । देवाः । अवसा । आ । गमन् । इह ॥ ७ ॥

**स्कन्द०** पृषत्यः अश्वा येषां ते पृषदश्वाः। मरुतः पृश्निमातरः पृश्निः द्यौः, सा माता येषां ते

---

१. नास्ति मै[२]. २. नास्ति मूको. ३. वृद्ध° अ ति. ४. सर्वजनः ति. ५. नास्ति अ. ६. अहिंसायु° अ. ७. श्रोत्रं मै[२].

पृश्निमातरः । शुभंयावानः शुभमित्युदकम्, तदर्थं मेघान् प्रति गन्तारः[1]। विदथेषु यज्ञेषु जग्मयः गमनशीलाः । न च केवला मरुतः । किं तर्हि । अग्निजिह्वाः वक्ष्यमाणानां विश्वेषां देवानामेतद् विशेषणम्, न केवलं[2] मरुताम् । कुत एतत् । 'ये अग्निजिह्वा उत वा यजत्राः ( ऋ ६, ५२,१३ ) इति प्रयोगदर्शनात् । अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः । अग्नौ प्रक्षिप्तं हि[2] हविर्देवा अश्नन्ति, तेनैषामग्निर्जिह्वास्थानीयः । मनवः मन्तारः ज्ञातारः । सूरचक्षसः सूर्यस्येव चक्षो दर्शनं[3] येषां ते सूरचक्षसः । एवंरूपा विश्वे देवाः नः अवसा अस्माकं पालनेन हेतुना । वयं पालयितव्या इत्येवमर्थमित्यर्थः । आ गमन् आगच्छन्तु । इह यज्ञे । पृषदश्वादिगुणा मरुतः अग्निजिह्वादिगुणाश्च विश्वे देवाः अस्मत्पालनार्थमिह[4] यज्ञे आगच्छन्त्विति समस्तार्थः ॥ ७ ॥

**वेङ्कट०** पृषद्वर्णाश्वाः मरुतः गोमातरः उदकं प्रति गन्तारः यज्ञेषु[5] गमनशीलाः अग्न्यास्याः मन्तारः सुवीर्यदर्शनाः[6] विश्वे अस्मान्[7] देवाः रक्षणेन सह आगच्छन्तु इह ॥ ७ ॥

**मुद्गल०** पृषदश्वाः पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते । पृश्निमातरः '[8]पृश्निर्नानावर्णा गौः[8] माता येषां ते[9]। शुभंयावानः शुभं शोभनं यान्ति गच्छन्तीति शुभंयावानः । शोभनगतय इत्यर्थः । विदथेषु यज्ञेषु जग्मयः गन्तारः अग्निजिह्वाः अग्नेर्जिह्वायां वर्तमानाः । सर्वे हि देवाः हविः-स्वीकरणायाग्नेर्जिह्वायां वर्तन्ते । मनवः सर्वस्य मन्तारः । सूरचक्षसः सूर्यप्रकाश इव चक्षः प्रकाशो येषां ते । एवंभूताः मरुतः विश्वे देवाः सर्वे देवाः नः अस्मान् इह अस्मिन् काले अवसा रक्षणेन सह आ गमन् आगच्छन्तु ॥ ७ ॥

**भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॒र्यज॑त्राः ।**
**स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेम दे॒वहि॑तं॒ यदायुः॑ ॥ ८ ॥**

भ॒द्रम् । कर्णे॑भिः । शृ॒णु॒या॒म॒ । दे॒वाः॒ । भ॒द्रम् । प॒श्ये॒म॒ । अ॒क्षऽभिः॑ । य॒ज॒त्राः॒ ।
स्थि॒रैः । अङ्गैः॑ । तु॒स्तु॒ऽवांसः॑ । त॒नूभिः॑ । वि । अ॒शे॒म॒ । दे॒वऽहि॑तम् । यत् । आयुः॑ ॥ ८ ॥

**स्कन्द०** युष्मत्प्रसादादेव भद्रम् कर्णेभिः शृणुयाम हे देवाः ! । भद्रम् एव पश्येम अक्षभिः यजत्राः ! यष्टव्याः ! । स्थिरैः अङ्गैः दृढैश्चात्मावयवैः तनूभिः शरीरैश्च । जरया अनुपहतशरीरतदवयवाः सन्त इत्यर्थः । तुष्टुवांसः शत्रर्थोऽयं क्वसुर्द्रष्टव्यः[10]। स्तुवन्तो युष्मान् । वि अशेम[11] मनुष्याणां च देवहितम् देवैर्दत्तं देवैर्वा निहितं स्थापितमुपकल्पितं यत् आयुः तद्वर्षशतपरिमाणकमायुः देवैर्मनुष्याणा-मुपकल्पितं कृत्स्नं प्राप्नुयाम । मान्तरा मृषीमहीत्यर्थः ॥ ८ ॥

**वेङ्कट०** भद्रम् कर्णैः[12] शृणुयाम देवाः ! । भद्रम् एव पश्येम[13] अक्षिभिः[14] यष्टव्याः ! । स्थिरैः अङ्गैः तुष्टु-वांसः तनूभिः च युक्ताः व्यश्याम देवैर्निहितं शतसंख्याकम् आयुः ॥ ८ ॥

**मुद्गल०** हे देवाः ! दानादिगुणयुक्ताः सर्वे देवाः ! कर्णेभिः अस्मदीयैः श्रोत्रैः भद्रम् भजनीयं कल्याणवचनम् शृणुयाम युष्मत्प्रसादात् श्रोतुं समर्थाः स्याम । अस्माकं बाधिर्यं कदाचिदपि मा भूत् । हे यजत्राः ! यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवाः ! अक्षभिः अक्षिभिरात्मीयैश्चक्षुर्भिः भद्रम् शोभनम् पश्येम द्रष्टुं समर्थाः स्याम । अस्माकं दृष्टिप्रतिघातोऽपि मा भूत् । स्थिरैः

---

१. यन्तारः ति. २. नास्ति अ कु. ३. चक्षोर्द° ति अ; चक्षुः° कु. ४. अस्माकं पा° ति. ५. °ज्ञेषु सुष्ठु वि[२] अ[२] ६. सूर्यस्यद° वि[२] अ[२]. ७. अस्माकं वि[२] अ[२]. ८-८. °वर्णगोः मूको. ९. नास्ति मूको. १०. वसु° अ कु. ११. °शेम विविधम् अ ति. १२. कर्णेभिः वि[२] अ[२] कु. १३. पश्याम वि[२] अ[२]. १४. अक्षभिः कु.

दृढैः अङ्गैः हस्तपादादिभिरवयवैः तनूभिः शरीरैश्च युक्ता वयम् तुष्टुवांसः युष्मान् स्तुवन्तः यत् आयुः विंशत्यधिकशतप्रमाणम् देवहितम् देवेन प्रजापतिना स्थापितं तत् वि अशेम व्याप्नुयाम ॥ ८ ॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥

शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र । जरसम् । तनूनाम् ।
पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः । मध्या । रिरिषत । आयुः । गन्तोः ॥ ९ ॥

**स्कन्द०** इत् नु इति पदपूरणौ[1] । एकवाक्यताप्रसिद्ध्यर्थञ्च प्रथमे पादे यच्छब्दः अन्त्ये च षष्ठ्यन्तस्तच्छब्दोऽध्याहर्तव्यः । यदेतत् शतम् शरदः वर्षशतम् अन्ति अन्तिकं सन्निकृष्टम् । अल्पमित्यर्थः । हे देवाः! यत्र नः अस्माकम्[2] चक्र कृतवन्तः[3] स्थ । जरसम् जराम् तनूनाम् शरीराणाम् । यत् स्वरूपेणैवाल्पकं[4] जरया चोपहतमित्यर्थः । यत्र च पुत्रासः पुत्राः पितरः भवन्ति स्वेषामपत्यानाम् । यत्रैकमेव शरीरमत्यन्तविरुद्धे पितापुत्रावस्थे शीघ्रमेव प्रतिपद्यते इत्यर्थः । अथवा पितृशब्दोऽत्र क्रियाशब्दः पालयितृवचनः । ये पुत्राः पाल्या आसंस्त एव वार्धक्ये जरयाभिभूतस्य[5] पालयितारो भवन्तीत्यर्थः । मा नः अस्माकं तस्य मध्या मध्ये रिरिषत हिंसिष्ट । आयुः जीवितम् गन्तोः गमनशीलस्य[6] ॥ ९ ॥

**वेङ्कट०** शतम् एव शरदः अन्ततो[7] भवति देवाः! मनुष्याणामायुः । यत्र अस्माकं कृतवन्तो यूयमङ्गानां जरां कल्पितवन्तः । पुत्रा एव रक्षितारो यत्र भवन्ति । तत् आयुः गन्तोः मध्ये मा अस्माकं हिंसिध्वम् इति । आयुष आशासनम् ॥ ९ ॥

**मुद्गल०** हे देवाः! अन्ति अन्तिके मनुष्याणां समीपे आयुष्ट्वेन भवद्भिः कल्पिताः शरदः संवत्सराः शतम् इत् नु शतं खलु । यस्मात् सृष्टिकाले मनुष्याणां शतसंवत्सरायुरिति युष्माभिः परिकल्पितं तस्मात् नः अस्माकम् आयुः गन्तोः क्लृप्तस्यायुषो गमनात्पूर्वम् मध्या मध्ये मा रीरिषत मा हिंसिष्ट । कीदृशानाम् । नः अस्माकम् तनूनाम् शरीराणाम् जरसम् जराम् यत्र यस्यामवस्थायाम् चक्र कृतवन्तो यूयम्, यत्र च पुत्रासः पुत्राः पितरः अस्माकं रक्षितारः भवन्ति । ईदृग्दशापन्नानामित्यर्थः ॥ ९ ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ १० ॥

अदितिः । द्यौः । अदितिः । अन्तरिक्षम् । अदितिः । माता । सः । पिता । सः । पुत्रः ।
विश्वे । देवाः । अदितिः । पञ्च । जनाः । अदितिः । जातम् । अदितिः । जनिऽत्वम् ॥ १० ॥

---

१. °पूरणे कु; °पूरणः ति. २. अस्मान् अ ति. ३. °वन्तश्च अ. ४. °णैवात्मकाल्पिकम् ति. ५. जरया यत्र अ. ६. °स्य स्वरसेनैव शीघ्रं क्षै (?क्षी) णमित्यर्थः (°णम् ति) अ ति. ७. अन्तितो कु.

**स्कन्द०** अदितिः देवमाता। तत्प्रभवाः [1]सर्वे द्यवादयः[1]। अत इदं कारणशब्देन कार्यस्य गौण्या वृत्त्याभिधानम्। अदितेः कार्यभूतेति अदितिः एव अन्तरिक्षम् अदितिः एव माता सः पिता सः पुत्रः स इति व्यत्ययेन पुँल्लिङ्गता। सैवादितिः पिता सैव पुत्रः। विश्वे देवाः अदितिः पञ्च जनाः च। गन्धर्वाः पितरो देवा असुरा रक्षांसीति एते पञ्च जना[2] अभिप्रेताः निषादपञ्चमा वा ब्राह्मणादयो वर्णाः। अदितिः एव जातम् अदितिः एव जनित्वम् जनिष्यमाणम्। एवमशेषजगत्कारणत्वेनादितेर्विभूतिमाचष्टे। अथवा अदितिशब्दोऽत्र क्रियाशब्दः अदीनपर्यायः। द्यवादीनि[3] वस्तूनि अदीनान्यनुपक्षीणानि[4]। नित्यानीत्यर्थः ॥ १० ॥

**वेङ्कट०** अदितिः एव सर्वमित्यदितेर्विभूतिमाचष्टे[5]। [6]अदितिः एव जातम्[6]। अदितिः एव जनिष्यमाणम्। सा च प्रयच्छतु[7] आयुः इति[8] ॥ १० ॥

**मुद्गल०** अदितिः अदीना पृथिवी देवमाता। सैव द्यौः द्योतनशीलो नाकः। सैव अन्तरिक्षम् अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं[9] व्योम अदितिः। सैव माता निर्मात्री जगतो जननी। सैव सः पिता उत्पादकः तातश्च। सः पुत्रः मातापित्रोर्जातः पुत्रोऽपि सैव। विश्वे देवाः सर्वेऽपि देवाः अदितिः एव। पञ्च जनाः निषादपञ्चमाश्चत्वारो वर्णाः। एवंविधाः पञ्च जना अपि अदितिः एव। जातम् जननं प्रजानामुत्पत्तिः सापि अदितिः एव। जनित्वम् जन्माधिकरणं तदपि अदितिः एव। एवं सकलजगदात्मनाऽदितिः स्तूयते ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये षोडशो वर्गः ॥

## [ ९० ]

### ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः ॥ १ ॥

ऋजुऽनीती। नः। वरुणः। मित्रः। नयतु। विद्वान्। अर्यमा। देवैः। सऽजोषाः ॥ १ ॥

**स्कन्द०** ऋजु नयतीति ऋजुनीती नः अस्मान् मित्रः वरुणः च। यत्र स्वर्गे ब्रह्मलोके वा अस्माभिः स्वकृतेन कर्मणा गन्तव्यं तत्र तत्र नयतु विद्वान् विजानन्। किम्। सामर्थ्यात् कर्मविपाककालं भक्तां[10] वा अस्माकम्। न च केवलं [11]मित्रावरुणौ। किं तर्हि[11]। अर्यमा देवैः सजोषाः देवैस्सह सम्प्रीयमाणः[12] ॥ १ ॥

**वेङ्कट०** ऋजुनयनेन अस्मान् नयनप्रकारज्ञाः वरुणादयः नयन्तु अर्यमा च देवैः सहितः[13] ॥ १ ॥

**मुद्गल०** 'ऋजुनीती' इति नवर्चं षष्ठं सूक्तम्। गोतम ऋषिः। आद्याद्यष्ट गायत्र्यः। अन्त्याऽनुष्टुप्। विश्वेदेवा देवता ॥

अहरभिमानी देवः मित्रः वरुणः रात्र्यभिमानी। मित्रश्च वरुणश्च अर्यमा च देवैः इन्द्रादिभिः [14]सजोषाः समानप्रीतिः[14] विद्वान् नेतव्यमुत्तमं स्थानं जानन्[15] नः अस्मान् ऋजुनीती ऋजुनीत्या

---

१-१. °र्वे द्युवादयः कु ति; नास्ति अ. २. °नाः वा ति. ३. द्युवादी° कु; द्यावादी° अ ति. ४. अदितीन्यनु° ति. ५. सर्वमित्यत्रादि° वि. ६-६. नास्ति वि[1] लपं. ७. °यच्छत कु ल.; °यच्छथ वि[2]. ८. नास्ति कु. ९. ईक्ष° मूको. १० नास्ति ति. ११-११. किं तर्हि मित्रावरुणौ अ. १२. °माणाः अ ति. १३. °ताः ल; °तम् वि[1]. १४-१४. नास्ति मूको. १५. जनान् मूको.

ऋजुनयनेन कौटिल्यरहितेन गमनेन नयतु अभिमतं स्थानं प्रापयतु ॥ १ ॥

**ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः । व्रता रक्षन्ते विश्वाहा ॥ २ ॥**

ते । हि । वस्वः । वसवानाः । ते । अप्रऽमूराः । महःऽभिः । व्रता । रक्षन्ते । विश्वाहा ॥२॥

**स्कन्द०** ते इति प्रकृतानां वरुणादीनां प्रतिनिर्देशः । हि-शब्दः पदपूरणः । ते वरुणादयः वस्वः तृतीयार्थे षष्ठ्येषा । वसुना धनेन वसवानाः धनवन्तः । अथवा वसवाना इति वस आच्छादने इत्यस्य[1] क्रियाशब्दः । धनेनाच्छादयितारः । प्रभूतस्य धनस्याच्छादयितार इत्यर्थः । ते एव अप्रमूराः अप्रमूढचेतसः । महोभिः महद्भिः प्रकाशकरणवृष्टिप्रदानादिभिः उपकारैः । व्रता सर्वकर्माणि प्राणिनाम् रक्षन्ते विश्वाहा सर्वदा ॥ २ ॥

**वेङ्कट०** ते हि वसूनि आच्छादयन्तः, ते अप्रमूढाः तेजोभिः स्वानिस्वानि यमनादीनि कर्माणि[2] सर्वदा रक्षन्ते ॥ २ ॥

**मुद्गल०** ते हि पूर्वोक्ताः मित्रादयः वस्वः वसुनो धनस्य वसवानाः वासका आच्छादयितारः । सर्वं जगत् धनेनाच्छादयन्तीत्यर्थः । अतः ते मित्रादयः अप्रमूराः अप्रमूर्च्छिता अमूढाः प्राज्ञाः सन्तः महोभिः आत्मीयैस्तेजोभिः विश्वाहा सर्वाण्यहानि सर्वेष्वप्यहःसु व्रता व्रतानि जगन्निर्वाहरूपाणि स्वकीयानि कर्माणि रक्षन्ते पालयन्ति ॥ २ ॥

**ते अस्मभ्यं शर्म यंसन्नमृता मर्त्येभ्यः । बाधमाना अप द्विषः ॥ ३ ॥**

ते । अस्मभ्यम् । शर्म । यंसन् । अमृताः । मर्त्येभ्यः । बाधमानाः । अप । द्विषः ॥ ३ ॥

**स्कन्द०** ते वरुणादयः अस्मभ्यम् शर्म सुखं गृहं वा यंसन् प्रयच्छन्तु अमृताः मरणवर्जिताः मर्त्येभ्यः । बाधमानाः अप अपबाधमानाः द्विषः[3] [4]अस्मदीयान् द्विषतः[4] ॥ ३ ॥

**वेङ्कट०** ते अस्मभ्यम् सुखं प्रयच्छन्तु[5] अमृताः मर्त्येभ्यः द्वेष्टॄन् [6]अप बाधमानाः[6] ॥ ३ ॥

**मुद्गल०** अमृताः अमरणधर्माणः ते विश्वे देवाः मर्त्येभ्यः मरणधर्मभ्यः अस्मभ्यम् अनुष्ठातृभ्यः शर्म अमृतलक्षणं सुखम् यंसन् प्रयच्छन्तु[7] । किं कुर्वन्तः । द्विषः अस्मदीयान् पापलक्षणान् शत्रून् अप बाधमानाः विनाशं प्रापयन्तः ॥ ३ ॥

**वि नः पथः सुविताय चियन्त्विन्द्रो मरुतः । पूषा भगो वन्द्यासः ॥ ४ ॥**

वि । नः । पथः । सुविताय । चियन्तु । इन्द्रः । मरुतः । पूषा । भगः । वन्द्यासः ॥ ४ ॥

**स्कन्द०** नः अस्माकम् पथः स्वर्गगमनमार्गान् सुविताय सुगमनाय वि चियन्तु विचिन्वन्तु ।

---

१. इत्येतस्य ति. २. कार्याणि वि[3] अ[2]. ३. नास्ति मूको. ४-४. °दीयद्विषः कु. ५. °[illegible] वि[3] अ[2]. ६-६. अवबा° वि[3]. ७. °च्छन्तु प्रयच्छन्तु मै[2].

स्वर्गगमनमार्गप्रतिबन्धकारिणो रक्षोऽसुरप्रभृतीन् मार्गादपनयन्त्वित्यर्थः। के। उच्यते। इन्द्रः च मरुतः पूषा भगः च वन्द्यासः स्तुत्याः ॥ ४ ॥

**वेङ्कट०** विचिन्वन्तु मार्गानस्माकमभ्युदयायेन्द्रादयः वन्दितव्याः ॥ ४ ॥

**मुद्गल०** वन्द्यासः सर्वैर्वन्दनीया इन्द्रादयो देवाः नः अस्माकम् पथः मार्गान् वि चियन्तु विचिन्वन्तु अशोभनेभ्यो मार्गेभ्यः सकाशात् पृथक्कुर्वन्तु। किमर्थम्। सुविताय सुष्ठु प्राप्तव्याय स्वर्गादिफलाय ॥४॥

## उत नो धियो गोअग्राः पूषन् विष्णवेवयावः। कर्ता नः स्वस्तिमतः ॥ ५ ॥

उत। नः। धियः। गोऽअग्राः। पूषन्। विष्णो इति। एवऽयावः। कर्त। नः। स्वस्तिऽमतः ॥ ५ ॥

**स्कन्द०** अपि चास्माकं धियः गोअग्राः 'धीः' (निघ २,१) इति कर्मनाम। गावोऽग्रे यासां [1]ता गोअग्राः[1]। गोलाभफला इत्यर्थः। यागाख्यानि कर्माणि गोलाभफलानि। हे पूषन्! विष्णो! एवयावः! देवतान्तरस्य वरुणस्य मित्रस्यार्यम्ण इन्द्रस्य वा प्रतिनिर्देशोऽयम्, न[2] पूष्णो विष्णोर्वा विशेषणम्। कुत एतत्। उत्तरत्र कर्त इति बहुवचनश्रुतेः[3]। यातिरप्यन्तर्णीतण्यर्थः[4]। कामानां यापयिता[5] सम्पादयिता। एवयावा वरुणादीनामन्यतमः। तस्य सम्बोधनम् एवयावः!। कर्त कुरुत[6]। [7]न केवला[7] गोअग्रा धियः। किं तर्हि। नः[8] स्वस्तिमतः अस्मांश्चाविनाशयुक्तान् कुरुत ॥ ५ ॥

**वेङ्कट०** अपि चास्माकं कर्माणि पश्वग्राणि कुरुत पूषादयः![9]। [10]वायुः एवयावा एवं गच्छतीति[10]। कुरुत च[11] अस्मानविनाशवतः ॥ ५ ॥

**मुद्गल०** हे पूषन्! पोषकदेव! हे विष्णो! व्यापनशीलदेव! हे एवयावः! एवैर्गन्तृभिरश्वैर्याति गच्छतीति एवयावा मरुद्गणः। हे मरुद्गण! ते सर्वे यूयम् नः अस्माकम् धियः अस्रोर्याम-लक्षणानि कर्माणि गोअग्राः पश्वग्राणि पशुप्रमुखान्यस्मत्सकाशात् श्रेष्ठैः पशुभिर्युक्तानि कर्त कुरुत। उत अपि च नः अस्मान् स्वस्तिमतः अविनाशिनः कुरुत ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये सप्तदशो वर्गः ॥

## मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः ॥ ६ ॥

मधु। वाताः। ऋतऽयते। मधु। क्षरन्ति। सिन्धवः। माध्वीः। नः। सन्तु। ओषधीः ॥ ६ ॥

**स्कन्द०** मधु-शब्दो रसविशेषवचनः अन्तर्णीतमत्वर्थश्च[12]। सामर्थ्याच्चेहोदके वर्तते। उदकनाम[13] वा मधुशब्दः। साकाङ्क्षत्वाच्च क्षरन्ति इत्याख्यातं पूर्वत्राप्यनुषक्तव्यम्। मधुमत् मधुरसं वृष्टिलक्षण-

---

१-१. नास्ति अ ति. २. नास्ति अ कु. ३. °श्रुतेः। एवयावः मूको. ४. याविर° मूको.
५. यावयिता अ कु; यवयिता ति. ६. °रुत। नः अस्मान् अ कु. ७-७. नास्ति अ. ८. नास्ति मूको.
९. °यश्च वि. १०-१०. त्रुटितम् ल ११. नास्ति वि. १२. °त्वर्थः अ. १३. °नामा अ.

मुदकं क्षरन्ति। लोडर्थे अत्र[1] लट्। क्षरन्तु। वर्षन्त्वित्यर्थः। के। वाताः। कस्मै। ऋतायते यज्ञं कामयमानस्य ममार्थाय। मधु क्षरन्ति सिन्धवः नद्यः। माध्वीः मध्वेव माध्वम्। स्वार्थिकस्तद्धितः छान्दसत्वात्। तद्वत्यो माध्व्यः। ईकारप्रत्ययो[2] मत्वर्थे 'ईवनिपौ छन्दसि' (तु. पावा ५,२,१०९) इति। मधुरसा इत्यर्थः। नः अस्माकं सन्तु ओषधीः ॥ ६ ॥

**वेङ्कट०** वाता मधु क्षरन्त्यस्मै सत्यमिच्छति यो नरः।
सद्धि [3]सूर्यसमं ज्योतिस्तदिच्छन्निह[3] सिध्यति ॥
यत् सम्भरन्ति[4] सरघाः पुष्पेभ्यस्तन्मधु स्मृतम्।
अस्मै सत्यविदे सर्वे तत् क्षरन्तीति कीर्त्यते ॥

मधुमत्यः ओषधयश्चास्माकं भवन्तु ॥ ६ ॥

**मुद्गल०** ऋतायते ऋतं यज्ञमात्मनः[5] इच्छते यजमानाय वाताः वायवः मधु[6] माधुर्योपेतं कर्मफलम् क्षरन्ति वर्षन्ति। प्रयच्छन्तीत्यर्थः। तथा सिन्धवः स्यन्दनशीला नद्यः मधु माधुर्योपेतं स्वकीयरसं क्षरन्ति। एवम् नः अस्मभ्यम् ओषधीः ओषधयः फलपाकान्ताश्च माध्वीः माधुर्योपेताः सन्तु भवन्तु ॥ ६ ॥

## मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः। मधु द्यौरस्तु नः पिता ॥ ७ ॥

मधु। नक्तम्। उत। उषसः। मधुऽमत्। पार्थिवम्। रजः। मधु। द्यौः। अस्तु। नः। पिता ॥७॥

**स्कन्द०** नक्तम् इति नेदमव्ययम् अधिकरणभूताया रात्रेर्वाचकम्। रात्रेरिहाधिकरणसम्भवात् नक्तेति रात्रिनाम्नः प्रथमान्तस्येदं छान्दसं ह्रस्वत्वं नपुंसकत्वं च। सामर्थ्याच्च अस्तु नः इत्येतत्पदं सर्वत्रानुषक्तव्यम्। मधु नक्तम् अस्तु नः। मधुत्वेन चात्र सर्वत्र तद्गतप्रीतिकरत्वं लक्ष्यते। प्रीतिकरी रात्रिरस्माकं भवत्वित्यर्थः। उत उषसः[7] उषसोऽपि[8] प्रीतिकर्यः सन्तु। मधुमत् पार्थिवं रजः पृथिवीलोकोऽप्यस्तु मधुमान्[9]। मधु द्यौः अपि अस्तु नः पिता। विवाहकाले 'द्यौरहं पृथिवी त्वम्' (तैब्रा ३,७,१,९) इति वरे द्युत्वाध्यारोपात् सर्वमनुष्याणां च वरपितृकत्वात् तद्धर्मेणैष दिवो व्यपदेशः द्यौः पितेति ॥ ७ ॥

**वेङ्कट०** रात्रौ मधु भवत्वस्माकम्[10]। अपि वा[11] उषसः च। मधुमान् भवतु[12] पार्थिवः लोकः। मधुमती द्यौः अस्तु अस्माकम् पिता इति।

**मुद्गल०** नक्तम् रात्रिः नः अस्माकम् मधु मधुमती माधुर्योपेतफलप्रदा भवतु। उत अपि च उषसः उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु। पार्थिवम् रजः पृथिव्याः सम्बन्धी लोकोऽस्माकम् मधुमत् माधुर्यविशिष्टफलयुक्तो भवतु। पिता वृष्टिप्रदानेन सर्वेषां पालयिता द्यौः द्युलोकोऽपि मधु मधुयुक्तो भवतु ॥ ७ ॥

---

१. नास्ति कु. २. इका° मूको. ३-३. °समज्यो° वि[1,3]. ४. सेरर° वि[1]. ५. त्रुटितम् मै[2]. ६. नास्ति मै[1]. ७. नास्ति अ. ८. °षसः अ. ९. °मत् अ ति, १०. °वत्यस्मा° त्रि[1] अ[1]. ११. च वि[1] अ[1,2]. १२. भवति वि[1] अ[1].

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ८ ॥

मधुऽमान् । नः । वनस्पतिः । मधुऽमान् । अस्तु । सूर्यः । माध्वीः । गावः । भवन्तु । नः ॥ ८ ॥

**स्कन्द०** मधुमान् नः वनस्पतिः वनानां पालयितृत्वात् स्वामित्वाद्वा वनस्पतिः सूर्यसाहचर्याच्च[1] चन्द्रमा इहाभिप्रेतः[2] । मधुमान्नो वनस्पतिः चन्द्रमा अस्तु । मधुमान् अस्तु सूर्यः । माध्वीः मधुमत्यः गावो भवन्तु ॥ ८ ॥

**वेङ्कट०** मधुमान् अस्माकम् वनस्पतिः वृक्षाधिपतिः सूर्यः च । मधुमत्यः गावः च भवन्तु ॥ ८ ॥

**मुद्गल०** नः अस्माकम् वनस्पतिः वनानां पालयिता यूपाभिमानी देवः मधुमान् माधुर्योपेतफलवान् अस्तु । तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः । सूर्यः सर्वस्य प्रेरकः सविता च मधुमान् अस्तु । गावः अग्निहोत्राद्यर्था[1] धेनवश्च नः अस्माकम् माध्वीः माधुर्योपेतेन पयसा युक्ताः भवन्तु ॥ ८ ॥

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ९ ॥

शम् । नः । मित्रः । शम् । वरुणः । शम् । नः । भवतु । अर्यमा ।
शम् । नः । इन्द्रः । बृहस्पतिः । शम् । नः । विष्णुः । उरुऽक्रमः ॥ ९ ॥

**स्कन्द०** साकाङ्क्षत्वात् भवतु इत्याख्यातं[4] सर्वत्रानुषक्तव्यम्[5] । शम् सुखमस्माकम् मित्रः भवतु । शम् वरुणः । शम् नः भवतु अर्यमा । शम् नः इन्द्रः बृहस्पतिः । शम् नः विष्णुः उरुक्रमः विस्तीर्णगतिः विस्तीर्णप्रक्रमो वा । बलिबन्धनकाले त्रिभिः पदैः त्रैलोक्यप्रक्रमणम् । तदभिप्रायमिदमुरुक्रमवचनम् ॥ ९ ॥

**वेङ्कट०** अस्माकम् एते शंकराः भवन्तु, विष्णुः च उरुक्रमणः । ऋतमिच्छतोऽभ्युदयं तृचेनोपदिदिक्षुरुभयतः शान्तिं चकारेति[6] ॥ ९ ॥

**मुद्गल०** अहरभिमानी मित्रः देवः नः अस्माकम् शम् सुखकरो भवतु । राज्यभिमानी वरुणः च शम् सुखकरः भवतु । अर्यमा अहोरात्रयोः ख्यापयिता सूर्यश्च नः अस्माकम् शम् सुखं करोतु । बृहस्पतिः बृहतां देवानां पालयिता इन्द्रः च नः अस्माकम् शम् सुखकरो भवतु । उरुक्रमः उरु विस्तीर्णं क्रामति पादौ विक्षिपति[7] इति उरुक्रमः । विष्णुः च नः अस्माकम् शम् सुखकरो भवतु ॥ ९ ॥

इति प्रथमाष्टके षष्ठाध्याये अष्टादशो वर्गः ॥

## [ ९१ ]

त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ १ ॥

---

१. °चर्यात् ति. २. इत्यभि° अ. ३. °र्थां मै[1]. ४. °ख्यातः ति. ५. °क्तव्यः ति. ६. च करोति वि[1] अ[2] कु. ७. निक्षिप मूको.

त्वम् । सोम । प्र । चिकितः । मनीषा । त्वम् । रजिष्ठम् । अनु । नेषि । पन्थाम् ।
तव । प्रऽनीती । पितरः । नः । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः ॥ १ ॥

**स्कन्द०** 'सौम्यम्' । सोमदेवत्यमेतत् सूक्तम् । त्वम् हे सोम! प्र चिकितः प्रकर्षेण जानासि यावत् ज्ञातव्यम् मनीषा मनीषया त्वदीयया प्रज्ञया । त्वम् रजिष्ठम् तृतीयार्थे द्वितीया । ऋजुतमेन । अनु नेषि अनुशब्दोऽत्र धात्वर्थानुवादी, लम्बते प्रलम्बत[1] इति यथा । सर्वयजमानान् स्वर्गं नयसि । पन्थाम् इदमपि तृतीयार्थे द्वितीया । पथा । तव प्रणीती प्रणीत्या नयेन[2] । उपदेशेनेत्यर्थः । पितरः अपि नः अस्माकं हे इन्दो! सोम! । देवेषु षष्ठ्यर्थे सप्तमी । देवानां स्वभूतम् रत्नम्[3] धनम् अभजन्त सम्भक्तवन्तः । देवानां सकाशात् लब्धवन्त इत्यर्थः । धीराः प्रज्ञावन्तः[4] ॥ १ ॥

**वेङ्कट०** त्वम् सोम! प्रकर्षेण जानासि प्रज्ञया[5] । त्वम् ऋजुतमं पन्थानम् अनु नयसि । तव प्रणयनेन पितरः अस्माकम् इन्दो! देवेषु रत्नम् अभजन्त [6]पितृयज्ञे प्राज्ञा[6] अङ्गिरसः ॥ १ ॥

**मुद्गल०** 'त्वं सोम' इति त्रयोविंशत्यृचं सप्तमं सूक्तम् । गोतम ऋषिः । पञ्चम्याद्याः षोडश्यन्ता द्वादशर्चो गायत्र्यः । सप्तदश्युष्णिक् । शिष्टा दश त्रिष्टुभः । सोमो देवता ॥

हे सोम! त्वम् मनीषा मनीषयाऽस्मदीयया बुद्ध्या प्र चिकितः प्रकर्षेण ज्ञातोऽसि[7] । वयं त्वां स्तुतिभिरज्ञासिष्मेत्यर्थः । अतः त्वम् रजिष्ठम् ऋजुतममकुटिलम् पन्थाम् पन्थानम् कर्मफलावाप्तिहेतुभूतं मार्गम् अनु नेषि अस्माननुक्रमेण प्रापयसि । किञ्च हे इन्दो! उन्दनशील! सर्वं जगत् अमृतेन क्लेदयितः! सोम! तव प्रणीती प्रणीत्या त्वत्कर्तृकेण प्रकृष्टनयनेन धीराः धीमन्तः कर्मवन्तः नः अस्माकम् पितरः देवेषु इन्द्रादिषु रत्नम् रमणीयं धनम् अभजन्त असेवन्त प्राप्नुवन् । अतोऽस्मानपि तादृशं धनं प्रापयेत्यर्थः ॥ १ ॥

त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः ।
त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ २ ॥

त्वम् । सोम । क्रतुऽभिः । सुऽक्रतुः । भूः । त्वम् । दक्षैः । सुऽदक्षः । विश्वऽवेदाः ।
त्वम् । वृषा । वृषऽत्वेभिः । महिऽत्वा । द्युम्नेभिः । द्युम्नी । अभवः । नृऽचक्षाः ॥ २ ॥

**स्कन्द०** त्वम् हे सोम! क्रतुभिः कर्मभिः प्रज्ञाभिर्वा सुक्रतुः भूः सुकर्मा[8] सुप्रज्ञो वा भवसि । त्वम् दक्षैः सुदक्षः दक्ष इति सकारान्तं बलनाम 'पठितम् (तु. निघ २,९) । अकारान्तं[8] तस्यैव पर्यायो[9] द्रष्टव्यम् । त्वं बलैः सुबल इत्यर्थः । अथवा दक्षशब्दो दक्ष वृद्धावित्यस्य क्रियाशब्दो वृद्धिपर्यायः । वृद्धिभिः सुवृद्ध[10] इत्यर्थः । विश्ववेदाः सर्वज्ञश्च । अथवा 'विश्वम्' (निघ ३,१) इति बहुनाम । 'वेदः' (निघ २,१०) इत्यपि[11] धननाम । बहुधन इत्यर्थः । त्वम् वृषा वृषत्वेभिः महित्वा

---

१. नास्ति अ. २. नयनेन कु ति. ३. नास्ति अ ति. ४. प्राज्ञाः अ ति. ५. प्रज्ञाय वि[1] ल; ज्ञाया वि[2,3] अ[2]. ६-६. पितृयजा वि[1] अ[2]. ७. व्यु. चिन्त्या (तु. वैप १,२११४ g). ८-८. पठितोऽकारान्तः ति. ९. °र्याया: ति; °र्यायं अ कु. १०. सु···ति. ११. इति अ.

त्वं च॑ सोम नो॒ वशो॑ जी॒वातुं॒ न म॑रामहे । प्रि॒यस्तो॑त्रो॒ वन॒स्पतिः॑ ॥ ६ ॥

त्वम् । च॒ । सोम॒ । न॒ः । वशः॑ । जी॒वातु॑म् । न । म॒रा॒म॒हे॒ । प्रि॒यऽस्तो॑त्रः । वन॒स्पतिः॑ ॥ ६ ॥

**स्कन्द०** च-शब्दोऽत्र पदपूरणः । त्वम् हे सोम! नः अस्मभ्यम् वशः वश कान्तौ । काम्यः प्रार्थयितव्यः । सर्वस्तोतॄणां[1] याच्य इत्यर्थ । जीवातुम् जीविकाम् । कर्मसम्प्रदानश्रुत्योः साकाङ्क्षत्वात्[2] देहीति वाक्यशेषः । अथवा[3] त्वं च इति चशब्दश्रुतिसामर्थ्यात्[4] त्वं च त्वदनुचराश्चेति वाक्यशेषः। त्वं [5]च सर्वस्तोतॄणां[5] याच्यः त्वदनुचराश्चास्मभ्यं जीविकां दत्तेति[6] । अनुचराणां चात्र गुणता[7] सोमस्यैव प्राधान्यम् इति सौम्यत्वस्याविरोधः । किं कारणं याच्यः । उच्यते । यस्माद् वयं न मरामहे म्रियतिरत्र सामर्थ्यादन्तर्णीतसन्नर्थः[8] । न शीघ्रं मुमूर्षाम इत्यर्थः । कीदृशोऽहम् । उच्यते । प्रियस्तोत्रः स्तुतिप्रियः । वनस्पतिः वनानां पालयिता स्वामी वा ॥ ६ ॥

**वेङ्कट०** त्वम् चेत्[9] सोमः! अस्मान्[10] कामयेथाः जीवयितुम्, न[11] मरामहे, प्रियस्तोत्रः वनानां पालयिता[12] ॥ ६ ॥

**मुद्गल०** हे सोम! नः अस्माकं स्तोतॄणाम् जीवातुम् जीवनौषधम् त्वम् च त्वं चेत् वशः कामयेथाः, तदानीं वयम् न मरामहे न म्रियामहे । कीदृशस्त्वम् । प्रियस्तोत्रः प्रियाणि स्तोत्राणि यस्य सः । बहुभिः स्तोतव्य इत्यर्थः । वनस्पतिः वनानामोषधिवनस्पतिरूपाणां पतिः पालयिताऽसि ॥ ६ ॥

त्वं सो॑म म॒हे भगं॒ त्वं यून॑ ऋताय॒ते । दक्षं॑ दधासि जी॒वसे॑ ॥ ७ ॥

त्वम् । सो॒म॒ । म॒हे । भग॑म् । त्वम् । यून॑ । ऋ॒त॒ऽय॒ते । दक्ष॑म् । द॒धा॒सि॒ । जी॒वसे॑ ॥ ७ ॥

**स्कन्द०** त्वम्[13] हे सोम! महे महते वृद्धाय । स्थविरायेत्यर्थः । भगम् धनम् । त्वम् एव यूने तरुणाय ऋतायते यज्ञं कामयमानाय दक्षम् बलं वृद्धिं वा । दधासि ददासि जीवसे जीवितुम् ॥ ७ ॥

**वेङ्कट०** त्वम् सोम! वृद्धाय धनं दधासि[14], त्वम् यूने च यज्ञमिच्छते बलं च यच्छसि जीवनाय ॥ ७ ॥

**मुद्गल०** हे सोम! त्वम् महे महते प्रवृद्धाय ऋतायते ऋतं यज्ञमात्मन इच्छते पुरुषाय जीवसे जीवितुम् दक्षम् उपभोगसमर्थम् भगम् धनम् दधासि विदधासि करोषि । तथा त्वम् यूने तरुणाय च ऋतायते जीवितुं धनं करोषि ॥ ७ ॥

त्वं नः॑ सोम वि॒श्वतो॒ रक्षा॑ राजन्नघाय॒तः । न रि॑ष्येत् त्वाव॑तः॒ सखा॑ ॥८॥

त्वम् । न॒ः । सो॒म॒ । वि॒श्वतः॑ । रक्ष॑ । रा॒ज॒न् । अ॒घ॒ऽय॒तः । न । रि॒ष्ये॒त् । त्वाऽव॑तः । सखा॑ ॥८॥

**स्कन्द०** त्वम् नः अस्मान् हे सोम! विश्वतः सर्वस्मात् रक्ष हे राजन्! अघायतः पापमिच्छतः ।

---

१. सप्त॰ अ. २. नास्ति अ. ३. नास्ति ति. ४. चशब्दः श्रु॰ अ. ५. सर्वस्तोतॄणां त्वं च अ. ६. दत्तेति वाक्यशेषः मूको. ७. गुणताम् अ. ८. ॰सनथः अ. ९. च अ[2]. १०. अस्माकम् वि[1]. ११. न वयं वि[3] अ[2]. १२. ॰यिताऽनुदकानाम् वि[1,2] ल; ॰यिता उदकानां पालयिता वि[3] अ[2]. १३. नास्ति मूको. १४. ददासि अ[1,2].

महित्वेति बहुवचनस्य स्थान एकवचनम्। वृषत्वेभिः महित्वेति[1] चोभयत्र स्वार्थ एव भावप्रत्ययः द्रष्टव्यः[2]। त्वं वर्षिता महद्भिर्वर्षणैरित्यर्थः। द्युम्नी[3] द्युम्नं द्योततेर्यशो वा धनं वाऽन्नं वा। यशोभिरन्नैर्धनैर्वा यशस्वी अन्नवान् धनवान् वा भवसीत्यर्थः। नृचक्षाः मनुष्याणां द्रष्टा ॥ २ ॥

**वेङ्कट०** त्वम् सोम! कर्मभिः सुकर्मा अभवः। त्वम् बलैः सुबलो विश्वधनः त्वम् वर्षिता वर्षितृत्वैः माहात्म्येन यशोभिः यशस्वी अभवः मनुष्याणां द्रष्टा ॥ २ ॥

**मुद्गल०** हे सोम! त्वम् क्रतुभिः त्वत्सम्बन्धिभिरग्निष्टोमादिकर्मभिः सुक्रतुः शोभनकर्मा भूः भवसि। तथा विश्ववेदाः सर्वधनः त्वम् दक्षैः आत्मीयैर्बलैः सुदक्षः शोभनबलो भवसि। तथा त्वम् वृषत्वेभिः वृषत्वैः कामाभिवर्षणैः महित्वा महत्त्वेन माहात्म्येन च वृषा कामानां वर्षिता महांश्च भवसि। तथा त्वम् नृचक्षाः नृणां यज्ञस्य नेतॄणां यजमानानामभिमतफलस्य दर्शयिता सन् द्युम्नेभिः द्युम्नैस्तैर्दत्तैः हविर्लक्षणैरन्नैः द्युम्नी अभवः प्रभूतान्नो भवसि ॥ २ ॥

राज्ञो नु ते वरुणस्य व्रतानि बृहद् गभीरं तव सोम धाम।
शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥ ३ ॥

राज्ञः। नु। ते। वरुणस्य। व्रतानि। बृहत्। गभीरम्। तव। सोम। धाम।
शुचिः। त्वम्। असि। प्रियः। न। मित्रः। दक्षाय्यः। अर्यमाऽइव। असि। सोम ॥ ३ ॥

**स्कन्द०** नु-शब्दोऽत्र उपमायाम्। राज्ञः इव वरुणस्य ते तव व्रतानि अत्यन्तोत्कृष्टानि कर्माणि। बृहत् च गभीरम् दुरवगाहम् तव हे सोम! धाम तेजः स्थानं वा। शुचिः च[4]। त्वम् असि प्रियः च[4] सर्वस्य। क इव। उच्यते। न मित्रः पुरस्तादुपचारोऽप्ययं[5] नशब्दः सामर्थ्यादुपमार्थीयः। मित्र इव देवताविशेषः। दक्षाय्यः दक्ष वृद्धौ। वर्धयिता[6] च यजमानानाम् अर्यमा इव देवताविशेषः [7]असि भवसि[7] हे सोम! ॥ ३ ॥

**वेङ्कट०** राज्ञः इव ते वरुणस्य कर्माणि। तवापि तद्वदहिंसितानि। बृहत् च ते गम्भीरं शरीरम्। शुचिः त्वम् असि प्रियम् इव च मित्रम्। वर्धयिताऽसि अर्यमा इव सोम!, अपि वा पूजनीय इति[8] ॥३॥

**मुद्गल०** हे सोम! राज्ञः ब्राह्मणानां स्वामिनः वरुणस्य वृतस्य क्रीतस्य ते तव सम्बन्धीनि हि व्रतानि सर्वाण्यग्निष्टोमादीनि कर्माणि। अतः सर्वेषु यागेषु त्वमेव कारणभूतो भवसीत्यर्थः। अतः तव धाम त्वदीयं तेजः बृहत् महद्विस्तीर्णम् गभीरम् गाम्भीर्योपेतं च। हे सोम! त्वम् नु क्षिप्रम् शुचिः सर्वेषां शोधकः असि। दृष्टान्तः। प्रियो न मित्रः यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत्। तथा त्वम् अर्यमा इव अस्माभिर्दृश्यमानः सूर्य इव दक्षाय्यः असि सर्वेषां वर्धकोऽसि। यथाऽह्नि सूर्यः प्रकाशेन सर्वं वर्धयति एवं निशि अमृतमयैः सोमकिरणैराप्यायमानं सत् स्थावरजङ्गमात्मकं सर्वं जगद् वर्धते ॥ ३ ॥

---

१. °त्वभिरिति अ कु. २. नास्ति अ कु. ३. नास्ति मूको. ४. नास्ति ति. ५. °चारोऽयं ति. ६. वर्षयिता अ ति. ७-७. नास्ति ति. ८. नास्ति कु.

किं कारणम्। उच्यते। यस्मात् न रिष्येत् न रिष्यते न हिंस्यते[1]। त्वावतः त्वत्सदृशस्य सखा। वयञ्च तव सखायः ॥ ८ ॥

**वेङ्कट०** त्वम् अस्मान् सोम! सर्वतः पापमिच्छतः रक्ष। न विनष्टो भवति त्वत्सदृशस्य सखा ॥ ८ ॥

**मुद्गल०** हे सोम! राजन्! राजनशील! त्वम् अघायतः अघं पापं तद्धेतुकं दुःखमस्माकं कर्तुमिच्छतः विश्वतः सर्वस्मादपि पुरुषात् नः अस्मान् रक्ष पालय। त्वावतः त्वत्सदृशस्य सखा सख्यं प्राप्तः पुरुषः न रिष्येत् नहि विनश्येत्। किमु वक्तव्यं त्वत्सखा न विनश्यति ॥ ८ ॥

**सोम् यास्ते मयोभुव ऊतयः सन्ति दाशुषे। ताभिर्नोऽविता भव ॥ ९ ॥**

सोम। याः। ते। मयःऽभुवः। ऊतयः। सन्ति। दाशुषे। ताभिः। नः। अविता। भव ॥ ९ ॥

**स्कन्द०** हे सोम! याः ते मयोभुवः सुखस्य भावयित्र्यः। ऊतयः पालनानि सन्ति[2] दाशुषे यजमानस्यार्थाय, ताभिः नः अविता भव ॥ ९ ॥

**वेङ्कट०** सोम! यानि तव सुखस्य भावयितॄणि पालनानि भवन्ति यजमानाय, तैः भव अस्माकं रक्षिता ॥ ९ ॥

**मुद्गल०** हे सोम! ते तव सम्बन्धिन्यः दाशुषे चरुपुरोडाशादि दत्तवते यजमानाय मयोभुवः मयसः सुखस्य भावयित्र्यः याः ऊतयः रक्षाः सन्ति विद्यन्ते, ताभिः रक्षाभिः नः अस्माकम् अविता रक्षिता भव ॥ ९ ॥

**इमं यज्ञमिदं वचो जुजुषाण उपागहि। सोम् त्वं नो वृधे भव ॥ १० ॥**

इमम्। यज्ञम्। इदम्। वचः। जुजुषाणः। उपऽआगहि। सोम। त्वम्। नः। वृधे। भव ॥ १० ॥

**स्कन्द०** इमम् यज्ञम् इदम् वचः स्तुतिलक्षणम् जुजुषाणः हेतावयं[3] शानच्, व्यत्ययश्च[4] विकरणस्य द्रष्टव्यः। प्रयोजनस्य च[5] हेतुत्वेन विवक्षा। सेवितुमित्यर्थः। उपागहि उपागच्छ। उपागम्य च हे[5] सोम! त्वम् नः वृधे वर्धनाय भव ॥ १० ॥

**वेङ्कट०** इमम् यज्ञम् इदम् च स्तोत्रं प्रीयमाणः उपागच्छ[6]। सोम! त्वम् अस्माकं वर्धनाय भव ॥ १० ॥

**मुद्गल०** हे सोम! त्वम् इमम् अस्माभिः क्रियमाणम् यज्ञम् इदम् वचः इदानीं क्रियमाणं स्तुतिलक्षणं वचः जुजुषाणः सेवमानः सन् उपागहि उपागच्छ, प्राचीनवंशलक्षणं गृहं प्राप्नुहि। प्राप्य च नः अस्माकम् वृधे यज्ञस्य वर्धनाय भव ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये विंशो वर्गः ॥

---

१. °ते पापतः ति. २. सन्तु अ. ३. °विंयं मूको. ४. °स्ययेन च ति अ. ५. नास्ति ति.
६. आगच्छ कु ल; उपगच्छ वि[1] अ[2].

या ते धामा॑नि दि॒वि या पृ॑थि॒व्यां या पर्व॑ते॒ष्वोष॑धीष्व॒प्सु ।
तेभि॑र्नो॒ विश्वैः॑ सु॒मना॒ अहे॑ळ॒न् राज॑न्त्सोम॒ प्रति॑ ह॒व्या गृ॑भाय ॥ ४ ॥

या । ते॒ । धामा॑नि । दि॒वि । या । पृ॒थि॒व्याम् । या । पर्व॑तेषु । ओष॑धीषु । अ॒प्ऽसु ।
तेभि॑ः । नः॒ । विश्वैः॑ । सु॒ऽमना॑ः । अहे॑ळन् । राज॑न् । सो॒म॒ । प्रति॑ । ह॒व्या । गृ॒भा॒य॒ ॥ ४ ॥

**स्कन्द०** या ते यानि तव धामानि स्थानानि जन्मानि वा दिवि, [1]या यानि च[1] पृथिव्याम्, या यानि च[2] पर्वतेषु ओषधीषु [2]अप्सु च[2]। तेभिः विश्वैः तैः सर्वैः। तृतीयानिर्देशाद् युक्त इति वाक्यशेषः। सर्वेषु स्थानेषु जन्मसु वा वर्तमान[3] इत्यर्थः। नः[4] अस्माकं स्वभूतानि सुमनाः प्रीतचित्तः अहेळन् अक्रुध्यन् हे राजन्! सोम![5] प्रति हव्या गृभाय हवींषि प्रतिगृहाण ॥ ४ ॥

**वेङ्कट०** यानि ते शरीराणि दिवि, [6]यानि† पृथिव्याम्[6], यानि च पर्वतादिषु, तैरस्माकं सर्वैः सुमनाः अक्रुध्यन् राजन्! सोम! प्रतिगृहाण हव्यानि। बहूनि धामानि देवानां भवन्ति, यैस्तत्र तत्र[7] हविर्गृह्णन्ति[8] इति[9] ॥ ४ ॥

**मुद्गल०** हे सोम! ते तव दिवि द्युलोके या यानि धामानि तेजांसि वर्तन्ते। तथा पृथिव्याम् भूमौ या यानि वर्तन्ते। तथा पर्वतेषु पर्ववत्सु शिलोच्चयेषु या यानि वर्तन्ते। तथा ओषधीषु[10] व्रीह्याद्योषधीषु अप्सु च यानि वर्तन्ते। तेभिः विश्वैः तैः सर्वैस्तेजोभिर्युक्तः सुमनाः शोभनमनाः अहेळन् अक्रुध्यन् हे राजन् सोम! राजमान[11] सोम! त्वम्[12] नः हव्या अस्माभिः प्रत्तानि हवींषि प्रति गृभाय प्रतिगृहाण ॥ ४ ॥

त्वं सो॑मासि॒ सत्प॑ति॒स्त्वं राजो॒त वृ॑त्र॒हा । त्वं भ॒द्रो अ॑सि॒ क्रतुः॑ ॥ ५ ॥

त्वम् । सो॒म॒ । अ॒सि॒ । सत्ऽप॑तिः । त्वम् । राजा॑ । उ॒त । वृ॒त्र॒ऽहा । त्वम् । भ॒द्रः । अ॒सि॒ । क्रतुः॑ ॥५॥

**स्कन्द०** त्वम् हे सोम! असि भवसि सत्पतिः[13] सतां पालयिता। त्वम् राजा उत वृत्रहा। त्वम् भद्रः कल्याणः असि क्रतुः कर्ता सर्वार्थानाम्। अथवा क्रतुशब्दः कर्मनाम प्रज्ञानाम वा ( तु. निघ २,१; ३,९ )। अन्तर्णीतमत्वर्थश्च। कर्मवान् प्रज्ञावान् वेत्यर्थः[14] ॥ ५ ॥

**वेङ्कट०** त्वम् सोम! असि ब्राह्मणानां पतिः, त्वम् राजा, अपि च[15] शत्रुहा त्वम् भजनीयश्च असि कर्ता ॥ ५ ॥

**मुद्गल०** हे सोम! त्वम् सत्पतिः असि सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिर्भवसि[16]। उत अपि च राजा राजमानः त्वम् वृत्रहा वृत्रस्यासुरस्य हन्तासि। भद्रः शोभनः क्रतुः योऽयमग्निष्टोमादियागः त्वम् एव तद्रूपः असि ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये एकोनविंशो वर्गः ॥

---

१-१. या अ. २-२. नास्ति अ ति. ३. °माना अ. ४. नास्ति वि. ५. हे सोम ति. ६-६. नास्ति वि[1]. † °नि च वि[2] अ[2]. ७. नास्ति वि[1] अ[2]. ८. °णन्ति वि[1] अ[2]. ९. नास्ति कु. १०. नास्ति मूको. ११. राज राज° मै[2]. १२. एवंभूतस्त्वम् मूको. १३. नास्ति वि. १४. चेत्य° अ[2]. १५. नास्ति वि[1] अ[2]. १६. ब्राह्मणानां ब्राह्म° मै[2].

सोम॑ गी॒र्भिष्ट्वा॑ व॒यं व॒र्धया॑मो वचो॒विदः॑ । सु॒मृ॒ळी॒को न॒ आ वि॑श ॥ ११ ॥

सोम॑ । गीः॒ऽभिः । त्वा॒ । व॒यम् । व॒र्धया॑मः । व॒चः॒ऽविदः॑ । सु॒ऽमृ॒ळी॒कः । नः॒ । आ । वि॒श ॥११॥

**स्कन्द०** वृधन्वतः[1] आज्यभागस्य पुरोऽनुवाक्यैषा। हे सोम! गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः त्वा त्वाम् वयम् वर्धयामः वचोविदः स्तुतिलक्षणस्य वचसो वेदितारः। सम्यक् स्तोतुं ज्ञातार इत्यर्थः। स एतत् ज्ञात्वा सुमृळीकः सुसुखः सन् नः आ विश प्रविश उपविश अस्माकम् याज्यालक्षणं हविः प्रतिग्रहीतुम् ॥ ११ ॥

**वेङ्कट०** सोम! स्तुतिभिः त्वाम् वयम् वर्धयामः स्तोत्रविदः। सुष्ठु सुखयिता सन् अस्मान् आ विश ॥११॥

**मुद्गल०** हे सोम! त्वा त्वाम् वचोविदः स्तुतिलक्षणानां वचसां वेदितारः वयम् गीर्भिः स्तुतिलक्षणैर्वचोभिः वर्धयामः प्रवृद्धं कुर्मः। त्वञ्च नः अस्माकम् सुमृळीकः शोभनं सुखं कुर्वन् सन् आ विश आगच्छ ॥ ११ ॥

ग॒य॒स्फानो॑ अमीव॒हा व॑सु॒वित् पु॑ष्टि॒वर्ध॑नः । सु॒मि॒त्रः सो॑म नो भव ॥ १२ ॥

ग॒य॒ऽस्फानः॑ । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः । सु॒ऽमि॒त्रः । सो॒म॒ । नः॒ । भ॒व॒ ॥ १२ ॥

**स्कन्द०** गय इत्यपत्यनाम गृहनाम वा धननाम वा। स्फायिर्वृद्ध्यर्थः। अपत्यस्य धनस्य गृहस्य वा वर्धयिता[2] गयस्फानः। अमीवहा हिंसितॄणां हन्ता। वसुवित्। विन्दतिर्लाभार्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः[3]। धनानां लम्भयिता। दातेत्यर्थः। पुष्टिवर्धनः सर्वप्रकारायाः पुष्टेर्वर्धयिता। सुमित्रः[4] शोभनानि मित्राणि सुमित्राणि। तानि करोतीति सुमित्रयति। तत्करोतीति णिच्। सुमित्रयतेरच्। शोभनानां मित्राणां कर्ता। हे सोम! नः अस्माकम् भव ॥ १२ ॥

**वेङ्कट०** धनस्य वर्धयिता रक्षसां हन्ता धनानां लम्भयिता पुष्टेर्वर्धयिता[5] कल्याणं मित्रम् भव सोम! अस्माकम्। 'गयस्फानोऽमीवहा' (माश ११,४,३,१९) इति, 'गवां नः स्फावयिता' (ऐब्रा १,१३) इति तु[6] ब्राह्मणम् ॥ १२ ॥

**मुद्गल०** गयस्फानः धनस्य वर्धयिता अमीवहा अमीवानां रोगाणां हन्ता वसुवित् स्तोतॄणां धनस्य प्रापयिता पुष्टिवर्धनः पुष्टेः सम्पदो वर्धयिता सुमित्रः शोभनानि मित्राणि सखायो यस्य सः। हे सोम! त्वम् नः अस्माकम् एवंगुणविशिष्टः भव ॥ १२ ॥

सोम॑ रार॒न्धि नो॑ हृ॒दि गावो॒ न यव॑से॒ष्वा । मर्य॑ इ॒व स्व ओ॒क्ये॑ ॥ १३ ॥

सोम॑ । र॒र॒न्धि । नः॒ । हृ॒दि । गावः॑ । न । यव॑सेषु । आ । मर्यः॑ऽइव । स्वे । ओ॒क्ये॑ ॥ १३ ॥

**स्कन्द०** हे सोम! ररन्धि अत्यर्थं रमस्व। नः हृदि अस्माकं हृदये। गावः न यवसेषु यवसशब्दो

---

१. दधेः मूको. २. °रिता वा ति. ३. °र्थाच्चान्त° कु. ४. नास्ति ति. ५. नास्ति वि[2]. ६. नास्ति वि[2] अ[2].

घासवचनः । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः[१] । गाव इव यवसवत्सु देशेषु । आकारस्तु पदपूरणः । मर्य इव स्वे ओक्ये स्वार्थेऽयं यत्प्रत्ययः । ओक्ये निवासस्थाने ॥ १३ ॥

**वेङ्कट०** सोम! रमस्वास्माकं हृदये, गावः इव तृणेषु, मनुष्य इव च [२]स्वे गृहे[२] ॥ १३ ॥

**मुद्गल०** हे सोम! त्वम् नः अस्माकम् हृदि हृदये ररन्धि रमस्व । निदर्शनद्वयम् । गावः न यथा गावः यवसेषु शोभनतृणेषु आ आभिमुख्येन रमन्ते । मर्यः इव यथा वा मर्यो मरणधर्मा मनुष्यः स्वे ओक्ये स्वकीये ओकसि गृहे पुत्रादिभिः सह रमते[३] तद्वदस्माभिर्दत्तेन हविषा तृप्तः सन् अस्मास्वेवावतिष्ठस्व ॥ १३ ॥

**यः सोम सख्ये तव रारणद् देव मर्त्यः । तं दक्षः सचते कविः ॥ १४ ॥**

यः । सोम । सख्ये । तव । ररणत् । देव । मर्त्यः । तम् । दक्षः । सचते । कविः ॥ १४ ॥

**स्कन्द०** यः हे सोम! सख्ये तव । देवानां मनुष्याणां च किं सख्यम् । यष्टव्याः देवाः यष्टारो मनुष्या इति । तस्मिन् सख्ये तव त्वदीये । यागे इत्यर्थः । ररणत् अत्यन्तं[४] रमते[४] । हे देव! मर्त्यः मनुष्यः । तम् दक्षः बलं वृद्धिं वा सचते सेवते । बलं वृद्धिं वा प्राप्नोतीत्यर्थः । कविः मेधावी ॥ १४ ॥

**वेङ्कट०** यः सोम! तव सख्ये रमते देव! मनुष्यः, तम् समर्थः स्तोता सेवते स्तोतुम् ॥ १४ ॥

**मुद्गल०** हे देव! द्योतमान! सोम! तव सख्ये त्वदीये सखित्वे निमित्तभूते सति यः मर्त्यः मरणधर्मा यजमानः ररणत् रणति एतत्सूक्तरूपेण स्तोत्रेण त्वां स्तौति । तम् यजमानम् कविः क्रान्तदर्शी दक्षः सर्वकार्यसमर्थस्त्वम् सचते सचसे सेवसे । अनुगृह्णासीत्यर्थः ॥ १४ ॥

**उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः । सखा सुशेव एधि नः ॥ १५ ॥**

उरुष्य । नः । अभिऽशस्तेः । सोम । नि । पाहि । अंहसः । सखा । सुऽशेवः । एधि । नः ॥१५॥

**स्कन्द०** उरुष्य नः पालय[५] अस्मान् अभिशस्तेः अभिहिंसितुः हे सोम! । न च[७] केवलात्[८] अभिशस्तेः[९] । नि पाहि नियमेन रक्ष अंहसः पापादपि । [१०]सखा च[१०] सुशेवः सुसुखः एधि भव नः अस्माकम् ॥ १५ ॥

**वेङ्कट०** रक्ष अस्मानभिशंसनात् सोम! । नि रक्षास्मानाहन्तुः । सखा सुसुखो भवास्माकम् ॥ १५ ॥

**मुद्गल०** हे सोम! त्वम् नः अस्मान् अभिशस्तेः अभिशंसनात् अभिशापरूपात् निन्दनात् उरुष्य रक्ष । तथा अंहसः अस्मत्कृतात् पापाच्च नि पाहि नितरां पालय । एवम् नः अस्मदीयं पापं परिहृत्य सुशेवः अस्मभ्यं दातव्येन शोभनेन सुखेन युक्तः सन् सखा एधि हितकारी भव[११] ॥ १५ ॥

इति प्रथमाष्टके षष्ठाध्याये एकविंशो वर्गः ॥

---

१. °र्थाच्चात्रान्त° ति. २-२. स्वगृहे वि[१] अ[२]. ३. नास्ति मै[१]. ४. °त्यर्थम् अ. ५. नास्ति मूको. ६. नास्ति ति. ७. हि अ कु. ८. °वला अ. ९. °शस्तः अ. १०-१०. नास्ति ति. ११. भव मित्रीभव मै[२].

**आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ १६ ॥**

आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ॥ १६ ॥

स्कन्द० आ प्यायस्व प्यायतिर्वृद्ध्यर्थः । वर्धस्व । सम् एतु ते[1] सङ्गच्छतां ते विश्वतः सर्वतः हे सोम ! वृष्ण्यम् अपठितमपि बलनामैतत् । रसवचनो[2] वा सामर्थ्यादत्र वृष्ण्यशब्दः । बलं रसो वा । भव चास्माकम् वाजस्य अन्नस्य संगथे चतुर्थ्यर्थे सप्तम्येषा । सङ्गमाय । लाभायेत्यर्थः ॥ १६ ॥

वेङ्कट० पूर्णो भव रसेन । सङ्गच्छताम् ते सर्वतः सोम ! वर्षणनिमित्तमन्धो[3] द्रोणकलशं प्रति । भव अन्नस्य सङ्गमनाय ॥ १६ ॥

मुद्गल० [4]हे सोम ! त्वम् आ प्यायस्व वर्धस्व । ते तव वृष्ण्यम् वृषत्वं वीर्यं सामर्थ्यम् विश्वतः सर्वतः सम् एतु सङ्गच्छताम्, त्वया संयुक्तं भवतु । एवंभूतस्त्वम् वाजस्य अन्नस्य संगथे सङ्गमने भव । अस्माकमन्नप्रदो भवेत्यर्थः[4] ॥ १६ ॥

**आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥ १७ ॥**

आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः । भव । नः । सुश्रवःऽतमः । सखा । वृधे ॥

स्कन्द० आ प्यायस्व हे मदिन्तम ! अतिशयेन मद्वन् ! । [5]सुष्ठु मदकर ! इत्यर्थः[5] । सोम ! विश्वेभिः सर्वैः अंशुभिः । सोमस्यावयवा अंशव[6] उच्यन्ते । भव नः अस्माकम् सुश्रवस्तमः सुश्रवतमः सुकीर्ति-तमो वा सखा वृधे वर्धनाय ॥ १७ ॥

वेङ्कट० आप्यायय स्वम् सोम ! मादयितः ! विश्वाभिर्लताभिः । भव अस्माकं स्वन्नतमः सखा वर्धनाय ॥ १७ ॥

मुद्गल० हे मदिन्तम ! अतिशयेन मद्वन् ! सोम ! विश्वेभिः सर्वैः अंशुभिः लतावयवैः आ प्यायस्व आ समन्ताद् वृद्धो भव । स त्वम् सुश्रवस्तमः अतिशयेन शोभनान्नयुक्तः सन् नः अस्माकम् वृधे वर्धनाय सखा भव मित्रीभव ॥ १७ ॥

**सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।**
**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १८ ॥**

सम् । ते । पयांसि । सम् । ऊँ इति । यन्तु । वाजाः । सम् । वृष्ण्यानि । अभिमातिऽसहः ।
आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ॥ १८ ॥

स्कन्द० यन्तु इत्याख्यातं प्रति सम्-शब्दोऽनुषक्तव्यः[7] । सम् यन्तु सङ्गच्छन्ताम्[8] अस्माभिस्सह ते तव स्वभूतानि । त्वदीयानीत्यर्थः । पयांसि वृष्टिलक्षणान्युदकानि । सम् उ यन्तु वाजाः उकारः पदपूरणः । सङ्गच्छन्तामन्नानि । सम् वृष्ण्यानि सङ्गच्छन्तां बलानि रसा वा । कीदृशस्य तव[9] ।

---

१. नास्ति ति. २. रसपानो ति. ३. °रवन्धो कु. ४-४. नास्ति मूको तु मा. ५-५. नास्ति अ ति. ६. अंशा अ ति. ७-७. °व्दमनुषक्तव्यम् कु. ८. सेवन्त° कु. ९. मम अ ति.

उच्यते। अभिमातिषाहः हिंसितॄणामभिभवितुः। अथवा ते अभिमातिषाहः उभयत्र[1] तृतीयार्थे षष्ठी। सङ्गच्छतां त्वया हिंसितॄणामभिभवित्रा पयांसि वसतीवर्येकधनालक्षणान्युदकानि। सम् उ यन्तु वाजाः सवनीयपुरोडाशहविर्लक्षणान्यन्नानि बलानि रसा वा। किञ्च आप्यायमानः अमृताय अमृतभावाय। अथवा अमृतशब्दो देवतावचनः। अमृतेभ्यः। देवतार्थमित्यर्थः। हे सोम! दिवि श्रवांसि कीर्तिम् अन्नानि धनानि वा अस्माकम् उत्तमानि धिष्व धारय। कुर्वित्यर्थः॥ १८॥

वेङ्कट० सम् यन्तु त्वत्तो रसाः, सम् एव यन्तु अन्नानि, सम् यन्तु वर्षणनिमित्तानि शत्रूणामभिभवितुः[2] आप्यायमानः अमृतत्वाय सोम! दिवि आन्नान्यस्माकम्[3] उत्तमानि कृणुष्व। पीतसोमा हि न[4] परत्र क्षुध्यति॥ १८॥

मुद्गल० हे सोम! अभिमातिषाहः अभिमातीनां शत्रूणां हन्तुः ते तव एवं भूतं त्वाम् पयांसि श्रयणार्थानि क्षीराणि सम् यन्तु सङ्गच्छन्ताम्। [5]तथा वाजाः उ हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम्। वृष्ण्यानि वीर्याणि सङ्गच्छन्ताम्[5]। हे सोम! त्वम् अमृताय अस्माकममृतत्वाय अमरणत्वाय आप्यायमानः आ समन्तात् वर्धमानः सन् दिवि नभसि स्वर्गे उत्तमानि उद्गततमान्युत्कृष्टानि श्रवांसि अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि च धिष्व धारय॥ १८॥

या ते धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञम्।
गय॒स्फान॑ः प्र॒तर॑णः सु॒वीरोऽवी॑रहा॒ प्र च॑रा सोम॒ दुर्या॑न्॥ १९॥

या। ते॒। धामा॑नि। ह॒विषा॑। यज॑न्ति। ता। ते॒। विश्वा॑। प॒रि॒ऽभूः। अ॒स्तु॒। य॒ज्ञम्।
गय॒ऽस्फान॑ः। प्र॒ऽतर॑णः। सु॒ऽवीर॑ः। अवी॑रऽहा। प्र। च॒र॒। सो॒म॒। दु॒र्या॑न्॥ १९॥

स्कन्द० या ते यानि तव धामानि स्थानानि नामानि[6] जन्मानि वा तेजांसि वा हविषा यजन्ति यष्टारः, ता तानि ते सर्वाणि परिभूः अस्तु परिपूर्वो भवतिः सर्वत्र परिग्रहार्थे। उभयत्र बहुवचनस्य स्थाने एकवचनम्। परिग्रहीतॄणि सन्तु। इमं मदीयम् यज्ञम्। यानि तव यष्टव्यानि धामानि तैः सर्वैः इमं यज्ञं परिगृहाणेत्यर्थः। किञ्च गयस्फानः अपत्यस्य धनस्य गृहस्य वा[7] वर्धयिता। प्रतरणः तरतिरत्र वृद्ध्यर्थः। वर्धयिता च सर्वार्थानाम्। शोभना वीरा देवा यस्य सः सुवीरः। शोभनानाञ्च पुत्राणां दातेत्यर्थः। अवीरहा अहन्ता च वीराणाम्। [7]प्र चर[7] प्रगच्छ। हे सोम! दुर्यान् गृहनामैतत् ( तु. निघ ३,४ )। अस्मदीयानि गृहाणि॥ १९॥

वेङ्कट० यानि[8] तव तेजांसि हविषा यजन्ति तानि तव विश्वानि भवन्तु [9]सङ्गतानि। तैः[9] परिभूः अस्तु यज्ञम्[10] इति परोक्षम्। सोम![11] गवां वर्धयिता प्रकर्षेण तारकः शोभनवीरः पुत्राणामहन्ता [12]सन् प्रगच्छ गृहान्[12]॥ १९॥

मुद्गल० हे सोम! ते त्वदीयानि या यानि धामानि द्युप्रभृतिष्ववस्थितानि तेजांसि हविषा

१. इत्युभयत्र क ति. २. भवितः मूको. ३. वास्माकमन्नानि वि[3] अ[2]. ४. नास्ति वि[3] अ[2]. ५-५. नास्ति मै[2]. ६. नास्ति अ. ७-७. नास्ति कु. ८. या ते धामानि कानि वि[3] अ[1]. ९. सवनानि° कु; सङ्गानितैः (?) ल वि[1,2]; सङ्गानि° अ[1]. १०. °ज्ञम् सोम मूको. ११ नास्ति मूको. १२-१२. स… त्रि[3] अ[2].

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ १६ ॥

आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ॥१६॥

स्कन्द० आ प्यायस्व प्यायतिर्वृद्ध्यर्थः । वर्धस्व । सम् एतु ते[1] सङ्गच्छतां ते विश्वतः सर्वतः हे सोम! वृष्ण्यम् अपठितमपि बलनामैतत् । रसवचनो[2] वा सामर्थ्यादत्र वृष्ण्यशब्दः । बलं रसो वा । भव चास्माकम् वाजस्य अन्नस्य संगथे चतुर्थ्यर्थे सप्तम्येषा । सङ्गमाय । लाभायेत्यर्थः ॥ १६ ॥

वेङ्कट० पूर्णो भव रसेन । सङ्गच्छताम् ते सर्वतः सोम! वर्षणनिमित्तमन्धो[3] द्रोणकलशं प्रति । भव अन्नस्य सङ्गमनाय ॥ १६ ॥

मुद्गल० [4]हे सोम! त्वम् आ प्यायस्व वर्धस्व । ते तव वृष्ण्यम् वृषत्वं वीर्यं सामर्थ्यम् विश्वतः सर्वतः सम् एतु सङ्गच्छताम्, त्वया संयुक्तं भवतु । एवंभूतस्त्वम् वाजस्य अन्नस्य संगथे सङ्गमने भव । अस्माकमन्नप्रदो भवेत्यर्थः[4] ॥ १६ ॥

आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥ १७ ॥

आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः । भव । नः । सुश्रवःऽतमः । सखा । वृधे ॥

स्कन्द० आ प्यायस्व हे मदिन्तम! अतिशयेन मदवन्! । [5]सुष्ठु मदकर! इत्यर्थः[5] । सोम! विश्वेभिः सर्वैः अंशुभिः । सोमस्यावयवा अंशव[6] उच्यन्ते । भव नः अस्माकम् सुश्रवस्तमः सुश्रुततमः सुकीर्तितमो वा सखा वृधे वर्धनाय ॥ १७ ॥

वेङ्कट० आप्यायय स्वम् सोम! मादयितः! विश्वाभिर्लताभिः । भव अस्माकं स्वन्नतमः सखा वर्धनाय ॥१७॥

मुद्गल० हे मदिन्तम! अतिशयेन मदवन्! सोम! विश्वेभिः सर्वैः अंशुभिः लतावयवैः आ प्यायस्व आ समन्ताद् वृद्धो भव । स त्वम् सुश्रवस्तमः अतिशयेन शोभनान्नयुक्तः सन् नः अस्माकम् वृधे वर्धनाय सखा भव मित्रीभव ॥ १७ ॥

सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १८ ॥

सम् । ते । पयांसि । सम् । ऊँ इति । यन्तु । वाजाः । सम् । वृष्ण्यानि । अभिमातिऽसहः ।
आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ॥ १८ ॥

स्कन्द० यन्तु इत्याख्यातं प्रति सम्-शब्दोऽनुषक्तव्यः[7] । सम् यन्तु सङ्गच्छन्ताम्[8] अस्माभिस्सह ते तव स्वभूतानि । त्वदीयानीत्यर्थः । पयांसि वृष्टिलक्षणान्युदकानि । सम् उ यन्तु वाजाः उकारः पदपूरणः । सङ्गच्छन्तामन्नानि । सम् वृष्ण्यानि सङ्गच्छन्तां बलानि रसा वा । कीदृशस्य तव[9] ।

१. नास्ति वि. २. रसपानो वि. ३. °स्वन्धो कु. ४-४. नास्ति मूको नु मा. ५-५. नास्ति अ वि. ६. अशः अ वि. ७-७. °न्दमनुषक्तव्यम् कु. ८. सैषन्छ° कु. ९. मम अ वि.

उच्यते। अभिमातिषाहः हिंसितॄणामभिभवितुः। अथवा ते अभिमातिषाहः उभयत्र[1] तृतीयार्थे षष्ठी। सङ्गच्छतां त्वया हिंसितॄणामभिभवित्रा पयांसि वसतीवर्यैकधनालक्षणान्युदकानि। सम् उ यन्तु वाजाः सवनीयपुरोडाशहविर्लक्षणान्यन्नानि बलानि रसा वा। किञ्च आप्यायमानः अमृताय अमृतभावाय। अथवा अमृतशब्दो देवतावचनः। अमृतेभ्यः। देवतार्थमित्यर्थः। हे सोम! दिवि श्रवांसि कीर्तिम् अन्नानि धनानि वा अस्माकम् उत्तमानि धिष्व धारय। कुर्वित्यर्थः ॥ १८ ॥

**वेङ्कट०** सम् यन्तु त्वत्तो रसाः, सम् एव यन्तु अन्नानि, सम् यन्तु वर्षणनिमित्तानि शत्रूणामभिभवितुः[2] आप्यायमानः अमृतत्वाय सोम! दिवि चान्नान्यस्माकम्[3] उत्तमानि कृणुष्व। पीतसोमा हि न[4] परत्र क्षुध्यति ॥ १८ ॥

**मुद्गल०** हे सोम! अभिमातिषाहः अभिमातीनां शत्रूणां हन्तुः ते तव एवंभूतं त्वाम् पयांसि श्रवणार्थानि क्षीराणि सम् यन्तु सङ्गच्छन्ताम्। [5]तथा वाजाः उ हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम्। वृष्ण्यानि वीर्याणि सङ्गच्छन्ताम्[5]। हे सोम! त्वम् अमृताय अस्माकममृतत्वाय अमरणत्वाय आप्यायमानः आ समन्ताद् वर्धमानः सन् दिवि नभसि स्वर्गे उत्तमानि उद्गततमान्युत्कृष्टानि श्रवांसि अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि च धिष्व धारय ॥ १८ ॥

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥ १९ ॥

या। ते। धामानि। हविषा। यजन्ति। ता। ते। विश्वा। परिऽभूः। अस्तु। यज्ञम्।
गयऽस्फानः। प्रऽतरणः। सुऽवीरः। अवीरऽहा। प्र। चर। सोम। दुर्यान् ॥ १९ ॥

**स्कन्द०** या ते यानि तव धामानि स्थानानि नामानि[6] जन्मानि वा तेजांसि वा हविषा यजन्ति यष्टारः, ता तानि ते सर्वाणि परिभूः अस्तु परिपूर्वो भवतिः सर्वत्र परिग्रहार्थे। उभयत्र बहुवचनस्य स्थाने एकवचनम्। परिग्रहीतॄणि सन्तु। इमं मदीयम् यज्ञम्। यानि तव यष्टव्यानि धामानि तैः सर्वैः इमं यज्ञं परिगृहाणेत्यर्थः। किञ्च गयस्फानः अपत्यस्य धनस्य गृहस्य वा[7] वर्धयिता। प्रतरणः तरतिरत्र वृद्ध्यर्थः। वर्धयिता च सर्वार्थानाम्। शोभना वीरा देया यस्य सः सुवीरः। शोभनानाञ्च पुत्राणां दातेत्यर्थः। अवीरहा अहन्ता च वीराणाम्। [7]प्र चर[7] प्रगच्छ। हे सोम! दुर्यान् गृहनामैतत् ( तु. निघ ३,४ )। अस्मदीयानि गृहाणि ॥ १९ ॥

**वेङ्कट०** यानि[8] तव तेजांसि हविषा यजन्ति तानि तव विश्वानि भवन्तु [9]सङ्गतानि। तैः[9] परिभूः अस्तु यज्ञम्[10] इति परोक्षम्। सोम![11] गवां वर्धयिता प्रकर्षेण तारकः शोभनवीरः पुत्राणामहन्ता [12]सन् प्रगच्छ गृहान्[12] ॥ १९ ॥

**मुद्गल०** हे सोम! ते त्वदीयानि या यानि धामानि द्युप्रभृतिष्ववस्थितानि तेजांसि हविषा

---

१. इत्युभयत्र अ ति. २. भवितः मूको. ३. वास्माकमन्नानि वि[३] अ[२]. ४. नास्ति वि[३] अ[२]. ५-५. नास्ति मै[२]. ६. नास्ति अ. ७-७. नास्ति कु. ८. या ते धामानि यानि वि[२] अ[१]. ९. सवनानि° कु; सहानितैः (?) ल वि[१,२]; सङ्गानि° अ[१]. १०. °ज्ञम् सोम मूको. ११ नास्ति मूको. १२-१२. स··· वि[१] अ[२].

चरुपुरोडाशादिना यजन्ति यजमानाः पूजयन्ति । ता ते विश्वा त्वदीयानि तानि सर्वाणि धामानि यज्ञम् अस्मदीयमध्वरम् परिभूः अस्तु परितो भावयितॄणि परितः प्राप्तानि सन्तु । तादृशैर्धामभिरुपेतस्त्वम् दुर्यान् प्राचीनवंशादिलक्षणानस्मदीयान् गृहान् प्र चर प्रकर्षेण गच्छ । कीदृशस्त्वम् । गयस्फानः गयस्य गृहस्य वर्धयिता । प्रतरणः प्रकर्षेण दुरितात् तारयिता । सुवीरः शोभनैर्वीरैरुपेतः । अवीरहा पुत्राणामहन्ता ॥ १९ ॥

## सोमो॑ धे॒नुं सोमो॒ अर्व॑न्तमा॒शुं सोमो॑ वी॒रं क॑र्म॒ण्यं॑ ददाति ।
## सा॒द॒न्यं॑ विद॒थ्यं॑ स॒भेयं॑ पितृ॒श्रव॑णं॒ यो ददा॑शदस्मै ॥ २० ॥

सोम॑ः । धे॒नुम् । सोम॑ः । अर्व॑न्तम् । आ॒शुम् । सोम॑ः । वी॒रम् । क॒र्म॒ण्य॑म् । द॒दा॒ति ।
स॒द॒न्य॑म् । वि॒द॒थ्य॑म् । स॒भेय॑म् । पि॒तृ॒ऽश्रव॑णम् । यः । ददा॑शत् । अ॒स्मै ॥ २० ॥

**स्कन्द०** सोमः धेनुम्, सोमः एव अर्वन्तम् आशुम् शीघ्रम्, सोमः एव वीरम् पुत्रम् कर्मण्यम् कर्मसु साधुं सर्वकर्मसु योग्यम् ददाति । न[1] च सर्वकर्मयोग्यमेव केवलम् । किं तर्हि । सदन्यम् सदनं गृहम् । तत्र च साधुम् । विदथ्यम्[2] [3]विदथं यज्ञः । तत्र च साधुम्[3] । सभेयम् विद्वत्समाजः सभा, तत्र च साधुम् । पितृश्रवणम् पितॄणां च श्रोतारम् । विनीतमित्यर्थः । कस्मै ददाति । यः ददाशत् यो[4] ददाति अस्मै सोमाय । किम् । सामर्थ्यात् हवींषि ॥ २० ॥

**वेङ्कट०** सोमः धेनुम्, सोमः अश्वम्[5] आशुगन्तारम्[6], सोमः पुत्रं कर्मणि समर्थं ददाति । गृहे शूरं यज्ञसभयोश्च यः स्वकीर्त्याऽऽत्मीयं पितरम् अस्य पिताऽयमिति श्रावयति तं ददाति । यः[7] हविः सोमाय ददाति अस्मै यजमानाय ॥ २० ॥

**मुद्गल०** यः यजमानः ददाशत् सोमाय हविर्लक्षणान्यन्नानि दद्यात्, तस्मै यजमानाय सोमः धेनुम् सवत्सां गां दोग्ध्रीम् ददाति । तथा सोमः आशुम् अर्वन्तम् शीघ्रगामिनमश्वं ददाति । तथा सोमः वीरम् पुत्रम् अस्मै यजमानाय ददाति । कीदृशं पुत्रम् । कर्मण्यम् लौकिककर्मकुशलम् । सदन्यम् सदनं गृहं तदर्हम् । गृहकार्यकुशलमित्यर्थः । विदथ्यम् विदथा यज्ञाः तदर्हम्[8] । दर्शपूर्णमासादियागानुष्ठानतत्परमित्यर्थः । सभेयम् सभायां साधुम् । सकलशास्त्राभिज्ञमित्यर्थः । पितृश्रवणम् पिता श्रूयते आख्यायते येन पुत्रेण तादृशम् ॥ २० ॥

इति प्रथमाष्टके षष्ठाध्याये द्वाविंशो वर्गः ॥

## अषा॑ळ्हं यु॒त्सु पृत॑नासु॒ पप्रिं॑ स्व॒र्षाम॒प्सां वृ॒जन॑स्य गो॒पाम् ।
## भ॒रे॒षु॒जां सु॑क्षि॒तिं सु॒श्रव॑सं॒ जय॑न्तं॒ त्वामनु॑ मदेम सोम ॥ २१ ॥

अषा॑ळ्हम् । यु॒त्ऽसु । पृत॑नासु । पप्रि॑म् । स्व॒ःऽसाम् । अ॒प्साम् । वृ॒जन॑स्य गो॒पाम् ।
भ॒रे॒षु॒ऽजाम् । सु॒ऽक्षि॒तिम् । सु॒ऽश्रव॑सम् । जय॑न्तम् । त्वाम् । अनु॑ । म॒दे॒म । सो॒म ॥ २१ ॥

---

१. नास्ति ति. २. नास्ति अ ति. ३-३. नास्ति मूको. ४. यो या अ. ५. अश्वानाम् वि[1] अ[2]. ६. आश ग[*] ल. ७. नास्ति वि[1] अ[2]. ८. °र्ह तदह मै[2].

**स्कन्द०** अषाळहम्[1] **अन्यैः अनभिभूतपूर्वम्**। युत्सु **युद्धेषु** पृतनासु पप्रिम् **पृ पालनपूरणयोरित्यस्य एतद्रूपं न प्रा पूरणे इत्यस्य। सङ्ग्रामेषु पालयितारं यष्टॄणां च स्तोतॄणां च।** स्वर्षाम् **स्वर्द्यौः**[2] **तां सनोतीति स्वर्षाः, तं स्वर्षाम्। दिवः सम्भक्तारमित्यर्थः।** अप्साम् **अपां च सेवितारम्।** वृजनस्य गोपाम्। 'वृजनम्' ( निघ **२,९** ) **इति बलनाम। बलस्य गोप्तारम्।** भरेषुजाम् **जनिरत्र सामर्थ्याज्जयतेरर्थे। सङ्ग्रामेषु जेतारम्।** सुक्षितिम् **सुनिवासम्।** सुश्रवसम् **सुकीर्तिं स्वन्नं सुधनं वा।** जयन्तम् त्वाम् अनु **अनुशब्दोऽत्र** 'अनुर्लक्षणे' (पा १,४,८४) **इत्येवं कर्मप्रवचनीयः आक्षिप्तनिशमयत्यर्थः**[3]**। शाकल्यस्य संहितामनु प्रावर्षदिति यथा। जयन्तं त्वामनुनिशम्य श्रुत्वेत्यर्थः।** मदेम **मोदेम। प्रहृष्टाः स्यामेत्यर्थः।** हे सोम! ॥ २१ ॥

**वेङ्कट०** शत्रुभिरसोढं[4] **युद्धेषु** पृतनासु **पालयितारं दिवः**[5] **सम्भक्तारम् अपां दातारं बलस्य गोपायितारं सङ्ग्रामेषु प्रादुर्भवन्तं सुनिवासं सुकीर्तिम्** जयन्तम् त्वाम् अनु मदेम **स्तोत्रैः** सोम! ॥ २१ ॥

**मुद्गल०** युत्सु **युद्धेषु** अषाळहम् **शत्रुभिरनभिभवनीयं तथा** पृतनासु **सेनासु** पप्रिम् **जयस्य पूरयितारम्।** स्वर्षाम् **स्वर्गस्य सनितारं दातारम्।** अप्साम् **वृष्टिलक्षणानामुदकानां दातारम्।** वृजनस्य गोपाम् **बलस्य गोपायितारं**[6] **रक्षितारम्।** भरेषुजाम् **भ्रियन्त एषु हवींषीति भरा यागाः तेषु प्रादुर्भवन्तम्।** सुक्षितिम् **शोभननिवासस्थानम्।** सुश्रवसम् **शोभनयशस्कम्।** जयन्तम् **शत्रूनभिभवन्तम्।** हे सोम! **ईदृग्भूतम्** त्वाम् **अनुलक्ष्य** मदेम **हर्षयुक्ता भवेम** ॥ २१ ॥

**त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।**
**त्वमा ततन्थोर्व१न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥**

त्वम्। इमाः। ओषधीः। सोम। विश्वाः। त्वम्। अपः। अजनयः। त्वम्। गाः।
त्वम्। आ। ततन्थ। उरु। अन्तरिक्षम्। त्वम्। ज्योतिषा। वि। तमः। ववर्थ ॥ २२ ॥

**स्कन्द०** त्वम् इमाः ओषधीः हे सोम! विश्वाः **सर्वाः।** त्वम् एव अपः **वृष्टिलक्षणान्युदकानि।** अजनयः **जनयसि।** त्वम् एव गाः। त्वम् एव आ ततन्थ **आतनोषि विस्तारयसि।** उरु **विस्तीर्णम्** अन्तरिक्षम्। त्वम् **एवादित्याख्येन** ज्योतिषा[7] वि ववर्थ **विविधं वारयसि शार्वरं** तमः। **ओषधीजननादि हि सर्वं धर्मायत्तम्। धर्मश्च यागादिः सोमायत्तः। अतः सोमसाध्ययागादिद्वारकर्मत्वात्वाद् ओषध्यादीनामिदमुच्यते त्वमिमा ओषधीः इत्यादि** ॥ २२ ॥

**वेङ्कट०** त्वम् इमाः ओषधीः सोम! विश्वाः अजनयः। त्वम्[8] **उदकानि** त्वम् **पशून्।** त्वम् **विस्तारितवानसि तेजसा विस्तीर्णम्** अन्तरिक्षम् त्वम् ज्योतिषा **नैशम्** तमः **विनिवारितवानसि** ॥२२॥

**मुद्गल०** हे सोम! त्वम् इमाः **भूम्यां वर्तमानाः** विश्वाः **सर्वाः** ओषधीः अजनयः **उत्पादितवानसि। तथा हे सोम!** त्वम् अपः **तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः। तथा** त्वम् गाः **सर्वान् पशून् उदपादयः।** उरु **विस्तीर्णम्** अन्तरिक्षम् त्वम्[9] आ ततन्थ **विस्तारितवानसि**

---

१. °ळहसोढम् **ति.** २. स्वः साम स्व° **ति.** ३. °क्षिप्तादिश° **ति.** ४. °सोढुं **कु.** ५. दिवा **लपं.** ६. गोपयि° **मै**[1]. ७. आप्नोति **अ.** ८. **नास्ति वि**[1] **अ**[2]. ९. **नास्ति मै**[1].

तस्मिन्नन्तरिक्षे यत् तमः अस्मद्दृष्टिनिरोधकमन्धकारं तदपि त्वम् ज्योतिषा आत्मीयेन प्रकाशेन वि ववर्थ वित्रृतं विश्लिष्टं कृतवानसि ॥ २२ ॥

देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ॥ २३ ॥

देवेन । नः । मनसा । देव । सोम । रायः । भागम् । सहसाऽवन् । अभि । युध्य ।
मा । त्वा । आ । तनत् । ईशिषे । वीर्यस्य । उभयेभ्यः । प्र । चिकित्स । गोऽइष्टौ ॥ २३ ॥

स्कन्द० देवेन इत्यत्र सामर्थ्याद् दीव्यतिः दानार्थः । देवेन[1] दानाभिमुखेन मनसा नः अस्मान् प्रति हे देव! सोम[2]! रायः धनस्य भागम् एकदेशम् । हे सहसावन्! बलवन्! अभि युध्य[3] अभियुध्यतिर्गतिकर्मा ( तु निघ २,१४ ) सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अभिगमय । देह्यस्मभ्यमित्यर्थः । मा च त्वा[3] त्वां ददतम् आ तनत् आतनिरत्र सामर्थ्यात्प्रतिबन्धार्थः । प्रतिभान्त्सीत् । भवतो ददतः प्रतिबन्धं मा कश्चित् कार्षीदित्यर्थः । कस्मात् । उच्यते । यस्मात् त्वम् ईशिषे वीर्यस्य[4] स्वाम्यसि । यस्मादत्यन्तशूरोऽसि । अत्यन्तशूरत्वाच्च प्रतिबन्धकारिणो हन्तुं समर्थ इत्यर्थः । यतश्चैतदेवं ततो ब्रूमः । उभयशब्दः शत्रुविषयः । अपादानपञ्चमीश्रुतेश्च योग्यक्रियाध्याहारः । आत्मीयेभ्योऽस्मदीयेभ्यश्च उभयेभ्यः अपि शत्रुभ्यो धनान्यपहृत्य । अथवा उभयशब्दः प्रयोजनवचनः । सामर्थ्याच्चतुर्थी चैषा द्वितीयार्थे[5] । यानि चास्माकमिह लोके प्रयोजनानि च परत्र तेभ्यः उभयेभ्यः । ऐहलौकिकपारलौकिककार्यमित्यर्थः । प्र चिकित्स । कित ज्ञाने । ज्ञानेन चात्र तत्पूर्वकं दानं लक्ष्यते । प्रकर्षेण देहीत्यर्थः । गविष्टौ गाव इष्यन्ते यत्र प्राप्तुं सा गविष्टिरिष्टिः तत्र[6] । यज्ञे इत्यर्थः ॥ २३ ॥

वेङ्कट० दीप्तेन अस्माकम् मनसा देव! सोम! धनस्य भागम् बलवन्! अभि युध्य । मा त्वा[7] पर्येति कश्चित् । त्वं हि[8] बलस्य ईशिषे । उभयेभ्यः परेभ्यो अस्मदीयेभ्यश्च गवामन्वेषणे अस्मान् प्रकर्षेण जानीहि । जेतव्यमस्मदर्थम् इति[9] ॥ २३ ॥

मुद्गल० हे देव! द्योतमान! सहसावन् बलवन्! सोम! देवेन मनसा द्योतमानया त्वदीयया बुद्ध्या रायः भागम् धनस्यांशम् नः अस्मानभिलक्ष्य युध्य प्रेरय । त्वा तादृशं त्वां कश्चिदपि शत्रुः मा आ तनत् क्लेशेन आर्तं मा कार्षीत् । मा हिंसीदित्यर्थः । उभयेभ्यः उभयेषां युध्यमानानां सम्बन्धिनः वीर्यस्य त्वम् ईशिषे ईश्वरो भवसि । स त्वम् गविष्टौ सङ्ग्रामे प्र चिकित्स अस्मदीयमुपद्रवं परिहर ॥ २३ ॥

इति प्रथमाष्टके षष्ठाध्याये त्रयोविंशो वर्गः ॥

१. नास्ति अ ति. २. नास्ति लि. ३. नास्ति मूको. ४. °र्यस्य महतोः वीर्यस्य लि. ५. नास्ति अ. ६. अत्र अ. ७. मा न त्रि[1] अ[2]. ८. नास्ति लपं. ९. नास्ति कु.

# [ ९२ ]

**एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।**
**निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १ ॥**

एताः । ऊँ इति । त्याः । उषसः । केतुम् । अक्रत । पूर्वे । अर्धे । रजसः । भानुम् । अञ्जते ।
निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यन्ति । मातरः ॥ १ ॥

**स्कन्द०** 'उषस्यम्'[१] । उषस्यमेतत् सूक्तम् । उ-कारः पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । या पूर्वेष्वप्यहःस्वकार्षुः एताः ताः उषसः एकस्या[२] एवोषसः पूजनार्थमेतत् बहुवचनम् । भवन्तो मे गुरव इति यथा । अवयवभेदापेक्षं वा । भिन्नेष्वहःसूषोभेदात् बह्व्य एवोषसः । केतुम् अक्रत प्रज्ञानं प्राणिनां कुर्वन्ति । केन प्रकारेण । उच्यते । पूर्वे अर्धे रजसः द्युलोकस्यान्तरिक्षस्य वा । सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः । भानुम् अञ्जते भानुमिति तृतीयार्थे द्वितीया । अञ्जिर्व्यक्त्यर्थः । भानुना व्यञ्जन्ति[३] । स्वया भासा सर्वं व्यक्तीकुर्वन्तीत्यर्थः । कथम् । उच्यते । निष्कृण्वानाः आयुधानीव कृणोतिरत्र सामर्थ्यात् कृषेरर्थे[४] द्रष्टव्यः । निष्कर्षन्तः । आयुधानीव धृष्णवः धर्षयितारो योद्धारो[५] यथा कोशेभ्यः खड्गा-न्निष्कर्षन्तो[६] व्यक्तीकुर्वन्ति तद्वदित्यर्थः । अथवा पूर्वे अर्धे रजसः भानुम् अञ्जते इत्यञ्जि-र्गत्यर्थः । सामर्थ्याच्चेहान्तर्णीतण्यर्थः । पूर्वे अर्धे अन्तरिक्षस्य द्युलोकस्य वा दीप्तिं गमयन्ति प्राणिनां च प्रकाशद्वारेण प्रज्ञानं कुर्वन्ति । पूर्वार्धं च द्युलोकस्यान्तरिक्षस्य वा दीप्तं कुर्वन्तीत्यर्थः । कथम् । निष्कृण्वाना आयुधानीव । निरित्येष समित्येतस्य स्थाने । संस्कुर्वन्तः आयुधानीव धृष्णवः । यथा परिमार्जनादिभिः संस्कारैः संस्कुर्वन्तः आयुधानि योद्धारो दीप्तानि[७] कुर्वन्ति तद्वदित्यर्थः । कृत्वा चैतत् प्रति गावः अरुषीः यन्ति प्रतियन्ति । यत आगताः तत्रैव प्रतिगच्छन्ति । यत[८] आदित्या-दुत्पन्नास्तत्रैव प्रविलीयन्त[८] इत्यर्थः । गावः । उषसोऽत्र गाव उच्यन्ते । 'कृष्णा यत् गोष्वरुणीषु सीदत्' ( ऋ १०,६२,४ ) इति यथा । उषसः कीदृश्यः । अरुषीः । अरुषतिर्गतिकर्मा ( तु. निघ २,१४ ) । गमनस्वभाविकाः । मातरः मातृस्थानीयाः सर्वस्य निर्मात्र्यो वा ॥ १ ॥

**वेङ्कट०** ताः[९] एताः उषसः प्रज्ञानम् अकृण्वन् पूर्वे अर्धे अन्तरिक्षलोकस्य प्राच्यां[१०] [११]कुड्ये† मृदमिव[११] दीप्तिम् अञ्जते । कोशात् आयुधानि निष्कृण्वानाः वीराः इव प्रति यन्ति गन्त्र्यः आरोचमाना उषसः मातृस्थानीयाः । निरुक्तं च द्रष्टव्यम् ( या १२,७ ) ॥ १ ॥

**मुद्गल०** 'एता उ त्याः' इत्यष्टादशर्चमष्टमं [१२]सूक्तम् । गोतम ऋषिः[१२] । आदितश्चतस्रो जगत्यः । त्रयोदश्याद्याः[१३] षड्च उष्णिहः । शिष्टास्त्रिष्टुभः । उषा देवता । 'अश्विना वर्तिं' इत्यन्त्य-स्तृचोऽश्विदेवत्यः ॥

उ इति[१४] पादपूरणम् । त्याः ताः एताः उषसः प्रभातकालाभिमानिन्यो देवताः । केतुम्

---

१. नास्ति ति. २. तस्या ति. ३. व्यञ्जति मूको. ४. कर्षे° ति. ५. नास्ति भ कु. ६. °निकर्षन्तो भ; °न्निकर्षन्तो ति. ७. दीप्तिम् भ ति. ८. प्रतिली° मूको. ९. नास्ति वि[१]. १०. प्राच्याः कु. ११-११. नास्ति कु. † रुध्ये ल भ[१]. १२-१२. नास्ति मै[२]. १३. °दशाद्याः मै[१]. १४. नास्ति मूको.

अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् अक्रत अकृषत कृतवत्यः। यस्मादेवं तस्मात् उषसः रजसः अन्तरिक्षलोकस्य पूर्वे अर्धे प्राचीनदिग्भागे भानुम् प्रकाशम् अञ्जते व्यक्तीकुर्वन्ति। धृष्णवः धर्षणशीला योद्धारः आयुधानि इव यथा असिप्रभृतीन्यायुधानि संस्कुर्वन्ति। एवम् निष्कृण्वानाः स्वभासा जगत्संस्कुर्वाणाः गावः गमनस्वभावाः अरुषीः आरोचमानाः मातरः सूर्यस्य प्रकाशस्य निर्मात्र्यो मातर उषसः प्रति यन्ति प्रतिदिवसं गच्छन्ति। एवंविधा उषसोऽस्मान् रक्षन्त्वित्यर्थः॥ १॥

**उद॑पप्तन्नरु॒णा भा॒नवो॒ वृथा॑ स्वा॒युजो॒ अरु॑षी॒र्गा अ॑युक्षत।**
**अक्र॑न्नु॒षासो॑ व॒युना॑नि पू॒र्वथा॒ रुश॑न्तं भा॒नुमरु॑षीरशिश्रयुः॥ २॥**

उत्। अ॒प॒प्त॒न्। अ॒रु॒णाः। भा॒नवः॑। वृथा॑। सु॒ऽआ॒यु॒जः॑। अरु॑षीः। गाः। अ॒यु॒क्ष॒त।
अक्र॑न्। उ॒षसः॑। व॒युना॑नि। पू॒र्वऽथा॑। रुश॑न्तम्। भा॒नुम्। अरु॑षीः। अ॒शि॒श्र॒युः॥ २॥

**स्कन्द०** उत् अपप्तन् उत्पतन्ति उद्गच्छन्ति। अरुणाः रक्तवर्णाः उषसः। भानवः दीप्ताः। उद्गम्य च वृथा अयत्नेन। स्वायुजः सुखमायुज्यन्ते या रथेषु ताः स्वायुजः अरुषीः गमनस्वभाविकाः। गाः[1] उषसामुपयोजनानि गाव इहोच्यन्ते। आत्मीया वडवाः। अयुक्षत युञ्जन्ति। युक्त्वा च त्रीनपि लोकान् गत्वा अक्रन् कुर्वन्ति उषासः वयुनानि। प्रकाशद्वारेण प्रज्ञानानि कुर्वन्ति प्राणिनाम्। पूर्वथा पूर्वेष्विव कालेषु। कृत्वा च रुशन्तम् [2]दीप्यमानम् भानुम्[2] अरुषीः गमनस्वभाविकाः अशिश्रयुः संश्रयन्ति। आदित्ये एव प्रलीयन्त इत्यर्थः॥ २॥

**वेङ्कट०** उत् अपप्तन् अरुणाः दीप्तयः अनायासेन। स्वयमेव युज्यमानाः आरोचमाना आत्मीयाः गाः चाश्वभूताः अयुक्षत रथे अयोजयन्। पूर्वेष्विवाहःसु प्रज्ञानानि अकृण्वन्। दीप्यमानमादित्यम् उषसः श्रयन्ति आरोचमानाः[3]॥ २॥

**मुद्गल०** अरुणाः रोचमानाः भानवः औषस्यो दीप्तयः वृथा अनायासेन स्वयमेव उत् अपप्तन् उदगमन्। तदनन्तरम् उषसः च स्वायुजः सुखेन रथे[4] आयोक्तुं शक्याः अरुषीः शुभ्रवर्णाः गाः पूर्वमुच्छ्रितान् रश्मीन् अयुक्षत स्वरथेऽयोजयन्। एवं गोभिर्युक्तं रथमारुह्य उषसः पूर्वथा पूर्वेषु अतीतेषु अहःस्विव वयुनानि सर्वेषां प्राणिनां ज्ञानानि अक्रन् अकार्षुः। उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति। तदनन्तरम् अरुषीः आरोचमानास्ता उषसः रुशन्तम् शुभ्रवर्णम् भानुम् सूर्यम् अशिश्रयुः असेवन्त। तेन सहैकीभवन्तीत्यर्थः॥ २॥

**अर्च॑न्ति॒ नारी॑र॒पसो॒ न वि॒ष्टिभिः॑ समा॒नेन॒ योज॑नेना परा॒वतः॑।**
**इषं॒ वह॑न्तीः सु॒कृते॑ सु॒दान॑वे॒ विश्वेद॑ह॒ यज॑मानाय सुन्व॒ते॥ ३॥**

अर्च॑न्ति। नारीः॑। अ॒पसः॑। न। वि॒ष्टिऽभिः॑। स॒मा॒नेन॑। योज॑नेन। आ। प॒रा॒ऽवतः॑।
इष॑म्। वह॑न्तीः। सु॒ऽकृते॑। सु॒ऽदान॑वे। विश्वा॑। इत्। अह॑। यज॑मानाय। सु॒न्व॒ते॥ ३॥

---

१. नास्ति ति. २-२. °मानम॰° कु. ३. अरो° वि[3]. ४. रथेन मूको.

**स्कन्द०** अर्चन्ति **अर्च पूजायाम्। पूजयन्त्युषसः। प्रकाशत्वापादनेनाभिपूजितं कुर्वन्तीत्यर्थः। किम्। सामर्थ्यात् त्रैलोक्यं दिवं वा।** नारीः अपसः न विष्टिभिः **नार्यः कर्मवत्य इव कर्मभिः। उपलेपनादिकर्मभिः**[1] **गृहाद्यभिपूजितं कुर्वन्ति तद्वदित्यर्थः। न च केवलाः। किं तर्हि।** समानेन योजनेन **सर्वैः प्रकाशैः**[2] **प्रकाशकत्वेन युज्यमानत्वाद् योजन इहाऽऽदित्य उच्यते। सहयोगलक्षणा**[3] **चैषा तृतीया। आत्मनः समानेन सर्वप्रकाश्यानां वा साधारणेन प्रकाशयित्राऽऽदित्येन सहेत्यर्थः। अथवा प्रकाश्यैर्युज्यमानत्वाद् योजन इह प्रकाश एवोच्यते। करणे एवैषा तृतीया। सर्वप्रकाश्यसाधारणेन प्रकाशेनार्चन्तीत्यर्थः।** आ परावतः **दूरात् अन्तात्। समस्तं त्रैलोक्यं दिवञ्चेत्यर्थः।** इषम् वहन्तीः **प्रापयन्त्यः। अन्नं ददत्य इत्यर्थः।** सुकृते **शोभनकारिणे** सुदानवे **शोभनहविर्दायिने।** विश्वा इत् अह **विश्वा इति चतुर्थ्येकवचनस्याकारः। इत् अह इति निपातौ पदपूरणौ। सर्वस्मै** यजमानाय सुन्वते **सोमाभिषवं कुर्वते ॥ ३ ॥**

**वेङ्कट०** अर्चन्ति **उषस आप इव प्रवेशनैः एकेन उद्योगेन** [4]**आ पश्चिमायाः**[4] **अन्नम्** वहन्त्यः **सुकर्मणे सुदानाय। विश्वान्येवापेक्षितानि च** यजमानाय सुन्वते वहन्त्यः ॥ ३ ॥

**मुद्गल०** नारीः **नेत्र्यः** उषसः विष्टिभिः **निवेशकैः स्वकीयैस्तेजोभिः** समानेन योजनेन **एकेनैवोद्यमेन** आ परावतः **आ दूरदेशाद् आ पश्चिमदिग्भागात्** अर्चन्ति **नभःप्रदेशं पूजयन्ति। कृत्स्नं जगद् युगपदेव व्याप्नुवन्तीत्यर्थः। दृष्टान्तः।** अपसः न **युद्धकर्मणोपेताः पुरुषा यथा स्वकीयैरायुधैर्धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत्। किं कुर्वत्यः।** सुकृते **शोभनकर्मणः कर्त्रे** सुन्वते **सोमाभिषवं कुर्वते** सुदानवे **कल्याणीर्दक्षिणा ऋत्विग्भ्यो ददते** यजमानाय विश्वा इत् अह **सर्वमेव** इषम् **अन्नम्** वहन्तीः **आवहन्त्यः प्रयच्छन्त्य इत्यर्थः ॥ ३ ॥**

**अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम् ।**
**ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः ॥ ४ ॥**

अधि । पेशांसि । वपते । नृतूःऽइव । अप । ऊर्णुते । वक्षः । उस्राऽइव । बर्जहम् ।
ज्योतिः । विश्वस्मै । भुवनाय । कृण्वती । गावः । न । व्रजम् । वि । उषाः । आवरित्यावः । तमः ॥ ४ ॥

**स्कन्द०** अधि **उपरि** पेशांसि **प्रकाश्यानि रूपाणि** वपते। वपिः 'केशश्मश्रु वपते' (तैब्रा ३,८,१,२) **इत्यादौ**[5] **मुण्डने प्रसिद्धः। मुण्डयत्युषाः**[6]**। केशस्थानीयं तमः प्रकाश्यानामर्थानामपनयतीत्यर्थः। कथम्।** नृतूरिव **नापित इव**[7] । [8]अप ऊर्णुते[8] **प्रकाशयति चात्मीयं** वक्षः। **कथम्।** उस्रेव बर्जहम्[9] 'उस्रा' ( निघ २,११ ) **इति गोनाम। भृञ्**[10] **भरणे। प्राणिनां भरणसमर्थत्वाद् बर्**[11] **इति क्षीरमुच्यते। तज्जहातीति बर्जहम् ऊधः। गौरिव क्षीरपूर्णमूध इत्यर्थः। किं कुर्वत्युषाः**[12]**।** [13]**उच्यते। द्वयमिदं करोति**[13] । ज्योतिर्विश्वस्मै भुवनाय **सर्वस्य भूतजातस्यार्थाय**[14] कृण्वती **कुर्वती**[15]**। किञ्च** गावः न व्रजम् **यथा गावो गोष्ठम् एवम्** उषाः [16]वि आवः **व्यावृणोति**[16]। **स्वेन**

---

१. उपलेपनादिभिः कर्म° ति. २. प्रकाशकैः कु ति. ३. °लक्षणे अ कु. ४-४. अपश्चिमाय ल. ५ °त्यादि मूको. ६. °त्युषा अ कु. ७. इव प्रकाशयति इव मूको. ८-८. नास्ति मूको; वामावः आ वृ° कु ति. ९. नास्ति अ. १०. भ्रूभ्र मूको. ११. बसः अ ति, बस् कु. १२ कुर्वन्त्युषाः मूको. १३-१३. द्वयमिदं करोति उच्यते अ कु. १४. °तस्य जात° ति. १५. °र्वन्ती कु. १६ १६. चाव्यावृणो° अ.

ज्योतिषा व्याप्नोतीत्यर्थः । किम् । उच्यते । तमः शार्वरम् ॥ ४ ॥

**वेङ्कट०** [1]अधि वपते आश्लिष्टानि तमांसि[1] नापितः इव केशान्। तमोभिराच्छादितम् वक्षः च अप ऊर्णुते गौरिव ऊधो दोहाय। ज्योतिः विश्वस्मै भुवनाय कृण्वती। यथा गावः व्रजम् व्यावृण्वन्ति एवम् तमः स्वेन ज्योतिषा व्यावृणोति ॥ ४ ॥

**मुद्गल०** उषाः पेशांसि जगत्स्वाश्लिष्टानि कृष्णवर्णानि तमांसि अधि आधिक्येन वपते छिनत्ति। दृष्टान्तः। नृतूः इव नृस्तूर्वति केशेन रिक्तीकरोतीति नृतूर्नापितः। स यथा केशान्निःशेषेण छिनत्ति, एवमुषा अप्यन्धकारं समूलं निरस्यतीत्यर्थः। प्रथमतोऽन्धकारं स्वकिरणैर्निरस्य वक्षः स्वकीयमुरःप्रदेशम् अप ऊर्णुते तमसाऽनाच्छादितं करोति। स्वयमाविर्भवतीत्यर्थः। बर्जहम् पयस उत्पत्तिस्थानं दोहनसमये उस्रा इव गौर्यथा आविष्करोति तद्वत्। किं कुर्वती। गावः न व्रजम् यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवन्ति एवं स्वयमेव प्राचीं दिशं प्राप्य विश्वस्मै सर्वस्मै भुवनाय लोकाय ज्योतिः कृण्वती प्रकाशं कुर्वती। एवमुक्तेन प्रकारेण उषाः तमः अन्धकारम् वि आवः विवृतमपश्लिष्टमकरोत् ॥ ४ ॥

प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।
स्वरुं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता भानुमश्रेत् ॥ ५ ॥

प्रति । अर्चिः । रुशत् । अस्याः । अदर्शि । वि । तिष्ठते । बाधते । कृष्णम् । अभ्वम् ।
स्वरुम् । न । पेशः विदथेषु । अञ्जन् । चित्रम् । दिवः । दुहिता । भानुम् । अश्रेत् ॥ ५ ॥

**स्कन्द०** अर्चिः [2]ज्योतिः रुशत् दीप्यमानम्[2] अस्याः उषसः प्रति[3] अदर्शि प्रतिदृश्यते। वि तिष्ठते विविधं गच्छति त्रीनपि लोकान् प्रति। गत्वा च बाधते अपनयति कृष्णम् कृष्णवर्णं शार्वरं तमः। अभ्वम् महत्। किञ्च स्वरुम् न यूपस्य यः [4]प्रथमशकलः पश्वञ्जार्थमुपादीयते[4] स स्वरुरित्युच्यते। प्रथमार्थे चैषा द्वितीया। यथा स्वरुः[5] पेशः आज्यसम्बन्धादुज्ज्वलरूपम्[6] विदथेषु अञ्जन् श्रयति एवम् चित्रम् विचित्रं पूज्यं वा दिवः दुहिता द्युप्रभवत्वादुषा[7] दुहितेत्याख्यायते। सा भानुम् दीप्तिम् अश्रेत् श्रयति। प्रतिक्षणं दीप्ता[8] रूपान्तरीभवतीत्यर्थः ॥ ५ ॥

**वेङ्कट०** उषसः दीप्तिः प्रतिदृश्यते श्वेता। विविधं च गच्छति अर्चिः। बाधते च तमो महत्। स्वरुम् इव रूपं गृहेषु अञ्जन्ति[9] इति। चित्रम् दिवः दुहिता भानुम् उत् अश्रेत् यूपमिवोत्थापयति[10]। स्वरुमान् यूपः स्वरुः इति[11] ॥ ५ ॥

**मुद्गल०** अस्याः उषसः रुशत् दीप्यमानम् अर्चिः तेजः प्रति अदर्शि सर्वैः पूर्वस्यां दिशि प्रथमतो दृश्यते। वि तिष्ठते सर्वासु दिक्षु विविधमवतिष्ठते। व्याप्नोतीत्यर्थः। सर्वा[12] दिशो व्याप्य च अभ्वम् अतिशयेन विपुलम् कृष्णम् कृष्णवर्णमन्धकारम् बाधते अपसारयति। विदथेषु यज्ञेषु

१-१. नास्ति वि[1]. २-२. °तिरादीप्य° अ. ३. नास्ति अ ति. ४-४. °शकलमञ्जनार्थमु° अ ति. ५. स्वरुम् अ. ६. °ज्ज्वलं रूपम् अ ति. ७. °दुषो मूको. ८. दीप्तम् अ ति. ९. अञ्जन्ती कु; स्वरुम् ल. १०. रूपमिवोद्भावयति वि[1] अ[2]. ११. नास्ति कु. १२. सर्वासु मूको.

स्वरुम् न स्वरुनाम्ना शकलेन युक्तं यूपं यथा आज्येन अध्वर्यवः अञ्जन् अञ्जन्ति तद्वन्नभसि स्वकीयम् पेशः रूपम् उषा अनक्ति संश्लिष्टं करोति। तदनन्तरम् चित्रम् चायनीयम् भानुम् सूर्यम् दिवः दुहिता द्युलोकादुत्पन्ना उषाः अश्रेत् असेवत ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये चतुर्विंशो वर्गः ॥

**अता॑रिष्म॒ तम॑सस्पा॒रम॒स्योषा उ॒च्छन्ती॑ व॒युना॑ कृणोति ।**
**श्रि॒ये छन्दो॒ न स्म॑यते वि॒भा॒ती सु॒प्रती॑का सौमन॒सायाजीगः ॥ ६ ॥**

अता॑रिष्म । तम॑सः । पा॒रम् । अ॒स्य । उ॒षाः । उ॒च्छन्ती॑ । व॒युना॑ । कृ॒णो॒ति॒ ।
श्रि॒ये । छन्दः॑ । न । स्म॒य॒ते॒ । वि॒ऽभा॒ती । सु॒ऽप्रती॑का । सौ॒म॒न॒साय॑ । अ॒जी॒ग॒रिति॑ ॥ ६ ॥

**स्कन्द०** अतारिष्म **निस्संशयं प्राप्ता वयम्** तमसः पारम् अस्य । **किं कारणम्** । **उच्यते** । **यस्मात्** उषाः **इयं साम्प्रतम्** उच्छन्ती **तमांसि विवासयन्ती**[1] वयुना **प्रज्ञानानि प्राणिनाम्** कृणोति **करोति** । **यस्माच्च** श्रिये **प्रकाशलक्षणायै** । छन्दः न[2] [3]'छन्त्सत्' ( निघ २,६ ) **इति**[3] **कान्तिकर्मसु पाठात् छन्दश्शब्दोऽत्र कामिनीवचनः**[4] । [5]**कामिनीव** स्मयते[5] **ष्मिङ्**[6] **ईषद्धसने** । **ईषद्धसन्ती** । विभाती[7] **विविधं दीप्यमाना** । **यथा कामिनी ईषद्धसन्ती स्वदन्तकिरणान् प्रकाशयति, एवमुषाः स्वकिरणानाविष्करोतीत्यर्थः** । **अथवा** 'छन्दः' ( निघ ३,१६ ) **इति स्तोतृनाम** । **स्तोतेव स्मयते** । **यथा स्तोता स्तुत्यमतिशयवद्भिर्गुणैः स्तुवन् प्रकर्षाद्विकसितवदनो भवति तद्वदित्यर्थः** । **स्मित्वा च** सुप्रतीका **प्रतीकशब्दो मुखवचनः दर्शनपर्यायो वा** । **सुमुखा सुदर्शना वा** । सौमनसाय **सौमनस्याय प्राणिनाम्** अजीगः **जिगर्तिर्गिरतिकर्मा**[8] **वा गृह्णातिकर्मा वाऽन्यत्र**[9] ( तु. या ६, ८ ) । **इह तु** [10]†**सामर्थ्यात् गतिकर्मणः**† **इदं रूपम्** । **त्रीनपि लोकान् प्रति गच्छतीत्यर्थः**[10] ॥ ६ ॥

**वेङ्कट०** **नैशस्य** तमसः पारम् **वयं तीर्णवन्तः** । उषाः **व्युच्छन्ती प्रज्ञानानि च** कृणोति। **धनाश्रयणाय**[11] **दरिद्रो यथाऽऽढ्याय आत्मच्छन्दं**[12] **प्रकाशयति एवमियं**[13] **हसति, शोभनावयवा सर्वेषां** सौमनसाय **तमश्च**[14] **गिरति इति**[15] ॥ ६ ॥

**मुद्गल०** अस्य **नैशस्य** तमसः **अन्धकारस्य** पारम् **समाप्तिप्रदेशम्** अतारिष्म **उत्तीर्णा अभूम** । **अनन्तरम्** उच्छन्ती **नैशं तमो वर्जयन्ती** उषाः वयुना **वयुनानि सर्वेषां प्राणिनां ज्ञानानि** कृणोति **निर्मिमीते** । श्रिये **सम्पदर्थम्** छन्दः न स्मयते । **यथा उपच्छन्दयिता वशीकरण**[16] **समर्थः पुरुषः आढ्यसमीपं**[17] **प्राप्य तत्प्रीत्यर्थं स्मयते हसति एवम्** विभाती **विशिष्टप्रकाशं कुर्वत्युषाः स्वकीयया निर्मलदीप्त्या हसन्तीव दृश्यते** । **एवम्** सुप्रतीका **विशिष्टप्रकाशरूपत्वेन शोभमानाङ्गी सती** सौमनसाय **सर्वेषां सौमनस्याय** अजीगः **अन्धकारं भक्षितवती** ॥ ६ ॥

---

१. °वासन्ति अ. २. नास्ति कु. ३-३. छन्द इति ति; अन्यदिति अ. ४. कामिवच° मूको. ५-५. कामी विस्म° ति; कामीवस्म° अ कु. ६. स्मिङ् मूको. ७. °भाति ति. ८. °तिर्जर° अ; °र्तिर्गर° कु ति. ९. वा अ. १०-१०. नास्ति ति. †-† °थ्यात् गत्यर्थः । जिगातेर्वा गिरति° अ कु. ११. °नश्र° वि[1]ʼ[1]. १२. °न्दनं वि[1] अ[1]. १३. एवमेव वि[1] अ[1]. १४. तेजश्च मूको. १५. नास्ति कु. १६. करणेन मूको. १७. आद्य° मूको.

भास्वती नेत्री सूनृतानां दिवः स्तवे दुहिता गोतमेभिः ।
प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥ ७ ॥

भास्वती । नेत्री । सूनृतानाम् । दिवः । स्तवे । दुहिता । गोतमेभिः ।
प्रजाऽवतः । नृऽवतः । अश्वऽबुध्यान् । उषः । गोऽअग्रान् । उप । मासि । वाजान् ॥ ७ ॥

**स्कन्द०** भास्वती[1] [2]'भास्वती' ( निघ १, ८ ) इत्युषोनाम । नेत्री सूनृतानाम् वाचाम् । उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते । अतः सैव तासां† प्रवर्तयित्रीत्युच्यते — नेत्री सूनृतानामिति । दिवः दुहिता[2] द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते । स्तवे स्तूयते । गोतमेभिः 'अस्मदो द्वयोश्च' ( पा १,२,५९ ) इत्येवमेतदेकस्मिन्नेव[3] बहुवचनम् । मया गोतमेनेत्यर्थः । तत्प्रभृत्यपेक्षं वा बहुवचनम् । अस्माभिः गोतमेभिः गोतमप्रभृतिभिरित्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । प्रजावतः प्रजासहितान् । नृवतः परिचारकमनुष्यैः सहितान् । अश्वबुध्यान् अश्वैर्ये बोध्यन्ते तेऽश्वबुध्याः, तान् अश्वबुध्यान् । उत्कृष्टैरश्वैरुद्भासितानित्यर्थः । [4]हे उषः ![4] गोअग्रान् गावोऽग्रभूता येषां ते गोअग्राः, तान् गोअग्रान् । उत्कृष्टाभिः गोभिः सहितानित्यर्थः । उप मासि माङ् माने लोडर्थे चात्र लट् । निर्मिमीहि[5] कुरु । देहीत्यर्थः । कान् । उच्यते । वाजान् अन्ननामैतत् । प्रजादिसहितान्यन्नानि देहीत्यर्थः ॥ ७ ॥

**वेङ्कट०** उषाः वचसां प्रणेत्री दिवः दुहिता स्तुता गोतमैः प्रजायुक्तान् दासयुक्तान् अश्वैर्बोद्धव्यान् उषः! गोमुखान् उपकुरु[6] वाजान् अन्नानि ॥ ७ ॥

**मुद्गल०** भास्वती तेजस्विनी सूनृतानाम् प्रियसत्यात्मिकानाम् वाचाम्[7] नेत्री प्रणेत्री कारयित्री । उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापाराय इतस्ततः शब्दं कुर्वन्ति । एवंभूता दिवः दुहिता द्युलोकसकाशाद्[8] उत्पन्ना उषाः गोतमेभिः ऋषिभिरस्माभिः स्तवे स्तूयते । हे उषः ! अस्माभिः स्तुता त्वम् वाजान् अन्नानि उप मासि प्रयच्छ । कीदृशान् वाजान् । प्रजावतः प्रजाभिः पुत्रपौत्रादिभिर्युक्तान् नृवतः दासलक्षणैर्नृभिरुपेतान् अश्वबुध्यान् अश्वा बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान् । गोअग्रान् गावोऽग्रे प्रमुखे येषां तादृशान् ॥ ७ ॥

उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।
सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ॥ ८ ॥

उषः । तम् । अश्याम् । यशसम् । सुऽवीरम् । दासऽप्रवर्गम् । रयिम् । अश्वऽबुध्यम् ।
सुऽदंससा । श्रवसा । या । विऽभासि । वाजऽप्रसूता । सुऽभगे । बृहन्तम् ॥ ८ ॥

**स्कन्द०** हे उषः ! तम् अश्याम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यं त्वमेव दातुं समर्था[9] नान्यः कश्चित्, तं त्वया दीयमानम् अश्यां प्राप्नुयाम् अहम् । यशसम् यशस्वन्तम् ।

---

१. नास्ति मूको. २-२. त्रुटितम् ति. † ताः अ. ३. इत्येवमेकस्मि° अ ४-४. नास्ति अ ति. ५ निर्मिमीमहि मूको. ६. उपाकुरु वि[3] अ[2]. ७. नास्ति मूको. ८. °लोकात् सकाशात् मूको. ९. समर्थः मूको.

अन्नेन सहितमित्यर्थः । सुवीरम् शोभनैर्वीरैः पुत्रैः सहितम् । दासप्रवर्गम् प्रकृष्टा वर्गा येषां ते प्रवर्गाः । दासाः प्रवर्गा यस्मिन् स दासप्रवर्गः, तं दासप्रवर्गम् । प्रकृष्टैर्दासगणैः सहितमित्यर्थः । रयिम् धनम् । अश्वबुध्यम् अश्वैरुद्भासितम् । याऽहम् कीदृशी । उच्यते । सुदंससा श्रवसा 'दंसः' ( निघ २,१ ) इति कर्मनाम । श्रवःशब्दः कीर्तिपर्यायः । उभयत्र च हेतौ तृतीया । प्रयोजनस्य च[१] हेतुत्वेन विवक्षा । शोभनप्रकाशकरणादिकर्मसम्बन्धया कीर्त्या हेतुभूतया । अतिशयवत्कर्मनिमित्तकीर्त्यर्थमित्यर्थः । या विभासि विविधं दीप्यसे । अथवा दसि दर्शनदंशनयोः[२] इत्यस्य दंसशब्दो दर्शनवचनः । श्रवःशब्दोऽपि सामर्थ्यात् ज्योतिर्वचनः । सुदर्शनेन ज्योतिषा या विभासीत्यर्थः । वाजप्रसूता षू प्रेरणे । कर्तव्येनाग्निहोत्रादिहविर्लक्षणेनान्नेन प्रेरिता । हे सुभगे! सुधने! बृहन्तम् क्रियाविशेषणमिदम् । व्यत्ययेन तु पुँल्लिङ्गता । महद्[३] विभासि । अथवा पुँल्लिङ्गत्वसामर्थ्याद् व्यवहितस्यापि रयिमित्येतस्यैव विशेषणम् । महान्तं रयिमश्यामिति[४] ॥ ८ ॥

वेङ्कट० उषः! तम् अहम् प्राप्नुयां यशस्विनम् सुवीरम् प्रकृष्टदासगणम् रयिम् अश्वबुध्यम् । सुकर्मणा अन्नेन या विभासि[५] प्रसूतान्ना सुधने! महान्तं यजमानं प्रति ॥ ८ ॥

मुद्गल० हे उषः! उषोदेवते! तम् रयिम् धनम् अश्याम् प्राप्नुयाम् । कीदृशम् । यशसम् यशसा कीर्त्या युक्तम् । सर्वैः प्रशस्यमित्यर्थः । सुवीरम् शोभनवीरैः पुत्रादिभिर्युक्तम् । दासप्रवर्गम् प्रकृष्टो वर्गः संघः प्रवर्गः । दासानां कर्मकराणां प्रवर्गो यस्मिन् तम् । अनेकैर्भृत्यैरुपेतमित्यर्थः । अश्वबुध्यम् अश्वा बुध्या बोद्धव्या येन धनेन तादृशम् । हे सुभगे! शोभनधने! उषः! सुदंससा शोभनेन कर्मणा युक्तेन श्रवसा श्रवणीयेन स्तोत्रेण प्रीता त्वम् वाजप्रसूता अस्मभ्यं दत्तान्ना सती बृहन्तम् प्रौढम् या यं रयिम् विभासि विशेषेण प्रकाशयसि । तमश्यामिति पूर्वेण सम्बन्धः ॥ ८ ॥

विश्वा॑नि दे॒वी भुव॑नाभि॒चक्ष्या॑ प्र॒तीची॒ चक्षु॑रुर्वि॒या वि भा॑ति ।
विश्वं॑ जी॒वं च॒रसे॑ बो॒धय॑न्ती॒ विश्व॑स्य॒ वाच॑मविद॒न्मना॒योः ॥ ९ ॥

विश्वा॑नि । दे॒वी । भुव॑ना । अ॒भि॒ऽचक्ष्य॑ । प्र॒तीची॑ । चक्षुः॑ । उ॒र्वि॒या । वि । भा॒ति॒ ।
विश्व॑म् । जी॒वम् । च॒रसे॑ । बो॒धय॑न्ती । विश्व॑स्य । वाच॑म् । अ॒वि॒द॒त् । म॒ना॒योः ॥ ९ ॥

स्कन्द० विश्वानि देवी उषाः[१] भुवना भूतजातानि अभिचक्ष्य दर्शयित्वा । प्रकाश्येत्यर्थः । प्रतीची अञ्चतिर्गत्यर्थः । तं तमर्थं[२] प्रति गन्त्री । सर्वव्यापिनीत्यर्थः[६] । चक्षुः चक्षुःस्थानीया प्राणिनाम् । उर्विया प्रथमैकवचनस्यायमियादेशः । उरु विस्तीर्णा । वि भाति विविधं दीप्यते । किञ्च "विश्वम् जीवम् सर्वप्राणिनः†[७] चरसे तत्रतत्र गमनाय बोधयन्ती सुप्तानुत्थापयन्ती विश्वस्य सर्वस्य ऋषेः यजमानस्य वा वाचम्[१] स्वभूतां स्तुतिम् अविदत् जानाति ज्ञातवती वा । मनायोः मन्यतेरर्चतिकर्मणो मना स्तुतिरुच्यते[८] । तत्कामस्य मनायोः । सर्वेण ऋषिणा यजमानेन वा स्तुतिकामेन वा[९] स्तूयते स्तुता वेत्यर्थः ॥ ९ ॥

---

१. नास्ति ति. २. दंसुदर्शन° मूको. ३. नास्ति अ. ४. °यिमश्यामीति कु ति; °यिं पश्यामीति अ. ५. भासि वि[१] अ[२]. ६. °व्यापीत्य° मूको. ७-७. सर्वप्राणिनं विश्वं जीवं अ. † °णिनाम् कु. ८. स्तुति- प्रस्तुतिरु° अ. ९. नास्ति अ कु.

**वेङ्कट०** विश्वानि भुवनानि उषाः चक्षुषी[1] दर्शयित्वा[2] प्राणिनामभिमुखमागच्छन्ती बृहत् तेजः प्रकाशयति । विश्वम् प्राणिनं चरणाय बोधयन्ती विश्वस्य मननशीलस्य प्राणिनः वाचम् अलम्भयत् ॥ ९ ॥

**मुद्गल०** देवी द्योतमाना उषाः विश्वानि सर्वाणि भुवना भुवनानि भूतजातानि अभिचक्ष्य अभिप्रकाश्य प्रकाशवन्ति कृत्वा अनन्तरम् प्रतीची प्रत्यङ्मुखी सती चक्षुः प्रकाशकेन तेजसा उर्विया उर्वी विस्तीर्णा सती वि भाति प्रकाशते । अपि च विश्वम् जीवम् सर्वं प्राणिजातम् चरसे चरणाय स्वस्वव्यापारेषु प्रवर्तनाय बोधयन्ती निद्रातः सकाशाद् उद्बोधयन्ती उषाः विश्वस्य सर्वस्य मनायोः मनसा युक्तस्य वाग्व्यवहारसमर्थस्य प्राणिजातस्य या वागस्ति, ताम् वाचम् अविदत् अलभत । अत एवोषसः सूनृतावतीति संज्ञोपपन्ना भवति ॥ ९ ॥

पुनः॑पुनर्जाय॑माना पुरा॒णी स॑मा॒नं वर्ण॑म॒भि शुम्भ॑माना ।
श्व॒घ्नीव॑ कृ॒त्नुर्विज॑ आमिना॒ना मर्त॑स्य दे॒वी ज॒रय॒न्त्यायुः॑ ॥ १० ॥

पुनः॑ऽपुनः । जाय॑माना । पु॒रा॒णी । स॒मा॒नम् । वर्ण॑म् । अ॒भि । शुम्भ॑माना ।
श्व॒घ्नीऽइ॑व । कृ॒त्नुः । विज॑: । आऽमि॒ना॒ना । मर्त॑स्य । दे॒वी । ज॒रय॑न्ती । आयुः॑ ॥ १० ॥

**स्कन्द०** पुनःपुनः जायमाना जन्मन अत्र उदयोऽभिप्रेतः[3] । उद्यती । पुराणी जगत्सृष्टिकाल एवोत्पन्नत्वाद् उषाः पुराणीत्युच्यते । समानम् वर्णम् अभि अत्र कर्मण उपसर्गस्य च श्रुतेः योग्यक्रियापदाध्याहारः । समानं वर्णम् अभिगम्य[4] शुम्भमाना शोभमाना । उषोन्तरैः[5] समानेन शुक्लेन वर्णेन शोभमानेत्यर्थः । श्वघ्नीव श्वभिर्हन्तीति श्वघ्नी लुब्धक इहोच्यते । स यथा कृत्नुः पापस्य कर्मणः कर्ता । विजः विः पक्षी, ततो जायत[6] इति विजः । ये अनुपजातपक्षा बालाः पक्षिणः तानवष्टभ्य बलात् हिंस्यात् । एवम् आमिनाना मीञ् हिंसायाम् । बलाद्धिंसन्ती । किम् । सामर्थ्यात् तमांसि । सर्वप्राणिनो वा पूर्वं निर्दिष्टत्वात् पक्षिणः मर्तस्य मनुष्याणाञ्च देवी उषाः जरयन्ती जरां नयन्ती । क्षपयन्तीत्यर्थः । आयुः जीवितम् । लक्षणार्थशतृशानच्छ्रुतेः साकाङ्क्षत्वादस्या ऋचः उत्तरचैकवाक्यता ॥ १० ॥

**वेङ्कट०** अन्वहम् जायमाना प्रत्ना समानम् एव वर्णम् अभि एति शोभमाना । लुब्धकस्त्रीव[7] कर्तनशीला चलतः पक्षिणो हिंसन्ती मनुष्यस्य देवी जरयन्ती जीवितम् । उत्तरत्र सम्बन्धः ॥ १० ॥

**मुद्गल०** पुनःपुनः जायमाना प्रतिदिवसं सूर्योदयात् पूर्वं प्रादुर्भवन्ती पुराणी चिरन्तनी । नित्येत्यर्थः । यस्मात् समानम् वर्णम् एकमेव रूपम् अभि प्राप्य शुम्भमाना शोभमाना । विभिन्नेष्वपि दिवसेष्वस्या एकरूपेणावस्थानान्नित्यत्वमित्यर्थः । एवंगुणविशिष्टा देवी देवनशीला उषाः मर्तस्य मरणधर्मवतः सर्वस्य प्राणिजातस्य आयुः जीवनम् जरयन्ती वर्तते । बह्वीषूषःस्वतीतासु हि सर्वेषामायुर्हीयते । उषाश्च पुनर्जायमानेत्युक्तमतः सैवायुर्जरयति । दृष्टान्तः । कृत्नुः कर्तनशीला श्वघ्नीव व्याधस्त्रीव ।

---

१. चक्षुषोः वि[1] अ[2]; चक्षुषो वि[1,2] अ[1] कु ल लपं. २. °यितुं वि[1] अ[2]. ३. जन्ममात्रो योभिप्रेतः अ जन्मात्रोद° ति. ४. अभि मूको. ५. उषोत्तरैः अ कु. ६. जातः कु अ. ७. अस्त्रीव वि[1] अ[2].

सा यथा विजः चलतः पक्षिणः आमिनाना पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत् ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये पञ्चविंशो वर्गः ॥

व्यूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति ।
प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥ ११ ॥

विऽऊर्ण्वती । दिवः । अन्तान् । अबोधि । अप । स्वसारम् । सनुतः । युयोति ।
प्रऽमिनती । मनुष्या । युगानि । योषा । जारस्य । चक्षसा । वि । भाति ॥ ११ ॥

**स्कन्द०** व्यूर्ण्वती ऊर्णुञ् आच्छादने । विविधं छादयन्ती स्वेन ज्योतिषा तमांसि । दिवः अन्तान् अबोधि बोधयति । प्रकाशयतीत्यर्थः । स्वसारम् उषसमुदयेनादित्यो जनयति अस्तमयेन रात्रिम् । अतो रात्रिरुषसः स्वसोच्यते । तां च । सनुतः अन्तर्हितनामैतत् । अत्यन्तमन्तर्हिताम् । अप युयोति अपमिश्रयति । अपनयतीत्यर्थः । किञ्च प्रमिनती हिंसन्ती । क्षपयन्तीत्यर्थः । मनुष्या युगानि युगशब्दः कालवचनः । मनुष्याणां जीवितादिकालान् । योषा उषआख्या[1] स्त्री । जारस्य रात्रेः रसानां वा जरयितृत्वात् जार आदित्य उच्यते । तस्य स्वभूतेन चक्षसा दर्शनेन प्रकाशाख्येन वि भाति ॥ ११ ॥

**वेङ्कट०** विविधं छादयन्ती द्युलोकस्य पर्यन्तान् प्रादुरासीत् । स्वसारम् च रात्रिमन्तर्हिताम् अप[2] युयोति अपगमयति । प्रहिंसन्ती मनुष्याणां परिच्छेदकानि अहोरात्राणि योषा जरयितुरादित्यस्य तेजसा सम्प्रकाशयति[3] ॥ ११ ॥

**मुद्गल०** दिवः नभसः अन्तान् प्रान्तान् व्यूर्ण्वती विवृतान् तमसा वियुक्तान् कुर्वत्युषाः अबोधि सर्वैः प्राणिभिरज्ञायि ज्ञाताऽभूत् । तदनन्तरम् स्वसारम् उषसः प्रादुर्भावे सति स्वयमेव सरन्तीं निशाम् सनुतः अन्तर्हितप्रदेशे अप युयोति अपगम्य पृथक् करोति । मनुष्या मनुष्याणां सम्बन्धीनि युगानि कृतत्रेतादीनि प्रमिनती स्वगमनाऽऽगमनाभ्यां प्रकर्षेण हिंसन्ती जारस्य रात्रेर्जरयितुः सूर्यस्य योषा जाया उषाः चक्षसा आत्मीयेन प्रकाशेन वि भाति विशेषेण प्रकाशते ॥ ११ ॥

पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद उर्विया व्यश्वैत् ।
अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥ १२ ॥

पशून् । न । चित्रा । सुऽभगा । प्रथाना । सिन्धुः । न । क्षोदः । उर्विया । वि । अश्वैत् ।
अमिनती । दैव्यानि । व्रतानि । सूर्यस्य । चेति । रश्मिऽभिः । दृशाना ॥ १२ ॥

**स्कन्द०** पशून् न[4] यथा कश्चिच्छीघ्रगमनाय विस्तीर्णे पथि गाः अन्यान् वा पशून् पृथूकरोति एवं चित्रा विचित्रा पूजनीया वा उषाः सुभगा सुधना प्रथाना प्रथयन्ती । किम् । सामर्थ्यात् ज्योतिः ।

---

१. उषसाख्या° अ. २. अव° वि[1] अ[2]. ३. सर्वं प्रकाश° वि[1] अ[1]. ४. नास्ति अ.

सिन्धुः न क्षोदः 'क्षोदः[1]' ( निघ १,१२ ) इत्युदकनाम। प्रथनस्य चेयं द्वितीयोपमा। यथा सिन्धुर्नदी आत्मीयमुदकं प्रथयति एवं प्रथाना। उर्विया उरु विस्तीर्णा। वि अश्वैत् श्वयतिर्गत्यर्थः। विविधं गच्छति त्रीनपि लोकान् प्रति। किञ्च अमिनती अहिंसती दैव्यानि देवानां स्वभूतानि। व्रतानि यागकर्माणि। यागकर्मणां ह्यकरणं हिंसा। उषआयत्ता च तेषां क्रिया, तदुत्तरकालभावित्वात्। अत इदमुच्यते— अमिनती दैव्यानि व्रतानीति। यागार्थमुद्यतीत्यर्थः। सूर्यस्य रश्मिभिः तृतीयानिर्देशात् सदृशीति वाक्यशेषः। चेति ज्ञायते लक्ष्यते। दृशाना दृश्यमाना उषाः सदा सूर्यरश्मिसदृशी लक्ष्यत इत्यर्थः ॥ १२ ॥

**वेङ्कट०** पशून् इव चित्रा सुधना विस्तारयन्ती तेजांसि नदीव उदकम् उरुत्वेन भासं वर्धयति। दैव्यानि कर्माण्यहिंसन्ती। रात्रिर्हि यज्ञान् हिनस्ति, नैवमहः। सूर्यस्य रश्मिभिः[2] सह विज्ञायते दृश्यमाना ॥ १२ ॥

**मुद्गल०** सुभगा शोभनधना चित्रा चायनीया पूजनीया उषाः पशून् न यथा पशून् गोपालकोऽरण्ये विस्तारयति तथा[3] प्रथाना तेजांसि विस्तारयन्ती उर्विया उर्वी महती एवंभूता सा वि अश्वैत् सर्वं जगद् व्याप्नोत्। दृष्टान्तः। सिन्धुः न क्षोदः यथा स्यन्दनशीलमुदकं[4] निम्नदेशेऽचिरादेव व्याप्नोति तद्वत्। सैवोषाः सूर्यस्य रश्मिभिः किरणैः सह दृशाना दृश्यमाना सती चेति प्रज्ञाताऽऽसीत्। किं कुर्वती। दैव्यानि देवसम्बन्धीनि व्रतानि दर्शपूर्णमासादीनि कर्माणि अमिनती अहिंसती। अनुष्ठाने यजमानान् प्रवर्तयन्तीत्यर्थः ॥ १२ ॥

## उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति। येन तोकं च तनयं च धामहे ॥१३॥

उषः। तत्। चित्रम्। आ। भर। अस्मभ्यम्। वाजिनीऽवति। येन। तोकम्। च। तनयम्। च। धामहे ॥ १३ ॥

**स्कन्द०** हे उषः! तत् चित्रम् विचित्रं पूजनीयं वा आ भर अस्मभ्यम् आहर। देहीत्यर्थः। हे वाजिनीवति! वाजमन्नम्, तद्वती वाजिनी अन्नसंहतिः, तद्वती वाजिनीवती[5]। अन्नसमूहवति! इत्यर्थः। स्वार्थिको वा मत्वर्थीयः। अन्नवति! इत्यर्थः। येन तोकम् च तनयम् च द्वयमप्येते अपत्यनामनी। पुत्रविषयमेकं पौत्रविषयमपरम्[6]। पुत्रांश्च पौत्रांश्च। धामहे धारयामः। सम्यक् पुष्णीम[7] इत्यर्थः ॥ १३ ॥

**वेङ्कट०** उषः! तत् चायनीयमन्नम् अस्मभ्यम् आ भर अन्नवति!। येन 'पुत्रम् च[8]' तत्पुत्रम् च धारयेम ॥ १३ ॥

**मुद्गल०** हे वाजिनीवति! वाजो हविर्लक्षणमन्नम्, तद्युक्ता क्रिया वाजिनी, तया क्रियया युक्ते! उषः! उषोदेवते! अस्मभ्यम् चित्रम् चायनीयम् तत् धनम् आ भर आहर प्रयच्छ। येन धनेन तोकम् च पुत्रम् तनयम् तत्पुत्रम् च धामहे दध्महे धारयामः ॥ १३ ॥

---

१. नास्ति मूको. २. °भिः सर्वं (?°र्वं) प्रकाशयति वि[1] अ[1]. ३. यथा मूको. ४. स्पन्द° मै[2]. ५. नास्ति अ. ६. अपरं पौत्रविषयम् अ. ७. °महे अ. ८-८. नास्ति वि[1] अ[1].

उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावति ॥ १४ ॥

उषः । अद्य । इह । गोऽमति । अश्वऽवति । विभाऽवरि । रेवत् । अस्मे इति । वि । उच्छ । सूनृताऽवति ॥ १४ ॥

**स्कन्द०** हे उषः! अद्य इह **सप्तमीनिर्देशात् स्थितेभ्य इति वाक्यशेषः।** हे गोमति! अश्वावति![1] विभावरि! **दीप्ते!** रेवत्[2] **धनसंयुक्तम्**[3] अस्मे **तादर्थ्यचतुर्थ्यन्तमेतत्**[4]। **अस्मदर्थम्।** **इहैव स्थितेभ्योऽस्मभ्यं धनं देहीत्यर्थः।** वि उच्छ **विविधं तमांसि विवासय**[5]। हे सूनृतावति! **सूनृताः** [6]**प्रिया वाचः**[6] **स्तुतिलक्षणाः, तद्वति!** ॥ १४ ॥

**वेङ्कट०** उषः! अद्य **अस्मिन् प्रदेशे** गोमति! अश्वावति! **दीप्तिमति! धनयुक्तमस्मभ्यम्** [7]वि उच्छ[7] **शब्दवति!** ॥ १४ ॥

**मुद्गल०** हे गोमति! **अस्मभ्यं दातव्यैः**[8] **गोभिर्युक्ते! तथा** अश्वावति! **अश्वैर्युक्ते!** विभावरि! **विशिष्टप्रकाशोपेते!** सूनृतावति! **प्रियवाचा युक्ते! एवंभूते** हे उषः! **उषोदेवते!** अद्य **इदानीं प्रभातसमये** इह **अस्मिन् देशे** अस्मे **अस्माकम्** रेवत् **धनयुक्तं कर्म यथा भवति** तथा वि उच्छ **नैशं तमो निवारय** ॥ १४ ॥

युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः । अथा नो विश्वा सौभगान्या वह ॥१५॥

युक्ष्व । हि । वाजिनीऽवति । अश्वान् । अद्य । अरुणान् । उषः । अथ । नः । विश्वा । सौभगानि । आ । वह ॥

**स्कन्द०** हि-शब्दः पदपूरणः। युक्ष्व[9] **स्वरथे नियुङ्क्ष्व।** वाजिनीवति! अश्वान् अद्य अरुणान् **आरक्तवर्णान्** हे उषः!। अथ **अनन्तरम्**[10] नः **अस्मान् प्रति** विश्वा सौभगानि 'भगः' ( निघ २,१० ) इति **धननाम। शोभनानि धनानि सुभगानि**[11]। **सुभगान्येव सौभगानि। स्वार्थिकस्तद्धितः।** आ वह **प्रापय। आनीयास्मभ्यं देहीत्यर्थः** ॥ १५ ॥

**वेङ्कट०** [12]**योजय हि**[12] **अन्नवति!** अरुणान् अश्वान् अद्य उषः!। अथ **अस्मभ्यम् विश्वान्येव सौभाग्यानि**[13] आ वह ॥ १५ ॥

**मुद्गल०** हे वाजिनीवति! **हविर्लक्षणान्नवति!** उषः! **उषोदेवते!** अरुणान् **अरुणवर्णान्** अश्वान् **अश्वस्थानीयान् गोविशेषान्** अद्य **अस्मिन् काले** युक्ष्व हि **योजयैव। हिर्निर्धारणे।** अथ **अनन्तरं रथमारुह्य** विश्वा **सर्वाणि** सौभगानि **सौभाग्यानि** नः **अस्मभ्यम्** आ वह **आनय** ॥ १५ ॥

**इति प्रथमाष्टके षष्ठाध्याये षड्विंशो वर्गः ॥**

---

१. °मति इति अ. २. त्रुटितम् ति. ३. °संयुक्ते अ कु. ४. तादर्थ्ये चतु° ति. ५. °वासय देहीत्यर्थः अ ति. ६-६. प्रियवाचः अ ति. ७-७. गच्छ वि[1,2] लपं. ८. °तव्ये मूको. ९. नास्ति मूको. १०. °न्तरं च अ. ११. नास्ति ति. १२-१२. योजयति वि[1] अ[2]. १३. सौभगानि वि[1] अ[2].

**अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतम् ॥१६॥**

अश्विना । वर्तिः । अस्मत् । आ । गोऽमत् । दस्रा । हिरण्यऽवत् । अर्वाक् । रथम् । सऽमनसा । नि । यच्छतम् ॥ १६ ॥

**स्कन्द०** 'आश्विनस्तृचः[1]' ( तु. बृदे ३,१२४ )। हे अश्विना! वर्तिः तृतीयार्थे प्रथमैषा। वर्तन्या प्रसिद्धेन[2] पथा। अस्मत् आ आकारोऽत्र मर्यादायाम्। हे दस्रा! शत्रूपक्षयकरौ! दस्रनामानौ! वा। यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामापरः, तथापीदं साहचर्यादुभयोरभिधानम्। गोमत् हिरण्यवत् रथस्यैते विशेषणे। व्यत्ययेन तु नपुंसकता। अस्मभ्यं देयाभिर्गोभिर्हिरण्येन[3] च[4] संयुक्तम्। अर्वाक् अस्मदभिमुखं स्वरथम्[5] समनसा सम्प्रीतचेतस्कौ नि यच्छतम्। गोमता हिरण्यवता च रथेन सम्प्रीयमाणावभिमुखमागच्छतमित्यर्थः ॥ १६ ॥

**वेङ्कट०** अश्विनौ! अस्मदर्थं मार्गं प्रति गोमन्तं हिरण्यवन्तम् रथम् अभिमुखम् आ नि यच्छतम् समानमनसौ दर्शनीयौ ॥ १६ ॥

**मुद्गल०** उषःसाहचर्याद् बुद्धिस्थौ 'अश्विनौ' इदमादिकेन तृचेन स्तूयेते[6]। हे अश्विना! अश्ववन्तौ देवौ! दस्रा! शत्रूणामुपक्षपयितारौ! अस्मत् अस्माकम् वर्तिः वर्तनहेतुभूतं गृहम् आ समन्तात् गोमत् बहुभिर्गोभिर्युक्तम् हिरण्यवत् हितरमणीयधनयुक्तञ्च यथा भवति तथा समनसा[7] समानमनस्कौ सन्तौ युवां युष्मदीयम् रथम् अर्वाक् अर्वाचीनमस्मदीयगृहाभिमुखम् नि यच्छतम् आवर्तयतम् ॥१६॥

**यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः । आ न ऊर्जं वहतमश्विना युवम् ॥ १७ ॥**

यौ । इत्था । श्लोकम् । आ । दिवः । ज्योतिः । जनाय । चक्रथुः । आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् ॥ १७ ॥

**स्कन्द०** यौ इत्था अमुत्रान्तरिक्षे सत्यं वा[8] श्लोकम् श्लोकलक्षणं[9] वचः आ दिवः द्युलोकात् विद्युदाख्यम् ज्योतिः[10] जनाय लोकोपकारार्थम् चक्रथुः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तौ नः अस्मान् प्रति ऊर्जम् अन्नम् आ वहतम् प्रापयतम्। दत्तमस्मभ्यमित्यर्थः। हे अश्विनौ! युवम् युवाम् ॥ १७ ॥

**वेङ्कट०** यौ इत्थं स्तोतव्यम् ज्योतिः दिवः भूमिं प्रति आ चक्रथुः[11] जनार्थम्, तौ[12] युवाम् अश्विनौ! अस्मभ्यम् अन्नम् आ वहतम् ॥ १७ ॥

**मुद्गल०** हे[13] अश्विना! अश्विनौ! यौ युवाम् आ जनाय सर्वजनार्थम् दिवः द्युलोकात् श्लोकम् उपश्लोकनीयं प्रशंसनीयम् ज्योतिः तेजः इत्था इत्थंभूतमस्माभिरनुभूयमानेन प्रकारेण चक्रथुः कृतवन्तौ, तौ युवम् युवाम् नः अस्मभ्यम् ऊर्जम् बलप्रदमन्नम् आ वहतम् आनयतं प्रयच्छतम् ॥ १७ ॥

---

१. आश्विनं सूक्तं आश्विन° ति.　२. 'द्धेन सह तया अ ति.　३. ···र्भिर्हिर° ति.　४. च सह अ.　५. स्व:थस्थम् ति.　६. स्तूयते मूको.　७. °सा समानम् मूको.　८. नास्ति ति.　९. लक्षणम् अ ति.　१०. नास्ति अ ति.　११. चक्रतुः कु.　१२. कौ वि[3] अ[2].　१३. नास्ति मै[2].

एह देवा मयोभुवा दस्रा हिरण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतये ॥ १८ ॥

आ । इह । देवा । मयःऽभुवा । दस्रा । हिरण्यवर्त्तनी इति हिरण्यऽवर्तनी ।
उषःऽबुधः । वहन्तु । सोमऽपीतये ॥ १८ ॥

**स्कन्द०** आ इत्युपसर्गो वहन्त्वित्याख्यातेन सम्बन्धयितव्यः । इह अस्मदीये यज्ञे देवा देवावश्विनौ[1] । मयोभुवा यष्टृणां च[2] स्तोतृणाञ्च सुखस्य भावयितारौ जनयितारौ । दस्रा शत्रूपक्षयकरौ[3] । हिरण्यवर्तनी वर्तनी रथचक्रधारा । सा हिरण्मयी ययोः तौ हिरण्यवर्तनी[4] । उषर्बुधः सुप्ताः सन्तः यज्ञं प्रति गन्तुमुषःकाले ये प्रतिबुध्यन्ते ते उषर्बुधोऽश्वाः, ते आ वहन्तु सोमपीतये सोमपानार्थम् ॥ १८ ॥

**वेङ्कट०** आ वहन्तु[5] अत्र देवौ सुखस्य भावयितारौ दस्रौ हिरण्ययुक्तमार्गावश्विनौ[6] उषसि प्रबुद्धा[7] देवाः सोमपानाय ॥ १८ ॥

**मुद्गल०** उषर्बुधः उषसि प्रबुद्धा अश्वाः इह अस्मिन् यागे सोमपीतये सोमपानाय दस्रा शत्रूणामुपक्षपयितारावश्विनौ आ वहन्तु आनयन्तु । कीदृशौ । देवा देवनशीलौ मयोभुवा मयस आरोग्यप्रदस्य सुखस्य भावयितारौ हिरण्यवर्तनी सुवर्णमयो वर्तनिः रथो ययोस्तौ ॥ १८ ॥

इति प्रथमाष्टके षष्ठाध्याये सप्तविंशो वर्गः ॥

## [ ९३ ]

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥१॥

अग्नीषोमौ । इमम् । सु । मे । शृणुतम् । वृषणा । हवम् ।
प्रति । सुऽउक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ॥ १ ॥

**स्कन्द०** 'अग्नीषोमीयमुत्तमम्' । अनुवाकस्योत्तममिदं सूक्तम् अग्नीषोमदेवत्यम् । हे अग्नीषोमौ ! इमम् मे मम स्वभूतम् सु शृणुतम् शोभनं सुष्ठु वा शृणुतम् । हे वृषणा ! वर्षितारौ ! हवम् आह्वानम् सूक्तानि च स्तुतिरूपाणि प्रति हर्यतम् कामयेथाम्[8] । भवतम् दाशुषे यजमानाय मयः सुखम्[9] ॥ १ ॥

**वेङ्कट०** अग्नीषोमौ ! इदं[10] मदीयमाह्वानं वर्षितारौ ! सुष्ठु शृणुतम् । सूक्तानि च[11] कामयेथाम् । भावयतञ्च यजमानाय सुखम् ॥ १ ॥

**मुद्गल०** 'अग्नीषोमौ' इति द्वादशर्चं नवमं सूक्तम् । [12]गोतम ऋषिः[12] । आदितस्तिस्रोऽनुष्टुभः । नवम्याद्यास्तिस्रो[13] गायत्र्यः । अष्टमी जगती त्रिष्टुब् वा । शिष्टाः पञ्च त्रिष्टुभः । अग्नीषोमौ देवते ॥

वृषणा ! कामानां वर्षितारौ ! हे अग्नीषोमौ ! इमम् इदानीं प्रयुज्यमानं मे मदीयम् हवम्

---

१. देवा आ° ति. २. नास्ति अ. ३. नास्ति मूको. ४. °वर्तिनी अ कु. ५. वहन्ति वि[2]. ६. हिरण्यमार्गौ वि[1]. ७. °द्धा अश्वाः वि[1] अ[2]. ८. °येतां अ. ९. सुखौ अ. १०. इमं ल अ[1], ११. नास्ति वि[1] अ[2]. १२-१२. नास्ति मै[2]. १३. नवमाद्या° मै[1].

आह्वानम् सु शृणुतम् सम्यगवगच्छतम्। सूक्तानि शोभनानि स्तुतिलक्षणान्यस्माभिः कृतानि वचांसि प्रति हर्यतम् प्रत्येकं कामयेथाम्[1]। तदनन्तरम् दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय मयः मयसः सुखस्य दातारौ भवतम् ॥ १ ॥

अग्नीषोमा यो अद्य वामिदं वचः सपर्यति। तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ॥२॥

अग्नीषोमा। यः। अद्य। वाम्। इदम्। वचः। सपर्यति।
तस्मै। धत्तम्। सुऽवीर्यम्। गवाम्। पोषम्। सुऽअश्व्यम् ॥ २ ॥

**स्कन्द०** पूर्णमासे[2] उपांशुयाजस्यानुवाक्यैषा। अग्नीषोमा[3]! हे अग्नीषोमौ! यः अद्य वाम्[4] वचः युवयोः अनुवाक्यालक्षणम् इदम् वचनम्[5] सपर्यति परिचरणकर्माऽयमन्यत्र। इह तु सामर्थ्यादुच्चारणार्थः। अथवा परिचरणकर्मैव। इदम् वचः इति तृतीयार्थे द्वितीया। युवामनुवाक्यालक्षणेन वचसा[6] सपर्यति परिचरति। स्तौतीत्यर्थः। "तस्मै धत्तम्"[7] दत्तम् सुवीर्यम् शोभनेन वीर्येण सहितम् गवाम् पोषम्, स्वश्व्यम्[8] शोभनैश्चाश्वैः[9] सहितम् ॥ २ ॥

**वेङ्कट०** अग्नीषोमौ! यः अद्य इदम् वचः उच्चारयति। तस्मै धत्तम् सुवीर्यम् गवाम् पोषम् अश्वसङ्घं च शोभनम् ॥ २ ॥

**मुद्गल०** हे अग्नीषोमा अग्नीषोमौ! यः यजमानः अद्य अस्मिन् कर्मणि वाम् युवाभ्यां युष्मदर्थम् इदम् स्तुतिलक्षणम् वचः वाक्यम् सपर्यति पूजितं करोति। तस्मै यजमानाय गवाम् पशूनाम् पोषम् अभिवृद्धिम् धत्तम् प्रयच्छतम्। कीदृशं पोषम्। सुवीर्यम् शोभनेन वीर्येणोपेतम् स्वश्व्यम् शोभनैरश्वैर्युक्तम् ॥ २ ॥

अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम्।
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ ३ ॥

अग्नीषोमा। यः। आऽहुतिम्। यः। वाम्। दाशात्। हविःऽकृतिम्।
सः। प्रऽजया। सुऽवीर्यम्। विश्वम्। आयुः। वि। अश्नवत् ॥ ३ ॥

**स्कन्द०** अग्नीषोमा[3]! अग्नीषोमौ! यः यजमानः आहुतिम्[9] आज्यलक्षणाम्[10]। यः वाम् युवाभ्याम् दाशात् ददाति। हविष्कृतिम् पुरोडाशादिहविः यथोक्तसंस्कारादिसंस्कृतम्। सः प्रजया सुवीर्यम् विश्वम् आयुः जीवितमन्नं वा[10] वि अश्नवत् विविधं प्राप्नुयात्। लभेत युष्मत्प्रसादेनेत्यर्थः ॥ ३ ॥

**वेङ्कट०** अग्नीषोमौ! यः युवाभ्याम् आज्याहुतिं प्रयच्छति यः वा पुरोडाशम्। सः प्रजया च सुवीर्यम् विश्वम् आयुः च व्याप्नोतु ॥ ३ ॥

---

१. °मायेथाम् मूको. २. नास्ति ति. ३. नास्ति मूको. ४. वां युवाम् अ ति. ५. वचः ति. ६. नास्ति अ ति. ७. धत्तं तस्मै अ. ८. नास्ति कु ति. ९. °श्वैश्च ति. १०. °लक्षणम् कु.

मुद्गल० हे अग्नीषोमा! यः यजमानः आहुतिम् आज्याहुतिम् वाम् युवाभ्याम् दाशात् दद्यात्। अथवा हविष्कृतिम् हविषा चरुपुरोडाशादिना कृतामाहुतिम्[1] यः यजमानो दद्यात्। सः यजमानः प्रजया पुत्रपौत्रादिना युक्तम् सुवीर्यम् शोभनवीर्ययुक्तम् विश्वम् सर्वम् आयुः जीवनम् वि अश्नवत् व्याप्नोतु[2] ॥ ३ ॥

अग्नी॑षोमा॒ चेति॒ तद्वी॒र्यं॑ वां॒ यदमु॑ष्णीतमव॒सं प॒णिं गाः ।
अवा॑तिरतं॒ बृस॑यस्य॒ शेषोऽवि॑न्दतं॒ ज्योति॒रेकं॑ ब॒हुभ्यः॑ ॥ ४ ॥

अग्नी॑षोमा । चेति॑ । तत् । वी॒र्य॑म् । वा॒म् । यत् । अमु॑ष्णीतम् । अ॒व॒सम् । प॒णिम् । गाः ।
अव॑ । अ॒ति॒र॒त॒म् । बृस॑यस्य । शेषः॑ । अवि॑न्दतम् । ज्योतिः॑ । एक॑म् । ब॒हुऽभ्यः॑ ॥ ४ ॥

स्कन्द० अत्रेतिहासमाचक्षते—'पणिर्नामासुरो देवेभ्यो बिभ्यत्[3] स्वा गा आदाय ननाश। तमग्नीषोमावनुगम्य ता अस्य गा अनुजह्रतुः'[4] इति। तदेतदुच्यते — अग्नीषोमा इति[5]। [6]हे अग्नीषोमा![6] चेति चेत्यते ज्ञायते। सर्वलोकप्रकाशमित्यर्थः। तत् वीर्यम् वाम्[7] युवयोः। यत् तृतीयार्थे प्रथमैषा। येन अमुष्णीतम् मुषितवन्तौ स्थः। [8]अवसम् अवतेर्गत्यर्थस्य। अवितारं गन्तारम्। नंष्टारमित्यर्थः†। पणिम् गाः पणिनामानमसुरं गाः साक्षादिमतीः। सर्वलोकप्रकाशं तद्युवयोः वीर्यं येन पणेर्गा अपहृतवन्तौ स्थः[8]। किञ्च अव अतिरतम् इत्यादि। अत्रापीतिहासमाचक्षते— 'वृत्र आदित्यं नक्षत्राणि रश्मींश्चापहृत्य महत् तमस्ततान लोके। अग्नीषोमौ त्वादित्यादीन् प्रत्यानिन्यतुः' इति। तदेतदुच्यते — अवातिरतमित्यादि। अवतिरतिर्वधकर्मा ( तु. निघ २,१९ )। हतवन्तौ स्थः। बृसयस्य शेषः 'शेषः' ( निघ २,२ ) इति अपत्यनाम। बृसयनाम्नोऽसुरस्य वृत्राख्यमपत्यम्। हत्वा च अविन्दतम् लब्धवन्तौ स्थः। ज्योतिः एकम् सर्वसाधारणमादित्याख्यम् बहुभ्यः बहूनां प्राणिनामर्थाय ॥ ४ ॥

वेङ्कट० अग्नीषोमौ![9] तत् युवयोः वीर्यम् चेतयति, यत् अमुष्णीतम् अन्नं पशूंश्च पणेः। तथा बृसयस्य अपत्यं वृत्रम् अव अतिरतम् अभ्यभवतम्। अविन्दतम् च ज्योतिः एकम् बहुभ्यः साधारणमादित्यं[10] वृत्रहननेन लम्भितवन्तौ इति[11] ॥ ४ ॥

मुद्गल० हे अग्नीषोमा! वाम् युवयोः तत् वक्ष्यमाणम् वीर्यम् सामर्थ्यम् चेति अस्माभिर्ज्ञातमभूत्। यत् येन वीर्येण गाः अवसम् गोरूपमन्नम् पणिम् पणेरेतन्नाम्नोऽसुरात् अमुष्णीतम् अपाहार्ष्टम्। तथा बृसयस्य बृसयति सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा, तस्यासुरस्य शेषः अपत्यं त्वष्टुः सकाशादुत्पन्नं वृत्रम् अव अतिरतम् अवधिष्टम्। ततो वृत्रवधानन्तरम् ज्योतिः द्योतमानं सूर्यम् एकम् नभसि गच्छन्तम् बहुभ्यः बहूनामर्थाय अविन्दतम् अलप्साथाम्। एतत्सर्वं येन वीर्येण क्रियते तदस्माभिर्ज्ञातमित्यर्थः ॥ ४ ॥

---

१. °तिं शादिना मै[1]. २. प्राप्नो° मै[2]. ३. बिभ्यन् कु. ४. °जह्रतुः कु; °जहतुः अ ति. ५. नास्ति अ ति. ६-६. नास्ति मूको. ७. वां युवाम् कु ति. ८-८. त्रुटितम् अ ति. † नष्टा° कु. ९. °षोमा वि[1] अ[1]. १०. °दित्याख्यं वि[1] अ[2]. ११. नास्ति कु.

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥ ५ ॥

युवम् । एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति सऽक्रतू । अधत्तम् ।
युवम् । सिन्धून् । अभिऽशस्तेः । अवद्यात् । अग्नीषोमौ । अमुञ्चतम् । गृभीतान् ॥ ५ ॥

**स्कन्द०** पूर्णमासेऽग्नीषोमीयस्य पुरोडाशस्य याज्यैषा । युवम् एतानि दिवि रोचनानि नक्षत्राणि । अग्निः च चशब्दात्त्वं च । हे[1] सोम ! सक्रतू समानकर्माणौ । अधत्तम् वृत्रहननद्वारेण स्वसाध्ययज्ञहेतुकवृष्ट्यादिद्वारेण [2]वा स्थापितवन्तौ[2] । युवम् एव सिन्धून् स्यन्दनात् सिन्धवो रश्मय इह[3] उच्यन्ते । 'न सिन्धवो रजसो अन्तमानशुः' ( ऋ १,५२,१४ ) इति यथा । रश्मीन् । अभिशस्तेः हिंसितुर्वृत्राख्यात् । कीदृशात् । अवद्यात् अत्यन्तपापात् । हे अग्नीषोमौ ! अमुञ्चतम् गृभीतान् विमोचितवन्तौ स्थः वृत्रेण गृहीतान् सतः[1] ॥ ५ ॥

**वेङ्कट०** युवम्[1] एतानि दिवि नक्षत्राणि अग्नीषोमौ ! समानकर्माणौ अधत्तम् । युवम् नदीः ब्रह्महत्यागृहीताः[4] [5]अवद्यात् अभिशस्तेः[5] च अमुञ्चतम् ॥ १५ ॥

**मुद्गल०** हे सोम ! त्वम् अग्निः च सक्रतू समानकर्माणौ[6] सन्तौ युवम् युवाम् रोचनानि रोचमानानि दीप्यमानानि एतानि अस्माभिर्निशि दृश्यमानानि ताराग्रहादीनि ज्योतींषि दिवि द्युलोके अधत्तम् अधारयतम् । उत्तरार्धस्येयमाख्यायिका — 'इन्द्रो वृत्रं हत्वा ब्रह्महत्याया भीतः सन् पृथिव्यां वृक्षेषु स्त्रीष्वप्सु च तां ब्रह्महत्यां न्यमार्क्षीत् । तासामपां शुद्धिरग्नीषोमाभ्यां जाता' इति । ब्रह्महत्यांशपापेन गृभीतान् गृहीतान् आक्रान्तान् सिन्धून् नदीविशेषान् अग्नीषोमौ ! युवम् युवाम् अभिशस्तेः अभिशस्यमानादभितः प्रकटितात् अवद्यात् तस्मात्पापात् अमुञ्चतम् मुक्तवन्तौ ॥ ५ ॥

आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥ ६ ॥

आ । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परि । श्येनः । अद्रेः ।
अग्नीषोमा । ब्रह्मणा । ववृधाना । उरुम् । यज्ञाय । चक्रथुः । ऊँ इति । लोकम् ॥ ६ ॥

**स्कन्द०** पूर्णमासे उपांशुयाजस्य याज्यैषा । अन्यशब्दश्चात्रैकवचनपर्यायः[7] । युवयोरेकं दिवः द्युलोकात् मातरिश्वा आ जहार आहृतवान् । कतरम् । अग्निम् । कुत एतत् । 'आ दूतो अग्निमभरद् विवस्वतो वैश्वानरं मातरिश्वा परावतः' ( ऋ ६,८,४ ) इति मन्त्रान्तरदर्शनात् । अमथ्नाद् अन्यम् इत्यादि । अत्रैतरेयब्राह्मणैकदेशपठितमितिहासैकदेशमाचक्षते[8] — 'सोमो वै राजामुष्मिन् लोक आसीत् । तं देवाश्च ऋषयश्चाभ्यध्यायन् — कथमयमस्मान् सोमो राजाऽऽगच्छेदिति । तेऽब्रुवन् — छन्दांसि यूयं

१. नास्ति अ. २-२. चास्थापि° कु. ३. नास्ति कु. ४. °त्याशभीताः वि[2]. ५-५. °वद्याभिश° कु. ६. °कर्णौ मूको. ७. °शब्दोत्रैकव° ति. ८. °ब्राह्मणपठितमिति° कु.

न इमं[1] राजानं सोममाहरतेति[2]। तानि तथेति प्रतिपद्य सुपर्णरूपाणि भूत्वोदपतन्। तेषां[3] जगती त्रिष्टुप् च[4] सोममाहर्तुं नाशक्नोत्। गायत्री गत्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं परिगृह्याऽऽहरत्' (तु. ऐब्रा ३,२५-२६) इति। तदेतदुच्यते- अमथ्नादन्यमिति। मथ्नातिरत्र मथनकर्मक आहरणे वर्तते। अन्यम् तु सोमाख्यं गायत्री सुपर्णरूपिणी सोमपालान् भीषयित्वा प्रमथ्याऽऽहरदित्यर्थः। कुत एतत्। पूर्वोक्तादितिहासात्। 'सोमः श्येनाभृतः सुतः' (ऋ १, ८०, २), 'आदाय श्येनो अभरत्' (ऋ ४, २६, ७) इति चैवमादिमन्त्रान्तरे दर्शनात्। क आहरत्। उच्यते। श्येनः श्येनरूपा गायत्री। क्वाहरत्[5]। परि अद्रेः पर्वतस्योपरि। पर्वतेषु हि भूयान् सोमो जायते। तदेतदुच्यते—पर्यद्रेराहरदिति। हे अग्नीषोमौ! अस्मदीयेन याज्यालक्षणेन ब्रह्मणा वावृधाना वर्धमानौ। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अत[6] एवमुच्यते—ब्रह्मणा[7] वावृधानेति। अथवा 'ब्रह्म' (निघ २, ७) इत्यन्ननाम। उपांशुयाज्यलक्षणेनान्नेन वर्धमानौ। उरुम् विस्तीर्णम् यज्ञाय यज्ञार्थमस्माकम् चक्रथुः कुरुतम्[8]। उ-कारस्तु पदपूरणः। लोकम् स्थानं यत्र विस्तीर्णे स्थाने स्थिता वयं यज्ञान् कुर्मः। ततो दत्तमित्यर्थः ॥ ६ ॥

**वेङ्कट०** युवयोरन्यतरमग्निं स्वर्गात् वायुः आहृतवान् भृगवे। अन्यम् च सोमं मेरोः श्येनः भूत्वा गरुडः परि अमथ्नात्। 'अग्नीषोमौ! स्तोत्रेण' वर्धमानौ विस्तीर्णम् अवकाशम् यज्ञाय चक्रथुः। एतयोः हि [10]मध्ये सर्वेषामेव[10] देवानां यागः[11] ॥ ६ ॥

**मुद्गल०** हे अग्नीषोमा! युवयोर्मध्ये अन्यम् एकमग्निम् मातरिश्वा वायुः दिवः द्युलोकात् आ जभार भृगवे यजमानाय आजहार। श्येनः शंसनीयगतिमान् पक्षी पक्ष्याकारा गायत्री अन्यम् सोमम् अद्रेः परि मेरोरुपर्यवस्थितात् स्वर्गात् अमथ्नात् बलादाहृतवती। एवं महानुभावौ युवाम् ब्रह्मणा स्रष्ट्रा मन्त्ररूपेण स्तोत्रेण वावृधाना वर्धमानौ युवाम् यज्ञाय अन्येषां देवानां यागाय उरुम् विस्तीर्णम् लोकम् स्थानम् चक्रथुः कृतवन्तौ। उ इत्येतत्[12] पादपूरणम् ॥ ६ ॥

इति प्रथमाष्टके षष्ठाध्यायेऽष्टाविंशो वर्गः ॥

**अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम्।**
**सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥ ७ ॥**

अग्नीषोमा। हविषः। प्रऽस्थितस्य। वीतम्। हर्यतम्। वृषणा। जुषेथाम्। सुऽशर्माणा। सुऽअवसा। हि। भूतम्। अथ। धत्तम्। यजमानाय। शम्। योः ॥ ७ ॥

**स्कन्द०** हे अग्नीषोमौ! हविषः प्रस्थितस्य युवां प्रति गतस्य प्रस्थितयज्ञस्य वा। षष्ठीनिर्देशस्य साकाङ्क्षत्वादेकदेशं स्वांशलक्षणमिति शेषः। द्वितीयार्थे वा षष्ठी। हविः प्रस्थितम्। वीतम् भक्षयतम्। [13]हर्यतम् कामयेथां च। अभिप्रेतं[13] सम्भक्षयतमित्यर्थः। हे वृषणा! वर्षितारौ [14]कामितभक्षितेन च तेन[14] जुषेथाम् जुषी प्रीतिसेवनयोः। प्रीयेथाम्। प्रीत्वा च सुशर्माणा[15] सुसुखौ।

---

१. °मं सोमं ति. २. आहरेति ति. ३. तेषामेषाम् ति. ४. नास्ति कु. ५. त्वाहरत् कु ति. ६. नास्ति अ ति. ७. वीर्येण मूको. ८. कुरुतः अ कु. ९-९. अग्नी स्तोत्रे ति. १०-१०. तथ्ये सर्वेषां वि[1] अ[2]. ११. योगः वि[1] अ[2]. १२. नास्ति मूको. १३-१३. अयुतं कामयेताश्चाभिप्रेता ति. १४-१४. कामितभक्ष्य···ति; कामयत° अ. १५. सुकर्मणा ति.

स्ववसा हि हिशब्दः पदपूरणः चार्थे वा। सुपालनौ[1] च भूतम् भवतम्। अथ अनन्तरम्। धत्तम् यजमानाय शम् शमनम्। कस्य। सामर्थ्याद् उद्भूतानां[2] रोगादीनामनभीष्टानाम्। योः यावनं पृथक्करणम्। असम्बन्धं चेत्यर्थः। सामर्थ्याद् उत्पित्सुभिरनिष्टैः ॥ ७ ॥

**वेङ्कट०** अग्नीषोमौ![3] हविः[4] प्रस्थितं भक्षयतम्। कामयेथां सेवेथां च वर्षितारौ। सुसुखौ[5] सुरक्षौ[6] च हि भवतम्[7]। तथा सति यजमानाय उत्पन्नानाम् अनिष्टानां शमनम् अनागतानां च[8] पृथक्करणम्[9] धत्तम् ॥ ७ ॥

**मुद्गल०** हे अग्नीषोमा! प्रस्थितस्य होमार्थमाहवनीयसमीपं प्राप्तम् हविषः इदं हविः वीतम् भक्षयतम्[10]। तदनन्तरं च हर्यतम् अस्मान् कामयेथाम्। हे वृषणा! कामानां वर्षितारौ! जुषेथाम् अस्मदीयं परिचरणं सेवेथाम्। तदनन्तरम् सुशर्माणा शोभनसुखौ स्ववसा हि शोभनरक्षणौ च भूतम् अस्माकं भवतम्। अथ अनन्तरं हविर्दत्तवते यजमानाय शम् शमनीयानां रोगाणां शमनम् योः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं च धत्तम् कुरुतम् ॥ ७ ॥

यो अ॒ग्नीषोमा॑ ह॒विषा॑ सप॒र्याद् दे॑व॒द्रीचा॒ मन॑सा॒ यो घृ॒तेन॑ ।
तस्य॑ व्र॒तं र॑क्षतं पा॒तमंह॑सो वि॒शे जना॑य॒ महि॒ शर्म॑ यच्छतम् ॥ ८ ॥

यः । अ॒ग्नीषोमा॑ । ह॒विषा॑ । स॒प॒र्यात् । दे॒व॒द्रीचा॑ । मन॑सा । यः । घृ॒तेन॑ ।
तस्य॑ । व्र॒तम् । र॒क्ष॒त॒म् । पा॒त॒म् । अंह॑सः । वि॒शे । जना॑य । महि॑ । शर्म॑ । य॒च्छ॒त॒म् ॥ ८ ॥

**स्कन्द०** रक्षतं पातमिति मध्यमपुरुषसंयोगात्[11] प्रत्यक्षकृतोऽयं मन्त्रः। अग्नीषोमाविति च नेदमामन्त्रणं अननुदात्तत्वात्। अतोऽत्र युष्मच्छब्देन समानार्थो भवच्छब्दः उपपदभूतोऽध्याहर्तव्यः। भवन्तौ[12] अग्नीषोमौ यः हविषा सपर्यात् चरुपुरोडाशादिना परिचरेत्। देवद्रीचा मनसा देवौ[13] प्रत्यञ्चतीति देवद्र्यक्[14]। 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' (पा ६,३,९२) इति अद्र्यादेशः। तेन देवद्रीचा युवामेव देवौ प्रति गतेन। अत्यन्तयुष्मद्भक्तेन चेतसेत्यर्थः। यः वा घृतेन आज्याहुतिलक्षणेन। तस्य उभयस्यापि व्रतम् यागाख्यं कर्म रक्षतम्, पातम् पालयतम् अंहसः पापात्। विशे मनुष्यनामैतत् (तु. निघ २,३)। जात्यपेक्षयैकवचनम्। पुत्रादिमनुष्यजातस्वभूताय[15] यजमानाय परिचारकजनाय च। महि शर्म महत् सुखम् यच्छतम् दत्तम् ॥ ८ ॥

**वेङ्कट०** यः अग्नीषोमौ[1] हविषा परिचरति, देवानञ्चता[16] मनसा यः वा घृतेन, तस्य यज्ञम् रक्षतम्, रक्षसश्च तम् पातम्। निवसते जनाय महत् सुखम् यच्छतम् ॥ ८ ॥

**मुद्गल०** यः यजमानः अग्नीषोमा अग्नीषोमौ देवद्रीचा देवानञ्चता देवतापरायणेन श्रद्धायुक्तेन मनसा अन्तःकरणेन युक्तः सन् हविषा चरुपुरोडाशादिना सपर्यात् सपर्यति परिचरति। यः च यजमानः घृतेन आज्येनाग्नीषोमौ परिचरति। तस्य यजमानस्य व्रतम् कर्म रक्षतम्, अंहसः पापात् तं च

१. सुपालकौ वि. २. भूतानां वि. ३. °मा वि[1]. ४. °विषः वि[1] अ[2]. ५. सुखौ वि[1]; ससुखौ वि[1] अ[2]. ६. सुरभितौ वि[1] अ[2]. ७. °वतः वि[2]. ८. नास्ति ल. ९. °णम् च कु. १०. °य्यन्तम् मूको. ११. पुरुषसम्बन्धात् अ. १२. हे भव° मूको. १३. देवम् वि. १४. द्र्यङ् वि. १५. °जातस्य स्वभूताय अ. १६. °नाञ्चता वि[2,3] अ[1].

**यजमानम्** पातम् **रक्षतम्**। विशे **यागेषु प्रविशते तस्मै** जनाय महि **महत् प्रभूतम्** शर्म **सुखम्** यच्छतम् **दत्तम्** ॥ ८ ॥

**अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ ९ ॥**

अग्नीषोमा । सऽवेदसा । सहूती इति सऽहूती । वनतम् । गिरः । सम् । देवऽत्रा । बभूवथुः ॥९॥

**स्कन्द०** **पूर्णमासेऽग्नीषोमीयस्य पुरोडाशस्य**[1] **पुरोऽनुवाक्यैषा । हे अग्नीषोमौ!** सवेदसा **समानपुरोडाशहविर्लक्षणधनौ**[2] सहूती **समानाह्वानौ** वनतम् **सम्भजेथाम् । अस्मदीययाज्यानुवाक्यास्तुतिलक्षणाः**[3] गिरः । **किन्तु** सम् देवत्रा बभूवथुः **सम् इत्येकीभावे सम्यक्कार्यां वा ।** देवत्रेति 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' ( पा ५, ४, ५६ ) **इति बाहुलकात् प्रथमायां च द्रष्टव्यः । बभूवथुरिति लोडर्थे लिट् । सम्भूतौ** [4]**सम्यग्वा अस्य**[4] **पुरोडाशस्य हविषो देवौ भवतमित्यर्थः ॥ ९ ॥**

**वेङ्कट०** **अग्नीषोमौ ! समानपुरोडाशौ समानाह्वानौ भजेथां** स्तुतीः । **युवां**[5] **हि सर्वानेव देवान् महत्तया** सम् बभूवथुः, **स्थाली इव तण्डुलान् इति**[5] ॥ ९ ॥

**मुद्गल०** हे **अग्नीषोमौ! युवाम्** सवेदसा **समानेनैकेन वेदसा हविर्लक्षणेन धनेन युक्तौ** सहूती **समानाह्वानौ च सन्तौ** गिरः **अस्मदीयाः स्तुतीः** वनतम् **सम्भजेथाम् ।** देवत्रा **देवेषु सर्वेषु यौ युवाम्** सम् बभूवथुः **सम्भूतौ सम्भावितौ प्रशस्तौ स्थः ॥ ९ ॥**

**अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् ॥ १० ॥**

अग्नीषोमौ । अनेन । वाम् । यः । वाम् । घृतेन । दाशति । तस्मै । दीदयतम् । बृहत् ॥१०॥

**स्कन्द०** **हे** अग्नीषोमौ! अनेन वाम् **युवयोः एव**[1] **स्वभूतेन योग्येन वा** यः यजमानः वाम् **युवाभ्याम्** घृतेन **तृतीयानिर्देशात् संयुक्तं हविरिति** शेषः । **अथवा अनेन घृतेन इति द्वितीयार्थे तृतीया । इदं घृतम्** । दाशति **ददाति** । तस्मै दीदयतम् **दत्तम्** बृहत् **महत् धनम् । अथवा तस्मै इति तादर्थ्ये चतुर्थी । तदर्थं दीदयतं**[6] **दीव्येथाम् । बृहत् महत् । सुष्ठ्वित्यर्थः ॥ १० ॥**

**वेङ्कट०** अग्नीषोमौ! अनेन वाम् यः[7] घृतेन **परिचरति,** तस्मै **वर्धयतं महद्धनम् ।** [8]वाम् **इति पूरणम्**[8] ॥ १० ॥

**मुद्गल०** **हे** अग्नीषोमौ! वाम् **युवयोः सम्बन्धी** यः **यजमानः** अनेन **घृतेन** **उत्पवनादिभिः संस्कृतेनाज्येन युक्तं हविः** वाम् **युवाभ्याम्** दाशति **प्रयच्छति,** तस्मै **यजमानाय** बृहत् **प्रभूतं धनम्** दीदयतम् **प्रकाशयतम् । प्रयच्छतमित्यर्थः ॥ १० ॥**

---

१. **नास्ति कु.** २. °लक्षणेन धनेन **अ**; °**हविर्दक्षिणध**° **ति.** ३. अस्मदीयाय याज्या° **अ**; °दीययाज्यानुवाक्यल° **कु ति.** ४-४. **नास्ति ति.** ५. **नास्ति वि**[१] **अ**[२]. ६. दीयतम् **ति.** ७. यः युवाम् **वि**[२] **अ**[१]; यः वाम् **वि**[१,३] **अ**[२] **कु ल लपं** ८-८. **नास्ति कु.**

अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् । आ यातमुप नः सचा ॥ ११ ॥

अग्नीषोमौ । इमानि । नः । युवम् । हव्या । जुजोषतम् । आ । यातम् । उप । नः । सचा ॥११॥

**स्कन्द०** अग्नीषोमौ! इमानि नः[1] युवम् हव्या जुजोषतम् **सेवेथाम्**। आ यातम् **च** उप नः **समीपेऽस्माकम्** सचा **सह**[2] ॥ ११ ॥

**वेङ्कट०** अग्नीषोमौ! इमानि **अस्माकं हवींषि युवां**[3] **जुषेथाम्**, [4]उप आ यातम्[4] **चास्मान् सह** ॥ ११ ॥

**मुद्गल०** **हे** अग्नीषोमौ! युवम् **युवाम्** नः **अस्मदीयानि** इमानि हव्या **हवींषि** जुजोषतम् **सेवेथाम्**। **तदर्थम्** नः **अस्मान्** सचा **सह युवाम्** उप आ यातम् **उपागच्छतम्** ॥ ११ ॥

अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः ।
अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् ॥ १२ ॥

अग्नीषोमा । पिपृतम् । अर्वतः । नः । आ । प्यायन्ताम् । उस्रियाः । हव्यऽसूदः ।
अस्मे इति । बलानि । मघवत्ऽसु । धत्तम् । कृणुतम् । नः । अध्वरम् । श्रुष्टिऽमन्तम् ॥ १२ ॥

**स्कन्द०** **हे**[5] **अग्नीषोमौ!** पिपृतम् **पृणातेः पालनार्थस्य दानार्थस्य वा सामर्थ्यादिदं रूपम्। पालयतं दत्तं वा**[6]। अर्वतः **अश्वान्** नः [7]**अस्मभ्यम् अस्माकं**[7] **वा**। आ प्यायन्ताम् **अस्माकम्** उस्रियाः **गावः** हव्यसूदः **षूद क्षरणे। पयआख्यस्य हविषः क्षरित्र्यः। दोग्ध्र्य इत्यर्थः। किञ्च** अस्मे **अस्मासु** बलानि मघवत्सु धत्तम् **स्थापयतम्। धनवतोऽस्मान् कृत्वा ततो बलानि दत्तमित्यर्थः।** कृणुतम्[8] **कुरुतं**[9] **च** नः अध्वरम् **यज्ञम्** श्रुष्टिमन्तम् **अपठितमपि सुखनामैतत् द्रष्टव्यम्। फलभूतेन सुखेन सुखवन्तम्। सुखफलमित्यर्थः**[10]**। अथवा श्रुष्टीति क्षिप्रनाम ( तु. या ६,१२ )। क्षिप्रवन्तम्। शीघ्रफलमित्यर्थः** ॥ १२ ॥

**वेङ्कट०** **अग्नीषोमौ! पालयतम् अस्माकम् अश्वान्।** आ प्यायन्ताम् **च अस्माकं गावः हविषः प्रेरयित्र्यः। अस्मासु** बलानि **धनवत्सु**[1] **स्थापयतम्।** कुरुतं **च अस्माकं यज्ञं प्राप्तियुक्तम् आशु आत्मनि प्राप्तम् इति**[2] ॥ १२ ॥

**मुद्गल०** **हे अग्नीषोमौ!** नः **अस्माकम्** अर्वतः **अश्वान्** पिपृतम् **पालयतम्।** हव्यसूदः **क्षीरादिहविषामुत्पादयित्र्यः** उस्रियाः **अस्मदीया गावश्च** आ प्यायन्ताम् **आप्यायिताः प्रवृद्धाः सन्तु।** मघवत्सु **हविर्लक्षणधनयुक्तेषु** अस्मे **अस्मासु** बलानि धत्तम् **स्थापयतम्। तथा** नः **अस्माकम्** अध्वरम् **यागम्** श्रुष्टिमन्तम् **धनयुक्तम्** कृणुतम् **कुरुतम्** ॥ १२ ॥

**इति प्रथमाष्टके षष्ठाध्याये एकोनत्रिंशो वर्गः ॥**

---

**१. नास्ति कु.** २. ह अ. ३. युवम् लपं. ४-४. उप यातम् वि[1] अ[2] कु. **५. नास्ति ति.** **६. नास्ति अ.** ७-७. अस्माकमस्मभ्यम् ति. ८. °णुतं च अ. ९. कुर्वतम् मूको. १०. सुखं फल° ति.

[ ९४ ]

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १ ॥

इमम्। स्तोमम्। अर्हते। जातऽवेदसे। रथम्ऽइव। सम्। महेम। मनीषया।
भद्रा। हि। नः। प्रऽमतिः। अस्य। सम्ऽसदि। अग्ने। सख्ये। मा। रिषाम। वयम्। तव ॥

**स्कन्द०** 'इमं स्तोममिति त्वस्मात् कुत्स आङ्गिरसः[१] परम्[२]'। अस्मात् पूर्वोक्तात्[३] सूक्तात् [४]गौतमात् परम्[४] 'इमं स्तोममर्हते' इत्यादि कुत्सो नाम अङ्गिरसः पुत्र ऋषिर्ददर्श। असङ्ख्यातश्चायम्। सर्वत्र च 'असंख्यातमृषिं विद्यादतीत्यापि मितानृषीन्। तावद्यावदृषेर्नादिरमितस्य परो[५] भवेत्'। सोऽपरिमित[६] ऋषिस्तमेव परिमितान्[७] उत्तरानृषीनतीत्यापि यावदन्यस्यापरिमितस्य ऋषेरादिर्न भवति तावद्विजानीयात्। तेन वार्षागिरान् त्रितं चातीत्यापि आ कक्षीवतोऽयमृषिर्वेदितव्यः। 'अग्नेः पूर्वः[८] सयोवृषात्'। 'स यो वृषा' ( ऋ १, १००, १ ) इत्येतस्मात् पूर्वः सूक्तसमुदायः अग्निदेवत्यः। विशेषान् स्वेस्वे प्रदेशे वक्ष्यामः। बृहद्देवताकारस्तु आद्यायामृचि जातवेदस इति श्रुतेः इदं सूक्तं जातवेदस्यं मन्यते, न शुद्धाग्नेयम्। एवं ह्याह—'इमं तु जातवेदस्यं कुत्स आङ्गिरसो जगौ। जागतं षोडशर्चम्'[९] ( तु. बृदे ३,१२६ ) इति। इमम् स्तोमम् अर्हते जातवेदसे तादर्थ्ये एषा चतुर्थी। स्तोमार्हस्य जातप्रज्ञानस्य वाऽग्नेरर्थाय। रथमिव सम् महेम संशब्दोऽत्र सम्यक्त्वायाम्। महिरपि सामर्थ्यात् गत्यर्थोऽन्तर्णीतण्यर्थश्च। यथा कश्चिद्रथं सम्यग् गमयेत् तद्वत् सम्यग्गामयेम[१०]। मनीषया स्वया[३] प्रज्ञया। अस्माकं प्रज्ञयैव[११] स्तोममुच्चारयेमेत्येतदाशास्महे इत्यर्थः। कस्मात्। उच्यते। भद्रा हि हिशब्दो यस्मादर्थे। यस्मात् भद्रा। नः षष्ठीनिर्देशात् उपरीति वाक्यशेषः। सप्तम्यर्थे वा षष्ठी। अस्माकमुपरि अस्मासु वा। प्रमतिः प्रकृष्टानुग्रहात्मिका मतिः। अस्य अग्नेः संसदि सभायाम्। यस्मादयं यज्ञादिसभास्वस्माकमनुग्राहक इत्यर्थः। परः पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। हे अग्ने! सख्ये देवानां मनुष्याणां च स्तुत्यस्तोतृसम्बन्धः सख्यम्[१२], तस्मिन्। सप्तमीनिर्देशात् वर्तमाना इति वाक्यशेषः। मा रिषाम[२] मा हिंसिष्महि केनचित् वयम्। कस्य सख्ये। उच्यते। तव ॥ १ ॥

**वेङ्कट०** [१३]कुत्स आङ्गिरसः[१३]। इमम् स्तोमम् स्तोमार्हाय जातप्रज्ञाय रथमिव संस्कुर्मः प्रज्ञया। भजनीया हि अस्य अस्माकम् प्रमतिः भवति सहाऽवस्थाने[१४]। अग्ने! तव सख्ये वर्तमानाः वयम् मा विनश्येम ॥ १ ॥

**मुद्गल०** पञ्चदशेऽनुवाके द्वादश सूक्तानि। तत्र 'इमं स्तोमम्' इति षोडशर्चं प्रथमं सूक्तम्[१५]। आङ्गिरसः कुत्स[१५] ऋषिः[१५]। पञ्चदशीषोडश्यौ त्रिष्टुभौ शिष्टा जगत्यः। अग्निः[१५] देवता[१५]।

---

१. अङ्गि° अ. २. नास्ति अ ति. ३. नास्ति अ कु. ४-४. गोतमात्पुरः अ ति. ५. परा ति. ६. योपरि° ति. ७. °मितात्° ति. ८. पूर्व कु. ९. °शर्चं वा पदान्तपूरणं परम् ति. १०. °गमय। मे मूको. ११. तयैव ति. १२. नास्ति अ; सत्यम् ति. १३-१३. नास्ति कु. १४. सहावसाने वि[१२] अ[१] लपं; सह वसाने ल; सह वसने कु. १५. नास्ति मै[२].

'दवा भवतु 'सुन्वतो रथः' ( ऋ १,९४,८ ) इति[1] त्रयः पादा देवदेवताकाः[2]। 'तन्नो मित्रः' ( ऋ १,९४,१६ ) इत्यर्धर्चो लिङ्गोक्तमित्रावरुणादिषड्देवत्यः। अथवा तस्याप्यग्निरेव देवता। मित्रावरुणादयस्तु निपातभाक्त्वेनाऽप्रधाना: ॥

अर्हते पूज्याय जातवेदसे जातानामुत्पन्नानां वेदित्रे अग्नये मनीषया निशितया बुद्ध्या इमम् एतत्सूक्तरूपम् स्तोमम् स्तोत्रम् रथमिव यथा तक्षा रथं संस्करोति तथा सम् महेम सम्यक् पूजितं कुर्मः। अस्य अग्नेः संसदि सम्भजने नः अस्माकम् प्रमतिः प्रकृष्टा बुद्धिः[3] भद्रा हि कल्याणी समर्था खलु। अतस्तया बुद्ध्या स्तुम इत्यर्थः। हे अग्ने! तव सख्ये नः अस्माकं त्वया सह सखित्वे सति वयम् मा रिषाम हिंसिता न भवाम। अस्मान् रक्षेत्यर्थः ॥ १ ॥

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥ २ ॥

यस्मै । त्वम् । आऽयजसे । सः । साधति । अनर्वा । क्षेति । दधते । सुऽवीर्यम् ।
सः । तूताव । न । एनम् । अश्नोति । अंहतिः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ २ ॥

**स्कन्द०** यस्मै यस्य[4] यजमानस्यार्थाय त्वम् आयजसे मर्यादया देवान् यजसि, सः[5] साधति[6] साधयत्यात्मनोऽभिप्रेतानर्थान्[7]। अनर्वा क्षेति अर्वतिर्गत्यर्थः[8]। अन्यं प्रत्याश्रिततया[9] न गच्छतीत्यनर्वा, अन्यं[10] [11]वाऽनाश्रिततया† गच्छतीत्यनर्वा। अन्यं च[11] अनाश्रित्य स्वस्थाने निवसतीत्यर्थः। दधते धारयति चात्मनि सुवीर्यम्। सुवीर्यं च प्राप्नोतीत्यर्थः। सः एव तूताव तवतिर्वृद्धिकर्मा ( तु. या ९,२५ )। सर्वाभिर्वृद्धिभिर्वर्धते। न च एनम् अश्नोति आप्नोति अंहतिः पापं वधो वा। किञ्च अग्ने! सख्ये मा रिषाम वयम् तव ॥ २ ॥

**वेङ्कट०** यस्मै त्वम् देवान् आयजसे हविः आदाय देवेभ्यः प्रयच्छसि। सः साधयति[12] अभिलषितम्,[13] अप्रत्यृतः च निवसति, धारयति च सुवीर्यम्[14]। सः वर्धते, न एनम् अश्नोति अवर्तिः ॥ २ ॥

**मुद्गल०** यस्मै यजमानाय हे अग्ने! त्वम् आयजसे देवानाभिमुख्येन, सः[5] यजमानः साधति स्वाभिलषितं साधयति। प्राप्नोतीत्यर्थः। किञ्च स यजमानः अनर्वा शत्रुभिरप्रत्यृतः सन् क्षेति निवसति। तथा सुवीर्यम् शोभनवीर्योपेतं धनम् दधते धारयति। प्राप्नोतीत्यर्थः। धृत्वा च सः यजमानः तूताव वर्धते। एनम् यजमानम् अंहतिः आर्तिर्दारिद्र्यम् न अश्नोति न प्राप्नोति। अन्यत् पूर्ववत् ॥ २ ॥

शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आ वह तान् ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥

---

१-१. नास्ति मै[1]. २. देवदेवायाः मै[1]. ३. हि बुद्धिः हि मूको. ४. यस्य यस्य अ ति. ५. नास्ति मूको. ६. नास्ति अ. ७. साधयन्त्या° कु. ८. अर्त्तिर्ग° मूको. ९. °श्रितया कु. १०. अन्यः अ. ११-११. नास्ति अ. † °तया न मूको. १२. °यतु कु. १३. °लक्षि° वि[1] अ[2]. १४. नास्ति वि[1] अ[2].

शकेम । त्वा । सम्ऽइधम् । साधय । धियः । त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् ।
त्वम् । आदित्यान् । आ । वह । तान् । हि । उश्मसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥

**स्कन्द०** शकेम **शक्नुयाम त्वाम्** समिधम् **तुमर्थेऽयं कमुल्**[1] । **समिन्धितुम्** । साधय **अस्माकम्** धियः **कर्माणि प्रज्ञा वा**[2] । **किञ्च** त्वे **त्वयि** देवाः हविः अदन्ति **भक्षयन्ति** आहुतम् **मर्यादया हुतम्** । त्वम् आदित्यान् **अदितेः पुत्रान् सर्वान् देवान् यष्टुम्** आ वह । तान् हि उश्मसि **कामयामहे** वयम् । **किञ्च** अग्ने ! तव[3] ॥ ३ ॥

**वेङ्कट०** [4]**शक्नुयाम त्वां**[4] **वयं समेधितुम्** । साधय **कर्माणि** । **त्वयि** देवाः हविः **भक्षयन्ति** आहुतम् । त्वम् **इह** आदित्यान् आ वह । तान् हि वयम् **कामयामहे** ॥ ३ ॥

**मुद्गल०** हे अग्ने ! त्वा **त्वाम्** समिधम् **सम्यगिद्धं कर्तुम्** शकेम **शक्ता भूयास्म** । **त्वं च** धियः **अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि** साधय **निष्पादय** । **त्वया हि सर्वे यागा निष्पाद्यन्ते** । **यस्मात्** त्वे **त्वय्यग्नौ** आहुतम् **ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकम्** हविः देवाः अदन्ति **भक्षयन्ति** । **तस्मात् त्वं साधयेत्यर्थः** । **अपि च** त्वम् आदित्यान् **अदितेः पुत्रान् सर्वान् देवान्** आ वह **अस्मद्यज्ञार्थमानय** । तान् हि **इदानीमेव वयम्** उश्मसि **कामयामहे** । **अन्यत् पूर्ववत्** ॥ ३ ॥

**भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।**
**जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥**

भराम । इध्मम् । कृणवाम । हवींषि । ते । चितयन्तः । पर्वणाऽपर्वणा । वयम् ।
जीवातवे । प्रऽतरम् । साधय । धियः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ४ ॥

**स्कन्द०** भराम **शुद्धोऽप्ययं हरतिराङ्पूर्वार्थे**[5] **द्रष्टव्यः** । **आहराम त्वदर्थम्** इध्मम् । कृणवाम हवींषि ते चितयन्तः **ज्ञातवन्तः**[2] । **किम्** । **सामर्थ्याद् यज्ञकर्म त्वन्माहात्म्यं वा** । पर्वणापर्वणा **सप्तम्यर्थे तृतीयैषा** । **पर्वणिपर्वणि**[6] । **पौर्णमास्याममावास्यायां चेत्यर्थः** । वयम् । **किञ्च** जीवातवे **जीवातुर्जीविका, तदर्थम्** । प्रतरम् **क्रियाविशेषणमिदम्** । **प्रकृष्टतरं प्रवृद्धतरं वा** । साधय **अस्माकम्** धियः । **किञ्च** अग्ने ![7] ॥ ४ ॥

**वेङ्कट०** भराम इध्मम्, कृणवाम **च**[8] हवींषि **तुभ्यम् बुध्यमानाः** पर्वणापर्वणा **अहोरात्रयोः पर्वणि सायं च प्रातश्च** । **ताभ्याम् अग्निहोत्रं कृणवाम, मासपर्वभ्यां दर्शपूर्णमासौ, ऋतुसन्धिभिः चातुर्मास्यानि** । **जीवितुम् प्रकृष्टतरम्**[9] **अस्माकं कर्माणि** साधय ॥ ४ ॥

**मुद्गल०** हे अग्ने ! **त्वद्यागार्थम्** इध्मम् **इन्धनसाधनमेकविंशतिदार्वात्मकं**[10] **समित्समूहम्** भराम **सम्पादयाम** । **तदनन्तरम्** ते **तुभ्यम्** हवींषि **चरुपुरोडाशलक्षणान्यन्नानि** वयम् कृणवाम **करवाम** । **किं कुर्वन्तः** । पर्वणापर्वणा **प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्याम्** चितयन्तः **त्वां प्रज्ञापयन्तः** । **स त्वम्** जीवातवे **अस्माकं जीवनौषधाय चिरकालावस्थानाय** धियः **कर्माणि अग्निहोत्रादीनि** प्रतरम् **प्रकृष्टतरम्** साधय **निष्पादय** । **अन्यत् समानम्** ॥ ४ ॥

---

१. णमुल् मूको. २. नास्ति ति. ३. नास्ति कु. ४-४. °क्नुमस्त्वा वि[3] अ[2]. ५. भर° मूको. ६. पर्वणि अ. ७. °ग्ने सः अ ति. ८. नास्ति वि[3] अ[2]. ९. प्रकृतितरम् वि[3] अ[2]. १०. °तिदूर्वा° मै[1].

विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥

विशाम् । गोपाः । अस्य । चरन्ति । जन्तवः । द्विऽपत् । च । यत् । उत । चतुःऽपत् । अक्तुऽभिः ।
चित्रः । प्रऽकेतः । उषसः । महान् । असि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ५ ॥

**स्कन्द॰** विशाम् विडिति मनुष्यनाम ( तु. निघ २,३ )। पुत्रपौत्रादिमनुष्याणाम्[१]। गोपाः गोप्तारः। अस्य अग्नेः। षष्ठीनिर्देशात् स्वभूताः प्रसादेन वेति वाक्यशेषः। चरन्ति तत्रतत्र विचरन्ति। जन्तवः मनुष्याः। अविनश्यद्भिः पुत्रपौत्रादिमनुष्यैरुपेताः[२] ते तत्रतत्र विचरन्ति अग्नेः स्वभूताः प्रसादेन वेत्यर्थः। न च केवला जन्तवः। किं तर्हि। द्विपत् च यत् अन्यदपि यद् द्विपात् तत्सर्वम्। उत चतुष्पत्[३] चतुष्पात् गवादिः। अक्तुभिः रात्रिनामैतत् ( तु. निघ १,७ )। इह तु साहचर्यात् नक्तञ्चरेषु[४] रक्षःपिशाचादिषु वर्तते। सहयोगलक्षणा चैषा तृतीया। रात्रिचरैः[५] सहेत्यर्थः। चित्रः च अस्य प्रकेतः प्रज्ञानम्[६]। प्रकाश इत्यर्थः। उषसः लुप्तोपममेतत् द्रष्टव्यम्। उषस इव। परः ऋक्छेषः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। महान् त्वम् असि प्रभावतः। किञ्च अग्ने ! ॥ ५ ॥

**वेङ्कट॰** विशाम् गोपायिता भवति अग्निः। तं परिचरन्ति जन्तवः यत् द्विपात् यत् च[७] चतुष्पाद् अञ्जनसाधनैः आज्यैः। आश्चर्यः उषसः प्रज्ञापयिता महान् भवसि[८] ॥ ५ ॥

**मुद्गल॰** अस्य अग्नेः जन्तवः जाता रश्मयः विशाम् सर्वेषां प्राणिनाम् गोपाः गोपायितारो रक्षकाः सन्तः चरन्ति उद्गच्छन्ति। तदनन्तरम् यत् च द्विपत् मनुष्यादिकमस्ति, उत अपि च चतुष्पत् गवादिकं यदस्ति, तदुभयम् अक्तुभिः अञ्जकैः अस्य रश्मिभिरक्तम् आश्लिष्टम् अभूत्। हे अग्ने! चित्रः विचित्रदीप्तियुक्तः प्रकेतः रात्रावन्धकारावृतानां सर्वेषां प्रज्ञापयिता[९] प्रदर्शयिता उषसः उषोदेवताया अपि महान् गुणैरधिकः असि भवसि। उषास्तु रात्रेश्चरमभागे प्रकाशयति, अग्निस्तु सर्वस्यां रात्रौ प्रकाशयतीति तस्य गुणाधिक्यम् ॥ ५ ॥

इति प्रथमाष्टके षष्ठाध्याये त्रिंशो वर्गः ॥

त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥

त्वम् । अध्वर्युः । उत । होता । असि । पूर्व्यः । प्रऽशास्ता । पोता । जनुषा । पुरःऽहितः ।
विश्वा । विद्वान् । आर्त्विज्या । धीर । पुष्यसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ६ ॥

**स्कन्द॰** अध्वर्य्वादिकर्मकारित्वादग्नेरयमध्वर्य्वादिव्यपदेशः । अग्न्यायत्तत्वादध्वर्य्वादिकर्मणामग्निरेव

१. °ष्याणां त्वम् ति. २-२. °पौत्रादिमनुष्यैः ति. ३. नास्ति कु ति. ४. °ञ्चरे अ ति. ५. रात्र्या अ. ६. °ज्ञानाः ति. ७. नास्ति वि[२]. ८. नास्ति वि[२] अ[२]. ९. ज्ञाप° मै[२].

कर्तेत्युच्यते। त्वम् अध्वर्युः अध्वर्युकर्मकारीत्यर्थः[1]। उत होता असि पूर्व्यः[2] चिरन्तन इत्यर्थः। प्रशास्ता च पोता च त्वमेवासि। जनुषा जन्मना[3]। जन्मन एव प्रभृतीत्यर्थः। पुरोहितः[4] पूर्वस्यां दिश्याहवनीयात्मना[5] स्थापितः सन्। किञ्च विश्वा सर्वाणि विद्वान् आर्त्विज्या ऋत्विक्कर्माणि। हे धीर! पुष्यसि त्वं स्वयं पुष्णासि वा यज्ञसम्पादनद्वारेण यजमानत्वात्। किञ्च अग्ने सख्ये ॥ ६ ॥

वेङ्कट० त्वम् अध्वर्युः अपि च होता भवसि प्रत्नः मैत्रावरुणः पोता च जातेन सर्वेण ब्रह्मत्वेन पुरो निहितः[6]। सर्वाण्येव जानन् आर्त्विज्यानि पोषयसि प्राज्ञ![7] ॥ ६ ॥

मुद्गल० हे अग्ने! त्वम् अध्वर्युः अध्वरस्य यागस्य नेता देवान् प्रति प्रेरयिता। [8]उत अपि च पूर्व्यः मुख्यः होता देवानामाह्वाता[8] यागनिष्पादकः असि भवसि। तथा प्रशास्ता प्रकर्षेण शास्ता सर्वेषां शिक्षकोऽसि। पोता यज्ञस्य पावयिताऽसि। तथा जनुषा जन्मना स्वाभाव्येन पुरोहितः पुरस्तादागामिनि स्वर्गादौ हितोऽनुकूलाचरणोऽसि। विश्वा सर्वाणि आर्त्विज्या ऋत्विजः कर्माणि आध्वर्यवादीनि विद्वान् जानंस्त्वं हे धीर! प्राज्ञ! अग्ने! पुष्यसि न्यूनाधिकभावराहित्येन सम्पूर्णानि करोषि। अन्यत् समानम् ॥ ६ ॥

**यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन्तळिदिवाति रोचसे।**
**रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥**

यः। विश्वतः। सुऽप्रतीकः। सऽदृङ्। असि। दूरे। चित्। सन्। तळित्ऽइव। अति। रोचसे।
रात्र्याः। चित्। अन्धः। अति। देव। पश्यसि। अग्ने। सख्ये। मा। रिषाम। वयम्। तव ॥७॥

स्कन्द० यः त्वम् विश्वतः सर्वतः सुप्रतीकः सुमुखः[9] सुदर्शनो वा। सदृङ् सदृशश्च[10] असि। दूरे चित् दूरेऽपि सन् तळिदिव विद्युत् तळिदित्युच्यते। विद्युदिव[11]। अति रोचसे सुष्ठु दीप्यसे। अथवा 'तळित्' ( निघ २,१६ ) इत्यन्तिकनाम। दूरेऽपि [12]सन् अन्तिक इव[12] दीप्यसे। रात्र्याः चित् रात्रेरपि स्वकम् अन्धः अति तमोऽत्रान्ध उच्यते। कर्मोपसर्गश्रुतेश्च योग्यक्रियाध्याहारः। तमोऽतीत्य। हे देव! पश्यसि यस्य ते तमसा दर्शनशक्तिर्न प्रतिबध्यते इत्यर्थः। यच्छब्दश्रुतेश्च तच्छब्दोऽध्याहर्तव्यः तस्य। अग्ने![13] ॥ ७ ॥

वेङ्कट० [14]यः समन्तात्[14] प्रज्वलन्[15] सर्वतः एव अन्यूनः सदृशो भवसि, स शोभनावयवः सन् दूरे अपि सन् अन्तिक इवाऽऽस्थितः अति रोचसे। अपि वा विद्युदिव रोचसे। रात्र्याः अपि अन्धः विनाशयसि ॥ ७ ॥

मुद्गल० हे अग्ने! [16]यः त्वम्[16] सुप्रतीकः शोभनाङ्गः सन् विश्वतः सर्वस्मादपि सदृङ् असि अन्यूनः

---

१. कर्मकारी° अ. २. °र्व्यः पूर्व्यः अ ति. ३. °न्मनैव अ; नास्ति ति. ४. नास्ति अ. ५. °त्मना स्थितः ति. ६. निवर्तः वि अ; °निहित वि[1] लपं. ७. प्राज्ञः मूको. ८-८ नास्ति मूको. ९. सुसुखः ति. १०. °श्चापि ति. ११. नास्ति ति. १२-१२. सन्निवान्तिके अ. १३. अग्निः ति; अग्नेः अ. १४-१४. नास्ति वि[1]; यस्त्वं वि[2,3] अ[1,2]. १५. संप्रज्व° लपं. १६-१६. स्वयं मूको.

सदृशो भवसि स त्वम् दूरे चित् सन् दूरेऽपि वर्तमानः सन् तळिदिव अन्तिके वर्तमान इव अति रोचसे दीप्यसे । रात्र्याः चित् रात्रेः सम्बन्धिनम् अन्धः बहुलमन्धकारमपि हे देव! द्योतमानाग्ने! अति पश्यसि अतीत्य प्रकाशसे । अन्यत् पूर्ववत् ॥ ७ ॥

पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८ ॥

पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि । अस्तु । दुःऽध्यः ।
तत् । आ । जानीत । उत । पुष्यत । वचः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥८॥

स्कन्द० 'पूर्वो देवाः' इत्यस्या ऋचः आद्यास्त्रयः पादा देवदेवत्याः । समानजातानां मध्ये पूर्वः अग्रिमः हे देवाः! भवतु सुन्वतः मत्प्रभृतेर्यजमानस्य रथः । अस्माकम् च[1] स्वभूतः[2] [3]शंसः आशंसनम्[3] अभिलाषः अभि अस्तु [4]सम्पत्याऽभिभवतु मूर्ध्ना[4] दूढ्यः[5] पापबुद्धीन् त्वदीयसम्पत्तिकामान्[6] । तत् एतत् आ जानीत आ इत्येष प्रतीत्यस्य स्थाने । मह्यं प्रतिजानीत । उत पुष्यत पुष्णीत संवर्धयत । अस्मदीयम् वचः । परः पादो भिन्नदेवत्वात् भिन्नं वाक्यम् । अग्ने![7] ॥ ८ ॥

वेङ्कट० मुख्यः भवतु देवाः![8] यजमानस्य रथः[9] । अस्माकम् सुन्वतां शंसनम् अभिभवतु[10] पापबुद्धीन् । तत् इदं मदीयं वचनं यूयम् अभ्यनुजानीत[11] । अपि च तत् पोषयत । इति देवदेवत्याः त्रयः पादाः ॥ ८ ॥

मुद्गल० हे देवाः! अग्न्यवयवभूताः सर्वे देवाः! सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य रथः पूर्वः अन्येषामयजमानानां रथेभ्यो मुख्यः भवतु । अपि च अस्माकम् शंसः शंसनीयमभिशापरूपं पापम् दूढ्यः दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपराञ्छत्रून् अभि अस्तु अभिभवतु तान् बाधताम् । तत् इदं मद्वाक्यं हे देवाः! आ जानीत आभिमुख्येनावगच्छत । उत अपि च तत् वचः अस्मदीयं वचनं[12] तदर्थाचरणेन पुष्यत प्रवर्धयत[13] । हे देव! सर्वात्मक! अग्ने! । सख्ये इत्यादि पूर्ववत् ॥ ८ ॥

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥ ९ ॥

वधैः । दुःऽशंसान् । अप । दुःऽध्यः । जहि । दूरे । वा । ये । अन्ति । वा । के । चित् । अत्रिणः ।
अथ । यज्ञाय । गृणते । सुऽगम् । कृधि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ९ ॥

स्कन्द० वधैः दुःशंसान् पापाभिलाषान् । अस्मद्विनाशनकामानित्यर्थः[13] । दूढ्यः पापबुद्धीन् । अप जहि दूरे वा ये अन्तिके[14] वा केचिदत्रिणः अत्तारः भक्षयितारः । विनाशयितारोऽस्माकमित्यर्थः ।

---

१. नास्ति कु. २. °भूतो रथः अ. ३-३. शंसनम् अ. ४-४. त्रुटितम् अ ति. ५. °ढ्यः दुधियः ति. ६. तदसम्पत्ति° अ; तदीय° कु ति. ७. अनेन ति. ८. देवाय वि[2]. ९. रथे वि[2]. १०. °भवतु वा वि[2]. ११. °जानत मूको. १२. वचः मै[1]. १३. अस्य वि° ति. १४. नास्ति अ.

अपहत्य[1] च [2]अथ अनन्तरम्[2] यज्ञाय यज्ञार्थम्[3] गृणते स्तुवते मह्यम् सुगम् अपठितमपि सुखनामैतदिह द्रष्टव्यम्। 'अस्मभ्यमिन्द्र वरिवः सुखं कृधि' (ऋ १, १०२,४) इति यथा। सुखम् कृधि कुरु। अथवा यज्ञायेति हेतुतृतीयार्थे चतुर्थी। सुगशब्दोऽपि सुगमदेशवचनः। यज्ञेन हेतुना स्तुतो ममार्थाय सुगमं स्वर्गादिदेशं कुर्वित्यर्थः। किञ्च अग्ने! ॥ ९ ॥

**वेङ्कट०** आयुधैः दुर्वचनान् दुर्बुद्धींश्च अप जहि, दूरे वा ये के चित् अन्तिके वा भवन्ति अदनशीला राक्षसाः। अथ यज्ञार्थं स्तुवते शोभनगमनमार्गं[4] कुरु ॥ ९ ॥

**मुद्गल०** हे अग्ने! त्वम् वधैः हननसाधनैरायुधैः दुःशंसान् दुःखेन कीर्तनीयान् दूढ्यः दुर्धियः पापबुद्धीन् अप जहि वधं प्रापय। ये के चित् ये केचन अन्ति[5] अन्तिके वा दूरे वा दूरे विप्रकृष्टदेशे वर्तमानाः अत्रिणः अत्तारः राक्षसादयो विद्यन्ते, तान् दुर्धियोऽपजहीत्यर्थः। अथ अनन्तरम् यज्ञाय यज्ञपतये गृणते त्वां स्तुवते यजमानाय सुगम् शोभनं मार्गम् कृधि कुरु। अन्यत् पूर्ववत् ॥ ९ ॥

**यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः।**
**आदिन्वसि वनिनो धूमकेतुनाऽग्ने सख्ये मा रिषामा वयं तव ॥ १० ॥**

यत्। अयुक्थाः। अरुषा। रोहिता। रथे। वातऽजूता। वृषभस्यऽइव। ते। रवः।
आत्। इन्वसि। वनिनः। धूमऽकेतुना। अग्ने। सख्ये। मा। रिषाम। वयम्। तव ॥ १० ॥

**स्कन्द०** दावाग्नेरियं स्तुतिः। यत् यदा अयुक्थाः दावात्मत्वात्[6] शीघ्रं गन्तुं युनक्षि अरुषा गन्तारौ रोहिता लोहितवर्णावश्वौ आत्मीये रथे। कीदृशौ। वातजूता [7]वातवत् यौ जवतः गच्छतः तौ वातजूतौ[7]। अत्यन्तशीघ्रावित्यर्थः। यदा इति वचनात् तदा इत्यध्याहार्यम्[8]। तदा रथेन गच्छतः वृषभस्येव ते रवः। साकाङ्क्षत्वात् भवतीति वाक्यशेषः। आत् तदैव च इन्वसि व्याप्नोषि वनिनः 'विश्वग् वियन्ति वनिनो न शाखाः' (ऋ ७,४३,१), 'तमित् समानं वनिनश्च वीरुधः' (ऋ १०, ९१, ६) इति प्रयोगदर्शनात् वनिनो वनस्पतय इहोच्यन्ते। वनस्पतीन्। धूमकेतुना केतुः पताकोच्यते। धूमः केतुस्थानीयो यस्य तेन धूमकेतुना। सामर्थ्यात् ज्वालासमूहेन[9] ज्योतिषा[10] वा। ईदृशस्याग्नेः ॥ १० ॥

**वेङ्कट०** यदा त्वं युनक्षि गन्तारौ रोहितवर्णावश्वौ वातवेगौ गमनाय स्वरथे, तदानीं गच्छतस्तव शब्दः ऋषभस्येव श्रूयते। अथ त्वं व्याप्नोषि[11] वृक्षान् धूमकेतुना ज्वालासङ्घेन ॥ १० ॥

**मुद्गल०** हे अग्ने! अरुषा आरोचमानौ रोहिता लोहितवर्णावश्वौ वातजूता वातस्य [12]वायोर्जूतं जवो[12] वेग इव वेगो ययोस्तावीदृशावश्वौ रथे यत् यदा अयुक्थाः अयोजयः, तदानीं वनानि दहतः ते तव रवः शब्दः वृषभस्येव दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति। आत् अनन्तरम्

१. अपहृत्य मूको. २-२. नास्ति ति; अथवानन्त° अ. ३. जात्वा ति. ४. °नं मार्गं° लप. ५. अन्तिकम् मूको. ६. °त्मत्वम् अ ति. ७-७. नास्ति ति. ८. °ध्याहार्यः अ ति. ९. °सहेन अ; °समूहिते कु. १०. नास्ति ति. ११. व्याप्नो° वि° लप. १२-१२. जवः तं मूको.

वनिनः वनसम्बद्धान् वृक्षान् धूमकेतुना धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना इन्वसि व्याप्नोषि । अन्यत् पूर्ववत् ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये एकत्रिंशो वर्गः ॥

अध॑ स्व॒नादु॒त बि॑भ्युः पत॒त्रिणो॑ द्र॒प्सा यत् ते॑ यव॒सादो॒ व्यस्थि॑रन् ।
सु॒गं तत् ते॑ ताव॒केभ्यो॒ रथे॒भ्योऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ११ ॥

अध॑ । स्व॒नात् । उ॒त । बि॒भ्यु॒ः । प॒त॒त्रिणः॑ । द्र॒प्साः । यत् । ते॒ । य॒व॒स॒ऽअदः॑ । वि । अ॒स्थि॑रन् ।
सु॒ऽगम् । तत् । ते॒ । ता॒व॒केभ्यः॑ । रथे॑भ्यः । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥११॥

**स्कन्द॰** अध-शब्दोऽत्र तदा इत्यस्यार्थे[1] । तदा स्वनात् शब्दात् उत बिभ्युः पतत्रिणः[2] पतत्रिणः पक्षिण उच्यन्ते । पक्षिणोऽपि बिभ्यति, किमुतान्ये प्राणिनः । कदा । उच्यते । द्रप्साः 'दधिद्रप्सान् प्राश्य' इत्यादिषु द्रप्सशब्दः कठिनवचनः । [3]कठिनाः । बहुलरूपा[3] इत्यर्थः । यत् यदा ते तव दावात्मकस्य[4] स्वभूताः यवसादः यवसं[5] तृणम्, तस्यात्तारो ज्वालासमूहाः वि अस्थिरन् तिष्ठतेरिदं रूपम् । वितिष्ठन्ते । सर्वं व्याप्नुवन्तीत्यर्थः । किञ्च सुगम् तत् तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः[6] । यत् पर्वतपृष्ठादि अन्यः कश्चित् गन्तुं न शक्नोति सुगं तत् ते तव । न च केवलस्य । किं तर्हि । तावकेभ्यः रथेभ्यः षष्ठ्यर्थे चतुर्थी पञ्चमी वा । [7]एषां रथानां[7] च त्वदीयानाम् । किञ्च अग्ने ! सख्ये ॥ ११ ॥

**वेङ्कट॰** यदा दवाग्नेः[8] शकलानि तृणस्य भक्षकाणि अरण्ये वितिष्ठन्ते, अनन्तरमेव दवाग्निशब्दात्[9] पक्षिणो बिभ्यति । शोभनगमनम् तत् अरण्यम् अग्नेः रथेभ्यः भवति । ते इति पूरणम् । तत् त्वं यथाऽऽत्मीयैः यथाकामं सञ्चरसीत्यर्थः ॥ ११ ॥

**मुद्गल॰** हे अग्ने ! अध दग्धुं वनप्रवेशानन्तरम् स्वनात् त्वदीयात्[10] पूर्वोक्तगम्भीरशब्दात् । उत-शब्दोऽप्यर्थः । पतत्रिणः पक्षिणोऽपि बिभ्युः बिभ्यति भयं प्राप्नुवन्ति । किमु वक्तव्यमन्येषां तत्रत्यानां वृकादीनां भीतिर्जायत इति । अतस्त्वयि वनं प्रविशति सर्वे प्राणिनो भयं प्राप्नुवन्तीत्यर्थः । तादृशस्य ते तव द्रप्साः ज्वालैकदेशाः यवसादः यवसानामरण्ये वर्तमानानां तृणानामत्तारः सन्तः यत् यदा वि अस्थिरन् विविधमवतिष्ठन्ते तत् तदा ते तव सर्वमरण्यम् सुगम् सुखेन गन्तुं शक्यम् । अतः तावकेभ्यः त्वदीयेभ्यः रथेभ्यः च तदरण्यं सुगं भवति । पूर्वं प्रवृत्तैर्ज्वालाग्रैः तृणादिषु दग्धेषु सत्सु त्वदीया रथाः प्रतिबन्धमन्तरेण पश्चाद्गच्छन्तीति भावः । अन्यत् समानम् ॥ ११ ॥

अ॒यं मि॒त्रस्य॒ वरु॑णस्य॒ धाय॑सेऽवया॒तां म॒रुतां॒ हेळो॒ अद्भु॑तः ।
मृ॒ळा सु नो॒ भूत्वे॑षां मनः॒ पुन॒रग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ १२ ॥

---

१. इत्यर्थे ति. २. नास्ति अ. ३-३. कठिनबहुल॰ ति; ॰बहुरूपाः अ. ४. दाहात्म॰ ति. ५. यवम् अ. ६. ॰ध्याहर्तव्यः ति. ७-७. रथान्तमेषाम् अ. ८. दावाग्नेः कु. ९. दावश॰ वि[1]. १०. तदी॰ मै[1].

अयम् । मित्रस्य । वरुणस्य । धायसे । अवऽयाताम् । मरुताम् । हेळः । अद्भुतः ।
मृळ । सु । नः । भूतु । एषाम् । मनः । पुनः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१२॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'मित्रो वरुणो मरुतश्च कुत्सस्य यज्ञमाजग्मुः । सोऽग्निस्तुत्या क्षिप्तमनाः तान्न तुष्टाव । तस्मै क्रुद्धा यज्ञाद्देवा जग्मुः । तत्प्रसक्तये कुत्सोऽग्निमुवाच' इति[1] । अयम् धायसे सोमपानाय मित्रस्य वरुणस्य मरुतां च अवयाताम् अवशब्दोऽपेत्यस्य स्थाने । अस्मद्यज्ञादपगच्छताम् । हेळः क्रोधः अद्भुतः महान्[2] । साकाङ्क्षत्वात् प्रसादेन व्यावर्तताम् इति वाक्यशेषः । एतत्[3] कुर्वन् मृळ सु सुष्ठु सुखय[4] नः अस्मान् । भूतु एषाम् पुनः अप्यस्मासु मनः । पुनरप्यस्मासु सानुग्रहचेतसो भवन्त्वित्यर्थः । किञ्च अग्ने ! ॥ १२ ॥

**वेङ्कट०** अयम् मित्रावरुणयोः सोमपानाय स्वर्गात् अधस्तात्[5] आगच्छताम् मरुताम्[6] च क्रोधो महान् भवति । यदि प्रमादोऽस्माकं भवति क्रुध्यन्तीत्यर्थः[7] । एवं 'स्थिते तान्[8] यजन्[9] अस्मान् सुष्ठु सुखय । भवतु च एषाम् त्वत्प्रसादेन अस्मासु मनः पुनः अपि ॥ १२ ॥

**मुद्गल०** अयम् अग्नेः स्तोता मित्रस्य अहरभिमानिनो देवस्य वरुणस्य रात्र्यभिमानिनश्च सम्बन्धिने धायसे धारणाय अवस्थापनाय भवतु । मित्रावरुणाविममग्नेः स्तोतारं धारयतामित्यर्थः[10] । अवयाताम् अवस्ताद्गच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानाम् मरुताम् एतत्संज्ञानां देवानाम् हेळः क्रोधः अद्भुतः महान् भवति । तस्मात् क्रोधात् इममग्नेः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः । अपि च नः अस्मान् हे अग्ने ! सु मृळ सुष्ठु मृडय सुखय । एषाम् मरुताम् मनः च पुनः भूतु पुनरपि प्रसन्नं भवतु । अन्यत् समानम् ॥ १२ ॥

देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३ ॥

देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि । चारुः । अध्वरे ।
शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १३ ॥

**स्कन्द०** देवः त्वं सर्वेषाम् देवानाम् असि मित्रः अद्भुतः हविर्वहनाद्युपकारकरणात्[11] महत् मित्रमसि । वसुः वसूनाम् असि धनानां च त्वं धनमसि धनकार्यकरत्वात् । चारुः अध्वरे यज्ञे च शोभनोऽसि । तस्य शर्मन् शरणस्थाने वयम् स्याम भवेम । प्राप्नुयामेत्यर्थः । तव [12]स्वभूते अग्निलोकाख्ये[12] सप्रथस्तमे सर्वतः पृथुतमे । अथवा 'शर्म' ( निघ ३,४ ) इति गृहनाम । गृहे स्याम तव [13]सम्बन्धिनि सर्वपृथुतमे । त्वया दीयमानमत्यन्तविस्तीर्ण[13] गृहं वयं प्राप्नुयामेत्यर्थः । किञ्च अग्ने ! ॥ १३ ॥

---

१. नास्ति मूको. २. महातु ति. ३. नास्ति ति. ४. सुखम् कु. ५. नास्ति वि[२] अ[२]. ६. नास्ति वि[१]. ७. °ध्यती° अ[१] वि[१,२] कु ल लपं. ८-८. स्थितान् वि[१]. ९. यज वि[२] अ[२]. १०. °यितार° मूको. ११. °करणत्वात् कु ति. १२-१२. °भूतोग्नि° अ. १३-१३. संबन्धि ··· मत्यन्त° ति.

**वेङ्कट०** देवः देवानाम् असि सखा महान्। वसुः वसूनाम् इति। वसवः देवाः, तेषाम् अपि वासयिता भवसि कल्याणः त्वं यज्ञे। सुखे स्याम तव सर्वतः पृथुतमे ॥ १३ ॥

**मुद्गल०** हे अग्ने! देवः द्योतमानस्त्वम् देवानाम् सर्वेषाम् अद्भुतः महान् मित्रः असि प्रौढः सखा भवसि। तथा चारुः शोभनस्त्वम् अध्वरे यज्ञे वसूनाम् सर्वेषां धनानाम् वसुः असि निवासयिता भवसि। अतोऽस्माकं वसूनि देहीत्यर्थः। किञ्च सप्रथस्तमे सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे तव त्वत्सम्बन्धिनि शर्मन् शर्मणि यज्ञगृहे स्याम वर्तमाना भवेम। अन्यत् पूर्ववत् ॥ १३ ॥

**तत् ते॑ भ॒द्रं यत् समि॑द्धः॒ स्वे दमे॒ सोमा॑हुतो॒ जर॑से मृळ॒यत्त॑मः ।**
**दधा॑सि॒ रत्नं॒ द्रवि॑णं च दा॒शुषेऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ १४ ॥**

तत्। ते॒। भ॒द्रम्। यत्। सम्ऽइ॑द्धः। स्वे। दमे॑। सोम॑ऽआहुतः। जर॑से। मृ॒ळ॒यत्ऽत॑मः।
दधा॑सि। रत्न॑म्। द्रवि॑णम्। च॒। दा॒शुषे॑। अग्ने॑। स॒ख्ये। मा। रि॒षा॒म॒। व॒यम्। तव॑ ॥१४॥

**स्कन्द०** तत् चेष्टितं कर्म[1] वा ते तव भद्रम् कल्याणम्। यत्[2] समिद्धः सन् स्वे दमे यज्ञगृहे। सोमाहुतः सोमयागेनाहुतः सन्। जरसे होतृत्वात् स्तौषि देवताः, स्तूयसे वा ऋत्विग्भिः। मृळयत्तमः यष्टॄणां च स्तोतॄणां च सुखयितृतमः[3]। यच्च दधासि ददासि रत्नम् माणिक्यादि द्रविणम् धनम् च सुवर्णादि दाशुषे यजमानाय। किञ्च अग्ने! ॥ १४ ॥

**वेङ्कट०** तत् तव कल्याणम्, यत् त्वम् प्रज्वलितः स्वे यज्ञगृहे सोमेन आहुतः सन् देवान् स्तौषि सुखयितृतमः। यच्च त्वम् रत्नम्[4] धनम् च यजमानाय प्रयच्छसि। अग्ने! सख्ये इति[5] ॥ १४ ॥

**मुद्गल०** हे अग्ने! ते त्वत्सम्बन्धि तत् वस्तु भद्रम् भजनीयम्। प्रशस्तमित्यर्थः। किं पुनस्तत्। स्वे दमे स्वकीये उत्तरवेदिलक्षणे निवासस्थाने। तस्यामुत्तरवेद्यां समिद्धः सम्यगिद्धः प्रज्वलितः सोमाहुतः हुतेन सोमरसेन सन्तर्पितः सन् जरसे ऋत्विग्भिः स्तूयसे इति यदस्ति। तद्भद्रमित्यर्थः। एवं प्रशस्तस्त्वम् मृळयत्तमः अतिशयेनास्माकं सुखयिता भूत्वा रत्नम् रमणीयं कर्मफलम् द्रविणम् धनम् च दाशुषे हविर्दत्तवते यजमानाय दधासि प्रयच्छसि। अन्यत् समानम् ॥ १४ ॥

**यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शोऽना॒गास्त्वम॑दिते स॒र्वता॑ता ।**
**यं भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ राध॑सा॒ ते स्या॑म ॥ १५ ॥**

यस्मै॑। त्वम्। सु॒ऽद्र॒वि॒णः॒। ददा॑शः। अ॒ना॒गाः॒ऽत्वम्। अ॒दि॒ते॒। स॒र्वऽता॑ता।
यम्। भ॒द्रेण॑। शव॑सा। चो॒दया॑सि। प्र॒जाऽव॑ता। राध॑सा। ते। स्या॒म॒ ॥ १५ ॥ ॥

**स्कन्द०** यस्मै त्वम् हे सुद्रविणः! सुधन![6] सुबल![7] वा। ददाशः ददासि। किम्[8]। उच्यते। अनागास्त्वम् आगः पापमुच्यते। 'अपापत्वम् अपुण्यवर्जितत्वम्[9]'। हे अदिते! अदितिर्देवमाता।

---

१. कुर्म ति. २. °त् यत् ति. ३. नास्ति अ. ४. नास्ति मूको. ५. नास्ति कु. ६ °धनः मूको. ७. °बल; कुको. ८. किन्तु ति. ९-९. अपापः त्वमपुण्यवर्जित अ ति,

तच्छब्देनेदं सोऽयमित्यभिसम्बन्धात्[1] पुत्रस्याग्नेरभिधानम्। अदितेः पुत्र इत्यर्थः। अथवा अदितिशब्दः अदीनपर्यायः। अदीन! क्षयवर्जित! इत्यर्थः। सर्वताता सर्वशब्दादयम्[2] 'सर्वदेवात्तातिल्' (पा ४,४,१४२) [3]इत्येवं स्वार्थिकस्तातिल्प्रत्ययः[3]। [4]सप्तम्याश्च डादेशः[4]। सर्वत्रेत्यर्थः। अथवा अनागास्त्वम् इति आगश्शब्दः अपराधवचनः। सर्वतातेत्यपि सर्वैव ऐष्टिकपाशुकसौमिकरूपा कर्मसन्ततिर्यज्ञ उच्यते। यस्मै[5] वैगुण्यलक्षणापराधवर्जितत्वं यज्ञेषु ददासि, तस्य[6] विगुणमपि यज्ञं सगुणं करोषीत्यर्थः। यम् च भद्रेण शवसा 'इत्थंभूतलक्षणे' (पा २, ३, २१) इत्येवमेषा तृतीया। भद्रेण बलेन सम्बद्धम्[7]। चोदयासि तत्रतत्र प्रवर्तयसि। यं भद्रेण बलेन संयोज्य [8]तत्रतत्र विनियोजयसि† इत्यर्थः[8]। न च केवलेन बलेन। प्रजावता राधसा प्रजासहितेन [9]च धनेन[9]। ते वयम् एव स्याम। अस्माकमेव सर्वमिदं कुर्वित्यर्थः॥ १५॥

**वेङ्कट०** यस्मै त्वम् अग्ने! शोभनधन![10] प्रयच्छसि अपापवादम्[11] अखण्डित! यज्ञे कृते, यम् च त्वं कल्याणेन बलेन संयोज्य युद्धे प्रेरयसि, यं वा प्रजावता धनेन संयोजयसि, वयं च ते भवाम। 'ते वयम् इह स्याम' इति यास्कः (११, २४)॥ १५॥

**मुद्गल०** हे सुद्रविणः! शोभनधन! अदिते! अखण्डनीयाग्ने! सर्वताता सर्वासु कर्मततिषु यज्ञेषु वर्तमानाय यस्मै यजमानाय अनागास्त्वम् अपापत्वं पापराहित्येन कर्मार्हताम्[12] त्वम् ददाशः प्रयच्छसि, स यजमानः समृद्धो भवति। यम् च यजमानम् भद्रेण भजनीयेन कल्याणेन शवसा बलेन चोदयासि संयोजयसि सोऽपि समृद्धो भवति। वयं च स्तोतारः प्रजावता प्रजाभिः पुत्रपौत्रैर्युक्तेन ते राधसा त्वया दत्तेन धनेन युक्ताः स्याम भवेम॥ १५॥

**स त्वम॑ग्ने सौभगत्वस्य॑ विद्वान॒स्माक॒मायुः प्र ति॑रे॒ह दे॑व।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः॥ १६॥**

सः। त्वम्। अ॒ग्ने॒। सौ॒भ॒ग॒ऽत्वस्य॑। वि॒द्वान्। अ॒स्माक॑म्। आयु॑ः। प्र। ति॒र॒। इ॒ह। दे॒व॒।
तत्। नः॒। मि॒त्रः। वरु॑णः। म॒म॒ह॒न्ता॒म्। अदि॑तिः। सिन्धु॑ः। पृ॒थि॒वी। उ॒त। द्यौः॥ १६॥

**स्कन्द०** 'उत्तमायास्त्वृचोऽर्धं तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो[13] वात्र षड्भ्यः कृताभ्यः'। अध्यायस्य सूक्तस्य वा उत्तमाया अस्या ऋचः उत्तरमर्धं तस्यैव वा यस्य तत् पूर्वमुक्तम् अग्नेः, मित्रादिभ्यो वा[14] षड्भ्यो देवताभ्यः अत्रैव ऋचि[15] कृताभ्यो व्यवस्थिताभ्यः निगदिताभ्य इत्यर्थः। 'एतेनोदर्कः'। बहुदेवत्येषु समानधर्मा पुनरुक्त उदर्क इत्युच्यते। बहुदेवतेषु[17] उक्तेषु 'चन्द्रमा अप्सु' (ऋ १,१०५,१), 'तक्षन्रथम्' (ऋ १,१११,१) इत्यादिषु, द्विदेवतेषु 'य

---

१. °सम्बन्धः ति.　२. °दयं सर्वतातीत्येवम् ति.　३-३. प्रत्ययः ति.　४-४. °श्चाडा° मूको.　५. तस्मै ति.　६. यस्य ति.　७. °बन्धम् ति.　८-८. तत्र वि···नित्यर्थ ति.　† नास्ति अ.　९-९. धनेन च अ.　१०. °धनं वि[1] अ[2].　११. °पस्त्वम् वि[1] अ[2].　१२. कर्मार्हन्तां मूको.　१३. मित्रादियौ ति,　१४. नास्ति ति.　१५. नास्ति अ.　१६. °दर्को अ; °दर्कि ति.　१७. बहुषु देव° ति.

इन्द्राग्नी चित्रतमः' (ऋ १, १०८, १), 'ईळे द्यावापृथिवी' (ऋ १, ११२, १) इत्यादिषु यः सूक्ताध्यायोरर्धर्च उदर्कः स एतेनार्धर्चेन समानधर्मा वेदितव्यः। यथैष[1] [2]प्रकृतदेवताकः नियमितमित्रादिदेवताको[2] वा, एवं सोऽपीत्यर्थः। तत्र प्रकृताग्निदेवताकता[3] तावदस्यार्धर्चस्य[4] एव। एवमस्या ऋचोऽर्थयोजना। य उक्तगुणोऽसि सः त्वम् हे अग्ने! सौभगत्वस्य 'भगः' (निघ २, १०) इति धननाम। शोभनं धनं हविर्लक्षणं यस्य स सुभगः। सुभग एव सौभगः। स्वार्थिकस्तद्धितः। तस्य भावः सौभगत्वम्। तस्य सौभगत्वस्य विद्वान्। सहविष्कतामस्माकं जानन्नित्यर्थः। अस्माकम् आयुः प्र तिर प्रवर्धय। इह [5]जन्मनि लोके[5] वा हे देव!। तत् च नः त्वया प्रवर्ध्यमानं त्वत्प्रसादादेव ममहन्ताम् अत्यर्थं पूजयन्तु[6]। अनुमन्यन्तामित्यर्थः[7]। के। मित्रः वरुणः अदितिः सिन्धुः पृथिवी उत द्यौः। [8]एवमग्नेः प्राधान्यं मित्रादीनां चाप्राधान्यम्। अतोऽस्य सूक्तस्याग्नेयत्वे न व्याघातः। मित्रादिदेवताकत्वे तु पूर्वानपेक्ष एषोऽर्धर्चो योजयितव्यः[8]। त्वम् अग्ने! अस्माकमायुः प्रवर्धय। 'तत् ते' मित्रादयोऽपि मामहन्ताम्। न केवलोऽग्निरेवेति ॥१६॥

वलभीविनिवास्येतामृगर्थागमसंहृतिम्।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये
षष्ठोऽध्यायः ॥

**वेङ्कट०** सः त्वम् अग्ने! सौभाग्यं[10] कर्तुं जानन् अस्माकम् आयुः वर्धय अस्मिन् स्तोत्रे सति देव!। तत् इदम् अग्नेः[11] स्तोत्रं मित्रादयोऽपि पूजयन्तु[12] इति[13] ॥ १६ ॥

इत्येवं[14] षष्ठमध्यायं[15] व्याकरोत् प्रथमेऽष्टके।
भरतस्य कुले जातो माधवो वेङ्कटात्मजः ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके षष्ठोऽध्यायः ॥

**मुद्गल०** हे देव! दानादिगुणयुक्त! अग्ने! सः पूर्वोक्तगुणविशिष्टः त्वम् सौभगत्वस्य सुभगत्वं सौभाग्यम् विद्वान् जानन् इह अस्मिन् कर्मणि अस्माकम् आयुः प्र तिर प्रवर्धय। त्वया प्रवर्धितम् नः अस्माकम् तत् आयुर्मित्रादयः षड् देवताः ममहन्ताम् पूजयन्ताम्। रक्षन्त्वित्यर्थः। मित्रः प्रमीतेस्त्राता। वरुणः अनिष्टानां निवारयिता। अदितिः अदीना अखण्डनीया वा देवमाता। सिन्धुः स्यन्दनशीलोदकात्मा देवता। पृथिवी प्रथिता भूदेवता। उत इति समुच्चये। द्यौः प्रकाशमाना द्युलोकात्मा देवता। एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहन्तामिति पूर्वत्रान्वयः ॥ १६ ॥

इति प्रथमाष्टके षष्ठाध्याये द्वात्रिंशो वर्गः ॥

—*—

इति ऋग्वेदे सभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

१. यथेव कु; यथैव अ ति. २-२. °देवतानियमित° ति. ३. °देवताकत्वे ति. ४. पदस्यार्ध° अ. ५-५. लोके जन्मनि अ. ६. पूजयतु कु. ७. अनुमन्यतामि° कु ति. ८. नास्ति ति. ९-९. तन्नो ति. १०. °भाग्यं वि[1] अ[2]. ११. °ग्ने वि[1] अ[1]; नास्ति वि[2]. १२. °न्ति वि[1] अ[2]. १३. नास्ति कु. १४. इतीमं वि[1] अ[2]; इति अ[1] वि[2]. १५. षष्ठाध्या° वि[3].

[ ९५ ]

**द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।**
**हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥**

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे । अन्याऽअन्या । वत्सम् । उप । धापयेते इति ।
हरिः । अन्यस्याम् । भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥ १ ॥

**स्कन्द०** 'औषसाय वा' । 'द्वे विरूपे चरतः' इत्यौषसाय वा अग्नये शुद्धाय वा । [1]शुद्धस्य त्वत्राग्नेः स्तुतिर्दृश्यते नौषसस्य । द्वे रात्र्युषसौ विरूपे विभिन्नरूपे चरतः रात्रिर्गता उषा आगता, उषा गता रात्रिरागता, एवं गच्छतः । स्वर्थे अर्थशब्दः अर्तेर्गत्यर्थस्य गमनवचनः प्रयोजनवचनो वा[1] । शोभनगमने[2] [3]शोभनप्रयोजने वा[3] । अन्यान्या वत्सम् अन्योन्यस्य च वत्सस्थानीयम् [4]अग्निम् । अग्निः[4] हि रात्र्युषसोरुभयोः अपि[5] वत्सस्थानीयः, तत्र जायमानत्वात् । उप धापयेते धेट् पाने । उपगम्य धापयतः पाययतः[5] । किम् । सामर्थ्यात् आहुतीः । रात्रिर्हि उपगम्य सायमाहुतीरग्निं पाययति, प्रातराहुतीरुषाः । पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये द्वे [6]रात्र्युषसौ चरतः अन्योन्यस्य च वत्सस्थानीयम् अग्निम्[6] उपधापयेते, तयोः हरिः अन्यस्याम् भवति हरितवर्णः एकस्यां रात्रौ स्वधावान् अन्नवानग्निः, शुक्रः अन्यस्याम् ददृशे शुक्रवर्णोऽन्यस्यां दृश्यते उषसि । उषसा चात्र तत्समनन्तरभाव्यहर्लक्ष्यते[7] । अहन्यादित्यात्मना व्यवस्थितः सन् शुक्ररूपोऽग्निर्दृश्यत इत्यर्थः । सुवर्चाः सुदीप्तः ॥ १ ॥

**वेङ्कट०**
[8]'अध्यायम् 'द्वे [9]विरूपे' च[9] माधवो व्याचिकीर्षति ।
अन्वादेशस्य विषये वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

'अस्य' इति प्रथमादेश उदात्तं स्मर्यते पदम् ।
अन्वादेशे चानुदात्तम् 'अस्य वामस्य[10]' दृश्यते ॥ २ ॥

'अस्येदु मातुः सवने'[11] ननूदात्तोऽत्र दृश्यते ।
'अस्मा अस्य' इति सूक्तेऽस्मिन्निन्द्र एवापदिश्यते ॥ ३ ॥

ऋच्येकस्यामन्वादेश[12] इति वक्तुं न युज्यते[13] ।
'युञ्जन्त्यस्य काम्या'[14] भिन्नायामपि दर्शनात् ॥ ४ ॥

---

१-१. नास्ति अ.　२. नास्ति मूको.　३-३. °भनप्रत्युपकाराख्यप्रयोजने अ; °भनप्राण्युपकाराख्यप्रयोजने ति; °यजने कु.　४-४. अग्निर्हि अ.　५. नास्ति ति.　६-६. रा···यमग्निम् अ.　७. तत्समन्त° कु.　८. पृ, ३५७ द्र.　९-९. विरूपेति वें ऋ अ.　१०. ऋ १,१६४,१.　११. ऋ १,६१,७.　१२. °च्येनस्या° कु ल.　१३. शक्यते वि[1] लपं.　१४. काम्या° वि[1,2] अ[1] लपं ल; ऋ १,६,२.

'नास्मै विद्युन्न तन्यतुः'[1], 'नकिरस्य सहन्त्य'[2] च ।
'एवा ह्यस्य सूनृता'[3] ऋचश्चात्र निदर्शनम् ॥ ५ ॥

'दिवश्चिदस्य वरिमा'[4] सूक्तादौ च प्रदृश्यते ।
अन्वादेशः पूर्वसूक्ते स्तुतस्यैव पुनः स्तुतौ ॥ ६ ॥

अन्वादेशः[5] पादमध्ये सर्वत्रेति न युज्यते ।
यस्मादुदात्ता दृश्यन्ते पादमध्येऽपि तद्यथा ॥ ७ ॥

'माकिर्नो अस्य परिषूतिः'[6] 'अग्ने चिकिद्ध्यस्य नः'[7] ।
पादो 'ज्यायांसमस्य'[8] इति सर्वे तत्र निदर्शनम् ॥ ८ ॥

पादादिष्वनुदात्तोऽस्य न कदाचन दृश्यते ।
उदात्ताः पादमध्येऽपि दृश्यन्ते बहवस्तथा ॥ ९ ॥

वाक्यादावपदिष्टोऽपि लौकिकैरपदिश्यते[9] ।
उच्चैर्धर्मी ततस्तत्र[10] नान्वादेशस्य सम्भवः ॥ १० ॥

पूर्वस्मिन् प्रकृतो वाक्ये वाक्यमध्येऽपदिश्यते ।
नीचैरर्थस्वभावेन सोऽन्वादेशः स्मृतो बुधैः ॥ ११ ॥

कुत्सः । द्वे भिन्नरूपे चरतः शोभनकार्ये, अन्यान्या च[11] वत्सम् उपधापयतः । तत्र आदित्यः अन्यस्याम् अह्नि बलवान् भवति, शुक्रवर्णः अग्निः रात्रौ ददृशे सुदीप्तिः[12] ॥ १ ॥

मुद्गल० प्रथमे मण्डले[13] पञ्चदशेऽनुवाके प्रथमं सूक्तं व्याख्यातम्[14] । 'द्वे विरूपे' इत्येकादशर्चं द्वितीयं सूक्तम्[14] । आङ्गिरसः कुत्स ऋषिः । त्रिष्टुप् छन्दः । औषसगुणविशिष्टाग्निः देवता शुद्धोऽग्निर्वा देवता ॥

स्वर्थे स्वरणे शोभनगमनागमने विरूपे विषमरूपे शुक्लकृष्णतया नानारूपे द्वे अहोरात्रे चरतः पुनःपुनः पर्यावर्तेते । ते चाहोरात्रे अग्नेः सूर्यस्य च जनन्यौ । तत्र रात्रेः पुत्रः सूर्यः । स हि गर्भवत् रात्रावन्तर्हितः सन् तस्याः चरमभागादुत्पद्यते । अह्नः पुत्रोऽग्निः । स हि तत्र विद्यमानोऽपि प्रकाशराहित्येन असत्कल्पः सन् तस्मात् अह्नः सकाशात् निर्मुक्तः प्रकाशमानं स्वात्मानं लभते । अतोऽनयोरेतयोः पुत्रत्वम् । ते चाहोरात्रे वत्सम् स्वंस्वं पुत्रम् अन्यान्या परस्परव्यतिहारेण उप धापयेते स्वकीयं रसं पाययतः । यद्रात्र्या[15] कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य पायनं तदहः करोति । यदह्नः कर्तव्यं स्वपुत्रस्याग्ने रसस्य पायनं तद्रात्रिः करोति । एतच्च सायंप्रातःकालीनाहुत्यभिप्रायम् । यस्मादेवं तस्मात् अन्यस्याम् स्वजनन्याः अन्यस्याम्

१. ऋ १,३२,१३. २. ऋ १,२७,८. ३. ऋ १,८,८. ४. ऋ १,५५,१; °महिमा मूको.
५. अन्वादेशं वेंऋअ. ६. ऋ ९,८५,८. ७. ऋ ५,२२,४. ८. ऋ ५,४४,८. ९. °पदृश्यते° अ[1] वि[1,2].
१०. तत्र तत्र अ[1]. ११. नास्ति वि[3] अ[2] कु. १२. °दीप्तः कु. १३. नास्ति मै[2]. १४. नास्ति मै[1].
१५. °रात्र्याः मै[1].

अहरात्मिकायाम् अग्नेर्जनन्याम् हरिः रसहरणशील आदित्यः स्वधावान् हविर्लक्षणान्नवान् भवति। शुक्रः निर्मलदीप्तिरग्निः स्वजनन्याः अन्यस्याम् रात्र्यामादित्यस्य जनन्याम् सुवर्चाः शोभनदीप्तियुक्तः सन् ददृशे दृश्यते ॥ १ ॥

दशे॒मं त्वष्टु॑र्जनयन्त॒ गर्भ॒मत॑न्द्रासो युव॒तयो॒ विभृ॑त्रम् ।
ति॒ग्मानी॑कं॒ स्वय॑शसं॒ जने॑षु वि॒रोच॑मानं॒ परि॑ षीं नयन्ति ॥ २ ॥

दश॑ । इ॒मम् । त्वष्टुः॑ । ज॒न॒य॒न्त॒ । गर्भ॑म् । अत॑न्द्रासः । यु॒व॒तयः॑ । विऽभृ॑त्रम् ।
ति॒ग्मऽअ॑नीकम् । स्वऽय॑शसम् । जने॑षु । वि॒ऽरोच॑मानम् । परि॑ । सी॒म् । न॒य॒न्ति॒ ॥ २ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते — 'सर्वमिदमन्धेन तमसा क्षणेनैवावृतमभवत्। अथ त्वष्टा दिक्ष्वग्निमजनयत्। तस्मिन्नतृप्यति[1] प्रवर्धमाने आकाशं प्राज्वलत्[2]। तं दिशः द्यावापृथिव्यौ चामृतेन तर्पयित्वा तत्रतत्र विहृतवत्यः' इति। तदेतदिहोच्यते — 'दशेमं त्वष्टुः' इति। चतस्रो दिशः चतस्रश्चाऽवान्तरदिशः ऊर्ध्वम् अध इति एता दश दिशः इमम् अग्निम् त्वष्टुः सकाशात् जनयन्त जनितवत्यः[3]। गर्भम् अपत्यभूतम्। अतन्द्रासः अनलसाः युवतयः तरुण्यः। विभृत्रम् तत्रतत्र विह्रियतेऽसाविति विभृत्रः तं विभृत्रम्। तिग्मानीकम् तिग्मशब्दस्तीक्ष्णवचनः। अनीकमित्यपि लोके खड्गस्य मुखमुच्यते। इह तु तीक्ष्णाग्रत्वादेस्तत्सादृश्यात्[4] ज्वाला उच्यन्ते। तीक्ष्णज्वालमित्यर्थः। अथवा ब्राह्मणानीकं क्षत्रियानीकमिति प्रयोगदर्शनादनीकशब्दः समूहवचनः। सामर्थ्याचेह ज्वालासमूहमाह, नान्यम्। तीक्ष्णज्वालासमूहमित्यर्थः। स्वयशसम् आत्मनिमित्तकीर्तिम्। जनयित्वाऽमृतेन तर्पयित्वा जनेषु मनुष्येषु विरोचमानम् विविधं दीप्यमानम् परि सीम् नयन्ति परीति सर्वतोभावे। सीमिति पदपूरणः[5]। नयन्तीति भूते लट्, छान्दसत्वात्। सर्वतो नीतवत्य इत्यर्थः ॥ २ ॥

**वेङ्कट०** दश[6] दिशः एनम् अग्निं त्वष्ट्रा दिक्षु निषिक्तं गर्भभूतं जनितवत्यः अनलसाः युवतयः धारकम् यद्वा इतस्ततः विहृतम्। तीक्ष्णज्वालं स्वभूतकीर्तिं मनुष्येषु परिणयन्ति विरोचमानम् परितः ॥ २ ॥

**मुद्गल०** अतन्द्रासः स्वकार्ये जगतः पोषणे अनलसाः आलस्यरहिताः। जागरूका इत्यर्थः। युवतयः नित्यतरुण्यः। अजरामरणा इत्यर्थः। एवंभूताः दश प्राच्याद्या दशसंख्याकाः दिशः गर्भम् मेघेषु गर्भरूपेणान्तर्वर्तमानम् त्वष्टुः दीप्तात् मध्यमात् वायोः सकाशात् इमम् जनयन्त वैद्युतमग्निम् उत्पादयन्ति। कीदृशमग्निम्। विभृत्रम् सर्वेषु भूतेषु विहृतम्। जाठररूपेण विभज्य वर्तमानमित्यर्थः। तिग्मानीकम् तीक्ष्णमुखं तीक्ष्णतेजसम्। अत एव हि वैद्युताग्निदर्शनात् दृष्टिः प्रतिहन्यते। स्वयशसम् स्वायत्तयशस्कम्। अतिशयेन यशस्विनमित्यर्थः। जनेषु जनपदेषु सर्वेषु देशेषु विरोचमानम् विशेषेण दीप्यमानम्। बहूनामुपकारकमित्यर्थः। एवंभूतम् सीम् एनमग्निम् परि परितः सर्वतः नयन्ति स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति ॥ २ ॥

---

१. यस्मिन् ति. २. ज्वलन् कु; °ज्वलयत् अ ति. ३. जनयितव्यः अ ति. ४. °ग्रत्वादेतत्सा° ति. ५. °पूरणम् ति. ६. नास्ति वि[1] अ[2].

त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्र दिशं पार्थिवानामृतून् प्रशासद् वि दधावनुष्ठु ॥ ३ ॥

त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् । दिवि । एकम् । अप्ऽसु ।
पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्ठु ॥३॥

**स्कन्द०** त्रीणि जाना जन्मानि परि भूषन्ति परिपूर्वो भवतिः सर्वत्र परिग्रहे । परिगृह्णन्ति । अस्य अग्नेः । सत्सु[१] अप्यन्येषु जन्मसु सारभूतत्वात् त्रीण्येव जन्मान्यस्याग्नेः परिगृह्णन्तीत्यर्थः । कतमानि । उच्यते । समुद्रे एकम् बाडवात्मना । दिवि एकम् आदित्यात्मना । अप्सु[२] अप्शब्दोऽत्रोदकवचनः अन्तरिक्षनाम [३]वा । वृष्टिलक्षणासु अप्सु[३] अन्तरिक्षे वा[४] अपरं वैद्युतात्मना । किञ्च[५] पूर्वाम् अनु प्र दिशम् अनुशब्दो 'लक्षणेत्थंभूताख्यान°' ( पा १, ४, ९० ) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः प्रशासदित्याख्यातेन सम्बन्धयितव्यः । प्रशब्दस्तूपसर्गः । पूर्वां दिशं प्रति । पूर्वस्यां दिश्याहवनीयात्मना व्यवस्थापितः सन्नित्यर्थः । पार्थिवानाम् पृथिव्यां सम्भवानां यजमानानाम् ऋतून् यागकालान् प्रशासत् प्रकर्षेण कथयन्निव वि दधौ विदधाति । करोतीत्यर्थः । किम् । उच्यते । अनुष्ठु यागकर्म । यागं करोतीत्यर्थः ॥ ३ ॥

**वेङ्कट०** जनाः[६] स्तोतारः अस्य त्रीणि जन्मानि अलङ्कुर्वन्ति — अन्तरिक्षस्थम् एकम्, [६]दिव्यम् अपरम्, अप्सु अपरम्[६] । सोऽयं प्राचीम् दिशम् प्रति स्थित्वा मनुष्याणां व्युच्छनेन[७] कालान् प्रशासत्[८] कल्याणं प्रकर्षेण विदधाति इति । औषसम्[९] अग्निम् आह । औषसाग्निप्रधानं वेदं सूक्तम् । अत्र कात्यायनः — 'औषसाय वाऽग्नये' ( ऋअ २, १, ९५ ) इति ॥ ३ ॥

**मुद्गल०** अस्य अग्नेः त्रीणि त्रिसंख्याकानि जाना जननानि जन्मानि परि भूषन्ति परितः सर्वतः अलङ्कुर्वन्ति । समुद्रे अब्धौ वडवानलरूपेण एकम् जन्म, दिवि द्युलोके आदित्यात्मना एकम्, अप्सु अन्तरिक्षे वैद्युताग्निरूपेण एकम् । एवमग्निस्त्रेधाऽऽत्मानं विभज्य त्रिषु स्थानेषु वर्तत इत्यर्थः । तत्रादित्यात्मना वर्तमानः सोऽग्निः ऋतून् वसन्ताद्यान् षडृतून् अनु प्रशासत् प्रकर्षेण विभक्ततया ज्ञापयन्[१०] पार्थिवानाम् पृथिव्याः सम्बन्धिनां सर्वेषां प्राणिनाम् पूर्वाम् प्राचीम् प्र दिशम् प्रकृष्टां ककुभम् अनुष्ठु सम्यगनुक्रमेण वि दधौ कृतवान् ॥ ३ ॥

क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।
बह्वीनां गर्भो अपसामुपस्थान्महान् कविर्निश्चरति स्वधावान् ॥ ४ ॥

कः । इमम् । वः । निण्यम् । आ । चिकेत । वत्सः । मातॄः । जनयत । स्वधाभिः ।
बह्वीनाम् । गर्भः । अपसाम् । उपऽस्थात् । महान् । कविः । निः । चरति । स्वधाऽवान् ॥ ४ ॥

---

१. नास्ति ति. २. नास्ति मूको. ३-३. °नाम ··· णास्वप्सु ति. ४. च अ ति. ५. नास्ति ल. ६-६. दिव्यपरम् अप्स्वेकम् कु. ७. व्युचरणेन वि[१] अ[२]. ८. प्रशंसत् वि[१] अ[२]; °सन् वि[२] ल अ[१]; नास्ति वि[१]. ९. औषसाग्निम् वि[१] अ[१]; औषम् लपं. १०. पालयन् मै[२].

**स्कन्द०** कः इमम् अग्निम् वः[1] युष्माकमृषीणां ब्राह्मणानां मध्ये निण्यम् अन्तर्हितम् आ चिकेत जानाति। कतमम्। उच्यते। योऽयं वत्सः[2] वत्सस्थानीयः। अपत्यभूतः सन्नित्यर्थः। मातॄः ओषधिवनस्पतयोऽत्र मातर उच्यन्ते, अग्नेर्जनकत्वात्। जनयत वैद्युतात्मना व्यवस्थितः सन् जनयति। स्वधाभिः 'स्वधा' ( निघ १,१२ ) इत्युदकनाम। वृष्टिलक्षणैरुदकैः। यश्च बह्वीनाम् ओषधीनां दिशां वा गर्भः अपत्यभूतः अपसाम् उपस्थात् अपांसि कर्माणि, तान्युपगम्य यत्र तिष्ठन्ति सोऽपसामुपस्थो यज्ञः आहवनीयो वा, तस्मात् महान् कविः मेधावी निः चरति देवान् प्रति गन्तुं निर्गच्छति। स्वधावान् हविर्लक्षणेनान्नेनान्नवान्। हवींष्यादायेत्यर्थः॥ ४॥

**वेङ्कट०** युष्माकं[3] मध्ये कः एनम् अन्तर्हितम्[4] जानाति[5]। वत्सः सन्नोषधीनाम् मातॄः जनयति[6] [7]उदकैः वैद्युतः। बह्वीनाम् दिशां गर्भभूतः असौ अपाम् उदधिस्थानाम्† मध्यात् महान् क्रान्तदर्शनः‡ निः चरति बलवान्[7]॥ ४॥

**मुद्गल०** हे ऋत्विग्यजमानाः! निण्यम् निर्णीतम्[8] अबादिषु गर्भरूपेणान्तर्हितम् इमम् अग्निम् वः युष्माकं मध्ये कः आ चिकेत को जानाति। न कोऽपीत्यर्थः। सोऽयमग्निः वत्सः मेघस्थानाम् अपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् मातॄः तस्य मातृस्थानीयानि वृष्ट्युदकानि स्वधाभिः हविर्लक्षणैरन्नैः जनयत उत्पादयति। अपि च बह्वीनाम् मेघस्थानामपाम् गर्भः वैद्युतरूपेण गर्भस्थानीयः सोऽग्निः अपसाम् उपस्थात् समुद्रात् निः चरति ओजसाऽग्निरूपेण [9]आदित्यः सन् निर्गच्छति। कीदृशः। महान् तेजसा प्रौढः कविः[9] क्रान्तदर्शी स्वधावान् हविर्लक्षणान्नवान्। एक एवाग्निः होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मना औषसरूपेणादित्यात्मना[10] च विभज्य वर्तत इत्यर्थः॥ ४॥

## आविष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्माना॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑।
## उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात् प्रती॒ची सिं॒हं प्रति॑ जोषयेते॥ ५॥

आ॒विः॒ऽत्यः॑। व॒र्ध॒ते॒। चारुः॑। आ॒सु॒। जि॒ह्माना॑म्। ऊ॒र्ध्वः। स्वऽय॑शाः। उ॒पऽस्थे॑।
उ॒भे इति॑। त्वष्टुः॑। बि॒भ्य॒तुः॒। जाय॑मानात्। प्र॒ती॒ची इति॑। सिं॒हम्। प्रति॑। जो॒ष॒ये॒ते॒ इति॑॥ ५॥

**स्कन्द०** आविश्शब्दः प्रकाशवचनः। आविरेव आविष्ट्यः स्वार्थे त्यप्प्रत्ययः। 'अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि' ( पावा ४,२,१०४ ) इति। सर्वलोकप्रकाशः अग्निः वर्धते चारुः शोभनः आसु 'बह्वीनां गर्भः' ( ऋ १,९५,४ ) इति पूर्वस्यामृचि आदिष्टानामोषधीनामयमन्वादेशः। आस्वोषधीषु। अथवा बह्वीनां गर्भ इति बह्वीशब्देन दिश[11] उच्यन्ते। तत आस्विति तासामन्वादेशः। [12]तदा च† वर्धत इति भूतकाले व्यत्ययेन लट् द्रष्टव्यः। त्वष्टुः सकाशाज्जनयित्वा आसु दिक्षु सर्वलोकप्रकाशोऽग्निरवर्धतेत्यर्थः‡। कीदृशीषु आसु। जिह्मानाम् जिह्मशब्दोऽनृजुवचनः। सप्तम्यर्थे षष्ठी। जिह्मासु। तिर्यग्व्यवस्थितास्वित्यर्थः। कथं वर्धते। उच्यते। ऊर्ध्वः[12]

---

१. नास्ति ति. २. नास्ति मूको. ३. वः युष्मा° कु; वः युष्माकम् ऋषीणां ब्राह्मणानाम् वि[1] अ[2]. ४. °र्हितानि कु; °र्हिताति अ[1] वि[1,2] लपं. ५. नास्ति वि[1,2] अ[1] ल लपं. ६. °यन्ति ल वि[1,2] कु. ७-७. नास्ति वि[2]. † उदधास्थानात् वि[1,2] अ[1] ल लपं; उदस्थात् कु; °स्थाना वि[2] अ[2]. ‡ कान्त° वि[2] अ[2]. ८. °तम् एवंभूतम् मूको. ९-९. नास्ति मै[1]. १०. औषध° मै[2] ११. नास्ति अ. १२-१२. नास्ति अ, † च वर्धते मूको. ‡ °ग्निर्वर्धत इ° मूको.

[1]ऊर्ध्वज्वलनस्वभावक एव ह्यग्निः। कीदृशः। स्वयशाः आत्मनिमित्तकीर्तिः। न च केवलास्वासु। किं तर्हि। उपस्थे उपस्थो यज्ञः आहवनीयो वान्तरिक्षं वा, तत्र च। अथवा उपस्थ इत्येतत् आसु इत्येतेन विशेष्यते, न समुच्चीयते। उपस्थशब्दश्च† स्थानवचनः। आस्वोषधीषु दिक्षु वा यदग्नेः स्थानं तत्रेत्यर्थः। किञ्च उभे द्यावापृथिव्यौ बिभ्यतुः भीते आस्ताम् त्वष्टुः सकाशात् दशस्वपि दिक्षु जायमानात् अतिवृद्धादग्नेः। भीते च सत्यौ प्रतीची अञ्चतिर्गत्यर्थः। अग्निमेव प्रतिगते। ‡अग्निपरिचर्यापरे सत्यावित्यर्थः‡। सिंहम् लुप्तोपममेतत्। सिंहसदृशं दुरभिभवमग्निम्§ प्रति जोषयेते जुषिरत्र प्रीत्यर्थः। प्रतिशब्दश्च धात्वर्थानुवादी। भूते लट्। अप्रीणयतम्¶। दशभिरपि दिग्भिः सहाऽमृतेन अतर्पयतमित्यर्थः[1]* ॥ ५ ॥

**वेङ्कट०** [2]आविष्ट्यः वर्धते चारुः[2] अग्निः आसु अप्सु तिर्यग् गच्छन्तीनाम् अपाम् उपस्थे। स्वयमूर्ध्वः[3]। त्वष्टुः जायमानात् और्वाद्[4] अग्नेः द्यावापृथिवी उभे अपि बिभ्यतुः। अपि च एनम् सिंहम् इव बलिनम् अभिमुखे सेवेते[5]। अत्र निरुक्तं द्रष्टव्यम् ( ८, १४;१५ ) इति[6] ॥ ५ ॥

**मुद्गल०** आसु मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निः चारुः शोभनदीप्तिः सन् आविष्ट्यः वर्धते आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति। किं कुर्वन्। जिह्मानाम् कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपाम् उपस्थे उत्सङ्गे स्वयशाः स्वायत्तयशस्कोऽग्निः ऊर्ध्वः ऊर्ध्वज्वलनः सन्। अकारणासु अप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलन्नित्यर्थः। अपि च उभे द्यावापृथिव्यौ त्वष्टुः दीप्तात् जायमानात् उत्पद्यमानात् तस्मादग्नेः प्रति बिभ्यतुः [7]भयं प्रापतुः[7]। तदनन्तरम् उत्पन्नम् सिंहम् सहनशीलम् अभिभवनशीलं तमग्निम् प्रतीची प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवत्यौ जोषयेते सेवेते ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये प्रथमो वर्गः ॥

उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः।
स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥ ६ ॥

उभे इति। भद्रे इति। जोषयेते इति। न। मेने इति। गावः। न। वाश्राः। उप। तस्थुः। एवैः। सः। दक्षाणाम्। दक्षऽपतिः। बभूव। अञ्जन्ति। यम्। दक्षिणतः। हविःऽभिः ॥ ६ ॥

**स्कन्द०** [8]उभे द्यावापृथिव्यौ भद्रे कल्याण्यौ जोषयेते जुषिरत्र सेवार्थः। स्वार्थे णिच्। सेवितवत्यौ। त्वाष्ट्रमग्निम् अतिप्रवर्धमानं परिचरितवत्यावित्यर्थः। कथम्। न मेने 'मेना ग्नाः' इति स्त्रीणां नामनी ( तु. या ३,२१ )। नशब्दश्चात्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयः। स्त्रियाविव केचित् भर्तारम्। किञ्च गावः न वाश्राः उप तस्थुः यथा वा वाशनस्वाभाविकाः†[8]

---

१-१. नास्ति अ. † °शब्दः ति. ‡-‡ °परि…ते इत्यर्थः ति[1,2]. § भूते च ति. ¶ प्रीण° कु ति. * तर्प° कु ति. २-२. नास्ति वि[2]. ३. त्रुटितम् ल; स्वयमूर्ध्वंगोऽत्रः अ[1] वि[2]; स्वयमूर्द्धनोऽत्रः वि[1]; स्वयमूर्ध्व…कु; स्वयमूर्धनोत्रः लपं. ४. अर्वाग् वि[1] अ[2]. ५. सेवते वि[1,2] अ[1] लपं कु. ६. नास्ति कु. ७-७. नास्ति मूको. ८-८. नास्ति अ. † °स्वाभा° ति.

[1]अचिरप्रसूता गावः स्वान् वत्सान् पयस्तर्पणेनोपतिष्ठन्ति एवं त्वाष्ट्रमग्निम् अतिप्रवर्धमानमुपस्थितवत्यः ता दश† दिशो द्यावापृथिव्यौ च। कुत एतत्। इतिहासात्। केनोपतस्थुः। उच्यते। एवैः अमृततर्पणैः। किञ्च सः अग्निः दक्षाणाम् सर्वबलानाम् दक्षपतिः बभूव यथैव प्रवीणशब्दः प्रकृष्टो वीणायां प्रवीण इत्येवमपि व्युत्पाद्यमानः प्रवीणो व्याकरणे प्रवीणो मीमांसायामित्यादिप्रयोगदर्शनात्‡ प्रकर्षमात्रवचनो विज्ञायते, न वीणाविषयकप्रकर्षवचनः। एवमयमपि दक्षपतिशब्दः दक्षस्य §पतिर्दक्षपतिरित्येवमपि व्युत्पाद्यमानोऽधिपतिमात्रवचनो§ द्रष्टव्यः। अधिपतिर्भवतीत्यर्थः। अञ्जन्ति अञ्जतिर्गत्यर्थः। शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः। होमार्थमुपगच्छन्ति। यम् आहवनीयात्मना स्थितम्। दक्षिणतः दक्षिणस्यां दिशि। हविर्भिः 'इत्थंभूतलक्षणे' (पा २, ३, २१) इत्येवमेषा तृतीया। अपि भवान् कमण्डलुना छात्रमद्राक्षीद् इति यथा। गृहीतहविष्का इत्यर्थः[1] ॥ ६ ॥

**वेङ्कट०** उभे स्त्रियौ द्यावापृथिव्यौ कल्याण्यौ अग्निं सेवेते। न इति पूरणम्[2]। गावः इव शब्दकारिण्यः वत्सम् एनं गमनैः ऋत्विजः उपतिष्ठन्ति। सः अयं [3]बलपतिः† अभवत्, यम् एनं यज्ञस्थम् अध्वर्यवः अपरेण‡ आहवनीयं दक्षिणाऽतिक्रम्य§ तत्र स्थिताः हविर्भिः सिञ्चन्ति$[3] ॥ ६ ॥

**मुद्गल०** उभे द्यावापृथिव्यौ भद्रे भजनीये शोभमाने मेने स्त्रियौ जोषयेते न सेवेते इव। यथा शोभने स्त्रियौ चामरहस्ते राजानम् उभयतः सेवेते एवं द्यावापृथिव्यौ एनमग्निम् उभयतः सेवेते इत्यर्थः। अपि च वाश्राः हंभारवं कुर्वत्यः गावः न गावो यथा एवैः स्वकीयैश्चरित्रैरादरातिशयेन स्वकीयान् वत्सान् उप तस्थुः सङ्गच्छन्ते, तथेममग्निम् उपस्थिते भवतः। अतः सः अग्निः दक्षाणाम् सर्वेषां बलानाम् दक्षपतिः बलाधिपतिः बभूव आसीत्। बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः। यम् अग्निम् दक्षिणतः आहवनीयस्य दक्षिणभागे अवस्थिताः ऋत्विजः हविर्भिः चरुपुरोडाशादिभिः अञ्जन्ति आर्द्रीकुर्वन्ति तर्पयन्ति। सोऽग्निरिति पूर्वेणान्वयः ॥ ६ ॥

## उद् यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन्।
## उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥ ७ ॥

उत्। यंयमीति। सविताऽइव। बाहू इति। उभे इति। सिचौ। यतते। भीमः। ऋञ्जन्।
उत्। शुक्रम्। अत्कम्। अजते। सिमस्मात्। नवा। मातृऽभ्यः। वसना। जहाति ॥ ७ ॥

**स्कन्द०** [4]उत् यंयमीति[4] [5]देवपरिवेषणवेलायां यदुद्यमनं† तदिहाभिप्रेतम्। देवान् परिवेष्टुं हवींष्यादाय पुनःपुनरुद्यच्छति। सविता इव यजमाननामैतच्छाकपूणिना पठितम्। यजमान इव। बाहू बाहुसम्बन्धात् हस्तावेवात्र बाहुशब्देन लक्ष्येते‡। आत्मीयौ हस्तौ। देवान् परिवेष्टुं हस्ताभ्यां हवींष्यादाय यजमानवत् पुनःपुनरग्निरुत्क्षिपतीत्यर्थः। सविताऽत्र आदित्य एव वाऽभिप्रेतः। तथाहि मन्त्रान्तरेऽप्यस्य[5]

---

१-१. नास्ति अ. † नास्ति ति. ‡ °यामिनिप्र° ति. §-§ पतिरिति व्युत्पाद्यमानोऽपि पतिमात्र° ति.
२. रणः अ[1] कु. ३-३. नास्ति लपं. † बले पतिः वि[1,2] ल; बले बलपतिः कु. ‡ अवरेण वि[1]; परेण ल. § दक्षिणाग्निमति° वि[3] अ[2]. $ नास्ति वि[3] अ[2]. ४-४. नास्ति मूको. ५-५. नास्ति अ. † यदुच्यम° ति. ‡ लक्ष्यते मूको.

'ऊर्ध्वहस्तत्वं दृश्यते। 'उदू अयाँ उपवक्तेव' ( ऋ ६,७१,५ ) इति यथा। ऐतिहासिकाश्च प्रतिमासु चित्रकर्मसु ऊर्ध्वहस्तमेव† सवितारं स्मरन्ति । हवींष्युत्क्षेप्तुमादित्य इव हस्तौ उद्यच्छतीत्यर्थः। उभे सिचौ यजते सिचशब्दोऽत्र वस्त्राञ्चलवचनः। 'पितुर्न पुत्रः सिचमा रभे ते' ( ऋ ३,५३,२ ) इति यथा। यततिरपि सामर्थ्यात् सन्नहनार्थः। उभे अपि वस्त्राञ्चले गाढं सन्नह्यति‡। परिकरबन्धं च करोतीत्यर्थः। अथवा उत् ययंमीति होमवेलायां यदुद्यमनं तदिहाभिप्रेतम्। होमवेलायाम् अग्निरात्मीयौ हस्तौ आहुतीः प्रतिग्रहीतुं§ प्रसारयतीत्यर्थः। उभे सिचौ यतते इत्यपि आज्यसेचनात् जुहूपभृतौ¶ उच्येते। यततिरपि सामर्थ्याच्चुम्बनार्थः। उभे अपि जूहूपभृतौ¶ चुम्बतीत्यर्थः[1]। भीमः अतिप्रज्वलितत्वात्[2] भयानकः। ऋञ्जन् प्रसाधयन् आत्मानं यज्ञं सिचौ वा। किञ्च उत् शुक्रम् अत्कम् अजते अत्कशब्दोऽत्र रूपवचनः। 'सचा यदासु जहतीष्वत्कम्' ( ऋ १०,९५,८ ) इति यथा। अजतिरपि क्षेपणार्थः। शुक्रमात्मीयज्वालाख्यं रूपमुत्क्षिपति। ऊर्ध्वं ज्वलतीत्यर्थः। सिमस्मात् सर्वस्मादाहवनीयागाराद्[3] अन्यतो वा स्थानात्। किञ्च नवा मातृभ्यः वसना जहाति नवानि वसनानि। वसनानि तमांस्यत्राभिप्रेतानि, अचिरोत्पन्नत्वादाच्छादकत्वाच्च दिशाम्। मातरः अपि[4] दिशः, त्वाष्ट्रात्मनोऽग्नेर्जनकत्वात्। जहातीत्यपि लट् भूते काले। अचिरोत्पन्नानि तमांसि दिग्भ्यः त्वाष्ट्रोऽग्निरजहात्। अपनीतवानित्यर्थः। अथवा ओषधिवनस्पतयोऽत्र मातर उच्यन्ते। तासां नवानि वसनानि अजीर्णास्त्वचः। मातृभ्य इति षष्ठ्यर्थे पञ्चमी। ओषधिवनस्पतीनामजीर्णास्त्वचः अग्निर्दग्ध्वा जहातीत्यर्थः ॥ ७ ॥

**वेङ्कट०** यथा [5]उद्बाहुः† सविता उदेति, तद्वद् अयमात्मीयं तेजः उद्यच्छति। सोऽयम्‡ उभे सिचौ सिक्‡ सिञ्चतः। द्यौरुदकैः पृथिवीं सिञ्चति, पृथिवी§ हविर्भिः दिवम्, ते उभे अपि अभिगच्छति तेजसा प्रकाशयति। भयङ्करोऽग्निः शुक्रम् रूपमादत्ते सर्वस्मात्। नवानि च वसनानि ज्वालाख्यानि अद्भ्यः विसृजत्यासां मध्याद् उत्तिष्ठन्[5] ॥ ७ ॥

**मुद्गल०** सवितेव सर्वस्य प्रेरक आदित्यो यथा बाहू बाहुस्थानीयान् रश्मीनुद्गमयति, तथाऽयमौषसोऽग्निः स्वकीयानि तेजांसि उत् यंयमीति भृशमुद्यतानि ऊर्ध्वाभिमुखानि करोति। तदनन्तरम् भीमः सर्वेषां भयङ्करोऽग्निः उभे सिचौ उभे द्यावापृथिव्यौ ऋञ्जन् प्रसाधयन् स्वतेजसाऽलङ्कुर्वन् यतते स्वव्यापारे प्रयतते। तदनन्तरम् सिमस्मात् सर्वस्मात् भूतजातात् शुक्रम् दीप्तम् अत्कम् सारभूतं रसम् उत् अजते रश्मिभिरूर्ध्वमादत्ते। अपि च मातृभ्यः स्वमातृस्थानीयेभ्यो वृष्ट्युदकेभ्यः सकाशात् नवा नवानि प्रत्यग्राणि वसना सर्वस्य जगत आच्छादकानि तेजांसि जहाति उद्गमयति ॥ ७ ॥

त्वेषं रूपं कृणुत उत्तरं यत् संपृञ्चानः सदने गोभिरद्भिः।
कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ ८ ॥

---

१-१. नास्ति अ. † °हस्तं ति. ‡ नह्यति मूको. § ग्रहीतुं ति. ¶ °पहृतौ कु. २. अभिप्र° ति. ३. °याङ्गाराद् अ. ४. नास्ति ति. ५-५. नास्ति वि[1] अ[2]. † बाहुः लपं. ‡ सिद् कु; सिते वि[2] अ[1]. § पृथिवीं कु.

त्वेषम् । रूपम् । कृणुते । उत्ऽतरम् । यत् । सम्ऽपृञ्चानः । सदने । गोभिः । अत्ऽभिः ।
कविः । बुध्नम् । परि । मर्मृज्यते । धीः । सा । देवऽताता । सम्ऽइतिः । बभूव ॥ ८ ॥

**स्कन्द०** त्वेषम्[१] **दीप्तम् आत्मरूपम् अग्निः** कृणुते **कुरुते**। उत्तरम् **सर्वत उत्कृष्टतरम्**। यत् **सप्तम्या अत्र[१] लुग्द्रष्टव्यः। यत्र** संपृञ्चानः **सम्पृच्यमानः** सदने **यज्ञगृहे** गोभिः अद्भिः **गोशब्दोऽत्र स्तुतिवचनः**। 'गोभिर्यदीमन्ये अस्मत्' ( ऋ ८,२,६ ) **इति यथा। स्तुतिभिः सोमरसलक्षणाभिश्चाद्भिः। स्तुतिभिः[१] स्तूयमानः सोमेन च हूयमान इत्यर्थः।** कविः **मेधावी**। बुध्नम् परि मर्मृज्यते **बुध्नमन्तरिक्षम्, तच्च तमोऽपनयनेन सर्वतः शोधयति**। धीः सा देवताता 'धीः' ( निघ २, १ ) **इति कर्मनाम**। [३]**सङ्गच्छन्ते यस्यां**[३] देवाः **सा**[४] समितिः बभूव **भवति। यत्र यज्ञकर्मणि दीप्तमात्मनो रूपमग्निः करोति, अन्तरिक्षाच्च तमोऽपनयति, तत्रैव देवाः सङ्गच्छन्ते, नान्यत्रेत्यर्थः** ॥ ८ ॥

**वेङ्कट०** [५]**दीप्तम्** रूपम् कृणुते, यत् **रूपम् उद्धततरं भवति, संसृजन् समुद्रे तेजोभिः** अद्भिः† **च। क्रान्तः‡ ध्यानात्मकः$ मूलम् उदकं ज्वालाभिः**[५] [६]**परिमार्ष्टि। सोऽयं**[६] **देवैः ततः सङ्घः भवति। प्रकाशते पूर्वस्यां दिशि** ॥ ८ ॥

**मुद्गल०** सदने **अन्तरिक्षे** गोभिः **गन्त्रीभिः** अद्भिः **मेघस्थाभिः सह** संपृञ्चानः **वैद्युतरूपेण संयुक्तः सन्** त्वेषम् **दीप्तं सर्वैर्द्रष्टुमशक्यम्** उत्तरम् **उत्कृष्टतरम्** रूपम् **वैद्युतं प्रकाशम्** यत् **यदा** कृणुते **करोति, तदानीम्** कविः **क्रान्तदर्शी** धीः **सर्वेषां धारकः सोऽग्निः** बुध्नम् **सर्वस्योदकस्य मूलभूतमन्तरिक्षम्** परि मर्मृज्यते **परितो मार्ष्टि स्वतेजसाच्छादयति। तस्याग्नेः** सा देवताता **देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती**[७] समितिः बभूव[८] **तेजसां संहतिर्भवति**[८] ॥ ८ ॥

उरु ते जयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥ ९ ॥

उरु । ते । जयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम ।
विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥ ९ ॥

**स्कन्द०** उरु **विस्तीर्णम्** ते **तव स्वभूतम्** जयः **जयतिर्गतिकर्मा** ( तु. निघ २,१४ )**। गमनस्वभावकम्** परि एति **परिगच्छति। सर्वतो व्याप्नोतीत्यर्थः।** बुध्नम् **अन्तरिक्षम्**। विरोचमानम् **विविधं दीप्यमानम्**। महिषस्य **महन्नामैतत्** (तु. निघ ३,३)**। महतो भवतः।** धाम **तेजः। य ईदृशोऽसि, स**[१] **त्वम्** विश्वेभिः **सर्वैः** हे अग्ने! स्वयशोभिः **आत्मनिमित्तं यशो येषु पालनेषु**[४] **तानि स्वयशांसि तैः**[४] इद्धः **दीप्तः सन्** अदब्धेभिः **अहिंसितैः** पायुभिः **पालनैः** पाहि **रक्ष** अस्मान् ॥ ९ ॥

---

१. नास्ति मूको. २. नास्ति अ. ३-३. °न्ते यस्ति न् कु; °न्ते यस्य अ; संशयस्य ति. ४. नास्ति ति. ५-५. नास्ति वि[१] अ[२]. † अद्भ्यः वि[१] लपं; आमिः वि[२]. ‡ कान्त लपं. $ °त्मानः अ[१] कु वि[१,२]; ऋ लपं. ६-६. °र्धयं वि[१] अ[२]; °सेयं वि[१,२] अ[१] कु. ७. °ती तस्याग्नः मै[१]. ८-८. सा संहविर्भ° मूको.

**वेङ्कट०** विस्तीर्णं गच्छत्[1] तव तेजः परि गच्छति मूलम् विरोचमानम् महतः। सर्वैः अग्ने[2]! स्वकीर्तिभिः समिद्धः अनुपहिंसितैः पालनैः अस्मान् रक्ष ॥ ९ ॥

**मुद्गल०** महिषस्य महतः ते तव क्षयः राक्षसादीनाम् अभिभावकम् विरोचमानम् विशेषेण दीप्यमानम् उरु विस्तीर्णम् धाम तेजः बुध्नम् अपां मूलभूतम् अन्तरिक्षम् परि एति परितो व्याप्नोति। हे अग्ने! इद्धः अस्माभिः प्रज्वलितः सन् विश्वेभिः सर्वैः स्वयशोभिः आत्मीयैस्तेजोभिः अस्मान् पाहि रक्ष। कीदृशैः। अदब्धेभिः राक्षसादिभिरहिंसितैः पायुभिः पालनशक्तैः ॥ ९ ॥

धन्वन्त्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।
विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥ १० ॥

धन्वन् । स्रोतः । कृणुते । गातुम् । ऊर्मिम् । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षाम् ।
विश्वा । सनानि । जठरेषु । धत्ते । अन्तः । नवासु । चरति । प्रऽसूषु ॥ १० ॥

**स्कन्द०** [3]धन्वन् स्रोतः[3] 'धन्व' (निघ १,३) इति अन्तरिक्षनाम। 'स्रोतः' (निघ १,१२) इत्यप्युदकनाम। हविर्नयनद्वारेणान्तरिक्षे वृष्टिलक्षणमुदकं करोत्यग्निः[4]। गातुम् गमनस्वभावकम् ऊर्मिम् अत्यन्तप्रभूतम्। शुक्रैः च ऊर्मिभिः ज्वालाभिः अभि नक्षति अभिव्याप्नोति क्षाम् पृथिवीम्। विश्वा सर्वाणि च[5] सनानि पुराणान्यन्नानि जठरेषु उदरेषु धत्ते धारयति। धारणेन चात्र पाकरहितस्यान्नस्य उदरेषु धारयितुमशक्यत्वात् हेतुभूतौदनत्वाद्यापत्तिरूपः[6] कार्यभूतो वा रसलोहितमांसत्वाद्युत्पत्तिरूपः पाको लक्ष्यते। अन्नानि चौदनादिरूपेण रसादिरूपेण वा[7] जाठरात्मनाग्निः पचतीत्यर्थः। अन्तः मध्ये च नवासु [3]चरति प्रसूषु[3] नवानां चरति अग्निः प्रसूतानामोषधीनाम् अन्तर्गतः। अग्न्यायत्तो हि प्रसूतानामोषधीनां फलपाकः। अत एतदुच्यते— अन्तर्नवासु चरति प्रसूषु इति ॥ १० ॥

**वेङ्कट०** अन्तरिक्षे सन्ततं गमनशीलं तेजःसङ्घातं करोति। शुक्रैः तेजोभिः अभि व्याप्नोति द्याम्। विश्वानि च अन्नानि स्वोदरेषु धारयति। अन्तः चरति नवासु मातृषु अप्सु[8] ॥ १० ॥

**मुद्गल०** धन्वन् धन्वनि नभसि गातुम् गमनशीलम् ऊर्मिम् उदकसंघम् अयमग्निः स्रोतः कृणुते स्रोतसा प्रवाहरूपेण[9] युक्तं करोति। शुक्रैः निर्मलैः ऊर्मिभिः तैर्जलसङ्घैः क्षाम् भूमिम् अभि नक्षति अभिव्याप्नोति। स्वतेजोभिरन्तरिक्षे जलसङ्घमुत्पाद्य तेन सर्वां भूमिमभिवर्षतीत्यर्थः। पश्चात् विश्वा सर्वाणि सनानि अन्नानि जठरेषु धत्ते अवस्थापयति। तदर्थम् नवासु वृष्ट्यनन्तरमुत्पन्नासु प्रसूषु सर्वेषामन्नानां प्रसवित्रीषु ओषधीषु पाकार्थम् अन्तः चरति मध्ये वर्तते। अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते ॥ १० ॥

एवा नो अग्ने समिधा वृधानो रेवत् पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥

---

१. गच्छ वि[1] अ[2]. २. अग्ने वि[1] अ[2]. ३-३. नास्ति मूको. ४. अग्निः करोति ति. ५. वा अ. ६. °दनत्वाप° ति. ७. नास्ति ति. ८. °प्सु नवानामोषधीनामन्तर्गतः वि[1] अ[2]. ९. प्रवाहेण मै[2].

एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥

**स्कन्द०** एव एवमुक्तेन प्रकारेण नः अस्माकं स्वभूतया हे अग्ने! समिधा समिन्धयति[1] इति[2] समित् । स्तुतिरत्राभिप्रेता न काष्ठमयी । तया वावृधानः अत्यर्थं वर्धमानः रेवत् धनसंयुक्तम् । धनायास्माकमित्यर्थः । हे पावक! श्रवसे अन्नाय च वि भाहि विविधं दीप्यस्व[3] । तत् नः मित्रः इत्युक्तार्थः[4] ( ऋ १,९४,१६ द्र. ) ॥ ११ ॥

**वेङ्कट०** एवम् अग्ने! निधीयमानया समिधा वर्धमानः अस्माकं धनयुक्तं अन्नार्थं च[5] दीप्यस्व । सूक्तं[6] प्राग्वैः निरूपणीयम् इति[7] ॥ ११ ॥

**मुद्गल०** हे पावक! शोधक![8] अग्ने! समिधा अस्माभिर्दत्तेन समिदादिद्रव्येण एव एवमुक्तप्रकारेण[9] वृधानः वर्धमानः सन् रेवत् रयिमते धनयुक्ताय नः अस्माकम् श्रवसे अन्नाय वि भाहि विशेषेण दीप्यस्व । अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः । नः अस्माकम् तत् अन्नं मित्रादयः ममहन्ताम् पूजयन्ताम् । रक्षन्त्वित्यर्थः । उत समुच्चये । पृथिवी च द्यौश्चेत्यर्थः ॥ ११ ॥

इति प्रथमाष्टके सप्तमाध्याये द्वितीयो वर्गः ॥

## [ ९६ ]

**स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।**
**आपश्च मित्रं धिषणा च साधन् देवा अग्निं धारयन् द्रविणोदाम् ॥ १ ॥**

सः । प्रत्नऽथा । सहसा । जायमानः । सद्यः । काव्यानि । बट् । अधत्त । विश्वा ।
आपः । च । मित्रम् । धिषणा । च । साधन् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ १ ॥

**स्कन्द०** 'स प्रत्नथेति द्रविणोदसेऽग्नये' ( तु. बृदे ३,१२९ )। 'स प्रत्नथा' इत्येतत्सूक्तं द्रविणोदसेऽग्नये, न शुद्धाय । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः [10]पूर्वेषामप्यङ्गिरःप्रभृतीनामृषीणां न्यधत्त, सः इदानीन्तनानामपि यजमानानाम् प्रत्नथा पुराणानामिव सहसा बलेन[10] मथ्यमानादरणिद्वयात् जायमानः सद्यः तस्यामेव वेलायाम् काव्यानि कविः [10]मेधाव्यग्निः, तस्य[10] यानि कर्माणि हविर्वहनादीनि तानि काव्यानि । बट् [11]अधत्त बट्[11] [12]धारयति । करोतीत्यर्थः[12] । विश्वा सर्वाणि । किञ्च आपः च मित्रम् धिषणा च साधन्[13] अप्शब्दोऽत्र आप्नोतेर्व्याप्तिवचनः, न उदकवचनः । 'धिषणा' ( निघ १,११ ) इति वाङ्नाम । व्याप्त्यश्चाहुतयः स्तुतिलक्षणा च वाक् [14]मित्रम् अग्निं[14] साधन् साधयन्ति । कुर्वन्तीत्यर्थः । कस्य । सामर्थ्यात् यजमानानाम् । किञ्च देवाः अग्निम्

---

१. °न्धति अ कु. २. नास्ति अ. ३. दीप्यसे मूको. ४. °कार्थम् कु. ५. नास्ति कु. ६. युक्तं वि[3] अ[2]. ७. नास्ति वि[1] अ[2] कु. ८. शोधन मै[2]. ९. एवमुक्तेन प्र° मै[2]. १०-१०. नास्ति अ. ११-११. नास्ति अ ति. १२-१२. धारयतीत्यर्थः अ. १३. नास्ति अ ति. १४-१४. अग्निं मित्रम् मूको.

धारयन् धारितवन्तः । निहितवन्त इत्यर्थः । द्रविणोदाम् हविराख्यस्य धनस्य दातारम् । हविषां वोढारम्, ऊर्ध्वं चार्पयितारमित्यर्थः । तदेतत् सौचीकोऽग्निर्वक्ष्यति — 'अथा देवा दधिरे हव्यवाहम्' ( ऋ १०, ५२, ३ ) इति, 'मां देवा दधिरे हव्यवाहम्' ( ऋ १०, ५२, ४ ) इति[1] च ॥ १ ॥

**वेङ्कट०** सः प्रत्न इव बलेन जायमानः तदानीमेव हविर्वहनादीनि कविकर्माणि[2] [3]सर्वाणि एव[3] सत्यमेव[4] धारयति[5] । आपः च अन्तरिक्ष्या माध्यमिका वाक् च मित्रमेनं साधयन्ति वैद्युतम् अग्निम् । तम्[6] इमं धनस्य दातारम् देवाः अधारयन् इति[7] ॥ १ ॥

**मुद्गल०** ''स प्रत्नथा' इति नवर्चं तृतीयं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । द्रविणोदस्त्वगुण-विशिष्टोऽग्निः शुद्धोऽग्निर्वा† देवता[8] ॥

सहसा बलेन जायमानः निर्मथनेनोत्पद्यमानः सः अग्निः सद्यः तदानीमुत्पत्त्यनन्तरमेव प्रत्नथा प्रत्न इव चिरन्तन इव विश्वा विश्वानि सर्वाणि काव्यानि कवेः क्रान्तदर्शिनः प्रगल्भस्य कर्माणि बट् सत्यम् अधत्त अधारयत् । पूर्वं विद्यमान इवाग्निरुत्पत्तेः समकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः । इममग्निं वैद्युतरूपेण वर्तमानं मेघेष्वव-स्थिताः आपः च धिषणा च या माध्यमिका वाक् सा च मित्रम् सखिभूतम् साधन् साधयन्ति कुर्वन्ति । तमिमम् द्रविणोदाम् द्रविणस्य धनस्य दातारम् अग्निम् देवाः ऋत्विजो देवाः धारयन् धारयन्ति ॥ १ ॥

## स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् ।
## विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन् द्रविणोदाम् ॥ २ ॥

सः । पूर्वया । निऽविदा । कव्यता । आयोः । इमाः । प्रऽजाः । अजनयत् । मनूनाम् ।
विवस्वता । चक्षसा । द्याम् । अपः । च । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ २ ॥

**स्कन्द०** प्रकृतिभूम्ना प्रजापतिरूपेणाग्निरत्र स्तूयते । सः पूर्वया निविदा 'अग्निर्देवेद्धः' ( खि ५,५,१ ) इत्येषा निवित्[9] । वाङ्नाम वा निविच्छब्दः ( तु. निघ १,११ ) । तृतीयानिर्देशाच्च [9]स्तूयमान इति[9] शेषः । स प्रकृतोऽग्निः पूर्वया निविदा पूर्वर्षिप्रयुक्तया वाचा स्तूयमानः । कव्यता कवित्वेन । आयोः उर्वशीपुत्रस्य राज्ञः । षष्ठीनिर्देशात् भोग्या इति वाक्यशेषः । इमाः प्रजाः अजनयत् । न च केवलस्यायोः । किं तर्हि । मनूनाम् मनोश्च राज्ञः पुत्राणाम् । न च कवित्वेन केवलेन । किं तर्हि । विवस्वता चक्षसा विवासनमपनयनम्, तद्वता च दर्शनेन । अशेषाज्ञाननिवृत्तिसमर्थेन च ज्ञानेनेत्यर्थः । न च केवलाः प्रजाः । किं तर्हि । द्याम् अपः च । 'आपः' ( निघ १,३ ) इत्यन्तरिक्षनाम । दिवं चान्तरिक्षञ्च । किञ्च देवाः ॥ २ ॥

---

१. नास्ति अ. २. कर्माणि वि[1] अ[2]. ३-३. नास्ति वि[1] अ[2]. ४. नास्ति अ[1]. ५. धारयन्ति वि[2]; साधयति वि[3]; करोति कु; नास्ति अ[2] ल. ६. नास्ति वि[1] लपं. ७. नास्ति कु. ८-८. नास्ति मै[2].
† °द्धोऽग्निः मूको. ९-९. नास्ति अ.

**वेङ्कट०** सः प्रथमया वाचा कवित्वेन च[1] उर्वशीपुत्रस्य आयोः प्रजापतेः इमाः प्रजाः[2] अजनयत् मनुष्याणां दृश्यमानाः। तमसः विवासनेन तेजसा द्याम् [3]अन्तरिक्षं च प्रकाशयति[3] ॥ २ ॥

**मुद्गल०** सः अग्निः पूर्वया प्रथमया 'अग्निर्देवेद्धः' ( खि ५,५,१ ) इत्यादिकया निविदा कव्यता गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता आयोः मनोः सम्बन्धिना उक्थेन च स्तूयमानः सोऽग्निः मनूनाम् सम्बन्धिनीः इमाः प्रजाः अजनयत् उदपादयत्। मनुना स्तुतः सन् मानवीः सर्वाः प्रजाः अजनयदित्यर्थः। तथा विवस्वता विवासनवता विशेषेणाच्छादयता चक्षसा आत्मीयेन तेजसा द्याम् द्युलोकम् अपः च अन्तरिक्षञ्च व्याप्नोतीति शेषः। अन्यत् समानम् ॥ २ ॥

तमी॑ळत प्रथ॒मं य॑ज्ञ॒साधं॒ विश॒ आरी॑राहु॑तमृञ्ज॒सान॑म् ।
ऊ॒र्जः पु॒त्रं भ॑र॒तं सृ॒प्रदा॑नुं दे॒वा अ॒ग्निं धा॑रयन् द्रवि॒णो॒दाम् ॥ ३ ॥

तम् । ई॒ळ॒त॒ । प्र॒थ॒मम् । य॒ज्ञ॒ऽसाध॑म् । विशः॑ । आरीः॑ । आऽहु॑तम् । ऋ॒ञ्ज॒सान॑म् ।
ऊ॒र्जः । पु॒त्रम् । भ॒र॒तम् । सृ॒प्रऽदा॑नुम् । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥ ३ ॥

**स्कन्द०** तम् प्रकृतमग्निम् ईळत स्तुत। प्रथमम् यज्ञस्य साधयितारम्। हे विशः! मनुष्यजातयः! आरीः[4] अर्तेर्वा गत्यर्थस्य रातेर्वा दानार्थस्येदं रूपम्। गन्त्र्यः दात्र्यो वा हविषाम्। आहुतम् मर्यादयाऽभिहुतम्[5]। ऋञ्जसानम् प्रसाधयन्तम्। किम्। सामर्थ्याद्यज्ञम्। सर्वान् अभिप्रेतान् वा[6]। ऊर्जः पुत्रम् ऊर्जःशब्देनात्रान्नकारणत्वाद् वृष्टिलक्षणमुदकमुच्यते बीजावस्थं वाऽन्नम्। तस्य हि पुत्रोऽग्निः पारम्पर्येण तत उत्पद्यमानत्वात्[7]। ततो ह्योषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायत इति। भरतम् ऋत्विजम्। ऋत्विङ्नाम भरतशब्दः ( तु. निघ ३,१८ )। कर्तृवचनो वा। भर्तारं वा सर्वयजमानानाम्। सृप्रदानुम् तत्रतत्र गन्तृ सृप्रम्, [8]'सृप्रं दानं' यस्य स सृप्रदानुः, तं सृप्रदानुम्। तस्मैतस्मै स्तोत्रे यजमानाय च दातारमित्यर्थः।[8] किञ्च देवाः ॥ ३ ॥

**वेङ्कट०** तम् स्तुत प्रथमम् यज्ञस्य साधयितारम् विशः! अभिगन्त्र्य आहुतम् प्रसाधयन्तम् अन्नस्य पुत्रम् देवानां हविषश्च भर्तारं विस्तृतदानम् ॥ ३ ॥

**मुद्गल०** हे विशः! सर्वे मनुष्याः आरीः अग्निं स्वामिनं गच्छन्त्यो यूयम् तम् अग्निम् ईळत स्तुध्वम्। प्रथमम् सर्वेषु देवेषु मुख्यम् यज्ञसाधम् यज्ञस्य दर्शपूर्णमासादेः साधकम् आहुतम् हविर्भिः तर्पितम् ऋञ्जसानम् स्तोत्रैः प्रसाध्यमानम् ऊर्जः अन्नस्य पुत्रम् भुक्तेनान्नेन जाठराग्नेर्वर्धनात् अग्नेरन्नपुत्रत्वम्। भरतम् हविषो भर्तारम्। सृप्रदानुम् सर्पणशीलदानयुक्तम्। अविच्छेदेन धनानि प्रयच्छन्तमित्यर्थः। देवाः इत्यादि गतम् ॥ ३ ॥

स मा॑त॒रिश्वा॑ पु॒रुवा॑रपुष्टिर्वि॒दद् गा॒तुं तन॑याय स्व॒र्वित् ।
वि॒शां गो॒पा ज॑नि॒ता रोद॑स्यो॒र्दे॒वा अ॒ग्निं धा॑रयन् द्रवि॒णो॒दाम् ॥ ४ ॥

---

१. नास्ति कु. २. नास्ति वि[3] अ[2]. ३-३. °क्षम् ··· शयति वि[3] अ[2]. ४. नास्ति अ. ५. °दयाहितं अ. ६. नास्ति अ ति. ७. उत्पाद्य° कु. ८-८. नास्ति अ.

सः । मातरिश्वा । पुरुवारऽपुष्टिः । विदत् । गातुम् । तनयाय । स्वःऽवित् ।
विशाम् । गोपाः । जनिता । रोदस्योः । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ ४ ॥

**स्कन्द०** मातरिश्वसम्बन्धादग्निरेव सः मातरिश्वा इत्युच्यते । कः पुनरग्नेर्मातरिश्वना सम्बन्धः । उच्यते । तेन दृष्टोऽग्निराहृतश्च । हिरण्यस्तूपेन भरद्वाजेन चोक्तम् । 'त्वमग्ने प्रथमो मातरिश्वन आविर्भव' ( ऋ १,३१,३ ), 'आ दूतो अग्निमभरद्विवस्वतः' ( ऋ ६,८,४ ) इति च[1] सौचीकोऽग्निर्दर्शनाहरणाभ्यां[2] मातरिश्वसम्बन्धी । पुरुवारपुष्टिः बहुवरणीयपोषणः । विदत् जानाति । किम्[3] । उच्यते । गातुम् देवलोकगमनमार्गम् । तनयाय अपत्यभूतस्य यजमानस्यार्थाय । कीदृशः । उच्यते । स्वर्वित् सर्वस्य वेदिता । विशाम् गोपाः मनुष्याणां रक्षिता । जनिता रोदस्योः प्रकृतिभूम्ना प्रजापतिरूपेणैषा स्तुतिः । जनयिता द्यावापृथिव्योः । किञ्च देवाः ॥ ४ ॥

**वेङ्कट०** सः[4] अन्तरिक्षे श्वसन् बहुभिः वरणीयपोषः [5]जानाति मार्गं सर्वज्ञः पुत्रभूताय[5] मनुष्यजाताय । विशाम् गोपायिता[6] जनयिता द्यावापृथिव्योः ॥ ४ ॥

**मुद्गल०** सः अग्निः तनयाय अस्मदीयाय पुत्राय गातुम् अनुष्ठानमार्गम् विदत् लम्भयतु[7] । कीदृशः । मातरिश्वा मातरि सर्वस्य जगतो निर्मातरि अन्तरिक्षे श्वसन् वर्तमानः पुरुवारपुष्टिः पुरुभिर्बहुभिर्वारा वरणीया पुष्टिरभिवृद्धिर्यस्य स तथोक्तः । स्वर्वित् स्वः स्वर्गस्य यागद्वारेण लम्भयिता विशाम् सर्वासां प्रजानाम् गोपाः गोपायिता[8] रक्षिता रोदस्योः द्यावापृथिव्योः जनिता जनयिता उत्पादयिता । देवाः इत्यादि गतम् ॥ ४ ॥

## नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची ।
## द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाम् ॥ ५ ॥

नक्तोषसा । वर्णम् । आमेम्याने इत्याऽमेम्याने । धापयेते इति । शिशुम् । एकम् । समीची इति सम्ऽईची ।
द्यावाक्षामा । रुक्मः । अन्तः । वि । भाति । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ ५ ॥

**स्कन्द०** नक्तोषसा 'नक्ता' ( निघ १,७ ) इति रात्रिनाम । रात्र्युषसौ । वर्णम् आमेम्याने [9]'कृष्णः शुक्लश्च'[9] रात्र्युषसोः वर्णः[10] । [11]तमामेम्याने । मीङ्[11] [12]हिंसायाम् । आकार ईषदर्थे[12] । परस्परमीषद्धिंसन्त्यौ । [11]रात्रिर्हि उषसो रूपं स्वेन तेजसा ईषद्धिनस्ति उषा अपि स्वेन ज्योतिषा । ते धापयेते सायमाहुतीः† प्रातराहुतीश्चाग्निं पाययतः । कथम् । शिशुम् एकम् शिशुर्बालः । लुप्तोपमं चैतत् । बालम् इवैकं किंचित् केचित् स्त्रियौ । समीची‡ परस्परेण सङ्गते । किञ्च द्यावाक्षामा रुक्मः अन्तः[13] द्यावापृथिव्योर्मध्ये रुक्मः रोचनोऽग्निः वि भाति विविधं दीप्यते । किञ्च देवाः ॥ ५ ॥

---

१. नास्ति लि. २. सोऽग्निर्दे° अ; °दर्शनहरणाभ्यां लि. ३. नास्ति अ. ४. संबन्धादग्निरेव मातरिश्वोच्यते सः वि[३] अ[२]. ५-५. ताय वि[१'२] ल; तनयाय कु. ६. गोपा वि[३] अ[२]. ७. लम्भयु मूको. ८. गोपयिता मै[२]. ९-९. कृष्णं शुक्लञ्च कु. १०. वर्णं कु; नास्ति अ. ११-११. नास्ति अ. १२-१२. °सायामीष° अ. १३-१३. त्रुटितम् अ. † °हुतिः कु. ‡ नास्ति लि.

**वेङ्कट०** नक्तोषासौ आत्मीयम् वर्णम्[1] अन्योन्यस्याध्यात्मं[2] कुर्वाणे पाययतः[3] उभयोः साधारणं सङ्गते स्वरसं[4] हविरग्निहोत्रम् । स चासौ द्यावापृथिव्योः मध्ये मणिरिव दीप्यते ॥ ५ ॥

**मुद्गल०** नक्तोषासा रात्रिरहश्च वर्णम् स्वकीयं रूपम् आमेम्याने परस्परं पुनःपुनः हिंसन्त्यौ समीची सङ्गते संश्लिष्टे । एवंभूते अहस्त्रियामे एकम् शिशुम् अह्नः पुत्रम् अग्निम् धापयेते [5]हवींषि पाययेते†[5] । रुक्मः रोचमानः सोऽग्निः द्यावाक्षामा द्यावापृथिव्योः अन्तः मध्ये वि भाति विशेषेण प्रकाशते । अन्यत् पूर्ववत् ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये तृतीयो वर्गः ॥

## रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः ।
## अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन् द्रविणोदाम् ॥ ६ ॥

रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । यज्ञस्य । केतुः । मन्मऽसाधनः । वेरिति वेः ।
अमृतऽत्वम् । रक्षमाणासः । एनम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ ६ ॥

**स्कन्द०** रायः धनस्य बुध्नः[6] बुध्नभूतः । आश्रयभूतः[7] इत्यर्थः । संगमनो वसूनाम् सङ्गमयिता च धनानां यजमानैः सह । दाता च धनानां यजमानेभ्य इत्यर्थः । यज्ञस्य केतुः कित ज्ञाने । यज्ञस्य ज्ञाता । अथवा केतुशब्दः पताकावचनः कर्तृवचनो वा । यज्ञस्य पताकाभूतः कर्ता वेत्यर्थः । मन्मसाधनः 'मन्यते' ( निघ ३,१४ ) इत्यर्चतिकर्मा । मन्म मननं स्तुतिः, तस्याः साधयिता । वेः वेतिरिति[8] गतिकर्मा ( तु. निघ १,७ ) । गन्ता हविर्गृहीत्वा देवान् प्रति । किञ्च अमृतत्वम् रक्षमाणासः अमृतत्वं हविर्भक्षणलक्षणं देवत्वम्, तदात्मनो रक्षन्तः । आत्मनो हविर्भक्षणपरिपालनार्थमित्यर्थः । एनम् देवाः ॥ ६ ॥

**वेङ्कट०** धनस्य मूलम्, विविधानि च धनानि[9] सङ्गच्छन्ते अस्मिन्, यज्ञस्य प्रज्ञापकः[10] अभिलषितस्य साधयिता । तम् इमम् आत्मनः अमृतत्वम् रक्षमाणाः देवाः अधारयन् ॥ ६ ॥

**मुद्गल०** योऽग्निः रायः धनस्य बुध्नः मूलभूतः आहुतिद्वारा सर्वेषां धनानां कारणत्वात् । वसूनाम् निवासहेतूनां धनानाम् संगमनः सङ्गमयिता स्तोतॄणां प्रापयिता यज्ञस्य दर्शपूर्णमासादेः केतुः केतयिता ज्ञापयिता वेः आत्मानमभिगच्छतः पुरुषस्य मन्मसाधनः मननीयस्याभिलषितस्य साधयिता । अमृतत्वम् स्वकीयामरणत्वम् रक्षमाणासः पालयन्तः देवाः एनम् द्रविणोदाम् धनस्य दातारम् अग्निम् धारयन् धारयन्ति ॥ ६ ॥

## नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम् ।
## सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन् द्रविणोदाम् ॥ ७ ॥

---

१. नास्ति वि[1] अ[2]. २. °ध्यात्म्यम् वि[1] अ[2]. ३. धापयतः शिशुम् अ[1]; पाययतम् कु ति. ४. स्वसारम् वि[1,2] अ[1] कु ल लपं. ५-५. नास्ति मै[2]. † प्रापयेते मै[1]. ६. नास्ति अ ति. ७. भूतः अ. ८. वेरिति मूको. ९. स्थलानि वि[1] अ[2]. १०. ज्ञापकः वि[1] अ[2].

नु । च । पुरा । च । सदनम् । रयीणाम् । जातस्य । च । जायमानस्य । च । क्षाम् ।
सतः । च । गोपाम् । भवतः । च । भूरेः । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ ७ ॥

**स्कन्द०** नु शब्दोऽत्रेदानीमित्यर्थे । इदानीम् च पुरा च पूर्वस्मिंश्च काले सदनम् स्थानम् रयीणाम् धनानाम् । जातस्य च भूतग्रामस्य च जायमानस्य च क्षाम् पृथिवीनामैतत् ( तु. निघ १,१ )। पृथिवीस्थानीयम् । आश्रयभूतमित्यर्थः । अथवा क्षि निवासगत्योरित्यस्य क्षाशब्दो निवासवचनः । निवासभूतमित्यर्थः । सतः च गोपाम् भवतः च यच्च पूर्वोत्पन्नमस्त्येव यच्चेदानीं भवति तस्योभयस्यापि गोप्तारम् । भूरेः बहुनः । देवाः ॥ ७ ॥

**वेङ्कट०** अद्य च पुरा च आवासस्थानम् रयीणाम्, जातस्य च जायमानस्य च आवासस्थानम्,[१] विद्यमानस्य च[२] गोपायितारम् भवतः च बहोः[३] ॥ ७ ॥

**मुद्गल०** नू च अद्य अस्मिन् काले पुरा च रयीणाम् सर्वेषां धनानाम् सदनम् आवासस्थानम् जातस्य उत्पन्नस्य कार्यजातस्य[४] जायमानस्य उत्पद्यमानस्य च क्षाम् निवासयितारम् सतः च सर्वत्र[५] विद्यमानस्वभावस्य नित्यस्य चाकाशादेः भवतश्च सद्भावं प्राप्नुवतः भूरेः असङ्ख्यातस्यान्यस्य च भूतजातस्य गोपाम् गोपायितारं रक्षितारम् द्रविणोदाम् धनप्रदम् एवंगुणविशिष्टम् अग्निम् देवाः धारयन् हविर्वोढृत्वेन धारयन्ति ॥ ७ ॥

द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।
द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥ ८ ॥

द्रविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् ।
द्रविणःऽदाः । वीरऽवतीम् । इषम् । नः । द्रविणःऽदाः । रासते । दीर्घम् । आयुः ॥ ८ ॥

**स्कन्द०** द्रविणोदाः धनदानस्वभावकोऽग्निः । द्रविणसः तुरस्य तुरशब्दस्त्वरतेः[६] । उभयत्र च द्वितीयार्थे षष्ठी । अश्वादि धनं त्वरणस्वभावकम् । द्रविणोदाः एव सनरस्य इयमपि द्वितीयार्थे षष्ठी । सनरं परिचारकमनुष्यसहितं हिरण्यादि । प्र यंसत् प्रयच्छतु । ददात्वित्यर्थः । द्रविणोदाः एव [७]वीरवतीम् पुत्रसंयुक्ताम् इषम् अन्नम् नः अस्मभ्यं ददातु । द्रविणोदाः एव रासते ददातु दीर्घम् आयुः[७] ॥ ८ ॥

**वेङ्कट०** द्रविणोदाः[८] तुरः त्वरतेः । अश्वादिधनं त्वरणस्वभावकं प्रयच्छतु समनुष्यं च । द्रविणोदाः वीरवत्[९] अन्नम्, द्रविणोदाः दीर्घम् आयुः च प्रयच्छतु ॥ ८ ॥

**मुद्गल०** द्रविणोदाः द्रविणस्य धनस्य दाताऽग्निः तुरस्य त्वरमाणस्य चलतः जङ्गमस्य द्रविणसः धनस्य एकदेशम् प्र यंसत् अस्मभ्यं प्रयच्छतु । तथा द्रविणोदाः [१०]सनरस्य सननीयस्य सम्भजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु । अपि च द्रविणोदाः वीरवतीम् वीरैः पुत्रादिभिर्युक्तम् इषम् अन्नम् नः अस्मभ्यं प्रयच्छतु[१०] द्रविणोदाः दीर्घम् आयुः अस्मभ्यम् रासते प्रयच्छतु ॥ ८ ॥

---

१. वास° वि[१,३] अ[२] लपं. २. नास्ति वि[३] अ[२]. ३. च यच्चेदानीं भवति तस्य बहोः अ[२] वि[३]. ४. नास्ति मै[२]. ५. सर्वस्य मूको. ६. °स्तुरतेः अ ति. ७-७. नास्ति अ. ८. नास्ति वि[१,३] अ[२] कु ल लपं. ९. नास्ति वि[३] अ[२]. १०-१०. नास्ति मूको.

एवा नो अग्ने समिधा वृधानो रेवत् पावक श्रवसे वि भाहि।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ९ ॥

एव। नः। अग्ने। सम्ऽइधा। वृधानः। रेवत्। पावक। श्रवसे। वि। भाहि।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ ९ ॥

**स्कन्द०** एवा नः अग्ने इत्याद्युक्तार्थम् ( ऋ १,९५,११ द्र. ) ॥ ९ ॥

**वेङ्कट०** ऋ १,९५,११ इत्यत्र द्र. ॥ ९ ॥

**मुद्गल०** हे पावक! शोधक! अग्ने! समिधा अस्माभिर्दत्तेन समिदादिद्रव्येण एव एवम् उक्तप्रकारेण[1] वृधानः वर्धमानः सन् रेवत् धनयुक्ताय नः अस्माकम् श्रवसे अन्नाय वि भाहि विशेषेण प्रकाशय। नः अस्माकम् तत् अन्नं मित्रादयः ममहन्ताम् पूजयन्ताम्। रक्षन्तु इत्यर्थः। तथा सिन्धुः अब्देवता। उत समुच्चये द्यावापृथिव्यौ च ममहन्ताम् ॥ ९ ॥

इति प्रथमाष्टके सप्तमाध्याये चतुर्थो वर्गः ॥

## [ ९७ ]

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम्। अप नः शोशुचदघम् ॥ १ ॥

अप। नः। शोशुचत्। अघम्। अग्ने। शुशुग्धि। आ। रयिम्। अप। नः। शोशुचत्। अघम् ॥१॥

**स्कन्द०** [2]अत्र छन्दोगब्राह्मणाधीतमितिहासमाचक्षते—'कुत्सश्च लुशश्च इन्द्रं[2] व्यह्वयेताम्। स इन्द्रः कुत्समुपावर्तते तं[3] शतेन वाद्ध्रर्यीभिरण्डयोरबध्नात्[4]' (तांब्रा ९,२,२२) इति। अत्र च वाधा वार्ध्र्य[5] उच्यन्ते। तदेतल्लुश इन्द्ररूपतामापन्नो वक्ष्यति—'प्र मुञ्चस्व परि कुत्सादिहा गहि' ( ऋ १०, ३८, ५ ) इति। स इन्द्रातिक्रमजेन पापेनाभिभूतमात्मानं मन्यमानः तदपनोदनार्थमग्निमुवाच। अप नः शोशुचत् इति। अपपूर्वः शुचिरत्र सामर्थ्यादपनयने। व्यत्ययेन प्रथमपुरुषः। अपनय। नः अस्माकम् अघम् इन्द्रातिक्रमजं पापम्। हे अग्ने! शुशुग्धि आ 'शग्धि' ( निघ ३,१९ ) इति याच्ञाकर्मा पठितः। तस्येदमुपधाया उत्वं छान्दसत्वात्। याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते। आकारश्चात्र मर्यादायाम्। मर्यादया[6] देहीत्यर्थः। रयिम् धनम्। अथवा शुशुग्धीति शुचेरेव दीप्त्यर्थस्येदं रूपम्। आ रयिमिति कर्मोपसर्गश्रुतेर्योग्यक्रियाध्याहारः[7]। दीप्यस्व आहर च धनमित्यर्थः। परस्तु पादो भिन्नमेव[8] वाक्यम्। [9]तेन पुनरुक्तः[9] अर्थः। भूयस्त्वार्थो वा अभ्यासः। 'अभ्यासे[10] भूयांसमर्थं मन्यन्ते, यथा अहो दर्शनीय! अहो दर्शनीय!' ( या १०,४२ ) इति ॥ १ ॥

---

१. उक्तेन प्र° मै[2]. २-२. नास्ति अ. ३. शतं अ कु. ४. वाध्रि° मूको. ५. वाध्रिय मूको. ६ नास्ति अ. ७. °क्रियापदाध्या° ति. ८. भिन्नं वा ति. ९-९. तेना पुन° अ कु. १०. °से हि मूको.

वेङ्कट० 'सर्वमित्रं सन्[1] कुत्स इन्द्रवचनात् दीर्घजिह्वीं नाम राक्षसीं बाधितवान्[2]। अथ तं कुत्सं सुमित्रः सन् क्रूरमकः[3] इत्येवं वागभ्यवदत्। तं शुगाच्छेत् तदपनोदनाय अग्निं स्तौति। सौमित्रं[4] भवति [5]'दीर्घजिह्वी वा'[5] ( तु. तांब्रा १३,६,८-१० ) इत्यादि ताण्ड्यकम्[6]। अस्माकं पापमपगच्छतु अस्मानत्यन्तं दहत्। अग्ने! प्रज्वलय धनम्। अर्धर्चः [7]उत्तरः पूरणः[7] आदरार्थो वा ॥ १ ॥

मुद्गल० 'अप नः' इति अष्टर्चं चतुर्थं सूक्तम्। कुत्स ऋषिः। गायत्री छन्दः। शुचिगुणकोऽग्नि-र्देवता शुद्धाग्निः वा[8]।

अत्रेदमाख्यानम्—'दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे। तां हन्तुम् इन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीत्, एषा त्वया हन्तव्येति। स चावधीत्। तं वागभ्यवदत्— अनुचितमिदं त्वयाचरितम्, यत् त्वं सर्वेषां मित्रभूतः सन् क्रूरम् अकार्षीरिति। तम् ऋषिं शोकः प्राप्नोत्। स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत्'।

हे अग्ने! नः अस्माकम् अघम् पापम् अप शोशुचत् अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु। अपि च अस्माकम् रयिम् धनम् आ समन्तात् शुशुग्धि प्रकाशय। आदरातिशयद्योतनाय पुनः पठ्यते। अप० ॥ १ ॥

## सुक्षेत्रिया सुगातुया वसूया च यजामहे। अप नः शोशुचदघम् ॥ २ ॥

सुऽक्षेत्रिया। सुगातुऽया। वसुऽया। च। यजामहे। अप। नः। शोशुचत्। अघम् ॥ २ ॥

स्कन्द० सुक्षेत्रियादीनि क्यजन्तानि इच्छावचनानि। सर्वत्र तृतीयाया डादेशः। इह तावल्लोके सुक्षेत्रिया[9] शोभनक्षेत्रेच्छया परलोके सुगातुया सुगतीच्छया च वसूया च धनेच्छया च वयं त्वाम् यजामहे। एतानि सर्वाण्यस्मभ्यं देहीत्यर्थः। किञ्च अप नः[10] ॥ २ ॥

वेङ्कट० शोभनक्षेत्रेच्छया शोभनमार्गेच्छया [11]धनेच्छया च[11] वयमग्निम् यजामहे। अप नः शोशुचत् अघम्[12] ॥ २ ॥

मुद्गल० सुक्षेत्रिया शोभनक्षेत्रेच्छया सुगातुया शोभनमार्गेच्छया वसूया च धनेच्छया निमित्तभूतया च यजामहे अग्निं हविर्भिः पूजयामः। अप० ॥ २ ॥

## प्र यद् भन्दिष्ठ एषां प्रास्माकासश्च सूरयः। अप नः शोशुचदघम् ॥ ३ ॥

प्र। यत्। भन्दिष्ठः। एषाम्। प्र। अस्माकासः। च। सूरयः। अप। नः। शोशुचत्। अघम् ॥

स्कन्द० प्र[1] यत् इति व्यत्ययेन नपुंसकता। योऽयं प्रकर्षेण भन्दिष्ठः। भन्दिरर्चतिकर्मा (तु. निघ ३,१४)। स्तोतृतमः एषाम्। अनुदात्तत्वादादेशोऽयं प्रकृतस्याग्नेः। व्यत्ययेन चैकवचनस्य स्थाने बहुवचनम्। अस्याग्नेः। न च केवलोऽहमेव। किं तर्हि। अस्माकासः च अस्मदीयाश्च पुत्राः[13] पौत्राश्च पितृपितामहप्रपितामहा वा येऽस्याग्नेः[14] भन्दिष्ठाः। कीदृशाः[15]। सूरयः स्तोतृनामैतत् ( तु. निघ ३,१६ )। स्तुतिकरणस्वभावकाः।

---

१. सत् वि[1,2] अ[1] ल कु; नास्ति वि[3] अ[2]. २. बाधयित° वि[3]. अ[2] ३. °मकरोत् कु; मकरोः अ[1]. ४ सो वि[1,2] ल; सोऽमित्रं कु. ५-५. °जिह्वीव कु. ६. °ताण्डकम् वि[3] अ[2] कु. ७-७. °रः पूरकः वि[2] कु ल लपं; °रपूर° अ[1] ल. ८ नास्ति मै[1]. ९. नास्ति मूको. १०. नास्ति ति. ११-११. नास्ति वि[1,3] अ[2]. १२. दुःखम् वि[3] अ[1]. १३. °ग्नत्र अ. १४. °ग्नेः प्र अ ति. १५. °शाः सन्तु अ.

यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तेषां सर्वेषाम् अप नः शोशुचत् अघम्। केचित्तु एषामिति बहुवचनश्रुतेरङ्गिरःप्रभृतीनामयं प्रतिनिर्देश इति मन्यन्ते। तत्रैवमेकवाक्यता[१] योज्या। योऽग्निः प्रकर्षेण स्तुत्यतमः एषामङ्गिरःप्रभृतीनाम्, अस्मदीयाश्च पितृपितामहप्रपितामहाः अङ्गिरःप्रभृतयो यस्याग्नेः प्रकर्षेण स्तोतारः, सः अप नः शोशुचत् अघम् इति ॥ ३ ॥

**वेङ्कट०** यस्मादहम् एषाम् स्तोतॄणाम्[२] अतिशयेन स्तोता, यस्मात् च आस्माकीनाः स्तोतारः प्रस्तुवन्ति ॥ ३ ॥

**मुद्गल०** यत् यथा एषाम् स्तोतॄणां मध्येऽयं कुत्सः प्र मन्दिष्ठाः प्रकर्षेण स्तोतृतमः एवम् अस्माकासः अस्माकीनाः सूरयः स्तोतारश्च प्रकर्षेण स्तोतृतमा भवन्ति। अन्यत् समानम् ॥ ३ ॥

प्र यत् ते॑ अग्ने सू॒रयो॒ जाये॑महि॒ प्र ते॑ व॒यम्। अप॑ नः॒ शोशु॑चद॒घम् ॥ ४ ॥

प्र। यत्। ते॒। अ॒ग्ने॒। सू॒रयः॑। जाये॑महि। प्र। ते॒। व॒यम्। अप॑। नः॒। शोशु॑चत्। अ॒घम् ॥

**स्कन्द०** प्र यत् इति व्यत्ययेन नपुंसकता एकवचनञ्च। प्रकर्षेण ये ते तव हे अग्ने! सूरयः स्तोतारः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। ते जायेमहि। प्रजाः[३] प्राप्नुयामेत्यर्थः। षष्ठीनिर्देशादत्र[४] प्रसादेन स्वभूता वेति वाक्यशेषः। तव प्रसादेन स्वभूता वा वयम्। किञ्च अप नः ॥ ४ ॥

**वेङ्कट०** यस्मात् अग्ने! तव स्तोतारः प्रजायन्ते। वयम् च[५] तथा स्तोतारः सन्तः प्र जायेमहि ॥ ४ ॥

**मुद्गल०** हे अग्ने! यत् यस्मात् ते तव सूरयः स्तोतारः प्रजायन्ते। पुत्रपौत्रादिरूपेण बहुविधा भवन्ति। ततः वयम् च ते स्तोतारः सन्तः प्र जायेमहि पुत्रपौत्रादिरूपेण भवेम। अन्यत् समानम् ॥ ४ ॥

प्र यद॒ग्नेः सह॑स्वतो वि॒श्वतो॒ यन्ति॑ भा॒नवः॑। अप॑ नः॒ शोशु॑चद॒घम् ॥ ५ ॥

प्र। यत्। अ॒ग्नेः। सह॑स्वतः। वि॒श्वतः॑। यन्ति॑। भा॒नवः॑। अप॑। नः॒। शोशु॑चत्। अ॒घम् ॥५॥

**स्कन्द०** यत् इति षष्ठ्या लुग्द्रष्टव्यः। यस्य अग्नेः सहस्वतः बलवतः विश्वतः सर्वतः प्र यन्ति प्रकर्षेण गच्छन्ति भानवः दीप्तयः सः अप नः० ॥ ५ ॥

**वेटङ्क०** यस्मात् अग्नेः भानवः सर्वतः [६]प्र यन्ति† बलवतः‡[६] ॥ ५ ॥

**मुद्गल०** सहस्वतः शत्रूनभिभवतः अग्नेः भानवः दीप्तयः विश्वतः सर्वतः सर्वस्मादपि प्रदेशात् प्र यन्ति प्रकर्षेणोद्गच्छन्ति[७]। यत् यस्मादेवं तस्मात् तेनाग्नितेजसा नः अस्मदीयम् अघम् अप शोशुचत् नश्यतु ॥ ५ ॥

त्वं हि वि॑श्वतोमुख वि॒श्वतः॑ परि॒भूरसि॑। अप॑ नः॒ शोशु॑चद॒घम् ॥ ६ ॥

त्वम्। हि। वि॒श्व॒तः॒ऽमु॒ख॒। वि॒श्वतः॑। प॒रि॒ऽभूः। असि॑। अप॑। नः॒। शोशु॑चत्। अ॒घम् ॥६॥

---

१. तत्रैक° अ. २. स्तोत्रा° वि[१] अ[२]. ३. प्रजां कु. ४. ते षष्ठी° कु. ५. च तव वि[१] अ[२]. ६-६. नास्ति वि[१] अ[२]. † यान्ति वि[१]. ‡ °वन्तः वि[१,२] ल. ७. नास्ति मै[२].

**स्कन्द०** हि-शब्दो यस्मादर्थे । यस्मात् त्वम् हे विश्वतोमुख! सर्वतोमुख! विश्वतः सर्वतः स्तोतॄणां परिभूः परिगृहीता असि । यस्मादिति वचनात्तस्मादित्यध्याहार्यम्[१] । तस्मात् अप नः ॥ ६ ॥

**वेङ्कट०** [२]त्वम् हि[२] सर्वतोमुख![३] सर्वतः परिभवसि ॥ ६ ॥

**मुद्गल०** हे अग्ने! त्वम् हि त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति । अतो हे विश्वतोमुख! अग्ने! विश्वतः सर्वतः सर्वस्मादपि उपद्रवजातात् परिभूः असि अस्माकं परिगृहीता भव[४] । रक्षको भवेत्यर्थः । अन्यत् समानम् ॥ ६ ॥

## द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघम् ॥ ७ ॥

द्विषः । नः । विश्वतःऽमुख । अति । नावाऽइव । पारय । अप । नः । शोशुचत् । अघम् ॥७॥

**स्कन्द०** द्विषः नः द्वेष्टॄन् अस्माकं हे विश्वतोमुख! अति । द्विष इति कर्मश्रुतेरतीति[५] चोपसर्गाद्योग्यक्रियापदाध्याहारः । अतीत्य नावेव पारय । यथा कश्चित् कञ्चिन्नावा पारयेदेवमस्मान् त्वं पारय । सर्वाभिप्रेतानां पारं नयेत्यर्थः । किञ्च अप नः ॥ ७ ॥

**वेङ्कट०** शत्रून् अस्माकं[६] सर्वतोमुख! नावेव अति पारय[७] ॥ ७ ॥

**मुद्गल०** हे विश्वतोमुख! सर्वतोमुखाग्ने! नावेव नावा नदीमिव[८] नः अस्माकम् द्विषः शत्रून्[९] अति पारय अतिक्रमय्य शत्रुरहितं प्रदेशं प्रापय । अन्यत् समानम् ॥ ७ ॥

## स नः सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघम् ॥ ८ ॥

सः । नः । सिन्धुम्ऽइव । नावया । अति । पर्ष । स्वस्तये । अप । नः । शोशुचत् । अघम् ॥८॥

**स्कन्द०** यं त्वाम् अस्तोष्म सः नः अस्मान् सिन्धुमिव नावया यथा कश्चित् कञ्चित् सिन्धुं नावा पारयेत्, एवम् अति पर्ष सुष्ठु पारय नः[१०] स्वस्तये अविनाशाय । किञ्च अप०[११] ॥ ८ ॥

**वेङ्कट०** सः अस्मान् नदीमिव नावा अति पारय शत्रून्[१२] अविनाशाय[१३] ॥ ८ ॥

**मुद्गल०** हे अग्ने! सः त्वम् नः अस्मान् नावया नावा सिन्धुमिव नदीमिव स्वस्तये क्षेमार्थम् अति पर्ष शत्रून् अतिक्रमय्य पालय । शत्रुरहितं प्रदेशमस्मान् प्रापयेत्यर्थः । त्वत्प्रसादात् नः अस्माकम् अघम् पापं च अप शोशुचत् अस्मत्तोऽपक्रम्यास्मच्छत्रुः शोकयुक्तो भवतु ॥ ८ ॥

इति प्रथमाष्टके सप्तमाध्याये पञ्चमो वर्गः ॥

---

१. ध्याहार्यः ति. २-२ नास्ति लपं. ३. °मुखः वि[२] ल. ४. त्रुटितम् मै[२]. ५. °अतेरिति इति अ. ६. °स्मान् वि[१,२] अ[१] ल. ७. पारय शत्रूनतीत्यास्मान् त्वं प्रेरय । सर्वाभिप्रेतानां पारं नयेत्यर्थः वि[३] अ[१]. ८. नदीनामि मूको. ९. शत्रोः मै[२]. १०. यथा नः अ; नास्ति ति. ११. नास्ति अ. १२. नास्ति वि[३] अ[२]. १३. अपि नाशय वि[१]. अपि नाशाय अ[१]. १४-१४. नास्ति मूको.

[ ९८ ]

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ १ ॥

वैश्वानरस्य । सुऽमतौ । स्याम । राजा । हि । कम् । भुवनानाम् । अभिऽश्रीः ।
इतः । जातः । विश्वम् । इदम् । वि । चष्टे । वैश्वानरः । यतते । सूर्येण ॥ १ ॥

**स्कन्द०** 'वैश्वानरस्येति 'वैश्वानरीयम्' ( तु. बृदे ३,१२९)। 'वैश्वानरस्य सुमतौ' इत्येतत्सूक्तं वैश्वानरदेवताकम्। वैश्वानरगुणोऽस्याग्निर्देवता, न शुद्ध इत्यर्थः। विश्वानरौ मध्यमोत्तमावुच्येते, ताभ्यां प्रभवतीति वैश्वानरोऽयमग्निः। अशनिनाभिहन्यमानात् वृक्षात्† योऽग्निर्गृह्यते, स वैद्युतात्[1] प्रभवति। यस्तु [2]आदित्याभिमुखे आदर्शे मणौ वा, स आदित्यात्[2] प्रभवति। तेन विश्वानरप्रभवत्वादग्नेरिदं गुणाभिधानम् वैश्वानरस्य इति। वैश्वानरगुणस्याग्नेः सुमतौ शोभनायामनुग्राह्यबुद्धौ वयम् स्याम इत्याशास्महे। कस्मात्। उच्यते। राजा हि [3]कम् हिशब्दो यस्मादर्थे। कमिति निपातः पदपूरणः। यस्माद्राजा ईश्वरो वैश्वानरः। कस्य। भुवनानाम् लोकानां भूतजातानां वा। अभिश्रीः आश्रयणीयः। इतः[3] ओषधिवनस्पतिभ्योऽरणिभ्यां वा जातः सन् विश्वम् इदम् वि चष्टे पश्यतिकर्माऽयम् (तु. निघ ३,१४)। पश्यति प्राणिनां कृताकृतप्रत्यवेक्षत्वात्। अन्तर्णयर्थो वा सामर्थ्याच्चक्षिः। दर्शयति प्रकाशयतीत्यर्थः। किञ्च वैश्वानरो यतते यती प्रयत्ने। प्रयत्नेन चात्र तत्पूर्वकत्वात् गमनं लक्ष्यते। गत्यर्थ एव वा सामर्थ्याद् यततिः। शुद्धोऽपि च सोपसर्गार्थे द्रष्टव्यः। सङ्गच्छते सूर्येण सह। कथम्। अमुतो रश्मय आदित्यादध[4] आगच्छन्ति[5]। इतोऽस्यार्चिष उद्गच्छन्ति[6]। तयोर्भासोः संसर्गं[7] दृष्ट्वा मन्त्रदृगेवमाह — वैश्वानरो यतते सूर्येण इति ॥ १ ॥

**वेङ्कट०** वैश्वानरस्य कल्याण्यां मतौ वयम् स्याम। राजा हि असौ भूतानामभिश्रयणीयः इतः जातः सर्वमभिविपश्यति। वैश्वानरः संयतते सूर्येण। प्रातः आदित्यात्मना जायमानः[8] सर्वं पश्यति। ततः अमुष्य रश्मयः प्रादुर्भवन्ति, अतः अस्यार्चींषि। तयोः भासोः सङ्गमं दृष्ट्वा वदति — संयतते इति ( तु. या ७,२३ ) ॥ १ ॥

**मुद्गल०** 'वैश्वानरस्य' इति तृचं पञ्चमं सूक्तम्[9]। कुत्स ऋषिः[9]। त्रिष्टुप् छन्दः[9]। वैश्वानरगुणकोऽग्निः [10]शुद्धाग्निर्वा देवता[10] ॥

वैश्वानरस्य विश्वेषां नराणां लोकान्तरनेतृत्वेन सम्बन्धिनोऽग्नेः सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ स्याम अनुग्राह्यत्वेन वर्तमाना भवेम। हि कम् इत्येतत्[11] हिशब्दार्थे। स हि वैश्वानरः अभिश्रीः अभिश्रयणीयः आभिमुख्येन सेवितव्यः सन् भुवनानाम् सर्वेषां भूतजातानाम् राजा

---

१-१. °ग्नि···इत्यर्थः···पश्चात्···वैद्युतात् अ. † नास्ति ति. २-२. °भिमुखे आदित्यात् ति; °भिमुखे आदर्शे वादित्यात् अ. ३-३. नास्ति अ. ४. °दप मूको. ५. उद्यच्छन्ति मूको. ६. उद्यच्छ° कु ति. ७. नास्ति ति. ८. जातमानः वि[1]. ९. नास्ति मै[1]. १०-१०. शुद्धो वा मै[1]; °ग्निर्दे° मै[1].
११. नास्ति मूको.

स्वामी भवति। यः वैश्वानरः अग्निः इतः अस्मात् अरणिद्वयात् जातः जातमात्र एव इदम् विश्वम् सर्वं जगत् वि चष्टे विशेषेण पश्यति। प्रातरुद्यता सूर्येण च यतते सङ्गच्छते। एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति सम्बन्धः ॥ १ ॥

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ॥ २ ॥

पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्याम् । पृष्टः । विश्वाः । ओषधीः । आ । विवेश ।
वैश्वानरः । सहसा । पृष्टः । अग्निः । सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥ २ ॥

**स्कन्द०** पृष्टः इति पृच्छतेरर्चतिकर्मणो रूपम्। पृष्टः स्तुतोऽग्निः दिवि। केन। सामर्थ्यात् देवैः। पृष्टः अग्निः पृथिव्याम्। केन। सामर्थ्यात् मनुष्यैः। सर्वस्तोतृभिश्च पृष्टः सन् विश्वाः ओषधीः आ विवेश। सर्वास्वोषधीष्वन्तर्लीन इत्यर्थः। केन पुनः पृष्टः। उच्यते। वैश्वानरः सहसा पृष्टः अग्निः 'सहः' ( निघ २,९ ) इति बलनाम। स्तोतृगतेन स्तुतिकरणसामर्थ्येन। स्वगतया बलवत्तया स्तुत इत्यर्थः। [१]य एवंरूपः[१] सः नः अस्मान् दिवा सः एव रिषः हिंसातः हिंसितुर्वा सकाशात् पातु रक्षतु नक्तम् रात्रौ ॥ २ ॥

**वेङ्कट०** द्युलोके[२] संस्पृष्टः[३] भूम्यां च पृष्टः एव विश्वाः ओषधीः आविवेश वैश्वानरः बलेन सम्पृक्तः। अस्मान्[४] अग्निः अहनि[५] रात्रौ च हिंसकात् रक्षतु ॥ २ ॥

**मुद्गल०** अयम् वैश्वानरः अग्निः दिवि द्युलोके आदित्यात्मना पृष्टः संस्पृष्टः तथा पृथिव्याम् भूमौ गार्हपत्यादिरूपेण पृष्टः संस्पृष्टः तथा विश्वाः सर्वाः ओषधीः पृष्टः संस्पृष्टः सः अग्निः आ विवेश पाकार्थम् अन्तः प्रविष्टवान्। अन्तःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते[६]। सहसा परेषामसाधारणेन बलेन पृष्टः संस्पृष्टः वैश्वानरः नः अस्मान् दिवा अह्नि रिषः हिंसतः शत्रोः पातु। तथा वैश्वानरः नक्तम् रात्रावपि अस्मान् हिंसकात् पातु ॥ २ ॥

वैश्वानर तव तत् सत्यमस्त्वस्मान् रायो मघवानः सचन्ताम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ३ ॥

वैश्वानर । तव । तत् । सत्यम् । अस्तु । अस्मान् । रायः । मघऽवानः । सचन्ताम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ३ ॥

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। हे वैश्वानर! यद्वयं ब्रूमः तत् सत्यम् अस्तु तव। त्वं तत् सत्यतया प्रतिपद्यस्व, [७]प्रतिपद्य च[७] सम्पादयेत्यर्थः। किं तत्। उच्यते। अस्मान्

---

१-१. नास्ति भ. २. दिवि द्युलो° कु. ३. संसृष्टः वि[१] अ[२]. ४. अस्मात् वि[१,२] अ[२] कु.
५. नास्ति अ[१,२] वि[२,३] लपं. ६. नास्ति मूको. ७. नास्ति भ ति.

रायः धनानि मघवानः धनवन्तश्च सचन्ताम् सेवन्ताम्[१]। धनान्यस्माकं भवन्तु राजानश्च परिचारकभूता भवन्त्वित्यर्थः। तत् नः इत्याद्युक्तार्थम् ( ऋ १,९८,१६ द्र. ) ॥ ३ ॥

**वेङ्कट०** वैश्वानर![२] [३]तव तत्[३] सत्यम् कर्म स्तोतृषु भवतु। अस्मान् धनानि धनवन्तः च सेवन्ताम् ॥३॥

**मुद्गल०** हे वैश्वानर! तव तत् त्वदीयं तत् अस्माभिः क्रियमाणं कर्म सत्यम् अस्तु तथा अवितथफलं[४] भवतु। ततः अस्मान् मघवानः धनवन्तः रायः धनवदतिप्रियाः पुत्राः सचन्ताम् सेवन्ताम्। एवं यदस्माभिः प्रार्थितम् नः अस्मदीयं तत् मित्रः वरुणः राज्यभिमानी अदितिः देवमाता[५] सिन्धुः स्यन्दनशीलोदकाभिमानी देवः। उत समुच्चये। एते सर्वे मित्रादयः ममहन्ताम् पूजयन्ताम् पालयन्तामित्यर्थः ॥ ३ ॥

## [ ९९ ]

### जातवे॑दसे सुनवाम॒ सोम॑मरातीय॒तो नि द॑हाति॒ वेद॑ः ।
### स नः॑ पर्ष॒दति॑ दु॒र्गाणि॒ विश्वा॑ ना॒वेव॒ सिन्धुं॑ दुरि॒तात्य॒ग्निः ॥ १ ॥

जा॒तऽवे॑दसे । सु॒न॒वा॒म॒ । सोम॑म् । अ॒रा॒ति॒ऽय॒तः । नि । द॒हा॒ति॒ । वेद॑ः ।
सः । न॒ः । प॒र्ष॒त् । अति॑ । दु॒ःऽगानि॑ । विश्वा॑ । ना॒वाऽइ॑व । सिन्धु॑म् । दु॒ःऽइ॒ता । अति॑ । अ॒ग्निः ॥

**स्कन्द०** अतः परं कश्यपार्षम्[६] उत्सृष्टाध्ययनमेकाधिकं सूक्तसहस्रम्। तस्यैतदेकर्चमाद्यं सूक्तम्। एवं हि भगवान् शौनक आह — 'पूर्वा पूर्वा सहस्रस्य सूक्तानामेकभूयसाम्। जातवेदस इत्याद्यं कश्यपार्षस्य[७] शुश्रुम'[८] इति। यस्यैकाधिकानां[९] सूक्तानां[१०] सहस्रस्य[१] कश्यपार्षस्य[११] सर्वसूक्तेषु पूर्वा पूर्वैषा ऋक् जातवेदस इत्याद्यमेकर्चमित्येतद्द्वयमपि श्रुतवन्त एव। नाधीतवन्त इत्यर्थः। 'जातवेदस्यम्'। जातवेदोदेवताकमेतत् सूक्तम्। जातवेदा इत्येवंगुणोऽस्याग्निर्देवता न शुद्ध इत्यर्थः। जातवेदसे वेद इति धननाम प्रज्ञापर्यायो वा। उत्पन्नधनाय उत्पन्नप्रज्ञाय[१२] वा। अग्नये सुनवाम वयम् सोमम्। किं कारणम्। उच्यते। यस्मात् अरातीयतः अरातिरदानं हविषः, तां कामयमानस्य। सोममददत इत्यर्थः। नि दहाति नियमेन दहत्यग्निः। विनाशयतीत्यर्थः। किम्। वेदः धनं ज्ञानं वा। अथवा अरातिशब्दः शत्रुवचनः। दहातीत्यपि आशिषि लिङर्थे लेट्। अस्मच्छत्रुतां कामयमानस्य स्वभूतं धनं नियमेन दहत्वग्निरित्याशास्महे इत्यर्थः। किञ्च सः नः दुरिता अति अग्निः अतिशब्द उपसर्गः पर्षत् इत्याख्यातात् पुरस्तादपकृष्टव्यः[१३]। सोऽस्मानति पारयतु। अतिक्रमयत्वित्यर्थः। कीदृशानि। अति दुर्गाणि दुरतिक्रमाणीत्यर्थः। विश्वा सर्वाणि। कथम्। नावा इव सिन्धुम् यथा कश्चित् काञ्चिन्नावा नदीमतिक्रामयेत्। कानि। पापानि ॥ १ ॥

---

१. नास्ति ति. २. नास्ति वि[१,२] अ[१,२] ल लपं. ३-३. नास्ति वि[३] अ[२]. ४. °बलम् मै[२]. ५. देवता मै[२]. ६. काश्य° अ कु. ७. °र्ष ति. ८. तु. बृदे ३,१३०; षड्गुरुशिष्यः ऋअ २, १,९९. ९. °स्यैकानां अ. १०. नास्ति अ. ११. सूक्तस्य कश्य° मूको. १२. उपपन्नप्रज्ञाय कु ति; उपपन्न प्रज्ञानाय अ मूको. १३. °स्तादुपयोक्तव्यः ति.

**वेङ्कट०** कश्यपो मारीचः। जातधनाय सुनवाम सोमम्। सोऽरातित्वमिच्छतः भस्मीकरोति धनम्[1]। सः अस्मान् विश्वानि दुर्गाणि स्थानानि नावा नदीम् इव कर्णधारः अतितरतु[2] दुःखानि च इति[3] ॥ १ ॥

**मुद्गल०** 'जातवेदसे' इत्येकर्चं षष्ठं सूक्तम्। मरीचिपुत्रः कश्यप ऋषिः[4]। त्रिष्टुप् छन्दः[4]। जातवेदोगुणकोऽग्निः [5]शुद्धाग्निर्वा देवता[5] ॥

जातवेदसे जातानाम् उत्पत्तिमतां सर्वेषां वेदित्रेऽग्नये लतारूपम् सोमम् सुनवाम अभिषुणवाम। जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः। सोऽग्निः अरातीयतः अरातिं शत्रुमिव अस्मान् आचरतः शत्रोः वेदः धनं नि दहाति नितरां दहतु भस्मीकरोतु। अपि च सः अग्निः नः अस्मान् विश्वा विश्वानि सर्वाणि दुर्गाणि दुर्गमनानि भोक्तुमशक्यानि दुःखानि अति पर्षत् अतिपारयतु। अतिक्रमय्य दुःखरहितं सुखं प्रापयतु। दृष्टान्तः। नावा इव सिन्धुम् यथा कश्चित् कर्णधारः ग्राहादिभिः दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत्। तथा दुरिता दुरितानि दुःखहेतुभूतानि पापानि अस्मान् अग्निः अति पारयतु ॥ १ ॥

इति प्रथमाष्टके सप्तमाध्याये सप्तमो वर्गः ॥

## [ १०० ]

स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट्।
सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥ १ ॥

सः। यः। वृषा। वृष्ण्येभिः। सम्ऽओकाः। महः। दिवः। पृथिव्याः। च। सम्ऽराट्।
सतीनऽसत्वा। हव्यः। भरेषु। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती ॥ १ ॥

**स्कन्द०** '[6]सूक्तं स यो वृषेत्येतत् पञ्च वार्षागिरा विदुः। निरुक्ता नामधेयैः स्वैरपि चैतत्त्यदित्यृचि (तु. षड्गुरुशिष्यः ऋअ २,१,१००)'। 'स यो वृषा' इत्येतत् सूक्तं पञ्च ऋषयः वृषागिरः पुत्रा विदुः जानन्ति दृष्टवन्त इत्यर्थः। ते तु निरुक्ताः[6] स्वैर्नामधेयैः 'एतत्त्यत्त इन्द्र वृष्णे' (ऋ १, १००,१७) इत्यस्यामृचि ऋज्राश्वः अम्बरीषः सहदेवः भयमानः सुराधा इत्येते। तत ऐन्द्रमुत्तरम्। यज्जातवेदस्यं पूर्वमुक्तं तस्मादनन्तरमैन्द्रमिदं सूक्तम्। सः इति तच्छब्दश्चतुर्थे पादे सम्बन्धयितव्यः। यः इन्द्रः वृषा वर्षिता कामानाम्। स्तोतृभ्यो दातेत्यर्थः। वृष्ण्येभिः समोकाः वृष्ण्यमित्यपठितमपि बलनाम। [7]उच समवाये[7]। बलैः समवेतः। अत्यन्तबलवानित्यर्थः। महः महत्याः दिवः पृथिव्या च सम्राट् ईश्वरः। सतीनसत्वा 'सतीनम्' ( निघ १,१२ ) इत्युदकनाम। षणु दाने। वृष्टिलक्षणस्योदकस्य दाता। हव्यः भरेषु जयार्थमाह्वातव्यः सङ्ग्रामेषु। सः मरुत्वान् मरुद्भिः सहितः नः अस्माकम् भवतु इन्द्रः ऊती अविता रक्षिता ॥ १ ॥

---

१. नास्ति वि[3] अ[2]. २. °तु पापानि अतिपाश्य(? रय)तु वि[3] अ[2]. ३. नास्ति कु. ४-४. नास्ति मै[2]. ५-५. शुद्धो वा मै[2]; शुद्धाग्निर्देवता मै[1]. ६-६. नास्ति अ. ७-७. उप समबाधे अ; नास्ति कु ति.

**वेङ्कट०** ऋषयः तेषां गोत्रं च सूक्ते भविष्यन्ति[1]। सः यः वर्षिता[2] वर्षणकुशलैः मरुद्भिः सहितः महतः दिवः पृथिव्याः च ईशानः सनितजलः[3] ह्वातव्यः सङ्ग्रामेषु मरुत्वान् नः भवतु इन्द्रः[4] अस्मिन् युद्धे रक्षणाय ॥ १ ॥

**मुद्गल०** 'स यो वृषा' इत्येकोनविंशत्यृचं सप्तमं सूक्तम्। वृषागिरो महाराजस्य पुत्रा ऋज्राश्वाम्बरीषसहदेवभयमानसुराधसः पञ्च राजऋषय ऋषयः। त्रिष्टुप्छन्दः। इन्द्रो देवता। शत्रुभिरपहृतासु गोषु तैः सह युद्धार्थं निर्गच्छन्त ऋज्राश्वादयोऽनेन सूक्तेन इन्द्रमस्तुवन् ॥

यः इन्द्रः वृषा कामानां वर्षिता वृष्ण्येभिः वृष्णिभवैर्वीर्यैः समोकाः सम्यक् समवेतः सङ्गतः महः महतः दिवः द्युलोकस्य पृथिव्याः प्रथिताया भूमेः च सम्राट् ईश्वरः सतीनसत्वा उदकस्य सत्वा सादयिता भरेषु सङ्ग्रामेषु हव्यः सर्वैः स्तोतृभिराह्वातव्यः। एवंभूतो मरुत्वान् मरुद्भिः युक्तः सः इन्द्रः नः अस्माकम् ऊती ऊतये रक्षणाय भवतु ॥ १ ॥

**यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।**
**वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ २ ॥**

यस्य । अनाप्तः । सूर्यस्यऽइव । यामः । भरेऽभरे । वृत्रऽहा । शुष्मः । अस्ति ।
वृषन्ऽतमः । सखिऽभिः । स्वेभिः । एवैः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ २ ॥

**स्कन्द०** यस्य इन्द्रस्य अनाप्तः अप्राप्तपूर्वः केनचिच्छत्रुणा सूर्यस्य इव यामः रथः। यस्य भरेभरे तत्रतत्र सङ्ग्रामे वृत्रहा शुष्मः शत्रुहननसमर्थञ्च बलम् अस्ति। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सः वृषन्तमः अतिशयेन वर्षिता। सखिभिः स्वेभिः आत्मीयैः मरुदाख्यैः सह। कीदृशैः। एवैः एवशब्दोऽत्र काम्यवचनः पालयितृवचनो वा। कामयितव्यैः पालयितृभिर्वा। मरुत्वान् ॥ २ ॥

**वेङ्कट०** यं गच्छन्तं सूर्यम् इव अन्ये न व्याप्नुवन्ति[6]। यस्य वा[7] सङ्ग्रामेसङ्ग्रामे[8] शत्रुहन्तृ बलम् अस्ति। वर्षितृतमः स्वैः सखिभिः गन्तृभिः मरुद्भिः सहितः ॥ २ ॥

**मुद्गल०** यस्य इन्द्रस्य यामः गतिः अनाप्तः परैरप्राप्तः सूर्यस्य इव यथा सूर्यस्य गतिः अन्यैः न प्राप्तुं शक्यते तद्वत्। स्वेभिः आत्मीयैः एवैः गमनशीलैः सखिभिः मित्रभूतैः मरुद्भिः सह वृषन्तमः अतिशयेन कामानां वर्षिता भरेभरे सर्वेषु सङ्ग्रामेषु वृत्रहा शत्रूणां हन्ता शुष्मः सर्वेषामसुराणां शोषकः। एवंभूतो यः इन्द्रः अस्ति विद्यते सः मरुत्वान् इन्द्रः नः अस्माकम् ऊती रक्षणाय भवतु ॥ २ ॥

**दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः ।**
**तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ३ ॥**

---

१. °ष्यति अ[1,2] वि[2,3] लपं. २. नास्ति वि[3] अ[2]. ३. सतीनबलः कु; सन्धितबलः अ[1] वि[1,2] ल लपं. ४. नास्ति लपं. ५. °र्थश्च मूको. ६. व्यप्नोति व्याप्नु° वि[3] अ[1]. ७. वामे वि[3] अ[2]. ८. सश्रमे संग्रामे वि[3]; संग्रामे लपं.

दिवः । न । यस्य॑ । रेत॑सः । दुघा॑नाः । पन्था॑सः । यन्ति॑ । शव॑सा । अप॑रिऽइताः ।
तरत्ऽद्वे॑षाः । सासहिः । पौंस्ये॑भिः । मरुत्वा॑न् । नः । भवतु । इन्द्रः॑ । ऊती ॥ ३ ॥

**स्कन्द०** दिवः इति पञ्चमी। न-शब्द उपरिष्टादुपचारः उपमार्थीयत्वात् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' ( तु. या ७,३१ ) इति[1] पदपूरणः। यस्य इत्येतत् शवसा इत्येतेन सम्बध्यते। द्युलोकात् यस्य इन्द्रस्य बलेन रेतसः रेतांसि वृष्टिलक्षणान्युदकानि दुघानाः क्षरन्तः पन्थासः[2] वृष्टिपतनमार्गाः यन्ति पृथिवीं प्रति गच्छन्ति। अपरीताः[3] अपगताः वृष्टिप्रतिबन्धकैरसुरादिभिरप्राप्ताः। द्युलोकाद् यस्य प्रसादेन स्वैः पथिभिरप्रतिबन्धा वृष्टिः पततीत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः[4]। सः तरद्द्वेषाः तरति द्वेषांसीति तरद्द्वेषाः। तरिश्चात्र प्लवनार्थः। प्लवनं च गमनं प्लवतेर्गत्यर्थत्वात्। शुद्धोऽपि चाभिपूर्वार्थो द्रष्टव्यः। वधार्थो वा[2] सामर्थ्यात्तरतिः। द्वेष्टृणां शत्रूणां वधार्थमभिगन्ता हन्ता वेत्यर्थः। सासहिः अत्यर्थमभिभविता शत्रूणाम्। पौंस्येभिः स्वैः बलैः। मरुत्वान् ॥ ३ ॥

**वेङ्कट०** द्युलोकस्येव यस्य उदकानि क्षरन्तः रश्मयः[5] यन्ति बलेन शत्रुभिः अपरिवृताः, स तीर्णशत्रुः सहनशीलः बलैः ॥ ३ ॥

**मुद्गल०** यस्य इन्द्रस्य पन्थासः रश्मयः रेतसः वृष्ट्युदकानि दुघानाः दुहन्तः प्रवर्षन्तः यन्ति निर्गच्छन्ति। द्युलोकादितस्ततः प्रसरन्ति। दृष्टान्तः। दिवः न यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं[6] कुर्वन्तो नभस्थलान्निर्गच्छन्ति तद्वत्। कीदृशा रश्मयः। शवसा बलेन सहिताः अपरीताः परैरनभिगताः। दुष्प्रापा इत्यर्थः। सोऽयमिन्द्रः तरद्द्वेषाः द्वेषांसि शत्रून् तरन्। जितशत्रुक इत्यर्थः। पौंस्येभिः बलैः सहितः सासहिः शत्रूणामभिभविता। एवंभूतः मरुत्वान् इन्द्रः नः अस्माकं रक्षणाय भवतु ॥ ३ ॥

**सो अङ्गि॑रोभि॒रङ्गि॑रस्तमो भूद् वृषा॒ वृष॑भिः॒ सखि॑भिः॒ सखा॒ सन् ।**
**ऋ॒ग्मिभि॑र्ऋ॒ग्मी गा॒तुभि॒र्ज्येष्ठो॑ म॒रुत्वा॑न् नो भव॒त्विन्द्र॑ ऊ॒ती ॥ ४ ॥**

सः । अङ्गि॑रःऽभिः । अङ्गि॑रःऽतमः । भूत् । वृषा॑ । वृष॑ऽभिः । सखि॑ऽभिः । सखा॑ । सन् ।
ऋग्मिऽभि॑ः । ऋग्मी॑ । गातुऽभि॑ः । ज्येष्ठः॑ । मरुत्वा॑न् । नः । भवतु । इन्द्रः॑ । ऊती ॥ ४ ॥

**स्कन्द०** सः इन्द्रः अङ्गिरोभिः ऋषिभिः अङ्गिरस्तमः सोऽयमित्यभिसम्बन्धादङ्गिरःसम्बन्धिन्ययमङ्गिरःशब्दोऽत्र[7] द्रष्टव्यः। अतिशयेनाङ्गिरसां स्तुत्यतया सम्बन्धी भूत् भवति। वृषा वर्षिता। कीदृशैरङ्गिरोभिः। वृषभिः वर्षणस्वभावकैः सखिभिः आत्मनः सखा। कस्य। सामर्थ्यादङ्गिरसामेव सर्वस्ते तृणां वा। सन् शोभनः। ऋग्मिभिः ऋग्मी[2] ऋच स्तुतौ। अर्चनमृक् स्तुतिः, तद्वद्भिः स्तुतिमान्। गातुभिः[8] गन्तृभिः मेघानसुरान् वा प्रति। ज्येष्ठः ऋद्धतमः प्रशस्यो वाऽतिशयेन। किञ्च मरुत्वान् ॥ ४ ॥

---

१. इति च अ. २. नास्ति अ. ३. शवसा अप° कु. ति. ४. °हर्तव्यः अ. ५. रक्षन्तः अ[1] वि[1,2] कु लपं. ६. कुवृष्टिं मै[1]. ७. °शब्दो अ. ८. नास्ति मूको.

**वेङ्कट०** अङ्गिरस्सु[1] जातः अङ्गिरोभ्यः वरिष्ठः अभवत् इन्द्रः पुमांश्च पुम्भ्यः अतिशयेन सखा स्तोतव्यः गातव्येभ्यः[2] अतिशयेन गेयः ॥ ४ ॥

**मुद्गल०** सः इन्द्रः अङ्गिरोभिः अङ्गन्ति गच्छन्तीति अङ्गिरसो गन्तारः, तेभ्योऽपि अङ्गिरस्तमः भूत् अतिशयेन गन्ता भवति । वृषभिः वृषा वर्षितृभ्योऽपि अतिशयेन वर्षिता । सखिभिः समानख्यानेभ्यो मित्रभूतेभ्योऽपि [3]सखा अतिशयेन हितकारी । एवंभूतः सन् ऋग्मिभिः अर्चनीयेभ्योऽपि[3] ऋग्मी अर्चनीयो भवति । गातुभिः ज्येष्ठः गातव्येभ्यः स्तोतव्येभ्योऽपि ज्येष्ठः अतिशयेन स्तोतव्यः । एवंगुणविशिष्टः मरुत्वान् इन्द्रः अस्माकं रक्षणाय भवतु ॥ ४ ॥

स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।
सनीळेभिः श्रवस्यानि तूर्वन् मरुत्वान् नो भवत्विन्द्र ऊती ॥ ५ ॥

सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् ।
सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥५॥

**स्कन्द०** सः इन्द्रः सूनुभिः न[4] पुत्रैरिव कश्चित् रुद्रेभिः पितृशब्देनेदं सोऽयमित्यभिसम्बन्धात् पुत्राणामभिधानम् । रुद्रपुत्रैर्मरुद्भिः[5] सह । ऋभ्वा 'ऋभुः' ( निघ ३,१५ ) इति मेधाविनाम । व्यत्ययेन चात्रैकवचनम् । ऋभुभिर्मेधाविभिः । नृषाह्ये नरो[6] यत्राभिभूयन्ते[7] स नृषाह्यः सङ्ग्रामस्तत्र । सासह्वान् अत्यर्थमभिभवन् । अमित्रान् वैरिणः असुरादीन् । न चैतदेव केवलं कुर्वन् । किं तर्हि । सनीळेभिः 'नीळम्' (निघ ३,४) इति गृहनाम । श्रवस्यानि[8] श्रवोऽन्नं तत्र साधूनि श्रवस्यानि मेघवृन्दानि । तानि वृष्टिप्रदानद्वारेणान्नस्य जनकत्वात्तत्र साधूनि । तूर्वन्[8] तूर्वतिर्हिंसार्थः[9] । समानस्थानैर्मरुद्भिः सह मेघवृन्दानि च घ्नन्नित्यर्थः । मरुत्वान् ॥ ५ ॥

**वेङ्कट०** सः पुत्रैः इव[10] मरुद्भिः भासमानः अभिभवन् शत्रून् युद्धे समानस्थानैर्मरुद्भिः अन्ननिमित्तान्युदकानि प्रेरयन् ॥ ५ ॥

**मुद्गल०** सूनुभिः न पुत्रैरिव रुद्रेभिः रुद्रपुत्रैर्मरुद्भिर्युक्तः ऋभ्वा महान् । एवंभूतः सः इन्द्रः नृषाह्ये नृभिः पुरुषैः सोढव्ये सङ्ग्रामे अमित्रान् शत्रून् सासह्वान् अभिभूतवान् । अपि च सनीळेभिः समाननिलयैर्मरुद्भिः सह श्रवस्यानि 'श्रवः' ( निघ २, ७ ) इति अन्ननाम । तद्धेतुभूतानि उदकानि तूर्वन् मेघात् प्रच्यावयन् मरुत्वान् इन्द्रः अस्माकं रक्षणाय भवतु ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये अष्टमो वर्गः ॥

स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत् ।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान् नो भवत्विन्द्र ऊती ६ ॥

---

१. अङ्गिरप्सु वि[1] अ[1] ल; सोऽङ्गिराभिः अङ्गि° कु. २. °भ्यः द्वि अ[1] वि[1]; °भ्यः अपि कु. ३-३. नास्ति मै[1]. ४. नास्ति अ. ५. ऋतु° अ. ६. °नरश्च अ; नरा ति. ७. °भिद्रूय° अ. ८. नास्ति मूको. ९. तुर्व° मूको. १०. इव कश्चित् वि[1] अ[2].

सः । मन्युऽमीः । सऽमदनस्य । कर्ता । अस्माकेभिः । नृऽभिः । सूर्यम् । सनत् ।
अस्मिन् । अहन् । सत्ऽपतिः । पुरुऽहूतः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ६ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'प्रजापतेः पुत्रो मन्युर्नाम । तं प्रजापतिः सैनापत्ये नियुक्तवान् । तेन सहेन्द्रोऽसुरान्[1] निजघान' इति । तदेतदुच्यते—सः मन्युमीः इति । मीञ्[2] हिंसायाम् । मन्युना सह मिनातीति[3] मन्युमीः । क्रोधनाम वा मन्युशब्दः (तु. निघ २,१३)। क्रोधेन शत्रूणां हिंसिता । समदनस्य कर्ता समद् इति [4]सङ्ग्रामस्य नामसु पठितम् (तु. निघ २,१७)। समच्छब्दस्य समदनशब्दः पर्यायो[4] द्रष्टव्यः । सङ्ग्रामस्य कर्ता । अस्माकेभिः नृभिः अस्मदीयैर्मनुष्यैः ऋत्विगाख्यैः सह । सूर्यम् आदित्यम् सनत् सम्भजताम् । सूर्यस्य हि यागादि-कर्मनिर्वृत्तिः[5] फलम् । तदर्थं ह्यसावुदेति । सर्वः सूर्य उदिते यागं निर्वर्तयति । तेनासौ सम्भक्तो[6] भवति नान्येन । अतोऽत्र सूर्यं सनदिति सम्भजनेन तदुदयफलभूतयागनिर्वृत्तिः[5] प्रतिपाद्यते । अस्मदीयैः ऋत्विग्भिः सह देवतात्वमापन्न इन्द्रः सूर्योदयफलभूतमस्मदीयं यागं निर्वर्तयत्वित्यर्थः । कस्मिन् काले । उच्यते । अस्मिन् अहन् यागदिवसे । कीदृश इन्द्रः । उच्यते । सत्पतिः सतां पालयिता । पुरुहूतः बहुभिराहूतः । किञ्च मरुत्वान् ॥ ६ ॥

**वेङ्कट०** सः[7] शत्रूणाम् अभिमातिहा सङ्ग्रामस्य कर्ता अस्मदीयैः भटैः सूर्यम् संयोजयतु अस्मिन् युद्धदिवसे सत्पतिः पुरुहूतः ॥ ६ ॥

**मुद्गल०** सः इन्द्रः मन्युमीः मन्योः कोपस्य निर्माता । अपि च समदनस्य सङ्ग्रामस्य कर्ता सत्पतिः सतां पालयिता पुरुहूतः बहुभिर्यजमानैराहूतः । एवंगुणविशिष्टः सः अस्मिन् अहन् अस्मिन् दिवसे अस्माकेभिः आस्माकैः अस्मदीयैः नृभिः पुरुषैः सूर्यम् सूर्यप्रकाशम् सनत् सम्भक्तं करोतु । शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु । स च मरुत्वान् इन्द्रः अस्माकं रक्षणाय भवतु ॥ ६ ॥

तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम् ।
स विश्वस्य करुणस्येश एको मरुत्वान् नो भवत्विन्द्र ऊती ॥ ७ ॥

तम् । ऊतयः । रणयन् । शूरऽसातौ । तम् । क्षेमस्य । क्षितयः । कृण्वत । त्राम् ।
सः । विश्वस्य । करुणस्य । ईशे । एकः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ७ ॥

**स्कन्द०** तम् इन्द्रम् ऊतयः मरुदादिसेना ऊतय[8] इहोच्यन्ते । ताः रणयन् रमयन्ति[9] शब्दयन्ति वा शूरसातौ सङ्ग्रामे । तम् एव क्षेमस्य अविनाशस्य क्षितयः मनुष्याः कृण्वत यागैः स्तुतिभिश्च कुर्वन्ति त्राम् त्रातारं सर्वदा अपरित्यक्तारम् । यागैः स्तुतिभिश्च सर्वदा मनुष्याः क्षेमस्य कर्तारं कुर्वन्तीत्यर्थः । सः एव विश्वस्य करुणस्य करुणशब्दः करणशब्दस्य कर्मनाम्नः

---

१. सहेन्द्रो मूको. २. मीङ् मूको. ३. मीनातिः अ. ४-४. नास्ति ति. ५. °निवृत्तिः मूको. ६. सुसं° ति. ७. नास्ति वि[२,३] अ[१,२]. ८. नास्ति अ ति. ९. रणयन्ति वि.

पर्यायो द्रष्टव्यः । सर्वस्य कर्मणः ईशे एकः एक एवेष्टे । सर्वकर्मणां वृष्टिनिबन्धनत्वात् वृष्टेश्च केवलेन्द्रायत्तत्वात् । किञ्च मरुत्वान् ॥ ७ ॥

**वेङ्कट०** तम् मरुतः रमयन्ति युद्धे । तमेव क्षेमस्य त्रातारं मनुष्याः अकृण्वत । सः विश्वस्य कर्मणः एकः एव ईष्टे[1] ॥ ७ ॥

**मुद्गल०** तम् इन्द्रम् शूरसातौ शूरैः वीरपुरुषैः सम्भजनीये सङ्ग्रामे ऊतयः गन्तारो मरुतः रणयन् रमयन्ति । अपि च क्षितयः मनुष्याः तम् इन्द्रम् क्षेमस्य रक्षणीयस्य सर्वस्य धनस्य त्राम् त्रातारम् कृण्वत कुर्वन्ति । देवतान्तरादस्य कोऽतिशय इति चेद् उच्यते । सः इन्द्रः विश्वस्य सर्वस्य करुणस्य अभिमतफलनिष्पादनरूपस्य कर्मणः एकः असहाय एव ईशे ईष्टे । अन्यत् पूर्ववत् ॥ ७ ॥

तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय ।
सो अन्धे चित् तमसि ज्योतिर्विदन् मरुत्वान् नो भवत्विन्द्र ऊती ॥ ८ ॥

तम् । अप्सन्त । शवसः । उत्ऽसवेषु । नरः । नरम् । अवसे । तम् । धनाय ।
सः । अन्धे । चित् । तमसि । ज्योतिः । विदत् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ८ ॥

**स्कन्द०** तम् इन्द्रम् अप्सन्त । भस भर्त्सनदीप्त्योः[2] । स्तुतिभिर्दीपयन्ति । उत्तेजयन्तीत्यर्थः । क । उच्यते । शवसः उत्सवेषु 'शवः' ( निघ २, ९ ) इति बलनाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः षष्ठीबहुवचनान्तश्च । बलवतामुत्सवभूतेषु सङ्ग्रामेषु । बलवतां हि सङ्ग्राम उत्सव एव । अथवा उत्सवेष्वित्युच्छब्दः अभीत्येतस्य स्थाने । बलस्य[3] सम्बन्धिष्वभिषवेषु । बलेन येषु यज्ञेष्वभिषूयते[4] सोमस्तत्रेत्यर्थः । के । नरः मनुष्याः । कीदृशम् । नरम् मनुष्याकारम् । किमर्थम् । अवसे पालनाय । अथवैवमन्यथास्या ऋचोऽर्थयोजना । अप्सन्तेति भसेः प्सातेर्वा भक्षणार्थस्येदं रूपम् । शवस इत्यप्यन्तर्णीतमत्वर्थं प्रथमाबहुवचनान्तं द्रष्टव्यम् । बलवन्तो भक्षयन्त्युत्सवेषु[5] । बलवन्तो मनुष्या उत्सवेष्वपि तम् एवेन्द्रमुपजीवन्तीत्यर्थः । किमर्थम् । अवसे तर्पणायात्मनः । तमेव धनाय । किञ्च सः अन्धे चित् अपि तमसि ज्योतिः सूर्याख्यम् विदत् ज्ञातवान् लब्धवान् वा । तदुक्तं 'वृत्रं यदिन्द्र' ( ऋ १,५१,४ ) इति । किञ्च मरुत्वान् ॥ ८ ॥

**वेङ्कट०** तम् व्याप्नुवन् बलस्य उद्योगेषु मनुष्याः [6]नेतारं रक्षणार्थं †तमेव धनार्थम्† । सः युद्धे अन्धे तमसि सञ्जाते प्रकाशं लम्भयति[6] ॥ ८ ॥

**मुद्गल०** नरः नेतारः स्तोतारः शवसः बलस्य सम्बन्धिषु उत्सवेषु[7] सङ्ग्रामेषु नरम् जयस्य नेतारम् तम् इन्द्रम् अप्सन्त आप्नुवन्ति । किमर्थम् । अवसे अन्नार्थम् धनाय धनार्थं च तम् इन्द्रं प्राप्नुवन्ति । यस्मात् सः इन्द्रः तमसि दृष्टिप्रतिबन्धके अन्धे चित् आध्यानरहिते चित्तव्यामोहकरेऽपि सङ्ग्रामे ज्योतिः विजयलक्षणं प्रकाशम् विदत् लम्भयति । तस्मात् तमेव प्राप्नुवन्तीत्यर्थः[8] । अन्यत् समानम् ॥ ८ ॥

---

१. इष्टेः वि[2]. २. भक्षणदी° मूको. ३. बलवतः बल° अ. ४. °भूयन्ते ते अ. ५. °यन्त्युत्स° अ. ६-६. नास्ति वि[3] अ[2]. †-† नास्ति कु. ७. °षु सवेषु मै[2]. ८. प्रार्थयन्ती° मै[2].

स सव्येन यमति व्राधतश्चित् स दक्षिणे संगृभीता कृतानि ।
स कीरिणा चित् सनिता धनानि मरुत्वान् नो भवत्विन्द्र ऊती ॥ ९ ॥

सः । सव्येन । यमति । व्राधतः । चित् । सः । दक्षिणे । सम्ऽगृभीता । कृतानि ।
सः । कीरिणा । चित् । सनिता । धनानि । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ९ ॥

स्कन्द० सः इन्द्रः सव्येन हस्तेन यमति नियच्छति । गृह्णातीत्यर्थः । व्राधतः चित् 'व्राधन्' ( निघ ३,३ ) इति महन्नाम । महतोऽपि शत्रून् । सः एव दक्षिणेन हस्तेन संगृभीता कृतानि करोतिरत्र सामर्थ्यात् स्वीकरणे द्रष्टव्यः । सङ्ग्रहणशीलः स्वीकृतानाम्[1] । महतोऽपि शत्रूनयत्नेन निगृह्णातीत्यर्थः । सः एव कीरिणा चित् स्तोतृनामैतत्[2] ( तु. निघ ३,१६ ) चतुर्थ्यर्थे चात्र तृतीया । स्तोत्रे । [3]'चित्'[3] शब्दाद् यश्चे† च[3] । सनिता धनानि षणु दाने । दानशीलो धनानाम् । नित्यं धनानि[4] ददातीत्यर्थः । किञ्च मरुत्वान् ॥ ९ ॥

वेङ्कट० [5]सः वामेन हस्तेन अभि† वर्धमानान् शत्रून् नियच्छति । सः दक्षिणे हस्ते यजमानैः कृतानि[5] हवींषि सङ्गृह्णाति । सः स्तोतारमुद्दिश्य भजते शत्रुधनानि ॥ ९ ॥

मुद्गल० सः इन्द्रः सव्येन वामहस्तेन व्राधतः चित् हिंसतो महतः शत्रूनपि यमति नियमयति[6] । तथा सः इन्द्रः दक्षिणे दक्षिणेन हस्तेन यजमानैः कृतानि हवींषि संगृभीता सङ्ग्रहीता सङ्गृह्णाति । अपि च सः इन्द्रः कीरिणा चित् कीर्तयित्रा स्तोत्रा च स्तुतः सन् धनानि सनिता प्रदानशीलो भवति । हविःप्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः । शिष्टं स्पष्टम् ॥ ९ ॥

स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य ।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान् नो भवत्विन्द्र ऊती ॥ १० ॥

सः । ग्रामेभिः । सनिता । सः । रथेभिः । विदे । विश्वाभिः । कृष्टिऽभिः । नु । अद्य ।
सः । पौंस्येभिः । अभिऽभूः । अशस्तीः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १० ॥

स्कन्द० [7]'ग्रामेभिः रथेभिः इति[7] द्वितीयार्थे तृतीया । सः ग्रामान् सनिता दाता सः एव रथान् इत्येवमहम् विदे जानामि । विश्वाभिः कृष्टिभिः सर्वाभिः मनुष्यजातिभिः सह । नु क्षिप्रम् । अद्य साम्प्रतमित्यर्थः । सः एव पौंस्येभिः स्वैर्बलैः अभिभूः अभिभविता अशस्तीः अशंसितॄणाम्[8] । किञ्च मरुत्वान् ॥ १० ॥

वेङ्कट० [9]सः सैनिकैः भजते शत्रून् सः रथैः । ज्ञायते च विश्वैः मनुष्यैः अस्मिन् अहनि क्षिप्रम् । सः बलैः अभिभवति शत्रून्[9] ॥ १० ॥

---

१. स्वकृताजां मूको. २. स्तोत्र° ति. ३-३. नास्ति ति. † चश° मूको. ४. °नादि अ. ५-५. नास्ति वि[1] अ[2]. † नास्ति वि[1,2] ल लपं. ६. नियमति मूको. ७-७. संग्रामरथेभिरिति अ. ८. अशसि° ति. ९-९. नास्ति वि[1] अ[2].

**मुद्गल०** सः इन्द्रः ग्रामेभिः मरुत्सङ्घैः[1] सह सनिता फलानां प्रदाता भवति। सः च अद्य अस्मिन् अहनि नु क्षिप्रम् विश्वाभिः कृष्टिभिः सर्वैर्मनुष्यैः रथेभिः इन्द्रसम्बन्धिभिः रथैः करणभूतैः विदे विज्ञायते। अपि च सः इन्द्रः पौंस्येभिः स्वकीयैर्बलैः अशस्तीः अशंसनीयान् शत्रून् अभिभूः अभिभवन् वर्तते। मरुत्वान् सः इन्द्रः नः अस्माकम् रक्षणाय भवतु ॥ १० ॥

इति प्रथमाष्टके सप्तमाध्याये नवमो वर्गः ॥

स जामिभिर्यत् समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।
अपां तोकस्य तनयस्य जेषे मरुत्वान् नो भवत्विन्द्र ऊती ॥ ११ ॥

सः । जामिऽभिः । यत् । सम्ऽअजाति । मीळ्हे । अजामिऽभिः । वा । पुरुऽहूतः । एवैः ।
अपाम् । तोकस्य । तनयस्य । जेषे । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ११ ॥

**स्कन्द०** सः जामिभिः समानजातीयैः सह यत् यस्मात् समजाति अज गतिक्षेपणयोः। सङ्गच्छते। मीळ्हे सङ्ग्रामे। अजामिभिः वा असमानजातीयैर्वा सह। अतिबलत्वात् समानजातीयैरसमानजातीयैश्च सह युध्यत इत्यर्थः। कीदृशः। पुरुहूतः एवैः एवाः कामाः तैर्निमित्तभूतैः बहुभिराहूतः। अभिलषितकामप्राप्त्यर्थं बहुभिर्यजमानैराहूत इत्यर्थः। यस्मादिति वचनात्तस्मादित्यध्याहार्यम्। तस्मादतिबलत्वात्[2] अपाम् तोकस्य तनयस्य जेषे[3] तुमर्थेऽयं सेप्रत्ययः। जयश्चात्र प्राप्तिरभिप्रेता[4]। अपां[5] पुत्रान् पौत्रांश्च जेतुम्। प्राप्तुमित्यर्थः[6]। किञ्च मरुत्वान् ॥ ११ ॥

**वेङ्कट०** [7]सः बन्धुभिः यदि सङ्गच्छते सङ्ग्रामे अजामिभिः वा पुरुहूतः मरुद्भिः। अपाम् पुत्रस्य पौत्रस्य च जयाय भवति। लम्भयति वृष्टिम्, पुत्रपौत्रौ च रक्षति[7] ॥ ११ ॥

**मुद्गल०** पुरुहूतः बहुभिर्यजमानैराहूतः सः इन्द्रः मीळ्हे सङ्ग्रामे। 'मीळ्हम्' ( निघ २,१० ) इति धननाम। तद्धेतुत्वात् सङ्ग्रामोऽपि मीळ्हशब्देनोच्यते। जामिभिः बन्धुभिः अजामिभिः वा बान्धवरहितैर्वा एवैः युद्धार्थं मरुद्भिः सह यत् यदा समजाति सङ्गच्छते। तेषाम् उभयविधानाम् अपाम् इन्द्रं प्राप्नुवतां पुरुषाणाम् तोकस्य पुत्रस्य तनयस्य तत्पुत्रस्य च जेषे जयप्राप्तये सः इन्द्रः भवति। किमु वक्तव्यम् अस्माकं स्तोतृतमानां जयो भवतीति। अन्यत् समानम् ॥ ११ ॥

स वज्रभृद् दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा ।
चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान् नो भवत्विन्द्र ऊती ॥ १२ ॥

सः । वज्रऽभृत् । दस्युऽहा । भीमः । उग्रः । सहस्रऽचेताः । शतऽनीथः । ऋभ्वा ।
चम्रीषः । न । शवसा । पाञ्चऽजन्यः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १२ ॥

**स्कन्द०** सः इन्द्रः वज्रभृत् वज्रस्य धारयिता। दस्युहा भीमः उग्रः सहस्रचेताः 'सहस्रम्' ( निघ ३,१ ) इति बहुनाम। बहुप्रज्ञः। शतनीथः 'शतम्' ( निघ ३,१ ) इति बहुनाम। नीथशब्दोऽपि

---

१. °त्सङ्घैः मूको. २. °बलवत्त्वात् कु. ३. नास्ति अ. ४. °प्रेतः कु ति. ५. अपः अ कु. ६. नास्ति कु ति. ७-७. नास्ति वि[1] अ[2].

स्तुतिवचनः। बहुस्तुतिः। ऋभ्वा अपठितमपि[1] महन्नामैतत् द्रष्टव्यम्। महांश्च[2]। चम्रीषः न शवसा पाञ्चजन्यः चमेः रातेश्च चम्रीषः राजा अग्निर्वा इहोच्यते। स हि सर्वमत्ति ददाति च। पञ्चजनाः[3] 'निषादपञ्चमाश्चत्वारो वर्णाः' तेभ्यो हितः पाञ्चजन्यः। 'बाह्यो दैव्यः पाञ्चजन्यो[4] गाम्भीर्यं च ञ्य इष्यते' ( पाम ४,३,६० ) इत्येवं हितार्थे ञ्यप्रत्ययो द्रष्टव्यः छान्दसत्वात्। यथा राजाऽग्निर्वा स्वेन बलेन पञ्चभ्योऽपि[5] जनेभ्यो हितः तद्वदिन्द्र इत्यर्थः। किञ्च मरुत्वान् ॥ १२ ॥

**वेङ्कट०** [6]सः वज्रभृत् असुराणां हन्ता भयङ्करः उद्गूर्णः सहस्रप्रज्ञः शतनयनः दीप्तः सोमः इव बलेन पञ्चजनहितः[6] ॥ १२ ॥

**मुद्गल०** सः इन्द्रः वज्रभृत् अन्यैः [7]धर्तुमशक्यस्य वज्रस्य[7] भर्ता दस्युहा दस्यूनाम् उपक्षपयितॄणाम् असुराणां हन्ता भीमः सर्वेषां भयहेतुः उग्रः उद्गूर्णतेजाः सहस्रचेताः बहुविधज्ञानः। सर्वज्ञः इत्यर्थः। शतनीथः बहुस्तुतिः ऋभ्वा उरु भासमानः चम्रीषः न चम्वां चमसे रसात्मनाऽव-स्थितः सोम इव शवसा बलेन पाञ्चजन्यः गन्धर्वाप्सरसो देवा असुरा रक्षांसि पञ्चजनाः। तेषु रक्षकत्वेन भवः। एवंभूतः सः मरुत्वान् इन्द्रः नः अस्माकं रक्षणाय भवतु ॥ १२ ॥

तस्य॒ वज्रः॑ क्रन्दति॒ स्मत् स्व॒र्षा दि॒वो न त्वे॒षो र॒वथः॒ शिमी॑वान् ।
तं स॑चन्ते स॒नय॒स्तं धना॑नि म॒रुत्वा॑न् नो भव॒त्विन्द्र॑ ऊ॒ती ॥ १३ ॥

तस्य॑ । वज्रः॑ । क्र॒न्द॒ति॒ । स्मत् । स्वः॒ऽसाः । दि॒वः । न । त्वे॒षः । र॒वथः॑ । शिमी॑ऽवान् ।
तम् । स॒च॒न्ते॒ । स॒नयः॑ । तम् । धना॑नि । म॒रुत्वा॑न् । नः । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥ १३ ॥

**स्कन्द०** तस्य इन्द्रस्य स्वभूतः वज्रः क्रन्दति असुरान् घ्नन् शब्दं करोति। स्मत् प्रशस्तः। स्वर्षाः स्वर्शब्दः सर्वपर्यायः। वन षण सम्भक्तौ। सर्वस्य शत्रोः सम्भक्ता। दिवः न द्युलोकस्येव च तस्येन्द्रस्य त्वेषः दीप्तिः [8]रवथः रवशब्दश्च गर्जितलक्षणः[8] शिमीवान् 'शिमि' ( निघ २,१ ) इति कर्मनाम। वृष्टिलक्षणेन कर्मणा तद्वान्। [9]तम् इन्द्रम्[9] सचन्ते सेवन्ते सनयः लाभाः दानानि वा। तम् एव धनानि, स एव लभते ददाति वा। धनानि च तस्यैव सन्तीत्यर्थः। किञ्च मरुत्वान् ॥ १३ ॥

**वेङ्कट०** [10]तस्य वज्रः शब्दं करोति। शोभनः इव दीप्तः शब्दः कर्मवान्। इन्द्रम्† तम् सेवन्ते दानानि, तम् धनानि[10] ॥ १३ ॥

**मुद्गल०** तस्य इन्द्रस्य वज्रः स्मत् भृशम् क्रन्दति शत्रून् आक्रन्दयति। रोदयतीत्यर्थः। य इन्द्रः स्वर्षाः शोभनस्योदकस्य दाता दिवो न दिवः सम्बन्धी सूर्य इव त्वेषः दीप्तः रवथः शब्दस्य गर्जनलक्षणस्य कर्ता शिमीवान् 'शिमी' इति कर्मनाम। लोकानुग्राहकेण कर्मणा युक्तः तम् इन्द्रम्

---

१. नास्ति अ. २. महान् ति. ३. °ना भूत्वा अ. ४. °न्योऽथ कु. ५. पञ्चभ्यो अ; पञ्चभ्यो हि ति. ६-६. नास्ति वि[2] अ[2]. ७-७. °क्यवज्र° मूको. ८-८. रथशब्दश्च गर्जितवचनः अ. ९-९. नास्ति अ. १०-१०. नास्ति वि[2] अ[2]. † इन्द्रः अ[2] ल लपं; इन्द्र वि[2]; नास्ति कु.

सनयः धनस्य दानानि सचन्ते सेवन्ते। तथा तम् धनानि च सेवन्ते। सः मरुत्वान् इन्द्रः नः अस्माकं रक्षणाय भवतु ॥ १३ ॥

यस्याजस्रं शवसा मानमुक्थं परिभुजद् रोदसी विश्वतः सीम् ।
स पारिषत् क्रतुभिर्मन्दसानो मरुत्वान् नो भवत्विन्द्र ऊती ॥ १४ ॥

यस्य । अजस्रम् । शवसा । मानम् । उक्थम् । परिऽभुजत् । रोदसी इति । विश्वतः । सीम् ।
सः । पारिषत् । क्रतुऽभिः । मन्दसानः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १४ ॥

**स्कन्द०** यस्य इन्द्रस्य अजस्रम् सततम्[1] शवसा स्वेन बलेन [2]मानम् निर्माणं जन्म वा। उक्थम् प्रशस्यम्। परिभुजत् भुज पालनाभ्यवहारयोः। परिपालयति। रोदसी द्यावापृथिव्यौ। विश्वतः सर्वतः। सीम् सर्वे। यः सततं† स्वेन बलेन[2] प्रशस्यः जन्मन एव प्रभृति सर्वतः कृत्स्ने[3] द्यावापृथिवी परिपालयतीत्यर्थः। सः पारिषत् पॄ पालनपूरणयोः। पूरयतु अस्मान्। क्रतुभिः प्रज्ञाभिः। अत्यन्तप्रज्ञान्[4] अस्मान्[5] करोत्वित्यर्थः। मन्दसानः मन्दतिरर्चतिकर्मा (तु. निघ ३,१४)। स्तूयमानोऽस्माभिः। किञ्च मरुत्वान् ॥ १४ ॥

**वेङ्कट०** यस्य अनवरतम्[6] शवसा मानम् अतिप्रशस्यम् परिभुजत्[7] द्यावापृथिव्यौ। सर्वत एव परिगृह्य स्वयमेव द्यावापृथिव्योः ईश्वरः भवति। सः पारयतु कर्मभिः मोदमानः अस्मान् ॥ १४ ॥

**मुद्गल०** यस्य इन्द्रस्य उक्थम् प्रशस्यम्[8] शवसा मानम् बलेन सर्वस्य परिच्छेदकम् रोदसी द्यावापृथिव्यौ विश्वतः सीम् सर्वतः अजस्रम् अनवरतम् परिभुजत् परितः सर्वतो भुनक्ति पालयति। सः इन्द्रः क्रतुभिः अस्माभिः कृतैर्यागैः मन्दसानः मोदमानः सन् पारिषत् अस्मान् दुरितात् पारयतु ॥ १४ ॥

न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान् नो भवत्विन्द्र ऊती ॥ १५ ॥

न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः । अन्तम् । आपुः ।
सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १५ ॥

**स्कन्द०** न यस्य देवाः इन्द्रस्य कृत्स्नदेवाः, नान्याऽपि[9] काचित् देवता। न अपि मर्ताः मनुष्याः। आपः चन[10] चनेति निपातो वाशब्दार्थे द्रष्टव्यः। आपो वा शवसः बलस्य अन्तम् आपुः प्राप्नुवन्ति। यस्येन्द्रस्य न कश्चिदपि बलस्यान्तं जानाति। बलस्य वा सदृशो नास्तीत्यर्थः। सः प्ररिक्वा अतिरिक्तः। केन। त्वक्षसा तक्षू त्वक्षू तनूकरणे। शत्रुतनूकरेण बलेन। क्ष्मः दिवः च [2]पृथिव्या दिवश्च[2] सकाशात्। मरुत्वान् ॥ १५ ॥

---

१. सन्ततमनवरतं ति. २-२. नास्ति अ. † नास्ति कु. ३. कृत्स्नेन अ कु. ४. °न्तज्ञानान् अ. ५. नास्ति अ. ६. अवरतं वि[१]. ७. परिभुज ल. ८. नास्ति मै[१]. ९. नाप्येता ति. १०. च ति.

**वेङ्कट०** न यस्य देवाः ईश्वरा भवन्ति देवत्वस्य नापि मर्त्याः। आपः अपि बलस्य अन्तम् न आपुः। सः प्ररेचकः[1] बलेन द्यावापृथिव्योः॥ १५॥

**मुद्गल०** देवता देवस्य दानादिगुणयुक्तस्य यस्य इन्द्रस्य शवसः बलस्य अन्तम् अवसानम् देवाः वस्वाद्या देवगणाः न आपुः नाऽऽनशिरे। तथा मर्ताः मनुष्या नापुः। आपः चन आपोऽपि न प्राऽऽपुः। सः तादृश इन्द्रः त्वक्षसा शत्रूणां तनूकर्त्रा आत्मीयेन बलेन क्ष्मः पृथिव्याः दिवः च स्वर्गस्य च प्ररिक्वा प्रकर्षेण रेचको भवति। लोकद्वयादप्यस्य बलमतिरिच्यत इत्यर्थः। मरुत्वान् मरुद्भि-र्युक्तः सः इन्द्रः नः अस्माकम् ऊती ऊतये रक्षणाय भवतु॥ १५॥

इति प्रथमाष्टके सप्तमाध्याये दशमो वर्गः॥

रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य।
वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु॥ १६॥

रोहित्। श्यावा। सुमत्ऽअंशुः। ललामीः। द्युक्षा। राये। ऋज्रऽअश्वस्य।
वृषण्ऽवन्तम्। बिभ्रती। धूःऽसु। रथम्। मन्द्रा। चिकेत। नाहुषीषु। विक्षु॥ १६॥

**स्कन्द०** रोहित् रोहितवर्णका सामर्थ्यादिन्द्रस्य स्वभूता बडवा। श्यावा[2] श्याववर्णा च। सुमदंशुः सुमच्छब्दोऽत्र स्वच्छब्देन समानार्थः प्रशस्तवचनः। अंशुशब्दो रश्मिवचनः। प्रशस्तरश्मिः। ललामीः ललामशब्दः श्रेष्ठवचनः पुण्ड्रवचनो वा। अत्यन्तश्रेष्ठा [3]सपुण्ड्रा वा[3]। द्युक्षा द्युलोक-निवासिनी दीप्तिनिवासभूता वा। राये ऋज्राश्वस्य ऋज्राश्वग्रहणेन तत्प्रभृतयः[2] पञ्चापि वार्षागिरा[4] [5]लक्ष्यन्ते। अस्माकमृज्राश्वप्रभृतीनां† वार्षागिराणां[5] धनार्थमित्यर्थः। किं कुर्वती। बिभ्रती धूर्षु रथम् रथधुरासु रथं धारयन्ती। अस्माकमृज्राश्वप्रभृतीनां धनार्थमिन्द्रेण स्वरथधुरासु नियुक्ता सतीत्यर्थः। कीदृशी। मन्द्रा[6] हर्षवती। किं करोति। वृषण्वन्तम् चिकेत वृषशब्दो वृष्टिवचनः, तद्वन्तमिन्द्रं जानाति। वृष्टिकारिणमिन्द्रं तत्रारूढं जानातीत्यर्थः। क्व। उच्यते। नाहुषीषु विक्षु 'नहुषः' (निघ २,३) इति मनुष्यनाम। तेषु भवासु नाहुषीषु नहुषनाम्नो वा राज्ञः स्वभूतासु विक्षु मनुष्यजातिषु ब्राह्मणादिकासु। सप्तमीनिर्देशात् वर्तमानमिति शेषः[7]। मनुष्यलोकमायातम्। ब्राह्मणानां मध्ये वर्तमानमित्यर्थः। अथवा रोहिच्छ्यावेत्याहुतिरभिधीयते न बडवा। सोमाज्यपुरोडाशहविर्लक्षणा लोहितवर्णा श्याववर्णा चात्यन्तश्रेष्ठाहुतिरुज्ज्वलरूपत्वात् प्रशस्तरश्मिः धनार्थमस्माकमृज्राश्वप्रभृतीनां [8]वृषण्वन्तमिन्द्रं चिकेत। अन्तर्णीतण्यर्थोऽत्र केतति-र्द्रष्टव्यः। लोडर्थे लिट्। केतयतु ज्ञापयतु। धनमृज्राश्वप्रभृतिभ्यो देहीत्येवमिन्द्रं ब्रवीत्वित्यर्थः[8]। बिभ्रती धूर्षु रथं गच्छत[9] इन्द्रस्य धुरि गृहीत्वा रथम्। निरुन्धानेत्यर्थः[10]। शिष्टपदयोजना तु सदृशी। अथवा रोहिच्छ्यावेत्यादीनि मन्द्रा[11] इत्यस्य विशेषणानि। मन्द्रशब्दः[1] स्तुतिवचनः मन्दतेरर्चतिकर्मत्वात्। इन्द्रं प्रत्यारोहतीति रोहित्। श्यैङ् वृद्धौ। श्यायत इति श्यावा। इन्द्रारोहिणी परिवृद्धा च[12] मन्द्रा स्तुतिः धनार्थमस्माकम् ऋज्राश्वप्रभृतीनामिन्द्रं ज्ञापयतु। शिष्टपदयोजना पूर्ववत्॥ १६॥

---

१. प्रेरकः वि[2]. २. नास्ति ति. ३-३. नास्ति अ; पुण्ड्रा वा ति. ४. °गिरादीनां अ. ५-५. नास्ति अ. † °प्रभृतानां ति. ६. नास्ति अ. ७. वाक्यशेषः ति. ८-८. त्रुटितम् ति. ९. °च्छथ अ. १०. न रुन्धा° ति. ११. °त्यादि अ कु. १२. नास्ति कु.

**वेङ्कट०** पञ्चानां भ्रातृणाम् [1]अश्वा वर्णतः[1] निर्दिश्यन्ते। रोहित् श्यावा कल्याणदीप्तिः पुण्ड्रवती दीप्ता[2] ऋज्राश्वस्य ज्येष्ठस्य[3] धनाय भवन्तु। वर्षवन्तम्[4] ऋज्राश्वेन अधिष्ठितम् रथम् धूर्षु बिभ्रती[5] मदयन्ती नहुषकुलजातासु प्रजासु ऋज्राश्वस्य बडवा प्रादुरभूत् ॥ १६ ॥

**मुद्गल०** रोहित् रोहितवर्णा श्यावा श्यामवर्णा। उभयोः पार्श्वयोः उभयविधवर्णयुक्तेत्यर्थः। सुमदंशुः सुमत् स्वतः प्रांशुः अतिदीर्घावयवा ललामीः पुण्ड्रवती शुक्ला दिवि द्युलोके कृतनिवासा ऋज्राश्वस्य एतत्संज्ञस्य राजर्षेः राये धनार्थम् वृषण्वन्तम् वृष्णा सेक्त्रा इन्द्रेण युक्तम् रथम् धूर्षु युगसम्बन्धिषु वहनप्रदेशेषु[6] बिभ्रती वहन्ती मन्द्रा सर्वेषाम् आह्लादकरी अश्वपङ्क्तिः नाहुषीषु नहुषा मनुष्याः तत्सम्बन्धिनीषु विक्षु सेनालक्षणासु प्रजासु चिकेत ज्ञायते। ईदृश्या अश्वपङ्क्त्या युक्त इन्द्रः सङ्ग्रामेषु अनुग्राहकतया प्रादुर्भवतीत्यर्थः ॥ १६ ॥

एतत् त्यत् त॑ इन्द्र॒ वृष्ण॑ उ॒क्थं वा॑र्षागि॒रा अ॒भि गृ॑णन्ति॒ राधः॑ ।
ऋ॒ज्राश्वः॒ प्रष्टि॑भिरम्ब॒रीषः॑ स॒हदे॑वो॒ भय॑मानः सु॒राधाः॑ ॥ १७ ॥

एतत् । त्यत् । ते॒ । इ॒न्द्र॒ । वृष्णे॑ । उ॒क्थम् । वा॒र्षा॒गि॒राः । अ॒भि । गृ॒ण॒न्ति॒ । राधः॑ ।
ऋ॒ज्रऽअ॑श्वः । प्रष्टि॑ऽभिः । अ॒म्ब॒रीषः॑ । स॒हऽदे॑वः । भय॑मानः । सु॒ऽराधाः॑ ॥ १७ ॥

**स्कन्द०** त्यत् ते इति समानार्थौ। तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यत्[7] जन्मन एव प्रभृति करिष्याम इति सङ्कल्पितवन्तः एतत् त्यत् ते इन्द्र वृष्णे वृष्णे इति तादर्थ्ये चतुर्थी। तव वर्षयितुरर्थाय। त्वां वर्षयितारं स्तोतुमित्यर्थः। हे इन्द्र! उक्थम् स्तोत्रम्[8] वार्षागिराः वृषागीर्नाम ऋषिः, तस्य पुत्राः। अभिगृणन्ति गृणातिरर्चतिकर्माऽन्यत्र, इह तु सामर्थ्यादुच्चारणार्थः। आभिमुख्येनोच्चारयन्ति। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः। कीदृशम्। उच्यते। राधः धनवामैतत् (तु. निघ २,१०)। अन्तर्णीतमत्वर्थं चैतद् द्रष्टव्यम्। हविर्लक्षणेन धनेन[9] धनवत्। हविस्संयुक्तमित्यर्थः। कतमे। उच्यते। एकस्तावत् ऋज्राश्वः कीदृशः। प्रष्टिभिः प्रष्टिशब्दोऽन्यत्र एकस्यामेव धुरि यो द्वितीयो बलीवर्दः अश्वो वा नियुज्यते तस्य वाचकः। इह तु पृच्छ्यतेऽसाविति प्रष्टिः प्रख्यात उच्यते। प्रथमार्थे चैषा तृतीया। अत्यन्तप्रख्यात इत्यर्थः। न केवलम् ऋज्राश्व एव। अम्बरीषः सहदेवः भयमानः सुराधाः इत्येते च। अथवा प्रष्टिभिरिति[10] नेदम् ऋज्राश्वस्य विशेषणम्। किं तर्हि। तृतीयाश्रुतेः प्रसिद्धिबलाद् राध इति च [11]कर्मश्रुतेर्योग्यार्थमत्र क्रियापदमध्याहार्यम्[11]। वार्षागिरास्त्वदर्थं स्तोत्रमुच्चारयन्ति। तच्चोच्चारयन्तो धनं प्रष्टिभिर्वहेयुः। तावद्धनं देहि यावच्छकटेन एकैकस्यां धुरि द्वौ बलीवर्दौ नियुज्य वोढुं शक्यते नैकैकमित्यर्थः ॥ १७ ॥

**वेङ्कट०** तद् इदं तव वर्षितुः इन्द्रस्य स्तोत्रं वृषागिरः पुत्राः उच्चारयन्ति प्रीणनम्। ऋज्राश्वः पार्श्वयोः स्थितैः स्तोत्रम् उच्चारयति। पार्श्वस्थानां नामानि अम्बरीषः इति ॥ १७ ॥

---

१-१. अश्वावतो अ[1] वि[1'2] ल लपं. २. नास्ति ल लपं. ३. श्रेष्ठस्य लपं. ४. वर्षण्वन्तम् अ[2] वि[1]; °र्षवन्त कु. ५. विभाति वि[1] अ[2]. ६. हवन° मै[1]. ७. वं कु; नास्ति ति. ८. नास्ति कु ति. ९. अश्वेन ति. १०. प्रष्टिरिति कु ति. ११-११. °र्थक्रिया° अ कु.

मुद्गल० हे इन्द्र! वृष्णे वृष्णः कामानां वर्षितुः ते तव त्यत् तत् एतत् उक्थम् स्तोत्रम् राधः संराधकं[1] त्वत्प्रीतिहेतु वार्षागिराः वृषागिरो राज्ञः पुत्रा ऋज्राश्वादयः अभिगृणन्ति आभिमुख्येन वदन्ति। वार्षागिरा इत्येतत् विवृणोति। ऋज्राश्वः एतत्संज्ञो राजऋषिः प्रष्टिभिः पार्श्वस्थैरन्यैर्ऋषिभिः सह इन्द्रमस्तौत्। के ते पार्श्वस्थाः। अम्बरीषादयश्चत्वारो राजर्षयः ॥ १७ ॥

दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ।
सनत् क्षेत्रं सखिभिः श्वित्न्येभिः सनत् सूर्यं सनदपः सुवज्रः ॥ १८ ॥

दस्यून् । शिम्यून् । च । पुरुहूतः । एवैः । हत्वा । पृथिव्याम् । शर्वा । नि । बर्हीत् ।
सनत् । क्षेत्रम् । सखिऽभिः । श्वित्न्येभिः । सनत् । सूर्यम् । सनत् । अपः । सुऽवज्रः ॥१८॥

स्कन्द० दस्यून्[2] दस्युशब्दोऽत्र उपक्षपणार्हवचनः दस्यतेः क्षयार्थत्वात्। ये च योद्धुमुपस्थिताः ते उपक्षपणमर्हन्ति नेतरे। योद्धुमुपस्थितान् उपक्षपयितव्यान्[3] वृत्रादीनसुरान्। शिम्यून् च 'शिमी' ( निघ २,१ ) इति कर्मनाम। युशब्दोऽप्यत्र तद्वदर्थे। कर्मवतश्च। स्वव्यापारनिरतांश्च। युद्धपराङ्मुखानित्यर्थः। पुरुहूतः बह्वाहूत इन्द्रः। एवैः तैस्तैः कामैः गमनैर्वा। हत्वा पृथिव्याम् हन्तिरत्र गत्यर्थः। पृथिवीशब्दोऽपि 'अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति' ( या २, ५ ) इति पृथिव्येकदेशभूतेषु असुरपुरेषु द्रष्टव्यः[4]। गत्वा असुरपुरेष्वित्यर्थः। शर्वा शरुशब्दः शरपर्यायः। शरेण। नि बर्हीत् हतवान्। हत्वा च सनत्। सम्भक्तवानित्यर्थः। किम्। उच्यते। क्षेत्रम् असुराणां स्वभूतम्। असुराणां [5]स्वभूतान् विषयानित्यर्थः[5]। न च केवलः। किं तर्हि। सखिभिः मरुदाख्यैः सह। कीदृशैः। श्वित्न्येभिः। श्वैतैरित्यर्थः। अथवा शु इति [6]आशु इति[6] च क्षिप्रनामनी ( तु. निघ २,२५ )। एतिरपि गत्यर्थः। [6]शु य एति स[6] श्वित्न्यस्तैः। क्षिप्रगामिभिरित्यर्थः। सनत् सूर्यम् सूर्यं च सम्भक्तवान्। तदेतत् सव्येनाप्युक्तम्—'वृत्रं यदिन्द्र शवसावधीरहिम्' ( ऋ १,५१,४ ) इति। सनत् अपः वृष्टिलक्षणाश्चापः सम्भक्तवान्। सुवज्रः शोभनेन च वज्रेण युक्त इन्द्रः ॥ १८ ॥

वेङ्कट० उपक्षपयितॄन् भेत्तॄन्[7] च पुरुहूतः मरुद्भिः सह हत्वा पृथिव्याम् हिंसकः निबर्हयतु[8]। हन्तिर्गमनार्थः। प्रयच्छतु क्षेत्रम्[9] मरुद्भिः प्रवृद्धैः, सनत् सूर्यम्, सनत् उदकानि च इन्द्रः ॥ १८ ॥

मुद्गल० पुरुहूतः बहुभिर्यजमानैराहूत इन्द्रः एवैः गमनशीलैर्मरुद्भिर्युक्तः सन् पृथिव्याम् भूमौ वर्तमानान् दस्यून् उपक्षपयितॄन् शत्रून् शिम्यून् च शमयितॄन् शमनकारिणो[10] राक्षसादींश्च हत्वा प्रहृत्य तदनन्तरम् शर्वा हिंसकेन वज्रेण नि बर्हीत् अवधीत्। एवं शत्रून् निरस्य श्वित्न्येभिः श्वेतवर्णैरलङ्करणेन दीप्ताङ्गैः सखिभिः मित्रभूतैर्मरुद्भिः सह क्षेत्रम् शत्रूणां स्वभूतां भूमिम् सनत् समभाक्षीत्। तथा वृत्रेण तिरोहितम् सूर्यम् तस्य वृत्रस्य हननेन सनत् अभजत्। प्राप्तवानित्यर्थः। तथा सुवज्रः शोभनवज्रयुक्त इन्द्रो वृत्रेण निरुद्धाः अपः वृष्ट्युदकानि सनत् समभजत् ॥ १८ ॥

---

१. राधकं मूको. २. नास्ति मूको. ३. °क्षयित° मूको. ४. नास्ति अ ति. ५-५. °भूतविषया° कु. ६-६. नास्ति अ ति. ७. होतॄन् वि[1] अ[2] ८. °यितुं हतवान वि[1] अ[2]. ९. नास्ति ल. १०. शमका° मूको.

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १९ ॥

विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । सिन्धुः । पृथिवी । उत । द्यौः ॥ १९ ॥

**स्कन्द०** विश्वाहा सर्वदा इन्द्रः[1] अधिवक्ता आज्ञापयिता नः अस्तु । तत्प्रसादाच्च[2] अपरिह्वृताः ह्वरतिरन्यत्राप्तिकर्मा कौटिल्यार्थो वा, इह तु सामर्थ्याद्धिंसार्थः । अहिंसिताः केनचित् सनुयाम षणु दाने । दानेन चात्र तत्पूर्वको लाभो लक्ष्यते । लभेमहीत्यर्थः । किम् । उच्यते । वाजम् अन्नम्[3] तत् नः मित्रः इत्याद्युक्तार्थम् ( ऋ १,९४,१६ द्र. ) ॥ १९ ॥

**वेङ्कट०** सर्वदा इन्द्रः अस्माकम्[4] अधिवक्ता[5] अस्तु[6] । अहिंसिताः शत्रुभिः भजेमहि अन्नम् ॥ १९ ॥

**मुद्गल०** विश्वाहा सर्वकालम् नः अस्माकम् इन्द्रः अधिवक्ता अस्तु सर्वदाऽस्माकम् इन्द्रः पक्षपात-वचनयुक्तो भवतु । वयम् अपरिह्वृताः अकुटिलगतयः सन्तः वाजम् हविर्लक्षणमन्नम् सनुयाम सम्भजामहे । यदनेन सूक्तेनास्माभिः प्रार्थितम् तत् मित्रावरुणादयश्च ममहन्ताम् पूजितं कुर्वन्तु ॥ १९ ॥

इति प्रथमाष्टके सप्तमाध्याये एकादशो वर्गः ॥

## [ १०१ ]

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥ १ ॥

प्र । मन्दिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः । निःऽअहन् । ऋजिश्वना ।
अवस्यवः । वृषणम् । वज्रऽदक्षिणम् । मरुत्वन्तम् । सख्याय । हवामहे ॥ १ ॥

**स्कन्द०** [7]अतः परममितर्षेः कुत्सस्यैवार्षम् । चत्वार्यैन्द्राणि सूक्तानि[7] । प्र-शब्दः अर्चत इत्याख्यातेन सम्बन्धयितव्यः । मन्दिने मन्दतिरर्चतिकर्मा (तु. निघ ३,१४) । मन्दः स्तुतिः, तद्वान् मन्दी । तादर्थ्ये चैषा चतुर्थी । स्तुतिमत इन्द्रस्यार्थाय । स्तुत्यमिन्द्रं स्तोतुमित्यर्थः । पितुमत् 'पितुः' ( निघ २,७ ) इत्यन्ननाम । हविर्लक्षणान्नसंयुक्तं प्रार्चत अर्चतिरन्यत्र स्तुत्यर्थः, इह तु सामर्थ्यादुच्चारणार्थः । ऋत्विजां चायं[8] प्रैषः पुत्रपौत्रप्रभृतीनां वा । प्रोच्चारयत हे ऋत्विजः! मत्पुत्रपौत्रप्रभृतयः! वा । वचः स्तुतिलक्षणम् । किं कृतवानिन्द्रः । उच्यते । यः कृष्णगर्भाः कृष्णो नामासुरः, स गर्भभूतोऽन्तर्गतो यासां सेनानां ताः कृष्णगर्भाः । कृष्णसहिता इत्यर्थः । ताः निरहन् निष्कृष्य हतवान् । ऋजिश्वना ऋजिश्वा नाम विदथिनः पुत्रः । तेन सह । अथवा ऋजु

---

१. नास्ति मूको. २. तत्प्र° अ ति. ३. नास्ति कु ति. ४. अस्मभ्यम् कु. ५. अपि वक्ता वि[3] अ[2]. ६. आस्ति वि[3] अ[2]. ७-७. नास्ति ति. ८. वायं ति.

शवति[1] गच्छतीति ऋजिश्वा वज्रः, तेन। अथवा वृष्टिलक्षणा आपः कृष्णगर्भाः कृष्णवर्णस्य मेघस्य गर्भभूतत्वात्। ताः निरहन्। हन्तिर्गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। मेघान्निर्गमितवान्। ऋजिश्वना ऋजुगामिना वज्रेण। वयमपि अवस्यवः पालनकामाः वृषणम् वर्षितारम् वज्रदक्षिणम् वज्रो दक्षिणो यस्य स वज्रदक्षिणः तं वज्रदक्षिणम्। दक्षिणेन हस्तेन गृहीतवज्रम्[2] इत्यर्थः। मरुत्वन्तम् मरुद्भिः सहितमिन्द्रम् सख्याय मनुष्याणां देवैः सह स्तुत्यस्तोतृलक्षणः सम्बन्धः सख्यं तदर्थम् हवामहे। स्तोतुमाह्वयाम इत्यर्थः॥ १॥

**वेङ्कट०** कुत्सः। प्रोच्चारयत[3] मायते इन्द्राय सोमयुक्तं स्तोत्रम्। यः ऋजिश्वानं राजानमुद्दिश्य कृष्णासुरगर्भाः तद्भार्याः च निरहन्। कृष्णः गर्भः यासां ताः कृष्णगर्भाः। ता हत्वा तेन भार्यासु निषिक्तान् गर्भान् अपि अहन्। पालनेच्छवः वर्षितारं वज्रयुक्तदक्षिणहस्तम् मरुत्वन्तम्[4] सख्यसिद्ध्यर्थम् हवामहे। कुत्सस्य इन्द्रः सखा अभवत् इति। 'आ दस्युघ्ना मनसा याह्यस्तम्' (ऋ ४, १६, १०) इत्यत्रोक्तम्॥ १॥

**मुद्गल०** 'प्र मन्दिने' इति एकादशर्चम् अष्टमं सूक्तम्[5]। आङ्गिरसः कुत्स ऋषिः[5]। अष्टम्याद्याश्चतस्रः त्रिष्टुभः शिष्टा जगत्यः। इन्द्रो देवता[5]। आद्या गर्भस्राविण्युपनिषत्[5]॥

हे ऋत्विजः! मन्दिने स्तुतिमते स्तोतव्यायेन्द्राय पितुमत् हविर्लक्षणान्नेनोपेतम्[6] वचः स्तुतिलक्षणं वचनम् प्र अर्चत प्रकर्षेणोच्चारयत[7]। यः इन्द्रः ऋजिश्वना एतत्संज्ञकेन राज्ञा सख्या सहितः सन् कृष्णगर्भाः कृष्णो नाम कश्चिदसुरः तेन निषिक्तगर्भाः तदीया भार्याः निरहन् अवधीत्। कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं[8] गर्भिणीस्तस्य भार्या अप्यवधीदित्यर्थः। अवस्यवः रक्षणेच्छवो वयम् वृषणम् कामानां वर्षितारम् वज्रदक्षिणम् वज्रयुक्तेन दक्षिणेन हस्तेनोपेतम् मरुत्वन्तम् इन्द्रम् सख्याय सख्युः कर्मणे हवामहे आह्वयामहे॥ १॥

**यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन् पिप्रुमव्रतम्।**
**इन्द्रो यः शुष्णमशुषं न्यावृणङ् मरुत्वन्तं सख्याय हवामहे॥ २॥**

यः। विऽअंसम्। जहृषाणेन। मन्युना। यः। शम्बरम्। यः। अहन्। पिप्रुम्। अव्रतम्।
इन्द्रः। यः। शुष्णम्। अशुषम्। नि। अवृणक्। मरुत्वन्तम्। सख्याय। हवामहे॥ २॥

**स्कन्द०** यो व्यंसम् व्यंसनामानमसुरं[9] जाहृषाणेन अत्यर्थं हृष्यता मन्युना मन्युनाम्ना प्रजापतिपुत्रेण सह। अथवा 'मन्युः' (निघ २, १३) इति क्रोधनाम। अत्यर्थं हृष्यता क्रोधेन। प्रविकसता क्रोधेनेत्यर्थः। यः च शम्बरम् शम्बरनामानमसुरम्। यः च अहन् पिप्रुम् पिप्रुनामानमसुरम् अव्रतम् अकर्माणम्। भयान्निश्चेष्टमित्यर्थः। इन्द्रः यः यश्चेन्द्रः शुष्णम्[10] शुष्णनामानमसुरम्[11] अशुषम् अशोष्यम्। अन्येन केनचित् हन्तुमशक्यमित्यर्थः। नि अवृणक् 'वृणक्ति' (निघ २,१९) इति वधकर्मा। निहतवान्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तम् मरुत्वन्तम्॥ २॥

---

१. नास्ति अ. २. °हीत्वा वज्रं अ ति. ३. प्रोत्सार° वि[1] अ[2]. ४. नास्ति वि[1] अ[2]. ५. नास्ति मै[2]. ६. °णेनान्नं° मै[2]. ७. षेण वचनेनैच्चा° मूको. ८. °मनुत्प° मै[2]. ९ नामासु अ. १०. नास्ति ११. °सुरं परम् अ.

**वेङ्कट०** यः व्यंसम् असुरं विकसता क्रोधेन अहन्, यः[1] शम्बरम्[1] यः वा पिप्रुम् अयजमानम्। इन्द्रः यः शुष्णम् अन्यैः [2]अशोष्यम् निहतवान् इति[2] ॥ २ ॥

**मुद्गल०** यः इन्द्रः जहृषाणेन प्रवृद्धेन मन्युना क्रोधेन व्यंसम् विगतभुजं वृत्रम् अहन् अवधीत्। अपि च यः इन्द्रः शम्बरम् एतत्संज्ञमसुरं चावधीत्। तथा अव्रतम् व्रतस्य यागादेः कर्मणो विरोधिनम् पिप्रुम् एतत्संज्ञं चासुरम् यः इन्द्रः अवधीत्। किञ्च यः इन्द्रः अशुषम् शोषकरहितम् शुष्णम् सर्वस्य जगतः शोषकम् एतत्संज्ञमसुरम् नि अवृणक् न्यवर्जयत्। समूलं हतवानित्यर्थः। तम् मरुत्वन्तम् इन्द्रम् सख्याय आह्वयामहे ॥ २ ॥

**यस्य॒ द्यावा॑पृथि॒वी पौंस्यं॑ म॒हद् यस्य॑ व्र॒ते वरु॑णो॒ यस्य॒ सूर्यः॑ ।**
**यस्येन्द्र॑स्य॒ सिन्ध॑वः॒ सश्च॑ति व्र॒तं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ३ ॥**

यस्य॑ । द्यावा॑पृथि॒वी इति॑ । पौंस्य॑म् । म॒हत् । यस्य॑ । व्र॒ते । वरु॑णः । यस्य॑ । सूर्यः॑ ।
यस्य॑ । इन्द्र॑स्य । सिन्ध॑वः । सश्च॑ति । व्र॒तम् । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ३ ॥

**स्कन्द०** यस्य इन्द्रस्य द्यावापृथिवी दिवं पृथिवीं च प्रति पौंस्यम् सेनालक्षणं बलम्। किम्। साकाङ्क्षत्वात् सश्चति इत्येतत् तृतीयपादस्थमाख्यातं सर्वत्रानुषक्तव्यम्। सश्चतीत्ययं गच्छतिकर्मा (तु. निघ २,१४)। अप्रतिहतं गच्छतीत्यर्थः। यस्य च व्रते वृष्टिलक्षणे कर्मणि सति वरुणः सश्चति। किं प्रति। प्रकृतत्वात् द्यावापृथिव्यावेव प्रति यज्ञान् वा प्रति। वृष्टौ हि सत्यां यज्ञाः प्रवर्तन्ते। तांश्च प्रति देवता गच्छन्ति। यस्य च व्रते सूर्यः सश्चति यज्ञान् प्रति उदयास्तमयदेशौ वा प्रति। यस्य च इन्द्रस्य सिन्धवः सश्चति। व्यत्ययेन चेदमेकवचनम्। उदकेन पूर्णाः समुद्रं प्रति गच्छन्ति। व्रतम् सप्तम्यर्थे प्रथमैषा। व्रते वृष्टिलक्षणे कर्मणि सतीत्यर्थः। तम्[3] मरुत्वन्तम् ॥ ३ ॥

**वेङ्कट०** यस्य द्यावापृथिव्यौ महत् वीर्यम्[4] अनुवर्तेते। यस्य व्रते सूर्यः वरुणः च व्यापृतौ भवतः। यस्य इन्द्रस्य नद्योऽपि कर्म सश्चति[5] अभिगच्छन्ति। छान्दसो नकारलोपः ॥ ३ ॥

**मुद्गल०** यस्य इन्द्रस्य महत् विपुलम् पौंस्यम् बलम् द्यावापृथिवी द्यावापृथिव्यौ अनुवर्तेते। तथा यस्य इन्द्रस्य व्रते नियमरूपे कर्मणि वरुणः वर्तते। स वरुणोऽपि इन्द्रस्य नियमनं नातिक्रामतीत्यर्थः। अपि च सूर्यः अपि यस्य इन्द्रस्य व्रते वर्तते। तथा यस्य इन्द्रस्य व्रतम् कर्म सिन्धवः सश्चति[1]। नद्य इन्द्रेणानुशिष्टाः प्रवहन्तीत्यर्थः। तम् मरुत्वन्तम् इन्द्रम् सख्याय आह्वयामहे ॥ ३ ॥

**यो अश्वा॑नां॒ यो गवां॒ गोप॑तिर्व॒शी य आ॑रि॒तः कर्म॑णिकर्मणि स्थि॒रः ।**
**वी॒ळोश्चि॒दिन्द्रो॒ यो असु॑न्वतो व॒धो म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ४ ॥**

यः । अश्वा॑नाम् । यः । गवा॑म् । गोऽप॑तिः । व॒शी । यः । आ॒रि॒तः । कर्म॑णिऽकर्मणि । स्थि॒रः ।
वी॒ळोः । चि॒त् । इन्द्रः॑ । यः । असु॑न्वतः । व॒धः । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ४ ॥

---

१. नास्ति वि[1] अ[2]. २-२. अशोष्यन्निति वि[1] अ[2]; °वान् कु. ३. नास्ति मूको. ४. °र्यम् सेनालक्षणं बलं वि[1] अ[2]. ५. त्यश्वक्य (°प्व अ[1]) वि[1] अ[1]; सश्वन्ति अ[1] वि[2]; सश्चन्ति वि[1] ल लर्प.

**स्कन्द०** यः च अश्वानाम् गवाम् च वशी ईशिता। कीदृशः। गोपतिः गोशब्दोऽत्राब्वचनः[1] सोमवचनो वा स्तोतृवचनो वा। पतिशब्दोऽप्यधिपतिवचनः पालयितृवचनो वा। अपां वा सोमस्य वा स्तुतीनां वा स्तोतॄणां वा अधिपतिः[2] [3]पालयिता वेत्यर्थः[3]। यः च आरितः[4] रि गतावित्यस्याङ्पूर्वस्येदं[5] रूपम्। आगत इत्यर्थः। पदकारस्त्ववग्रहाकरणात् अर्तेर्यङ्लुगन्तस्येदं [6]रूपं मन्यते[6]। तस्य हि यङ्लुकि 'उरत्' ( पा ७,४,६६ ) इत्यभ्यासऋकारस्यात्त्वम्[7]। 'रुग्रिकौ च लुकि' ( पा ७,४,९१ ) इति। निष्ठायामिट्। छान्दसत्वादृकारस्य यणादेशः। 'रो रि' ( पा ८,३,१४ ) इत्यभ्यासस्य रेफस्य लोपः। 'ढ्रलोपे पूर्वस्य०' ( पा ६,३,१११ ) इति दीर्घत्वम्[8]। आरितः। ण्यन्तस्य वा पुगभावः छान्दसत्वात्। अत्यर्थं पुनःपुनर्वा आगतः गमितो वा यजमानैरित्यर्थः। क। उच्यते। कर्मणिकर्मणि[9] यज्ञाख्ये। सर्वयज्ञेष्वित्यर्थः। आरितश्च सन् स्थिरः आ यज्ञपरिसमाप्तेरविचाली। वीळोः चित् संस्तब्धस्यापि अत्यन्तदृढस्यापि असुरादेः इन्द्रो यः असुन्वतः सोमाभिषवमकुर्वतः वधः हन्ता। तम् मरुत्वन्तम्॥ ४॥

**वेङ्कट०** यः अश्वानाम् गवाम् च पतिः स्वतन्त्रः। [10]यः वा[10] सञ्जातारायुधः[11] युद्धेयुद्धे[12] स्थिरः[13]। यः च इन्द्रः दृढस्यापि असुन्वतः हन्ता॥ ४॥

**मुद्गल०** यः इन्द्रः अश्वानाम् पतिरधिपतिः। तथा यः इन्द्रः गवाम्[14] गोपतिः सर्वासां गवामधिपतिर्भवति[15]। वशी अपराधीनः[16]। स्वतन्त्र इत्यर्थः। अपि च यः इन्द्रः कर्मणिकर्मणि[17] सर्वेषु कर्मसु स्थिरः नैश्चल्येनावतिष्ठमानः आरितः[4] स्तुतिभिः प्रत्यृतः प्राप्तो भवति। यः च इन्द्रः असुन्वतः सुन्वतां यागानुष्ठातॄणां विरोधिनः वीळोः चित् दृढस्यापि शत्रोः वधः हन्ता। तम् मरुत्वन्तम् इन्द्रम्[17] सख्याय आह्वयामहे॥ ४॥

## यो विश्व॑स्य॒ जग॑तः प्राण॒तस्पति॒र्यो ब्र॒ह्मणे॑ प्रथ॒मो गा अवि॑न्दत् । इन्द्रो॒ यो दस्यूँ॒रध॑राँ अ॒वाति॑रन्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ५ ॥

यः। विश्व॑स्य। जग॑तः। प्रा॒ण॒तः। पति॑ः। यः। ब्र॒ह्मणे॑। प्र॒थ॒मः। गाः। अवि॑न्दत्। इन्द्र॑ः। यः। दस्यू॑न्। अध॑रान्। अ॒व॒ऽअति॑रत्। म॒रुत्व॑न्तम्। स॒ख्याय॑। ह॒वा॒म॒हे॒ ॥ ५ ॥

**स्कन्द०** यो विश्वस्य सर्वस्य जगतः जङ्गमस्य प्राणतः प्राणिवर्गस्य पतिः स्वामी पालयिता वा। यः च ब्रह्मणे ब्रह्मशब्दोऽत्र ब्राह्मणशब्दपर्यायः तत्प्रभृतिवर्णोपलक्षणार्थश्चेह द्रष्टव्यः। तादर्थ्ये चैषा चतुर्थी। ब्राह्मणादीनां चतुर्णामपि वर्णानामर्थाय। मरुदादिभ्यः प्रथमः पणिभिरसुरैरपहृताः सतीः गाः अविन्दत् लब्धवान्। यः च इन्द्रः दस्यून् अनार्यान् अधरान्[18] अधोवर्तिनोऽपि। न्यूनानित्यर्थः। अवातिरत् अवतिरतिर्वधकर्मा[19] ( तु. निघ २,१९ )। हतवान्। तम् मरुत्वन्तम्॥५॥

---

१. °त्राम्बुवच° अ ति. २. °पतिः स्तोत्राणां वा अ ति. ३-३. °यितेत्य° अ ति. ४. वैप १,६९१ *d* द्र. ५. °गतावित्यस्य अ. ६-६. मन्यते रूपम् अ. ७. °भ्यासः। ऋ° कु. ८. दीर्घः कु. ९. कर्मणि अ ति. १०-१०. नास्ति वि[2]. ११. °तायु° कु लपं. १२. युधेयुद्ध वि[2] अ[2]. १३. स्थितः वि[2] अ[2]. १४. नास्ति मूको. १५. गवानामधि° मूको. १६. अपराधिनः मूको. १७. नास्ति मै[2]. १८. नास्ति अ ति. १९. °तिरतीतिवध° अ.

**वेङ्कट०** यः विश्वस्य गच्छतः प्राणतः च पतिः। यः वा अङ्गिरोभ्यः पूर्वम् एव पशून् अविन्दत् पणिभिः अपहृतान्। इन्द्रः यः दस्यून् अधरान् कृत्वा अवाहन्[1] ॥ ५ ॥

**मुद्गल०** यः इन्द्रः विश्वस्य जगतः गच्छतः प्राणतः प्रश्वसतः प्राणिजातस्य पतिः स्वामी। यः च ब्रह्मणे ब्राह्मणजातिभ्योऽङ्गिरोभ्यः प्रथमः अन्येभ्यो देवेभ्यः पूर्वभावी सन् पणिभिरपहृताः गाः अविन्दत् अलभत। अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैः युद्ध्वा गाः स्वयमलभतेत्यर्थः। अपि च यः इन्द्रः दस्यून् उपक्षपयितॄन् अधरान्[2] नि कृष्टान् कृत्वा अवातिरत् अवधीत्। तम् मरुत्वन्तम् इन्द्रम् सख्याय आह्वयामहे ॥ ५ ॥

यः शूरे॑भि॒र्हव्यो॒ यश्च॑ भी॒रुभि॒र्यो धाव॑द्भि॒र्हूय॑ते॒ यश्च॑ जि॒ग्युभिः॑ ।
इन्द्रं॒ यं विश्वा॒ भुव॑ना॒भि सं॑द॒धुर्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ६ ॥

यः । शूरे॑भिः । हव्यः॑ । यः । च॒ । भी॒रुऽभिः॑ । यः । धाव॑त्ऽभिः । हूय॑ते । यः । च॒ । जि॒ग्युऽभिः॑ ।
इन्द्र॑म् । यम् । विश्वा॑ । भुव॑ना । अ॒भि । स॒म्ऽद॒धुः । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ६ ॥

**स्कन्द०** यः शूरैः हव्यः जयार्थमाह्वातव्यः। यश्च भीरुभिः आत्मरक्षार्थमाह्वातव्यः। यः च[3] धावद्भिः हूयते। यः च जिग्युभिः शत्रून् जितवद्भिः जयार्थमाहूयते। यम् च इन्द्रम् विश्वा भुवना सर्वाणि भूतजातानि अभि सन्दधुः तस्यतस्याभिलषितस्य दानार्थं ध्यायन्ति। तम्[4] मरुत्वन्तम् ॥ ६ ॥

**वेङ्कट०** यः शूरैः भीरुभिः च ह्वातव्यः। यः पलायमानैः हूयते, यः च जयशीलैः। इन्द्रम् यम् सर्वाण्येव भूतानि आत्मकार्यार्थम् अभि सन्दधुः ॥ ६ ॥

**मुद्गल०** यः इन्द्रः शूरेभिः शौर्योपेतैः पुरुषैः हव्यः योद्धुमाह्वातव्यः। यः च भीरुभिः भयशीलैः कातरैः पुरुषैः सहायार्थमाह्वातव्यः। अपि च यः इन्द्रः धावद्भिः पराजयेन पलायमानैः हूयते रक्षार्थमाहूयते[5]। यः च जिग्युभिः प्राप्तजयैराहूयते। यम् च इन्द्रम् विश्वा भुवना सर्वाणि भूतजातानि स्वेषुस्वेषु कार्येषु अभि सन्दधुः आभिमुख्येन स्थापयन्ति। तम् मरुत्वन्तम् इन्द्रम् सख्याय आह्वयामहे ॥ ६ ॥

इति प्रथमाष्टके सप्तमाध्याये द्वादशो वर्गः ॥

रु॒द्राणा॑मेति प्र॒दिशा॑ विचक्ष॒णो रु॒द्रेभि॒र्योषा॑ तनुते पृ॒थु ज्रयः॑ ।
इन्द्रं॑ मनी॒षा अ॒भ्य॑र्चति श्रु॒तं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ७ ॥

रु॒द्राणा॑म् । ए॒ति॒ । प्र॒ऽदिशा॑ । वि॒ऽच॒क्ष॒णः । रु॒द्रेभिः॑ । योषा॑ । त॒नु॒ते॒ । पृ॒थु । ज्रयः॑ ।
इन्द्र॑म् । म॒नी॒षा । अ॒भि । अ॒र्च॒ति॒ । श्रु॒तम् । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ७ ॥

---

१. अगाहरत् कु. २. नास्ति मै. ३. च नष्टः अ कु. ४. नास्ति कु. ५. रक्षणार्थं॰ मै॰.

**स्कन्द०** रुद्राणाम्[1] 'यामन् रुद्रस्य सूनवः सुदंससः' ( ऋ १,८५,१ ) इति प्रयोगदर्शनाद् रुद्रस्य पुत्रा मरुतः। तेऽत्र सोऽयमित्यभिसम्बन्धात् पितृशब्देन रुद्रशब्देन प्रत्याय्यन्ते। रुद्रपुत्राणां मरुताम् प्रदिशा प्र इत्येष आ इत्येतस्य स्थाने। आदेशेन, वचनेनेत्यर्थः। एति गच्छतीन्द्रः[2]। अथवा 'रुद्रः' ( निघ ३, १६ ) इति स्तोतृनाम। स्तोतृणामादेशेन गच्छति। यत्रयत्र[3] मरुतः स्तोतारो वा ब्रुवन्ति तत्रतत्रेन्द्रो गच्छति, नान्यत्रेत्यर्थः। कीदृशः। विचक्षणः पण्डितः विद्रष्टा वा सर्वस्य। किञ्च रुद्रेभिः रुद्रपुत्रैर्मरुद्भिः सहेन्द्रस्य योषा सोमाहुतिलक्षणा तनुते विस्तारयति। पृथु विस्तीर्णमपि सत्[4] ज्रयः ज्रयतिर्गतिकर्मा ( तु. निघ २, १४ )। गमनं वेगम्[5]। मरुद्भिः सह इन्द्रस्य यज्ञं [6]प्रति गच्छतः[6] पिपासिता सोमाहुतिः विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः। यदा रुद्र इति स्तोतृनाम तदा तृतीयानिर्देशात् प्रदास्यमानेति वाक्यशेषः। स्तोतृभिः ऋत्विग्भिः प्रदास्यमाना सोमाहुतिः यज्ञं प्रति गच्छत इन्द्रस्य विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः। किञ्च इन्द्रम्[7] मनीषा स्तुतिः अभि अर्चति अभिष्टौति। श्रुतम् विख्यातम्। किञ्च मरुत्वन्तम् ॥ ७ ॥

**वेङ्कट०** मरुतां गच्छति मार्गप्रदेशनेन[8] विद्रष्टा। मरुद्भिः सम्मिश्रयिता विस्तीर्णं वेगं करोति। इन्द्रम् वाक् अभिष्टौति ॥ ७ ॥

**मुद्गल०** विचक्षणः सूर्यात्मना प्रकाशमान इन्द्रः रुद्राणाम् रुद्रपुत्राणाम् अध्यात्मं प्राणरूपेण वर्तमानानां मरुताम् प्रदिशा प्रदेशनेन मनुष्येभ्यः प्रदानेन सह एति अन्तरिक्षे गच्छति। अपि च रुद्रेभिः अधिभूतं वर्तमानैः[9] रुद्रपुत्रैर्मरुद्भिः योषा माध्यमिका वाक् पृथु विस्तीर्णम् ज्रयः वेगम् तनुते विस्तारयति। प्रसङ्गादत्र मरुतां स्तुतिः। तैर्मरुद्भिः सह वर्तमानम् श्रुतम् प्रख्यातं सूर्यात्मानम् इन्द्रम् मनीषा स्तुतिलक्षणा वाक् अभि अर्चति आभिमुख्येन स्तौति। तम् मरुत्वन्तम् इन्द्रम् वयम् सख्याय आह्वयामहे ॥ ७ ॥

**यद् वा॑ मरुत्वः पर॒मे स॒धस्थे॒ यद् वा॑व॒मे वृ॒जने॑ मा॒दया॑से ।**
**अत॒ आ या॑ह्यध्व॒रं नो॒ अच्छा॑ त्वा॒या ह॒विश्च॑कृमा सत्यराधः ॥ ८ ॥**

यत् । वा॒ । म॒रु॒त्व॒: । प॒र॒मे । स॒धऽस्थे॑ । यत् । वा॒ । अ॒व॒मे । वृ॒जने॑ । मा॒दया॑से ।
अतः॑ । आ । या॒हि॒ । अ॒ध्व॒रम् । न॒: । अच्छ॑ । त्वा॒ऽया । ह॒विः । च॒कृ॒म॒ । स॒त्य॒ऽरा॒ध॒: ॥ ८ ॥

**स्कन्द०** यत्-शब्दोऽत्र यदिशब्दस्यार्थे। यदि वा हे मरुत्वः![10] परमे सधस्थे सह तिष्ठन्ति यस्मिन् देवताः स सधस्थो यज्ञ इहाभिप्रेतः। विप्रकृष्टे यज्ञ इत्यर्थः। यत् वा अवमे अन्तिकनामैतत् ( निघ २,१६ )। सन्निकृष्टे यज्ञे। कीदृशे। वृजने वृजी[11] वर्जने। वर्जिते दोषैः। अविगुण इत्यर्थः। अथवा 'वृजनम्' (निघ २,९) इति बलनाम। सामर्थ्याच्चान्तर्णीतमत्वर्थम्, बलवति[12]। सारवतीत्यर्थः। मादयासे मदतिरत्र सामर्थ्यात्तृप्त्यर्थः। तर्पयस्यात्मानम्[13]। [14]स्वार्थिको वाऽत्र[14] णिच्। तृप्यसीत्यर्थः।

---

१. नास्ति मूको. २. °तीत्यर्थः ति. ३. यत्र कु. ४. सन् मूको. ५. वेगः कु ति. ६-६. प्रगच्छतः अ; नास्ति ति. ७. नास्ति अ. ८. मार्गप्रदर्शनेन वि[1] कु; मार्ग प्रदे° ल. ९. °नैः वचैः मूको. १०. मरुतः मूको. ११. वृजि अ कु. १२. °वती कु. १३. °यात्मा° कु. १४-१४. °कोऽत्र अ ति.

अतः आ याहि अध्वरम् **यज्ञम्** नः **अस्माकं स्वभूतम्**। अच्छ[1] **आप्तुम्**। **अनुभवितुमित्यर्थः**। [2]**किं कारणम्। उच्यते**[2]। **यस्मात्** त्वाया **त्वत्काम्यया**। **महत्या त्वद्विषयया श्रद्धयेत्यर्थः**। [3]हविः **सवनीयपुरोडाशादिलक्षणम्** चकृम[3] **कृतवन्तो वयं** हे सत्यराधः! **सत्यधन**! ॥ ८ ॥

**वेङ्कट०** **यदि** वा मरुत्वः! परमे **स्थाने दिवि**, यत् वा अवमे सधस्थे **कस्मिंश्चन युद्धे** **माद्यसि**। अतः आ याहि **अस्माकं यज्ञं** प्रति। **त्वत्कामनया** हविः चकृम **सत्यधन**! ॥ ८ ॥

**मुद्गल०** हे मरुत्वः! **मरुद्भिर्युक्तेन्द्र**! परमे **उत्कृष्टे** सधस्थे **सहस्थाने गृहे** यत् वा **यदि** वा मादयासे **तृप्तो वर्तसे**। यत् वा **यदि** **वा** अवमे **अर्वाचीने** वृजने **गृहे**[4] **मादयासे**। अतः **अस्मात् उभयविधात् स्थानात्** नः **अस्माकम्** अध्वरम् **यज्ञम्** अच्छ **आभिमुख्येन** आ याहि **आगच्छ**। **हे** सत्यराधः! **सत्यधन**! त्वाया **त्वत्कामनया**[5] **वयम्** हविः चकृम **कृतवन्तः** ॥ ८ ॥

**त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः ।**
**अधा नियुत्वः सगणो मरुद्भिरस्मिन् यज्ञे बर्हिषि मादयस्व ॥ ९ ॥**

त्वाऽया। इन्द्र। सोमम्। सुसुम। सुऽदक्ष। त्वाऽया। हविः। चकृम। ब्रह्मऽवाहः।
अध। नियुत्वः। सऽगणः। मरुत्ऽभिः। अस्मिन्। यज्ञे। बर्हिषि। मादयस्व ॥ ९ ॥

**स्कन्द०** **पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यस्माच्छब्दोऽध्याहार्यः**[6]। **यस्मात्** त्वाया **त्वत्काम्यया**। [7]**महत्या त्वद्विषयया श्रद्धया**[7] **इत्यर्थः**। **हे** इन्द्र! सोमम् सुषुम सुदक्ष! **सुबल**!। त्वाया **एव च सवनीयपुरोडाशादि** हविः चकृम। हे ब्रह्मवाहः! **स्तुतिलक्षणं ब्रह्म उह्यते प्राप्यते यस्मिन् स ब्रह्मवाहाः, तस्य सम्बोधनं** हे **ब्रह्मवाहः**!। अध **एतस्मात् कारणात्**[8] हे नियुत्वः! **नियुतोऽश्वाः, तद्वन्**! सगणः मरुद्भिः[9]। **मरुद्गणेन सहेत्यर्थः**। अस्मिन् **अस्मदीये** यज्ञे बर्हिषि **वेद्यां स्तीर्णे** मादयस्व[10] **तर्पयात्मानं** [11]**तृप्य वा**[11] ॥ ९ ॥

**वेङ्कट०** [12]त्वाया इन्द्र![12] सोमम् **सुतवन्तः शोभनबल**!। त्वाया **पुरोडाशम्** [13]चकृम स्तोत्रवाह![13]। **अथ**[14] **अश्ववन्**! मरुद्भिः **सहितः** अस्मिन् **यज्ञे** बर्हिषि **आसीनः** तृप्य ॥ ९ ॥

**मुद्गल०** हे सुदक्ष! **शोभनबल**! इन्द्र! त्वाया **त्वत्कामनया** सोमम् सुषुम **अभिषुतवन्तो वयम्**। हे ब्रह्मवाहः! **ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमान**! **प्राप्यमाण**! **इन्द्र**! त्वाया **त्वत्कामनया सवनीयपुरोडाशलक्षणम्** हविः चकृम **कृतवन्तः**। हे नियुत्वः! **नियुतोऽश्वाः, तद्वन्निन्द्र**! अध **अथानन्तरम्** मरुद्भिः **सप्तगणरूपैः तत्संज्ञैर्देवैः** सगणः **गणसहितः सन्** अस्मिन् **वर्तमाने** यज्ञे बर्हिषि **आस्तीर्णे**[15] **दर्भे उपविश्य** मादयस्व **तृप्तो भव** ॥ ९ ॥

**मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने ।**
**आ त्वा सुशिप्र हरयो वहन्तूशन् हव्यानि प्रति नो जुषस्व ॥ १० ॥**

---

१. अच्छा कु; नास्ति अ. २-२. नास्ति कु. ३-३. नास्ति अ. ४. गृहे तस्मिन् मूको. ५. °त्वा सोमं सुषुम मै[1]. ६. °ध्याहर्तव्यः ति. ७-७. नास्ति मूको.; तु. स्कन्दः ८मे मन्त्रे. ८. नास्ति अ. ९. नास्ति अ ति. १०. मदयस्व अ. ११-११. नास्ति ति. १२-१२. नास्ति वि[1]. १३-१३. च कृतस्तोत्र! कु. १४. नास्ति वि[1] अ[1]. १५. °र्णे यज्ञे मै[1].

मादयस्व । हरिऽभिः । ये । ते । इन्द्र । वि । स्यस्व । शिप्रे इति । वि । सृजस्व । धेने इति ।
आ । त्वा । सुऽशिप्र । हरयः । वहन्तु । उशन् । हव्यानि । प्रति । नः । जुषस्व ॥ १० ॥

**स्कन्द०** मादयस्व तर्पयात्मानं तृप्य वा हरिभिः अश्वैः सह । ये ते तव स्वभूताः हे इन्द्र ! । केन प्रकारेण । वि स्यस्व शिप्रे स्यतिरुपसृष्टो विमोचने । शिप्रे हनू इहोच्येते । हविर्भक्षणाय[1] हनू विमुञ्च । प्रेरयेत्यर्थः । वि सृजस्व धेने धेट् पाने इत्यस्य दधातेर्वा धेने जिह्वोपजिह्विके इहाभिप्रेते । निधीयते च तयोः रसः । जिह्वोपजिह्विके अपि रसास्वादनाय विसृज । प्रेरयेत्यर्थः । तदर्थं च त्वा त्वाम् हे सुशिप्र! क्षिप्रे हनू नासिके वा इहोच्यंते ( तु० या ६,१७ ) [2]'शिप्राः शीर्षसु वितता हिरण्ययीः' ( ऋ ५, ५४ ,११ ) इति[2] प्रयोगदर्शनात् शिरस्त्राणवचनो वा इह शिप्राशब्दः । सुहनो![3] सुनस ! सुशिरस्त्राण! वेत्यर्थः । हरयः अश्वाः आ वहन्तु । आनीतश्च सन् त्वम् उशन् कामयमानः[4] अस्मदीयानि हव्यानि प्रति नः जुषस्व प्रतिसेवस्वास्मान् अभिलषितफलप्रदानेन ॥ १० ॥

**वेङ्कट०** माद्य[5] अश्वैः सह, ये तवाश्वाः स्वभूताः । सोमपानार्थम् [6]हनू मोचय[6] । [7]वि सृजस्व[7] च जिह्वोपजिह्विके[8] । सुहनो ! त्वाम्[9] आ वहन्तु हरयः । कामयमानः हव्याानि अस्माकम् प्रति सेवस्व ॥ १० ॥

**मुद्गल०** हे इन्द्र! हरिभिः अश्वैः सह मादयस्व तृप्तो भव । ये ते तव स्वभूताः तदर्थम् शिप्रे हनू संहते वि स्यस्व सोमपानार्थं विवृते कुरु । तथा धेने पानसाधनभूते जिह्वोपजिह्विके वि सृजस्व सोमपानार्थं विश्लिष्टे कुरु । हे सुशिप्र ! शिप्रे हनू । शोभनशिप्रावन्निन्द्र ![10] त्वा त्वाम् हरयः अश्वाः आ वहन्तु अस्मदीयं यज्ञं प्रापयन्तु । त्वं च उशन् अस्मान् कामयमानः नः अस्माकम् हव्यानि हवींषि प्रति जुषस्व प्रत्येकं सेवस्व, मा उदासिष्ठाः ॥ १० ॥

**मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वाजम् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥**

मरुत्ऽस्तोत्रस्य । वृजनस्य । गोपाः । वयम् । इन्द्रेण । सनुयाम । वाजम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥

**स्कन्द०** मरुद्भिः सह स्तोत्रं यस्य तत् मरुत्स्तोत्रम्, तस्य मरुत्स्तोत्रस्य । वृजनस्य बलनामैतत् ( तु. निघ २,९ ) । सेनालक्षणस्येन्द्रबलस्य[11] । गोपाः[12] गोपायितव्याः रक्ष्याः वयम् । इन्द्रेण हेतुना । इन्द्रेणानुगृह्यमाणा इत्यर्थः[13] । सनुयाम षणु दाने । दानेन चात्र तत्पूर्वको लाभो लक्ष्यते । लभेमहीत्यर्थः । किम् । वाजम् अन्नम् । तत् नः मित्रः इत्याद्युक्तार्थम्[14] (ऋ १,९४,१६ द्र.) ॥ ११ ॥

**वेङ्कट०** मरुद्भिः सहितं स्तोत्रं यस्य शत्रूणां छेत्तः तस्य[15] गोप्याः वयम् । तेन अन्नं लभेमहि इति ॥ ११ ॥

---

१. °लंक्षणा° मूको. २-२. नास्ति ति. ३. नास्ति अ. ४. °यानः अ. ५. मादयस्व कु. ६-६. हनु मो° लपं; हनूमन्विमोचय वि[3] अ[2]. ७-७. वृजस्य लपं; पृजस्व वि[2]. ८. °जिह्वके वि[1]. ९. त्वा वि[3] अ[2]. १०. °शिप्रवन् इ° मूको. ११. °लक्षणस्येन्द्रस्य ब° कु. १२. गोप्तारः ति. १३. नास्ति ति. १४. इत्युक्तार्थम् कु ति. १५. यस्य वि[3] अ[2].

**मुद्गल०** मरुत्स्तोत्रस्य मरुद्भिः सह स्तोत्रं यस्य स मरुत्स्तोत्रस्तस्य, वृजनस्य शत्रूणां क्षेप्तुरिन्द्रस्य सम्बन्धिनः गोपाः गोपायनीया रक्षणीयाः वयम् तेन इन्द्रेण वाजम् अन्नम् सनुयाम लभेमहि। यदेतदस्माभिः प्रार्थितम् नः अस्मदीयम् तत् मित्रादयः द्यावापृथिव्यौ च ममहन्ताम् पूजितं कुर्वन्तु ॥ ११ ॥

इति प्रथमाष्टके सप्ताध्याये त्रयोदशो वर्गः ॥

## [ १०२ ]

इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत् त आनजे ।
तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ १ ॥

इमाम्। ते। धियम्। प्र। भरे। महः। महीम्। अस्य। स्तोत्रे। धिषणा। यत्। ते। आनजे।
तम्। उत्ऽसवे। च। प्रऽसवे। च। ससहिम्। इन्द्रम्। देवासः। शवसा। अमदन्। अनु ॥

**स्कन्द०** इमाम् ते तव[1] धियम् कर्म स्तुतिलक्षणम्[2]। स्तुतिमित्यर्थः। प्र भरे प्रहरामि[3]। उच्चारयामीत्यर्थः। महः महतः महीम् महतीम्। कस्मात्। उच्यते। अस्य आत्मन एवायं परोक्षरूपेण निर्देशः। अस्य कुत्साख्यस्यर्षेः[4] अस्य वा यजमानस्य स्वभूते स्तोत्रे धिषणा स्तुतिलक्षणा वाक् यत् यस्मात् ते द्वितीयार्थे षष्ठी। त्वाम् आनजे अञ्जेर्गत्यर्थस्येदं[5] रूपम्। गता प्राप्ता। यस्मात् पूर्वमपि अहम् अयं यजमानो वा[6] त्वां स्तुतवानित्यर्थः। किञ्च तम् प्रकृतम् उत्सवे च प्रसवे च सासहिम् सर्वजनसाधारणः इन्द्रमहादिः उत्सवः। प्रात्यात्मिकोऽभ्युदयः[7] प्रसवः। तयोरुभयोरपि। तत्प्रतिबन्धकराणां शत्रूणामभिभवितारं भवन्तम् इन्द्रम्। केन सासहिम्। उच्यते। शवसा स्वेन बलेन। देवा मरुदादयो देवाः अमदन् तृप्यन्तु। अनु 'तृतीयार्थे' (पा १, ४, ८५) इत्येवम् अनुशब्दः कर्मप्रवचनीयः। सहार्थश्च तृतीयार्थः। तं सासहिम् इन्द्रम् इत्येतैश्च द्वितीयान्तैः सहास्य सम्बन्धः। तेन सासहिना भवतेन्द्रेण सहेत्यर्थः ॥ १ ॥

**वेङ्कट०** इदम् ते कर्म प्रभरामि[8] महतः[9] महत्, अस्य कुत्सस्य स्तोत्रे तव बुद्धिः[10] यस्मात् आगता। तम्[11] युद्धापवर्गे उपक्रमे च शत्रूणां सहनशीलम्[11] इन्द्रम् देवाः बलं दृष्ट्वा अनु अमदन् मरुतः ॥ १ ॥

**मुद्गल०** 'इमां ते' इत्येकादशर्चं नवमं सूक्तम्[12]। कुत्स ऋषिः[13]। अन्त्या त्रिष्टुप् शिष्टा जगत्यः। इन्द्रो देवता[13] ॥

हे इन्द्र! महः महतः ते तव इमाम् इदानीं क्रियमाणाम् महीम् महतीम् अत्यन्तोत्कृष्टाम् धियम् स्तुतिम् प्र भरे प्रकर्षेण सम्पादयामि। ते तव[14] धिषणा त्वदीया बुद्धिः अस्य मम

---

१. नास्ति अ. २. °क्षणाम् ति. ३. हरामि अ कु. ४. °त्साख्यर्षेः अ. ५. अजे° मूको. ६. नास्ति कु. ७. प्रत्या° मूको. ८. प्रहरा° वि[3] अ[2]. ९. °तः महि वि[3] अ[2]. १०. नास्ति वि[3] अ[2]. ११. तम् इन्द्रम् वि[1'1] अ[1] कु ल लपं; तदेन्द्रम् वि[3] अ[2]. १२. ··· नशी° वि[3] अ[2]. १३. नास्ति मै[2]. १४. त्वत् मूको.

स्तोतुः स्तोत्रे स्तुतौ यत् यस्मात् आनजे अक्ता संश्लिष्टासीत् । तस्मात् तव प्रियां स्तुतिं करोमीत्यर्थः । उत्तरोऽर्धर्चः परोक्षकृतः । सासहिम् शत्रूणाम् अभिभवितारं पूर्वोक्तम् इन्द्रम् देवासः कर्मसु दीव्यन्त ऋत्विजः शवसा स्तुतिभिः कीर्तितेन बलेन अनु अमदन् अनुक्रमेण हर्षं प्रापयन् । किमर्थम् । उत्सवे च उत्सवार्थम् अभिवृध्यर्थम् प्रसवे च धनानाम् उत्पत्त्यर्थं च ॥ १ ॥

अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।
अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ॥ २ ॥

अस्य । श्रवः । नद्यः । सप्त । बिभ्रति । द्यावाक्षामा । पृथिवी । दर्शतम् । वपुः ।
अस्मे इति । सूर्याचन्द्रमसा । अभिऽचक्षे । श्रद्धे । कम् । इन्द्र । चरतः । विऽतर्तुरम् ॥ २ ॥

स्कन्द० अस्य इन्द्रस्य श्रवः कीर्तिम् नद्यः गङ्गाद्याः सप्त बिभ्रति । धारयन्तीत्यर्थः । द्यावाक्षामा द्यावापृथिव्यौ । पृथिवी अन्तरिक्षनामैतत् ( तु. निघ १,३ ) । अन्तरिक्षं च । न च केवलं श्रवः । किं तर्हि । दर्शतं वपुः 'वपुः' ( निघ ३,७ ) इति रूपनाम । शरीरवचनो वा वपुःशब्दः । दर्शनीयं च रूपं शरीरं वा । अतिमहत्त्वादस्येन्द्रस्य कीर्तिं वपुश्च गङ्गाद्याः सप्त नद्यः त्रयश्च लोकाः धारयन्ति । अथवा 'वपुः' ( निघ १,१२) इत्युदकनाम । 'श्रवः' ( निघ २,७ ) इत्यप्यन्ननाम । अन्नकारणत्वाच्चोदकमत्र[1] श्रवः इत्युच्यते । अस्य स्वभूतम् अन्नकारणं वृष्टिलक्षणमुदकं दर्शनीयं सप्त नद्यः त्रयोऽपि लोका धारयन्तीत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । अस्मे अस्माकं सूर्याचन्द्रमसौ अभिचक्षे [2]प्रकाशाय दर्शनाय[2] श्रद्धे श्रद्धातेरुत्साहकर्मण[3] इदं रूपम् । अहोरात्रप्रविभागायत्तसम्यगाहारपरिणामनिमित्ताय चोत्साहाय च कम् सुखाय च हे इन्द्र! त्वत्प्रसादादेव चरतः नियतेनोदयास्तमयादिलक्षितेन मार्गेण गच्छतः । वितर्तुरम् त्वरतेस्तरतेर्वा यङ्लुगन्तस्येदं रूपम् । विविधं त्वरितं तीर्णं वा । अत्यन्तशीघ्रम् अत्यन्तद्रुतं वेत्यर्थः । सूर्याचन्द्रमसावस्मान् दर्शनोत्साहसुखार्थम् [4]अहोरात्रप्रविभागं कर्तुं त्वत्प्रसादेनोदयास्तमयादिरूपेण[4] गच्छत इत्यर्थः ॥ २ ॥

वेङ्कट० अस्य कीर्तिं वृष्टिलक्षणमुदकं[5] सप्त नद्यः धारयन्ति । द्यावाभूम्यौ[6] अन्तरिक्षं च दर्शनीयं रूपं धारयन्ति । अस्माकं सूर्याचन्द्रमसौ इन्द्रप्रेरितौ[7] अभिदर्शनाय[8] सत्यत्वं श्रद्धातुं शीघ्रम्[9] चरतः । कम् इति पूरणम्[10] ॥ २ ॥

मुद्गल० अस्य इन्द्रस्य श्रवः कीर्तिम् सप्त 'इमं मे गङ्गे' (ऋ १०,७५,५) इत्यस्यामृचि प्राधान्येन प्रतिपादिता गङ्गाद्याः सप्त नद्यः बिभ्रति धारयन्ति । वृत्रहननेन इन्द्रस्य यत्[11] वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयन्तीत्यर्थः । अपि च द्यावाक्षामा द्यावापृथिव्यौ पृथिवी अन्तरिक्षम् च अस्य सूर्यात्मना वर्तमानस्य इन्द्रस्य दर्शतम् सर्वैः प्राणिभिर्दर्शनीयम् वपुः प्रकाशात्मकं रूपं

---

१. °कारणमत्र अ; °कारणत्वादुद° ति. २-२. प्रकाशायत्ताय ति. ३. श्रद्धते° मूको. ४-४. अहोरात्र ...देनोद° ति. ५. नास्ति वि[1,2] अ[1] कु ल लपं. ६. °भूम्योः वि[1] ल लपं. ७. इन्द्र प्रे° ल. ८. दर्शनाय लपं; अतिदर्श° वि[1] अ[2]; °नाय श्रद्धानाय वि[1] ल; °नाय प्रधानाय वि[2] अ[1]. ९. शीघ्रः कु. १०. °णमिति वि[1,2] अ[1] ल लपं. ११. नास्ति मै[1].

धारयन्ति। किञ्च हे इन्द्र! अस्मे अस्माकम् अभिचक्षे द्रष्टव्यानां पदार्थानाम् आभिमुख्येन प्रकाशनार्थम् श्रद्धे कम् श्रद्धार्थम्। चक्षुषा दृष्टे हि वस्तुनीदं सत्यमिति श्रद्धोत्पद्यते। कं पादपूरणम्। तदुभयार्थम् सूर्याचन्द्रमसा वितर्तुरम् परस्परं व्यतिहारेण तरणं पुनःपुनः गमनं यथा भवति तथा चरतः वर्तेते। त्वमेव तद्रूपः सन् वर्तस इत्यर्थः ॥ २ ॥

तं स्मा रथं मघवन् प्राव सातये जैत्रं यं ते अनुमदाम संगमे ।
आजा न इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ॥ ३ ॥

तम्। स्म। रथम्। मघऽवन्। प्र। अव। सातये। जैत्रम्। यम्। ते। अनुऽमदाम। सम्ऽगमे। आजा। नः। इन्द्र। मनसा। पुरुऽस्तुत। त्वायत्ऽभ्यः। मघऽवन्। शर्म। यच्छ। नः॥ ३ ॥

**स्कन्द०** स्म इति पदपूरणः। तम् रथम् हे मघवन्! प्र अव अवतिरत्र गत्यर्थः। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः[1]। अस्मान् प्रति गमय सातये सम्भजनायास्माकम्। कतमम्। उच्यते। जैत्रम् जयशीलम् यम् ते स्वभूतम् अनुमदाम। अनुरभीत्येतस्य स्थाने। मदतिरर्चतिकर्मा ( तु. निघ ३,१४ )। अभिष्टवामेत्याशास्महे संगमे प्राप्तौ सत्याम्। प्राप्तं सन्तमित्यर्थः। आजा सङ्ग्रामे सङ्ग्रामस्थानीये वा यज्ञे नः अस्माकं स्वभूते। हे इन्द्र! मनसा प्रसन्नेन चित्तेन हे पुरुष्टुत! बहुभिः स्तोतृभिः स्तुत! त्वायद्भ्यः त्वत्कामेभ्यः हे मघवन्[2]! धनवन्! शर्म सुखं गृहं वा यच्छ देहि नः अस्मभ्यम् ॥ ३ ॥

**वेङ्कट०** तम् स्म रथम्[3] मघवन्! प्रतिगच्छ धनं[4] दातुम्, जैत्रम् यम् त्वदीयं वयं स्तुमः संगमे सङ्ग्रामे अस्मभ्यम् मनसा[5] बहुस्तुत! त्वत्कामेभ्यः सुखं प्रयच्छ। पुनः नः[6] पूरणम्[7] ॥ ३ ॥

**मुद्गल०** हे मघवन्! धनवन्निन्द्र! सातये अस्माकं धनलाभाय तम् स्म तमेव रथम् प्र अव प्रेरय वर्तय। नः अस्माकम् मनसा बुद्ध्या पुरुष्टुत! हे बहुशः स्तुतेन्द्र! ते तव स्वभूतम् जैत्रम् जयनशीलम् यम् रथम् संगमे शत्रुभिः सह सङ्गमने आजा युद्धे सति अनुमदाम वयमनुक्रमेण स्तुमः। अपि च हे मघवन्! इन्द्र! त्वायद्भ्यः त्वां कामयमानेभ्यः नः अस्मभ्यम् शर्म सुखम् यच्छ देहि ॥ ३ ॥

वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन् वृष्ण्या रुज ॥ ४ ॥

वयम्। जयेम। त्वया। युजा। वृतम्। अस्माकम्। अंशम्। उत्। अव। भरेऽभरे। अस्मभ्यम्। इन्द्र। वरिवः। सुऽगम्। कृधि। प्र। शत्रूणाम्। मघऽवन्। वृष्ण्या। रुज ॥४॥

---

१. °र्थ्याच्चान्तर्णी° कु; °र्थ्याद्वान्तर्णी° ति. २. नास्ति ति. ३. नास्ति वि[१] अ[२]. ५. धनानि वि[२]. ६. नास्ति वि[१] अ[१] ल. ७. नः इति वि[१] अ[२]. ८. °रणः कु.

**स्कन्द०** वयम् जयेम इत्याशास्महे त्वया युजा युज्यतेऽसाविति युक् सहाय उच्यते । त्वया सहायेन । वृतम् वर्ततेऽसाविति वृत्[1] सेनोच्यते गमनस्वभावकत्वात्, तां[2] वृतम् । शत्रुसेनामित्यर्थः । किञ्च अस्माकम् स्वभूतम् अंशम् सङ्ग्रामकारिसमुदायैकदेशम् । अस्मदीयमित्यर्थः । उत् अव उदित्येतत् समित्येतस्य स्थाने । अवती रक्षणार्थः । संरक्ष । भरेभरे सङ्ग्रामेसङ्ग्रामे । किञ्च अस्मभ्यम् षष्ठ्यर्थे एषा चतुर्थी । अस्माकं हे इन्द्र! वरिवः सुगम्[3] सुगमित्यपठितमपि सुखनाम इह[4] द्रष्टव्यम् । 'अथा यज्ञाय गृणते सुगं कृधि' ( ऋ १,९४,९ ) इति यथा । धनं च सुखं च । कृधि कुरु । देहीत्यर्थः । अथवा सुखमभिगम्यते प्राप्यत इति सुगं सुलभमुच्यते । धनस्य चेदं विशेषणम् । धनं [5]सुगं स्वधिगमं[5] सुलभं[6] कुरु । यथा वयं सुखं लभेमहि तथा कुर्वित्यर्थः । किञ्च अस्मच्छत्रूणाम् हे मघवन्! वृष्ण्या अपठितमपि बलनामैतत् । बलानि प्र रुज रुजो भङ्गे । प्रकर्षेण भङ्ग्धि ॥ ४ ॥

**वेङ्कट०** वयम् जयेम त्वया सहायेन अभिकाङ्क्षितं[7] धनम् । अस्माकम् अंशम् त्वमुद्गमय सङ्ग्रामेसङ्ग्रामे[8] । अस्मभ्यम् इन्द्र! धनं शोभनगमनं कुरु। प्र रुज शत्रूणाम् वीर्याणि मघवन्! ॥ ४ ॥

**मुद्गल०** हे इन्द्र! युजा अस्माभिर्युक्तेन सहायभूतेन त्वया वृतम् आवृण्वन्तं शत्रुम् [9]वयम् स्तोतारः[9] जयेम अभिभवेम । अपि च भरेभरे सङ्ग्रामेसङ्ग्रामे अस्माकम् अंशम् अस्मदीयभागम् उत् अव शत्रुकृतपीडापरिहारेणोत्कृष्टं रक्ष । तथा हे इन्द्र! वरिवः धनम् अस्मभ्यम् सुगम् सुगमं सुप्रापम् कृधि कुरु । तथा हे मघवन्! शत्रूणाम् अस्मदुपद्रवकारिणाम् वृष्ण्या वृष्ण्यानि वीर्याणि प्र रुज प्रभङ्ग्धि । बाधस्वेत्यर्थः॥ ४ ॥

नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः ।
अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हीन्द्र निभृतं मनस्तव ॥ ५ ॥

नाना । हि । त्वा । हवमानाः । जनाः । इमे । धनानाम् । धर्तः । अवसा । विपन्यवः ।
अस्माकम् । स्म । रथम् । आ । तिष्ठ । सातये । जैत्रम् । हि । इन्द्र । निऽभृतम् । मनः । तव ॥

**स्कन्द०** नाना पृथक् । हि-शब्दः पदपूरणः । त्वा हवमानाः अत्र शानच्छ्रुतेः साकाङ्क्षत्वात् प्रतीक्षन्ते तिष्ठन्ति [10]वेति वाक्यशेषः । त्वामाह्वयन्तः प्रतीक्षन्ते† तिष्ठन्ति[10] वा । के । उच्यते । जनाः इमे 'जनः' ( निघ २,३ ) इति मनुष्यनाम । इमे मनुष्याः अस्मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा । हे धनानाम् धर्तः! स्तोतृषु धारयितः! । स्तोतृभ्यो धनानां दातरित्यर्थः । केन निमित्तेन । अवसा पालनेन तर्पणेन वा निमित्तेन । पालनार्थं तर्पणार्थं वेत्यर्थः । कीदृशाः । उच्यते । विपन्यवः विपन्युरिति मेधाविनाम ( तु. निघ ३,१५ ) । मेधाविनः । एतत् ज्ञात्वा अस्माकं स्म सातये स्मेति पदपूरणः एवार्थे[11] वा । अस्माकमेव सम्भजनाय । रथम् आ तिष्ठ आरोह । किञ्च जैत्रम् हि हिशब्दः पदपूरणः[12] चार्थे वा । जयनशीलं च हे इन्द्र! निभृतम् अविचलम् मनः तव । शत्रुजयनशीलञ्च आश्रितोपकारे च स्थिरं मनस्तवेत्यर्थः ॥ ५ ॥

---

१. वृतं कु. २ नास्ति कु. ३. नास्ति कु ति. ४. वेह अ; एतत् ति. ५-५. नास्ति ति. ६. नास्ति अ. ७. अतिका° वि[1] अ[2]. ८. सङ्ग्रामे वि[1] अ[2] कु ९-९. नास्ति मै[2]. १०-१०. नास्ति कु.
† प्रतिक्षन्ते अ ति. ११. एवार्थो ति. १२. पूरणः कु.

**वेङ्कट०** तत्रतत्र हि त्वामाह्वयमानाः इमे जनाः धनानाम् धर्तः! इन्द्र! रक्षणार्थं मेधाविनः। तत्र त्वम् अस्माकम् भजनाय रथम् आ तिष्ठ। जयशीलम् हि युयुत्सतः तव मनः अविचालि चेति[1] ॥ ५ ॥

**मुद्गल०** हे धनानाम् धर्तः! गोहिरण्यादिरूपाणां द्रव्याणां धारयितरिन्द्र! विपन्यवः स्तोतारः इमे जनाः अवसा रक्षणेन हेतुना त्वा हवमानाः त्वाम् आह्वयन्तः नाना हि विभिन्नाः खलु। तेषां मध्ये अस्माकम् स्म अस्माकमेव सातये धनदानाय रथम् आ तिष्ठ आरोह। हे इन्द्र! निभृतम् अव्याकुलम् तव मनः चित्तम् जैत्रम् हि जयशीलं खलु। शत्रून् जित्वास्मभ्यं धनं दातुं समर्थमित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये चतुर्दशो वर्गः ॥

**गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः।**
**अकल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिषासवः ॥ ६ ॥**

गोऽजिता। बाहू इति। अमितऽक्रतुः। सिमः। कर्मन्ऽकर्मन्। शतम्ऽऊतिः। खजम्ऽकरः। अकल्पः। इन्द्रः। प्रतिऽमानम्। ओजसा। अथ। जनाः। वि। ह्वयन्ते। सिसासवः ॥ ६ ॥

**स्कन्द०** 'अथा जना वि ह्वयन्ते' इति एतस्माच्छब्दसमानार्थाथशब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यस्मात् गोजिता असुरादीनां स्वभूतानां गवां जेतारौ बाहू अस्येन्द्रस्य। यस्माच्चायम्[2] अमितक्रतुः अपरिमितकर्मा[3] वा अपरिमितप्रज्ञो वा। सिमः षिञ् बन्धने इत्यस्यैतद्रूपम्। बन्धकश्चासुराणाम्। यस्माच्च कर्मन्कर्मन्[4] कर्मणिकर्मणि यज्ञाख्ये शतमूतिः 'शतम्' (निघ ३, १) इति बहुनाम। बहुपालनः। बहुप्रकारपालनकारीत्यर्थः। खजंकरः[5] सङ्ग्रामकारी च। यस्माच्च अकल्पः इन्द्रः कल्पनं कल्पः, तद्रहितोऽकल्पः। अतिशयवद्देवतामाहात्म्यान्नानारूपप्रतिपत्तेः नियतेनैकरूपेण एवंरूपो नामेन्द्रः इति परिकल्पयितुमशक्य इत्यर्थः। अथवा [6]'पितृकल्पो मातृकल्प इत्यादिषु[6] सादृश्यार्थत्वदर्शनात् कल्पशब्द इह सदृशपर्यायो द्रष्टव्यः। सदृशरहितोऽकल्पः। नेन्द्रस्य कश्चित् सदृशोऽस्तीत्यर्थः। प्रतिमानम् उपमानभूतश्च[7] सर्वस्य ओजसा स्वेन बलेन। अथ एतस्मात् कारणात् जनाः सर्वे मनुष्याः वि ह्वयन्ते विविधं ह्वयन्ति। [8]'कम्। प्रकृतत्वाद् इन्द्रम्। सिषासवः सम्भक्तुमिच्छन्तः[8] तेन प्रदीयमानान् सर्वानभिप्रेतानर्थान्[9] ॥ ६ ॥

**वेङ्कट०** पशूनां जेतारौ [10]बाहू भवतः। अमितप्रज्ञश्च[10] भवति[11] बन्धकः कर्मणिकर्मणि[12] बहुरक्षः[13] युद्धस्य कर्ता। अनुपमः बलेन सर्वेषां प्रतिद्वन्द्वी[14] भवति। अथ एनम् जनाः वि ह्वयन्ते सम्भक्तुम् इच्छन्तः ॥ ६ ॥

---

१. च कु. २. °स्माच्च कु. ३. °कर्मो मूको. ४. कर्म अ. ५. नास्ति अ. ६-६. नास्ति ति. ७. उपमाभू° ति कु. ८-८. सिषासवः संभक्तुमिच्छन्तः। कम्। प्रकृतत्वादिन्द्रम मूको. ९. °प्रेतार्था° अ ति. १०-१०. °हु ··· मित° वि². ११. भवसि वि¹'³ कु ल लपं. १२. कर्मणि वि³ अ². १३. बहुरक्षकः वि³ अ². १४. °द्वन्द्वि वि¹'³ अ² लपं कु.

**मुद्गल०** हे इन्द्र! तव बाहू हस्तौ गोजिता जयेन गवां लम्भयितारौ। त्वं च अमितक्रतुः अपरिच्छिन्नज्ञानः सिमः श्रेष्ठः कर्मन्कर्मन् स्तोतॄणां कर्मणिकर्मणि उपस्थिते शतमूतिः बहुविधरक्षणोपेतः। खजंकरः खजति मथ्नाति पुरुषानिति खजः सङ्ग्रामः, तस्य कर्ता। अकल्पः कल्पेनान्येन रहितः। स्वतन्त्र इत्यर्थः। ओजसा सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण प्रतिमानम् प्रतिनिधित्वेन मीयमानः। यस्माद् एवंगुणविशिष्टः इन्द्रः, अथ अतः कारणात् सिषासवः धनं लब्धुकामा जनाः तम्[1] वि ह्वयन्ते विविधमाह्वयन्ति ॥ ६ ॥

उत् ते॑ श॒तान्म॑घव॒न्नुच्च॒ भूय॑स उ॒त स॒हस्रा॑द् रिरिचे कृ॒ष्टिषु॒ श्रवः॑ ।
अ॒मा॒त्रं त्वा॑ धि॒षणा॑ तित्विषे म॒ह्यधा॑ वृ॒त्राणि॑ जिघ्नसे पुरंदर ॥ ७ ॥

उत् । ते॒ । श॒तात् । म॒घ॒ऽव॒न् । उत् । च॒ । भूय॑सः । उ॒त । स॒हस्रा॑त् । रि॒रि॒चे॒ । कृ॒ष्टिषु॑ । श्रवः॑ ।
अ॒मा॒त्रम् । त्वा॒ । धि॒षणा॑ । ति॒त्वि॒षे॒ । म॒ही । अध॑ । वृ॒त्राणि॑ । जि॒घ्न॒से॒ । पु॒र॒म्ऽद॒र॒ ॥ ७ ॥

**स्कन्द०** रिरिचे इत्याख्यातं प्रत्युच्छब्दमनुषक्तव्यम्[2]। उद्रिच्यते अतिरिच्यत इत्यर्थः। ते तव शतात् मघवन्!, उत् च अतिरिच्यते भूयसः बहुतरात्। शतद्वयात् शतत्रयाद्वेत्यर्थः। उत् सहस्रात् रिरिचे सहस्राच्चातिरिच्यते। कृष्टिषु कृष्टिरिति मनुष्यनाम (तु. निघ २,३)। निर्धारणे चैषा सप्तमी। मनुष्याणां मध्ये। श्रवः कीर्तिरन्नं[3] धनं वा। अथवा श्रवश्शब्दोऽत्र सामर्थ्यात् बलवचनः। शवश्शब्दस्य वा बलनाम्नो रेफ उपजनः। बलमित्यर्थः। किञ्च अमात्रम् मात्राशब्दः[4] परिमाणवचनः। अपरिमाणमत्यन्तमहान्तम् त्वा धिषणा स्तुतिलक्षणा वाक् तित्विषे दीपयति। वृत्रहननायोत्तेजयतीत्यर्थः। मही महती। उत्तेजनानन्तरं च वृत्राणि शत्रून् जिघ्नसे हंसि त्वम् हे पुरन्दर! असुरपुराणां दारयितः! ॥ ७ ॥

**वेङ्कट०** सङ्ग्रामे मनुष्यशतस्य या कीर्तिः भवति ततोऽपि अतिरिक्तं तव यशः। उत् च द्विशतात् त्रिशतात्[5] च, उत् सहस्रात्[6]। मनुष्यमध्ये त्वाम् अपरिमाणबलं महती स्तुतिः दीपयति। अथ त्वम्[7] शत्रून् हंसि पुराणां दारयितः! ॥ ७ ॥

**मुद्गल०** हे मघवन्! धनवन्निन्द्र! कृष्टिषु स्तोतृषु मनुष्येषु त्वया दीयमानम् श्रवः यदन्नमस्ति तत् शतात् शतसंख्याकात् धनात् उत् रिरिचे उद्रिक्तमधिकं भवति। अपि च भूयसः शतसंख्यातादपि बहुतराद् धनात् उत् रिरिचे अधिकं भवति। किं बहुना। सहस्रात् सहस्रसंख्याकादपि उत् रिरिचे। त्वया दत्तं तदन्नम् अक्षयमित्यर्थः। अपि च अमात्रम् मात्रयेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकम् त्वा त्वाम् मही महती धिषणा अस्मदीया स्तुतिलक्षणा वाक् तित्विषे दीपयति। त्वत्सम्बन्धिनो गुणान् प्रकाशयति। हे पुरन्दर! शत्रूणां पुरां दारयितरिन्द्र! अध स्तुत्यनन्तरम् वृत्राणि आवरकान् शत्रून् जिघ्नसे हंसि विनाशयसि च ॥ ७ ॥

त्रि॒वि॒ष्टि॒धातु॑ प्रति॒मान॒मोज॑सस्ति॒स्रो भूमी॑र्नृपते॒ त्रीणि॑ रोच॒ना ।
अती॒दं विश्वं॒ भुव॑नं ववक्षिथाश॒त्रुरि॑न्द्र ज॒नुषा॑ स॒नाद॑सि ॥ ८ ॥

---

१. नास्ति मूको. २. °च्छब्दोऽनुषक्तव्यः अ ति ३. °र्तिमन्नं अ ति. ४. मात्रश° कु. ५. नास्ति वि[1] अ[2]. ६. °स्राद् च अ[1] कु. ७. त्वम् न[:] वि[1] अ[1].

त्रिविष्टिऽधातु । प्रतिऽमानम् । ओजसः । तिस्रः । भूमीः । नृऽपते । त्रीणि । रोचना ।
अति । इदम् । विश्वम् । भुवनम् । ववक्षिथ । अशत्रुः । इन्द्र । जनुषा । सनात् । असि ॥ ८ ॥

**स्कन्द०** धीयन्ते[1] प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः । देवपितृमनुष्योपभोग्यास्त्रयोऽपि[2] विष्टा व्याप्ताः येन तत् त्रिविष्टिधातु । यदायत्तास्त्रयोऽपि शरीरस्थितिहेतवोऽन्नरसा इत्यर्थः । अथवा त्रयो धातवः शीतोष्णवर्षाणि त्रयो वा लोकाः, तेषु सन्धीयते, व्याप्ता येन तत् त्रिविष्टिधातु । किं पुनस्तत् । सामर्थ्यलक्षणं बलम् । कीदृशम्[3] । प्रतिमानम् उपमानभूतं सर्वस्य[4] ओजसः बलस्य । तिस्रः भूमीः भूमिशब्देनात्र साहचर्यात् त्रयो लोका उच्यन्ते । त्रीन् लोकानित्यर्थः । हे नृपते! मनुष्याणां पालयितः! त्रीणि रोचना त्रीणि च[5] दीप्तिस्वभाविकानि ज्योतींषि । कानि । आग्नेयं वैद्युतं सौर्यं च । इदम् विश्वम् भुवनम् इदं सर्वं भूतजातम् अति[6] ववक्षिथ वहतेरिदं साभ्यासस्य रूपम् । सुष्ठु वहसि धारयसीत्यर्थः । किञ्च अशत्रुः शत्रुशब्दोऽत्र शातयितृवचनः क्रियाशब्दः । शातयितृरहितस्त्वं हे इन्द्र! जनुषा जन्मनैव । सनात् चिरन्तनः असि । जन्मन एव प्रभृति न तव कश्चिद्विनाशने समर्थ इत्यर्थः ॥ ८ ॥

**वेङ्कट०** त्रिभिः शुल्वैः निर्मिता रज्जुः[6] दृढतमा[7] अच्छेद्या भवति तादृश इन्द्रः ओजसः च[8] प्रतिद्वन्द्वी[9] भवति । तादृशः त्वं नृणां स्वामिन्! तिस्रः भूमीः त्रीणि च तेजांसि अति वहसि । किं बहुना सर्वम् भुवनम् अतिवहसि[10] । जन्मनैव चिरात् प्रभृति शत्रुवर्जितः भवसि इति[11] ॥ ८ ॥

**मुद्गल०** हे नृपते! नृणां पालयितरिन्द्र! त्वम् ओजसः सर्वेषां प्राणिनां बलस्य प्रतिमानम् प्रतिनिधिरसि । कीदृशम् । त्रिविष्टिधातु धातुशब्दो रज्जुभागवचनः । यथा त्रिविष्टिः त्रिगुणिता रज्जुः द्रढीयसी, एवमिन्द्रोऽपि दृढतर इत्यर्थः । किञ्च त्वम् तिस्रः भूमीः त्रीन् लोकान् त्रीणि रोचना त्रीणि तेजांसि दिवि आदित्याख्यम् अन्तरिक्षे वैद्युतरूपमग्निं पृथिव्याम् आहवनीयादिरूपेण वर्तमानं पार्थिवमग्निम् एवं त्रीन् लोकान् त्रीणि तेजांसि अति ववक्षिथ अतिशयेन वोढुमिच्छसि अपि च इदम् विश्वम् सर्वम् भुवनम् भूतजातं च अतिवोढुमिच्छसि । सर्वस्य जगतः पालनेन त्वमेव सर्वेषां निर्वाहको भवसीत्यर्थः । यस्मात् हे इन्द्र! त्वम् सनात् चिरकालादारभ्य जनुषा जन्मना जन्मप्रभृति अशत्रुः सपत्नरहितः असि ॥ ८ ॥

त्वां देवेषु प्रथमं हवामहे त्वं बभूथ पृतनासु सासहिः ।
सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः ९ ॥

त्वाम् । देवेषु । प्रथमम् । हवामहे । त्वम् । बभूथ । पृतनासु । ससहिः ।
सः । इमम् । नः । कारुम् । उपऽमन्युम् । उत्ऽभिदम् । इन्द्रः । कृणोतु । प्रऽसवे । रथम् । पुरः ॥

**स्कन्द०** देवेषु इति निर्धारण एषा सप्तमी । त्वाम् देवानां मध्ये प्रथमम् वयम् हवामहे । किञ्च

---

१. विधी° अ. २. तदेव पितृ° कु अ. ३. °दृशः कु. ४. °स्य मन्त्रस्य अ ति. ५. नास्ति ति. ६. रज्जू लपं. ७. दृढतरा कु. ८. च बलस्य वि[1] अ[2]. ९. द्वन्दि वि[1][2] लपं. १०. अतिमवसि सर्वं वि[1] अ[2]. ११. नास्ति कु.

त्वम् बभूथ भवसि पृतनासु सङ्ग्रामेषु सासहिः अभिभविता शत्रूणाम्। परोऽर्धर्चः परोक्ष-कृतत्वात्[1] भिन्नं वाक्यम्। सः प्रकृत इन्द्रः इमम् नः कारुम् उपमन्युम् उद्भिदम् नः इत्येकवचनस्य स्थाने बहुवचनम्। इमं मामिति सर्वत्र चात्र पुर इत्येतेन अव्ययेन अप्रत्ययेन योगात्[2] षष्ठ्यर्थे द्वितीया। अस्य मम कुत्सनाम्नः ऋत्विजो वा। कारुम्[3]। स्तोतृनामैतत् ( तु. निघ ३, १६ )। स्तोतुः[4]। उपमन्युम्। मन्युशब्दोऽत्र मन्यतेः कान्तिकर्मणो द्रष्टव्यः, न क्रोधनाम। उपगतकामस्य। प्रार्थनावत इत्यर्थः। उद्भिदम् उद्भेत्तुः[5]। अपूर्वाणां स्तुतीनां जनयितुरित्यर्थः। पुरः अग्रतः इन्द्रः आत्मीयम् रथम् कृणोतु करोतु। [6]प्रसवे प्रकृष्टः सवो यज्ञः[6] प्रसवस्तत्र। प्रकृष्टेऽस्मिन् यज्ञ इत्यर्थः ॥ ९ ॥

वेङ्कट० त्वाम् देवानां मध्ये प्रथमम् हवामहे। त्वम् अभवः सङ्ग्रामेषु सोढा[7]। सः इन्द्रः अस्माकं कर्तारम् उपमन्तारम् उद्भेदकम् आत्मीयम् रथम् युद्धारम्भे अग्रतः कृणोतु ॥ ९ ॥

मुद्गल० हे इन्द्र! देवेषु प्रथमम् श्रेष्ठम् त्वाम् हवामहे यागार्थम् आह्वयामहे। तथा त्वम् पृतनासु सङ्ग्रामेषु सासहिः बभूथ शत्रूणाम् अभिभवितासि। उत्तरार्धः परोक्षकृतः। सः इन्द्रः नः अस्माकम् कारुम् स्तुतीनां कर्तारम् उपमन्युम् उपमन्तारं सर्वज्ञम् उद्भिदम् शत्रूणाम् उद्भेत्तारम् इमम् एवंगुणविशिष्टं पुत्रम् कृणोतु करोतु। अपि च प्रसवे युद्धोत्पत्तावस्मदीयम् रथम् पुरः अन्येभ्यो रथेभ्यः पुरतो वर्तमानं करोतु ॥ ९ ॥

त्वं जिगेथ न धना रुरोधिथार्भेष्वाजा मघवन् महत्सु च ।
त्वामुग्रमवसे सं शिशीमस्यथा न इन्द्र हवनेषु चोदय ॥ १० ॥

त्वम् । जिगेथ । न । धना । रुरोधिथ । अर्भेषु । आजा । मघऽवन् । महत्ऽसु । च ।
त्वाम् । उग्रम् । अवसे । सम् । शिशीमसि । अथ । नः । इन्द्र । हवनेषु । चोदय ॥ १० ॥

स्कन्द० त्वम्[8] जयसि। जित्वा च न धना रुरोधिथ [9]स्तोतृभ्यो न धनानि[9] निरुणत्सि[10]। सर्वाणि ददासीत्यर्थः। क्व पुनर्जयामि उच्यते। अर्भेषु आजा अर्भशब्दोऽल्पवचनः। दभ्रमर्भकम् इति स्वार्थिकप्रत्ययान्तमल्पनामसु ( तु. निघ ३,२ ) पठितम्। आजिशब्दोऽपि[11] सङ्ग्रामवचनः। अल्पेषु सङ्ग्रामेषु। हे मघवन्! महत्सु च। एतज्जानन्तो वयम् त्वाम् उग्रम् अप्रसह्यम् अवसे तर्पणाय सम् शिशीमसि। स्तुतिभिः संस्कुर्म इत्यर्थः। अथ एतस्मात्कारणात् नः अस्मान्[12] हे इन्द्र! हवनेषु होमेषु चोदय। जुह्वतामस्माकं प्रतिपद्यस्वेत्यर्थः ॥ १० ॥

वेङ्कट० त्वम् जयसि [13]न च धनानि रुणत्सि[13] क्षुद्रेषु मघवन्! महत्सु च पुरुषेषु। यः सङ्ग्रामोऽस्माकं भवति तस्मिन् त्वाम् उद्गूर्णं रक्षणाय स्तोत्रैः तीक्ष्णीकुर्मः। अथ अस्मान् इन्द्र! तस्मिन् सङ्ग्रामे स्वयमेव चोदय हवनेषु[14] सत्सु इति ॥ १० ॥

मुद्गल० हे इन्द्र! त्वम् जिगेथ शत्रून् जयसि। तथा धना शत्रुभ्योऽपहृतानि धनानि न रुरोधिथ

---

१. प्रत्यक्ष° अ कु. २. अयोगात् ति. ३. नास्ति ति. ४. स्तोतुं ति. ५. °भेत्तुं ति. ६-६. त्रुटितम् ति. ७. सोढा शत्रूणां वि[1] अ[2]. ८. त्वं जीवं अ ति. ९-९. °तृभ्योऽन्तधनानि ति. १०. रुण° ति. ११. °शब्दः ति. १२. अस्माकं ति. १३-१३. धनानि न च ऋणद्धि ददासि वि[1] अ[2]. १४. संग्रामेषु वि[1] अ[2].

नावरुणत्सि। स्तोतृभ्यः प्रयच्छसीत्यर्थः। हे [1]मघवन्! धनवन्निन्द्र![1] अर्भेषु अल्पेषु आजा आजिषु सङ्ग्रामेषु महत्सु च प्रौढेषु च अवसे अस्माकं रक्षणार्थम् उग्रम् उद्गूर्णम्[2] अधिकबलम् त्वाम् सम् शिशीमसि स्तोत्रैस्तीक्ष्णीकुर्मः। अथ अनन्तरं हे इन्द्र! त्वम् हवनेषु युद्धार्थमाह्वानेषु सत्सु आगत्य नः अस्मान् चोदय सङ्ग्रामेषु प्रेरय। जयं प्रापयेत्यर्थः॥ १०॥

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ ११॥

विश्वाहा। इन्द्रः। अधिऽवक्ता। नः। अस्तु। अपरिऽह्वृताः। सनुयाम। वाजम्।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः॥ ११॥

**स्कन्द०** विश्वाहा इत्याद्युक्तार्थम् (ऋ १,१००,१९ द्र.)॥ ११॥

**वेङ्कट०** ऋ १,१००,१९ द्र.॥ ११॥

**मुद्गल०** विश्वाहा सर्वकालम् नः इन्द्रः अधिवक्ता अस्तु सर्वदाऽस्माकम् इन्द्रः पक्षपातवचनयुक्तो भवतु। वयं[3] च अपरिह्वृताः अकुटिलगतयः सन्तः वाजम् हविर्लक्षणमन्नम् सनुयाम सम्भजामहे। यदनेन सूक्तेनास्माभिः प्रार्थितम् तत् मित्रावरुणादयः ममहन्ताम् पूजितं कुर्वन्तु॥ ११॥

इति प्रथमाष्टके सप्तमाध्याये पञ्चदशो वर्गः॥

[ १०३ ]

तत् त इन्द्रियं परमं पराचैरधारयन्त कवयः पुरेदम्।
क्षमेदमन्यद् दिव्य१न्यदस्य समी पृच्यते समनेव केतुः॥ १॥

तत्। ते। इन्द्रियम्। परमम्। पराचैः। अधारयन्त। कवयः। पुरा। इदम्।
क्षमा। इदम्। अन्यत्। दिवि। अन्यत्। अस्य। सम्। ईमिति। पृच्यते। समनाऽइव। केतुः॥ १॥

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यदस्माकं स्तोत्रमभिप्रेतम् तत् ते तव स्वभूतम् इन्द्रियम्। इन्द्रजुष्टत्वादिन्द्रियं सेनालक्षणं बलम् इहोच्यते[4]। अथवा इन्द्रियशब्दोऽत्र वीर्यवचनः, सामर्थ्याच्चान्तर्णीतमत्वर्थः। वीर्यवत् सेनालक्षणं बलम्। कीदृशम्। उच्यते। परमम् उत्कृष्टम्। पराचैः अञ्चतिर्गत्यर्थः। परागमनैः[5] [6]प्राप्तिभिः। यत्रयत्र[6] व्यवस्थितं[7] तत्र-तत्रेत्यर्थः। अधारयन्त स्तुत्यर्थं हविष्प्रदानार्थं[8] च धारितवन्तः। अथवा 'इन्द्रियम्, वसु' (निघ २,१०) इति धननामसु पाठाद् इन्द्रियशब्दोऽत्र धनवचनः। यत् स्तोतारः प्रार्थयन्ते तत्ते धनं परमं पराचैः। त्वत्समीपं प्राप्येत्यर्थः। अधारयन्त आत्मना धारितवन्तः। लब्धवन्त

---

१-१. मघ०…न्द्र मै[2]. २. उद्गीर्णम् मै[2]. ३. यं मूको. ४. नास्ति कु. ५. °गमनशीलैः ति.
६-६. यत्रयत्र प्राप्तिभिः अ. ७, °स्थितः कु ति. ८. हविःप्र° मूको.

इत्यर्थः । के । कवयः मेधाविनः । पुरा पूर्वेष्वपि कालेषु । कतमत् । इदम् सूक्तेऽस्मिन् मनसि वा यत् सन्निहितम् । परोऽर्धर्चो भिन्नं वाक्यम् । क्षमा इदम् अन्यत् 'क्षमा' ( निघ १,१ ) इति पृथिवीनाम । सप्तम्याश्चायमाकार आदेशः । अन्यशब्दोऽत्र एकशब्दपर्यायः । पृथिव्यामिदमेकं सेनालक्षणं बलं धनं वा । दिवि अन्यत् अन्यत्तु द्युलोके । अस्य इन्द्रस्य । तच्चोभयमपि सम् ईम् पृच्यते ईमिति पदपूरणः । सम्पृच्यते । केन सह । यदि बलं ततः सामर्थ्यात् परस्परेण । अथ धनं ततः स्तोतृभिः । कथम् । समना इव केतुः सम्यङ् मन्यते जानात्यर्थमिति समना[1] अन्तःकरणाख्या बुद्धिरिहोच्यते । 'केतुः' ( निघ ३, ९ ) इति प्रज्ञानाम । बुद्ध्येव ज्ञानम् । यथा मनसा तत्रैवान्तर्लयेन सर्वात्मना वा ज्ञानं सम्पृच्यते । एवं पृथिव्यां दिवि च इन्द्रसेना परस्परेण स्तोतृभ्यो दीयमानं धनं स्तोतृभिः सह सम्पृच्यते इत्यर्थः ॥ १ ॥

**वेङ्कट०** तत् तव बलम् उत्तमम् अपराङ्मुखम् अधारयन्त प्राज्ञाः[2] पुरा इदम् । यत् इदम् इदानीं दृश्यते तत् च[3] बलं[4] क्षमायां भवति किञ्चित् दिवि च अन्यत् इन्द्रस्य[5] । तत् च इदम् उभयं सङ्ग्रामे ध्वजो ध्वजेन इव[6] सम्पृक्तं भवति । उभयं समं बुद्धौ[7] प्रतिभाति[8] इति[9] ॥ १ ॥

**मुद्गल०** 'तत् ते' इत्यष्टर्चं दशमं सूक्तम् । [10]कुत्स ऋषिः । त्रिष्टुप् छन्दः[10] । इन्द्रो देवता[10] ।

हे इन्द्र! ते त्वदीयम् परमम् उत्कृष्टम् तत् प्रसिद्धम् इदम् वर्तमानम् इन्द्रियम् बलम् पुरा पूर्वस्मिन् काले कवयः क्रान्तदर्शिनः स्तोतारः पराचैः पराचीनं पराङ्मुखं युद्धाभिमुखमेव अधारयन्त धृतवन्तः । अपि च अस्य इन्द्रस्य अन्यत् एकम् इदम् अग्न्याख्यं ज्योतिः क्षमा क्षमायां भूमौ वर्तते । अन्यद् एकं सूर्याख्यम् दिवि द्युलोके । इम् तदिदमुभयविधमिन्द्रस्य ज्योतिः सम् पृच्यते परस्परं संयुज्यते । रात्रावादित्योऽग्निना संयुक्तो भवति, अहनि त्वग्निः सूर्येण सङ्गच्छते । 'अग्निं वावादित्यः सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे ··· उद्यन्तं वावादित्यमग्निरनुसमारोहति । तस्माद्धूम एवाग्नेर्दिवा ददृशे' ( तैब्रा २,१,२,६-७ ) इति श्रुतेः । अनयोः परस्परं सङ्गमने दृष्टान्तः । समनेव केतुः यथा समने सङ्ग्रामे युध्यमानयोरुभयोः केतुर्ध्वजः ध्वजान्तरेण संयुज्यते तद्वत् ॥ १ ॥

## स धा॑रयत् पृथि॒वीं प॒प्रथ॑च्च॒ वज्रे॑ण ह॒त्वा निर॒पः स॑सर्ज । अह॒न्नहि॒मभि॑नद्रौहि॒णं व्यह॒न् व्यं॑सं म॒घवा॒ शची॑भिः ॥ २ ॥

सः । धा॒र॒य॒त् । पृ॒थि॒वीम् । प॒प्रथ॑त् । च॒ । वज्रे॑ण । ह॒त्वा । निः । अ॒पः । स॒स॒र्ज ।
अह॑न् । अहि॑म् । अभि॑नत् । रौ॒हि॒णम् । वि । अह॑न् । वि॒ऽअं॑सम् । म॒घऽवा॑ । शची॑भिः ॥ २ ॥

**स्कन्द०** सः इन्द्रः धारयत् धारयति पृथिवीम् पप्रथत् च प्रथयति च । वज्रेण मेघम् हत्वा निः अपः ससर्ज निष्कृष्य विसृजति क्षिपति वृष्टिलक्षणाः अपः । अहन् अहिम् हतवान् चाहिनामानमसुरम् । अभिनत् रौहिणम् रौहिणनामानं चापरमसुरं शतशर्करं भिन्नवान् । हतवानित्यर्थः । वि अहन् व्यंसम्

---

१. °मनः कु. २. प्रज्ञाः वि[1] अ[2]. ३. ते कु; नास्ति वि[1] अ[2]. ४. °लं धनं च वि[1] अ[2]. ५. °स्य च कु. ६. एव संग्रामे वि[1]; नास्ति वि[1] अ[2], ७. बुद्ध्या वि[1] अ[2]. ८. प्रतिभवति वि[1], ९. नास्ति कु. १०-१०. नास्ति मै[2].

व्यंसनामानं चापरमसुरं विविधमहन् । मघवा धनवान्[१] इन्द्रः शचीभिः स्वाभिः प्रज्ञाभिर्वधाद्यैर्वा कर्मभिः ॥ २ ॥

**वेङ्कट०** सः धारयति पृथिवीम् विस्तीर्णां[२] च[३] चक्रे । वज्रेण[४] हत्वा मेघात् अपः निः ससर्ज । अहन् अहिम् । अभिनत् च रौहिणम् असुरम् । वि अहन् व्यंसासुरम् मघवा प्रज्ञाभिः ॥ २ ॥

**मुद्गल०** सः इन्द्रः पृथिवीम् असुरैः पीडितां भूमिम् धारयन् धृतवान् । पीडाराहित्येन स्थितामकरोदित्यर्थः । तदनन्तरम् पप्रथत् च तां भूमिं विस्तीर्णामकरोत् । अपि च वज्रेण आयुधेन हन्तव्यान् वृत्रादीन् हत्वा अपः वृष्ट्युदकानि निः ससर्ज मेघात् निर्गमयामास । एतदेव स्पष्टीक्रियते । अहिम् अन्तरिक्षे वर्तमानं मेघम् अहन् वज्रेण वर्षणार्थम् अताडयत् । रौहिणम् रौहिणो नाम कश्चिदसुरस्तम् वि अभिनत् व्यदारयत् । अपि च मघवा धनवान् इन्द्रः शचीभिः आत्मीयैर्युद्धकर्मभिः व्यंसम् विगतभुजं वृत्रासुरम् अहन् अवधीत् ॥ २ ॥

स जातूभर्मा श्रद्दधान ओजः पुरो विभिन्दन्नचरद् वि दासीः ।
विद्वान् वज्रिन् दस्यवे हेतिमस्यार्यं सहो वर्धया द्युम्नमिन्द्र ॥ ३ ॥

सः । जातूऽभर्मा । श्रत्ऽदधानः । ओजः । पुरः । विऽभिन्दन् । अचरत् । वि । दासीः ।
विद्वान् । वज्रिन् । दस्यवे । हेतिम् । अस्य । आर्यम् । सहः । वर्धय । द्युम्नम् । इन्द्र ॥ ३ ॥

**स्कन्द०** सः इन्द्रः जातूभर्मा वृष्टिद्वारेण सर्वजन्तूनां भर्ता[५] । श्रद्दधानः ओजः अवितथमिति सम्भावना श्रद्धा । आत्मनो बलमवितथं [६]सम्भावयन् । कश्चिदप्यसुरं† प्रति मम बलं न प्रतिहन्यत इत्येवं[६] सम्भावयन्नित्यर्थः । असुराणां स्वभूताः पुरः विभिन्दन् वि अचरत् विचरति । कीदृशः[७] । दासीः दस्यतिः क्षयार्थः । क्षपणार्हाः । अत्यन्तं वृद्धा इत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । विद्वान् जानन् । किम् । सामर्थ्यात् दस्योः दस्युतामार्याणां वा भक्तताम् । हे वज्रिन्! दस्यवे दस्युशब्दोऽत्रानार्यवचनः । तादर्थ्ये एषा चतुर्थी । अनार्यस्यार्थाय । अनार्यं हन्तुमित्यर्थः । हेतिम् वज्रनामैतत् ( तु. निघ २,२० ) । आत्मीयं वज्रम् । अस्य क्षिप । आर्यम् षष्ठ्यर्थे द्वितीयैषा । आर्यस्य च । सहः बलम् वर्धय । न च केवलं सहः । द्युम्नम् यशो वान्नं वा[८] धननाम वा, द्युम्नशब्दः । यशोऽन्नधनानां चान्यतमं[९] हे इन्द्र! ॥ ३ ॥

**वेङ्कट०** सः सञ्जातभरणः[१०] श्रद्दधानः बलं पुराणि विभिन्दन् विचरति आसुराणि । जानंस्त्वम् इन्द्र! कुत्सस्य शत्रवे वज्रं सृज[११] । आनृशस्यं बलं यशश्च वर्धय ॥ ३ ॥

**मुद्गल०** जातूभर्मा जातू इत्यशनिनाम । भर्म आयुधम् । अशनिरूपम् आयुधं यस्य स तथोक्तः । ओजः ओजसा बलेन निष्पाद्यं कार्यम् श्रद्दधानः आदरातिशयेन कामयमानः । एवंभूतः स इन्द्रः दासीः दस्युसम्बन्धीनि पुरः पुराणि विभिन्दन् विनाशयन् वि अचरत् विविधम् आगच्छत् । हे वज्रिन्! वज्रवन्निन्द्र! विद्वान्[१] स्तुतीः विजानन् त्वम् अस्य स्तोतुः दस्यवे उपक्षयकारिणे

---

१. नास्ति ति. २. नास्ति वि[२] अ[२]. ३. नास्ति वि[१,२] अ[१] कु ल लपं ४. °ज्रेण मेघं च वि[२] अ[२]. ५. नास्ति मूको. ६-६. नास्ति ति. † न किञ्चि° अ कु. ७. °दृशाः मूको. ८. नास्ति अ. ९. °तमत् कु. १०. जातभरणः वि[२]; सजीताभ° अ[२]. ११. विसृजः वि[२] अ[२].

शत्रवे हेतिम् आयुधं विसृजेति शेषः। अपि च हे इन्द्र! आर्यम् सहः आर्या विद्वांसः स्तोतारः तदीयं बलम् वर्धय अतिवृद्धं कुरु। तथा द्युम्नम् तदीयं यशश्च प्रवर्धय ॥ ३ ॥

**तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् ।**
**उपप्रयन् दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ॥ ४ ॥**

तत् । ऊचुषे । मानुषा । इमा । युगानि । कीर्तेन्यम् । मघऽवा । नाम । बिभ्रत् ।
उपऽप्रयन् । दस्युऽहत्याय । वज्री । यत् । ह । सूनुः । श्रवसे । नाम । दधे ॥ ४ ॥

**स्कन्द०** तत् इति कर्मणः ऊचुषे इति सम्प्रदानस्य च[1] साकाङ्क्षत्वाद् योग्यक्रियापदाध्याहारः। तदाचष्टे इव। ऊचुषे स्तुतीरुक्तवते। स्तोत्रे इत्यर्थः। कस्मिन् काले ऊचुषे। उच्यते। मानुषा इमा युगानि युगशब्दः कालवचनः। सर्वत्र चात्र सप्तम्यर्थे प्रथमा। मनुष्याणां सम्बन्धिषु[2] स्तोत्रेषु पौर्णमास्यमावास्यादिषु यागकालेषु। किमाचष्टे इव। उच्यते। कीर्तेन्यम् कीर्तनीयम् आत्मीयम् नाम मघवा धनवानिन्द्रः। बिभ्रत् धारयन्। किम्। नामैव वा प्रकृतत्वात् कृत्स्नं वा जगत्। किं कुर्वन् आचष्टे इव। उच्यते। उपप्रयन् उपगच्छन् दस्युहत्याय अनार्यहननाय। वज्री गृहीतवज्रः। अनन्यकर्तृकं हि दस्युहननम्। [3]तत्कुर्वन् अयम् अहमिन्द्र[3] इत्येवमात्मीयं नाम कथयतीवेत्यर्थः। [4]कतमत् नाम। उच्यते[4]। यत् ह हशब्दः पदपूरणः। सूनुः पुत्रः स्वस्या मातुरदित्याः। श्रवसे कीर्त्यर्थम् नाम[5] दधे धारयति। कतमत् पुनस्तत्। इन्द्र इति। तद्धि अस्य सर्वस्तोतृभिः कीर्त्यर्थमुपात्तम्। अथवा यद्ध सूनुरिति यच्छब्दो यदाशब्दस्यार्थे। 'श्रवः' (निघ २,७) इत्यप्यन्ननाम। नामशब्दोऽप्युदकनाम (तु. निघ १,१२)। दधे इत्यपि धारयतिर्दानार्थः। अनन्यकर्तृकं दस्युहननं कुर्वन् आत्मीयं नामाचष्टे इव। यदा च सस्यलक्षणायान्नाय वृष्टिलक्षणमुदकं ददाति तदा आचष्टे इवेत्यर्थः। अथवा यद्ध सूनुरिति यच्छब्द इन्द्रस्य प्रतिनिर्देशकः। व्यत्ययेन तु[5] नपुंसकता। य इन्द्रः श्रवसे नाम दधे स[2] आचष्टे इति ॥ ४ ॥

**वेङ्कट०** तत् वदते नाम दिवसाः एते शोभना भवन्ति कीर्तनीयम् मघवा नाम इन्द्राख्यम् बिभ्रन्। उपगच्छन् दस्युहननाय वज्री यत् नाम अन्नस्य कीर्तेः वा प्रेरकः धारयति[6] तत् ऊचुषे इति[7] ॥४॥

**मुद्गल०** नाम शत्रूणां नामकम् तत् इन्द्रस्य बलम् ऊचुषे उक्तवते स्तुवते यजमानाय कीर्तेन्यम् कीर्तनीयं स्तुत्यं नामकं तद्बलम् बिभ्रत धारयन् मघवा धनवानिन्द्रः मानुषा मनुष्याणां सम्बन्धीनि इमा इमानि दृश्यमानानि युगानि अहोरात्रसङ्घनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः। किं पुनः तन्नाम। दस्युहत्याय दस्यूनां वृत्रादीनां हननाय उपप्रयन् गृहसमीपात् निर्गच्छन् वज्री वज्रवान् सूनुः शत्रूणां प्रेरयिता इन्द्रः यत् ह यत्खलु नाम शत्रूणां नामकम् श्रवसे जयलक्षणाय यशसे दधे धृतवान् ॥ ४ ॥

**तदस्येदं पश्यता भूरि पुष्टं श्रदिन्द्रस्य धत्तन वीर्याय ।**
**स गा अविन्दत् सो अविन्ददश्वान्त्स ओषधीः सो अपः स वनानि ॥५॥**

---

१. नास्ति अ. २. °षु स्तोत्रेषु मूको. ३-३. °कुर्वन्नहमि° अ. ४-४. नास्ति अ, ५. नास्ति ति. ६. °यति सूनुः पुत्र[:]कीर्त्यर्थं वायं नाम धारयति वि[२] अ[२]. ७. नास्ति कु.

तत् । अस्य । इदम् । पश्यत । भूरि । पुष्टम् । श्रत् । इन्द्रस्य । धत्तन । वीर्याय ।
सः । गाः । अविन्दत् । सः । अविन्दत् । अश्वान् । सः । ओषधीः । सः । अपः । सः । वनानि ॥

**स्कन्द०** तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यत् सेनालक्षणं बलं[1] सर्वासुरान्[2] हन्ति, तत् अस्य इन्द्रस्य स्वभूतं बलम् इदम् पश्यत हे ऋषयः! ब्राह्मणा वा । भूरि बहु[3] पुष्टम् सुसम्पन्नम् । अथवा इदं भूरीत्येतत्सम्बद्ध[4] एव यच्छब्दोऽध्याहर्तव्यः । अस्य इति [5]तु षष्ठीनिर्देशात् प्रसादेनेति[5] वाक्यशेषः । यदिदं भूरि भूतजातं तदस्येन्द्रस्य प्रसादेन पुष्टं पश्यतेति । किञ्च इन्द्रस्य श्रत् धत्तन वीर्याय द्वितीयार्थे एषा चतुर्थी । श्रद्धत्त[6] एवेन्द्रस्य वीर्यम् । वीर्यवानिन्द्र इत्येतद-वितथं प्रतिपद्यध्वमित्यर्थः । सः इन्द्रोऽसुरादीनां स्वभूताः गाः अविन्दत् लब्धवान् । सः अविन्दत् अश्वान् । सः ओषधीः महाप्रभावाः सञ्जीवन्यादयः[7] । सः अपः अमृतरसाद्युदकानि । सः वनानि सदा पुष्पफलानि । अथवा विन्दतीति[8] लाभेन[9] तद्धेतुभूतं दानमात्रं[10] लक्ष्यते । स इन्द्रः स्तोतृभ्यो गवादीनि ददातीत्यर्थः ॥ ५ ॥

**वेङ्कट०** तत् इन्द्रस्य इन्द्रियं बहु अम्लानम् पश्यत श्रत् च अस्मै वीर्याय धत्तन सत्यमसौ बलवान् इति । श्रद्दधानस्य कार्याणि प्रदर्शयति[11] सः गाः इति । वनानि धनानि इति[12] ॥ ५ ॥

**मुद्गल०** हे ऋत्विग्यजमानलक्षणा जनाः! अस्य इन्द्रस्य तत् इदम् वीर्यम् पुष्टम् प्रवृद्धम् अत एव भूरि विस्तीर्णम् पश्यत आलोकयत । तस्मै च वीर्याय श्रत् धत्तन बहुमानं कुरुत । किं पुनस्तद्वीर्यमिति चेद् उच्यते । सः इन्द्रः पणिभिरपहृताः गाः येन वीर्येण अविन्दत् अलभत । तथा[13] तैरपहृतान् अश्वान् सः इन्द्रो येन अविन्दत्[13] । अपि च सः इन्द्रः ओषधीः ओषध्युपल-क्षितां सर्वां भूमिं येन वीर्येणालभत । तथा वृत्रेण निरुद्धाः अपः वृष्ट्युदकानि सः इन्द्रो येनालभत । तथा वनानि वननीयानि सम्भजनीयानि धनानि सः इन्द्रो येन वीर्येण प्राप्नोत् ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये षोडशो वर्गः ॥

**भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम् ।**
**य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ॥ ६ ॥**

भूरिऽकर्मणे । वृषभाय । वृष्णे । सत्यऽशुष्माय । सुनवाम । सोमम् ।
यः । आऽदृत्य । परिपन्थीऽइव । शूरः । अयज्वनः । विऽभजन् । एति । वेदः ॥ ६ ॥

**स्कन्द०** बहूनि वृत्रवधादीनि कर्माणि यस्य स भूरिकर्मा तस्मै भूरिकर्मणे वृषभाय वृषभसदृ-शाय । केन सादृश्येन । भीमत्वेन । कुतः । सामर्थ्यात् 'आशुः शिशानो वृषभो न भीमः' (ऋ १०, १०३, १) इति च[14] मन्त्रान्तरदर्शनात् । वृष्णे वर्षित्रे । सत्यशुष्माय सर्वासुरान्

---

१. बलं तत् ति.  २. सर्वानसु° अ.  ३. बहुषु ति.  ४. °तत्सम्बन्धः ति.  ५-५. त्रुटितम् ति.  ६. यद्धत वेन्द्र° अ ति.  ७. संजीविन्या° ति.  ८. अविन्दत् ति.  ९. नास्ति ति.  १०. दानं ति.  ११. दर्शयति वि° ल.  १२. नास्ति कु.  १३. नास्ति मै[2].  १४. नास्ति अ ति.

प्रत्यविसंवादिबलाय[1]। सर्वत्र च तादर्थ्ये चतुर्थी। भीमत्वादिगुणस्येन्द्रस्यार्थाय। सुनवाम वयम् सोमम्। यः किं करोति इन्द्र इत्युच्यते। यः आदृत्य[2] महान्तमादरं कृत्वा। परिपन्थीव शूरः। परिपन्थी चोर उच्यते। यथा [3]चोरः कश्चित् शूरः[3] कुतश्चिद्धनमपहृत्य स्वेभ्यः सैनिकेभ्यो विभजेद् एवम्। अयज्वनः अयष्टुः स्वभूतं यष्टृभ्यः विभजन् एति यज्ञान् प्रति[4] गच्छतीन्द्रः। किं विभजन्। वेदः धनम्॥ ६॥

वेङ्कट० वृत्रवधादिबहुकर्मणे वृषभाय सेक्त्रे सत्यबलाय सुनवाम सोमम्। यः[5] विदार्य मार्गनिरोधक[6] इवापहर्ता शूरः अयजमानस्य धनं विलोपयन्[7] गच्छति॥ ६॥

मुद्गल० भूरिकर्मणे बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय वृषभाय वृषभवत् सर्वेषु देवेषु श्रेष्ठाय वृष्णे सेचनसमर्थाय सत्यशुष्माय अवितथबलायेन्द्राय तदर्थम् सोमम् सुनवाम होमार्थं रसरूपं करवाम। शूरः शौर्योपेतः यः इन्द्रः आदृत्य धनविषयमादरं कृत्वा अयज्वनः अयजमानस्य वेदः धनम् विभजन् तस्मादयजमानाद्विभक्तं कुर्वन् अपहरन् एति। यजमानेभ्यस्तद्धनं दातुं गच्छति। दृष्टान्तः। परिपन्थीव यथा मार्गनिरोधकश्चोरो गच्छतां पुण्यपुरुषाणां धनं[8] बलात्कारेणापहृत्य गच्छति तद्वत्॥ ६॥

तदि॑न्द्र॒ प्रेव॑ वी॒र्यं॑ चकर्थ॒ यत् स॒सन्तं॒ वज्रे॒णाबो॑धयो॒ऽहि॑म्।
अनु॑ त्वा॒ पत्नी॑र्हृषि॒तं वय॑श्च॒ विश्वे॑ दे॒वासो॑ अमद॒न्ननु॑ त्वा॥ ७॥

तत्। इ॒न्द्र॒। प्रऽइ॑व। वी॒र्य॑म्। च॒क॒र्थ॒। यत्। स॒सन्त॑म्। वज्रे॑ण। अबो॑धयः। अहि॑म्।
अनु॑। त्वा॒। पत्नीः॑। हृ॒षि॒तम्। वयः॑। च॒। विश्वे॑। दे॒वासः॑। अ॒म॒द॒न्। अनु॑। त्वा॒॥ ७॥

स्कन्द० तत् त्वं हे इन्द्र! प्रेव वीर्यम् चकर्थ प्रकर्षेण वीरकर्म[9] कृतवानसि। यत् कतमत्। उच्यते। यत्[4] ससन्तम् सस स्वप्ने। शौर्यमदेनावमत्य[10] देवान् निश्चिन्तं सन्तम्। वज्रेण अबोधयः वधार्थमुत्थापितवानसि अहिम् अहिनामानमसुरम्। किञ्च अनु त्वा अमदन् इति परस्ताच्छ्रुतम्[11] आख्यातपदमिहानुषक्तव्यम्[12]। मदतिश्चात्र सामर्थ्यान्मोदनार्थो गत्यर्थो वा। अनुमोदितवन्तः अनुगतवन्तो वा त्वाम्। अथवा मदतिरर्चतिकर्मा (तु. निघ ३,१४)। अनु इत्येष समित्येतस्य स्थाने। संस्तुतवन्तः त्वाम्। हृषितम् [13]शत्रुहननेन† प्राप्तहर्षम्[13]। अथवा अनुशब्दोऽत्र 'तृतीयार्थे' (पा १,४,८५) इत्येवं कर्मप्रवचनीयः। सहार्थश्चात्र तृतीयार्थः। मदतिरपि तृप्त्यर्थः। त्वया सोमपानात् प्राप्तहर्षेण सहातृप्यन्नित्यर्थः। केऽमदन्। उच्यते। पत्नीः स्वभार्याः देवपत्न्यो वा। वयः च गन्तृत्वात् पक्षिसादृश्याद् वा[4] मरुतोऽत्र वय उच्यन्ते। ते च। न च[2] केवलाः पत्नीः मरुतः च[4]। विश्वे देवासः अमदन् अनु त्वा॥ ७॥

वेङ्कट० तत् इन्द्र! त्वं प्रकर्षेण आत्मीयम् वीर्यम् प्रकाशितवान् इव। यत्[14] त्वं स्वपन्तम् अहिम्[15]

१. बलाय ति. २. आदित्यः ति. ३-३. शूरः कश्चित् चोरः कु ति. ४. नास्ति ति. ५. कः लपं. ६. मार्ग निरो° वि[1] अ[1] कु. ७. °यन् यज्ञं वि[3] अ[2]. ८. नास्ति मूको. ९. वीर्यं° अ. १०. °मदेनावत्य ति. ११. परस्ताच्छ्रुतं ति. १२. °ख्यातं पद° अ ति. १३-१३. °हननप्राप्त° अ. † हननार्थं ति. १४. यः वि[1,2] लपं. १५. नास्ति वि[3] अ[2].

अहत्वा[1] प्रबुद्धः सन् कामं [2]युध्यतु इति[2] हस्तस्थेन आयुधेन बोधितवान् असि। तदा[3] त्वां[4] हृष्टम्[5] अनु अमदन् देवपत्न्यः छन्दांसि च[5] मरुतः च ॥ ७ ॥

**मुद्गल०** हे इन्द्र! तत् वीर्यम् वीरकर्म प्र इव चकर्थ प्रख्यातमिवाकार्षीः। किं पुनस्तद्वीर्यम्। ससन्तम् स्वपन्तं मदोन्मत्तम् अहिम् वृत्रम् वज्रेण कुलिशेन यत् येन वीर्येण त्वम् अबोधयः प्रबुद्धः सन् मया सह युद्धं करोतु इति जागरितवानसि। हृषितम् तादृशस्य वृत्रस्य हननेन प्राप्तहर्षम् त्वा त्वाम् अनु पश्चात् पत्नीः देवपत्न्यः अमदन् हर्षं प्राप्ताः। अपि च वयः च गमनशीला मरुतोऽपि तथा विश्वे देवासः अन्ये च सर्वे देवाः त्वा त्वाम् अनु पश्चात् अमदन् अमाद्यन् ॥७॥

शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदावधीर्वि पुरः शम्बरस्य ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८ ॥

शुष्णम्। पिप्रुम्। कुयवम्। वृत्रम्। इन्द्र। यदा। अवधीः। वि। पुरः। शम्बरस्य।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ ८ ॥

**स्कन्द०** कदा पुनरन्वमदन्। उच्यते। शुष्णमित्यादीन्यसुराणां नामधेयानि। शुष्णम् पिप्रुम् कुयवम् वृत्रम् च हे इन्द्र! यदा वि[6] अवधीः विविधं हतवानसि। पुरः च शम्बरस्य स्वभूताः। तदा अन्वमदन्नित्येवमस्यार्धर्चस्य यदाशब्दश्रुतेः साकाङ्क्षत्वात् पूर्वस्या ऋच उत्तरेणार्धर्चेन एकवाक्यता। 'तत् नः मित्रः' इत्यत्र तु तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। यद्वयमिच्छामः तत् नः मित्रः इत्याद्युक्तार्थम्[6] ( ऋ १,९४,१६ द्र. ) ॥ ८ ॥

**वेङ्कट०** यदा[7] त्वं शुष्णादीनसुरान् अवधीः, यदा वा शम्बरस्य पुरः, तदा अन्वमदन् इति इन्द्रस्य वीर्याणि दर्शयति सूक्ते ॥ ८ ॥

**मुद्गल०** हे इन्द्र! त्वं शुष्णादींश्चतुरोऽसुरान् यदा अवधीः हतवानसि तदानीम् शम्बरस्य असुरस्य पुरः नगराणि विदारितवानसि। असुराणां मुख्येषु हतेषु तेषु अन्यान्यपि असुरपुराणि विदीर्णान्यासन्नित्यर्थः। यदनेन सूक्तेन प्रार्थितमस्मदीयम् तत् मित्रादयः ममहन्ताम् पूजितं कुर्वन्तु ॥ ८ ॥

इति प्रथमाष्टके सप्तमाध्याये सप्तदशो वर्गः ॥

## [ १०४ ]

योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा ।
विमुच्या वयोऽवसायाश्वान् दोषा वस्तोर्वहीयसः प्रपित्वे ॥ १ ॥

योनिः। ते। इन्द्र। निऽसदे। अकारि। तम्। आ। नि। सीद। स्वानः। न। अर्वा।
विऽमुच्य। वयः। अवऽसाय। अश्वान्। दोषा। वस्तोः। वहीयसः। प्रऽपित्वे ॥ १ ॥

---

१. हत्वा कु. २. युद्धस्वि…वि[2] अ[2]. ३. नास्ति मूको. ४. त्वम् वि[2] अ[1]. ५. नास्ति वि[2] अ[2]; तदा हृष्टं म° मूको. ६. °क्तार्थः ति. ७. यथा अ[1].

स्कन्द० योनिः[1] योनिशब्दोऽत्र स्थानवचनः। उपवेशनस्थानं वेद्याख्यम्। ते तव हे इन्द्र! निषदे निषदनाय। उपवेशनार्थमित्यर्थः। अकारि कृतमस्माभिः। तम् आ तमिति कर्मश्रुतेः आ इति चोपसर्गा-द्योग्यक्रियापदाध्याहारः। तं योनिमागत्य[2] नि षीद उपविश। स्वानः न[3] अर्वा आगमनस्येयमुपमा। स्वनतिः शब्दार्थः। स्वनति[3] स्वान्यते वा[4] असाविति स्वानः। 'अर्वा' (निघ १,१४) इति अश्वनाम। यथा हेषन् अश्ववारेण वा शब्दायमानोऽश्वः शीघ्रमागच्छेत् तद्वच्छीघ्रमागत्येत्यर्थः। विमुच्य वयः मुञ्चतिर्गत्यर्थः। अश्वान् सारथिं च प्रति वान्तीति[5] वयः अश्वप्रग्रहा इहाभिप्रेताः। द्वितीयार्थे प्रथमा। अश्वप्रग्रहांश्च विमुच्य। कुतः। सामर्थ्यादश्वेभ्यः। अवसाय अश्वान् अवपूर्वोऽयं स्यतिर्विमोचने (तु. या १,१७)। अश्वांश्च विमुच्य। कुतः। सामर्थ्याद्योक्त्रेभ्यः[6] रथाद्वा। कीदृशान्। दोषा वस्तोः वहीयसः रात्रावहनि चातिशयेन वोढॄन्। क्व विमुच्य। प्रपित्वे आसन्ननामैतत्। वेद्या आसन्ने देशे। अथवा प्रपित्वे इति कालस्य प्रतिनिर्देशः। निषीदेत्येतेन चास्य सम्बन्धः। आसन्ने यागकाले निषीदेति ॥ १ ॥

वेङ्कट० आसनं तव इन्द्र![7] निषदनार्थं[8] कृतम्[9]। तम् योनिं गृहे[10] आगत्य[11] उपविश शब्दं कुर्वन् इव अश्वः व्रजम्। अश्वबन्धनानि विमुच्य अवसाय च अश्वान् रात्रौ अहनि[12] च अतिशयेन वोढॄन् तव अभिप्राप्तौ[13] ॥ १ ॥

मुद्गल० 'योनिः' इति नवर्चम् एकादशं सूक्तम्[14]। कुत्स ऋषिः[14]। त्रिष्टुप् छन्दः[14]। इन्द्रो देवता[14] ॥

हे इन्द्र! योनिः वेद्याख्यं स्थानम् ते तव निषदे निषदनाय उपवेशनाय अकारि कृतम्[15] अस्माभिः[16] प्रकल्पितमभूत्। तम् योनिम् आ नि षीद शीघ्रमागत्य तत्रोपविश। शीघ्रमागमने दृष्टान्तः। स्वानः न[1] अर्वा अर्वेत्यश्वनाम। यथा अश्वः स्वानः हेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत्। किं कृत्वा। वयः अश्वबन्धनार्थान् रश्मीन् विमुच्य रथाद् विश्लिष्य तथा अश्वान् रथे योजितांश्च च तुरगान् अवसाय विमुच्य। कीदृशानश्वान्। प्रपित्वे यागकाले प्राप्ते दोषा रात्रौ वस्तोः अहनि च वहीयसः आदरातिशयेन वोढॄन् ॥ १ ॥

ओ त्ये नर इन्द्रमूतये गुर्नू चित्तान्त्सद्यो अध्वनो जगम्यात्।
देवासो मन्युं दासस्य श्चम्नन् ते न आ वक्षन्त्सुविताय वर्णम् ॥ २ ॥

ओ इति। त्ये। नरः। इन्द्रम्। ऊतये। गुः। नु। चित्। तान्। सद्यः। अध्वनः। जगम्यात्।
देवासः। मन्युम्। दासस्य। श्चम्नन्। ते। नः। आ। वक्षन्। सुविताय। वर्णम् ॥ २ ॥

स्कन्द० ओ इति आङः उकारेण सहैकादेशः[17] आ। उ ओ[18] इति। उकारश्च पदपूरणः। आकारस्तु गुः इत्याख्यातेन सम्बन्धयितव्यः। त्ये इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। ये स्तोतृयोग्याः सर्वे नरः अस्मत्पुत्रपौत्रलक्षणाः ऋत्विग्लक्षणा वा मनुष्याः। इन्द्रम् ऊतये तर्पणाय

---

१. नास्ति मूको. २. °गम्य अ. ३. नास्ति ति. ४. नास्ति अ ति. ५. याती° अ; प्रयाती° ति; वाती° कु. ६. °योक्तृभ्यः अ कु. ७. नास्ति वि[2]. ८. निषदाय वि[2] अ[1]. ९. नास्ति वि[2] अ[2]. १०. ग्रह वि अ[2]; ग्रहम् कु. ११. आदित्य वि[2] अ[2]. १२. अह्नि अ[1] वि[2] कु. १३. अभिप्र···वि[2] अ[2]. १४. नास्ति मै[2]. १५. °तम् च मूको. १६. °भिः कृतं चास्माभिः मै[2]. १७. °हैकदेशः अ. १८. नास्ति अ.

पालनाय वा । आ गुः आ इत्येष समित्येतस्य स्थाने मर्यादायां वा । गायतिरप्यर्चतिकर्मा ( तु. निघ ३,१४ ) । संस्तुवन्ति । मर्यादया वा[1] स्तुवन्तीत्यर्थः । एतत् ज्ञात्वा नू चित् निपातौ । नु इति पुराणवचनः । चिदिति पदपूरणः । पुराणानेवात्मनः स्तोतॄन् तान् प्रति । सद्यः यस्यां वेलायामाह्वयन्ते तस्यामेव । अध्वनः । तृतीयार्थे षष्ठी । स्वेनागमनमार्गेण जगम्यात् गच्छतु[2] । किञ्च हे[1] देवासः देवशब्दोऽत्र दीव्यतेः स्तुत्यर्थस्य स्तोतृवचनः । पुरस्ताच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । ये स्तोतारः[3] क्रोधम्[1] दासस्य उपक्षपयितव्यस्य[4] स्वशत्रोः[5] । श्नथन् श्नमेरदनार्थस्येदं रूपम् । इन्द्रप्रसादेन भक्षयन्ति । इन्द्रप्रसादेन क्रुद्धमपि स्वशत्रुम्[6] अयत्नेनैव[7] त्रासयन्तीत्यर्थः । ते नः अस्माकं स्वभूताः पुत्रपौत्रादय ऋत्विजो वा आ वक्षन् नित्यमावहन्त्वित्याशास्महे । सुविताय सुगमनाय वर्णम् वरणीयमिन्द्रम् । अथवा वर्णशब्दः पीतवचनः अन्तर्णीतमत्वर्थश्च । पीतेन वर्णेन[8] तद्वन्तमिन्द्रमित्यर्थः । तथा ह्यैतिहासिकाः पीतवर्णमिन्द्रं चित्रकर्मसु लेखयन्ति । अथवा देवा अत्र मरुतोऽभिप्रेताः न स्तोतारः । ये देवा[1] मरुतः मन्युं दासस्य श्नथन् तेऽपि इन्द्रप्रसादेनैव इन्द्रेण सह नः अस्मान् प्रति आ वक्षन् आवहन्तु प्रापयन्तु सुविताय वर्णं वरणीयं श्वेतेन वा वर्णेन वर्णवन्तमात्मानम् । मरुतः अपि[2] इन्द्रेण सहागच्छन्त्वित्यर्थः[9] ॥ २ ॥

**वेङ्कट०** अमी[10] मनुष्याः इन्द्रम्[11] रक्षणाय अभिगताः[12] शीघ्रम् एव तान् इन्द्रः युद्धमार्गात्[13] पारयतु[14] । देवासः मननम् असुरस्य शोषयन्तु । ते अस्माकम् आवहन्तु अभ्युदयाय वारकमिन्द्रम् ॥ २ ॥

**मुद्गल०** त्ये ते नरः यज्ञस्य नेतारो यजमानाः ऊतये रक्षणाय इन्द्रम् ओ आ उ इत्येतत् निपातद्वयसमुदायः आकारार्थः । आ गुः आगच्छन्ति । स चेन्द्रः आगतान् तान् नू चित् क्षिप्रम् सद्यः तदानीमेव अध्वनः अनुष्ठानमार्गान् जगम्यात् गमयतु प्रापयतु । देवासः सर्वे देवाः दासस्य उपक्षपयितुरसुरस्य मन्युम् क्रोधम् श्नथन् भक्षयन्तु हिंसन्त्वित्यर्थः । अपि च । ते देवाः नः अस्माकम्[15] सुविताय सुष्ठु प्रासव्याय यज्ञाय वर्णम् अनिष्टनिवारकमिन्द्रम् आ वक्षन् आवहन्तु आनयन्तु ॥ २ ॥

अव॒ त्मना॑ भरते॒ केत॑वेदा॒ अव॒ त्मना॑ भरते॒ फेन॑मु॒दन् ।
क्षी॒रेण॑ स्नातः॒ कुय॑वस्य॒ योषे॑ ह॒ते ते स्या॑तां प्रव॒णे शिफा॑याः ॥ ३ ॥

अव॑ । त्मना॑ । भ॒र॒ते॒ । केत॑ऽवेदाः । अव॑ । त्मना॑ । भ॒र॒ते॒ । फेन॑म् । उ॒दन् ।
क्षी॒रेण॑ । स्ना॒तः॒ । कुय॑वस्य । योषे॒ इति॑ । ह॒ते इति॑ । ते इति॑ । स्या॒ता॒म् । प्र॒व॒णे । शिफा॑याः ॥

**स्कन्द०** अव इत्युपसर्गोऽधोभावे । भरते इति बिभर्तेर्वा धारणार्थस्य हरतेर्वा प्रापणार्थस्य रूपम् । अधो धारयति प्रापयति वा । पृथिव्यां पातयतीत्यर्थः[16] । किम् । सामर्थ्यात् मेघस्थमुदकम् त्मना आत्मनैव इन्द्रः । कीदृशः । केतवेदाः 'केतः' ( निघ ३,९ ) इति प्रज्ञानाम । स्तोतृप्रज्ञानां वेदिता । भक्तिज्ञ इत्यर्थः । अथवा 'वेदः' ( निघ ३,१० ) इति धननाम । प्रज्ञाधनः[17] । न च

१. नास्ति ति. २. नास्ति कु. ३. °तारस्ते ति. ४. °क्षयितव्य° मूको. ५. शत्रोः कु. ६. °शत्रून् ति. ७. °नैव न ति. ८. नास्ति अ. ९. °च्छन्तीत्य° अ कु. १०. त्रुटितम् वि³ अ². ११. इन्द्र कु. १२. °गतायाः वि³ अ² १३. °मार्गान् वि¹'³ अ¹'² ल. १४. परायतु वि³ अ¹; वारयतु वि³ अ². १५. नास्ति मूको. १६. प्रापय° ति. १७. प्रज्ञानधनः ति.

केवलमुदकम् । किं तर्हि । अव त्मना भरते फेनम् उदन् उदन्नित्युदकशब्दस्योदादेशः[१] । सप्तम्याश्चात्र [२]लुक् । यस्तत्रोदके फेनः[२] तमपि । सफेनं कृत्स्नमुदकमित्यर्थः । किञ्च क्षीरेण स्नातः 'क्षीरम्' (नि १,३) इति उदकनाम । परस्माच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः[३] । ये उदकेन स्नातः कुयवस्य कुयवनाम्नोऽसुरस्य योषे स्त्रियौ । भार्ये इत्यर्थः । हते ते स्याताम् लङर्थे लिङ् । ते अपि हते आस्ताम् । दारा अपि कुयवस्य हता इत्यर्थः । क । उच्यते । प्रवणे निम्ने प्रदेशे । ह्रद इत्यर्थः । कस्याः शिफायाः[४] [५]शिफा नामासुरस्य पुर्या नदी[५] तस्याः ॥ ३ ॥

**वेङ्कट०** स्वयमेव कुयवः प्रज्ञाधनः उदकमपहरति फेनम् च उदकस्थम् । तत्र तस्य भार्ये उदकेन स्नानं कुरुतः । ते त्वत्प्रसादात् इन्द्र! हते स्याताम् । शिफाख्याया[६] नद्याः प्रवणे[७] निम्ने । सा यत्र पतति[८] समुद्रं प्रविशति तत्रेति[९] ॥ ३ ॥

**मुद्गल०** केतवेदाः केतं ज्ञातं वेदः परेषां धनं येन स तादृशः कुयवनामासुरः त्मना आत्मना स्वयमेव अव भरते ज्ञातं परेषां धनम् अपहरति । अपि च सोऽसुरः उदन् उदकेऽन्तर्वर्तमानः सन् फेनम् फेनयुक्तमुदकम् आत्मना स्वयमेव अव भरते अपहरति । क्षीरेण क्षरणशीलेन तेनापहृतेनोदकेन कुयवस्य असुरस्य योषे भार्ये स्नातः स्नानं कुर्वाते । ते तादृश्यौ स्त्रियौ शिफायाः शिफा नाम नदी । तस्याः प्रवणे निम्ने प्रवेष्टुमशक्येऽगाधप्रदेशे हते नष्टे स्याताम् भवेताम् । हे इन्द्र ! त्वं परेषां धनमपहृत्य अन्यैर्दुरवगाहे उदकस्य मध्ये वर्तमानं कुयवं सकुटुम्बम् अवधीरित्यर्थः ॥ ३ ॥

युयोप॒ नाभि॒रुप॑रस्या॒योः प्र पूर्वा॑भिस्तिरते॒ राष्टि॒ शूरः॑ ।
अ॒ञ्ज॒सी कु॑लि॒शी वी॒रप॑त्नी॒ पयो॑ हिन्वा॒ना उ॒दभि॑र्भरन्ते ॥ ४ ॥

यु॒योप॑ । नाभिः॑ । उप॑रस्य । आ॒योः । प्र । पूर्वा॑भिः । ति॒र॒ते॒ । राष्टि॑ । शूरः॑ ।
अ॒ञ्ज॒सी । कु॒लि॒शी । वी॒रऽप॑त्नी । पयः॑ । हि॒न्वा॒नाः । उ॒दऽभिः॑ । भ॒र॒न्ते॒ ॥ ४ ॥

**स्कन्द०** युयोप इति युपिर्मोहनार्थः । पाणिभिः कीलाभिश्च हन्यमानस्य [१०]मूढा नाभिः उपरस्य[१०] उपरशब्दोऽत्र उपरिवर्तिवचनः न मेघनाम । शूराणामुपरिवर्तिनः । अत्यन्तशूरस्येत्यर्थः । कस्य । सामर्थ्याद्वृत्रस्य वा अन्यस्य कस्यचिदुपरस्य । आयोः, 'छन्दसीणः' (पाउ १,२) [११]इत्येवमौणादिक उण् प्रत्ययः[११] भूतकाले[१२] द्रष्टव्यः । युद्धार्थमागतस्य । कदा । उच्यते । प्र पूर्वाभिः तिरते अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ[१३] । यदा[१४] पूर्वाभिः पूर्ववृत्ताभिः । काभिः[१५] । स्त्रीलिङ्गनिर्देशात् हतिभिः । चिरन्तनैरेव पाणिकीलाप्रहारैरित्यर्थः[१६] । प्र तिरते 'अवतिरति' (निघ २,१९) इति वधकर्मसु पाठात् तिरतिरत्र वधार्थः । भूते लट् । प्रकर्षेणातिरत् । हतवानित्यर्थः । कः । प्रकरणादिन्द्रः । कीदृशः । राष्टि शूरः अत्राप्येकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यो राष्टि राजते

---

१. शब्दस्यादेशः अ कु. २-२. नास्ति ति. ३. °हार्यः अ. ४. शिप्रायाः अ. ५-५. शिफनामासुरस्य पुरी ति; शिपा नामासुरस्तस्य पुर्या अ. ६. शिवाख्या° वि२. ७. प्रपन्ने वि२ ८. प्रविशति वि१ ल. ९. तत्र कु. १०-१०. मूढाभिरूपरय ति. ११-११. °वमादिक इणप्र° मूको. १२. भूने काले अ. १३. °हृत्य अ. १४. यथा अ. १५. नास्ति ति. १६. पार्ष्णि° अ ति.

ईष्टे सर्वस्य शूरश्च[1] सः। यदा चिरन्तनैरेव पाणिकीलाप्रहारैः[2] वृत्रमन्यं वा कञ्चिदसुरं प्रकर्षेण हतवान् तदास्य हन्यमानस्य मूढा नाभिरित्येवं सर्वेषामेकवाक्यता। तदैव च[3] अञ्जसी कुलिशी वीरपत्नी इत्येवन्नामानस्तिस्रोऽसुरस्य भार्याः पयः हिन्वानाः 'पयः' ( नि १, १२ ) इति उदकनाम। बहुवचनस्थान एकवचनम्। हिनोतिरपि गत्यर्थः। सामर्थ्याच्चान्तर्णीतण्यर्थः। उदकानि गमयन्त्यः[4]। वहन्त्य[5] इत्यर्थः। उदभिः तैः[6] उदकैः भरन्ते अयमपि भूत एव[3] काले द्रष्टव्यः। मूर्छितं सन्तं मूर्च्छाव्यावृत्त्यर्थमसिञ्चन्नित्यर्थः[7] ॥ ४ ॥

**वेङ्कट०** पिहितम्[8] आसीत् निर्गमनस्थानं मेघस्य गमनशीलस्य कुयवासुरेण। पूर्वाभिः अद्भिः वृद्धो[9] भवति शिफानदीस्थाभिः[10] कुयवः[11], राजते च ताभिः शूरः। तं च अञ्जसी कुलिशी वीरपत्नी इति तिस्रः उदकं प्रेरयन्त्यः[12] तद्भार्याः तैः उदकैः प्रेरयन्ति[13] ॥ ४ ॥

**मुद्गल०** उपरस्य उदकस्य मध्ये सुप्तस्यावस्थितस्य आयोः परेषाम् उपद्रवार्थम् इतस्ततो गच्छतः कुयवस्यासुरस्य नाभिः सन्नद्धम् आवासस्थानम् युयोप गूढमासीत्। यथान्यैर्न दृश्यते सोऽसुरः तथाऽकरोदित्यर्थः। अपि च पूर्वाभिः पूरयित्रीभिरात्मनापहृताभिरद्भिः प्र तिरते सोऽसुरः प्रवर्धते। स च शूरः शौर्योपेतः राष्टि राजते च। आत्मीयेन शौर्येण लोके प्रख्यातो भवतीत्यर्थः। तम् इमम् असुरम् अञ्जसी आञ्जस्योपेता[14] कुलिशी कुलं शातयन्ती वीरपत्नी वीरस्य पालयित्री एतत्संज्ञिकाः[15] तिस्रो नद्यः पयः पयसा तत्सम्बन्धिना सारभूतेनोदकेन हिन्वानाः प्रीणयन्त्यः उदभिः आत्मीयैरुदकैः भरन्ते धारयन्ति ॥ ४ ॥

प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात्।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥ ५ ॥

प्रति। यत्। स्या। नीथा। अदर्शि। दस्योः। ओकः। न। अच्छ। सदनम्। जानती। गात्।
अध। स्म। नः। मघऽवन्। चर्कृतात्। इत्। मा। नः। मघाऽइव। निष्षपी। परा। दाः ॥

**स्कन्द०** यत् यस्मात् स्या तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। या त्वया काङ्क्षिता सा नीथा स्तुतिरत्र नीथोच्यते। 'नीथाविदो जरितारः' ( ऋ ३,१२,५ ) इति यथा। स्तुतिः प्रति अदर्शि प्रतिशब्दोऽत्र धात्वर्थानुवादी। अस्माभिर्दृष्टा। [16]आलोचिता कृतेत्यर्थः[16]। कृता च सती दस्योः ओकः न अच्छ ओक इति निवासस्थानमुच्यते। अच्छेत्याप्तुमित्यस्यार्थे। यथा कश्चिद्राजा स्वस्य शत्रोः निवासस्थानमाप्तुं महता यत्नेन शीघ्रं गच्छेत्, एवम् सदनम् सर्वस्तुतीनां[17] स्थानमाश्रयं भवन्तम् जानती गात् गता प्राप्ता। अध एतस्मात्कारणात्। स्म इति पदपूरणः। हे मघवन्! नः तृतीयार्थे षष्ठी। अस्माभिः। चर्कृतात् अत्यर्थं कृतात्। कस्मात्। सामर्थ्यादपराधात्। इत् शब्दस्तु पदपूरणः।

---

१. शूरश्च स इति य इन्द्रो राष्टि शूरः अ. २. पार्ष्णि° अ; पार्ष्णिकीलाभिः ति. ३. नास्ति ति. ४. °यन्तीः मूको. ५. त्रुटितम् ति. ६. कैः ति. ७. मूर्च्छितव्यावृ° ति. ८. विहितम् वि[1,3] अ[1] कु. ९. रुद्धा वि[3] अ[2]. १०. शिफास्थाभिः वि[3] अ[2]. ११. नास्ति वि[3] अ[2]. १२. प्रेरयित्र्यः वि[3] अ[2]. १३. नास्ति वि[1,2] अ[1,2] कु ल लपं. १४. अञ्जस्यो° मूको. १५. °सज्ञकाः मूको. १६-१६. °लोचितेत्यर्थः अ. १७. स्तुतीनां ति.

मा नः अस्मान् परा दाः ददातिरत्र सामर्थ्याद्विनाशार्थः[1] परित्यागार्थो वा। विनीनशः परित्याक्षीर्वा। कथम्। मघा इव निष्षपी सपतेः स्पृशतिकर्मणोऽर्चतिकर्मणो वा सपं प्रजननमिहोच्यते तेन हि स्त्री स्पृश्यते। स्तुत्यं च तत् सुखकरत्वात्[2] प्रजासन्तानकरत्वाच्च[3]। अथवा पसः प्रजननमुच्यते। तथाहि अध्वर्यूणां सौत्रामणीमन्त्रेषु प्रयोगो दृश्यते 'आनन्दनन्दावाण्डौ मे। भगः सौभाग्यं पसः' ( तैब्रा २,६,५,६ ) इति। पस एवाद्यान्त्याक्षरविपर्ययेण सपमित्युच्यते। [4]निर्गतः सपः[4] कोशान्निष्षपः[5] तद्वान्निष्षपी[6]। वेश्यासम्भोगसक्तहृदयः। स[3] यथा वेश्याभ्यो ददत् धनानि विनाशयति परित्यजति वा, मा नस्त्वं तथा परादा इति ॥ ५ ॥

**वेङ्कट०** प्रत्यदर्शि यस्मात् सेयं[7] स्तुतिर्मार्गः[8] गृहमिव अभि कश्चन[9] प्रदर्शकः तस्य दस्योः[10] सदनम् अवगच्छन्ती गच्छति। यथा कस्यचिद् गृहमार्गमन्य[11] उपदिशन्नग्रे गच्छति, एवं कुयवस्य आवासं प्रज्ञापयन्ती तत्र गच्छति। एवं मार्गे ज्ञाते सति मघवन्! त्वम्[12] अस्माकम् [13]अत्यन्तात् परिचरणाद्[13] हेतोः अस्मान् मा परा दाः यथा विनिर्गतशिश्नः[14] कामचरणार्थम् उत्सृष्टशिश्नः[15] धनानि पराददाति स्त्रीभ्यः ॥ ५ ॥

**मुद्गल०** यत् यदा नीथा नयनहेतुभूता स्या सा पदवी मार्गः प्रति अदर्शि अस्माभिर्दृष्टाऽभूत्। सा च पदवी दस्योः उपक्षपयितुः कुयवस्यासुरस्य सदनम् गृहम् अच्छ आभिमुख्येन गात् गता प्राप्ता। दृष्टान्तः। जानती स्वकीयं वत्सम् अभिजानती गौः ओकः न निवासस्थानं स्वकीयं गोष्ठं यथा ऋजु प्राप्नोति, तद्वत् मार्गोऽपि असुरगृहं प्राप्त इत्यर्थः। अध स्म अथानन्तरमेव हे मघवन्! धनवन्निन्द्र! चर्कृतात् पुनःपुनः तेनासुरेण कृतात् उपद्रवात् नः अस्मान् रक्षेति शेषः। इत् अवधारणे। अस्मान् रक्षैव। नः अस्मान् मा परा दाः मा परित्याक्षीः। अस्माभिः ज्ञातेन मार्गेण गत्वा अस्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः। दृष्टान्तः। मघेव निष्षपी यथा विनिर्गतसपो विनिर्गतशेपः यथेष्टचारी दासीपतिः मघा इव यथा धनानि अस्थाने परित्यजति तथाऽस्मान् मा परित्याक्षीरित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये अष्टादशो वर्गः ॥

**स त्वं न॑ इन्द्र॒ सूर्ये॒ सो अ॒प्स्व॑नागा॒स्त्व आ भ॑ज जीवशं॒से ।**
**मान्त॑रां भु॒जमा री॑रिषो नः॒ श्रद्धि॑तं ते मह॒त इ॑न्द्रि॒याय॑ ॥ ६ ॥**

सः । त्वम् । नः॒ । इ॒न्द्र॒ । सूर्ये॑ । सः । अ॒प्ऽसु । अ॒ना॒गाः॒ऽत्वे । आ । भ॒ज॒ । जी॒व॒ऽशं॒से ।
मा । अन्त॑राम् । भु॒जम् । आ । रि॒रि॒षः॒ । नः॒ । श्रद्धि॑तम् । ते॒ । म॒ह॒ते । इ॒न्द्रि॒याय॑ ॥ ६ ॥

**स्कन्द०** य उक्तगुणोऽसि सः त्वम् नः अस्मान् हे इन्द्र! सूर्ये सूर्येणात्र तद्विषयं दर्शनं प्रतिपाद्यते। सर्वत्र तादर्थ्यचतुर्थ्यर्थे सप्तमी। सूर्यदर्शनाय। सूर्यदर्शनद्वारेणाविकलेन्द्रियत्वमुच्यते। अविकलेन्द्रियत्वार्थमित्यर्थः। सः एव अप्सु वृष्टिलक्षणाभ्योऽद्भ्यः। वृष्ट्यर्थमित्यर्थः। अनागास्त्वे

---

१. °नाशना° कु. २. °त्वात् च ति. ३. नास्ति ति. ४-४. निर्गतसपः ति. ५. °निष्षपम् अ कु; कोशो निष्षपम् ति. ६. तद्वा··· ति. ७. नास्ति वि[3] अ[2]; सोऽयं वि[1,2] अ[1] कु ल लपं. ८. स्तुतिमा° वि[1,2] ल; सूति° वि[3]. ९. कश्च वि[1] लपं. १०. दशत् वि[3] अ[2]; नास्ति वि[1,2] अ[1] ल लपं. ११. °र्गमन्यम् वि[3] अ[2]. १२. नास्ति लपं. १३-१३. °न्तान्यप° वि[3]. १४. °तयज्ञः वि[3] अ[2], १५. नास्ति कु.

अनागास्त्वाय। अपापत्वार्थं चेत्यर्थः। आ भज आ इत्येष समित्येतस्य स्थाने। सम्भज। जीवशंसे जीवो जीवितम्। आशंस्यते[1] प्रार्थ्यतेऽसाविति शंसः। जीविताय आशंसिताय चेत्यर्थः। अथवा सूर्ये अप्सु जीवशंसे इत्यत्र स्वार्थं एव सप्तमी। सूर्येण तु तत्सम्बद्धो[2] द्युलोक उच्यते। अप्स्वित्यप्छब्दोऽन्तरिक्षनाम (तु. निघ १,३)। जीवशंसे इत्यपि पार्थिवो लोक उच्यते। तत्र ह्यतिशयेन जीवितमाशंस्यते। सूर्यसम्बद्धे द्युलोकेऽन्तरिक्षे च जीविताशंसाबहुले च पार्थिवे लोके अनागास्त्वाय त्वमस्मान् सम्भजेत्यर्थः। किञ्च अन्तराम् भुजम् अन्तराशब्दः सन्निकृष्टवचनः। सन्निकृष्टं चैहलौकिकं भोगम्। आ रीरिषः आकारोऽत्र ईषदर्थे। मा ईषदपि हिंसीः। नः अस्माकम्। किं कारणम्। उच्यते। यस्मात् श्रद्धितम् श्रद्दधातेरुत्साहार्थस्येदं रूपम्। श्रद्धितमस्माभिः। त्वत्स्तुतिकरणे यस्मादस्माभिरुत्साहः कृत इत्यर्थः। किमर्थम्। ते तव महते इन्द्रियाय वीर्याय। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अत एवमुच्यते—तव महते इन्द्रियायेति। अथवा श्रद्धितं ते इति पूर्वानपेक्षोऽयं पादो भिन्नमेव वाक्यम्। उत्साहस्तव महते वीर्यायेति ॥ ६ ॥

**वेङ्कट०** सः त्वम् अस्मान् इन्द्र सूर्ये [3]आ भज[3]। सः एव उदकेषु तथाऽदारिद्र्ये[4]। तथा जीविताशंसनं च सफलं कुरु अस्माकम्[5]। किञ्च[6] अस्माकम् [7]अन्तरतमम् अन्नम्[7] ईषदपि मा हिंसीः। अस्माभिः तव महते बलाय श्रद्धानमिदं[8] कृतम् अयम्[9] अस्मान्[10] रक्षतीति ॥ ६ ॥

**मुद्गल०** हे इन्द्र! सः त्वम् नः अस्मान् सूर्ये सर्वस्य प्रेरके आदित्ये आ भज आभाजय आभिमुख्येन भक्तान् सम्भक्तान् कुरु। तथा सः त्वम् अप्सु अब्देवतासु अस्मानाभाजय। अपि च जीवशंसे जीवैः प्राणिभिः शंसनीये कामयितव्ये अनागास्त्वे अपापत्वे पापराहित्ये अस्मानाभाजय। अपि च नः अस्माकम् अन्तराम् गर्भरूपेण अन्तर्वर्तमानाम् भुजम् पालयित्रीं प्रजाम् आ समन्तात् मा रीरिषः मा हिंसीः। ते तव महते प्रभूताय इन्द्रिया बलाय श्रद्धितम् अस्माभिः श्रद्धानं कृतम्। त्वदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः। तस्मात् तादृशफलयुक्तस्त्वं मा रीरिष इति पूर्वेण सम्बन्धः ॥ ६ ॥

अधा॑ मन्ये श्रत् ते॑ अस्मा अधायि॒ वृषा॑ चोदस्व मह॒ते धना॑य।
मा नो॒ अकृ॑ते पुरुहूत योना॒विन्द्र॒ क्षुध्य॑द्भ्यो॒ वय॑ आसु॒तिं दाः॑ ॥ ७ ॥

अध॑। म॒न्ये॒। श्रत्। ते॒। अ॒स्मै॒। अ॒धा॒यि॒। वृषा॑। चो॒द॒स्व॒। म॒ह॒ते। धना॑य।
मा। नः॒। अकृ॑ते। पु॒रु॒ऽहू॒त॒। योनौ॑। इन्द्र॑। क्षुध्य॑त्ऽभ्यः। वय॑ः। आ॒ऽसु॒तिम्। दाः॒ ॥ ७ ॥

**स्कन्द०** अध-शब्दोऽत्र पदपूरणः, अपि चेत्यस्य वा स्थाने। अपि च मन्ये श्रत् 'मन्यते' (निघ २,६) इति कान्तिकर्मा। 'श्रत्' (निघ ३,१०) इत्यपि सत्यनाम। सत्यमिदं कामयेऽहम्। किम्। उच्यते। अस्मै अधायि अस्मै इति सन्निहितस्येन्द्रस्य प्रतिनिर्देशः।

---

१. आशास्यते ति. २. °म्बन्धो अ. ३-३. आभजत कु. ४. तथा दरिद्रे कु. ५. नास्ति वि[1] अ[2] कु. ६. ता (?तथा) च वि[1]. ७-७. अन्तिकतममन्निम् वि[1] अ[2]. ८. श्रद्धा° कु. ९. नास्ति वि[1] अ[2]. १०. अस्मात् कुरु अस्माकम् वि[1,2] ल लपं.

अधायीति लिङर्थे लुङ्। तुभ्यमस्मै इन्द्राय मयाऽऽदीयेतेति[1]। किम्। सामर्थ्यात् सोमादिहविः। एतत् ज्ञात्वा वृषा चोदस्व प्रत्यक्षकृतोऽयं मन्त्रः। वृषेति च नामन्त्रितम्। अतो [2]यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया[2]। यस्त्वं वर्षिता स चोदयास्मान्। तासु तासु क्रियासु प्रेरयेत्यर्थः। किमर्थम्। महते धनाय महतो धनस्यार्थाय। महद्धनं लब्धुमित्यर्थः। किञ्च मा नः अस्मान् अकृते योनौ असंस्कृते अयोग्ये स्थाने हे पुरुहूत! साकाङ्क्षत्वात् प्रापय[3] इति वाक्यशेषः। योग्यं नः स्थानं देहि, मा अयोग्यमित्यर्थः। हे इन्द्र! क्षुध्यद्भ्यः क्षुध बुभुक्षायाम्। बुभुक्षमाणेभ्योऽस्मभ्यम्। वयः आसुतिम् दाः 'वयः' इत्यन्ननाम। आसुतिशब्दो रसवचनः। अन्नञ्च रसञ्च घृतक्षीरादिकं देहि ॥ ७ ॥

**वेङ्कट०** सम्प्रति त्वाम् अहं स्तौमि। श्रत् अधायि च अस्मै तुभ्यं मया। स त्वम् अस्मान् वर्षिता महते धनाय चोदय। बहुभिराहूत! मा अस्मान् [4]अपर्याप्ते गृहे[4] प्रवेशय। इन्द्र! बुभुक्षमाणेभ्यः अस्मभ्यम् अन्नम् अन्यांश्च रसान् देहि ॥ ७ ॥

**मुद्गल०** हे इन्द्र! अध अथानन्तरम् मन्ये त्वां मनसा जानामि। ते तव अस्मै बलाय श्रत् अधायि अस्माभिः श्रद्धा कृता। त्वदीयबलविषयमादरातिशयेन स्तोत्रं कृतमित्यर्थः। वृषा कामानां वर्षिता स त्वम् महते प्रौढाय धनाय चोदस्व चोदय अस्मान् प्रेरय। हे पुरुहूत! बहुभिर्यजमानैराहूत! इन्द्र! अकृते अनिष्पादिते धनशून्ये योनौ गृहे नः अस्मान् मा धाः मा निधेहि। धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः। अपि च हे इन्द्र! क्षुध्यद्भ्यः बुभुक्षितेभ्योऽन्येभ्योऽपि स्तोतृभ्यः वयः अन्नम् आसुतिम् पेयं क्षीरादिकञ्च दाः देहि ॥ ७ ॥

मा नो॑ वधीरिन्द्र॒ मा परा॑ दा॒ मा नः॑ प्रि॒या भोज॑नानि॒ प्र मो॑षीः।
आ॒ण्डा मा नो॑ मघवञ्छक्र॒ निर्भे॒न्मा न॒ः पात्रा॑ भेत् स॒हजा॑नुषाणि ॥ ८ ॥

मा। न॒ः। व॒धीः। इ॒न्द्र॒। मा। परा॑। दा॒ः। मा। न॒ः। प्रि॒या। भोज॑नानि। प्र। मो॒षीः।
आ॒ण्डा। मा। न॒ः। म॒घ॒ऽव॒न्। श॒क्र॒। निः। भे॒त्। मा। न॒ः। पात्रा॑। भे॒त्। स॒ह॒ऽजा॑नुषाणि ॥

**स्कन्द०** मा नः वधीः हे इन्द्र! [5]मा परादाः[5] परि त्याक्षीः। मा च नः प्रिया भोजनानि प्रियाणि धनानि प्र मोषीः अप हार्षीः। किञ्च आण्डा[6] अण्डसादृश्यादत्राऽऽण्डानि[7] जातमात्राणि गर्भावस्थितानि वा अपत्यान्युच्यन्ते। तानि मा नः हे मघवन्! शक्र! [8]निः भेत् निर्बिभिदः[8] विनीनशः। मा नः पात्रा भेत्। पतन्तीति पात्राणि गमनसमर्थान्यपत्यानि, तान्यपि। न चैतान्येव केवलानि। किं तर्हि। सहजानुषाणि जानुभ्यां सनन्ति सम्भजन्ते भूमिमिति जानुषाणि रिङ्गन्ति[9] यान्यपत्यानि तान्युच्यन्ते। तैस्सह ॥ ८ ॥

**वेङ्कट०** मा अस्मान् वधीः इन्द्र! मा च परि त्याक्षीः मा च अस्माकं प्रियाणि अन्नानि अप हार्षीः। अण्डस्थानि मा अस्माकम् मघवन्! शक्र! निः भेत्[10], मा च अस्माकं शिक्षितपतनान्यपत्यानि, सहजातानि[11] च मा[11] भिदः[12] ॥ ८ ॥

---

१-१. मदीया अदीयेतेति कु ति. २-२. °भ्यत्वं नेयम् अ. ३. प्रापिम अ कु; नास्ति ति. ४. °याप्तगृ° वि[1] अ[1]. ५-५. परा दामा ति. ६. नास्ति मूको. ७. आण्ड° ति. ८-८. नास्ति अ. ९. रीङ्गन्ति मूको. १०. निर्भेः वि[1] अ[1,2] कु; निभै. वि[2]; निभे लपं. ११. नास्ति वि[1] अ[2]. १२. नास्ति कु. १३. भिनः वि[1] अ[1] लपं; मानिभः वि[2]; भेः कु; अभिनः ल; द्विनः वि[1] अ[2].

**मुद्गल०** हे इन्द्र! नः **अस्मान्** मा वधीः **मा हिंसीः**। **सर्वदा रक्षेत्यर्थः**। अपि च मा परा दाः **मा परित्याक्षीः। परादानं परित्यागः। अस्मत्कृतां पूजां सदा गृहाणेत्यर्थः।** अपि च नः **अस्माकम्** प्रिया **प्रियाणीप्सितानि भोजनानि उपभोग्यानि धनानि** मा प्र मोषीः **माऽपहार्षीः। अस्मास्वेव धनानि यथा स्युः तथा कुर्वित्यर्थः।** तथा हे मघवन्! **धनवन्!** शक्र! **सर्वकार्यशक्तेन्द्र!** नः **अस्माकम्** आण्डा **अण्डसम्बन्धीनि गर्भरूपेण निषिक्तानि अपत्यानि** मा निः भेत् **मा भिदः**[१]**। गर्भरूपेण अवस्थितान् अस्मत्पुत्रान् रक्षेत्यर्थः।** तथा नः **अस्माकम्** सहजानुषाणि **आधाने सहोत्पन्नानि** पात्रा **पात्राणि स्रुवादीनि** मा निः भेत् **मा भिदः**[१] ॥ ८ ॥

## अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।
## उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥ ९ ॥

अर्वाङ् । आ । इहि । सोमऽकामम् । त्वा । आहुः । अयम् । सुतः । तस्य । पिब । मदाय ।
उरुऽव्यचाः । जठरे । आ । वृषस्व । पिताऽइव । नः । शृणुहि । हूयमानः ॥ ९ ॥

**स्कन्द०** अर्वाङ्[२] **अस्मदभिमुखम्** एहि। **किं कारणम्। यस्मात्** सोमकामम् त्वा आहुः **सर्वजनाः**। अयम् **अस्माभिः** सुतः **सोमः**। तस्य पिब **तस्य चैकदेशं स्वांशलक्षणम् पिब**[२] मदाय **मदार्थम्। केन प्रकारेण। उच्यते।** उरुव्यचाः **व्यचश्शब्दो**[३] **व्याप्तिवचनः**[४] **शाकपूणिना पठितः। प्रत्यक्षकृतश्चायं मन्त्रः। उरुव्यचा इति च नेदमामन्त्रितम्। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यस्त्व-मुरुव्यचा बहुव्याप्तिः विस्तीर्णव्याप्तिर्वा। सर्वव्यापीत्यर्थः।** [५]**स त्वम्**[५] जठरे **स्वे उदरे**[६] आ वृषस्व[२] **आसिञ्च सोमम्। बहुसोममुदरे प्रक्षिपेत्यर्थः।** पिता इव नः **पितेव च पुत्राणामस्माकं त्वं सर्वदा** शृणुहि हूयमानः **शृणु**[२] **आहूयमानोऽस्माभिः** ॥ ९ ॥

**वेङ्कट०** **अभिमुखम् आगच्छ**[७]। सोमकामम् आहुः **त्वां** जनाः। अयम् **च** सुतः **सोमः तम्** पिब मदाय। **बहुव्याप्तिः**[८] **त्वम्** जठरे [९]**आसिञ्चस्व**। पिता इव[९] **च अस्मान्**[१०] शृणु हूयमानः ॥ ९ ॥

**मुद्गल०** हे इन्द्र! **त्वम्** अर्वाङ् **अस्मदभिमुखः सन्** एहि **आगच्छ। किं कारणमिति चेत्, यस्मात्** त्वा **त्वाम्** सोमकामम् **सोमविषयाभिलाषम्** आहुः **पुराविदः कथयन्ति।** अयम् **अस्मदीयः सोमः** सुतः **ऋत्विग्भिरभिषुत। अत आगच्छेत्यर्थः। आगत्य च** मदाय **हर्षार्थम्** तस्य **तम् अस्मदीयमभिषुतं सोमम्** पिब। **एतदेव स्पष्टीक्रियते।** उरुव्यचाः **उरु विस्तीर्णं व्यचः व्यापनं यस्य तादृशो महावयवो भूत्वा** जठरे **आत्मीय उदरे** आ वृषस्व **सोममासिञ्च। आ समन्तात् पूरयेत्यर्थः। एवंभूतस्त्वम्**[११] हूयमानः **स्तुतिभिराहूयमानः सन्** पिता इव **पुत्राणां वाक्यानि यथा पिता शृणोति तथा** नः **अस्माकं वाक्यानि** शृणुहि **शृणु** ॥ ९ ॥

**इति प्रथमाष्टके सप्तमाध्याये एकोनविंशो वर्गः ॥**

---

१. भिनः मूको. २. नास्ति मूको. ३. व्यचश्शब्दो मूको. ४. व्याप्तिनाम ति. ५-५ नास्ति मूको. ६. नास्ति ति. ७. °च्छ सोम वि[२] अ[२]. ८. बहुव्याप्तः कु. ९-९. आसिञ्च स्वपितेव ल. १०. °स्मान् पुत्राणामस्माकमाह्वानं वि[२] अ[२]. ११. °तः.

[ १०५ ]

चन्द्रमा अप्स्व१ न्तरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ १ ॥

चन्द्रमाः । अप्ऽसु । अन्तः । आ । सुऽपर्णः । धावते । दिवि ।
न । वः । हिरण्यऽनेमयः । पदम् । विन्दन्ति । विऽद्युतः । वित्तम् । मे । अस्य । रोदसी इति ॥

**स्कन्द०** 'चन्द्रमास्सूक्तमाप्त्यं वा त्रितं प्रति बभाऋषिम्', 'चन्द्रमाः' इत्येतत्सूक्तम् आप्त्यपुत्रं वा त्रितनामानमृषिं प्रतिभाति कुत्समेव वा । त्रितेन कुत्सेन वैतत् दृष्टमित्यर्थः । 'त्रीण्यतो वैश्वदेवानि'[१] अतः पराणि त्रीणि सूक्तानि वैश्वदेवानि । अत्र सूक्ते इतिहासमाचक्षते—"आप्त्यस्य ऋषेः त्रयः पुत्रा बभूवुः एकतो द्वितस्त्रित इति । ते यष्टुकामाः स्वान् याज्यान् गा ययाचिरे । ता आदाय सरस्वत्यास्तीरेण[२] पथा गच्छतः [३]तान् परस्मिन् कूले निषण्णो रात्रौ[३] वृको[४] ददर्श । दृष्ट्वा चोत्थाय अभिमुखः[५] सारस्वतीरप[६] उत्तरन् तांस्त्रासयामास । तेषां नश्यतां त्रितो निर्जले पांसुभिः वीरुद्भिः तृणैश्चावृते महत्यन्धकूपे[७] पपात एकतद्वितौ तु सह गोभिः गृहं जग्मतुः । अथ कूपस्थस्येयं चिन्ता बभूव[८] अकृतसोमयागस्य मृत्युर्न श्रेयसे । तत् क उपायः स्यात्, येनाहमिहस्थः सोमं पिबेयमिति । चिन्तयन्नेव यदृच्छया तत्र लम्बमानां वीरुधं ददर्श । तां सोम इति सङ्कल्प्य योगैश्वर्यात् मनसा शिष्टान्यग्न्यादीनि साधनानि परिसङ्कल्प्य शर्करा ग्राव्णः कृत्वा ताभिस्तां वीरुधमभिष्दुत्य यागार्थं देवान् आजुहाव । ते[९] आह्वानकारणमनवबुध्यमाना आविग्ना बभूवुः । अथ तदाह्वानं बृहस्पतिः शुश्राव । स देवानुवाच । त्रितस्य वर्तते यज्ञस्तत्र गच्छाम इति । अथ तत्र सर्वे देवा जग्मुः । तानागतान् कूपादुत्तारणार्थी त्रितः क्रमेण तुष्टाव चन्द्रमाः इत्यादिना" इति । चन्द्रमाः अप्स्वन्तः अपां मध्ये । साकाङ्क्षत्वात् स्थित इति वाक्यशेषः । अम्मये स्वमण्डले स्थित इत्यर्थः । कीदृशः । सुपर्णः पृण प्रीणने इत्यस्यैतद्रूपम् । सुष्ठु प्रीणयिता । आह्लादयिता मनसामित्यर्थः । अथवा सुपर्णशब्दो रश्मिनाम ( तु. निघ १,५ ) सामर्थ्याच्चात्र[१०] अन्तर्णीतमत्वर्थः । रश्मिमान् । किं करोति । उच्यते ।- आ धावते मर्यादया[११] सर्वकालं गच्छति । क्व । उच्यते । दिवि द्युलोके । न वः न तु युष्माकम् । हिरण्यनेमयः! नेमी रथचक्रधारोच्यते । हिरण्यमय्यो नेमयो यासां ता हिरण्यनेमयः, तासां सम्बोधनं हिरण्यनेमयः । पदम् पादनिधानात्तदाकारं यत् कर्दमादावुपजायते तत् पदम् इत्युच्यते । तत् जनाः[१२] विन्दन्ति लभन्ते । जनाः पश्यन्तीत्यर्थः । हे विद्युतः! । चन्द्रमा उदकमये स्वमण्डले व्यवस्थितः सर्वदा दिवि गच्छन् उपलभ्यते, युष्माकं तु हे विद्युतः! वर्षाभ्योऽन्यत्र पदमपि नोपलभ्यत इत्यर्थः । वित्तम् मे अस्य विद ज्ञाने । श्रवणेन च यत् ज्ञानं तदिहाभिप्रेतम् । अस्येत्यपि सन्निहितत्वात् स्तोत्रस्य[१३] प्रतिनिर्देशः । द्वितीयार्थे च षष्ठी । शृणुतं ममेदं स्तोत्रमित्यर्थः । अथवा अस्येति दुःखस्य प्रतिनिर्देशः । विजानीतं ममेदं[१३] कूपनिपतनमिति[१४] । विज्ञापनं चेदमुत्तारणार्थं क्रियते, विजानीतमिदं दुःखम् । विज्ञाय[१३] चार्तानुग्रहस्वभावकतया मामितः कूपादुत्तारयतमित्यर्थः । हे रोदसी! द्यावापृथिव्यौ! ॥ १ ॥

---

१. वैश्वदेवम् मूको. २ °स्तीरे अ ति. ३ ३. नास्ति ति. ४. °कोदरे अ. ५. °मुखं ति. ६. सर° मूको. ७-७. कूपे ति. ८-८. नास्ति अ. ९. ता अ कु. १०. °र्थ्याच्च कु ति. ११. °दायां° ति. १२. नास्ति मूको. १३. नास्ति अ. १४. °निपातन° अ.

**वेङ्कट०** [1]त्रित आप्त्यः[1]। आपेय[2] इति कठाः। आप्य[3] इति ब्राह्मणम्[4]। अथ शाट्यायनकम्— 'आप्त्यान् [5]सातं नयतः अरण्ये[5] पिपासा अविन्दत्। ते धन्वन् कूपम् अविन्दन्[6]। [7]तं न द्वितोऽवरोढुमकामयत, नैकतः[7]। त्रितः अवारोहत्। तौ यदा अपिबताम्, अतृप्यताम्। अथ[8] हैनं तदैव[9] रथचक्रेणापिधाय[10] गोभिः प्रैताम्। सोऽकामयतोदितः[11] इमां[12] गातुं नाथं विन्देयेति'[13]। [14]रात्रौ कूपे पतितस्त्रितः तत्र चन्द्रमसो रश्मीन् अपश्यत्†। वदति[14]—दिवि उदकस्य[15] मध्ये युष्माकम् आधारभूतः चन्द्रमाः[16] सुपतनः आ धावते। तथा सति हिरण्यसदृशपर्यन्ताः तस्य विद्युतः [17]न वः[17] युष्माकं जनाः[18] पदम् लभन्ते। [19]कूपस्थिता न लभन्ते[19] प्रकाशम्। जानीतं मे[20] इदं परिदेवनं द्यावापृथिव्यौ! ॥ १ ॥

**मुद्गल०** 'चन्द्रमाः' इत्येकोनविंशत्यृचं द्वादशं सूक्तम्। अपां पुत्रः कूपे[21] पतितः त्रित ऋषिः[21] कुत्सो वा। [22]तथाचोभयोः कूपपात आम्नायते। 'त्रितः कूपेऽवहितः' ( ऋ १,१०५,१७ ) इति 'काटे निबाळ्ह ऋषिरह्वदूतये' ( ऋ १, १०६, ६ ) इति च। त्रितस्य अपां पुत्रत्वम्[22] [23]तैत्तिरीयाः स्पष्टमामनन्ति—'तत एकतोऽजायत, स द्वितीययभ्यपातयत्। ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत। यदद्भ्योऽजायन्त। तदाप्त्यानामाप्त्यत्वम्' (तैब्रा ३,२,८,१०-११ ) इति[23]। अन्त्या त्रिष्टुप्। 'स मा तपन्ति' ( ऋ १,१०५,८ ) इत्येषा यवमध्या महाबृहती। आद्यौ द्वावष्टाक्षरौ पादौ, द्वादशाक्षरः तृतीयः, ततो द्वावष्टाक्षरौ, सा यवमध्या महाबृहती। 'चत्वारोऽष्टका जागतश्च महाबृहती' ( ऋअ १,९९ ) इत्युक्त्वा 'मध्ये चेद्यवमध्या' ( ऋअ १,९,१० ) इति उक्तलक्षणोपेतत्वात्। शिष्टाः पङ्क्तयः। विश्वेदेवा देवताः[21]।

अप्सु अन्तरिक्ष्यासु उदकमये मण्डले अन्तः मध्ये वर्तमानः सुपर्णः शोभनपतनः चन्द्रमाः दिवि द्युलोके आ धावते एकेनैव प्रकारेण धावते शीघ्रं गच्छति। तादृशस्य चन्द्रमसः सम्बन्धिनः हे हिरण्यनेमयः सुवर्णसदृशपर्यन्ताः विद्युतः! विद्योतमाना रश्मयः! वः युष्माकम् पदम् पादस्थानीयम् अग्रम् न विन्दन्ति मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभन्ते। अत इदमनुचितम्। तस्मात् कूपात् मामुत्तारयेत्यर्थः। अपि च हे[21] रोदसी! द्यावापृथिव्यौ! अस्य मे मदीयं कूपपतनरूपं यदिदं दुःखं तत् वित्तम् अवगच्छतम्। मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा अस्मात् कूपात् मामुत्तारयतमित्यर्थः ॥ १ ॥

## अर्थमिद् वा उ अर्थिन आ जाया युवते पतिम्।
## तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ॥ २ ॥

अर्थम्। इत्। वै। ऊँ इति। अर्थिनः। आ। जाया। युवते। पतिम्।
तुञ्जाते इति। वृष्ण्यम्। पयः। परिऽदाय। रसम्। दुहे। वित्तम्। मे। अस्य। रोदसी इति ॥२॥

---

१-१. नास्ति वि[१]. २. तु. मै ४,१,९; वैतु. काठ ३१,७ आपीयः ३. आप्त्यः वि[३]. ४. तैब्रा ३,२,८,११. ५-५. सातेयेन यतोऽर° कु; साते ये नयतः अर° वि[३] अ[३]; सा ते येन योतार° वि[२] अ[१]. ६. अविन्दन्त वि[३]. ७-७. तद्वितोऽवरोढुमकामयत। तमेकतस्तं अ[१,२] वि[२] कु. ८. अध वि[१,२] ल. ९. तदेव वि[१,३] ल. १०. °क्रेण पि° कु. ११. °दिते कु. १२. इयां वि[१,३] अ[१,२] ल लपं. १३. °येतीति वि[३]. १४-१४. नास्ति ल. † अपश्यन् वि[१,२] अ[१]. १५. दीप्यन्नुद° वि[२]. १६. चन्द्रः वि[३]. १७-१७. ने वा अ[१] वि[२]; तेन ह वि[३] अ[२]; नैव कु. १८. जीवाः वि[३] अ[२]. १९-१९. नास्ति वि[३] अ[२]. २०. मम कु. २१. नास्ति मै[२]. २२-२२. नास्ति मै[२]. २३-२३. नास्ति मूको.

**स्कन्द०** इत् वै उ इति निपातास्त्रयोऽपि पदपूरणाः। द्यावापृथिव्योश्च परस्तात् पुरस्ताच्च सङ्कीर्त्यमानत्वाद् अयमप्यर्धर्चो द्यावापृथिव्य एव। वैश्वदेवत्वाद्वा सूक्तस्य वैश्वदेवः। द्यावापृथिव्योः विश्वेषां देवानां वा[1] प्रसादेन अर्थम् यथाभिप्रेतम् अर्थिनः सर्वे,[2] जाया च स्वम् पतिम् आ युवते यु मिश्रणे। आमिश्रयन्ति। आत्मना सह प्राप्नुवन्तीत्यर्थः। किञ्च तुञ्जाते तुञ्जतिर्दानकर्मा (तु. निघ ३, २०)। दत्तं सर्वप्राणिभ्यः। के[2]। द्विवचननिर्देशात् द्यावापृथिव्यौ। किम्[3]। वृष्ण्यम् पयः। वृष्ण्यमित्यपठितमपि[4] बलनाम। सामर्थ्याच्चात्र तत्कारणे[5] तच्छब्दप्रयोगः। 'पयः' (निघ १,१२) इत्युदकनाम। पुष्टिलक्षणस्य[6] बलस्य कारणभूतं वृष्टिलक्षणमुदकम्। कथं पुनर्वृष्टिलक्षणमुदकं[7] द्यौः पृथिवी वा[8] ददाति। उच्यते। दिवो हि वृष्टिः पतति। यच्च वृष्टेर्हेतुभूतं यज्ञादिकर्म तत् पृथिव्यां क्रियते। अतस्तयोर्वृष्टिहेतुत्वात् ते एव[9] वृष्टिलक्षणमुदकं दत्तमिति व्यपदिश्यते। किञ्च परिदाय रसम् दुहे परीति सर्वतोभावे (तु. या १, ३)। ददातिरपि शुद्धस्सन् आङ्पूर्वो द्रष्टव्यः। 'रसः' (निघ १, १२) इति उदकनाम। रश्मिभिः सर्वतः आदायोदकं दुहे वृष्ट्यर्थं क्षरति। कोऽसौ। सामर्थ्यात् आदित्यः। स हि रश्मिभिः सर्वतः उदकमादाय वृष्ट्यर्थं मध्यमाय[10] ददाति। वित्तम् मे इत्याद्युक्तार्थम् ॥ २ ॥

**वेङ्कट०** अभिलषितम् अर्थम् अर्थिनः लभन्ते। स्त्री च पतिम् आश्रयते। द्यावापृथिव्यौ च वर्षणनिमित्तं[11] स्वसारं मनुष्येभ्यः प्रयच्छतः। आदित्यश्च[12] रश्मिभिः सर्वत आदाय उदकम्[13] क्षरतीति मुमूर्षोः परिदेवनम् इति[14] ॥ २ ॥

**मुद्गल०** अर्थिनः धनमपेक्षमाणाः पुरुषाः अर्थम् इत् वै अपेक्षितं धनं प्राप्नुवन्त्येव। नाहं प्राप्नोमि। उ पूरणम्। अपि च जाया अन्यदीया भार्या पतिम् स्वपतिम् आ युवते आभिमुख्येन प्राप्नोति। मदीया तु मद्विरहात् हताऽऽसीत्। अपि च संयुक्तौ तौ जायापती वृष्ण्यम् वीर्यरूपम् पयः उदकम् तुञ्जाते प्रजननाय अन्योऽन्यसङ्घटनेन प्रेरयतः। तदनन्तरम् रसम् पुरुषस्य सारभूतं वीर्यम् परिदाय गर्भरूपेण धृत्वा दुहे दुग्धे पुत्ररूपेण जनयति। मम तु[15] पुत्रोऽपि नोत्पद्यते। अत इदं मदीयं दुःखं हे द्यावापृथिव्यौ! जानीतम् ॥ २ ॥

### मो षु दे॑वा अ॒दः स्व१॒॑रव॑ पादि दि॒वस्परि॑।
### मा सो॒म्यस्य॑ शं॒भुवः॒ शूने॑ भूम॒ कदा॑ च॒न वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ३ ॥

मो इति॑। सु। दे॒वाः॒। अ॒दः। स्वः॑। अव॑। पा॒दि॒। दि॒वः। परि॑।
मा। सो॒म्यस्य॑। श॒म्ऽभुवः॑। शूने॑। भू॒म॒। कदा॑। च॒न। वि॒त्तम्। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥

**स्कन्द०** मो इति माशब्दस्य[16] उञा सहैकादेशः। उञ् चात्र[2] पदपूरणः। सु इत्यपि पदपूरण एव। मा हे देवाः! अदः स्वः स्वश्शब्दः सर्वपर्यायः। इदं सर्वमस्मत्प्रभवं पुत्रपौत्रादिकुलम्। [17]अव पादि[17] अधः[2] पतत् दिवः द्युलोकात्। स्वर्गाद् प्रच्युत्य नरकं मा गादित्यर्थः। परि-शब्दस्तु

---

१. नास्ति अ ति. २. नास्ति ति. ३. किं च ति. ४. °त्यपश्चित° ति. ५. °कारणे ति. ६. वृष्टि° ति. ७. पुनरुदकं ति. ८. नास्ति अ. ९. एवम् ति. १०. अर्धमादाय ति. ११. °त्तान्तमुदकम् वि[1] अ[2]. १२. °त्यः कु. १३. तम् वि[1] ल. १४. नास्ति कु. १५. नास्ति मै[2]. १६. °शब्दः अ ति. १७-१७. नास्ति अ; त्रुटितम् ति.

'अधिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । मा सोम्यस्य सोमसम्पादिनः शंभुवः 'शम्' (निघ ३,६) इति सुखनाम । भवतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः प्राप्त्यर्थो वा । सुखं यदात्मनो भावयति जनयति प्रापयति वा तत् शंभु, तस्य शंभुवः। सोमयाजिनः सुखिनश्च पितृपितामहादिकुलस्य तत्प्रभवत्वेन सम्बन्धिनः सन्तो वयमित्यर्थः। शूने भूम शूनं वृद्धं श्वयतेर्वृद्ध्यर्थत्वात् । यच्च[1] वृद्धं नेष्यते, तदिह परिगृह्यते । किं पुनस्तत् । दुःखं पापं वा। दुःखपापशब्दयोर्वान्यतरपर्यायः शूनशब्दः। द्वितीयार्थे चैषा सप्तमी। भूमेत्यपि भवतिः प्राप्त्यर्थः। दुःखं पापं वा प्रापाम । कदा चन कदाचिदपि[2] । युवामपि वित्तम् ॥ ३ ॥

**वेङ्कट०** यज्ञाभावात् एतत् सर्वम् देवाः! न स्वर्गात् अव पादि[3] । न वयं सोमार्हस्य पितृगणस्य सुखस्य भावयितुः केवलत्वाय कदा चिद् अपि भवाम इति आनृण्याय यज्ञमाशास्त इति[4] ॥ ३ ॥

**मुद्गल०** हे देवाः! स्वः स्वर्गे वर्तमानम् अदः तत् अस्मदीयं पितृपितामहप्रपितामहात्मकं सन्तानम् दिवः परि दिवश्चोपरि वर्तमानम् मो षु मैव अव पादि अवपन्नं विपन्नं प्रभ्रष्टं मा भूत् मम पुत्राभावात् । अतो वयम् सोम्यस्य सोमपानार्हस्य पितृगणस्य शंभुवः सुखस्य भावयितुः पुत्रस्य शूने अपगमने कदा चन कदाचिदपि मा भूम युष्मत्प्रसादात् मम पुत्रा जायन्ताम्। अतो माम् अस्माद् दुःखाद् उत्तारयतेत्यर्थः। हे द्यावापृथिव्यौ! युवाम् च मदीयं विज्ञापनं च जानीतम् । मो मा उ इति निपातद्वयसमुदायो मैवेत्यस्यार्थे । सु अवधारणे ॥ ३ ॥

**य॒ज्ञं पृ॑च्छाम्यव॒मं स तद् दू॒तो वि वो॑चति ।**
**क्व॑ ऋ॒तं पू॒र्व्यं ग॒तं कस्तद् बि॑भर्ति॒ नूत॑नो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ४ ॥**

य॒ज्ञम् । पृ॒च्छा॒मि॒ । अ॒व॒मम् । सः । तत् । दू॒तः । वि । वो॒च॒ति॒ ।
क्व॑ । ऋ॒तम् । पू॒र्व्यम् । ग॒तम् । कः । तत् । बि॒भ॒र्ति॒ । नूत॑नः । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ ४ ॥

**स्कन्द०** तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यमग्निम् अहम् यज्ञम् पृच्छामि। अवमम् अन्तिकनामैतत् (तु. निघ २,१६)। अग्नेश्च विशेषणम्। सन्निकृष्टम्। सर्वयजमानानामासमित्यर्थः। अथवा अवममिति यज्ञस्य विशेषणम्। सन्निकृष्टं यज्ञमिति। ममार्थे[5] कृतम् मानसमित्यर्थः। सः अग्निः तत् व्यत्ययेनात्र[6] नपुंसकता यज्ञप्रतिनिर्देशार्थत्वात्। तं यज्ञम्। दूतः यजमानानाम् [7]वि वोचति[7] लोडर्थेऽयं लेट्। विविधं ब्रवीतु। मह्यमुपदिशतु येनाहं सुखमविगुणं करोमीत्यर्थः। क्व अग्नेः ऋतम् सत्यम्[8] पूर्व्यम् पूर्वं चिरन्तनम् गतम् अपयातम्। कः वा तत् इदानीं बिभर्ति धारयति। नूतनः [8]नवोऽन्यो देवः। येन सत्येनाग्निः[8] यष्टॄनापद्भ्यो रक्षति क्व तस्य तत् सत्यं गतमिति आत्मन आपदोऽरक्षणादुपालम्भोऽयं परिदेवना वा। वित्तम् ॥ ४ ॥

**वेङ्कट०** 'यज्ञम् पृच्छामि', तत्[10] विस्पष्टम् वदतु यज्ञः, सत्यम् एव आश्रितं रक्षतीति। यज्ञस्य पुरा

---

१. तच्च मूको. २. कदापि अ. ३. °पाति वि[२,३] अ[१,२] कु. ४. नास्ति कु. ५. °र्थे कु ति. ६. °येन अ. ७-७. नास्ति अ. ८-८. नास्ति ति. ९-९. नास्ति वि[१,३] अ[१,२] क लपं. १०. नास्ति वि[१,२] अ[१] कु.

[1]दृष्टम् आनृशंस्यम्[1] क्व गतम्। कः [2]तत् इदानीं सम्प्रतिपन्नः बिभर्ति[2] इति[3] ॥ ४ ॥

**मुद्गल०** यज्ञम् यजनीयम् [4]अवमम् सर्वेषां देवानामादिभूतं[4] तमग्निम् पृच्छामि यन्मया पृष्टम्[5] तत् देवानाम् दूतः सः अग्निः वि वोचति विविच्य कथयतु। किं पुनस्तत् पृच्छ्यत इति तदुच्यते। हे अग्ने! त्वदीयम् पूर्व्यम् पूर्वकालीनम् ऋतम् भद्रं स्तोतृभ्यः कृतं श्रेयः क्व गतम् कुत्रेदानीं वर्तते। नूतनः नवतरः त्वत्तोऽन्यः कः पुरुषः तत् भद्रम् बिभर्ति धारयति। यदि त्वयि अवर्तिष्यत मम ईदृशी दशाऽपि नाभविष्यत्। अतः तत् क्व गतमिति कथय ॥ ४ ॥

अमी ये देवाः स्थन त्रिष्वा रोचने दिवः ।
कद् व ऋतं कदनृतं क्व प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी ॥ ५ ॥

अमी इति। ये। देवाः। स्थन। त्रिषु। आ। रोचने। दिवः।
कत्। वः। ऋतम्। कत्। अनृतम्। क्व। प्रत्ना। वः। आऽहुतिः। वित्तम्। मे। अस्य। रोदसी इति ॥

**स्कन्द०** अमी ये यूयं हे देवाः! स्थन। तिष्ठथेत्यर्थः[6]। त्रिषु लोकेषु। [7]आरोचने दिवः दीप्ते दिवः[7] सम्बन्धिन्यादित्यमण्डले। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तान् पृच्छामि। कत् क्वेत्यस्य पर्यायः कच्छब्दः[8]। क्व वः युष्माकम् ऋतम् सत्यम्। कत् क्व वा [9]अनृतम् असत्यम्। क्व वा[9] प्रत्ना पुराणी वः युष्माकम् अस्मत्प्रवृत्ता आहुतिः। सत्यासत्यविवेकिभूता यूयं यज्वानं सन्तं मामित आपदो न[5] रक्षथेत्येवमुपालम्भोऽयम्। वित्तम् ॥ ५ ॥

**वेङ्कट०** [10]अमी ये[10] [11]दिवः आरोचने आदित्ये त्रिषु स्थानेषु पौर्वापर्यभावेन† देवाः!‡ भवथ। पार्थिवाः च देवगणा आदित्यतेजोभिः अवष्टब्धा वर्तन्ते एवं माध्यमिकाः। क्व वः गतम् आनृशंस्यम्, क्व वा शाठ्यमयजमानविषयम्, क्व वा अस्माभिः पुरा भवद्भ्यः हुता आहुतिः[11] ॥ ५ ॥

**मुद्गल०** हे देवाः! त्रिषु पृथिव्यादिषु स्थानेषु ये अमी यूयम् स्थन वर्तमाना भवथ। यानि स्थानानि दिवः द्योतमानस्य सूर्यस्य आरोचने दीप्तिविषये वर्तन्ते। सूर्यप्रकाश्येषु तेषु स्थानेषु इत्यर्थः। तेषाम् वः युष्माकं सम्बन्धि स्तोतृविषयम् ऋतम् सत्यम् कत् कस्मिन्देशे वर्तते। अनृतम् द्वेषविषयम् असत्यं च कत् कुत्र गतम्। अपि च प्रत्ना चिरकालीना वः युष्माकं सम्बन्धिनी आहुतिः मया पूर्वमनुष्ठितो यागः क्व कुत्रासीत्। ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितयागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे। अन्यत् पूर्ववत् ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये विंशो वर्गः ॥

कद् व ऋतस्य धर्णसि कद् वरुणस्य चक्षणम् ।
कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी ॥ ६ ॥

---

१-१. दृष्टानृ° वि[1] अ[1]. २-२. नास्ति वि[1] अ[1]; तदानीं संप्रति तन्नः वि° वि[1] अ[1] ल. ३. नास्ति वि[1] अ[1] कु. ४-४. सर्वेषामाधिभूतं मूको. ५. °ष्ठतेय° मूको. ६. नास्ति मै[1]. ७. °चने दीप्ते च दिवः दिवः स° कु. ८. नास्ति अ. ९-९. नास्ति अ. १०-१०. नास्ति वि[2,3] अ[1,2] ल लपं. ११-११. नास्ति वि[1] अ[1]. † °भावेः कु; °भावौ वि[1]; °भावे च अ[1]. ‡ नास्ति वि[1]; ये दे° वि[2,3] अ[1,2] कु ल लपं.

कत् । वः । ऋतस्य । धर्णसि । कत् । वरुणस्य । चक्षसम् ।
कत् । अर्यम्णः । महः । पथा । अति । क्रामेम । दुःऽध्यः । वित्तम् । मे । अस्य । रोदसी इति ॥६॥

**स्कन्द०** कत् वः क युष्माकम् ऋतस्य धर्णसि धारणं [1]निस्सरति। असत्यभूताः†[1] स्थेत्यर्थः । अथवा व इति निर्धारणे षष्ठी । ऋतशब्दोऽप्यादित्यवचनः । 'धर्णसि' ( निघ २, ९ ) इत्यपि बलनाम। क युष्माकं मध्ये आदित्यस्य भक्तानुग्रहसामर्थ्यलक्षणं[2] बलम् । क वा वरुणस्य चक्षणम् । भक्ताभक्तविवेकज्ञानमित्यर्थः । क वा अर्यम्णः[2] महत्वम् । अतिशयवद्देवतामाहात्म्यमित्यर्थः[3] । एवमयमपि पूर्ववदुपालम्भः। पथा[4] अति क्रामेम दूढयः इतीयं[4] त्वाशीः[5] । युष्मत्प्रसादात् स्वगृहगमन पथेन[6] वयमतिक्रामेमेत्याशास्महे । किम् । दूढयः[7] दुर्धियः पापबुद्धीन् वृकप्रभृतीन् । वित्तम् ॥ ६ ॥

**वेङ्कट०** [8]क युष्माकम्[8] आनृशंस्यस्य[9] धारणं गतम्, क वा वरुणस्य पुण्यपापकृद्विषयं[10] दर्शनम्, क वा[11] अर्यम्णः दानादिविषयं महत्वम् । वयं मार्गेण कूपाद् उत्तीर्णाः दुर्बुद्धीन् अति क्रामेम ॥ ६ ॥

**मुद्गल०** हे देवाः! वः युष्माकं सम्बन्धिनः ऋतस्य सत्यस्य अभिमतफलप्रापणस्य धर्णसि धारणम् कत् कुत्र गतम् । वरुणस्य अनिष्टनिवारकस्य देवस्य चक्षणम् अनुग्रहदृष्ट्या दर्शनम् कत् क गतम् । महः महतो महानुभावस्य अर्यम्णः अरीणां नियन्तुरेतत्संज्ञस्य देवस्य सम्बन्धिना पथा शोभनमार्गेण इष्टदेशप्रापणम् कत् क गतम् । एतत्सर्वं युष्मास्वेव वर्तते । न कुत्रापि गतम् । अतो वयम् दूढयः दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपरान् शत्रून् अति क्रामेम अतितरेम । तैः कृताद् अस्मत्कूपपातलक्षणाद् दुःखाद् वयमुत्तीर्णा भवेम । हे द्यावापृथिव्यौ! मदीयमिदं जानीतम् ॥ ६ ॥

**अहं सो अस्मि यः पुरा सुते वदामि कानि चित् ।**
**तं मा व्यन्त्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी ॥ ७ ॥**

अहम् । सः । अस्मि । यः । पुरा । सुते । वदामि । कानि । चित् ।
तम् । मा । व्यन्ति । आऽध्यः । वृकः । न । तृष्णऽजम्[12] । मृगम् । वित्तम् । मे । अस्य । रोदसी इति ॥ ७ ॥

**स्कन्द०** अहम् अस्मि सः[13] मन्त्रदृक्[14] यः[4] पूर्वं[15] सुते सोमे वदामि भूतेऽयं लट् । उदितवान् । कानि चित् कान्यपि अत्यन्तोत्कृष्टानि स्तोत्राणि । तम् मा[13] मां युष्माकं स्तोतारं सन्तम्[16] व्यन्ति । वेतिरत्र[17] खादनार्थः । खादन्ति । असम्पाद्यमाना[18] उद्वेगेन मारयन्तीवेत्यर्थः । के । उच्यते । आध्यः आधयः कामा उच्यन्ते । यक्ष्ये भोक्ष्ये अर्थिभ्यो दास्ये इत्येवमादयः कामाः । कथं खादन्ति । वृकः न तृष्णजम् मृगम्[19] । तृष्णा जाता यस्य स तृष्णजः तृषित उच्यते । यथा [20]वृकस्तृषितमुदकस्थानम् आगतं[20] हरिणम् अन्यं वा मृगं कश्चित् खादति तद्वदित्यर्थः नैतद्योग्यं युष्माकं स्तोता सन्नहम् एवम् असम्पाद्यमानैः[21] कामैः बाध्ये इत्येवमयमुपालम्भः । वित्तम् ॥ ७ ॥

---

१-१. नास्ति अ.　† अभूताः ति.　२. नास्ति अ.　३. °शयदेव° कु ति.　४. नास्ति ति.　५. यस्त्वा° ति.　६. °पथा मूको.　७. दुध्यः ति.　८-८. नास्ति वि[3] अ[2].　९. °शंस्यम् वि[3] अ[2].　१०. °द्विपय वि[3] अ[2].　११. च लपं.　१२. पृ ६१९ टि १ द्र.　१३. नास्ति मूको.　१४. मन्त्रभृत् ति.　१५. पूर्वेषु अ.　१६. तं ति.　१७. व्यदि° कु; वेदि° अ ति.　१८. असंप° अ.　१९. नास्ति कु.　२०-२०. °स्थान आ° कु.　२१. असंपद्य° अ कु.

**वेङ्कट०** अहम् सः अस्मि यः पुरा भवताम् सुते सोमे स्तोत्राणि कानि चित् वदामि। तम् मा[1] खादन्ति आध्यः कामा न यक्ष्ये न दास्यामि न भोक्ष्ये[2] इति। [3]वृकः श्वा[3] तृष्णा जाता यस्य तम् तृष्णजम् उदकस्थानं प्रति गच्छन्तम् मृगम् इवेति[4] ॥ ७ ॥

**मुद्गल०** हे देवाः! पुरा पूर्वस्मिन् काले सुते युष्मद्यागार्थं सोमे अभिषुते कानि चित् कतिपयानि स्तोत्राणि यः अहम् वदामि उक्तवानस्मि सः एवाहम् अस्मि न त्वन्यः कश्चित्। तस्मात् किमर्थं मां परित्यजथ। तं तादृशं माम् आध्यः अभिलषितपुत्राद्यप्राप्त्या जनिताः मानस्यो व्यथाः व्यन्ति भक्षयन्ति। दृष्टान्तः। तृष्णजम् जाततृष्णं पिपासन्तम् उदकं प्रति गच्छन्तम् मृगम् वृकः न यथा अरण्यश्वा मध्येमार्गं भक्षयति तद्वत् ॥ ७ ॥

**सं मा॑ तपन्त्य॒भित॑ः स॒पत्नी॑रिव॒ पर्श॑वः ।**
**मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्य॑ः स्तो॒तारं॑ ते शतक्रतो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ८ ॥**

सम्। मा। तप॒न्ति॒। अ॒भित॑ः। स॒पत्नी॑ऽइव। पर्श॑वः। मूष॑ः। न। शि॒श्ना। वि। अ॒द॒न्ति॒। मा॒। आ॒ऽध्य॑ः। स्तो॒तार॑म्। ते॒। श॒त॒ऽक्र॒तो॒ इति॑ शतऽक्रतो। वि॒त्तम्। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥ ८ ॥

**स्कन्द०** सम् मा तपन्ति तपिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। [5]मां सन्तापयन्ति[5] अभितः अभिशब्दादयमुभयार्थे तसिल्। वामपार्श्वतो दक्षिणपार्श्वतश्चेत्यर्थः। अथवा अग्रतः पृष्ठतश्चेत्यर्थः। सपत्नी रिव यथा सपत्न्य एकं भर्तारमात्मानमेव वा[6] परस्परतः सन्तापयन्ति तद्वत्। काः सन्तापयन्ति। उच्यते। पर्शवः कूपभित्तयः। इष्टका वा इह पर्शव उच्यन्ते। ताः हि [7]कूपस्य पर्शुस्थानीयाः[7]। इमाः कूपभित्तय इष्टका वेत्यर्थः। किञ्च मूषः न शिश्ना[8] मूषशब्दोऽत्र मूषिकशब्दपर्यायः[9]। शिश्नमित्यपि ष्णा शौचे, ष्णै वेष्टन इत्यनयोरन्यतरस्य[10] रूपम्। कथम्। धात्वादेः सकारस्य शकारश्छान्दसत्वात्। 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (पावा ३,३,५८) इति कर्मणि कप्रत्ययः। 'द्विर्वचनप्रकरणे कृञादीनां के' (पावा ६,१,१२) इति द्विर्वचनम्। 'अर्तिपिपर्त्योश्च' (पा ७,४,७७) इत्यभ्यासस्येत्वम्। एवं[11] शिश्नमिति भवति। किं[12] पुनरत्र शिश्नशब्देनोच्यते। वायितं [13]सूत्रम्। तद्धि शौचार्हं[13] भवति अन्नगन्धित्वात्। वेष्टितं[14] च तन्तुवाययन्त्रे[15]। अथवा [13]शिश्नशब्दः प्रजननवचनः। इह तु[13] तत्सादृश्यात् [16]पुच्छं† शिश्नमुच्यते[16]। मूषिको[17] वायितानि सूत्राणि पुच्छानि वा तैलभाण्डे घृतभाण्डे [18]वा प्रक्षिप्य ततश्चोद्धृत्य व्यत्ति† एवम् वि अदन्ति विविधं अदन्ति[18] खादन्ति माम् आध्यः यागादिकामाः। स्तोतारम् सन्तम् ते तव हे शतक्रतो! बहुकर्मन्! बहुप्रज्ञ वेन्द्र!। नैतद्योग्यं यत्तव स्तोता सन्नहम् एवम् असम्पद्यमानैः[19] कामैः बाध्ये[20] इत्येवमुपालम्भः। वित्तम् ॥ ८ ॥

**वेङ्कट०** सम् तपन्ति माम् अभितः सपत्नीमिव सपत्न्यः कूपपर्शवः। मूषिकाः [21]इव अस्नातानि[21]

---

१. माम् कु. २. मोक्ष्यामि मूको. ३-३. वृकश्चा वि[1] लपं; धृतश्चा वि[1] अ[2]; वृकश्च कु. ४. इव कु. ५-५. मां ताप॰ मूको. ६. नास्ति अ. ७-७. कूपस्थानीयाः ति. ८. नास्ति मूको. ९. मूषिका॰ ति १० इत्येतयो॰ ति. ११. एवंहि ति. १२. कथं ति. १३-१३. त्रुटितम् ति. १४. चेष्टि॰ कु. १५. ॰तन्त्रे अ इव पुच्छ॰ अ[2]. १६-१६. त्रुटितम् ति. † पुच्छः कु ति. १७. मूषिका ति. † व्यदति अ कु. १८-१८. त्रुटितम् ति. १९. सम्पद्य॰ अ[2]. २०. बोध्यते कुं. २१-२१. स्तानि वि[1] अ[2].

सूत्राणि वि अदन्ति । स्वाङ्गाभिधानं वा स्यात् शिश्नानि व्यदन्ति इति[1]। सन्तपन्ति मा[2] आध्यः कामाः स्तोतारम् ते शतक्रतो! । यथा प्रजननानि वेष्टनत्वचावृतानि, तद्वत् कामा मां परितृण्वन्ति[3] ॥ ८॥

मुद्गल० ऐन्द्रेषा । हे इन्द्र! पर्शवः पार्श्वास्थीनि अत्र सामर्थ्यात् पार्श्वस्थानीयाः कूपभित्तयः मा माम् अभितः सर्वतः सम् तपन्ति सम्यक् पीडयन्ति । दृष्टान्तः । सपत्नीरिव समान एकः पतिर्यासां ताः सपत्न्यः यथा एकं पतिम् अभितः पीडयन्ति । हे शतक्रतो! बहुविधकर्मन्! इन्द्र! ते तव स्तोतारम् मा माम् आध्यः असंपाद्यमानैर्योगदानादिभिरुत्पादिताः मानस्यः पीडाः वि अदन्ति विविधं भक्षयन्ति । दृष्टान्तः । मूषः न यथा मूषिकाः शिश्ना शिश्नेन कुविन्देन वायितानि अन्नरसेनालिप्तानि सूत्राणि भक्षयन्ति, एवं माम् आधयः भक्षयन्ति । न चैतत् हे इन्द्र! तव स्तोतुर्न्याय्यम् । तस्मात् कूपात् मामुत्तारय । अन्यत् समानम् ॥ ८ ॥

अमी ये सप्त रश्मयस्तत्रा मे नाभिराततां ।
त्रितस्तद् वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ॥ ९ ॥

अमी इति । ये । सप्त । रश्मयः । तत्र । मे । नाभिः । आऽतता ।
त्रितः । तत् । वेद । आप्त्यः । सः । जामिऽत्वाय । रेभति । वित्तम् । मे । अस्य । रोदसी इति ॥ ९ ॥

स्कन्द० अमी ये सप्त रश्मयः[4] आदित्यरश्मयः । तत्र तेषु मे मम नाभिः अतता नाभिशब्दोऽत्र प्राणमात्रोपलक्षणार्थो द्रष्टव्यः । प्राणः । आतता अवबद्धाऽऽयत्तेत्यर्थः । तच्चैतत् त्रितः नाम ऋषिः वेद । आप्त्यः आप्त्यपुत्रः । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः । अहं त्रितो वेद्मीत्यर्थः । कौत्सत्वेऽस्य सूक्तस्याऽविरुद्ध एव परोक्षेण[5] निर्देशः । विद्वांश्च सः त्रितः जामित्वाय जामिशब्दः समानजातीयवचनः[6] । समानजातीयत्वार्थम् । ताद्भाव्यप्रतिपत्त्यर्थमित्यर्थः[7] । रेभति[8] अर्चतिकर्माऽयम् ( तु. निघ ३, १४ ) । स्तौति रश्मीन् । वित्तम् ॥ ९ ॥

वेङ्कट० अमी ये[9] सप्त आदित्यरश्मयः तेषु मम नाभिः आतता । ते हि सर्वेषां नाभिषु सम्बद्धा भवन्ति । तमिममर्थम् अपां पुत्रः त्रितः जानाति । सः तेन [10]आदित्येन जामित्वाय तद् अनुपालयितुं[10] स्तौति तान् रश्मीन् इति[2] ॥ ९ ॥

मुद्गल० ये अमी द्युलोके वर्तमानाः सप्त सप्तसङ्ख्याकाः रश्मयः सूर्यस्य किरणाः सन्ति तत्र तेषु सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु मे मदीया नाभिः आतता सम्बद्धा । ऋषिरात्मानमेव परोक्षतया निर्दिशति । त्रितः तीर्णतमः तिरस्कृताज्ञानः आप्त्यः अपां पुत्रः ऋषिः तत् पूर्वोक्तं वृत्तान्तम् वेद विजानाति, नान्यः । सः जानन् ऋषिः जामित्वाय कूपात् निर्गन्तृत्वाय रेभति तान् रश्मीन् स्तौति । अन्यत्समानम् ॥ ९ ॥

---

१. नास्ति वि[1,3] अ[2] ल लपं. २. नास्ति कु. ३. वृण्वन्ति वि[3] अ[2]. ४. नास्ति मूको. ५. परोक्षरूपेण ति. ६. सजातीयव' ति. ७. तद्भाव्य' मूको. ८. रेभतिः मूको. ९. नास्ति वि[3]. १०-१०. आदित्यसमानजातीयत्वार्थं तदनु तदनुपा° वि[3] अ[2]; °त्येन जामित्वं तदनु° वि[1,3] अ[2] ल लपं.

अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥ १० ॥

अमी इति । ये । पञ्च । उक्षणः । मध्ये । तस्थुः । महः । दिवः ।
देवऽत्रा । नु । प्रऽवाच्यम् । सध्रीचीनाः । नि । ववृतुः । वित्तम् । मे । अस्य । रोदसी इति ॥ १० ॥

**स्कन्द०** अमी ये पञ्च उक्षणः सेक्तारः । स्वेनस्वेन व्यापारेण वर्षितार इत्यर्थः । कतमे । 'तत्र इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा' ( ऋ १, १०७, ३ ) इत्यस्यामृचि ये पञ्च निगदिताः । मध्ये तस्थुः तिष्ठन्ति महः दिवः महतो द्युलोकस्य । देवत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीया-सप्तम्योर्बहुलम्' ( पा ५,४,५६ ) इति बाहुलकादयं त्रादेशः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तेषां देवानां नु क्षिप्रम् प्रवाच्यम् प्रकर्षेण वक्तव्यं स्तोत्रमस्माभिः । तच्चोच्यमानं श्रोतुम् सध्रीचीनाः सहस्यायं सध्रिरादेशोऽञ्चतावुत्तरपदे । अञ्चतिर्गत्यर्थः । सहाञ्चन्तीति सध्रीचीनाः । सहगमन-शीला इत्यर्थः । नि ववृतुः अस्मान्[1] प्रति निवर्तन्ताम् । माऽन्यतो[2] गमन् । अस्मान् प्रत्या-गच्छन्त्वित्यर्थः । वित्तम् ॥ १० ॥

**वेङ्कट०** 'तत्र इन्द्रस्तद् वरुणः' इत्यस्याम् ऋचि वक्ष्यमाणाः पञ्च अमी वर्षितारः ये[3] मध्ये दिवः तिष्ठन्ति । तेषु देवेषु क्षिप्रं [4]मया अभिलषितं[4] वाच्यम् । ते [5]सहभूताः निवर्तन्तां[5] मां प्रति ॥ १० ॥

**मुद्गल०** उक्षणः सेक्तारः कामाभिवर्षुकाः पञ्च अग्निर्वायुः सूर्यश्चन्द्रमा विद्युदित्येवं पञ्चसङ्ख्याकाः ये अमी दिवः महतो विस्तीर्णस्य द्युलोकस्य मध्ये तस्थुः तिष्ठन्ति आसते । देवत्रा देवेषु नु क्षिप्रम् प्रवाच्यम् प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रं प्रति सध्रीचीनाः सह अञ्चन्तो युगपदागच्छन्तः ते देवाः मदीयं परिचरणं स्वीकुर्वन्ति । तदनन्तरम् नि ववृतुः तृप्ताः सन्तो निवर्तन्ते च । अन्यत् समानम् ॥ १० ॥

इति प्रथमाष्टके सप्तमाध्याये एकविंशो वर्गः ॥

सुपर्णा एत आसते मध्य आरोधने दिवः ।
ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी ॥ ११ ॥

सुऽपर्णाः । एते । आसते । मध्ये । आऽरोधने । दिवः ।
ते । सेधन्ति । पथः । वृकम् । तरन्तम् । यह्वतीः । अपः । वित्तम् । मे । अस्य । रोदसी इति ॥

**स्कन्द०** सुपर्णाः[6] सुपर्ण इति रश्मिनाम (तु निघ १,५) । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहार्यः[7] । ये रश्मयः एते आसते तिष्ठन्ति तन्मध्ये[8] आरोधने दिवः आरोहति मर्यादया[9] रुणद्धि वा तमांसीत्यारो-धनमादित्यमण्डलमिहाभिप्रेतम् । यदेतद्दिवः मध्ये[10] आदित्यमण्डलं तत्रेत्यर्थः । ते सेधन्ति

---

१. अस्मिन् अ ति. २. नान्य° अ कु. ३. नास्ति वि[1] अ[2]. ४-४. ना(? नो) भिल° वि[1] अ[2]. ५-५. सहभूतानि वर्तन्तु वि[1-3] अ[1,2] कु लपं; निवर्तन्तु ल. ६. नास्ति मूको. ७. °हर्तव्यः अ. ८. नास्ति अ; त्वन्म° कु ति. ९. °दाया अ. १०. मण्डले अ.

सेधतिर्गतिकर्मा (तु. निघ २,१४)। सामर्थ्याच्चान्तर्णीतण्यर्थः। शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः। लोडर्थे लट्। अपगमयन्तु। पथः अस्मद्गमनमार्गादिमम् वृकम् तरन्तम् अस्मान् भक्षयितुमुत्तरन्तम्। यह्वतीः यह्वशब्दस्य महन्नाम्नः पर्यायो यह्वच्छब्दो द्रष्टव्यः। महतीरेताः सारस्वतीः अपः। वित्तम् ॥ ११ ॥

**वेङ्कट०** सुपतनाः एते[1] रश्मयः निवसन्ति स्वर्गलोकस्य[2] अपिधान आदित्यमण्डले। ते निषेधन्ति मार्गात् अनुगच्छन्तम्[3] वृकम्, यः पशुषु हतेषु[4] मां भक्षयितुम्[5] कूपे अवरूढं[6] दृष्ट्वा[7] सरस्वत्याः परस्मात् कूलात् तस्या महतीः अपः '[8]तरन्, तं[8] कञ्चन वृकम्' इति[10] ॥ ११ ॥

**मुद्गल०** सुपर्णाः शोभनपतनाः एते सूर्यरश्मयः आरोधने सर्वस्यावरके व्याप्ते दिवः अन्तरिक्षस्य मध्ये आसते वर्तन्ते, ते सूर्यरश्मयः पथः मार्गात् वृकम् अरण्यश्वानम् सेधन्ति निवारयन्ति। कीदृशम्। यह्वतीः महतीः अपः तरन्तम् अतिक्रान्तम्। कूपपतनात्पूर्वं त्रितं दृष्ट्वा एनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुराजगाम स च सूर्यरश्मीन् दृष्ट्वा अयमवसरो न भवतीति निववृते। अतो रश्मयो वृकं निषेधन्तीत्युच्यते। निष्प्रभं कुर्वन्तीत्यर्थः ॥ ११ ॥

## नव्यं॑ तदु॒क्थ्यं॑ हि॒तं देवा॑सः सुप्रवाच॒नम् ।
## ऋ॒तम॑र्षन्ति॒ सिन्ध॑वः स॒त्यं ता॑तान॒ सूर्यो॑ वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ १२ ॥

नव्य॑म् । तत् । उ॒क्थ्य॑म् । हि॒तम् । देवा॑सः । सु॒ऽप्र॒वा॒च॒नम् ।

ऋ॒तम् । अ॒र्ष॒न्ति॒ । सिन्ध॑वः । स॒त्यम् । त॒ता॒न॒ । सूर्यः॑ । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥१२॥

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः[11]। यदस्माभिः कर्तुमुपक्रान्तम् नव्यम् नवम्। अन्यैः[12] स्तोतृभिरकृतपूर्वमित्यर्थः। तत्[13] उक्थ्यम्[13] उक्थ्यशब्दोऽत्र उक्थपर्यायः स्तोत्रवचनः, न प्रशस्यवचनः। युष्मत्स्तोत्रम्। कीदृशम्। हितम्। कस्मै। सामर्थ्यादस्मदभिप्रेतकरत्वाद् अस्मभ्यम्, युष्मभ्यं वा वीर्यवृद्धिकरत्वात्। तत् हे देवासः! [14]सुप्रवाचनम् सुष्ठु प्रवाचनार्हम्[14]। अत्यन्तोत्कृष्टं चेत्यर्थः। अथवैवमन्यथास्यार्धर्चस्यार्थयोजना[15]। युष्माकं माहात्म्यं नव्यम्[16]। नौतेरर्चतिकर्मण इदं रूपम्। स्तुत्यम्। तत् प्रशस्यम् उक्थ्यं च हितं च स्तोतृभ्यः हे देवासः! सुप्रवाचनं[17] [18]सुष्ठु प्रवाचनार्हम्[18]। प्रख्यापनार्हमित्यर्थः[19]। परोऽर्धर्चो भिन्नं वाक्यम्। ऋतम् अर्षन्ति 'ऋतम्' (निघ १,१२) इत्युदकनाम। अर्षन्तीत्यपि ऋषी गतावित्यस्य चान्तर्णीतण्यर्थस्य व्यत्ययेनायं शप्। अर्तेर्वान्तर्णीतण्यर्थस्य लेटीदं रूपम्। उदकं[10] गमयन्ति वहन्तीत्यर्थः। सिन्धवः नद्यः। अथवा ऋतशब्दोऽत्र यज्ञवचनः आदित्यवचनो वा। सिन्धवो रश्मय उच्यन्ते। यज्ञमादित्यं वा प्रति रश्मयो गच्छन्तीत्यर्थः। सत्यम् ततान सूर्यः सूर्योऽपि सत्यम् अविसंवादि [20]स्वं ज्योतिस्त्रिष्वपि[20] लोकेषु विस्तारयति। वित्तम् ॥ १२ ॥

**वेङ्कट०** नवतरम् उक्थार्हम् तत् स्तोत्रं [21]भवत्सु निहितं[21] देवाः! शोभनप्रवाचनम्[22]। उदकम्

---

१. ते वि लपं. २. °लोके तस्य वि[२]. ३. अन्वग° वि[१,२] ल लपं. ४. हतेषु कु. ५. भक्षितुम् वि[१,२] ल लप. ६. °रु[द्]धं वि[२] अ[२]. ७. हत्वा वि[२] अ[२]. ८-८. तरं वि[२] अ[२]; तरन्तम् वि[१,२] अ[१] ल लपं. ९. मृगम् कु. १०. नास्ति कु. ११. °ध्याहार्यः ति. १२. तत् अन्यैः मूको. १३. नास्ति मूको. १४-१४. सुप्रवचनार्हं सुष्ठु वाचनार्हं अ. १५. °न्यथार्थयोजना अ. १६. नव्यते: अ ति. १७. सुप्रवचनार्हं अ ति. १८-१८. नास्ति अ ति. १९. °ख्यापनार्हं प्रख्यापनार्थमि° अ. २०-२०. स्वज्यो° अ ति. २१-२१. भवत्सन्निहि° लपं. २२. °प्रवच° कु.

गमयन्ति नद्यः भवद्भिः प्रहिताः[1]। सूर्यः च तेजोभिः सत्यम् विस्तारयति ॥ १२ ॥

**मुद्गल०** हे देवासः! देवाः! नव्यम् नवतरम् उक्थ्यम् प्रशस्यं स्तुत्यर्हम् सुप्रवाचनम् सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवंभूतम् तत् भवदीयं बलम् हितम् युष्मासु निहितम्। अतो युष्मदीयेन बलेन सिन्धवः स्यन्दनशीला नद्यः ऋतम् उदकम् अर्षन्ति आलस्यराहित्येन सर्वदा प्रेरयन्ति। अशोष्याः सत्यः प्रवहन्तीत्यर्थः। तथा सूर्यः सत्यम् सर्वदा विद्यमानं स्वकीयं तेजः ततान आतनोति विस्तारयति। अन्यत् समानम् ॥ १२ ॥

अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यम्।
स नः सत्तो मनुष्वदा देवान् यक्षि विदुष्टरो वित्तं मे अस्य रोदसी ॥ १३ ॥

अग्ने। तव। त्यत्। उक्थ्यम्। देवेषु। अस्ति। आप्यम्।
सः। नः। सत्तः। मनुष्वत्। आ। देवान्। यक्षि। विदुःऽतरः। वित्तम्। मे। अस्य। रोदसी इति ॥ १३ ॥

**स्कन्द०** तच्छब्दसमानार्थत्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यदिदमस्माभिः[2] कर्तुं प्रक्रान्तम् हे अग्ने! तव त्यत् तत् उक्थ्यम् स्तोत्रम् देवेषु निर्धारणे एषा सप्तमी। देवानां मध्ये। अस्ति आप्यम् अस्ति च ज्ञातित्वं तवास्माभिः सह। ज्ञातिश्च त्वमस्माकमित्यर्थः। सर्वयजमानानां हि ज्ञातिभूतोऽग्निः। तद्धिरण्यस्तूपेनोक्तम्—'आपिः पिता प्रमतिः सोम्यानाम्' (ऋ १,३१,१६) इति। य ईदृशोऽसि, सः नः तादर्थ्ये एषा चतुर्थी। अस्माकमर्थाय। सत्तः होतृत्वेन निषण्णः। होता भूत्वेत्यर्थः। कथम्। मनुष्वत् मनुष्यवत्। आ मर्यादायामाकारः। मर्यादया देवान् यक्षि यज। विदुष्टरः [3]अतिशयेन विद्वान्। किम्। सामर्थ्यात् यष्टॄन् वाऽस्माकं वा भक्तताम्। वित्तम्[3] ॥ १३ ॥

**वेङ्कट०** अग्ने! तव एतत् प्रशस्यम् देवेषु ज्ञातेयम् अस्ति, सः त्वम् अस्माकं मनुष्यवद् वेद्यां निषण्णः देवान्[4] यज विद्वत्तरः॥ १३ ॥

**मुद्गल०** हे अग्ने! तव उक्थ्यम् प्रशस्यम्[5] त्यत् श्रुतिषु प्रसिद्धम् आप्यम् आपिर्बन्धुः, तस्य भावः। बान्धवम् देवेषु दानादिगुणयुक्तेषु इन्द्रादिषु अस्ति विद्यते। तस्मात् सः तादृशः विदुष्टरः विद्वत्तरः त्वम् नः अस्माकं यज्ञे सत्तः निषण्णः सन् देवान् तान् इन्द्रादीन् आ शास्त्रमर्यादया यक्षि यज हविर्भिः पूजय। तत्र दृष्टान्तः। मनुष्वत् यथा मनूनां यज्ञे तद्वत्। अन्यत् पूर्ववत् ॥ १३ ॥

सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः।
अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ॥ १४ ॥

सत्तः। होता। मनुष्वत्। आ। देवान्। अच्छ। विदुःऽतरः।
अग्निः। हव्या। सुसूदति। देवः। देवेषु। मेधिरः। वित्तम्। मे। अस्य। रोदसी इति ॥ १४ ॥

---

१. °हितः कु. २. यदस्मा° ति. ३-३. नास्ति अ. ४. °वान् यष्टुं देवान् वि[2] अ[2]. ५. नास्ति मूको.

**स्कन्द०** सत्तः[1] होता मनुष्वत् मनुष्यवद्धोतृत्वेन निषण्णः। आ मर्यादया देवान् अच्छ आप्तुम्। यष्टुमित्यर्थः। विदुष्टरः[2] अग्निः हव्या हवींषि सुसूदति संस्करोति। वेदः देवेषु देवानां मध्ये मेधिरः यज्ञवान्। यज्ञकारीत्यर्थः। वित्तम् ॥ १४ ॥

**वेङ्कट०** निषण्णः होता [2]वेद्याम्। मनुष्वत्[2] विद्वत्तरः अग्निः हव्यानि आदाय देवान् प्रति प्रेरयति देवः देवेषु यज्ञियः ॥ १४ ॥

**मुद्गल०** मनुष्वत् मनोरिव अस्माकं यज्ञे सत्तः निषण्णः होता देवानामाह्वाता विदुष्टरः विद्वत्तरः देवः दानादिगुणयुक्तः देवेषु सर्वेषु इन्द्रादिषु मध्ये मेधिरः मेधावी एवंभूतः अग्निः तान् देवान् अच्छ आभिमुख्येन हव्या हव्यानि अस्मदीयानि हवींषि। मर्यादायाम् आकारः। शास्त्रमर्यादया यथाशास्त्रम् सुसूदति प्रेरयति। अन्यत् समानम् ॥ १४ ॥

ब्रह्मा॑ कृणोति॒ वरु॑णो गातु॒विदं॒ तमी॑महे ।
व्यू॑र्णोति हृ॒दा म॒तिं नव्यो॑ जायतामृ॒तं वि॒त्तं मे॑ अ॒स्य रोद॑सी ॥ १५ ॥

ब्रह्म॑। कृ॒णोति॒। वरु॑णः। गा॒तु॒ऽविद॑म्। तम्। ई॒म॒हे॒।
वि। ऊ॒र्णो॒ति॒। हृ॒दा। म॒तिम्। नव्यः॑। जा॒य॒ता॒म्। ऋ॒तम्। वि॒त्तम्। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥१५॥

**स्कन्द०** तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। यः ब्रह्म स्तुतिलक्षणम् कृणोति[3] करोति[4]। करोतिरन्तर्णीतण्यर्थः। कारयति कामान्[5] स्तोतृभिरात्मानं स्तावयतीत्यर्थः। कः। वरुणः गातुविदम् गमनस्य वेदितारम्। यज्ञान् प्रति गन्तुं ज्ञातारमित्यर्थः। तम् ईमहे याचामहे। किम्। उच्यते। वि ऊर्णोति लोडर्थेऽयं लट्। प्रकाशयतु। हृदा षष्ठ्यर्थे एषा तृतीया। अस्मद्धृदयस्य। मतिम् ज्ञानम्। मम मनसो ज्ञानमुत्पादयत्वित्यर्थः[5]। नव्यः स्तुत्यश्च जायताम्। क। ऋतम् सप्तम्यर्थे द्वितीया[3]। ऋते यज्ञे मदीये। अथवा तृतीयपादः[6] प्रथमपादानन्तरं योजयितव्यः। य[3] ब्रह्म कृणोति वरुणः यश्च प्रकाशादिकरणेन सर्वप्राणिनां व्यूर्णोति हृदयस्य मतिं घटादिविषयं ज्ञानं तं वयमीमहे। नव्यो[7] जायताम् ऋते अस्मदीये इति। वित्तम् ॥ १५ ॥

**वेङ्कट०** स्तोतृभ्यः परिवृढं [8]कर्म [9]वरुणः करोति[9]। मार्गस्य लम्भयितारम् तम् वयम् अभियाचामहे कूपाद् उत्तरणम्[10]। [11]स हृदयेनैव[11] सुमतिं स्तोतृभ्यः प्रकाशयति। सत्कृत्यः[12] सन् अधुना अस्माकम् अस्मिन् कूपे पूर्णम् उदकं जनयतु ॥ १५ ॥

**मुद्गल०** यः वरुणः अनिष्टस्य निवारयिता देवः ब्रह्म परिवृढं तद्रक्षणरूपं कर्म कृणोति करोति तम् तादृशम् गातुविदम् गातोर्मार्गस्य दुःखानां निवारकस्य लम्भयितारं वरुणम् ईमहे अभिमतफलं याचामहे। तस्मै[13] वरुणाय अयम् अस्मदीयः स्तोता हृदा हृदयेन मतिम् मननीयां

---

१. नास्ति अ. २. देवान् यष्टु वेद्या मनुष्यवत् वि[1] अ[2]. ३. नास्ति ति. ४. नास्ति अ कु.
५. पादयती ति. ६. °तीयः पाद ति. ७. नवो ति. ८. परिवृहम् ल; परिप्रकणम् वि[1] अ[2].
९-९. वक्ष्यमाणः करोनि यज्ञं प्रति वि[1] अ[2]. १० °णार्थम् लपं; °रणां वि[1]. ११-११. सुहृदये° वि[1] अ[2].
१२. संस्तुभ्यः (?त्यः) अ[2] वि[1]; सत्कृतः कु. १३. अस्म मै[1].

स्तुतिम् वि ऊर्णोति विवृणोति प्रकाशयति उच्चारयतीत्यर्थः । सोऽयम् नव्यः स्तुत्यो वरुणोऽस्माकम् ऋतम् जायताम् सत्यभूतोऽस्तु ॥ १५ ॥

इति प्रथमाष्टके सप्तमाध्याये द्वाविंशो वर्गः ॥

असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः ।
न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥ १६ ॥

असौ । यः । पन्थाः । आदित्यः । दिवि । प्रऽवाच्यम् । कृतः ।
न । सः । देवाः । अतिऽक्रमे । तम् । मर्तासः । न । पश्यथ । वित्तम् । मे । अस्य । रोदसी इति ॥ १६ ॥

**स्कन्द०** [1]पन्थाः इति पततेर्गत्यर्थस्य† [1] गन्तृवचनो न मार्गशब्दपर्यायः । अन्तर्णीतमत्वर्थो वा । असौ यः उदयास्तमयलक्षितेन मार्गेण गन्ता तद्वान् वा आदित्यः प्रवाच्यम् । व्यत्ययेनात्र नपुंसकता प्रकर्षेण स्तुतिवचनार्हः । दिवि प्रकाशकारणार्थम् कृतः स्थापितः । केन । सामर्थ्याद्युष्माभिर्वा[2] देवैर्वा[3] विधात्रा वा । न सः हे देवाः! [4]अतिक्रमे कृत्यार्थेऽयं केन्† प्रत्ययः[4] । अतिक्रमयितव्यः । [6]प्रथमं स्तोतव्य इत्यर्थः । अथवा पन्था इति पथिशब्दो मार्गवचनः एव । आदित्यशब्दस्तु आदित्यस्याऽयम् आदित्य इति इदमर्थे ण्यप्रत्ययो द्रष्टव्यः । एवमर्थयोजना । असौ यः पन्था आदित्यस्य स्वभूतः प्रकर्षेण स्तुतिवचनार्हः कृतः[4] । केन । सामर्थ्यादादित्येनैव भवद्भिर्वा देवैर्विधात्रा वा । न स हे देवाः अतिक्रमयितव्यः[5] । केन । सामर्थ्यादादित्येनैव । तमादित्यो नातिक्रामतीत्यर्थः । तम् आदित्यं तत्पथं वा हे मर्तासः! मनुष्याः! न पश्यथ न जानीथ । अहं सम्यङ् [6]जानामि न यूयमित्यर्थः[6] । वित्तम् ॥ १६ ॥

**वेङ्कट०** सर्वेषां स्तोत्रार्थम् यः अयम् आदित्याख्यः पन्थाः दिवि कृतः । सः देवाः मनुष्यैः क्षुद्रैः अतिक्रमितुं[7] न शक्यते । तम् इमं मनुष्याः! न पश्यथ[8] अभ्युदयावहम्[9] ॥ १६ ॥

**मुद्गल०** पन्थाः सततगामी यः असौ आदित्यः दिवि द्युलोके प्रवाच्यम् प्रकर्षेण वचनं यथा भवति तथा कृतः निर्मितः । यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमान इत्यर्थः । हे देवाः! सः यमादित्यः युष्माभिरपि न अतिक्रमे अतिक्रमितुं न शक्यः । युष्मज्जीवनस्य तदायत्तत्वात् । सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते । कालेषु च यागाः क्रियन्ते । यागेषु च सत्सु भवतां जीवनम् । अतो युष्माभिरपि असौ नातिक्रमितव्यः । एवं च सति हे मर्तासः! पापकृतो मनुष्याः! तम् महानुभावं सूर्यम् न पश्यथ न जानीथ । एतच्च कूपे पातयित्वा निर्गतौ एकतद्वितौ प्रति निन्दनम् । अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां जानीथ इति ॥ १६ ॥

त्रितः कूपेऽवहितो देवान् हवत ऊतये ।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥ १७ ॥

---

१-१. नास्ति अ. † पतेर्गत्य° ति. २. °र्थ्याद् भवद्भिर्वा ति. ३. देवैः ति ४-४. नास्ति ति. † कन् अ कु. ५. क्रामयित° अ. ६-६. न जानामीत्यर्थः अ कु. ७. क्रमितुम् वि[1] अ[1]. ८. पश्यन्ति कु. ९. °वहम् पश्यामि वि[1] अ[1].

त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये ।
तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तम् । मे । अस्य । रोदसी इति ॥

**स्कन्द०** त्रितः नामर्षिः कूपे अवहितः अधो निहितः । पतित इत्यर्थः । देवान् हवते ऊतये भूतेऽत्र लट् द्रष्टव्यः । आहूतवान् । यदि कुत्सस्येदमार्षं ततोऽविरुद्ध एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । अथ तत् त्रितस्येदमार्षम्, तत आत्मन एव[1] परोक्षरूपेण प्रथमपुरुषेण निर्देश इति व्याख्यातव्यम् । अहं त्रितनामा[2] देवानाहूतवानित्यर्थः । किमर्थम् । ऊतये अस्मिन् मानसे यज्ञे सोमेन तर्पणाय पालनाय वाऽऽत्मनः । तदाह्वानं श्रुतवान् बृहस्पतिः कृण्वन्[1] हेतावयं शतृप्रत्ययो द्रष्टव्यः । प्रयोजनस्य हेतुत्वेन विवक्षा । करणेन हेतुना । कर्तुमित्यर्थः । [3]किम् । सामर्थ्याद्रक्षणं वोत्तारणं वा । क्रियासामान्यत्वाद्वा करोतिरेव[3] रक्षणार्थ उत्तारणार्थो वा[1] । रक्षितुमुत्तारयितुं वेत्यर्थः । कुतः । अंहूरणात् अंहुशब्दः अंहश्शब्दपर्यायस्तद्वान् अंहुरः । कः[1] पुनरसौ । यदि रक्षणमत्र विवक्षितं ततः पापकर्मकारित्वाद् वृकः[1] । अथोत्तरणं ततः उद्वेगकरैस्तृणादिभिरुपेतत्वात्कूपः[4] । अंहुर एवांहूरणः । स्वार्थिको नशब्दः ताद्धितो [5]दीर्घस्तु छान्दसत्वात्[5] । पापकर्मकारिणो वृकाद् उद्वेगकरतृणाद्युपेताद् वा कूपादित्यर्थः । उरु क्रियाविशेषणमेतत् । विस्तीर्णम् । रक्षितुमुत्तारयितुं वा चिरमित्यर्थः । वित्तम् ॥ १७ ॥

**वेङ्कट०** [6]यदा अस्य[6] सूक्तस्य कुत्स एव[7] द्रष्टा इति दर्शनम् तदानीमियं योजना पुरा । अहम् इव त्रितः कूपे पतितः सन्[8] देवान् हवते स्म रक्षणाय तदानीं तस्य वचनम् बृहस्पतिः एव शुश्राव, तस्य आह्वानात्? तस्य[10] विस्तीर्णं गमनमार्गं कृण्वन्[10] ॥ १७ ॥

**मुद्गल०** कूपे अवहितः पातितः त्रितः एतत्संज्ञक ऋषिः ऊतये रक्षणाय देवान् हवते स्तुतिभिराकारयति । यदेतत् त्रितस्याह्वानम् । बृहस्पतिः बृहतां महतां देवानां रक्षक एतत्संज्ञको देवः तत् आह्वानम् शुश्राव श्रुतवान् । किं कुर्वन् । अंहूरणात् अंहसः पापरूपादस्मात् कूपपातादुन्नीय उरु विस्तीर्णं शोभनम् कृण्वन् कुर्वन् ॥ १७ ॥

**अरुणो मा सकृद् वृकः पथा यन्तं ददर्श हि ।**
**उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥ १८ ॥**

अरुणः । मा । सकृत् । वृकः । पथा । यन्तम् । ददर्श । हि ।
उत् । जिहीते । निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी । वित्तम् । मे । अस्य । रोदसी इति ॥ १८ ॥

**स्कन्द०** अरुणः आरक्तवर्णः सकृत् वृकः पथा स्वगृहगमनमार्गेण यन्तं गृहं प्रति गच्छन्तम् [11]मा मां[11] ददर्श दृष्टवान् । हि-शब्दस्तु पदपूरणः । उज्जिहीते निचाय्य ओहाङ् गतौ । भूते चात्र लट् द्रष्टव्यः । निचायतिरपि दर्शनार्थः प्रसिद्धः । दृष्ट्वा चोर्ध्वमगमत् । उदित इत्यर्थः ।

---

१. नास्ति ति.　२. तत् त्रि° ति.　३-३. नास्ति अ　४. °पेतत्वाद्वा कूपः ति.
५-५. दीर्घत्वात् ति.　६-६. त्रितास्या वि[1] अ[1].　७. एषः वि[2].　८. नास्ति वि[1] अ[2]; सः वि[1] लपं.
९. स्वे° वि[1] अ[1].　१०. कुर्वन् अ[1]; °ण्वन् कृपा उत्तरणा पृच्छ वि[1] अ[2].　११-११. नास्ति मूको.

कथम्। तष्टेव पृष्टयामयी पृष्टिरिति पृष्टमुच्यते। तस्यामयं रोगः। तद्वान् पृष्ठ्यामयी। यथा[1] तक्षा नित्यकुटिलत्वादुपजातपृष्ठवेदनः तदपगमनार्थमुत्तिष्ठेत् तद्वदित्यर्थः। वित्तम् ॥ १८ ॥

**वेङ्कट०** तृषितं मां मार्गेण गच्छन्तं पृष्ठतः स्थितः कश्चित् अरुणः[2] वृकः ददर्श हि। दृष्ट्वा च[3] गमनार्थम्[4] उत् जिहीते। यथा तष्टा अनवरततक्षणात् जातपृष्ठवेदनः सन् उत्तिष्ठति तद्वद् इति[5]। यास्कपक्षे त्वुदितश्चन्द्रमा इति मन्त्रार्थः। तदुक्तम् 'वृकश्चन्द्रमा भवति[6] विवृतज्योतिष्को वा [7]विकृतज्योतिष्को वा[7] विक्रान्तज्योतिष्को वा। …अरुण आरोचनो[8] मासकृत्[9] मासानां चार्धमासानां च कर्ता भवति चन्द्रमाः। वृकः पथा यन्तं ददर्श नक्षत्रगणम्। अभिजिहीते निचाय्य येन-येन योक्ष्यमाणो भवति चन्द्रमाः। तक्ष्णुवन् इव पृष्ठरोगी' ( या ५, २०-२१ ) इति ॥ १८ ॥

**मुद्गल०** अरुणः अरुणवर्णः लोहितवर्णः वृकः अरण्यश्वा सकृत्[10] एकवारम् पथा यन्तम् मार्गेण गच्छन्तम्[11] मा माम् ददर्श हि दृष्टवान्। हि इति[8] पूरणः। निचाय्य दृष्ट्वा च मां जिघृक्षुः[12] सन् उज्जिहीते उद्गच्छति स्म। दृष्टान्तः। तष्टा इव पृष्टयामयी। यथा तक्षणजनितपृष्ठक्लेशः तष्टा वर्धकी तदपनोदनाय ऊर्ध्वाभिमुखो भवति तद्वत्। हे द्यावापृथिव्यौ! मदीयमिमं वृत्तान्तं जानीतम्। अन्यत् पूर्ववत् ॥ १८ ॥

एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १९ ॥

एना। आङ्गूषेण। वयम्। इन्द्रऽवन्तः। अभि। स्याम। वृजने। सर्वऽवीराः।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥१९॥

**स्कन्द०** एना-शब्दो अनेनेत्यस्यार्थे। अङ्गशब्दः[13] शरीरावयववचनः। उष दाहे। अङ्गान्योषति दहतीति अङ्गोषोऽन्धकूपः। स हि सम्बाधत्वात् पीडयत्यङ्गानि। [14]अङ्गोष एवाऽऽङ्गूषः[14]। छान्दसत्वादोकारस्य ऊकारः। अङ्गूषे भव आङ्गूषः सोमः। अथवा आघोष्यतेऽसाविति आघोषः स्तोमः। आघोष एवाङ्गूषः। छान्दसौ वर्णागमव्यत्ययौ। एना आङ्गूषेण इति च उभयत्र हेतौ तृतीया। अनेन कूपे प्रकल्पितेन सोमेन स्तोमेन वा हेतुना। वयम् इन्द्रवन्तः। इन्द्रः सहायभूतो येषां ते इन्द्रवन्तः। इन्द्रेण अनुगृह्यमाणा इत्यर्थः। अभि स्याम अभिभवेम[15] शत्रूनित्याशास्महे। क्व। वृजने। वृज्यते दोषैरिति वृजनः अविगुणो यज्ञः, तत्र। अथवा वृजनशब्दो बलनाम ( तु. निघ २,९ )। सामर्थ्यादन्तर्णीतमत्वर्थः। सेनादिलक्षणेन बलेन तद्वति। सङ्ग्रामे इत्यर्थः। [16]सर्ववीराः सर्वैः वीरैः[16] पुत्रैः पौत्रैश्चोपेताः। तत् नः मित्रः इत्याद्युक्तार्थम् (ऋ १,९४,१६ द्र.) ॥१९॥

**वेङ्कट०** अनेन स्तोत्रेण वयम् इन्द्रवन्तः सन्तः अभिभवेम युद्धे शत्रून् अखण्डितास्मदीयवीराः। अत्र वदन्ति —

---

१. तथा ति. २. अरुणवर्णे कु; अरुणे वि[3] अ[1]. ३. नास्ति वि[2], ४. आगमना° वि[3] अ[2]. ५. नास्ति कु. ६. इति वि[2]. ७-७. नास्ति वि[2]. ८. आरोचमानः मूको. ९. नास्ति मूको. १० कृपाद मं[2]. ११. आगच्छन्तं मूको. १२. दिदृक्षुः मूको. १३ आङ्गु° ति. १४-१४. अंगोषं वा अगूषःति १५. अभिषवेम ति. १६-६१. नास्ति ति.

'त्रितं गास्त्वनुगच्छन्तं[1] क्रूराः सालावृकीसुताः ।
[2]कूपे प्रक्षिप्य †गाः सर्वाः† तत एवापजह्रिरे[2] ॥

[3]स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः† ।
‡देवांश्चावाहयत्सर्वांस्तच्छुश्राव‡ बृहस्पतिः[3] ॥

बृहस्पतिप्रचोदिता [4]विश्वे देवगणास्त्रयः[4] ।
जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुस्सह'[5] ॥

'कुत्सश्च कूपे पतितस्तेनैवेहानुधावति ।
सूक्तेन त्रितदृष्टेन स्वयं वा दृष्टवानिदम् ॥

त्रित एवाथवा द्रष्टा ननु[6] कुत्सस्य दर्शने ।
विरुध्यतेऽरुणो मेति माशब्दस्तत्र का गतिः ॥

उच्यते पदकारस्य त्रितस्यार्षमिदं मतम् ।
[7]अन्यथाऽपि पदच्छेदस्तत्र[7] यास्केन[8] दर्शितः' ॥ इति[9] ॥

**मुद्गल०** आङ्गूषेण **आघोषणयोग्येन** एना **एतेन स्तोत्रेण हेतुभूतेन** इन्द्रवन्तः **अनुग्राहकेणेन्द्रेण युक्ताः** सर्ववीराः **सर्वैर्वीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तः** वयम् वृजने **सङ्ग्रामे** अभि स्याम **शत्रून् अभिभवेम ।** तत् इदम् **अस्मदीयं वचनं** मित्रादयः ममहन्ताम् **पूजयन्तु । पालयन्त्वित्यर्थः । उत देवतासमुच्चये ॥ १९ ॥**

**इति प्रथमाष्टके सप्तमाध्याये त्रयोविंशो वर्गः ॥**

**इति प्रथमे मण्डले पञ्चदशोऽनुवाकः ॥**

## [ १०६ ]

**इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमू॒तये॒ मारु॑तं॒ शर्धो॒ अदि॑तिं हवामहे ।**
**रथं॒ न दु॒र्गाद् व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ १ ॥**

इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । ऊ॒तये॑ । मारु॑तम् । शर्धः॑ । अदि॑तिम् । ह॒वा॒म॒हे॒ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥१॥

**स्कन्द०** इन्द्रम् **च** मित्रम् **च** वरुणम् **च** अग्निम् **च** ऊतये **तर्पणाय पालनाय वाऽऽत्मनः** मारुतम् **च** शर्धः **सेनालक्षणं बलम्** अदितिम् **च** हवामहे [10]**आह्वयामः । किञ्च** रथम् न[10] दुर्गात्[11] **यथा रथी दुर्गात् प्रदेशाद्रथं रक्षति एवं** हे वसवः! सुदानवः! **शोभनदातारः! शोभनदानाः![11] वा**

१. गत्वानुगच्छन्तं वि[३] अ[२]. २-२. नास्ति वि[३] अ[१]. †-† नास्ति त्रि[२] अ[१]. ३-३. नास्ति वि[३] अ[१]. † °न्त्रवन्म° कु. ‡-‡ °श्चाहूतवान्स° वि[१,२] अ[१] कु ल; °श्च हूत° ल[२]. ४-४. विश्वेदेव° त्रि[३]. ५. तु. बृहे ३,१३२;१३३;१३६. ६. न तु कु. ७-७. था द्विपद° त्रि[३]. ८. तु. या ५,२१. ९. नास्ति कु. १०-१०. नास्ति ति. ११. नास्ति अ.

विश्वस्मात् सर्वस्मात् अंहसः पापात् [1]नः अस्मान्[1] निः पिपर्तन पॄ पालनपूरणयोः। निश्चयेन पालयत रक्षत। यथा वयं केनचिदपि पापेन न सम्बध्यामहे तथा कुरुतेत्यर्थः ॥ १ ॥

वेङ्कट० कुत्सः। इन्द्रादीन् मारुतम् च वेगं[2] रक्षणार्थं हवामहे[3]। एषु चाहूयमानेषु[4] यूयं च वसवः! रथम् इव सारथयः[5] दुर्गात्, अस्मान् सर्वस्मात् पापात् निः पारयत ॥ १ ॥

मुद्गल० षोडशेऽनुवाके दश सूक्तानि। तत्र 'इन्द्रम्' इति सप्तर्चं प्रथमं सूक्तम्। अनुवर्तमानत्वात् कुत्स ऋषिः[6]। त्रितस्तु वाविशिष्टत्वात् तत्रैव विकल्पितः। तेनेह[7] नानुवर्तते। अन्त्या त्रिष्टुप्। शिष्टा जगत्यः। विश्वे देवाः देवता[8] ॥

ऊतये रक्षणाय वयमिन्द्रादीन् मारुतम् शर्धः मरुत्समूहरूपं बलं च हवामहे आह्वयामहे। वसवः! निवासयितारः! सुदानवः! शोभनदाना इन्द्रादयः! विश्वस्मात् सर्वस्मात् अंहसः पापात् नः अस्मान् निः पिपर्तन निर्गमय्य पालयत। दृष्टान्तः। रथम् न दुर्गात् गन्तुमशक्यात् निम्नोन्नतात् स्थानात् सारथयो यथा रथं पालयन्ति तद्वत् ॥ १ ॥

**त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये भू॒त दे॑वा वृत्र॒तूर्ये॑षु श॒म्भुवः॑।**
**रथं॒ न दु॒र्गाद् व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ २ ॥**

ते। आ॒दि॒त्याः। आ। ग॒त। स॒र्वऽता॑तये। भू॒त। दे॒वाः। वृ॒त्र॒ऽतूर्ये॑षु। श॒म्ऽभुवः॑।
रथ॑म्। न। दुः॒ऽगात्। व॒स॒वः॒। सु॒ऽदा॒न॒वः॒। विश्व॑स्मात्। नः॒। अंह॑सः। निः। पि॒प॒र्त॒न॒ ॥ २ ॥

स्कन्द० ते आदित्याः[1] तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः[2]। यान् परया भक्त्या आह्वयामि यूयं ते हे आदित्याः! आ गत आगच्छत। किमर्थम्। सर्वतातये 'सर्वदेवात्तातिल्' (पा ४,४,१४२) इत्येवं स्वार्थे तातिल्प्रत्ययः। सर्वस्मै अस्मद्यागाय। अथवा तनोतेस्तातिशब्दो यागसन्ततिवचनः। सर्वस्यै यागसन्तत्यै। सर्वानस्मद्यागान् अविघ्नेन सम्पादयितुमित्यर्थः। किञ्च भूत भवत अस्माकं हे देवाः! वृत्रतूर्येषु वृत्रतूर्यशब्दः सङ्ग्रामनाम (तु. निघ २,१७)। सङ्ग्रामेषु शंभुवः 'शम्' (निघ ३,६) इति सुखनाम। भवतिरप्यत्र[3] सामर्थ्यादन्तर्णीतण्यर्थः। सुखस्य भावयितारः। शत्रुजयलक्षणं सुखम्[10] अस्मान् प्रापयतेत्यर्थः। किञ्च रथं न ॥ २ ॥

वेङ्कट० ते यूयम् आदित्याः! आ गच्छत यज्ञाय[11]। भवत च देवाः! सङ्ग्रामेषु सुखस्य भावयितारः ॥ २ ॥

मुद्गल० हे आदित्याः! अदितेः पुत्राः! देवाः! ते यूयम् सर्वतातये सर्वैर्वीरपुरुषैः तातये तताय विस्तारिताय युद्धाय। युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः। आ गत आगच्छत। अपि च वृत्रतूर्येषु सङ्ग्रामेषु शंभुवः सुखस्य भावयितारः भूत भवत ॥ २ ॥

**अव॑न्तु नः पि॒तरः॑ सुप्रवाच॒ना उ॒त दे॒वी दे॒वपु॑त्रे ऋता॒वृधा॑।**
**रथं॒ न दु॒र्गाद् व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ३ ॥**

---

१-१. नास्ति मूको. २. नास्ति वि[1] अ[2]. ३. क्षाप(? ह्वया)महे वि[1] अ[1]. ४. चाह्वयमा° वि[1]. ५. °यः शोभनदातारः वि[1] अ[2]. ६. नास्ति मै[2]. ७. तेन मूको. ८. °हार्यः अ. ९. °तिरत्र ति. १०. नास्ति ति. ११. यज्ञ(ज्ञा?)य वि[1] अ[2]; वज्राय वि[2,3] अ[1] कु ल लप.

अवन्तु । नः । पितरः । सुऽप्रवाचनाः । उत । देवी इति । देवपुत्रे इति देवऽपुत्रे । ऋतऽवृधा ।
रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ३ ॥

**स्कन्द०** अवन्तु पालयन्तु नः अस्मान् पितरः । कीदृशाः । सुप्रवाचनाः [1]प्रोच्यन्ते देवतागुणाः[1] अनेनेति प्रवाचनं स्तोत्रम् । छान्दसं दीर्घत्वम् । शोभनं[2] प्रवाचनं येषां ते सुप्रवाचनाः । सुस्तुतय इत्यर्थः । न च केवलाः पितरः । किं तर्हि । उत देवी देव्यावपि द्यावापृथिव्यौ । कीदृश्यौ । देवपुत्रे देवाः पुत्रभूता ययोस्ते देवपुत्रे । देवानां मातृभूते इत्यर्थः । ऋतावृधा सत्यस्य यज्ञस्य उदकस्य वा स्वेनस्वेन व्यापारेण वर्धयित्र्यौ । किञ्च रथं न इत्याद्युक्तार्थम् ॥ ३ ॥

**वेङ्कट०** रक्षन्तु अस्मान् पितरः सुस्तोत्राः । अपि च देव्यौ द्यावापृथिव्यौ[3] यज्ञस्य वर्धयित्र्यौ ययोः [4]सर्वे देवाः[4] पुत्राः [5]ते देवपुत्रे[5] ॥ ३ ॥

**मुद्गल०** नः अस्मान् पितरः अग्निष्वात्तादयः अवन्तु रक्षन्तु । कीदृशाः । सुप्रवाचनाः सुखेन प्रवक्तुं स्तोतुं शक्याः । उत अपि च देवपुत्रे देवाः सर्वे पुत्रस्थानीया ययोस्ते ऋतावृधा ऋतस्य सत्यस्य वर्धयित्र्यौ देवी देवनादिगुणयुक्ते द्यावापृथिव्यौ अस्मान् रक्षताम् । अन्यत् समानम् ॥ ३ ॥

**नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ४ ॥**

नराशंसम् । वाजिनम् । वाजयन् । इह । क्षयत्ऽवीरम् । पूषणम् । सुम्नैः । ईमहे ।
रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ४ ॥

**स्कन्द०** नराशंसम्[6] नराशंसोऽग्निर्यज्ञो वा तम्, वाजिनम् हविर्लक्षणेन स्तोतृभ्यो देयेन वा अन्नेन तद्वन्तम् वाजयन् 'वाजयति' ( निघ ३,१४ ) इत्यर्चतिकर्मा । बहुवचनस्य स्थाने एकवचनम् । स्तुवन्तः इह कर्मणि । न च केवलं नराशंसम् । किं तर्हि । क्षयद्वीरं पूषणम् क्षि निवासगत्योः । वीराणां निवासयिता क्षयद्वीरः । षष्ठीसमासे छान्दसः पूर्वनिपातः क्षयच्छब्दस्य । पूषा ह्यस्तं गच्छन् सर्ववीरान् स्वेस्वे स्थाने निवासयति तेनासौ क्षयद्वीर इत्युच्यते । तं क्षयद्वीरं पूषणं सुम्नैः 'सुम्नम्' ( निघ ३,६ ) इति सुखनाम । सुखैर्हेतुभिः स्तोत्रैर्वा । ईमहे याचामहे । किम् । सामर्थ्यादभिप्रेतम् । अथवा सुम्नैरित्येषैव[7] द्वितीयार्थे तृतीया । सुखानि याचामह इति । किञ्च रथम् न ॥ ४ ॥

**वेङ्कट०** नराशंसम्[8] अग्निं वयं[9] हविष्मन्तम् अर्चयन्तः अस्मिन् कर्मणि क्षपितवीरं बलिनं पूषणं च[10] ॥४॥

**मुद्गल०** नराशंसम् नरैः शंसनीयम् वाजिनम् अन्नवन्तमग्निम् वाजयन् उपवाजयन् प्रज्वलयन् इह अस्मिन् काले स्तौमीति शेषः । तथा क्षयद्वीरम् अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्ते एवंरूपम् पूषणम् पोषकं देवम् सुम्नैः सुखकरैः स्तोत्रैर्हेतुभूतैः ईमहे याचामहे अभीष्टं प्रार्थयामहे । [11]अन्यत् समानम्[11] ॥ ४ ॥

---

१-१. नास्ति अ; °न्ते देवतागणाः कु. २. नास्ति अ. ३. नास्ति वि[1]. ४-४. सर्वदेवाः वि[1] लपं. ५-५. नास्ति वि[1?2] अ[1] कु ल लपं. ६. नास्ति मूको. ७. सुम्नैरिति ति. ८. नास्ति वि[1-3] अ[2] लपं. ९. च यम् वि[3] अ[2]. १०. अतः परम् 'सुखान्युद्दिश्य याचामहे' इति वाक्यपूर्तिः द्र. (तु. वें १, १०,६;४१,८). ११-११. नास्ति मूको.

बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत् ते मनुर्हितं तदीमहे ।
रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ५ ॥

बृहस्पते । सदम् । इत् । नः । सुऽगम् । कृधि । शम् । योः । यत् । ते । मनुःऽहितम् । तत् ।
ईमहे । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥

**स्कन्द०** बृहस्पते! सदम् इत् सदमिति सदेत्यस्य पर्यायः। इच्छब्दोऽत्र एवार्थे। सदैव नः अस्माकम् सुगम् कृधि सुगमित्यपठितमपि सुखनाम द्रष्टव्यम्। 'अस्मभ्यमिन्द्र वरिवः सुगं कृधि' ( ऋ १, १०२,४ ) इति यथा। सुखं कुरु। न च केवलं सुखम्। किं तर्हि। शम् शमं च। कस्य। सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम्। योः यौतिः पृथग्भावार्थः। पृथग्भावं च। असम्बन्धं चेत्यर्थः। केन। सामर्थ्यादुत्पित्सुभिरनिष्टैः। अथवा सुखमधिगम्यत इति सुगं[1] सुलभमत्रोच्यते। शं योरित्येताभ्यां चास्य सम्बन्धः। स्वधिगमम् उत्पन्नरोगाद्युपशमम् उत्पित्स्वनिष्टासम्बन्धं[2] च नः कुर्वित्यर्थः। यत् ते तव मनुर्हितम् मनुष्यहितं च किञ्चित् तत् सर्वम् ईमहे वयम्। किञ्च रथम् न ॥ ५ ॥

**वेङ्कट०** बृहस्पते! सदा एव अस्माकं सुखं कुरु[3]। यत् तव शम् च योः च मनुष्यहितं तत् याचामहे ॥५॥

**मुद्गल०** बृहस्पते! सदम् इत् सदैव नः अस्माकम् सुगम् सुखम् कृधि कुरु। अपि च ते तव स्वभूतम् शम् शमनीयानां रोगाणाम् उपशमनम् योः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणम् मनुर्हितम् मनुना ब्रह्मणा हितं त्वय्यवस्थापितम् एवंविधं शमनं यावनं च यदस्ति तत् ईमहे याचामहे। [4]अन्यत् समानम्[4] ॥ ५ ॥

इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये ।
रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ६ ॥

इन्द्रम् । कुत्सः । वृत्रऽहनम् । शचीऽपतिम् । काटे । निऽबाळ्हः । ऋषिः । अह्वत् । ऊतये ।
रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ६ ॥

**स्कन्द०** द्वितीयपादस्थम् अह्वत् इत्याख्यातं साकाङ्क्षत्वात् प्रथमपादेऽप्यनुषक्तव्यम्। इन्द्रम् कुत्सः अह्वत् आहूतवान् कुत्सनामायमृषिः। आत्मन एवायं परोक्षरूपेण प्रतिनिर्देशः। अहं कुत्साख्य ऋषिराहूतवानित्यर्थः। कीदृशम्। वृत्रहणम् वृत्रस्य हन्तारम्। शचीपतिम् शच्याख्यायाः स्वभार्यायाः भर्तारम्। कर्मनाम वा शचीशब्दः ( तु. निघ २,१ )। सर्वयागकर्मणामधिपतिम्। न केवलं कुत्सः। किं तर्हि। काटे निबाळ्हः ऋषिः अह्वत् 'काटः' ( निघ ३,२३ ) इति कूपनाम। निबाळ्हः इति निश्शब्दः प्रकर्षे[5]। निश्शुष्कं निरुक्तमिति यथा। अतिशयेन बाध्यतेऽसाविति निबाळ्हः। कूपेऽतिसम्बाधत्वात् कूपस्यातिशयेन बाध्यमानस्त्रितो नामापर ऋषिराहूतवानित्यर्थः। किमर्थम्। ऊतये तर्पणाय पालनाय वाऽऽत्मनः। किञ्च रथम् न ॥ ६ ॥

---

१. सुखं अ. २. नास्ति वि. ३. नास्ति वि[1] अ[2]. ४-४. नास्ति मूको. ५. प्रकृष्टे वि.

**वेङ्कट०** इन्द्रम् **कूपे पतितः कूपे**[1] **निबध्यमनो वा** कुत्सः **ऋषिः कर्मपतिम् शत्रूणां हन्तारं रक्षणाय** अह्वत्[2] ॥ ६ ॥

**मुद्गल०** काटे कूपे निबाळ्हः **निपातितः** कुत्सः ऋषिः ऊतये **रक्षणाय** इन्द्रम् अह्वत् **आह्वयति स्म । कीदृशम् ।** वृत्रहणम् शत्रूणां हन्तारम् शचीपतिम् 'शची' ( निघ २,१ ) इति **कर्मनाम । सर्वेषां कर्मणां पालयितारम्** ॥ ६ ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः । ॥ ७ ॥

**स्कन्द०** देवैः **इन्द्रादिभिः सह** नः **अस्मान्** देवी अदितिः नि पातु **नियमेन रक्षतु । न च केवला । किं तर्हि ।** देवः **च सविता वा आदित्यो वा अन्यो वा कश्चित् सर्वप्राणिनाम्** त्राता **अस्मानपि** त्रायताम् अप्रयुच्छन् **युच्छ प्रमादे । अप्रमाद्यन् । महताऽऽदरेणेत्यर्थः ।** तत् नः ॥ ७ ॥

**वेङ्कट०** देवैः **सह** देवी अदितिः **अस्मान् रक्षतु,** देवः त्राता **सविता च** त्रायताम् **अप्रमाद्यन्निति**[3] ॥ ७ ॥

**मुद्गल०** देवी **दानादिगुणयुक्ता** अदितिः **देवमाता** देवैः **दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह** नः **अस्मान्** नि पातु **नितरां रक्षतु ।** देवः **दीप्यमानः** त्राता **सर्वेषां रक्षकः सविता** अप्रयुच्छन् **अप्रमाद्यन् अस्मद्रक्षणे** जागरूकः **सन्** त्रायताम् **अस्मान् पालयतु । यदनेन सूक्तेनास्माभिः प्रार्थितम्** नः **अस्मदीयम्** तत् **मित्रादयः षट् देवताः** ममहन्ताम् **पूजयन्तु** ॥ ७ ॥

**इति प्रथमाष्टके सप्तमाध्याये चतुर्विंशो वर्गः ॥**

## [ १०७ ]

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।
आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥ १ ॥

यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः । भवत । मृळयन्तः ।
आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ॥ १ ॥

**स्कन्द०** **अयं मदीयः**[4] यज्ञः **युष्माकम्** देवानाम् प्रति एति सुम्नम् **सुखं प्रति साधनतामागच्छति । इष्टैः हविर्भिः स्तुतिभिश्च सम्बन्धात् सुखकरतां प्रतिपद्यत इत्यर्थः । यत एवमतो ब्रवीमि । हे** आदित्यासः ! भवत **अस्माकम्** मृळयन्तः **प्रथमासमानाधिकरणोऽयं शतृप्रत्ययः छान्दसत्वात् । सुखयितार इत्यर्थः । अथवा भवतेति भवतिः सामर्थ्यात् प्राप्त्यर्थः । प्राप्नुत । इमं**

---

१. कूपे वा वि[2] अ[2]. २. अह्वयत् वि[2] अ[2]. ३. °द्यन् कु. ४. अस्मदीयः ति.

यज्ञम् आगच्छतेत्यर्थः[१]। किञ्च वः युष्माकम् सुमतिः शोभनानुग्रहात्मिका बुद्धिः अर्वाची अस्मदभिमुखी आ ववृत्यात् पुनःपुनरावर्तेतेत्याशास्महे। अंहोः चित् पापस्यापि। निकृष्टस्यापि यष्टुरित्यर्थः। या वरिवोवित्तरा 'वरिवः' ( निघ २, १० ) इति धननाम। विन्दतिर्लाभार्थः। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। धनस्यातिशयेन लम्भयित्री। असत् भवति। निकृष्टायाऽपि यष्ट्रे या[२] धनमतिशयेन ददातीत्यर्थः ॥ १ ॥

**वेङ्कट०** यज्ञः देवानाम् सुखम्[३] प्रति गच्छति। आदित्याः! भवत सुखयन्तोऽस्मान्[४]। युष्माकम् अस्मद्विषया सुमतिः पुनःपुनरावर्तताम्। अत्यन्तपापस्य अपि दरिद्रस्य या [५]अत्यन्तं धनस्य[५] लम्भयित्री भवति ॥ १ ॥

**मुद्गल०** 'यज्ञो देवानाम्' इति तृचं द्वितीयं सूक्तम्। कुत्स ऋषिः[६]। त्रिष्टुप् छन्दः[६]। विश्वे देवा देवता[६] ॥

अस्मदीयः यज्ञः देवानाम् इन्द्रादीनाम् सुम्नम् सुखम् प्रति एति प्राप्नोतु। अपि च हे आदित्यासः! आदित्याः! मृळयन्तः अस्मान् सुखयन्तः भवत। तथा वः युष्माकम् सुमतिः शोभना मतिः भद्राऽनुग्रहपरा बुद्धिः अर्वाची अस्मदभिमुखी आ ववृत्यात् आवर्तताम्। या मतिः अंहोः चित् दारिद्र्यं प्राप्तस्यापि पुरुषस्य वरिवोवित्तरा 'वरिवः' इति धननाम। अतिशयेन धनस्य लम्भयित्री[७] असत् भवेत्, सैषा मतिरस्मान् रक्षितुं वर्ततामित्यर्थः ॥ १ ॥

## उप॑ नो दे॒वा अव॒सा ग॑म॒न्त्वङ्गि॑रसां॒ साम॑भिः स्तू॒यमा॑नाः ।
## इन्द्र॑ इन्द्रि॒यैर्म॒रुतो॑ म॒रुद्भि॑रादि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ॥ २ ॥

उप॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । अङ्गि॑रसाम् । साम॑ऽभिः । स्तू॒यमा॑नाः ।
इन्द्रः॑ । इ॒न्द्रि॒यैः । म॒रुतः॑ । म॒रुत्ऽभिः॑ । आ॒दि॒त्यैः । नः॒ । अदि॑तिः । शर्म॑ । यं॒स॒त् ॥ २ ॥

**स्कन्द०** नः अस्मान् देवाः इन्द्रादयः अवसा पालनेन तर्पणेन वा। तर्पणार्थं पालनार्थं वेत्यर्थः। उप आ गमन्तु उपागच्छन्तु। अङ्गिरसाम् सामभिः स्तूयमानाः अङ्गिरसामिति 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' ( पा २, ४, ६५ ) इत्येवं बहुषु लुप्तप्रत्ययकमपत्यप्रत्ययान्तं द्रष्टव्यम्। पुत्रपौत्राद्यपेक्षया बहुवचनम्। सामशब्दोऽपि सामसम्बन्धात् सामसादृश्याद्वा स्तोत्रवचनः। अस्माकमङ्गिरोऽपत्यभूतानां कुत्सप्रभृतीनां स्वभूतैः सामसम्बन्धिभिः सुखकरत्वादिना सादृश्येन वा[८] सामसदृशैरेतैः स्तूयमाना इत्यर्थः। आगत्य च इन्द्रः इन्द्रियैः इन्द्रजुष्टा अत्रेन्द्रियशब्देन उच्यन्ते। ये इन्द्रस्य प्रियाः देवास्तैस्सहेन्द्र इत्यर्थः। मरुतः मरुद्भिः मरुद्भिरिति मरुत्साहचर्याद् मरुज्जुष्टा उच्यन्ते। ये मरुतां प्रियास्तैस्सह मरुत इत्यर्थः। आदित्यैः च सह नः अस्मभ्यम् अदितिः शर्म गृहं वा सुखं वा यंसत् यच्छतु ददातु ॥ २ ॥

**वेङ्कट०** उपगच्छन्तु अस्मान् देवाः रक्षणेन सह अङ्गिरसाम् सामभिः स्तूयमानाः। इन्द्रः बलैः, मरुतः च प्राणैः, आदित्यैः च अदितिः अस्मभ्यं सुखं यच्छतु ॥ २ ॥

---

१. आगते° मूको. २. सा मूको. ३. नास्ति वि[१'२] अ[१] कु ल लपं. ४. °यन्तः वि[१'२] अ[१] कु ल लपं. ५-५. अत्यन्तधनस्य वि[२] कु; °नस्य या वि[१] अ[१]. ६. नास्ति मै[२]. ७. °यित्री या मूको. ८. नास्ति मूको.

**मुद्गल०** देवाः दानादिगुणयुक्ताः सर्वे देवाः अवसा रक्षणेन युक्ताः नः अस्मान् स्तोतॄन् उप आ गमन्तु उपागच्छन्तु प्राप्नुवन्तु। कथम्भूताः। अङ्गिरसाम् एतत्संज्ञकानाम् ऋषीणां सम्बन्धिभिः सामभिः प्रगीतैः मन्त्रैः स्तूयमानाः। अपि च इन्द्रः इन्द्रियैः धननामैतत् ( तु. निघ २,१० )। स्वसम्बन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मान् आगच्छतु। तथा मरुतः सप्तगणरूपा एकोनपञ्चाशत्सङ्ख्याकाः ईदृङ् चान्यादृङ् चेत्येवमादिनामानो देवाः मरुद्भिः स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैर्वायुभिः सह अस्मान् आगच्छन्तु। अपि च अदितिः देवमाता आदित्यैः स्वपुत्रैः सह नः अस्मान् शर्म यंसत् सुखं प्रयच्छतु ॥ २ ॥

**तन्न इन्द्रस्तद् वरुणस्तदग्निस्तदर्यमा तत् सविता चनो धात्।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ३ ॥**

तत्। नः। इन्द्रः। तत्। वरुणः। तत्। अग्निः। तत्। अर्यमा। तत्। सविता। चनः। धात्।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ ३ ॥

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यद्वयं प्रार्थयामहे पुष्टिकरम् उत्कृष्टं वा तत् नः अस्मभ्यम् इन्द्रः, तत् एव वरुणः, तत् एव अग्निः, तत् एव अर्यमा, तत् एव सविता चनः 'चन इत्यन्नाम ( या ६,१६ )। 'जारयायि, अग्रिया, चनः' ( निघ ४,३ ) इत्यैकपदिके पठितम्। अन्नम् धात् ददातु। तत् नः ॥ ३ ॥

**वेङ्कट०** तत् अस्मदभिलषितम् अस्माकम् इन्द्रः प्रयच्छतु अन्नम्। एवम् इतरे चेति[1] ॥ ३ ॥

**मुद्गल०** यदस्माभिः प्रार्थ्यमानमन्नमस्ति तत् तादृशम् चनः अन्नम् नः अस्मभ्यम् इन्द्रः धात् दधातु ददातु। एवम् तत् वरुणः इत्यादावपि योज्यम्। तत् इदम् इन्द्रादिभिर्दत्तम् अस्मदीयम् अन्नं मित्रादयः ममहन्ताम् पूजयन्तु ॥ ३ ॥

इति प्रथमाष्टके सप्तमाध्याये पञ्चविंशो वर्गः ॥

## [ १०८ ]

**य इन्द्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे।**
**तेना यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ॥ १ ॥**

यः। इन्द्राग्नी इति। चित्रऽतमः। रथः। वाम्। अभि। विश्वानि। भुवनानि। चष्टे।
तेन। आ। यातम्। सऽरथम्। तस्थिऽवांसा। अथ। सोमस्य। पिबतम्। सुतस्य ॥ १ ॥

**स्कन्द०** 'द्वे ऐन्द्राग्ने'। द्वे एते सूक्ते इन्द्राग्निदेवत्ये। यः हे इन्द्राग्नी! चित्रतमः अतिशयेन पूज्यः विचित्ररूपो वा रथः वाम् युवयोः विश्वानि भुवनानि भुवनशब्दोऽत्र लोकवचनः। सर्वान्

---

१. च कु; नास्ति कपं.

लोकान् अभि चष्टे अभिपश्यति । अगतस्य दर्शनासम्भवात् दर्शनेनात्र तद्धेतुभूतं गमनं लक्ष्यते । सर्वान् लोकान् गच्छति । न क्वचिदस्य गतिः प्रतिहन्यत इत्यर्थः । अथवा भुवनशब्दोऽपि भूतवचन एव सामर्थ्याच्च यष्टृभूतेषु वर्तते नान्येषु । यागकारीणि[1] यानि भूतानि तानि सर्वाणि अभिपश्यति । सर्वेषां यज्ञेषु गच्छतीत्यर्थः । तेन आ यातम् अस्मान् प्रत्यागच्छतम् । सरथम् तस्थिवांसा समानं रथमधिष्ठितवन्तौ[2] । एकस्मिन्नेव युगपदारूढावित्यर्थः । अथ अनन्तरं च सोमस्य पिबतम् सुतस्य द्वितीयार्थे वा षष्ठी । षष्ठीश्रुतेर्वैकदेशमिति शेषः । सोममभिषुतं[3] सोमस्य वाभिषुतस्यैकदेशं स्वांशलक्षणं पिबतमित्यर्थः ॥ १ ॥

**वेङ्कट०** यः[4] इन्द्राग्नी! पूज्यतमः रथः युवयोः सर्वाणि भुवनानि अभि विचष्टे, तेन रथेन आगच्छतम् एकरथम्[5] अधितिष्ठन्तौ । अथ सोमम् पिबतम् सुतमिति[6] ॥ १ ॥

**मुद्गल०** 'य इन्द्राग्नी' इति त्रयोदशर्चं तृतीयं सूक्तम् । कुत्स ऋषिः[7] । त्रिष्टुप् छन्दः[7] । इन्द्राग्नी देवता[7] ॥

हे इन्द्राग्नी! चित्रतमः अतिशयेन चायनीयः वाम् युवयोः सम्बन्धी यः रथः विश्वानि भुवनानि भूतजातानि अभि चष्टे आभिमुख्येन पश्यति । सुवर्णमयत्वात् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगत् भासयतीत्यर्थः । तेन रथेन आ यातम् अस्मद्यज्ञम् आगच्छतम् । तत्किं पर्यायेण । नेत्याह । सरथम् समानम् एकं रथम् तस्थिवांसा युगपदेव स्थितवन्तौ युवाम् आगच्छतम् । न पर्यायेणेत्यर्थः । अथ आगमनानन्तरम् सुतस्य ऋत्विग्भिरभिषुतम् सोमस्य सोमं स्वांशलक्षणम् पिबतम् ॥ १ ॥

**यावदिदं भुवनं विश्वमस्त्युरुव्यचा वरिमता गभीरम् ।**
**तावाँ अयं पातवे सोमो अस्त्वरमिन्द्राग्नी मनसे युवभ्याम् ॥ २ ॥**

यावत् । इदम् । भुवनम् । विश्वम् । अस्ति । उरुऽव्यचा । वरिमता । गभीरम् ।
तावान् । अयम् । पातवे । सोमः । अस्तु । अरम् । इन्द्राग्नी इति । मनसे । युवऽभ्याम् ॥ २ ॥

**स्कन्द०** यावत् इदम् भुवनम् उदकनामैतत् ( तु. नि १,१२ ) । उदकम् विश्वम् सर्वमेकीभूतं सत् अस्ति भवति । कीदृशम् । उच्यते । उरुव्यचा वरिमता उरु पृथु विस्तीर्णमिति पर्यायाः । व्यच इति व्याप्तिनाम शाकपूणिना पठितम् । उरु व्यचो यस्य स उरुव्यचाः । तृतीयैकवचनस्य डादेशः । वरिमतेत्यपि उरुशब्दस्य 'प्रियस्थिरस्फिरोरुबहुल०' ( पा ६,४,१५७ ) इत्येवम् इमनिच्प्रत्यये वरादेशः । इमनिचश्च 'मघवा बहुलम्' इति बाहुलकात् तकारान्तादेशः । उभयत्र चेत्थम्भूतलक्षणा तृतीया । विस्तीर्णव्याप्तिना पृथुत्वेन सम्बद्धम् इत्यर्थः । गभीरम् दुरवगाहम् । अगाधं चेत्यर्थः । तावान् अयम् पातवे पातुम् सोमः अस्तु इत्याशास्महे । अरम् अलम् । पर्याप्त इत्यर्थः । हे इन्द्राग्नी! । किमर्थं पातुम् । उच्यते । मनसे मनश्शब्देनात्र तत्प्रभवत्वात् प्रीतिरुच्यते । तादर्थ्ये चतुर्थी । प्रीत्यर्थमित्यर्थः । केन पातुम् । उच्यते । युवभ्याम्[8] ॥ २ ॥

---

१. नास्ति वि. २. °धितिष्ठन्तौ वि. ३. °भिष्टु° अ कु. ४. नास्ति वि[1] लपं. ५. एकं रथम् कु. ६. सुतम कु. ७. नास्ति मै[2]. ८. युवाभ्याम् वि.

**वेङ्कट०** यावत् इदम् भुवनम्[1] सर्वं भवति बहुव्याप्तिकेन पृथुत्वेन गभीरम् यावत्परिमाणमिदं दृश्यमानं त्रैलोक्यात्मकं भुवनमस्ति सकलम्। अयम् सोमः तावान् अस्तु युवयोः पानाय। यथा युवयोः मनसे पर्याप्तं भवति। 'एतस्य यजुषो वीर्येण यावदेका देवता कामयते यावदेका। तावदाहुतिः [2]प्रथते†। न हि[2] तदस्ति। यत्तावदेव स्यात्। यावत् . जुहोति' ( तैब्रा ३,२,६,४ ) इति तैत्तिरीयकम्, 'अपि गिरिमात्रं वर्धतेऽथोऽपरिमितम्[3] एव[4] च' इति वाजसनेयकम् ( तु. काश २,८,२,६ ) इति[5] ॥ २ ॥

**मुद्गल०** विश्वम् सर्वम् इदम् भुवनम् जगत् यावत् अस्ति यावत्प्रमाणं भवति। कीदृशम्। उरुव्यचा विस्तीर्णव्यापनं सर्वव्यापकमित्यर्थः। तथा वरिमता वरिम्णा उरुत्वेनात्मीयेन - गौरवेण गभीरम् गाम्भीर्योपेतं हे इन्द्राग्नी! पातवे युवाभ्याम् पातुम् अयम् सोमः तावान् अस्तु तावत्प्रमाणो भवतु। तथा मनसे युवयोरन्तःकरणाय अरम् सोमः पर्याप्तो भवतु ॥ २ ॥

चक्राथे हि सध्र्य१ङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः।
ताविन्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ॥ ३ ॥

चक्राथे इति। हि। सध्र्यक्। नाम। भद्रम्। सध्रीचीना। वृत्रऽहना। उत। स्थः।
तौ। इन्द्राग्नी इति। सध्र्यञ्चा। निऽसद्य। वृष्णः। सोमस्य। वृषणा। आ। वृषेथाम् ॥३॥

**स्कन्द०** हि-शब्दोऽत्र[6] पदपूरणः। तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहर्तव्यः[7]। यौ चक्राथे वृत्रहनन-हविर्नयनादिना स्वेन व्यापारेण कुरुथः कृतवन्तौ वा। सध्र्यक् सहगामि[8]। सर्वत्र[9] युगपत् यातीत्यर्थः। नाम उदकनामैतत् ( तु. निघ १,१२ )। वृष्टिलक्षणमुदकम्। भद्रम् कल्याणम्। सध्रीचीना वृत्रहणौ! उत उतशब्दश्चार्थे सध्रीचीनावित्येतेन सम्बन्धयितव्यः। सहगामिनौ च यज्ञान् प्रति हे वृत्रहणौ! वृत्रस्य हन्तारौ! स्थः भवथः। तौ हे इन्द्राग्नी! सध्र्यञ्चा सहगामिनौ। सहागत्येत्यर्थः[10]। निषद्य[11] अस्मदीये बर्हिष्युपविश्य। वृष्णः सोमस्य वृष्टिहेतुत्वात् सोमो वृषोच्यते। द्वितीयार्थे वा षष्ठी। षष्ठीश्रुतेर्वैकदेशमिति शेषः। वर्षितारं सोमं वर्षितुर्वा सोमस्यैकदेशं स्वांशलक्षणम्। हे वृषणा! आ वृषेथाम् आसिञ्चतं स्वे उदरे। पिबतमित्यर्थः ॥ ३ ॥

**वेङ्कट०** इन्द्रः अग्निः इति एतत् नामद्वयं कल्याणं सहाञ्चनं कृतवन्तावैक्यात्। तथा युवां सहागमनौ च भवथः उपद्रवाणां हन्तारौ!। तौ इदानीम्[12] अस्मद्वेद्यां सङ्गतौ[13] सन्तौ[14] उपविश्य वर्षितारं सोमं वर्षितारौ! आसिञ्चतं [15]जठरे इति[15] ॥ ३ ॥

**मुद्गल०** हे इन्द्राग्नी! भद्रम् कल्याणं नाम स्वकीयं नामधेयम् सध्र्यक् सहगतम् इन्द्राग्नीइत्येवं संयुक्तम् चक्राथे युवां कृतवन्तौ। उत अपि च हे वृत्रहणौ! वृत्रस्यासुरस्य हन्तारौ इन्द्राग्नी! सध्रीचीना सहाञ्चन्तौ वृत्रवधार्थं सङ्गतौ स्थः भवथः। हि यस्मादेवं तस्मात् हे वृषणा! कामानां

---

१. भव° वि[२] अ[२]. २-२ प्रथमे तेन हि कु. † विप्रधसे अ[२]; प्रधत्ते° वि[२]. ३. °ते तदाप° वि[२]; °ते तथोप° अ[१]; °ते तथाप° वि[१] ल कु. ४. इव वि[२] अ[१]. ५. नास्ति कु. ६. हिशब्दः ति. ७. °ध्याहार्यः ति. ८. °गामी मूको ९ सर्वत्र च अ कु. १०. °गतेत्य ति ११. नास्ति अ. १२. इन्द्राग्नी कु. १३. सुसङ्ग° वि[२] अ[२]. १४. नास्ति वि[२] अ[२]. १५-१५. जठरम् कु.

वर्षितारौ! इन्द्राग्नी! तौ युवाम् सध्र्यञ्चा सहितावेव सन्तौ निषद्य वेद्यामुपविश्य वृष्णः सेक्तुः सोमस्य आत्मीयं भागम् आ वृषेथाम् स्वकीये उदरे आसिञ्चेथाम् ॥ ३ ॥

समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा ।
तीव्रैः सोमैः परिषिक्तेभिरर्वागेन्द्राग्नी सौमनसाय यातम् ॥ ४ ॥

सम्ऽइद्धेषु । अग्निषु । आनजाना । यतऽस्रुचा । बर्हिः । ऊँ इति । तिस्तिराणा ।
तीव्रैः । सोमैः । परिऽसिक्तेभिः । अर्वाक् । आ । इन्द्राग्नी इति । सौमनसाय । यातम् ॥ ४ ॥

**स्कन्द०** मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । आनजाना इत्यादीनि च नामन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्य 'एकवाक्यता नेया'[1] । यौ युवाम् समिद्धेषु अग्निषु[2] आहवनीयादिषु आनजाना अञ्जेर्गत्यर्थस्येदं रूपम् । आगतवन्तौ । यौ च[3] यतस्रुचा सर्वैः यजमानैरुद्यताः स्रुचो ययोरर्थाय तौ यतस्रुचौ । बर्हिः उ तिस्तिराणा उकारः पदपूरणः चार्थे वा । तिस्तिराणा इत्यपि ऋत्विक्कर्तृकस्यापि स्तरणस्य[4] हेतुभूतत्वाद् इन्द्राग्नी एव कर्तारावुच्येते । बर्हिः स्तीर्णवन्तौ, तौ[1] तीव्रैः सोमैः परिषिक्तेभिः तीव्रशब्दः कटुकवचनः[5] तिक्तवचनो वा । परिषिक्तशब्दोऽपि दशापवित्रे सर्वतः सिक्तत्वात् दशापवित्रपरिपूतवचनः[6] । कटुकरसैस्तिक्तरसैर्वा[7] सोमैर्दशापवित्रेण[8] परिपूतैः । तीव्रादिगुणान् सोमान् पातुमित्यर्थः । अर्वाक् क्रियाविशेषणमेतत् । अस्मदभिमुखम् । हे इन्द्राग्नी! सौमनसाय आत्मनोऽस्माकं वा[1] प्रीत्यर्थमित्यर्थः । आ यातम् आगच्छतम् ॥ ४ ॥

**वेङ्कट०** समिद्धेषु अग्निषु व्याप्रियमाणौ अध्वर्यू बर्हिः च आसनाय भवतोः तरन्तौ[9] । [10]तीव्रान् सोमान् परितः पात्रेषु सिक्तान् पातुमस्माकं सौमनस्यं च प्रकाशयितुम् इन्द्राग्नी! अभिमुखम् आगच्छतम्[10] ॥ ४ ॥

**मुद्गल०** अग्निषु गार्हपत्यादिषु अन्वाधानादिना समिद्धेषु सम्यगिद्धेषु दीप्तेषु सत्सु आनजाना हवींषि आज्येनाञ्जन्तौ यतस्रुचा तदनन्तरं यागार्थं गृहीतस्रुचौ बर्हिः उ बर्हिरपि वेद्याम् तिस्तिराणा आस्तीर्णं कृतवन्तौ अध्वर्युप्रतिप्रस्थातारौ एवंभूतावभूताम् । तथा सति हे इन्द्राग्नी! तीव्रैः क्षिप्रं मदकरैः परिषिक्तेभिः परितः सर्वैर्ग्रहचमसादिष्वासिक्तैः सोमैः हेतुभूतैः अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम् । किमर्थम् । सौमनसाय सौमनस्याय, अस्माकम् अनुग्रहायेत्यर्थः ॥४॥

यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि ।
या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ॥ ५ ॥

यानि । इन्द्राग्नी इति । चक्रथुः । वीर्याणि । यानि । रूपाणि । उत । वृष्ण्यानि ।
या । वाम् । प्रत्नानि । सख्या । शिवानि । तेभिः । सोमस्य । पिबतम् । सुतस्य ॥ ५ ॥

---

१-१. °वाक्यां नेयं ति. २. नास्ति मूको. ३. नास्ति ति. ४. स्तरस्य ति; नास्ति अ. ५. कटुव° ति. ६. °परीतवचनः ति. ७. °रसैस्तिक्तैर्वा ति. ८. °पवित्रैः ति. ९ स्तुवन्तौ तीर्णवन्तौ वि[1] अ[2]. १०-१०. नास्ति वि[1] लपं.

**स्कन्द०** यानि हे इन्द्राग्नी! चक्रथुः वीर्याणि वीरकर्माणि। यानि[1] चातिशयवद्देवतामाहात्म्ययोगान्नानाप्रकाराण्यात्मनः[2] रूपाणि। उत वृष्ण्यानि वृष्ण्यमित्यपठितमपि बलनाम वृष्टिपर्यायो वा। बलानि वृष्टीर्वा। यानि च वाम् युवयोः प्रत्नानि 'प्रत्नम्' (निघ ३, २७) इति पुराणनाम। चिरन्तनान्यस्माभिः सह सख्या सख्यानि शिवानि सुखानि। तेभिः हेताविय तृतीया। तैर्हेतुभिः। यस्मात् वीरकर्मकरणादियुक्तौ[3] स्थः, तस्मादित्यर्थः। सोमस्य पिबतम् सुतस्य ॥ ५ ॥

**वेङ्कट०** [4]यानि वृत्रवधादीनि इन्द्राग्नी! कृतवन्तौ,[4] यानि च नानाशरीराणि अपि च कामप्रदानि, यानि च युवयोरस्माभिः पुराणानि शिवतमानि सख्यानि। तैः सर्वैर्हेतुभिः सोमं पिबतम् सुतमिति[5] ॥ ५ ॥

**मुद्गल०** हे इन्द्राग्नी! यानि वीर्याणि वृत्रवधादिरूपाणि चक्रथुः कृतवन्तौ युवाम्। यानि च रूपाणि निरूप्यमाणानि गवाश्वादीनि भूतजातानि कृतवन्तौ। इन्द्राग्निभ्यां हि सर्वं जगत् सृज्यते। इन्द्रः सूर्यात्मना वृष्टिं सृजति, अग्निश्चाहुतिद्वारा[6] वृष्ट्युत्पादकः। वृष्टेः सकाशात् सर्वे प्राणिन उत्पद्यन्ते। उत अपि च यानि वृष्ण्यानि वृष्टिप्रदानादिरूपाणि कर्माणि कृतवन्तौ। तथा वाम् युवयोः सम्बन्धीनि प्रत्नानि चिरन्तनानि शिवानि शोभनानि या यानि सख्या सखित्वानि सन्ति। तेभिः तैः सहितौ युवाम् सुतस्य सोमस्य अभिषुतं सोमम् पिबतम् ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये षड्विंशो वर्गः ॥

## यदब्रवं प्रथमं वां वृणानो३ऽयं सोमो असुरैर्नो विहव्यः।
## तां सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य ॥ ६ ॥

यत्। अब्रवम्। प्रथमम्। वाम्। वृणानः। अयम्। सोमः। असुरैः। नः। विऽहव्यः।
ताम्। सत्याम्। श्रद्धाम्। अभि। आ। हि। यातम्। अथ। सोमस्य। पिबतम्। सुतस्य ॥

**स्कन्द०** यत् इति सप्तम्या एकवचनस्य लुक्। यस्यां कर्मसन्ततौ। अब्रवम् ब्रवीम्यहम्। प्रथमम् अग्रे। किम्। सामर्थ्यात् स्तुतीः। कस्य। वाम् युवयोः। वृणानः वरणमभ्यर्थना। स्तुतीरस्मदीयाः श्रृणुतमित्यभ्यर्थयमानः। [7]यस्यां च[7] अयम् सोमः असुरैः 'असुः' (या ३,८) इति प्राणनाम। तद्वन्तोऽसुरा ऋत्विजस्तैः। नः अस्माकं स्वभूतैः। विहव्यः विविधं होतव्यः। ताम् सत्याम् श्रद्धाम् श्रद्धाशब्दोऽत्रान्तर्णीतमत्वर्थः। श्रद्धावतीम्। परया भक्त्या प्रारब्धामित्यर्थः। अभि आ हि यातम् हिशब्दः पदपूरणः। अभ्यागच्छतम्। अथ अभ्यागमनानन्तरं च सोमस्य पिबतम् सुतस्य ॥ ६ ॥

**वेङ्कट०** [8]अभिलषितं† युवां वृणानः प्रथममेवाहं यत् करिष्यामीति प्रत्यज्ञासिषम्। अयम् सोमः अस्माकं प्राज्ञैर्ऋत्विग्भिर्विविधं युवाभ्यां होतव्यः। ताम् इमां मदीयाम् †श्रद्धाम् अभ्यागच्छतम्†। अथ‡। सोमम् पिबतम् इति[8] श्रद्दधाने मयि आगत्य पिबतमिति[9] ॥ ६ ॥

---

१. नास्ति अ. २. °योग्यान्नाना° कु. ३. °कर्मादियुक्तौ ति. ४-४. नास्ति वि[1] लपं. ५. °तम् कु. ६. °धारा मूको. ७-७. यस्यार्थं अ; नास्ति कु. ८-८. नास्ति वि[1] अ[2]. † यदब्रवमभि° कु. †-† नास्ति वि[1] लपं. ‡ नास्ति वि[2]. ९. नास्ति कु.

मुद्गल० हे इन्द्राग्नी! प्रथमम् कर्मोपक्रम एव वाम् युवाम् वृणानः भजमानः यत् अब्रवम् सोमेन प्रीणयिष्यामीति यदवोचम् सत्याम् यथार्थाम् ताम् श्रद्धाम् श्रद्धया आदरातिशयेन कृताम् उक्तिम् अभि अभिलक्ष्य आ हि यातम् आगच्छतमेव, नोदासाथाम् । अथ आगमनानन्तरम् अभिषुतं सोमम् पिबतम् । तथा सति असुरैः हविषां प्रक्षेपकैर्ऋत्विग्भिः अयम् नः अस्माकम् सोमः विहव्यः विशेषेण होतव्यो भवति, इतरथा व्यर्थः स्यात् । तस्माद् इन्द्राग्नी! आगच्छतमित्यर्थः ॥ ६ ॥

यदिन्द्राग्नी मदथः स्वे दुरोणे यद् ब्रह्मणि राजनि वा यजत्रा ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ७ ॥

यत् । इन्द्राग्नी इति । मदथः । स्वे । दुरोणे । यत् । ब्रह्मणि । राजनि । वा । यजत्रा ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ७ ॥

स्कन्द० यत् इति निपातो यदिशब्दस्यार्थे । यदि हे इन्द्राग्नी! मदथः तृप्यथः । स्वे दुरोणे अस्मदीये गृहे । यत् यदि ब्रह्मणि राजनि वा ब्रह्मशब्दोऽत्र [1]ब्राह्मणशब्देन समानार्थः[1] । राजञ्छब्दोऽपि राजन्यजातिवचनः । उभयत्र च षष्ठ्यर्थे सप्तमी । ब्राह्मणस्य राजन्यस्य [2]वा गृह इत्यर्थः । हे यजत्रा! यष्टव्यौ![2] । अतः परि[3] परीति सर्वतोभावे । अतः सर्वतः । एतेभ्यः सर्वेभ्यो गृहेभ्य इत्यर्थः । वृषणौ[4]! वर्षितारौ! आ हि यातम् इत्याद्युक्तार्थम् ॥ ७ ॥

वेङ्कट० [5]†यत् इन्द्राग्नी!† तृप्यथः‡ स्वे गृहे, यदि वा ब्राह्मणेषु राजसु वा । यष्टव्यौ! तत् सर्वं परिहायेहागच्छतं वर्षितारौ![5] ॥ ७ ॥

मुद्गल० यजत्रा! यष्टव्यौ! हे इन्द्राग्नी! स्वे दुरोणे स्वकीये गृहे निवासस्थाने यत् यदि मदथः हृष्यथः, यत् यदि वा ब्रह्मणि ब्राह्मणे अन्यस्मिन् यजमाने हविःस्वीकरणाय आगत्य हृष्यथः, यत् यदि वा राजनि क्षत्रिये युद्धे साहाय्यं कर्तुमागत्य हृष्यथः । अतः परि परितोऽस्मात् हे वृषणौ! कामानां वर्षिताराविन्द्राग्नी! आ यातम् हि आगच्छतमेव, औदासीन्यं मा कार्ष्टम् । अन्यत् पूर्ववत् ॥ ७ ॥

यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ८ ॥

यत् । इन्द्राग्नी इति । यदुषु । तुर्वशेषु । यत् । द्रुह्युषु । अनुषु । पूरुषु । स्थः ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ८ ॥

स्कन्द० यदि हे इन्द्राग्नी! यदुषु । पञ्चाप्येतानि राज्ञां नामधेयानि सोऽयमित्यभिसम्बन्धात्तदपत्ये प्रयुज्यन्ते । षष्ठ्यर्थे चात्र सर्वत्र सप्तमी । दुरोण इत्येतच्च पूर्वस्या ऋचोऽनुषज्यते । यद्वि-

---

१-१. ब्रह्मशब्देन समार्थः ति. २-२. नास्ति अ कु. ३. नास्ति मूको, ४. वृषणा ति.
५-५. नास्ति वि[1] अ[2]. †-† नास्ति वि[1]. ‡ °थ वि[2] कु लपं.

त्यादिभिरेव वा स्वामिशब्दैः स्वभूतानि गृहाण्युपलक्ष्यन्ते । यदुपुत्रगृहेष्वित्यर्थः । यदि तुर्वशेषु, यदि द्रुह्युषु,[1] यदि अनुषु यदि पूरुषु स्थः[1] । साम्प्रतं वर्तेथे इत्यर्थः ॥ ८ ॥

**वेङ्कट०** [२]यदुप्रभृतयः बहुयज्ञाः कुत्ससमकालीना इति†[२] ॥ ८ ॥

**मुद्गल०** हे इन्द्राग्नी! यत् यदि यदुषु नियतेषु परेषामहिंसकेषु मनुष्येषु स्थः भवथः वर्तेथे । यत् यदि वा तुर्वशेषु हिंसकेषु मनुष्येषु वर्तेथे । यत् यदि वा द्रुह्युषु द्रोहं परेषाम् उपद्रवमिच्छत्सु मनुष्येषु वर्तेथे । यदि वा अनुषु प्राणत्सु सफलैः प्राणैर्युक्तेषु ज्ञातृषु अनुष्ठातृषु मनुष्येषु यदि भवथः । तथा पूरुषु कामैः पूरयितव्येषु अन्येषु स्तोतृजनेषु यदि भवथः । अतः परि सर्वस्मात् स्थानात् हे कामाभिवर्षकाविन्द्राग्नी! आगच्छतमेव । अनन्तरमभिषुतं सोमम् पिबतम् ॥८॥

## यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ९ ॥

यत् । इन्द्राग्नी इति । अवमस्याम् । पृथिव्याम् । मध्यमस्याम् । परमस्याम् । उत । स्थः । अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ९ ॥

**स्कन्द०** यदि हे इन्द्राग्नी! अवमस्याम् । 'अवमे' ( निघ २,१६ ) इत्यन्तिकनाम । सन्निकृष्टायां पृथिव्याम् । अस्मिन्नेव लोके इत्यर्थः । यदि मध्यमस्याम् मध्यमायाम् । अन्तरिक्ष इत्यर्थः । परमस्याम् उत स्थः परमायां वा द्युलक्षणायां स्थः । अतः परि इत्याद्युक्तार्थम् ॥ ९ ॥

**वेङ्कट०** [३]अन्तरिक्षं मध्यमा पृथिवी । द्यौः परमेति†[३] ॥ ९ ॥

**मुद्गल०** हे इन्द्राग्नी! अवमस्याम् पृथिव्याम् सन्निकृष्टायाम् अस्यां भूम्याम् यत् यदि स्थः वर्तमानौ भवथः । यदि वा मध्यमस्याम् पृथिव्याम् अन्तरिक्षलोके, उत अपि च परमस्याम् उत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे । अतः सर्वस्मात् स्थानात् हे वृषणौ! आगच्छतमेव । आगमनानन्तरं सुतं सोमम् पिबतम् ॥ ९ ॥

## यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ १० ॥

यत् । इन्द्राग्नी इति । परमस्याम् । पृथिव्याम् । मध्यमस्याम् । अवमस्याम् । उत । स्थः । अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ १० ॥

**स्कन्द०** पदविपर्ययमात्रयोगात् पूर्वयैव समानार्थः ॥ १० ॥

**वेङ्कट०** [४]प्रकारान्तरेणापि श्रद्धाप्रकाशनायाह्वानम्†[४] ॥ १० ॥

---

१. नास्ति अ. २. नास्ति मूको. ३-३. नास्ति वि[१] अ[२]. † नास्ति कु. ४-४. नास्ति वि[१] अ[२]. † °रमा कु. ५-५. नास्ति वि[१] अ[२]. † प्रकाशनाह्वानम् ल.

**मुद्गल०** पूर्ववद् व्याख्येयम्। [1]एतावांस्तु विशेषः[1]। पूर्वं भूम्यादिषु त्रिलोकेषु यौ इन्द्राग्नी तावागच्छतमित्युक्तम्। इदानीं तु द्युप्रभृतिषु अवरोहक्रमेण वर्तमानेषु त्रिषु लोकेषु यौ इन्द्राग्नी वर्तेते तावागच्छतमिति प्रार्थ्यते ॥ १० ॥

यदिन्द्राग्नी दिवि ष्ठो यत् पृथिव्यां यत् पर्वतेष्वोषधीष्वप्सु ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ११ ॥

यत् । इन्द्राग्नी इति । दिवि । स्थः । यत् । पृथिव्याम् । यत् । पर्वतेषु । ओषधीषु । अप्ऽसु ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ११ ॥

**स्कन्द०** यदि हे इन्द्राग्नी! दिवि द्युलोके स्थः, यदि पृथिव्याम्, यदि पर्वतेषु, यदि ओषधीषु, यदि अप्सु। अतः ॥ ११ ॥

**वेङ्कट०** निगदव्याख्यातेति[2] ॥ ११ ॥

**मुद्गल०** हे इन्द्राग्नी! दिवि द्युलोके यत् यदि स्थः भवथः। यत् यदि वा पृथिव्याम् भूलोके, यत् यदि वा पर्वतेषु मेघादिषु, तथा ओषधीषु तिलादिषु, अप्सु उदकेषु चानुग्राहकतया यदि वा स्थः। हे कामाभिवर्षकौ! युवाम् अतः सर्वस्मात् स्थानात् आगच्छतम्। आगत्य च अभिषुतं सोमम् पिबतम् ॥ ११ ॥

यदिन्द्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ १२ ॥

यत् । इन्द्राग्नी इति । उत्ऽइता । सूर्यस्य । मध्ये । दिवः । स्वधया । मादयेथे इति ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ १२ ॥

**स्कन्द०** यदि हे इन्द्राग्नी! उदिता उदये अस्य[3] सूर्यस्य। आदित्योदयवेलायामित्यर्थः। यदि मध्ये दिवः 'द्युः' (निघ १,९) इत्यहर्नाम। मध्ये अह्नः। स्वधया सोमलक्षणेनान्नेन मादयेथे अन्येषां यजमानानां गृहेषु तर्पयथ आत्मानम्। [4]स्वार्थिको वाऽत्र[4] णिच्। तृप्यथः। अतः ॥ १२ ॥

**वेङ्कट०** [5]उदयवेलायाम् यत् इन्द्राग्नी! कस्यचन यज्ञे सोमेन माद्यथः†, अथवा अह्नो मध्ये। ततः कालाद् अपि माम् एव आगच्छतं सर्वदेति‡[5] ॥ १२ ॥

**मुद्गल०** हे इन्द्राग्नी! उदिता उदितस्य सूर्यस्य सम्बन्धिनः दिवः द्योतमानस्यान्तरिक्षस्य मध्ये मध्यभागे स्वधया आत्मीयेन तेजसा यत् यस्मात् कारणात् [6]मादयेथे तृप्तौ भवथः। तस्मात् कारणात्[6] अतः सर्वस्मात् अन्तरिक्षभागात् हे कामाभिवर्षकाविन्द्राग्नी! आगच्छतम्। आगत्यानन्तरम् अभिषुतं सोमं पिबतम् ॥ १२ ॥

---

१-१. °वान् स्तुतिवि° मूको. २. नास्ति वि[1] अ[2]; उत्तरा नि° वि[1,2] अ[1] ल लपं; उत्तरा निगदव्याख्या कु. ३. नास्ति अ. ४-४. °कोऽत्र मूको. ५-५. नास्ति वि[1] अ[1]. † मदथः कु; मदतः लपं. ‡ °दा कु. ६-६. नास्ति मै[2].

एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १३ ॥

एव । इन्द्राग्नी इति । पपिऽवांसा । सुतस्य । विश्वा । अस्मभ्यम् । सम् । जयतम् । धनानि ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ १३ ॥

**स्कन्द०** एव[1] एवमुक्तेन प्रकारेण हे इन्द्राग्नी! पपिवांसा पीतवन्तौ सन्तौ[2] सुतस्य सुतं सोमं सुतस्य वा सोमस्य[3] स्वांशलक्षणमेकदेशम् विश्वा सर्वाणि अस्मभ्यम् अस्मदर्थम्। अस्मभ्यं दातुमित्यर्थः। सम्[4] सम्यक् जयतम् धनानि । तत् नः इत्याद्युक्तार्थम्[5] ( ऋ १,९४,१६ द्र० ) ॥ १३ ॥

**वेङ्कट०** [5]एवम् उक्तेन प्रकारेण आगत्य सोमं पीतवन्तौ† अस्मभ्यम् सर्वाणि धनानि शत्रुभ्यः सह जयतम् इति‡[5] ॥ १३ ॥

**मुद्गल०** हे इन्द्राग्नी! सुतस्य अभिषुतं सोमम् एव एवम् पपिवांसा पीतवन्तौ युवाम् अस्मभ्यम् विश्वा सर्वाणि धनानि सम् जयतम् प्रयच्छतम्। यदनेन सूक्तेन प्रार्थितम् तत् मित्रादयः ममहन्ताम् पूजयन्तु ॥१३॥

इति प्रथमाष्टके सप्तमाध्याये सप्तविंशो वर्गः ॥

## [ १०९ ]

वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।
नान्या युवत् प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥ १ ॥

वि । हि । अख्यम् । मनसा । वस्यः । इच्छन् । इन्द्राग्नी इति । ज्ञासः । उत । वा । सऽजातान् ।
न । अन्या । युवत् । प्रऽमतिः । अस्ति । मह्यम् । सः । वाम् । धियम् । वाजऽयन्तीम् । अतक्षम् ॥ १ ॥

**स्कन्द०** वि अख्यम् इत्येतद् विचष्टे इत्येतस्य पश्यतिकर्मणो रूपम्। हि-शब्दस्तु पदपूरणः। युवामहं विविधं पश्यामि मनसा वस्यः वसूनि धनानि इच्छन् हे इन्द्राग्नी!। कीदृशौ। उच्यते। ज्ञासः उत वा सजातान् अयोनिसम्बन्धा ये ज्ञातयस्त इह ज्ञास उच्यन्ते। योनिसम्बन्धाः सजाताः। व्यत्ययेन द्विवचनस्य स्थाने बहुवचनम्। ज्ञाती सजातौ च। युवामेव मम ज्ञाती युवामेव सजातावित्येवं पश्यामीत्यर्थः। अथवा ज्ञासः सजातानित्यनयोः बहुवचनान्तत्वादिन्द्राग्नीविषयत्वासम्भवात् कर्मश्रुतेश्च साकाङ्क्षत्वाद् अनादृत्येति योग्यक्रियापदाध्याहारः। ज्ञातीन् सजातींश्चानादृत्य युवां पश्यामीत्यर्थः। किञ्च न अन्या युवत् युवाभ्यामन्या देवता प्रमतिः अस्ति मह्यम् प्रमतिरिति मन्यतेरर्चतिकर्मणो रूपम्। कर्मणि चैष क्तिन् द्रष्टव्यः। मह्यमित्यपि षष्ठ्यर्थे चतुर्थी। प्रकर्षेण स्तुत्याऽस्ति मम। युवां मुक्त्वा[6] नाहमन्या देवताः प्रकर्षेण स्तौमीत्यर्थः।

---

१. नास्ति कु ति. २. नास्ति अ. ३. सोमलक्षणस्य ति. ४. नास्ति मूको. ५-५. नास्ति वि[3] अ[3]. † पिबन्तौ लपं. ‡ नास्ति कु. ६. तत्र अ.

योऽहमीदृशः सः वाम् युवयोः धियम् स्तुतिं[1] कर्म यागलक्षणं वा । यागं स्तुतिं वेत्यर्थः । कीदृशीम् । वाजयन्तीम् तद्वदर्थेऽत्र[2] क्यच्प्रत्ययो[3] द्रष्टव्यो नेच्छायाम् । 'अश्वयुर्गव्यू रथयुर्वसूयुः' (ऋ १,५१,१४) इति यथा । हविर्लक्षणेनान्नेन तद्वतीम् । हविस्संयुक्तामित्यर्थः । अतक्षम् करोमि कृतवान् वा ॥ १ ॥

**वेङ्कट०** मनसा अहम् अभ्युदयम् इच्छन्[4] वि हि अपश्यम्[5] । किमित्याह—इन्द्राग्नी एव[6] मातृकुलजातान् ज्ञातीन् । अपि च[7] सजातान् च तावेवहमपश्यम् । तथा सति युवाभ्यां विना न अन्येन देवेन दीयमाना प्रमतिः अस्ति मह्यम् । तथा कृत्वाऽहं[8] युवयोः एव अन्नम् इच्छन्तीम् अन्नप्रवणाम् धियम् कर्म करोमि ॥ १ ॥

**मुद्गल०** 'वि हि' इत्यष्टर्चं चतुर्थं सूक्तम्[9] । कुत्स ऋषिः[9] । त्रिष्टुप् छन्दः[9] । इन्द्राग्नी देवता[†][9] ।

हे इन्द्राग्नी ! वस्यः प्रशस्तं धनम् इच्छन् कामयमानोऽहम् ज्ञासः ज्ञातीन् उत वा अपि वा सजातान् समानजन्मानः ज्ञातिव्यतिरिक्ता बान्धवास्तांश्च मनसा बुद्धया वि हि अख्यम् युवामेव ज्ञातिरूपेण बन्धुरूपेण च व्यज्ञासिषम् । ते हि धनस्य दातारो भवन्ति । अपि च युवत् युवाभ्याम् अन्या अन्येन केनचित् मह्यम् दत्ता प्रमतिः प्रकृष्टा बुद्धिः न अस्ति । मदीया यैषा[10] प्रकृष्टा बुद्धिः सा युवाभ्यामेव दत्ता । सः तादृश्या बुद्धया युक्तोऽहम् वाम् युवयोः सम्बन्धिनीम् वाजयन्तीम् अन्नम् अस्मभ्यम् इच्छन्तीम् धियम् ध्यानेन निष्पन्नां स्तुतिम् अतक्षम् अकार्षम् ॥ १ ॥

**अश्र॑वं॒ हि भू॑रि॒दाव॑त्तरा वां॒ विजा॑मातुरु॒त वा॑ घा स्या॒लात् ।**
**अथा॒ सोम॑स्य॒ प्रय॑ती यु॒वभ्या॒मिन्द्रा॑ग्नी॒ स्तोमं॑ जनयामि॒ नव्य॑म् ॥२॥**

अश्र॑वम् । हि । भू॒रि॒दाव॑त्ऽतरा । वा॒म् । विऽजा॑मातुः । उ॒त । वा॒ । घ॒ । स्या॒लात् ।
अथ॑ । सोम॑स्य । प्रऽय॑ती । यु॒वऽभ्या॑म् । इन्द्रा॑ग्नी॒ इति॑ । स्तोम॑म् । ज॒न॒या॒मि॒ । नव्य॑म् ॥ २ ॥

**स्कन्द०** हि-शब्दो यस्मादर्थे । यस्मादहम् अश्रवम् श्रुतवान्[11] । किम् । उच्यते । भूरिदावत्तरा बहुनो धनस्य दातारौ । कौ । उच्यते । वाम् युवाम् । कुतः । उच्यते । विजामातुः जामातृशब्दोऽत्र तद्गुणोपलक्षणार्थो द्रष्टव्यः । धनवत्ताव्यतिरिक्ताः कुलीनत्वादयः[12] विगता जामातृगुणा यस्य स विजामाता क्रीतापतिरुच्यते । स हि विगुणत्वात् धनेनोपप्रलोभयन्[13] अतिशयेन बहु ददाति । ततो युवां बहुदातृतरौ । न[1] विजामातुरेव । किं तर्हि । उत वा घ स्यालात् वाशब्दश्चार्थे । घशब्दः पदपूरणः । अपि च स्यालात् । स्यालो हि भगिनीप्रियचिकीर्षया भगिनीभर्त्रेऽतिशयेन बहु ददाति । ततोऽपि युवां बहुदातृतरौ । अथ एतस्मात् कारणात् । सोमस्य प्रयती प्रयतिर्दानार्थः । सहयोगे चैषा तृतीया । सोमस्य प्रदानेन सह । युवभ्याम् युष्मदर्थं हे इन्द्राग्नी ! स्तोमम् जनयामि स्तोमं च ददामि । स्तोमं च करोमीत्यर्थः । नव्यम् नवम् अन्यैरकृतपूर्वम् ॥ २ ॥

---

१. नास्ति अ. २. °दर्थे ति. ३. त्यप्र° मूको. ४. °च्छन् वमूनि वि[3] अ[2]. ५. अवपश्यम् वि[1]. ६. एवम् वि[1] अ[2]. ७. वा वि[1] अ[1] ल लपं. ८. कृत्वा वि[1] अ[1]. ९. नास्ति मै[2]. † देवते मै[1]. १०. एषा मै[2]. ११. °वानहम् मूको. १२. कुलीनाद° ति. १३. धनेन प्र° ति.

**वेङ्कट०** अश्रौषं हि बहुदायितरौ[1] वाम् [2]विजामातुः असमाप्ताज्जामातुः[2]। विजामातेति शश्वद् दाक्षिणात्याः क्रीतापतिमाचक्षते। असुसमाप्तगुण[3] इव[4] वरोऽभिप्रेतः ( तु. या ६,९ )। अपि च स्यालात्, स्यं शूर्पम्, तस्मात्[5] यो लाजानावपति [5]स स्यालः। स[5] भगिनीप्रीत्यर्थं बहुतरं[6] प्रयच्छति, तस्मादपि। अथ सोमस्य प्रदानेन युवाभ्याम् इन्द्राग्नी! [7]स्तोमम् जनयामि नवतरम्[7] ॥ २ ॥

**मुद्गल०** हे इन्द्राग्नी! वाम् युवाम् भूरिदावत्तरा अतिशयेन धनस्य दाताराविति अश्रवम् हि अश्रौषं खलु। कस्मात्पुरुषात्। विजामातुः। श्रुताभिरूपादिभिर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः। उत वा अपि च स्यालात् स्यं शूर्पम्, तस्मात् लाजानावपति विवाहकाल इति स्यालः कन्याभ्राता। स यथा भगिनीप्रीत्यर्थं बहुधनं प्रयच्छति ततोऽप्यतिशयेन दाताराविन्द्राग्नी। घ पादपूरणः। तथा च सति अथ अनन्तरं हे इन्द्राग्नी! युवभ्याम् सोमस्य प्रयती अभिषुतस्य सोमस्य प्रदानेन सह नव्यम् नवतरं प्रत्यग्रम् स्तोमम् स्तोत्रम् जनयामि निष्पादयामि ॥ २ ॥

## मा च्छेद्म र॒श्मीँरिति॒ नाध॑मानाः पि॒तॄणां श॒क्तीर॑नु॒यच्छ॑मानाः।
## इ॒न्द्रा॒ग्निभ्यां॒ कं वृष॑णो मदन्ति॒ ता ह्यद्री॒ धि॒षणा॑या उ॒पस्थे॑ ॥ ३ ॥

मा। छेद्म। र॒श्मीन्। इति॑। नाध॑मानाः। पि॒तॄणाम्। श॒क्तीः। अ॒नु॒ऽयच्छ॑मानाः।
इ॒न्द्रा॒ग्निऽभ्या॑म्। कम्। वृष॑णः। म॒द॒न्ति॒। ता। हि। अद्री॒ इति॑। धि॒षणा॑याः। उ॒पस्थे॑ ॥

**स्कन्द०** य एते [8]सर्वयजमानानां यागनिष्पत्त्यर्थं[8] प्रकाशं कुर्वन्ति [9]एतान् मा छेद्म मा आत्मनि विच्छिद्दाम रश्मीन्। कः पुनः रश्मीनां विच्छेदः। यदर्थं ते प्रकाशं कुर्वन्ति[9] तस्य यागस्य क्रियाघातं [10]मा कार्ष्म[10]। सततयागाद्वयं[11] सुयागान् कुर्यामेत्यर्थः[12]। इति नाधमानाः इति शब्द एवमित्यस्यार्थे। नाधतिर्याच्ञार्थः। एवं याचमानाः। सर्वदा यागक्रियां प्रार्थयमाना इत्यर्थः। पितॄणां शक्तीः 'शक्तिः' ( निघ २,१ ) इति कर्मनाम। पितॄणां च सम्बन्धीनि प्रजोत्पत्त्यादीनि कर्माणि। अनुयच्छमानाः यमिर्बन्धनार्थः। अनुबध्नन्तः। प्रजोत्पत्त्यादिकर्मसन्तानाविच्छेदार्थमित्यर्थः। किं कुर्वन्ति। उच्यते। इन्द्राग्निभ्याम् अर्थाय। कम् इति पदपूरणः। वृषणः वर्षितारः सोमस्य। इन्द्राग्निभ्याम् सोमस्य दातारः[13]। मदन्ति 'मदति' ( निघ ३,१४ ) इत्यर्चतिकर्मा। स्तुवन्तीन्द्राग्नी। किञ्च ता ताविन्द्राग्नी अद्री आदरयितारौ धिषणायाः स्तुतिलक्षणाया वाचः। तथा तथा स्तोतॄणामुपकुरुतो[14] यथा यथा एनौ स्तोतार आद्रियन्त[15] इत्यर्थः। क्व। उपस्थे। उपगम्य ब्राह्मणा देवा वा यत्र तिष्ठन्ति स उपस्थो यज्ञः ॥ ३ ॥

**वेङ्कट०** इन्द्राग्नी! इत्थम् याचमानाः पितॄणाम् बलानि[16] पितृपितामहादिवदनुक्रमेण[17] वयमपि

---

१. °दायी (°यि) ता वि[3]; °दातृतमौ अ[1]; °दातृतरौ वयम् कु. २-२. °तुरश्चस्ताज्जा° ल; °तुरमस्ताज्जा° वि[1] लपं; °तुरः समाप्ताज्जा° वि[2] अ[1]. ३. सुखमाप्त° वि[3]; सुसमा° कु. ४. च कु. ५. नास्ति वि[3] अ[2]. ६. वँहतु वि[2]; वहतुं वि[3] अ[1,2] कु. ७-७. त्रुटितम् वि[3] अ[2]. ८-८. °जमानानिष्प° ति. ९-९. नास्ति अ ति. १०-१०. मा कार्ष मूको. ११. °यागादहं मूको. १२. कुर्यामि° मूको. १३. नास्ति अ ति. १४. °पकुरुतं मूको. १५. आहूयन्त ति. १६. नास्ति कु. १७. °क्षाद्यनु° वि[3] अ[2].

नियच्छन्तः रश्मीन् पुत्रान् मा छेद्म इति पुत्रानाशास्ते । इन्द्राग्निभ्याम् अन्यम् कम् देवम् ग्रावाणः[१] मदन्ति । तौ हि शत्रूणां मादयितारौ सोमाभिषवसाधनभूतायाः[२] धिषणायाः[३] समीपे भवतः । 'धिषणासि पर्वत्या[४] ··· धिषणासि पार्वतेयी' ( तै १,१,६,१ ) इति यजुषी भवतः । हविर्यज्ञस्य सोमयज्ञसाम्यं ते सम्पादयतः । तयोर्दृष्टो धिषणाशब्दः । अपि वा कम् अन्यं यजमानाः स्तुवन्ति । तौ हि स्तुतेः[५] समीपे भवत इति[६] ॥ ३ ॥

मुद्गल० रश्मीन् रश्मिशब्दो रज्जुवाची । यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति एवमविच्छिन्नान् पुत्रपौत्रादीन् मा छेद्म मा विच्छिन्नान् कुर्म इति बुद्ध्या नाधमानाः इन्द्राग्न्योः सकाशात् तथाविधान् पुत्रादीन् अनुयाचमानाः तदनन्तरम् पितृणां शक्तीः शक्त्युत्पादकान् वीर्योत्पादकान् तान् अनुयच्छमानाः अनुक्रमेण नियतान् कुर्वन्तः । वृषणः सेक्तारः पुत्रोत्पादनसमर्थाः । सपत्नीका इत्यर्थः । एवंभूता यजमानाः इन्द्राग्निभ्याम् कम् सुखं यथा भवति तथा मदन्ति स्तुवन्ति । हि यस्मात् अद्री [७]शत्रूनाद्दणन्तौ हिंसन्तौ[७] विदारयन्तौ ताविन्द्राग्नी धिषणायाः स्तुत्याः उपस्थे उपस्थाने समीपे भवतः । तस्मात् तत्सान्निध्याय स्तुवन्तीति भावः ॥ ३ ॥

युवाभ्यां॑ दे॒वी धि॒षणा॒ मदा॒येन्द्रा॑ग्नी॒ सोम॑मुश॒ती सु॑नोति ।
ताव॑श्विना भद्रहस्ता सुपाणी॒ आ धा॑वतं॒ मधु॑ना पृ॒ङ्क्तम॒प्सु ॥ ४ ॥

यु॒वाभ्या॑म् । दे॒वी । धि॒षणा॑ । मदा॑य । इन्द्रा॑ग्नी॒ इति॑ । सोम॑म् । उ॒श॒ती । सु॒नो॒ति॒ ।
तौ । अ॒श्वि॒ना॒ । भ॒द्र॒ऽह॒स्ता॒ । सु॒पा॒णी॒ इति॑ सु॒ऽपा॒णी॒ । आ । धा॒व॒त॒म् । मधु॑ना । पृ॒ङ्क्तम् । अ॒प्ऽसु ।

स्कन्द० युवाभ्याम् इति षष्ठ्यर्थे चतुर्थी । मदाय इत्येतेन चास्य सम्बन्धः । तावश्विना इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । युवयोर्मदार्थं देवी धिषणा दीव्यतिरत्र स्तुत्यर्थः । स्तोत्री[८] अस्मदीया वाक् । हे इन्द्राग्नी ! सोमम् उशती तांस्तानभिप्रेतानर्थान् कामयमाना सुनोति अभिषुणोति । यच्च देवनकामनाभिषवेषु आत्मनः कर्तृत्वं तदिदं कारणभूतायां वाच्युपचर्यते । ययोर्युवयोर्मदार्थमहं स्तुतिलक्षणया वाचा तांस्तानभिप्रेतान् उशन् सोममभिषुणोमीत्यर्थः । तौ हे[९] अश्विनौ ! अश्ववन्तौ ! भद्रहस्ता ! कल्याणहस्तौ ! । मङ्गल्यहस्तावित्यर्थः । सुपाणी ! शोभनहस्तौ ! । सुरूपहस्तावित्यर्थः । आ धावतम् 'धावति' ( निघ २,१४ ) इति गतिकर्मा । आगच्छतम् । आगत्य च मधुना पृङ्क्तम् मधुस्वादेन सोमेन सम्पर्चयतम्[१०] आत्मानम् । अप्सु तृतीयार्थे सप्तमी । तच्छ्रुतेश्च योग्यक्रियापदाध्याहारः । अद्भिः संस्कृतेन । मधुरं सोममद्भिः संस्कृतं पिबतमित्यर्थः ॥ ४ ॥

वेङ्कट० इन्द्राग्नी ![११] युवयोः मदाय श्रद्धाना धिषणा सोमम् अभिषुणोति । तौ अश्ववन्तौ ! भजनीयबाहू ! कल्याणपाणी ! भवदीयेन मधुना आगच्छतम् । तत् अस्मिन् अभिषूयमाणे सोमे सम्पर्चयतमिति[१२] ॥ ४ ॥

---

१. °वाणाः ल. २. °षवणसा° कु. ३. °धिषव° वि[१,३] अ[२]. ४. पर्वती ल. ५. स्तुवतः वि[१] अ[१] कु. ६. नास्ति कु. ७-७. शत्रूणां तृणन्तौ मूको. ८. नास्ति वि. ९. नास्ति कु अ. १०. °पर्कय° मूको. ११. देवी कु; नास्ति अ[१] ल. १२. °तम् कु.

**मुद्गल०** हे इन्द्राग्नी! युवाभ्याम् मदाय युवयोर्हर्षाय देवी द्योतमाना उशती युवां कामयमाना धिषणा मन्त्ररूपा वाक् सोमं सुनोति अभिषुणोति। 'यद्वा धिषणा अधिषवणचर्म। द्योतमानं तद्युवयोर्मदं कामयमानं सत् सोममभिषुणोति'[1]। ग्रावभिः स्वस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम्। अश्विना! अश्ववन्तौ! भद्रहस्ता! शोभनदोर्दण्डौ! सुपाणी! मणिबन्धादूर्ध्वभागः पाणिः। शोभनपाणी! एवंभूतौ हे इन्द्राग्नी! तौ युवाम् आ धावतम् शीघ्रमागच्छतम्। आगत्य च अप्सु उदकेषु वर्तमानेन मधुना माधुर्योपेतेन सारांशेन पृङ्क्तम् अस्मदीयं सोमं संयोजयतम् ॥ ४ ॥

युवामिन्द्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।
तावासद्या बर्हिषि यज्ञे अस्मिन् प्र चर्षणी मादयेथां सुतस्य ॥ ५ ॥

युवाम् । इन्द्राग्नी इति । वसुनः । विऽभागे । तवःऽतमा । शुश्रव । वृत्रऽहत्ये ।
तौ । आऽसद्य । बर्हिषि । यज्ञे । अस्मिन् । प्र । चर्षणी इति । मादयेथाम् । सुतस्य ॥ ५ ॥

**स्कन्द०** युवाम् हे इन्द्राग्नी! वसुनः धनस्य विभागे तवस्तमा 'तवः' ( निघ २,९ ) इति बलनाम। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः। बलवत्तमौ। शुश्रव श्रुतवानहम्। धनं स्तोतृभ्यो विभजतोर्युवयोर्ये प्रतिबन्धे वर्तन्ते तान् बलेन हन्तुमतिशयेन समर्थौ युवामहं शुश्रावेत्यर्थः। न च केवले वसुनो विभागे। किं तर्हि। वृत्रहत्ये वृत्रहनने। यावीदृशौ स्थः तौ आसद्य निषद्य बर्हिषि यज्ञे अस्मिन् अस्मदीये हे चर्षणी! मनुष्यनाम वा चर्षणीशब्दः (तु. निघ २,३)। अथवा 'विचर्षणिः, विश्वचर्षणिः' (निघ ३,११) इति पश्यतिकर्मसु पाठात् द्रष्टृशब्दपर्यायः। मनुष्याकारौ द्रष्टारौ वा सर्वार्थानाम्। प्र मादयेथाम् 'प्रकर्षेण मादयेथां' तर्पयेथाम् आत्मानम्। सुतस्य तृतीयार्थे षष्ठ्येषा। षष्ठीश्रुतेर्वैकदेशेनेति शेषः। सुतेन सोमेन सुतस्य सोमस्य वैकदेशेन स्वांशलक्षणेन ॥ ५ ॥

**वेङ्कट०** युवाम् इन्द्राग्नी! सङ्ग्रामे बलवत्तमौ[3] वसुनः विभागे उद्युक्तावहमश्रौषम्। अस्मिन् यज्ञे तौ[4] स्तीर्णे बर्हिषि आसद्य[5] द्रष्टारौ! प्रकर्षेण माद्यतं सोमेन ॥ ५ ॥

**मुद्गल०** हे इन्द्राग्नी! वसुनः धनस्य विभागे स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ युवाम् वृत्रहत्ये वृत्रस्यासुरस्य हनने तवस्तमा अतिशयेन बलिनौ प्रवृद्धतमौ वा शुश्रव अश्रौषम्। हे चर्षणी! सर्वस्य द्रष्टाराविन्द्राग्नी! तौ युवाम् अस्मदीये अस्मिन् यज्ञे बर्हिषि वेद्यामास्तीर्णे दर्भे आसद्य उपविश्य सुतस्य अभिषुतस्य सोमस्य पानेन प्र मादयेथाम् प्रकर्षेण तृप्तौ भवतम् ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये अष्टाविंशो वर्गः ॥

प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ॥ ६ ॥

---

१-१. नास्ति मूको. २-२. नास्ति अ कु. ३. बलवन्तौ वि[1] ल. ४. तेनस्ते (?°ते) न वि[1] अ[2].
५. °द्य यज्ञे ल.

प्र । चर्षणिऽभ्यः । पृतनाऽहवेषु । प्र । पृथिव्याः । रिरिचाथे इति । दिवः । च ।
प्र । सिन्धुऽभ्यः । प्र । गिरिऽभ्यः । महिऽत्वा । प्र । इन्द्राग्नी इति । विश्वा । भुवना । अति । अन्या ॥

**स्कन्द०** प्र इत्येषोऽतीत्येतस्य स्थाने[1] । प्रतिशब्दं च रिरिचाथे इत्याख्यातमनुषक्तव्यम् । अतिरिच्येथे युवाम् । कुतः । चर्षणिभ्यः । क्व[2] । पृतनाहवेषु सङ्ग्रामाह्वानेषु । केन । सामर्थ्याद् बलेन । किञ्च अतिरिच्येथे युवाम् पृथिव्याः दिवः च । न च केवलाभ्यां द्यावापृथिवीभ्याम् । किन्तर्हि[3] । अतिरिच्येथे सिन्धुभ्यः नदीभ्योऽपि । अतिरिच्येथे गिरिभ्यः पर्वतेभ्योऽपि । केन । महित्वा महत्त्वेन । किञ्च अतिरिच्येथे युवां हे इन्द्राग्नी ! विश्वा भुवना अति अन्या विश्वा भुवनेति कर्मश्रुतेरतीति चोपसर्गाद्योग्यक्रियापदाध्याहारः[4] । सर्वाणि भूतान्यतीत्यान्यानि[5] । नान्यः कश्चिदतिरिच्यते यथा युवामित्यर्थः ॥ ६ ॥

**वेङ्कट०** [6]असुराणां सङ्ग्रामाह्वानेषु[6] तत्रत्येभ्यः[7] [8]सर्वेभ्योऽपि मनुष्येभ्यः[8] बलेन[9] अतिरिक्तौ भवतः । एवं पृथिव्यादिभ्योऽपि युवयोर्बलमतिरिक्तं महत्त्वेन[10] । प्र रिरिचाथे इन्द्राग्नी ! सर्वाण्येवान्यानि[11] भुवनानि । उक्तेभ्यो यद्यन्यानि सन्ति तानि चेति । समानार्थम् अतिं दृष्ट्वा [12]प्रो निवर्तत इति[12] ॥ ६ ॥

**मुद्गल०** पृतनाहवेषु सङ्ग्रामेषु रक्षणार्थमाह्वानेषु सत्सु हे इन्द्राग्नी ! आगतवन्तौ युवाम् चर्षणिभ्यः सर्वेभ्योऽपि मनुष्येभ्यः महित्वा महत्त्वेन प्र रिरिचाथे अतिरिच्येथे । सर्वाधिकौ भवथ[13] इत्यर्थः । तथा पृथिव्याः सर्वस्या भूमेः प्र रिरिचाथे । दिवः च प्ररिरिचाथे । सिन्धुभ्यः अपि प्र रिरिचाथे । एवं गिरिभ्यः प्र रिरिचाथे । सिन्धवः स्यन्दनशीला आपः । गिरयः पर्वताः । अपि च हे इन्द्राग्नी ! विश्वा भुवना सर्वाणि भूतजातानि अन्या उक्तव्यतिरिक्तानि यानि सन्ति तानि अति अतीत्य प्र रिरिचाथे अधिकौ भवथः ॥ ६ ॥

आ भरतं शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः ।
इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आसन् ॥ ७ ॥

आ । भरतम् । शिक्षतम् । वज्रबाहू इति वज्रऽबाहू । अस्मान् । इन्द्राग्नी इति । अवतम् । शचीभिः
इमे । नु । ते । रश्मयः । सूर्यस्य । येभिः । सऽपित्वम् । पितरः । नः । आसन् ॥ ७ ॥

**स्कन्द०** आ भरतम् धनानि । आहृत्य च शिक्षतम् दत्तमस्मभ्यम् । हे वज्रबाहू ! [14]वज्रसम्बन्धाद्धस्तावत्र बाहू उच्येते[14] । वज्रहस्तौ ! । किञ्च अस्मान् हे इन्द्राग्नी ! अवतम् पालयतम् । शचीभिः स्वाभिः प्रज्ञाभिः[15] कर्मभिर्वा पालनाख्यैः । किञ्च इमे नु ते इत्यादि । इमे ते रश्मयः सूर्यस्य रश्मयः[1] स्वभूताः । येभिः सपित्वम् सहपानं पितरो नः अस्माकं पितरोऽङ्गिरसः आसन्

---

१. नास्ति अ ति. २. क्वार्थे अ. ३. किन्तु ति. ४. °क्रियाध्या° ति. ५. °नि च अ. ६-६. ···ग्रामा° वि[1] अ[2]. ७. तत्रेव (?°त्ये)भ्यः वि[1] अ[2]. ८-८. सर्वेभ्यो वि[1] अ[2]. ९. अतिशयेन बलेन कु. १०. महत्वे वि[2] लपं. ११. °णि भूतानि वि[1] अ[2]. १२-१२. निवर्तते (?) कु; प्रेदिव° वि[1] अ[2]. १३. भवत मूको. १४-१४. नास्ति ति. १५. नास्ति अ कु.

अस्तिरत्र प्राप्त्यर्थः। प्राप्ताः। दृश्यते ह्यस्तेः प्राप्तौ प्रयोगः। 'यं कामयेत राष्ट्रियमयं[1] राष्ट्रं स्यादिति' ( मै ७,३,३७ ) इति[2]। अङ्गिरसो हि देवानां सखायः। तेषां सखित्वाद्रश्मिभिरन्यैश्च देवैः सहोपपन्नं सहपानम्। कथं पुनरस्यार्धर्चस्य पूर्वेण सहैकवाक्यता। अभिजन्मप्रदर्शनेन। एतदुक्तं भवति — ये रश्मिभिः सह सहपानं[3] प्राप्ता अङ्गिरसस्ते नः पितरः। तेन विशिष्टाभिजनोपेतत्वादन्नदानपालनार्हा वयम्। अतोऽस्मभ्यं दत्तम्, पालयतं चास्मानिति ॥ ७ ॥

**वेङ्कट०** आ भरतम् धनानि। आहृत्य च अस्मभ्यं प्रयच्छतम्। आयुधहस्तौ! अस्मान् इन्द्राग्नी! रक्षतं पालनाख्यैः[4] कर्मभिः। इमे खलु ते रश्मयः सूर्यस्य यैरिन्द्राग्न्योः स्वभूतैरस्माकम् पितरः ऐक्यं गता अङ्गिरसः[5] सूर्यरश्मिभिः[6] आप्याययन्तेति[7] ॥ ७ ॥

**मुद्गल०** हे वज्रबाहू! वज्रहस्तौ! इन्द्राग्नी! आ भरतम् अस्मदर्थं धनमाहरतम्। आहृत्य च शिक्षतम् अस्मभ्यं दत्तम्। अपि च अस्मान् अनुष्ठातॄन् शचीभिः आत्मीयैः कर्मभिः नु क्षिप्रम् अवतम् रक्षतम्। किञ्च सूर्यस्य सूर्यात्मन इन्द्रस्य ते इमे रश्मयः येभिः रश्मिभिः यैरर्चिर्भिः नः अस्माकम् पितरः पूर्वपुरुषाः सपित्वम् सहप्राप्तव्यं स्थानम् आसन् ब्रह्मलोकमगच्छन् ॥ ७ ॥

पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८ ॥

पुरम्ऽदरा। शिक्षतम्। वज्रऽहस्ता। अस्मान्। इन्द्राग्नी इति। अवतम्। भरेषु।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ ८ ॥

**स्कन्द०** हे पुरन्दरा! असुरपुराणां दारयितारौ! शिक्षतम् दत्तमस्मभ्यं हे वज्रहस्ता!। किञ्च अस्मान् हे इन्द्राग्नी! अवतम् भरेषु सङ्ग्रामेषु। तत् नः इत्याद्युक्तार्थम्[8] ( ऋ १,९४,१६ द्र. ) ॥ ८ ॥

**वेङ्कट०** असुरपुराणां दारयितारौ! धनानि प्रयच्छतम् वज्रहस्तौ!। अस्मान् इन्द्राग्नी! रक्षतं च सङ्ग्रामेषु। तन्नः इति[9] ॥ ८ ॥

**मुद्गल०** हे वज्रहस्ता! हस्तेन गृहीतवज्रौ! पुरन्दरा! असुरपुराणां दारयितारौ! इन्द्राग्नी! शिक्षतम् अस्मदपेक्षितं धनं प्रयच्छतम्। अपि च भरेषु सङ्ग्रामेषु अस्मान् अवतम् रक्षतम्। यदनेन सूक्तेन प्रार्थितं तत् अस्मदीयं मित्रादयः ममहन्ताम् पूजयन्तु ॥ ८ ॥

इति प्रथमाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः ॥

[ ११० ]

ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते।
अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः ॥ १ ॥

---

१. राष्ट्रीय° मूको. २. नास्ति मूको. ३. °पानं मूको. ४. नास्ति वि[१,२] अ[१] कु ल लपं. ५. आङ्गि° वि[१] अ[२]. ६. सूर्य र° वि[२,३] अ[१,२]. ७. °ययन्त कु. ८. इति अ ति; नास्ति कु. ९. नास्ति कु.

तत॒म् । मे॒ । अपः॑ । तत् । ऊँ॒ इति॑ । ता॒य॒ते॒ । पुनः॒ इति॑ । स्वादि॑ष्ठा । धी॒तिः । उ॒चथा॑य । श॒स्य॒ते॒ ।
अ॒यम् । स॒मु॒द्रः । इ॒ह । वि॒श्वऽदे॑व्यः । स्वाहा॑ऽकृतस्य । सम् । ऊँ॒ इति॑ । तृ॒प्णु॒त॒ । ऋ॒भ॒वः॒ ॥१॥

**स्कन्द०** 'आर्भवे द्वे' । ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः बभूवुः ( तु. या ११, १६ )। तेऽतिशयवद्भिः कर्मभिर्देवत्वमीयुः । तेऽत्र साहचर्यादन्यतमवचनेनाप्यृभुशब्देन सर्वे प्रतिपाद्यन्ते। तद्देवत्ये द्वे एते सूक्ते। ततम् पूर्वस्मिन् काले विततम् मे मम स्वभूतम् अपः यज्ञाख्यं कर्म। तत् उ तायते पुनः उकार एवार्थे । तदेवेदानीमपि पुनस्तायते । पूर्वस्मिंश्च काले इदानीं चाहं यष्टेत्यर्थः। किञ्च स्वादिष्ठा अतिशयेन स्वाद्वी। मनसः प्रीतिकरीत्यर्थः। धीतिः[1] धीकर्मत्वात् [2]स्तुत्यान् वा प्रति धीयमानत्वात्[2] स्तुतिरत्र धीतिरुच्यते। उचथाय[3] उचथः[3] स्तुतिवचनार्हस्तस्मै। शस्यते[3]। तस्मै स्तुतिरुच्यत इत्यर्थः । किञ्च अयम् समुद्रः समुद्रसदृशो-ऽत्यन्तप्रभूतः सोमः इह यज्ञे विश्वदेव्यः सर्वदेवयोग्यभूतः । सम्यक् स्तुतश्चेत्यर्थः । एतत् सर्वं ज्ञात्वा स्वाहाकृतस्य तृतीयार्थे षष्ठ्येषा। स्वाहाकृतेन सोमेनाहुतेनेत्यर्थः। सम् उ तृप्णुत सम्यक् तृप्यत। उकारस्तु पदपूरणः। हे ऋभवः! ॥ १ ॥

**वेङ्कट०** ततम् मे कर्म[4]। तत् एव पुनः तायते । स्वादुतमा[5] स्तुतिश्च स्तुत्याय ऋभूणां गणाय शस्यते। अपि च अयम् समुद्रसदृशः विश्वदेव्यः सोमः इह सुतः । तेन हुतेन[6] ऋभवः! सन्तृप्यत ॥ १ ॥

**मुद्गल०** [7]'ततं मे' इति नवर्चं पञ्चमं सूक्तम्। कुत्स ऋषिः। पञ्चमीनवम्यौ त्रिष्टुभौ। शिष्टा जगत्यः। ऋभवो देवता†[7] ॥

हे ऋभवः! मे मया अपः अग्निष्टोमादिरूपं कर्म ततम् विस्तारितं बहुशः पूर्वमनुष्ठितम्। तत् उ तदेव पुनः तायते विस्तार्यते। अनुष्ठीयत इत्यर्थः। तत्र स्वादिष्ठा स्वादुतमा अतिशयेन प्रीतिकरी धीतिः स्तुतिश्च उचथाय स्तुत्याय शस्यते पठ्यते। अपि च इह अस्मिन् यागे अयम् समुद्रः समुन्दनशीलो यः सोमरसः विश्वदेव्यः सर्वेभ्यो देवेभ्यः पर्याप्तो यथा भवति तथा सम्पादितः। तस्य स्वाहाकृतस्य स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन सम् उ तृप्णुत सम्यगेव तृप्ता भवत ॥ १ ॥

## आ॒भो॒गयं॒ प्र यदि॒च्छन्त॒ ऐत॒नापा॑काः॒ प्राञ्चो॒ मम॒ के चि॑दा॒पयः॑ ।
## सौध॑न्वनासश्चरि॒तस्य॑ भू॒मनाग॑च्छत सवि॒तुर्दा॒शुषो॑ गृ॒हम् ॥ २ ॥

आ॒ऽभो॒गय॑म् । प्र । यत् । इ॒च्छन्तः॑ । ऐत॑न । अपा॑काः । प्राञ्चः॑ । मम॑ । के । चि॒त् । आ॒पयः॑ ।
सौध॑न्वनासः । च॒रि॒तस्य॑ । भू॒मना॑ । अग॑च्छत । स॒वि॒तुः । दा॒शुषः॑ । गृ॒हम् ॥ २ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'ऋभवो यज्ञियत्वं प्रार्थयमानाः प्रजापतेः सकाशमगमन् । अथ प्रजापतिः सवितारमाहूयावोचत्, एतेऽपि यज्ञिया भवन्त्विति। तथेति सविता प्रतिपद्य तान्

१. नास्ति मूको. २-२. स्तुत्य: वा प्रतिधी° मूको. ३. नास्ति अ ति. ४. नास्ति वि[1] लपं. ५. स्वाधि(? °दि)ष्ठा वि[1] अ[2]. ६. नास्ति वि[1] कु. ७-७. नास्ति मै[2]. † °ताः मै[1].

[1]स्वगृहं नीत्वा[1] द्वादश दिनान्यातिथ्यमेषाम् अकार्षीदिति । तदेतद् वामदेवो वक्ष्यति—'द्वादश द्यून् [2]यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः[2]' ( ऋ४,३३,७ ) इति । तदेवेहाप्युच्यते[3] — आभोगयम् इत्यादिना। आभोगः सम्भोग इति पर्यायौ । आभोग एवाभोगयः । स्वार्थिको यशब्द उपजनः । देवैस्सह सम्भोगम् इच्छन्तः। यज्ञियत्वं प्रार्थयमाना इत्यर्थः । यत् यदा यूयम् प्र ऐतन प्रशब्दोऽत्र धात्वर्थानुवादी । लम्बते प्रलम्बत इति यथा[4] । प्रजापतेः सकाशं गताः स्थ । कीदृशाः । अपाकाः अपक्तव्यप्रज्ञाः । अत्यन्तपरिपक्वप्रज्ञा इत्यर्थः । प्राञ्चः अञ्चु गतिपूजनयोः । प्रगन्तारो देवान् यज्ञान् वा प्रति, प्रकर्षेण वा[5] पूजयितारो देवानाम्, स्वयं वा पूज्याः । मम कुत्सस्य । के चित् आपयः केचित् ज्ञातयः । [6]कुत्सो ह्याङ्गिरसः[6] । ऋभवोऽपि सुधन्वन आङ्गिरसस्य पुत्राः । अत आङ्गिरसत्वात् कुत्सस्य भवन्त्यृभवः केचित् ज्ञातयः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा हे सौधन्वनासः! सुधन्वनः पुत्राः! एकचमसस्य चतुष्टयकरणादेव स्वस्य चरितस्य भूमना माहात्म्येन अगच्छत गताः स्थ सवितुः गृहम् दाशुषः यज्ञियत्वमातिथ्यं वा युष्मभ्यं दत्तवतः ॥ २ ॥

**वेङ्कट०** सुधन्वन[7] आङ्गिरसस्य [8]पुत्रत्वाद् ऋभव आङ्गिरसस्य[8] कुत्सस्य पुरातनाः [9]के चन[9] ज्ञातयो भवन्ति अपक्तव्यप्रज्ञाः[10] । [11]आभोगयम्† आभोग्यम्† । अकारलोपाभावश्छान्दसः[11] । यज्ञे सोमम् इच्छन्तः तपश्चरणाय यदा यूयम् अपक्तव्यप्रज्ञाः[12] गतवन्तः[13], तदा सुधन्वनः पुत्रा ऋभवः! तपश्चरणस्य महत्तया अमृतत्वप्रदातुः[14] सवितुः तपसोऽन्ते देवैरमृतत्वमेषां प्रदातव्यमिति प्रार्थितस्य गृहम् अगच्छत[15] । ॥ २ ॥

**मुद्गल०** हे ऋभवः! अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीनाः मम आपयः प्रापयितारो मदीया ज्ञातयः के चित् एवंभूताः ये केचन यूयम् आभोगयम् उपभोग्यं सोमम्[16] इच्छन्तः यत् यदा प्र ऐतन तपश्चरितुमरण्यं गतवन्तः । ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः । [17]हे सौधन्वनासः! सुधन्वनः पुत्राः![17] तदानीम् चरितस्य समुपार्जितस्य तपसः भूमना भूम्ना महत्त्वेन दाशुषः हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धि गृहम् यज्ञगृहम् अगच्छत तपसा लब्धसोमाः सन्तः कृतपाना यूयं गतवन्तः ॥ २ ॥

तत्स॑वि॒ता वो॑ऽमृत॒त्वमासु॑व॒दगो॑ह्यं॒ यच्छ्र॒वय॑न्त॒ ऐत॑न ।
त्यं चि॑च्चम॒सम॑सु॑रस्य॒ भक्ष॑ण॒मेकं॒ सन्त॑मकृणुता॒ चतु॑र्वयम् ॥ ३ ॥

तत् । स॒वि॒ता । व॒: । अ॒मृ॒त॒ऽत्वम् । आ । अ॒सु॒व॒त् । अगो॑ह्यम् । यत् । श्र॒वय॑न्तः । ऐत॑न ।
त्यम् । चि॒त् । च॒म॒सम् । असु॑रस्य । भक्ष॑णम् । एक॑म् । सन्त॑म् । अ॒कृ॒णु॒त॒ । चतु॑ःऽवयम् ॥ ३ ॥

**स्कन्द०** तत् तदा सविता वः युष्माकम् अमृतत्वम् देवत्वम् आ असुवत् अनुज्ञातवान् । अत्यन्ततेजस्वित्वात् गूहितुमशक्यं सवितारं प्रति यत् यदा श्रवयन्तः हविर्लक्षणमातिथ्यसम्बन्धि

---

१-१. गृहीत्वा ति. २-२. °गोह्यस्या कु. ३. तदेतदिहोच्यते ति. ४. नास्ति अ ति. ५. नास्ति कु. ६-६. कुत्सोऽप्याङ्गि° ति. ७. सौधन्वना वि[1] ल लपं. ८-८. नास्ति अ[1] कु. ९-९. तेन च वि[1] लपं; केन च वि[2]. १०. अवक्तव्य° वि[1,2] अ[1] लपं; °ज्ञा अत्यन्तपरिपक्वप्रज्ञाः वि[3] अ[2]. ११-११. °यम्··· कार° वि[3] अ[2]. † अभो° कु. १२. अवक्त° वि[1,2] लपं. १३. आग° वि[3] अ[2]. १४. अमृतप्रदा° वि[1] ल लपं. १५. ततः कथमभूदित्याह—'तत्सविता' इति ल. १६. स्तोमं मै[1]. १७-१७. नास्ति मूको.

वा अन्नमिच्छन्तः ऐतन गताः स्थ। यद्वाऽऽतिथ्यमनुभवितुं सवितुर्गृहं गता इत्यर्थः। त्यम् चित् तं चित्। तच्छब्दसमानार्थत्यच्छब्दश्रुतेः 'एकं चमसं चतुरः कृणोतन' ( ऋ १,१६१,२ ) इत्यादिमन्त्रान्तरदृष्टार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। चिच्छब्दोऽपि चार्थे। यो देवैः प्रहितोऽग्निरेकं चमसं चतुर इत्येवमुपन्यस्तवान् तं चमसम् असुरस्य भक्षणम् 'असुरितिः प्राणनाम' ( या ३,८ )। तद्वानसुरः। कोऽसौ। त्वष्टा। कुत एतत्। 'उत त्यं चमसम्' ( ऋ १,२०,६ ) इति मन्त्रान्तरदर्शनात्। प्राणवतस्त्वष्टुर्भक्षणम् एकम् सन्तम् अकृणुत कृतवन्तः स्थ। चतुर्वयम् वेतिर्गत्यर्थः (तु. निघ २,१४)। चतुर्गतिम्[1]। एकस्माच्चमसात् तदविनाशेन चतुरश्चमसान् कृतवन्तः स्थेत्यर्थः ॥३॥

**वेङ्कट०** [2]ततः कथमभूदित्याह — †तत्सविता इत्यादि†[2]। तदा सविता युष्माकम् अमृतत्वम् प्रायच्छत्, यदा गूहितुम् अशक्यं सवितारम् अन्नम् इच्छन्तो गतवन्तः, तं च चमसम् सोमस्य भक्षणम् एकं सन्तम्[3] अकृणुत चतुर्व्यूहम् ॥३॥

**मुद्गल०** हे ऋभवः! तत् तदानीम् सविता सर्वस्य प्रेरको देवः वः युष्माकम् अमृतत्वम् देवत्वम् आ असुवत् आभिमुख्येन प्रेरितवान्। दत्तवानित्यर्थः। यत् यदा यूयम् अगोह्यम् गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारम् श्रवयन्तः अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः ऐतन आगच्छत। तदानीमिति पूर्वेणान्वयः। यस्मात् यूयं देवैराज्ञापिताः सन्तः असुरस्य त्वष्टुः सम्बन्धिनम्। तेन निर्मितमित्यर्थः। भक्षणम् सोमपानसाधनम् त्यम् तम् चमसम् एकम् चित् असहायमेव सन्तम् चतुर्वयम् चतुर्व्यूहम् अकृणुत कृतवन्तः। सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः ॥ ३ ॥

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥ ४ ॥

विष्ट्वी। शमी। तरणिऽत्वेन। वाघतः। मर्तासः। सन्तः। अमृतऽत्वम्। आनशुः।
सौधन्वनाः। ऋभवः। सूरऽचक्षसः। संवत्सरे। सम्। अपृच्यन्त। धीतिऽभिः ॥ ४ ॥

**स्कन्द०** विष्ट्वी इति न कर्मनाम शमी इत्यनेन पौनरुक्त्यप्रसङ्गात्। किं तर्हि। विषेर्व्याप्त्यर्थस्य क्रियाशब्दोऽयं विष्ट्वीति। विष्ट्वा व्याप्य[4]। कृत्वेत्यर्थः। शमी कर्मनामैतत् ( तु. निघ २,१ )। एकचमसचतुष्टयकरणादीनि कर्माणि। तरणित्वेन 'तरणिः' (निघ २,१०) इति क्षिप्रनाम। क्षिप्रत्वेन। शीघ्रमित्यर्थः। वाघतः ऋत्विङ्नामैतत् (तु. निघ ३,१८)। सामर्थ्याच्चेहान्तर्णीतमत्वर्थम्। ऋत्विग्वन्तः। यष्टार इत्यर्थः। मनुष्याः सन्तः अमृतत्वम् देवत्वम् आनशुः प्राप्ताः। के। उच्यते। सौधन्वनाः[5] सुधन्वनः पुत्राः ऋभवः नाम। कीदृशाः। उच्यते। सूरचक्षसः सूर्यसमानदर्शनाः[6]। सूर्यवत्तेजस्विनः प्रज्ञावन्तो वेत्यर्थः। प्राप्य च देवत्वं संवत्सरे सम् अपृच्यन्त धीतिभिः धीतिशब्दः कर्मवचनः। संवत्सरे यावन्ति कर्माणि यज्ञाख्यानि तैः सर्वैः सम्पृक्ताः। सर्वयज्ञेषु भागार्हत्वं प्राप्ता इत्यर्थः ॥ ४ ॥

**वेङ्कट०** कृत्वा कर्माणि क्षिप्रत्वेन वोढारः मरणधर्माणः[7] सन्तः अमृतत्वम् आनशिरे। सौधन्वनाः

---

१. °गतिः मूको. २-२. नास्ति ल. †-† नास्ति कु. ३. नास्ति कु. ४. व्याप्त्वा मूको.
६. °समानप्रकाशाः अ; सूर्यसमानाः वि. ७. अमरण° कु.

ऋभवः सूक्ष्मदर्शनाः संवत्सरे देवैः सङ्गता आसन् चमसव्यूहादिभिः कर्मभिः। ऋभूणामादित्यरश्मिभिरैक्यम् 'अगोह्यस्य यदसस्तना' ( ऋ १,१६१,११ ) इत्यस्यामुक्तमिति[1] ॥ ४ ॥

**मुद्गल०** वाघतः ऋत्विग्भिरुपेता ऋभवः[2] शमी यागदानादिकर्माणि अन्यान्यपि 'एकं चमसं चतुरः कृणोतन' ( ऋ १,१६१,२ ) इत्यादिना देवैरुक्तानि कर्माणि तरणित्वेन क्षिप्रत्वेन[3] शीघ्रेण विष्ट्वी व्याप्य। कृत्वेत्यर्थः। एवं कर्माणि कृत्वा मर्तासः मनुष्या अपि सन्तः अमृतत्वम् देवत्वम् आनशुः आनशिरे। कृतैः कर्मभिर्लेभिरे। देवत्वं प्राप्य च सौधन्वनाः सुधन्वनः पुत्राः सूरचक्षसः सूर्यसमानप्रकाशाः ते ऋभवः संवत्सरे संवत्सरावयवभूते वसन्तादिकालेऽनुष्ठेयैः धीतिभिः अग्निष्टोमादिकर्मभिः सम् अपृच्यन्त संयुक्ता अभवन्। हविर्भागार्हा बभूवुरित्यर्थः ॥ ४ ॥

क्षेत्र॑मिव॒ वि म॑मु॒स्तेज॑नेन॒ँ एकं॒ पात्र॑मृ॒भवो॒ जेह॑मानम् ।
उप॑स्तुता उप॒मं नाध॑माना॒ अम॑र्त्येषु॒ श्रव॑ इ॒च्छमा॑नाः ॥ ५ ॥

क्षेत्र॑म्ऽइव । वि । म॒मुः॒ । तेज॑नेन । एक॑म् । पात्र॑म् । ऋ॒भवः॑ । जेह॑मानम् ।
उप॑ऽस्तुताः । उ॒प॒ऽमम् । नाध॑मानाः । अम॑र्त्येषु । श्रवः॑ । इ॒च्छमा॑नाः ॥ ५ ॥

**स्कन्द०** क्षेत्रमिव वि ममुः। यथा कश्चिद्रज्ज्वा दण्डेन वा क्षेत्रं विमिमीते[4], तद्वद्विमितवन्त इत्यर्थः। कीदृशेन। तेजनेन तिज निशाने[5]। निशितेन। केन। सामर्थ्याद् व्यथनेन। तेन हि रथकारा विमिमते। अथवा तेजनशब्दः तेजःपर्यायः। स्वेन तेजसा। किं विममुः। एकम् चमसाख्यं पात्रम्। के। ऋभवः। जेहमानम् 'जेहते' ( निघ २,१४ ) इति गतिकर्मा। चतुर्धागतम्[6]। चतुष्ट्वं प्रतिपद्यमानमित्यर्थः। कीदृशाः। उपस्तुताः उपेत्येतत् समित्येतस्य स्थाने। सर्वस्तोतृभिः संस्तुताः[7]। उपमं नाधमानाः 'उपमे' ( निघ २,१६ ) इत्यन्तिकनाम। अन्तरेणापि भावप्रत्ययं सामर्थ्यादिहान्तिकत्वे द्रष्टव्यम्। नाधिर्याच्ञार्थः। सन्निकृष्टत्वं प्रार्थयमानाः। कस्य। सामर्थ्याद्देवानाम्। देवेष्वन्तर्गतिमिच्छन्त इत्यर्थः। न चान्तर्गतिमेव केवलाम्। अमर्त्येषु निर्धारणे[8] चात्र सप्तमी। देवानां मध्ये। 'श्रवः इच्छमानाः'[9]। हविर्लक्षणमन्नमिच्छन्त इत्यर्थः ॥ ५ ॥

**वेङ्कट०** मानदण्डेन भूमिम् इव शस्त्रेण विकर्तनार्थं हस्तात् हस्ते सञ्चरमाणम् एकम् पात्रम् विविधं कृतवन्तः, समीपस्तुता देवानां समीपं कामयमाना देवेषु सोमम् इच्छमानाः ॥ ५ ॥

**मुद्गल०** उपस्तुताः समीपस्थैर्ऋषिभिः स्तुताः ऋभवः जेहमानम् होमक्रियां प्रति प्रयतमानम् एकम् असहायम् पात्रम् पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन क्षेत्रमिव भूमिमिव तेजनेन तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुम् वि ममुः विशेषेण मानं कृतवन्तः। किमिच्छन्तः। उपमम् सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नम् नाधमानाः याचमानाः। एतदेव विवृणोति। अमर्त्येषु मरणरहितेषु देवेषु मध्ये श्रवः हविर्लक्षणम् अन्नम् इच्छमानाः इच्छन्तः। देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुरश्चमसान् अकार्षुरित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये त्रिंशो वर्गः ॥

---

१. °क्तम् कु. २. ऋतवः मै[2]. ३. नास्ति मै[1]. ४. विमिमते मूको. ५. निशातने मूको. ६. चतुर्धा अ. ७. संस्कृताः अ. ८. °णे षष्ठी अ कु. ९-९. नास्ति मूको.

आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना ।
तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन् दिवो रजः ॥ ६ ॥

आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् । जुहवाम । विद्मना ।
तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजम् । अरुहन् । दिवः । रजः ॥ ६ ॥

**स्कन्द०** आ इत्युपसर्गो जुहवाम इत्याख्यातेन सम्बन्धयितव्यः । मनीषाम् स्तुतिम् अन्तरिक्षस्य[1] षष्ठीश्रुतेरत्र योग्यां सदृशीं वेत्यध्याहर्तव्यम् । अतिमहतोऽन्तरिक्षस्यापि योग्यां सदृशीं वा । अत्यन्तमहती-मित्यर्थः । नृभ्यः मनुष्याणामृभूणामर्थाय । मनुष्यानृभून् स्तोतुमित्यर्थः । स्रुचेव घृतम् आ जुहवाम आकारोऽत्र मर्यादायाम् । यथा कश्चिदाहवनीयादौ स्रुचा घृतं मर्यादया प्रक्षिपेद् एवं प्रक्षिपामो-च्चारयामेत्येतदाशास्महे । विद्मना स्वेन ज्ञानेन । ये ऋभवः किं कृतवन्तः । तरणित्वा क्षिप्रत्वेन ये पितुः सर्वप्राणिनां पितृभूतस्य पालयितुर्वा अस्य सवितुः स्वभूतम् सश्चिरे सश्चतिर्गतिकर्मा (तु. निघ २, १४)। सोपसर्गार्थेऽयं द्रष्टव्यः । अधिगतवन्तः । लब्धवन्त इत्यर्थः । ऋभवः वाजम्[2] आतिथ्यसम्बन्धि अन्नम् अरुहन्[2] आरूढवन्तश्च[3] दिवः अवयवभूतम् रजः लोकम् । देवलोकं चारूढवन्त इत्यर्थः ॥ ६ ॥

**वेङ्कट०** यथा स्रुचा घृतम् आजुह्वति एवं वयम् अन्तरिक्षस्य नेतृभ्यो मध्यमस्थानपठितेभ्यः स्तुतिं कुर्मः प्रज्ञानेन । क्षिप्रत्वेन ये पितृभूतस्य अस्य सवितुः अमृतम्[4] आस्वादितवन्तः[5] ते दिवः लोकाद् अन्नं सोमात्मकम् अधिष्ठितवन्तः । देवेभ्यः सोमपीथं[6] प्राप्ता इति[7] ॥ ६ ॥

**मुद्गल०** अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य सम्बन्धिभ्यः नृभ्यः यज्ञस्य नेतृभ्यः ऋभुभ्यः ऋभवो हि यज्ञस्य नेतारः, तेन हि देवत्वं प्राप्ताः । स्रुचेव यथा स्रुचा जुह्वा घृतम्[8] क्षरण-शीलाज्योपेतं[9] हविः आ जुहवाम यथाशास्त्रं प्रयच्छाम । एवमेव मनीषाम् स्तुतिम् विद्मना वेदनेन कुर्म इति शेषः । अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्य अस्य सूर्यस्य तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे सूर्यरश्मिभूताः सन्तः प्रापुः । तदुक्तम् — 'आदित्यरश्मयोऽपि ऋभव उच्यन्ते' ( या ११,१६ ) इति । ते ऋभवः दिवः रजः द्योतमानस्य स्वर्गलोकस्य सम्बन्धिनम् वाजम् सोमलक्षणमन्नम् अरुहन् यागदानादिभिः कर्मभिरन्यैश्च वेदोक्तैश्चमसचतुष्टय-करणादिकैः प्राप्नुवन् ॥ ६ ॥

ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः ।
युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम् ॥ ७ ॥

ऋभुः । नः । इन्द्रः । शवसा । नवीयान् । ऋभुः । वाजेभिः । वसुऽभिः । वसुः । ददिः ।
युष्माकम् । देवाः । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुतीः । असुन्वताम् ॥ ७ ॥

**स्कन्द०** ऋभुः नः अस्माकम् इन्द्रः च ऋभूणां सखित्वात् । अथवा इन्द्र इति ऋभोर्विशेषणम् ।

---

१. °क्षस्य अपि वि. २. नास्ति मूको. ३. °वन्तः अ. ४. अमृतत्वम् वि[1] अ[2] कु. ५. आसादि° कु. ६. सोमपथं सोमवा(? °पा)इत्वम् वि[1] अ[2]. ७. नास्ति कु. ८. नास्ति मै[2] ९. शीलाज्यो° मै[2].

इन्द्रसदृशोऽत्यन्तेश्वरो वा । शवसा बलेन सामर्थ्यलक्षणेन । यदस्माकं स्तुतिकरणसामर्थ्यं तेन सर्वेण । नवीयान् अतिशयेन स्तुत्यः । किञ्च ऋभुः वाजेभिः अन्यतरवचनेनापि वाजशब्देनात्र साहचर्याद् वाजो विभ्वा चोच्येते । व्यत्ययेन च[1] द्विवचनस्य स्थाने बहुवचनम् । वाजविभ्वाभ्यां वसुभिः च सह वसुः अन्तर्णीतमत्वर्थमेतत् । धनवान् । ददिः स्तोतृभ्यो यष्टृभ्यश्च साधु दाता । किम् । सामर्थ्यात् सर्वानभिप्रेतानर्थान्[2] । अथवा वसुरिति व्यत्ययेन पुँल्लिङ्गता । वसु ददिः । धनं दातेत्यर्थः । आर्भवत्वाच्चास्य सूक्तस्य ऋभुविभ्वावाजानामेवात्र प्राधान्यं द्रष्टव्यं न सहयोगमात्रं निर्दिष्टानां वसूनामपि । परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । युष्माकम् हे देवाः! अवसा तर्पणेन हेतुना । युष्मान् सोमेन तर्पयन्त इत्यर्थः । क । अहनि यागदिवसे । प्रिये सर्वमनुष्याणाम् । अभि तिष्ठेम अभितिष्ठतिरत्र सामर्थ्याज्जयार्थः । जयेम वयम् । पृत्सुतीः पृत्सु तायन्ते विस्तीर्यन्त इति पृत्सुतयः सेनाः । असुन्वताम् सोमाभिषवमकुर्वतां शत्रूणां स्वभूताः । ये युष्मान्न यजन्ते ते[3] अस्मच्छत्रवः, तेषां स्वभूता इत्यर्थः ॥ ७ ॥

वेङ्कट० ऋभुः अस्मभ्यं बलेन सर्वदा नवतरो भवति । तथा[4] वासयितृभिः वाजेभिः सह वसूनां दाता भवति । ऋभुर्विभ्वा वाज इति त्रय ऋभवः, तत्र प्रथमोत्तमाभ्यां बहुवत् निगमा भवन्ति[5] ( तु० या ११,१६ ) । युष्माकम् ऋभवः! रक्षणेन प्रकाशकानां[6] प्रियेऽस्मिन् दिवसे अयजमानानां[7] सेना वयम् अभिभवेम ॥ ७ ॥

मुद्गल० ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र शवसा बलेन नवीयान् नवतरः प्रशस्ततरः ऋभुः नः अस्माकम् इन्द्रः परमेश्वरः । अस्माकं रक्षक इत्यर्थः । अपि च वाजेभिः वाजैरस्मभ्यं दातव्यैरन्नैः वसुभिः निवासहेतुभिर्धनैश्च स ऋभुः वसुः अस्माकं निवासयिता । अत एव ददिः तेषामन्नानां धनानां दाता भवतु । परोऽर्धर्चः प्रत्यक्षकृतः । हे देवाः! दानादिगुणयुक्ता ऋभुप्रभृतयः! युष्माकम् सम्बन्धिना अवसा रक्षणेन युक्ते प्रिये अस्माकमनुकूले अहनि दिवसे वर्तमाना वयम् असुन्वताम् सुन्वद्यजमानविरोधिनां शत्रूणाम् पृत्सुतीः सेना अभि तिष्ठेम ॥ ७ ॥

**निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः ।**
**सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन ॥ ८ ॥**

निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनरिति ।
सौधन्वनासः । सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥ ८ ॥

स्कन्द० अत्रेतिहासमाचक्षते — 'ऋषेः कस्यचिदग्निहोत्रधेनुस्तरुणवत्सा ममार । तस्यां विकर्तितायाम् आरुदता[8] वत्सेन उद्वेजित ऋभून् स्वपितरौ वृद्धौ पुनर्युवानौ कुर्वतो ददर्श । तानुवाच, ममाप्यग्निहोत्रधेनुं मृतां पुनर्जीवयतेति । तस्य स्वमाहात्म्येन तस्माच्चर्मणः तामेव गाम् अशेषावयवोपेतां चक्रुः' इति । तदेतदिहोच्यते — निश्चर्मण इत्यादिना । विकर्तिताया गोश्चर्मणः हे ऋभवः! यूयं तामेव गाम् अपिंशत पिशिः अवयवे । अवयववतीं कृतवन्तः । सर्वावयवोपेताम्

---

१. नास्ति अ ति. २. सर्वाभिप्रेतार्थान् ति. ३. नास्ति अ कु. ४. तदा कु. ५. नास्ति वि[1] अ[2]. ६. °नां देवानाम् वि[1] अ[2]. ७. यज° अ[1] कु. ८. नास्ति अ.

उदपादयन्तेत्यर्थः[1]। उत्पाद्य च सम् वत्सेन असृजत संमार्जितवन्तः सङ्गमितवन्तः[2] स्थ तां गाम् मातरं पुनः[3]। कदा। उच्यते। सौधन्वनासः! सुधन्वनः पुत्राः! यदा स्वपस्यया शोभनमपः कर्म यस्य स स्वपाः। तदिच्छा स्वपस्या तया[4]। शोभनकर्मकारित्वनिमित्तयशइच्छयेत्यर्थः। हे नरः! मनुष्याः! जिव्री जीर्णौ सन्तौ पुनः युवानौ स्वौ मातापितरौ अकृणोतन कृतवन्तः ॥ ८ ॥

**वेङ्कट०** कस्यचित् ऋषेः धेन्वां मृतायां तस्याः चर्म [5]स न्यदधात्[5]। अथ वत्सं रुदन्तं दृष्ट्वा ऋभूनस्तौत्। अथ ते तच्चर्मादाय काञ्चन धेनुं शिल्पकौशलेन कृत्वा बहिश्चर्मणा सन्धाय तपोमाहात्म्येन तां सप्राणां चक्रुः। अथ तेन वत्सेन पुनः अपि ताम् मातरम् समसृजन्[6]। निर्पिंशतिः सन्धानकर्मा[7]। सौधन्वनाः! शोभनकर्मेच्छया नेतारः! जीर्णावात्मीयौ पितरौ युवानौ अकृणोतन[8] ॥ ८ ॥

**मुद्गल०** पुरा कस्यचित् ऋषेर्धेनुर्मृता। स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभुं तुष्टाव। ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा [10]संवीय तेन वत्सेन[10] समयोजयन्निति। अयमर्थः पूर्वार्धेन प्रतिपाद्यते। हे ऋभवः! यूयम् चर्मणः चर्मणा गाम् धेनुम् निः अपिंशत निःशेषेणाश्लिष्टां संयुक्ताम् अकुरुत। तदनन्तरम् मातरम् तां गाम् पुनः वत्सेन सम् असृजत संसृष्टामकुरुत समगमयतेति यावत्। अपि च हे सौधन्वनासः! सुधन्वनः आङ्गिरसस्य[11] पुत्राः! नरः! यज्ञस्य नेतार ऋभवः! स्वपस्यया शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत्। जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनर्यौवनोपेतौ अकृणोतन यूयम् अकुरुवम् ॥ ८ ॥

वाजे॑भिर्नो॒ वाज॑सातावविड्ढ्यृभु॒माँ इ॑न्द्र चि॒त्रमा द॑र्षि॒ राधः॑ ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ९ ॥

वाजे॑भिः । नः॒ । वाज॑ऽसातौ । अ॒वि॒ड्ढि॒ । ऋ॒भु॒ऽमान् । इ॒न्द्र॒ । चि॒त्रम् । आ । द॒र्षि॒ । राधः॑ ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ९ ॥

**स्कन्द०** वाजेभिः इत्यन्यतरवचनेनापि वाजशब्देन साहचर्यात् त्रयोऽपि ऋभव उच्यन्ते। वाजप्रभृतिभिः ऋभुभिः[12] सह नः अस्मान् वाजसातौ सङ्ग्रामे अविड्ढि अवपालय। किञ्च ऋभुमान् ऋभुभिः संयुक्तः सन्। ऋभुभिः सहेत्यर्थः। हे इन्द्र! चित्रम् विचित्रं पूज्यं वा आ दर्षि[13] आदारय। देह्यस्मभ्यमित्यर्थः। किम्। राधः धनम्। आर्भवत्वाच्च सूक्तस्य उपसर्जनतयापि निर्दिष्टानामृभूणामेवात्र प्राधान्यं द्रष्टव्यम्। इन्द्रस्य तत्सखत्वात्[14] गुणभावेनोपादानम्। तत् नः इत्याद्युक्तार्थम्[15] ( ऋ १,९४,१६ द्र. ) ॥ ९ ॥

**वेङ्कट०** वाजेन भ्रात्रा[16] सहितैः भवद्भिः सह अस्मान् सङ्ग्रामे रक्ष। ऋभुभिः[17] सहितस्त्वम्[18] चित्रम् धनम् इन्द्र![19] शत्रूणाम् आदारयेति। साहचर्यादिन्द्रस्य स्तुतिः ॥ ९ ॥

---

१. उत्पादयन्त इ° मूको. २. गमि° कु. ३. नास्ति अ ति. ४. नास्ति मूको. ५. संन्यदधात् कु; °धत् लपं. ६. °सृजत वि[1] अ[2]. ७. संघटन° अ[1] कु; संघट्टनच(? °क)र्मा वि[1] अ[2]; संवन° वि[1]. ८. °च्छायां वि[1] अ[1]. ९. कृणोतन मूको. १०-१०. सवीतयेन मूको. ११. अङ्गिरस्य मूको. १२. नास्ति कु. १३. नास्ति अ. १४. तत्सखित्वात् ति. १५. नास्ति मूको. १६. भ्राता वि[1] ल लपं; भर्त्रा ल शोधः. १७. ऋतुभिः अ[1] कु; मृ(? ऋ)ङ्गुभिः वि[1] अ[2]. १८. सहितं वि[1] अ[1] कु ल लपं; सहित्रं वि[1]; सहिता(? °त)स्त्वम् वि[1] अ[2]. १९. इन्द्रं च वि[1] अ[2].

**मुद्गल०** हे इन्द्र! ऋभुमान् ऋभुर्विभ्वा वाज इति त्रयोऽप्यृभुशब्देनोपचारादुच्यन्ते। तैर्युक्तस्त्वम् वाजसातौ **वाजस्यान्नस्य सम्भजने** निमित्तभूते सति वाजेभिः **अन्नैः** नः अविड्ढि **अस्मान् व्याप्नुहि। अपि च** चित्रम् **चायनीयम्** राधः **धनम्** आ दर्षि **अस्मभ्यं दातुम् आद्रियस्व। तृतीयसवने** ऋभुभिः सहेन्द्रस्यावस्थानात् प्रसङ्गादत्रेन्द्रस्तुतिः। **यदेतदस्माभिः प्रार्थितम् अस्मदीयम्** तत् **मित्रादयः** समहन्ताम् **पूजयन्तु** ॥ ९ ॥

**इति प्रथमाष्टके सप्तमाध्याये एकत्रिंशो वर्गः ॥**

[१११]

तक्ष॒न्रथं॑ सु॒वृतं॑ विद्म॒नाप॑स॒स्तक्ष॒न्हरी॑ इन्द्र॒वाहा॒ वृष॑ण्वसू ।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒ युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑ मा॒तरं॑ सचा॒भुव॑म् ॥ १ ॥

तक्ष॑न् । रथ॑म् । सु॒ऽवृत॑म् । वि॒द्म॒नाऽअ॑पसः । तक्ष॑न् । हरी॒ इति॑ । इ॒न्द्र॒ऽवाहा॑ । वृष॑ण्वसू॒ इति॒ वृष॑ण्ऽवसू । तक्ष॑न् । पि॒तृऽभ्या॑म् । ऋ॒भवः॑ । युव॑त् । वयः॑ । तक्ष॑न् । व॒त्साय॑ । मा॒तर॑म् । स॒चा॒ऽभुव॑म् ॥ १ ॥

**स्कन्द०** ऋभवः[1] तक्षन् 'तक्षतिः करोतिकर्मा' ( या ४,१९ )। कृतवन्तो रथम्। **कस्मै**। **अश्विभ्याम्**। **कुत एतत्**। 'तक्षन्नासत्याभ्याम्' ( ऋ १,२०,३ ) **इति मन्त्रान्तरदर्शनात्। कीदृशम्**। सुवृतम्। **सुगमनमित्यर्थः। कीदृशाः।** विद्मनापसः **अत्यन्तोत्कृष्टकर्मत्वाद्वेदितव्यकर्माणः। किञ्च** तक्षन् हरी इन्द्रवाहा **इन्द्रस्य वोढारौ** वृषण्वसू **वृष्टिधनौ वर्षितारौ वा धनानाम्। धनानां**[2] **दातारावित्यर्थः। किञ्च** तक्षन् **स्वाभ्याम्** पितृभ्याम् ऋभवः युवत् **यौवनलक्षणम्** वयः। **किञ्च** तक्षन् वत्साय मातरम् सचाभुवम् **सहभाविनीम्। मृतां सतीं चर्मण उत्पाद्य वत्सेन सह संयोजितवन्त इत्यर्थः। तदेतत् पूर्वमप्युक्तम्**—'निश्चर्मणः' ( ऋ १,११०,८ ) **इति** ॥ १ ॥

**वेङ्कट०** तक्षन्[1] **अकुर्वन्** रथम् सुवर्तनं[3] **ज्ञानशिल्पकर्माणोऽश्विभ्याम्**[4]। तक्षन् **अश्वौ**[5] **इन्द्रस्य वोढारौ प्रदीयमानधनौ**[6]। तक्षन् पितृभ्याम् ऋभवः [7]**युवत्वयुक्तम्** वयः[7]। तक्षन् **च** वत्साय मातरम् **सहजातामात्मीयामिति। कर्ममात्रसमुद्देशः सूक्ते** ॥ १ ॥

**मुद्गल०** '**तक्षन्' इति पञ्चर्चं षष्ठं सूक्तम्**[8]। **कुत्स ऋषिः**[8]। **पञ्चमी त्रिष्टुप्। शिष्टा जगत्यः। ऋभवो देवता**[†][8] ॥

विद्मनापसः **उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माणः** ऋभवः रथम् **अश्विनोरारोहणार्थम्** सुवृतम् **शोभनवर्तनम्**[9] तक्षन् **अकुर्वन्। तथा** इन्द्रवाहा **इन्द्रस्य वाहनभूतौ** हरी **हरणशीलावेतत्संज्ञकाश्वौ** तक्षन् **कृतवन्तः। कीदृशौ।** वृषण्वसू **सेचनसमर्थेन दृढतरेण धनेन युक्तौ। अपि च** पितृभ्याम् **स्वकीयाभ्यां मातापितृभ्यां वृद्धाभ्याम्** युवत् **यौवनोपेतम्** वयः **आयुः** ऋभवः तक्षन् **कृतवन्तः। तथा** वत्साय मातरम् **गाम्** सचाभुवम् **सहभुवं सहवर्तमानाम्** तक्षन् **अकुर्वन्** ॥ १ ॥

---

१. नास्ति मूको. २. नास्ति अ. ३. संवर्तनं सुगमनम् वि[1] अ[2]. ४. ज्ञानेन शिल्पकर्मणो° कु; ज्ञातकल्पक° वि[1] अ[2]. ५. नास्ति वि[1] अ[2]. ६. प्रधीय° वि[1] अ[2]. ७-७. युवद्वयः वि[1] अ[2]. ८. नास्ति मै[2].
† °ताः मै[1]. ९. °वर्तमानम् मूको.

आ नो॑ य॒ज्ञाय॑ तक्षत ऋभु॒मद्वय॒ः क्रत्वे॒ दक्षा॑य सुप्र॒जाव॑ती॒मिष॑म् ।
यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्न॒ः शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम् ॥ २ ॥

आ । न॒ः । य॒ज्ञाय॑ । त॒क्ष॒त॒ । ऋ॒भु॒ऽमत् । वय॑ः । क्रत्वे॑ । दक्षा॑य । सु॒ऽप्र॒जाव॑तीम् । इष॑म् ।
यथा॑ । क्षया॑म । सर्व॑ऽवीरया । वि॒शा । तत् । न॒ः । शर्धा॑य । धा॒स॒थ॒ । सु । इ॒न्द्रि॒यम् ॥ २ ॥

**स्कन्द०** नः अस्माकम् यज्ञाय यज्ञार्थम् आ तक्षत आभिमुख्येन कुरुत । अस्मभ्यं दत्तेत्यर्थः । कीदृशम् । ऋभुमत् ऋभवो यष्टव्यत्वेन सम्बन्धिनो यस्य सन्ति तद् ऋभुमत् । युष्माकमेव ऋभूणां योग्यमित्यर्थः । किं तत् । वयः अन्नम् । न च केवलाय यज्ञाय । क्रत्वे भोजनाच्छादनादिकर्मणे च । दक्षाय बलाय । न च केवलमन्नम् । सुप्रजावतीम् इषम् शोभनया प्रजया संयुक्तम् अन्नम् । शोभनया 'प्रजया सहितमन्नं' दत्त, मा केवलमित्यर्थः । किञ्च यथा क्षयाम स्वस्मिन् स्थाने वयं निवसेम । न च केवलाः । सर्ववीरया विशा सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेतया परिचारकमनुष्यजात्या सह । तत् शुद्धोऽप्ययं तच्छब्दः थाल्प्रत्ययान्तो द्रष्टव्यः । तथा नः अस्मभ्यम् शर्धाय उत्साहाय बलाय वा धासथ सु सुष्ठु दत्त इन्द्रियम् धनं वीर्यं वा ॥ २ ॥

**वेङ्कट०** आ कुरुत[2] अस्माकं यज्ञकरणाय दीप्तम् आयुः कर्मणे[3] वृद्धये च । शोभनप्रजायुक्तम् अन्नं च । यथा निवसेम सर्वैर्वीरैर्युक्तया विशा तादृशं धनम् अस्मभ्यं सुष्ठु दत्त[4] बलाय ॥ २ ॥

**मुद्गल०** हे ऋभवः! नः अस्माकम् यज्ञाय यज्ञार्थम् ऋभुमत् उरुभासनयुक्तम्[5] वयः हविर्लक्षणमन्नम् आ तक्षत आ समन्तात् उत्पादयत । एतदेव विव्रियते । क्रत्वे क्रतवेऽस्मदीयाय कर्मणे दक्षाय च बलाय च एतदुभयार्थम् सुप्रजावतीम् शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्ताम् इषम् अन्नम् आ तक्षतेति शेषः । अपि च सर्ववीरया सर्वैर्वीरैः पुत्रादिभिरुपेतया विशा प्रजया सह यथा येन क्षयाम सुखेन निवसाम तत् तादृशम् इन्द्रियम् धनम् नः अस्मभ्यम् शर्धाय बलार्थम् सु धासथ सुष्ठु धत्त । प्रयच्छतेत्यर्थः ॥ २ ॥

आ त॑क्षत सा॒तिम॒स्मभ्य॑मृभवः सा॒तिं रथा॑य सा॒तिमर्व॑ते नरः ।
सा॒तिं नो॒ जैत्रीं॒ सं म॑हेत वि॒श्वहा॑ जा॒मिमजा॑मि॒ पृत॑नासु स॒क्षणि॑म् ॥ ३ ॥

आ । त॒क्ष॒त॒ । सा॒तिम् । अ॒स्मभ्य॑म् । ऋ॒भ॒व॒ः । सा॒तिम् । रथा॑य । सा॒तिम् । अर्व॑ते । न॒र॒ः ।
सा॒तिम् । न॒ः । जैत्री॑म् । सम् । म॒हे॒त॒ । वि॒श्वहा॑ । जा॒मिम् । अजा॑मिम् । पृत॑नासु । स॒क्षणि॑म् ॥

**स्कन्द०** [6]आ तक्षत[6] आभिमुख्येन कुरुत सातिम् षणु दाने । दानम् अस्मभ्यम् हे ऋभवः! । कस्य दानम् । सामर्थ्याद्धनानाम् । न च केवलानां धनानाम् । सातिम् रथाय षष्ठ्यर्थे चतुर्थ्येषा । बहुवचनस्य स्थाने एकवचनम् । रथानाम् । सातिम् अर्वते अश्वानां च हे नरः! मनुष्याः! । किञ्च

---

1-1. शोभनप्रजास॰ अ; नास्ति ति. 2. ॰त च वि[1] अ[2] कु. 3. ॰णे वि[1] अ[2]. 4. नास्ति वि[1] अ[2].
5. ॰समानयुक्तम् मूको. 6-6. नास्ति मूको.

युष्मत्प्रसादात् सातिम् दानम् नः अस्माकं सम्बन्धिनीं [1]सारवत्तया प्राभूत्येन च दानान्तराणां† जैत्रीम् सम् महेत[1] मह पूजायाम्। सर्वलोकः सम्पूजयेदित्याशास्महे[2] सर्वदा। तादृशीं नः सातिं दत्त यादृशीं सर्वो जनः सर्वदा पूजयतीत्यर्थः। जामिम् अजामिम् समानजातीयामसमानजातीयां च। अयोग्यां चास्माकं योग्यां चात्यन्तोत्कृष्टामित्यर्थः[3]। अथवा जामिमजामिमिति[4] पूजयितुरयं निर्देशः। द्वितीया च प्रथमार्थे। समानजातीयोऽसमानजातीयश्च पूजयेदित्यर्थः। पृतनासु[5] सङ्ग्रामेषु सक्षणिम् क्षणु हिंसायाम्। हिंसया सह सक्षणिः, तां सक्षणिम्। शत्रुहिंसासमर्थामित्यर्थः ॥ ३ ॥

**वेङ्कट०** आ कुरुत धनम् अस्मभ्यम् ऋभवः!, धनम् रथाय, धनम् अर्वते नेतारः!। सर्वो लोको भवदीयाम् अस्मद्विषयाम् सातिम् शत्रूणां जयशीलां सर्वदा सम्पूजयेत्[6]। ज्ञातिमज्ञातिञ्च[7] युद्धेषु सहमानाम् ॥ ३ ॥

**मुद्गल०** हे नरः! यज्ञस्य नेतारः! ऋभवः! अस्मभ्यम् अनुष्ठातृभ्यः सातिम् भजनीयमन्नम् आ तक्षत आ समन्तात् कुरुत। तथाऽस्मदीयाय रथाय रंहणशीलाय पुत्रादये रथायैव वा[5] सातिम् सम्भजनीयं धनम् आतक्षत। तथा अर्वते अश्वाय सातिम् सम्भजनीयम् अन्नम् अदनयोग्यम् आतक्षतेत्येव। किञ्च विश्वहा सर्वेषु अहस्सु नः अस्माकम् जैत्रीम् जयशीलाम् अपरिमितत्वेन सर्वाधिकाम् सातिम् सम्भजनीयं धनम् सम् महेत सर्वो जनः सम्यक् पूजयतु। वयं च पृतनासु सङ्ग्रामेषु जामिम् सहजातम्[8] अजामिम् असहजातं शत्रुम् सक्षणिम् अस्मान् अभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः ॥ ३ ॥

ऋभुक्षणमिन्द्रमा हुव ऊतय ऋभून् वाजान् मरुतः सोमपीतये।
उभा मित्रावरुणा नूनमश्विना ते नो हिन्वन्तु सातये धिये जिषे ॥ ४ ॥

ऋभुक्षणम्। इन्द्रम्। आ। हुवे। ऊतये। ऋभून्। वाजान्। मरुतः। सोमऽपीतये।
उभा। मित्रावरुणा। नूनम्। अश्विना। ते। नः। हिन्वन्तु। सातये। धिये। जिषे ॥ ४ ॥

**स्कन्द०** ऋभुभिः सह क्षिणोति हिनस्ति शत्रूनिति ऋभुक्षाः, तम् [9]ऋभुक्षणम्। अथवा 'ऋभुक्षाः' (निघ ३, ३) इति महन्नाम। महान्तम् इन्द्रम् †ऋभुसखत्वादृभूणां वा† प्रियचिकीर्षया आ हुवे आह्वयामि। ऊतये पुरोडाशादिहविस्तर्पणाय। न च केवलमिन्द्रम्। ऋभून् अपि‡ स्वयम् वाजान् वाजप्रभृतींस्त्रीनपि मरुतः च तत्सखान्[9]। न च केवलाय पुरोडाशादिहविस्तर्पणाय। सोमपीतये[4] सोमपानाय च। उभौ च मित्रावरुणौ अश्विना च। नूनम् इति पदपूरणः क्षिप्रार्थो वा। क्षिप्रमाह्वयामीति। आहूताश्च सन्तः ते नः हिन्वन्तु। हि[10] गतौ वृद्धौ[11] च। अस्मान् प्रति गच्छन्तु। वृद्ध्यर्थो वा हिनोतिः सामर्थ्याच्चान्तर्णीतण्यर्थः। अस्मान् वर्धयन्तु। किमर्थम्। सातये। षणु दाने। दानेन चात्र तत्पूर्वको लाभो लक्ष्यते। लाभाय। धिये प्रज्ञायै कर्मणे वा यागाख्याय। जिषे जेतुं च शत्रून्। जयाय च शत्रूणामित्यर्थः। आर्भवत्वाच्चास्य सूक्तस्य

---

१-१. °त्तया ··· महेत ति. † दानानां अ. २. °जयत्वित्या° ति. ३. °त्कृष्टत्वादि° ति. ४. °मिम् अ. ५. नास्ति मूको. ६. °येत् इत्याशास्महे वि[1] अ[2]. ७. जातिमजातिञ्च वि[1] अ[2]. ८. °जातिम् मूको. ९-९. नास्ति ति. †-† °सखा वा अ. ‡ नास्ति अ. १०. हिनु मूको. ११. प्रद्धौ मूको.

ऋभूणामेवात्र प्राधान्यम् इन्द्रादीनां तु तत्सखत्वात्[1] गुणभावेनोपादानम् ॥ ४ ॥

**वेङ्कट०** महान्तम्[2] इन्द्रम् रक्षणार्थम् आह्वयामि। एवम् ऋभून् वाजेन युक्तान् मरुतः च[3] सोमपानायाह्वयामि[4]। तथा उभौ[5] मित्रावरुणौ अश्विनौ च। ते[6] अस्मान् प्रेरयन्तु धनाय कर्मणे जयाय चेति[7] ॥ ४ ॥

**मुद्गल०** ऋभुक्षणम् महान्तम् इन्द्रम् आ हुवे आह्वयामि। किमर्थम्। ऊतये रक्षणार्थम्। तथा ऋभून् वाजान् ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः। तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते। ततः शब्दद्वयेन त्रयोऽप्युच्यन्ते। एवंविधान् ऋभून् मरुतः च सोमपीतये सोमपानाय आह्वयामि। तथा उभा युगलरूपेण संहत्य वर्तमानौ द्वौ मित्रावरुणा मित्रावरुणौ अश्विना अश्विनौ च नूनम् अवश्यं सोमपानाय आह्वयामीति शेषः। अपि च आहूताश्च ते इन्द्रादयः नः अस्मान् हिन्वन्तु प्रेरयन्तु। गमयन्त्वित्यर्थः। किमर्थम्। सातये सम्भजनीयाय धनाय धिये धनसाध्याय कर्मणे जिषे जेतुं शत्रूणां जयार्थञ्च ॥ ४ ॥

**ऋ॒भुर्भरा॑य॒ सं शि॑शातु सा॒तिं स॑म॒र्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ५ ॥**

ऋ॒भुः । भरा॑य । सम् । शि॒शा॒तु॒ । सा॒तिम् । स॒म॒र्य॒ऽजित् । वाजः॑ । अ॒स्मान् । अ॒वि॒ष्टु॒ ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ५ ॥

**स्कन्द०** ऋभुः भराय सङ्ग्रामाय सम् शिशातु अत्यर्थं पुनःपुनः वा संस्करोतु। सातिम् दानम्। सङ्ग्रामार्थं यदस्माकं दित्सितं तदत्यर्थं पुनःपुनः वा संस्करोत्वित्यर्थः। समर्यजित् 'समर्यः' ( निघ २,१७ ) इति सङ्ग्रामनाम। सङ्ग्रामाणां जेता वाजः अपि अस्मान् अविष्टु पालयतु। तत् नः इत्याद्युक्तार्थम्[8] ( ऋ १,९४,१६ द्र. ) ॥ ५ ॥

**वेङ्कट०** ऋभुः सङ्ग्रामाय धनं तीक्ष्णीकरोतु। सङ्ग्रामजित् वाजः च अस्मान् अवतु ॥ ५ ॥

**मुद्गल०** ऋभुः प्रथमः अस्माकम् सातिम् सम्भजनीयं धनम् भराय सङ्ग्रामार्थम् सम् शिशातु सम्यक् तीक्ष्णीकरोतु। सङ्ग्रामोचितं धनम् अस्मभ्यं प्रयच्छत्वित्यर्थः। तथा समर्यजित् मर्या मनुष्याः तैः सह वर्तत इति समर्यः सङ्ग्रामः, तत्र शत्रूणां जेता वाजः एतत्संज्ञः तृतीयश्च अस्मान् स्तोतॄन् अविष्टु अवतु। सङ्ग्रामाद्रक्षत्वित्यर्थः। यदनेन सूक्तेन प्रार्थितम् अस्मदीयम् तत्[8] मित्रादयः ममहन्ताम् पूजयन्तु ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये द्वात्रिंशो वर्गः ॥

---

१. °खित्वात् ति. २. °न्तम् तं वि[1]. ३ नास्ति वि[3] अ[2]. ४. सोमपानार्थम् आह्व° वि[3] अ[2]. ५. एतौ वि[1] अ[2]; इमौ वि[2] अ[1]. ६. एते वि[2] अ[1]. ७. च कु. ८. नास्ति मूको.

[ ११२ ]

ईळे॒ द्यावा॑पृथि॒वी पू॒र्वचि॑त्तये॒ऽग्निं घ॒र्मं सु॒रुचं॒ याम॑न्नि॒ष्टये॑ ।
याभि॒र्भरे॑ का॒रमंशा॑य॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ गत॑म् ॥ १ ॥

ईळे॑ । द्यावा॑पृथि॒वी इति॑ । पू॒र्वऽचि॑त्तये । अ॒ग्निम् । घ॒र्मम् । सु॒ऽरुच॑म् । याम॑न् । इ॒ष्टये॑ ।
याभिः॑ । भरे॑ । का॒रम् । अंशा॑य । जिन्व॑थः । ताभिः॑ । ऊँ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना । आ । ग॒त॒म् ॥

**स्कन्द०** 'अथाऽऽश्विनम्' । आभ्र्वाभ्यामनन्तरमिदमाश्विनं सूक्तम् । तत्र 'ईळे द्यावापृथिवीयो ह पादः पादोऽग्नय आश्विनं तु सूक्तम्' ( तु. षड्गुरुशिष्यः [ऋ अ २,१,११२] ) । ईळ इत्ययं पादो गुणवृत्त्या द्यावापृथिवीयः । परः पादो गुणवृत्त्यैवाऽऽग्नेयो भवति । कृत्स्नमेव तु सूक्तमाश्विनम् । ईळे स्तौमि द्यावापृथिव्यौ पूर्वचित्तये पूर्वज्ञानाय । युवयोरश्विनोः स्तुतिकरणसमर्थं पूर्वं ज्ञानं मम तदर्थमित्यर्थः । न च केवले द्यावापृथिव्यौ । अग्निम् च घर्मम् घृ क्षरणदीप्त्योः । दीप्तम् । सुरुचम् सुदीप्तम् । क । यामन् यान्त्यस्मिन् देवता[1] द्विजातयश्चेति यामा[2] यज्ञस्तत्र । किमर्थम् । इष्टये यागाय । युवामश्विनौ यक्ष्यतीत्येवमर्थमित्यर्थः । किञ्च याभिः भरे इत्यादि । अत्रेतिहासमाचक्षते—'अंशनामानम् आदित्यानामन्यतमं पर्यटन्तमसुरा जगृहुः । सोऽश्विनावाजुहाव । तमश्विनौ शङ्खमापूरयन्तावाजग्मतुः । तस्माच्छङ्खशब्दादेव बिभ्यतोऽसुरा[3] नेशुः' इति । तदेतदिहोच्यते । याभिः इत्ययम् ऊतिभिः इत्येतेन[4] समानाधिकरणः । ऊतिशब्दश्च गमनवचनः । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । यैर्गमनैर्गत्वा भरे असुरैः सह सङ्ग्रामे । कारम् कारशब्दोऽत्र शङ्खवचनः । 'काराधुनीव' ( ऋ १,१८०,८ ) इति यथा । शङ्खम् अंशाय जिन्वथः प्रीणितवन्तौ आपूरितवन्तौ स्थः । अथवा क्रियत इति कारः शब्द इहोच्यते । 'भगो न कारे' ( ऋ ३,४९,३ ) इति यथा । शब्दं प्रीणितवन्तौ । महान्तं शङ्खशब्दं कृतवन्तौ स्थ इत्यर्थः । ताभिः उ इति एवार्थे । ताभिरेव वा[5] ऊतिभिः गमनैः हे अश्विनौ! सु आ गतम् शोभनं यथा भवति तथा आगच्छतम् अस्मानेव प्रति । अप्यर्थे वाऽयम् उ इति निपातः । ताभिरपि गमनैः अन्यैश्च वक्ष्यमाणैः । अथवा यैर्गमनैरंशं प्रति[6] गतवन्तौ स्थः कृपालुतया अस्मानपि ताभिरिति । यैर्गमनैर्गत्वा अंशस्यार्थाय[7] असुराञ्जेतुमसुरजैत्रं शङ्खमापूरयन्तौ महान्तं वा शङ्खशब्दं कृतवन्तौ स्थः, तैरेवास्मान् प्रति शोभनमागच्छतमिति समस्तार्थः ॥ १ ॥

**वेङ्कट०** स्तौमि द्यावापृथिव्यौ यजमानाय पूर्वं '[8]मुख्यमस्य कर्म[8]' अग्निम् । घर्मं आदित्यः । तं च सुदीप्तिं[9] यज्ञे अभिलषितसिद्ध्यर्थम् । याभिः सङ्ग्रामे शङ्खम् अंशाय ऋषये शब्देन पूरयामासथुः । तैः परिरक्षणैः अस्मान् अपि सुष्ठु आगच्छतम् अश्विनौ! ॥ १ ॥

**मुद्गल०** 'ईळे' इति पञ्चविंशत्यृचं सप्तमं सूक्तम्[10] । आङ्गिरसः कुत्स ऋषिः[10] । चतुर्विंशीपञ्चविंश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । आद्यः पादो द्यावापृथिव्यः । द्वितीय आग्नेयः । शिष्टं सूक्तम् आश्विनम्[10] ।

अहम् द्यावापृथिवी द्यावापृथिव्यौ ईळे स्तौमि । किमर्थम् । पूर्वचित्तये पूर्वमेवाश्विनोः

---

१. देवाः ति. २. यामा कु. ३. बिभ्यन्तोऽसु° मूको. ४. इत्यन्तेन अ. ५. वा अस्मान्वेति अ; वा अस्मानेव वा कु ति. ६. वेति अ; वेति ति. ७. अस्या° कु. ८-८. मुख्यमस्माकम् कु. ९. सुदीप्तम् वि°. १०. नास्ति मै°.

प्रज्ञापनाय। ते हि अश्विनोः प्रत्यासन्ने। अपि च यामन् यामनि अश्विनोरागमने सति इष्टये तदीययागार्थम् आहवनीयरूपेण स्थापितम् अग्निम् स्तौमीति शेषः। कीदृशमग्निम्। घर्मम् प्रवृञ्जनेन दीप्तम् सुरुचम् अत एव शोभनकान्तियुक्तम्। हे अश्विना! अश्विनौ! भरे सङ्ग्रामे अंशाय युष्मदीयभागाय जयप्राप्त्यर्थम् याभिः ऊतिभिः पालनैः सहागत्य कारम् शब्दकारिणं शङ्खम् जिन्वथः मुखेनापूरयथः ताभिः तादृशैः ऊतिभिः पालनैः सह। उ समुच्चये। अस्मानपि सुष्ठु आ गतम् आगच्छतम् ॥ १ ॥

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ॥ २ ॥

युवोः। दानाय। सुऽभराः। असश्चतः। रथम्। आ। तस्थुः। वचसम्। न। मन्तवे।
याभिः। धियः। अवथः। कर्मन्। इष्टये। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥

स्कन्द० युवोः युवयोः स्वभूतम् दानाय स्तोतृभ्यो दानार्थम् सुभराः सुपूर्णाः। केन। सामर्थ्याद्युष्मद्गुणैः। काः पुनरेताः। सामर्थ्यात् स्तुतयः। असश्चतः सश्चतिर्गतिकर्मा ( तु. निघ २,१४ )। शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः। छान्दसत्वाच्चात्र स्त्रीप्रत्ययाभावः। असंसश्चत्यः असङ्गच्छमानाः। असंयुक्ता इत्यर्थः। रथम् आ तस्थुः आतिष्ठन्ति। वचसम् न वाच्यमिवार्थं शब्दः। मन्तवे। तुमर्थे चायं तवेन्[1] प्रत्ययः। युवां स्तोतुम्। यथा वाच्यमर्थं शब्दः सर्वं आतिष्ठति एवं युष्मदीयं रथं स्तोतृभ्यो दानार्थं युष्मत्स्तुतयो युवां स्तोतुं सर्वदाऽऽतिष्ठन्तीत्यर्थः। याभिः धियः अन्येषां यजमानानां स्वभूतानि यागलक्षणानि कर्माणि प्रति अवथः अवतिर्गत्यर्थः ( तु. निघ २,१४ )। युवां गच्छथः। ममापि स्वभूते कर्मन् कर्मणि यागलक्षणे इष्टये यागायात्मनः। ताभिः ॥ २ ॥

वेङ्कट० युवयोः[2] स्तोतृभ्यः दानाय सुनिर्भराः[3] [4]असक्तारो ये[4] रथम् आतिष्ठन्ति। यथा शब्दं [5]परप्रत्यायनार्था अभिधेया[5] आतिष्ठन्ति। याभिः स्तोत्राणि अवथः यजमानानाम् कर्मणि अभिलषिताय क्रियमाणानीति[6] ॥ २ ॥

मुद्गल० सुभराः शोभनस्तोत्रभरणाः असश्चतः अन्यत्रानासक्ताः स्तोतारः हे अश्विनौ! युवोः युवयोः रथम् आ तस्थुः आतिष्ठन्ति प्राप्नुवन्ति। किमर्थम्। दानाय युष्मत्कर्तृकदानार्थम्। धनलाभायेत्यर्थः। दृष्टान्तः। वचसम् न यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितम् मन्तवे बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत्। अपि च कर्मन् कर्मणि इष्टये यागार्थं प्रवृत्तान् धियः ध्यातॄन् विशिष्टज्ञानोपेतान् याभिः ऊतिभिः पालनैः युवाम् अवथः रक्षथः। ताभिः इत्यादि पूर्ववत् ॥ २ ॥

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना।
याभिर्धेनुमस्वं१ पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ॥ ३ ॥

---

१. तवे कु. २. युवोः वि[1] अ[1]. ३. सुनिर्हराः वि[1,2] अ[1] ल लपं; सनि° वि[3] अ[2]. ४-४. असक्ता रायः वि[2,3] ल लपं; °क्तारो ये अ[1]. ५-५. °प्रत्ययनार्थाभि° वि[2] अ[1] कु; °नार्था अभि° वि[1] लपं; परावृत्याधनावा वि[3] अ[2]. ६. °णेति वि[1] अ[1]; °णानि कु.

युवम् । तासाम् । दिव्यस्य । प्रऽशासने । विशाम् । क्षयथः । अमृतस्य । मज्मना ।
याभिः । धेनुम् । अस्वम् । पिन्वथः । नरा । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥

**स्कन्द०** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । याः[1] स्तोतुं यष्टुं चेच्छन्ति[2] युवम् युवां तासाम् विशाम् मनुष्याणाम् प्रशासने प्रेत्येषोऽन्वित्येतस्य स्थाने । अनुशासने वचने । क्षयथः निवसथः । ता विशो यत्र ब्रुवन्तीह युवाभ्यां व्यवस्थातव्यमिति तत्रैव व्यवतिष्ठेथे इत्यर्थः । केन । उच्यते । दिव्यस्य अमृतस्य मज्मना दिव्यशब्दोऽत्रात्यन्तोत्कृष्टवचनः । अमृतशब्दोऽप्यन्तरेणापि[3] भावप्रत्ययममृतत्ववचनः । 'मज्मना' (निघ २,९) इत्यपि बलनाम । अत्यन्तोत्कृष्टस्य देवत्वस्य बलेनेत्यर्थः । अथवा 'दध्यङ् ह यत्' ( ऋ १,११६,१२ ), 'आथर्वणायाश्विना' ( ऋ १,११७,२२ ) इति मन्त्रान्तरदृष्टज्ञानमत्रामृतसादृश्यादमृतमित्युच्यते । अत्यन्तोत्कृष्टस्यामृतसदृशस्य ज्ञानस्य बलेनेत्यर्थः । किञ्च याभिः धेनुम् इत्यादि । अत्रेतिहासमाचक्षते—'शयुर्नाम राजर्षिः । सोऽश्विनौ परिचर्यया तुष्टावुवाच, मम गौरधेनुर्निवृत्तप्रसवा वृद्धा च, तां मे धेनुं कुरुतमिति । तामस्मै अश्विनौ धेनुं चक्रतुः' इति । तदेतत् कक्षीवान् वक्ष्यति 'युवं धेनुम्' ( ऋ १,११८,८ ), 'अधेनुं दस्रा' ( १,११७,२० ) इति च । तदेवेहोच्यते । याभिर्गत्वा शयोः स्वभूतां धेनुम् अस्वम् न सूयत इत्यसूः[4], ताम् अस्वम् । निवृत्तप्रसवामित्यर्थः । पिन्वथः पिवि मिवि सेचने । पयः सेचितवन्तौ स्थः । दोहप्रदानसमर्थां कृतवन्तौ स्थ इत्यर्थः । नरा! मनुष्याकारौ! अस्माकमभिलषितार्थसिद्ध्येऽस्मानपि प्रति ताभिः ॥ ३ ॥

**वेङ्कट०** युवम् तासाम् विशाम् मनुष्याणाम् दिव्यस्य च देवगणस्य[5] प्रशासने वर्तेथे अमृतस्य बलेन[6] । यैः पालनैः निवृत्तप्रसवाम्[7] धेनुम् शयवे पिन्वथः नेतारौ![8] ॥ ३ ॥

**मुद्गल०** हे नरा! नेतारौ! अश्विनौ! दिव्यस्य दिवि भवस्य स्वर्गसमुत्पन्नस्य अमृतस्य सोमस्य पानेनोत्पन्नेन मज्मना बलेन युक्तौ युवम् युवाम् तासाम् यास्त्रिषु लोकेषु वर्तन्ते तासां सर्वासाम् विशाम् प्रजानाम् प्रशासने प्रकृष्टानुशासने शिक्षणे क्षयथः ईशाथे समर्थौ भवथः । अपि च याभिः ऊतिभिः अस्वम् प्रसवासमर्थाम् धेनुम् गां शयुनाम्ने ऋषये पिन्वथः सिञ्चथः । पयसा पूरितवन्ताविन्यर्थः । ताभिः ऊतिभिः इत्यादि पूर्ववत् ॥ ३ ॥

**याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।**
**याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ ४ ॥**

याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति ।
याभिः । त्रिऽमन्तुः । अभवत् । विऽचक्षणः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥

**स्कन्द०** याभिः अत्यन्तशीघ्राभिः ऊतिभिः परिज्मा सर्वतोगामी वायुः तनयस्य अपत्यभूतस्य प्राणिजातस्य । 'षष्ठीश्रुतेरर्थायेति शेषः । मज्मना स्वेन बलेन द्विमाता द्वयोः[9] प्राणिजातयोः

---

१. नास्ति अ. २. वेच्छ॰ अ ति. ३. ॰तवचनोप्य॰ अ. ४. इत्यस्वः कु. ५. ॰स्य च वि॰ अ॰. ६. बले वि॰ लपं. ७, निर्व॰ वि॰ लपं. ८-८. नोकारो(? नराकारौ) वि॰, ९-९. नास्ति अ॰

निर्माता। अथवा उत्पादिके प्रकृती मातराविहोच्येते। ते द्वे यस्य एका [1]ब्राह्म्यां सृष्टौ अन्या[1] देवसृष्टौ स द्विमाता। तूर्षु[2] तरणिः [3]त्वरन्तीति तुरः[3] [4]क्षिप्रा उच्यन्ते[4]। निर्धारणे चैषा सप्तमी। 'तरणिः' (निघ २,१५) इत्यपि क्षिप्रनाम। क्षिप्राणां मध्ये क्षिप्रः। अत्यन्तशीघ्र इत्यर्थः। विभूषति भवतिरत्र प्राप्त्यर्थः। विविधं प्राप्नोति[2]। यत्रयत्र[5] गन्तव्यं तत्रतत्र[6] गच्छतीत्यर्थः। अथवा तूर्षु इत्येतद्विभूषतीत्येतेन सम्बध्यते। तूर्षु इत्येतत्तूर्वतेर्हिंसार्थस्य[7] रूपम्। हिंस्येषु प्राप्नोति हिंस्यानसुरादीन् प्रति गच्छतीत्यर्थः। [8]'याभिः इत्यत्रेतिहासमाचक्षते[8]— 'कक्षीवान्नामर्षिरत्यन्तमूढो[9] बभूव। सोऽतीतानागतवर्तमानेषु त्रिष्वप्यप्रतिहतं[10] ज्ञानमर्थयमानः अश्विनावियाज तुष्टाव च। तस्मै अश्विनौ [11]त्रिकालविषयं ज्ञानं[11] सर्वार्थविषयं च ददतुः' इति। तदेतत् कक्षीवानेव वक्ष्यति— 'युवन्नरा स्तुवते पज्रियाय' ( ऋ १,११६,७ ) इति। तदेवेहाप्युच्यते। याभिरिति हेतौ तृतीया। याभिश्च युष्मदीयाभिः ऊतिभिः हेतुभूताभिः त्रिमन्तुः मन ज्ञाने। त्रयाणामतीतानागत-वर्तमानानां ज्ञाता कक्षीवान् अभवत्। विचक्षणः विद्रष्टा। सर्वार्थानां च ज्ञातेत्यर्थः। पण्डितवचनो वा विचक्षणशब्दः। पण्डितश्चाभवत्। याभिश्च युवामेव गत्वा त्रिकालविषयज्ञानोपेतं सर्वार्थ-विषयज्ञानोपेतं च कक्षीवन्तं चक्रथुः। अस्मानपि प्रति ताभिः ॥ ४ ॥

**वेङ्कट०** याभिः परितो गन्ता वायुः आत्मपुत्रस्य अग्नेः बलार्थं द्वयोर्लोकयोः निर्माता क्षिप्राणाम् अपि मध्ये अतिशयेन क्षिप्रो विविधशरीरो भवति। याभिः च कक्षीवान् अभवत् विद्वान् त्रैकाल्यज्ञानात्[12] त्रिमन्तुः ॥ ४ ॥

**मुद्गल०** परिज्मा परितो गन्ता वायुः तनयस्य आत्मीयस्य पुत्रस्याग्नेः। अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते। एवं स्वपुत्रस्याग्नेः मज्मना बलेन युक्तः सन् द्विमाता द्वयोर्लोकयोः निर्माता। अग्निः पृथिवीस्थानो वायुरन्तरिक्षस्थान उभयोर्मिलितयोरुभय-निर्मातृत्वमुपपन्नम्। एवंभूतो वायुः हे अश्विनौ! याभिः ऊतिभिर्हेतुभूतैः पालनैः तूर्षु तरीतृषु धावत्सु मध्ये तरणिः अतिशयेन तरिता शीघ्रगामी विभूषति विभवति व्याप्तो भवति। अपि च त्रिमन्तुः त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहविर्यज्ञसोमयज्ञेषु आसादितज्ञानः कक्षीवान् याभिः युष्मदीयाभिरूतिभिः विचक्षणः विशिष्टज्ञानयुक्तः अभवत्, ताभिः ॥ ४ ॥

### याभी रेभं निवृ॑तं सि॒तम॒द्भ्य उद् वन्द॑न॒मैर॑यतं॒ स्व॑र्दृ॒शे ।
### याभि॒: कण्वं॒ प्र सिषा॑सन्त॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ ५ ॥

याभि॑ः। रे॒भम्। निऽवृ॑तम्। सि॒तम्। अ॒त्ऽभ्यः। उत्। वन्द॑नम्। ऐर॑यतम्। स्व॑ः। दृ॒शे।
याभि॑ः। कण्व॑म्। प्र। सिसा॑सन्तम्। आव॑तम्। ताभि॑ः। ऊँ इति॑। सु। ऊ॒तिऽभि॑ः। अ॒श्विना॒। आ। ग॒तम् ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'रेभमृषिं सन्ध्याकाले स्नात्वा ह्रदादुत्तीर्णम् अग्निहोत्रं होतुं स्वाश्रमम् आगच्छन्तमसुरा[13] ददृशुः। ते देवानामयं यष्टा स्तोता चेति ज्ञात्वा सङ्क्रुद्धास्तं ताडयित्वा

---

१-१. ब्राह्मयन्या अ. २. नास्ति अ. ३-३. नास्ति अ; तुरः कु; तरत तुरा ति. ४-४. °प्र उच्यते कु. ५. यत्र मूको. ६. तत्र ति. ७. °तुंवेतेर्हिं° मूको. ८-८. °भिः अत्रे° कु; °भिश्च अत्रे° अ; °मिश्रेत्यत्र° ति. ९. °वान् अत्यन्त° अ. १०. °प्यप्रहतं मूको. ११-११. °षयज्ञानं ति. १२. त्रैलोक्य° वि[2,3] अ[2] ल लपं. १३. गच्छन्त अ कु.

बद्ध्वा च तस्मिन् ह्रदे प्रक्षिप्य 'दशरात्रं धारयाञ्चक्रुः' इति। तदपि कक्षीवानेव वक्ष्यति[१] — 'दश रात्रीः' ( ऋ १,११६,२४ ), 'अश्वं न गूळ्हम्' ( ऋ १,११७,४ ) इति। स तत्र मृतकल्पोऽश्विनावाजुहाव। आहूयमानावश्विनौ तं समाजग्मतुः' इति। तदपि कक्षीवानेव वक्ष्यति—'सं तं रिणीथः' ( ऋ १,११७,४ ) इति। आगत्य चोत्तारयाञ्चक्रतुः' इति। तदपि कक्षीवानेव वक्ष्यति—'विप्रुतं रेभम्' ( ऋ. १,११६,२४ ) इति। घोषाऽपि[२] वक्ष्यति—'युवं ह रेभम्' ( ऋ १०,३९,९ ) इति। तथापरमितिहासमाचक्षते—'वन्दन ऋषिर्जरया परीतः कूपसमीपे गच्छन् कूपे पपात। स तत्रस्थोऽश्विनौ तुष्टाव। तमश्विनावागत्योत्तारयाञ्चक्रतुः' इति। तदेतद् घोषा वक्ष्यति—'युवं वन्दनमृश्यदात्' ( ऋ १०,३९,८ ) इति। कक्षीवानपि वक्ष्यति—'तद् वां नरा शंस्यम्' ( ऋ १,११६,११ ), 'सुषुप्वांसम्' ( ऋ १,११७,५ ) इति। 'उत्तार्य च जरामस्यापनीतवन्तौ दीर्घं चायुरस्मै दत्तवन्तौ' इति। तदेतद् द्वयमपि कक्षीवानेव वक्ष्यति—'युवं वन्दनं निर्ऋतम्' ( ऋ १,११९,७ ), 'प्र दीर्घेण वन्दनः' ( ऋ १,११९,६ ) इति च। तदितिहासद्वयमिहोच्यते। याभी रेभम् इत्यादिना। याभिः ऊतिभिर्गत्वा रेभम् ऋषिम् निवृतम् वृङ् सम्भक्तौ। नीचैः सम्भक्तम्। निमग्नमित्यर्थः। सितम् षिञ् बन्धने। बद्धं च। अद्भ्यः ह्रदोदकात्। न च केवलं रेभम्। किं तर्हि। वन्दनम् च ऋषिं कूपात्। उत् ऐरयतम् ईर गतौ। ऊर्ध्वं गमितवन्तौ स्थः। उत्तारितवन्तावित्यर्थः। स्वर्दृशे सर्वं द्रष्टुम्। सर्वजीवलोकं पुनःपुनरनुभवितुमित्यर्थः। याभिः च कण्वम्। अत्रापीतिहासमाचक्षते—'कण्व ऋषिरन्धो बभूव। स चक्षुष्कामोऽश्विनौ तुष्टाव। तस्मै अश्विनौ चक्षुर्ददतुः' इति। तदेतत् कक्षीवान् वक्ष्यति—'युवं कण्वाय' ( ऋ १,११८,७ ) इति। तदेवेहाप्युच्यते। याभिश्चोतिभिः कण्वं प्र सिषासन्तम् स्तुतिभिः सम्भक्तुमिच्छन्तम्। स्तुवन्तमित्यर्थः। प्र आवतम्। अवतिरत्र[३] गत्यर्थः। चक्षुःप्रदानार्थं प्रकर्षेण गतवन्तौ स्थः। अस्मानपि प्रति ताभिः ॥ ५ ॥

वेङ्कट० रेभम् स्नात्वा अग्निहोत्रार्थं गच्छन्तम् असुरा बद्ध्वा ह्रदे प्रचिक्षिपुः[४]। तत्र निभृतं तिरोहितं दश रात्रीः धारयाञ्चक्रुः। वन्दनः च जीर्णः कूपसमीपेन गच्छन् कूपे पपात। ताविमाश्विभ्याम् आदित्यं द्रष्टुमुदकादुत्तारितौ। याभिः[५] च कण्वम् वां सम्भक्तुम् इच्छन्तं प्ररक्षथुः[६] ॥ ५ ॥

मुद्गल० हे अश्विनौ[७]! याभिः ऊतिभिः रेभम् एतत्संज्ञम् ऋषिभिः निवृतम् असुरः कूपेऽप्सु निवारितम् सितम् तदीयैः पाशैर्बद्धम्। एवंभूतम् ऋषिम् अद्भ्यः सकाशात् उत् ऐरयतम् उदगमयतम्। तथा वन्दनम् एतत्संज्ञम् ऋषिं च तथाभूतमुदैरयतम्। किमर्थम्। स्वः दृशे द्रष्टुम् अपि च कण्वम् असुरैरन्धकारे प्रक्षिप्तम् सिषासन्तम् आलोकं सम्भक्तुमिच्छन्तम् याभिः ऊतिभिः प्र आवतम् प्रकर्षेणारक्षतम्। ताभिः इत्यादि समानम् ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये त्रयस्त्रिंशो वर्गः ॥

याभि॒रन्त॑कं॒ जस॑मान॒मार॑णे भु॒ज्युं याभि॑रव्य॒थिभि॑र्जिजि॒न्वथुः॑ ।
याभिः॑ क॒र्कन्धुं॑ व॒य्यं॑ च॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ ६ ॥

---

१-१. नास्ति ति.　२. घोषा ति.　३. °वतिः अ.　४. प्रचिचिक्षिपुः कु.　५. नास्ति वि[१,३] अ[१].　६. प्ररक्ष° वि[२].　७. नास्ति मूको.

यार्भिः । अन्तकम् । जसमानम् । आऽअरणे । भुज्युम् । यार्भिः । अव्यथिऽभिः । जिजिन्वथुः ।
यार्भिः । कुर्कन्धुम् । वय्यम् । च । जिन्वथः । तार्भिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥

स्कन्द० अत्रेतिहासमाचक्षते[1]—'अन्तको नाम राजा नद्याः स्रोतसि तपश्चचार । तं वृष्ट्या प्रवृद्धजला नद्युवाह । स उह्यमानस्तपःक्षामतया बाहुभ्यां तां नदीं तरितुमशक्नुवन् मृतकल्पोऽश्विनौ दध्यौ। तं ध्यातमात्रावश्विनौ[2] [3]अद्भ्यः उत्तारयाञ्चक्रतुः[3]' इति । तथा अपरमितिहासमाचक्षते — 'भुज्युं नाम राजानं समुद्रमध्ये विपन्ननावं सखायः तत्यजुः' इति । तदेतद्वसिष्ठो वक्ष्यति—'उत त्यं' ( ऋ ७, ६८,७ ) इति । स सखिभिः त्यक्तोऽश्विनौ[3] तुष्टाव । तमश्विनावागत्य नौभी रथैरश्वैरुत्तारितवन्तौ' इति । तदेतत् कक्षीवान् वक्ष्यति—'तुग्रो ह भुज्युम्' ( ऋ १,११६,३-५ ) इत्यादितृचेन । तदेतदितिहासद्वयमिहोच्यते । याभिः ऊतिभिः गत्वा अन्तकम्[४] राजानम् जसमानम् । जसु मोचणेऽन्यत्र । इह तु सामर्थ्यात् निमज्जनार्थः । निमज्जन्तम् । क । उच्यते । आरणे आरणशब्दोऽत्रागाधवचनः । 'यो गाधेषु य आरणेषु' ( ऋ ८,७०,८ ) इति यथा । अगाधे [३]अनादेये उदके[३] । भुज्युम् च याभिः ऊतिभिर्गत्वा अव्यथिभिः व्यथ भयचलनयोः । अभयरूपाभिर्भयव्यावर्तिनीभिरूतिभिः । नौभिर्वा सामर्थ्यात् । जिजिन्वथुः समुद्रादुद्धारणेन प्रीणितवन्तौ स्थः । याभिः च । अत्रापीतिहासमाचक्षते—'कर्कन्धुं[५] वय्यञ्च[६] राजर्षी[७] अतिक्षामौ तपस्तप्यमानौ यदृच्छया पर्यटन्तावश्विनौ ददृशतुः । दृष्ट्वा च तावमृतेनाप्याययाञ्चक्रतुः' इति । तदेतदिहोच्यते । याभिश्चोतिभिर्गत्वा कर्कन्धुम् वय्यम् च जिन्वथः अमृतेन तर्पितवन्तौ स्थः, [८]अस्मानपि प्रति[८] ताभिः ॥ ६ ॥

वेङ्कट० याभिः अन्तकम् ऋषिम् अगाधे निमज्जन्तम्[९], भुज्युम् च याभिः अकम्पिताभिः[१०] ररक्षथुः । याभिः च कर्कन्धुम् वय्यम् तुर्वीतिम्[११] च ॥ ६ ॥

मुद्गल० आरणे आरणम् अगाधं कूपादि, तत्रासुरैः प्रक्षिप्तम् जसमानम् तैर्हिंस्यमानम् अन्तकम् । शत्रूणामन्तकरम् एतत्संज्ञं राजऋषिं हे अश्विना! अश्विनौ![१२] याभिः ऊतिभिः अवथः रक्षथः । तथा भुज्युम् सर्वस्य पालकम् एतत्संज्ञं समुद्रमध्ये निमग्नं तुग्रस्य पुत्रं राजर्षिम् याभिः ऊतिभिः रक्षणहेतुभूताभिः अव्यथिभिः व्यथारहिताभिर्नौभिः जिजिन्वथुः युवाम् अतर्पयतम् । अपि च कर्कन्धुम् वय्यम् च एतत्संज्ञकौ चासुरैः पीडयमानौ याभिः ऊतिभिः जिन्वथः प्रीणयथः । गतमन्यत् ॥ ६ ॥

याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ७ ॥

यार्भिः । शुचन्तिम् । धनऽसाम् । सुऽसंसदम् । तप्तम् । घर्मम् । ओम्याऽवन्तम् । अत्रये । यार्भिः ।
पृश्निऽगुम् । पुरुऽकुत्सम् । आवतम् । तार्भिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ७ ॥

स्कन्द० अत्रापीतिहासमाचक्षते — 'शुचन्तिर्नाम राजा राजयक्ष्मणा गृहीतस्तद्व्यावृत्तये सर्वस्वं ब्राह्मणेभ्यो

---

१. नास्ति मूको. २. ध्यानमात्रादेवा° अ; °मात्रावेवाश्वि° कु. ३-३. नास्ति अ. ४. नास्ति अ. ५. °न्धुः मूको. ६. वय्यश्च कु ति; नास्ति अ. ७. °र्षिः अ. ८-८. अस्मान् प्रत्यपि अ. ९. °ज्जन्तम् कु. १०. नास्ति वि[१] अ[२]. ११. तुर्वि° लपं.

ददौ। अश्विनौ च तुष्टाव। तमश्विनावागत्य स्वैर्भेषजैर्नीरुजं चक्रतुः' इति। तथा अपरमितिहासमाचक्षते—'अत्रिर्नामर्षिः। तमसुरा अग्निकूटे प्रचिक्षिपुः। सोऽश्विनौ तुष्टाव। तमश्विनावागत्य वृष्ट्या निशमय्याग्निं तत उज्जह्रतुः। बलं चासुरप्रतिबन्धसमर्थमस्मै सहाग्नेन ददतुः' इति। तदेतत् कक्षीवान् वक्ष्यति 'हिमेनाग्निम्' (ऋ १,११६,८) इति 'युवमत्रयेऽवनीताय' (ऋ १,११८,७) इत्यादिभिश्च[१]। तदेतदितिहासद्वयमिहोच्यते। याभिः ऊतिभिर्गत्वा शुचन्तिम् राजानं प्रति। कीदृशम्। धनसाम्। षणु दाने। धनानां दातारम्। सुषंसदम् संसत् सभोच्यते। शोभनसभम्। ततम् चाग्निं प्रति। कीदृशम्। घर्मम् घृ क्षरणदीप्त्योः। दीप्तम्। भवति हि किञ्चित् तप्तं न तु दीप्तं यथा निदाघे पांसवः। भवति च किञ्चिद्दीप्तं न तु तप्तं यथा माणिक्यादिरत्नम्। अत उभयेनाग्निर्विशेष्यते तप्तं घर्ममिति। ओम्यावन्तम् अवतेः पालनार्थस्येदं रूपम्। पालनवन्तं[२] युष्मत्प्रसादात् शीतीभूतम्[३]। अदाहकमित्यर्थः। अत्रये अत्रेरर्थाय। याभिः च। अत्रापीतिहासमाचक्षते—'पुरुकुत्सः पुत्रकामो महत् तपश्चचाराश्विनौ तुष्टाव च[४]। तस्मै अश्विनौ पुत्रं ददतुः' इति। तदेतदुच्यते। याभिः च ऊतिभिः पृश्निगुम् पृश्निशब्दो व्याघ्रसरूपवर्णवचनः[५]। पृश्नयो गावो यस्य स पृश्निगुः। तं पृश्निगुम् पुरुकुत्सम् प्रति आवतम् अवतिरत्र[७] सामर्थ्यात् गत्यर्थः। गतवन्तौ स्थः। पालनार्थ एव वा अवतिः। याभिरूतिभिर्गत्वा शुचन्त्यादीन् राजयक्ष्मापनयनादिभिः पालितवन्तौ स्थ इत्यर्थः। अस्मानपि प्रति ताभिः॥ ७॥

**वेङ्कट०** राजयक्ष्मणा गृहीतं ब्राह्मणेभ्यः सर्वस्वस्य दातारं[८] स्तोत्रैः शोभनसहासनम्[९] शुचन्तिम्[१०] नीरुजं चक्रथुः। अत्रिमृषिम् असुरैः [११]अग्नौ प्रक्षिप्तम्[११] अग्निम् उदकेन संशमय्य [१२]पालनवन्तम् अस्मै[१२] चक्रथुः। याभिः च पृश्निगुम् पुरुकुत्सम् च ररक्षथुः[१३]॥ ७॥

**मुद्गल०** हे अश्विनौ! धनसाम् धनस्य सम्भक्तारम् शुचन्तिम् एतन्नामानम् सुषंसदम् संसद् गृहम् शोभनसंसदम् याभिः ऊतिभिः अकुरुतम् तथा अत्रये याभिश्चोतिभिः ततम् प्रवृञ्जनेन सन्तप्तम् घर्मम् महावीरम् ओम्यावन्तम् सुखयुक्तं सुखेन स्प्रष्टुं[१४] शक्यम् अकुरुतम्। यथाऽस्मै सुखं भवति तथा हिमेनोदकेन तमग्निम् वारयेथाम्। अपि च याभिः ऊतिभिः पृश्निगुम् पुरुकुत्सम् च आवतम् अरक्षतम् ताभिः सर्वाभिः॥ ७॥

## याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः।
## याभिर्वर्तिकां ग्रसितामुमुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम्॥ ८॥

याभिः। शचीभिः। वृषणा। पराऽवृजम्। प्र। अन्धम्। श्रोणम्। चक्षसे। एतवे। कृथः। याभिः। वर्तिकाम्। ग्रसिताम्। अमुञ्चतम्। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'घोरो नामाग्नेः पुत्रः। [१५]योऽथर्वाङ्गिरसो ब्रह्मदण्डः[१५] पठ्यते, तस्य ज्येष्ठः

---

१. °भिः अ ति.　२. पालयन्तं अ कु.　३. नास्ति ति.　४. नास्ति अ ति.　५. °सरूपवचनः अ.
६. धृषं (°षः ति) गुणवचनो वा अ ति.　७ °तिरिह ति.　८. प्रदा° वि[२] अ[२].　९. °सनम् (?) कु.
१०. शुचन्तीं अ[१,२] कु वि[२,३].　११-११. नास्ति वि[२] अ[२].　१२-१२. °लनं तस्मै कु; °लनं तमस्मै वि[२] अ[२].
१३. ररक्षुः वि[२].　१४. स्प्रष्टुं मूको.　१५-१५. °रसे ब्रह्मदण्ड ति.

पुत्रः कुष्ठी श्याववर्णः गमनासमर्थो बभूव । सोऽश्विनौ तुष्टाव । तमश्विनौ विकृत्य जङ्घयोर्मध्ये शिरसि छित्त्वा पुनश्च सन्धाय गमनसमर्थं हिरण्यत्वचं च पुनरुज्जीवयाञ्चक्रतुः' इति। तदेतत्[1] कक्षीवान् वक्ष्यति — [2]'युवं श्यावाय' ( ऋ १, ११७, ८ ) इति। 'त्रिधा ह श्यावम्' ( ऋ १,११७,२४ ) इति च[2]। तथापरमितिहासमाचक्षते — 'वार्षागिरः ऋज्राश्वो[3] नाम राजा। तमश्विनोः स्वभूता कशा वृकी भूत्वोपतस्थौ। स तां दिव्येन चक्षुषा ज्ञात्वा अहन्यहनि विशस्य मेषशतं तस्यै आहारं कल्पयाञ्चकार। तत् ज्ञात्वा सा तस्मै चुकोप। सा तं शापेनान्धं चकार। अथ मृते वृषागिरि ऋज्राश्वमन्धं ज्ञात्वा तच्छत्रवः तत्पुरमुपरुरुधुः। तान्निष्क्रम्य सा वृकी बभञ्ज[4]। भग्नेषु शत्रुषु पुनरप्युपरोधमाशङ्कमान ऋज्राश्वोऽश्विनौ तुष्टाव तस्मै आश्वागत्याश्विनौ[5] अक्षिणी ददतुः' इति। तदेतत् कक्षीवान् वक्ष्यति — 'शतं मेषान्' (ऋ १,११६,१६;११७,१७) इति। 'अगच्छतं कृपमाणम्' ( ऋ १, ११९, ८ ) इत्यादिभिश्च। तथापरमितिहासमाचक्षते — 'नार्षद ऋषिर्बधिरो बभूव। सोऽश्विनौ तुष्टाव। तस्मै अश्विनौ श्रोत्रं ददतुरिति'। तदेतत् कक्षीवान् वक्ष्यति — 'प्रवाच्यं तत्' ( ऋ १,११७,८ ) इति। तदेतदितिहासत्रयमिहोच्यते। याभिः ऊतिभिर्गत्वा शचीभिः देवतामाहाभाग्यादतिशयवतीभिः[6] प्रज्ञाभिः कर्मभिर्वा। वृषणा! हे वर्षितारौ! परावृजम् परावर्जितम्। केन। सामर्थ्यात् प्राणैः जङ्घादिभिर्वा अवयवैः। मृतं छिन्नजङ्घं वा सन्तं घोरस्य ज्येष्ठं पुत्रमित्यर्थः। अन्धम् च ऋज्राश्वम्। श्रोणम् बधिरं च नार्षदम्। चक्षसे दर्शनाय एतवे गमनाय च। साकाङ्क्षत्वात् श्रवणाय चेति वाक्यशेषः। पूर्वैश्च सह योग्यतयैषां सम्बन्धः। चक्षसे अन्धमृज्राश्वम्[7] एतवे परावृजं घोरस्य ज्येष्ठं पुत्रं[8] श्रवणाय नार्षदम् प्र कृथः प्रकर्षेण कृतवन्तौ स्थः। याभिश्च। अत्रापीतिहासमाचक्षते[9] — 'वर्तिका नाम चटकजातिः शीघ्रगतिः[3] श्रमवर्जिता च। चवट्ट इत्यपभ्रंशेन[10] या लोके प्रसिद्धा। अस्या गच्छन्त्याः समुद्रमध्येऽपि शब्दः श्रूयते इति नाविका आचक्षते। तां [11]शीघ्रगतित्वाच्च श्रमवर्जितत्वाच्च दूत्येन केचिद् ऋषयः[11] प्रेषयामासुः। ताम् गच्छन्तीं वृको[12] जग्राह। साऽश्विनावाजुहाव। तामश्विनौ मोचयाञ्चक्रतुः' इति। तदेतत् कक्षीवान् वक्ष्यति — 'अजोहवीदश्विना' ( ऋ १, ११७, १६ ) इति। तदेवेहाप्युच्यते[13]। याभिः चोतिभिर्गत्वा[14] वर्तिकाम् ग्रसिताम् वृकेण ग्रस्तां सतीम् अमुञ्चतम्। मुचिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। अमोचयतम्। मोचितवन्तौ स्थ इत्यर्थः। ताभिः ॥ ८ ॥

**वेङ्कट०** यैः[15] कर्मभिः वर्षितारौ! परावृजम् नाम ऋषिम् अन्धम् पङ्गुं च दर्शनाय गमनाय च प्रचक्रथुः[16]। याभिः वृकेण[17] ग्रस्ताम् वर्तिकाम् अमुञ्चतम् वृकाऽऽस्यात् ॥ ८ ॥

**मुद्गल०** हे वृषणा! कामानां वर्षितारौ! अश्विना! अश्विनौ! याभिः शचीभिः कर्मभिः परावृजम् एतन्नामकमृषिम् पङ्गुं सन्तम् अपङ्गुम् अकुरुतम्। तथा अन्धम् दृष्टिरहितं सन्तम् ऋज्राश्वमृषिम् चक्षसे प्रकाशाय सम्यक् चक्षुषा दर्शनाय याभिः ऊतिभिः प्रकृथः प्रकर्षेण कुरुथः। याभिश्च श्रोणं विगुणजानुकम् एवं सन्तम् ऋषिम् एतवे गन्तुं प्रकृथः प्रकर्षेण कृतवन्तौ। अपि च

---

१. तदेतदिहोच्यते तत् कु २-२. नास्ति ति. ३. नास्ति अ. ४. बभञ्ज कु अ. ५. आगत्या° ति. ६. °तामाहात्म्या° ति ७-७. दर्शनाय ऋज्राश्वं अ. ८. सुतं ति ९. अत्रेतिहा° अ. ( तु. उद्गीथ ऋ १०,४०,३ ) १०. इत्येव कु. ११-११. शीघ्रगतिवत्त्वाच्च श्रमवर्जितत्वाच्च दूत्येन कश्चिदृषयः ति; शीघ्रगतित्वाद् ऋ° कु अ. १२. वृकी कु. १३. तदेतदिहो° ति. १४. ऊतिभिः अ कु. १५. नास्ति वि[1] अ[2]. १६. प्रचक्रतुः ल. १७. वृकेन कु.

याभिः ऊतिभिः वर्तिकाम् चटकसदृशस्य पक्षिणः स्त्रियम् ग्रसिताम् वृकेण ग्रस्ताम् अमुञ्चतम् वृकाऽऽस्यात् निर्मुक्ताम् अकुरुतम् । ताभिः ॥ ८ ॥

याभिः सिन्धुं मधुमन्तमसंश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ९ ॥

याभिः । सिन्धुम् । मधुऽमन्तम् । असंश्चतम् । वसिष्ठम् । याभिः । अजरौ । अजिन्वतम् ।
याभिः । कुत्सम् । श्रुतर्यम् । नर्यम् । आवतम् । ताभिः । ऊँ इति । ऊतिऽभिः । अश्विना । आ । गतम् ॥

स्कन्द० अत्रेतिहासमाचक्षते—"विश्वामित्रो वसिष्ठं जिघांसुः सरस्वतीमाहूयोवाच । मत्समीपं [1]वसिष्ठं शीघ्रमानयेति[1] । सा[2] तच्छ्रुत्वा विश्वामित्रादपि वसिष्ठादपि शापात् बिभ्यती किञ्चिदप्यप्रतिपद्यमाना चिन्ताकृशा विवर्णा बभूव । अथैनामेवंरूपां ज्ञात्वा कृपाशीलतया वसिष्ठ उवाच । 'रक्षात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनि । विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम्' ( मभा १८, ४२, २४ ) इति । अथ तं स्वकूले जपन्तं सरस्वती महता जलौघेन विश्वामित्राश्रमं प्रत्युवाह । ऊढ्वा च विश्वामित्राय निवेदयामास । निवेद्य च प्रहरणान्वेषणव्याकुले विश्वामित्रे कृतं मया स्वकार्यमिति मन्यमाना ब्रह्महत्याभयात् सरस्वती वसिष्ठं ततो दूरमपोवाह । अथ तत् ज्ञात्वा विश्वामित्रः क्रुद्धः सरस्वतीं शशाप शोणितं वहेति । सा शोणितमुवाह । 'अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा । सरस्वतीं तदा दृष्ट्वा बभूवुर्दुःखिता भृशम् ॥ ज्ञात्वा तदश्विनौ तस्याः तं शापमपनिन्यतुः । ततः सरस्वती जाता प्रसन्नसलिला शिवा' " ॥ ( मभा १८,४२,४० ) इति[3] । [4]भारते तु[4] ऋषयः शापात्सरस्वतीं मोचयामासुरित्याख्यानं तदश्विनोः प्रसादेनेति वर्णयितव्यम् । इतिहासान्तरं वा पर्येष्यम् । तथाऽपरमितिहासमाचक्षते—'वसिष्ठो हतपुत्रः पुत्रार्थी अश्विनावियाज । तस्मै अश्विनौ पुत्रं ददतुः' इति । तदेतद्[5] वसिष्ठ एव दर्शयिष्यति—'अविष्टं धीषु' ( ऋ ७, ६७,६ ) इत्यादिना । तदेतदितिहासद्वयमिहोच्यते । याभिः ऊतिभिः गत्वा सिन्धुम् 'सिन्धवः' ( निघ १,१३ ) इति नदीनाम । नदीं सरस्वत्याख्याम् । मधुमन्तम् 'मधु' ( निघ १, १२ ) इत्युदकनाम । व्यत्ययेन चात्र[6] पुँल्लिङ्गत्वम् । उदकवतीम् । असश्चतम् सश्चतिरत्रोपक्षये । अक्षयोदकाम् । वसिष्ठम् च याभिः ऊतिभिर्गत्वा अजरौ जरावर्जितौ अजिन्वतम् जिन्वतिः प्रीतिकर्मा ( तु. निघ ४,३ ) । [7]लोहितवहनशापापनयनेन पुत्रप्रदानेन[7] च प्रीणितवन्तौ स्थः । याभिः कुत्सम् । अत्रापीतिहासमाचक्षते[8]—'कुत्स इयेष अपि नाम साक्षाद्रूपेणाश्विनौ पश्येयमिति । तस्य परया भक्त्या स्तुतिभिश्चाऽऽराधितावश्विनौ दर्शनमुपाजग्मतुः' इति । तदेतदिहोच्यते । याभिः चोतिभिर्मामेव कुत्सम् प्रति । कीदृशम् । श्रुतर्यम् शृणोतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । छान्दसत्वाच्च गुणाभावः । यशब्दश्च प्रत्यय उपजनः । श्रावयितारं स्तुतीनाम् । स्तोतारमित्यर्थः । नर्यम् नरेषु भवम् । मनुष्यलोके एव व्यवस्थितं सन्तम् आवतम् अवतिरत्र गत्यर्थः । दर्शनं दातुं पूर्वमागतवन्तौ स्थः । इदानीमपि ताभिः ॥ ९ ॥

---

१-१. शीघ्रं वसिष्ठमा° अ. २. साऽपि अ. ३. नास्ति मूको. ४. भारतेषु अ. ५. तद् ति. ६. नास्ति ति. ७-७. °शापापयनपुत्रप्र° ति. ८-८. अत्रेतिहा° अ.

**वेङ्कट०** याभिः सिन्धुम् उदकवन्तं पीतोदकं चक्रथुः[1]। [2]देवानां †पणीन् प्रति† गन्तुं रसां नदीम्[2] वसिष्ठम् च याभिः पुत्रप्रदानेन अजरौ[3] ररक्षथुः। याभिः च कुत्सादीन् त्रीन् आवतम् ॥ ९ ॥

**मुद्गल०** हे अश्विनौ! सिन्धुम् स्यन्दनशीलां नदीम् मधुमन्तम् मधुसदृशेनोदकेन पूर्णाम् याभिः ऊतिभिः असश्चतम् अगमयतम्। प्रावाहयतमित्यर्थः। हे अजरौ! जरारहितावश्विनौ! वसिष्ठम् ऋषिम् याभिः ऊतिभिः अजिन्वतम् अप्रीणयतम्। याभिः च कुत्सादीन् त्रीन्[4] ऋषीन् आवतम्। अरक्षतम् ताभिः सर्वाभिः ॥ ९ ॥

याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम्।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥ १० ॥

याभिः। विश्पलाम्। धनऽसाम्। अथर्व्यम्। सहस्रऽमीळ्हे। आजौ। अजिन्वतम्। याभिः। वशम्। अश्व्यम्। प्रेणिम्। आवतम्। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—"अगस्त्यपुरोहितः ऐलो नाम राजा बभूव। तस्य सेनायां योद्ध्री विश्पला नाम स्त्री। तस्या अन्नार्थं धनार्थं च युध्यमानायाः शत्रवो जङ्घां चिच्छिदुः। तदपि कक्षीवान्[5] वक्ष्यति—'चरित्रं हि वेरिव' (ऋ १,११६,१५) इति। 'तस्याश्छिन्नां जङ्घां ज्ञात्वा पुरोहितोऽगस्त्योऽश्विनौ तुष्टाव। तौ विश्पलां प्रति जग्मतुः। तदेतत् कक्षीवानपि वक्ष्यति—'सूनोर्मानेन (ऋ १,११७,११) इति। आगत्य च सद्यो लोहमयीं जङ्घां विश्पलायाश्चक्रतुः। तदेतत् कक्षीवानेव वक्ष्यति—'सद्यो जङ्घाम्' (ऋ १,११६,१५), 'प्रति जङ्घाम्' (ऋ १,११८,८)" इति च। तदेवेहाप्युच्यते। याभिः ऊतिभिः गत्वा विश्पलाम् नाम योद्ध्रीं स्त्रियम्। धनसाम् वन षण सम्भक्तावित्यस्यैतद्रूपम्। सङ्ग्रामनिमित्तभूतस्य धनस्य सम्भक्त्रीम्। अथर्व्यम् थर्वतिश्चरतिकर्मा। अचरन्तीम्। छिन्नजङ्घत्वात् गन्तुमसमर्थामित्यर्थः। सहस्रमीळ्हे 'सहस्रम्' (निघ ३,१) इति बहुनाम। बहूनि धनानि निमित्तभूतानि यस्य स[6] सहस्रमीळ्हः, [7]तस्मिन्† सहस्रमीळ्हे[7]। बहुधनप्राप्त्यर्थमित्यर्थः। आजौ सङ्ग्रामे अजिन्वतम् [8]लोहमयजङ्घाकरणेन प्रीणितवन्तौ[8] स्थः। याभिः च वशम्। अत्रापीतिहासमाचक्षते—"वशो नाम राजा अश्वप्रायबलः। स हस्तिबलैः[9] शत्रुभिः पराजीयमानः साहाय्यं कर्तुमश्विनौ स्तुत्वाऽऽजुहाव। तं प्रति तस्मिन्नेवाहनि [10]'अश्विनावाजग्मतुः' इति। तदेतत् कक्षीवान्[10] वक्ष्यति—'एकस्या वस्तोः'" (ऋ १,११६,२१) इति। तदेवेहाप्युच्यते। याभिश्चोतिभिर्वशं राजानम्। कीदृशम्। अश्व्यम्। [11]समूहेऽयं यत् प्रत्ययः[11] अन्तर्णीतमत्वर्थश्च। अश्वसमूहवन्तम्। प्रेणिम् प्रीञ् तर्पणे। तर्पयितारं च स्तुतिभिः हविर्भिश्च देवानाम्। आवतम् आगतवन्तौ स्थः। अस्मानपि प्रति ताभिः ॥ १० ॥

**वेङ्कट०** [12]यैः पालनैः[12] विश्पलाम् नाम स्त्रियमैलस्यार्थाय तस्य शत्रुभिः सह युध्यमानां[13] शत्रुभिः [14]छिन्नजङ्घाम् अगन्त्रीं[14] सहस्रधननिमित्ते सङ्ग्राम ऐलस्य[15] पुरोहितेन अगस्त्येन स्तुतौ[16] अश्विनौ

---

१. चक्रतुः वि[1] ल लप. २-२. नास्ति कु †-† पणीति अ[1] क लपं; पणीति वि[1]; प्रणीं प्रति अ[2]. ३. नास्ति वि[1] अ[1]. ४. नास्ति मै[2]. ५. °वानपि ति. ६. नास्ति अ. ७-७. नास्ति अ. † तस्मै स° कु. ८-८. लोहमयजङ्घा…कृत° अ. ९ °स्तिबलेन अ. १०-१०. नास्ति अ. ११-११. समूहे यत्प्र° अ. १२-१२. नास्ति वि[1] अ[2]. १३. युध्यन्तीं मूको. १४-१४. 'जघनत्वाद् अधरस्त्रीम् वि[1] अ[2]; छिन्नजङ्घयन्त्रीं वि[1] लपं; °ङ्घां गच्छन्तीं कु. १५ खेजरय वि[1] अ[2]. १६. स्तुतौ वि[1] अ[2].

लोहमयजङ्घाप्रतिसन्धानात् ररक्षथुः । याभिः अश्वस्य पुत्रम् वशम् नाम राजानं स्तोत्रैः तर्पयितारं हस्तिबलैः शत्रुभिरभिभूयमानं ररक्षथुः ॥ १० ॥

**मुद्गल०** हे अश्विना! अश्विनौ! धनसाम् धनं सम्भजमानाम् अथर्व्यम् अगच्छन्तीं छिन्नजङ्घात्वेन गन्तुमसमर्थाम् विश्पलाम् एतत्संज्ञाम् अगस्त्यपुरोहितस्य खेलस्य[1] सम्बन्धिनीम् सहस्रमीळ्हे बहुधनोपेते आजौ सङ्ग्रामे याभिः ऊतिभिः अजिन्वतम् गन्तुं समर्थाम् अकुरुतम् । याभिः च अश्व्यम् अश्वाख्यस्य पुत्रम् प्रेणिम् स्तुतेः प्रेरयितारम् वशम् एतत्संज्ञमृषिम् आवतम् अरक्षतम् । ताभिः सर्वाभिः ॥ १० ॥

इति प्रथमाष्टके सप्तमाध्याये चतुस्त्रिंशो वर्गः ॥

याभिः॑ सु॒दानू॑ औशि॒जाय॑ व॒णिजे॑ दी॒र्घश्र॑वसे॒ मधु॒ कोशो॒ अक्ष॑रत् ।
क॒क्षीव॑न्तं स्तो॒तारं॒ याभि॒राव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ ११ ॥

याभिः॑ । सु॒दानू॒ इति॑ सु॒ऽदानू॑ । औ॒शि॒जाय॑ । व॒णिजे॑ । दी॒र्घऽश्र॑वसे । मधु॑ । कोशः॑ । अक्ष॑रत् ।
क॒क्षीव॑न्तम् । स्तो॒तार॑म् । याभिः॑ । आव॑तम् । ताभिः॑ । ऊँ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'दीर्घश्रवा ऋषिः परिक्षीणवृत्तिर्वैश्यजीविकां वणिग्वृत्तिमास्थितः । अन्यथा जीवन् मधु विचिक्रीषमाणः[2] तदर्थमश्विनौ तुष्टाव । तावागत्यास्य मेघात् मधु क्षारयाञ्चक्रतुः' इति । तदेतदिहोच्यते । याभिः ऊतिभिर्हेतुभूताभिः हे सुदानू! शोभनदानौ! । औशिजायेत्यादि सर्वत्र तादर्थ्ये चतुर्थी । उशिजः पुत्रस्य वणिजः दीर्घश्रवसः ऋषेरर्थाय । मधु कोशः मेघः अक्षरत् । कक्षीवन्तम् च स्तोतारम् प्रति याभिः ऊतिभिः आवतम् अवतिरत्र गत्यर्थः पालनार्थो वा । त्रिकालविषयसर्वार्थविषयज्ञानप्रदानेन वा पालितवन्तौ[3] स्थ इत्यर्थः । तदेतत् पुरस्तादप्युक्तम्—'याभिस्त्रिमन्तुः' ( ऋ १,११२,४ ) इति । अस्मानपि प्रति । ताभिः ॥ ११ ॥

**वेङ्कट०** याभिः शोभनदानौ! कक्षीवते वणिग्वृत्तये पर्वतमध्ये गताय दीर्घश्रवसे जलं मेघः अक्षरत् इति एतदेवाह—कक्षीवन्तम् इति ॥ ११ ॥

**मुद्गल०** उशिक्संज्ञा दीर्घतमसः पत्नी । तस्याः पुत्रः दीर्घश्रवा नाम कश्चिदृषिरनावृष्ट्या जीवनार्थम् अकरोद्वाणिज्यम् । स च वर्षणार्थम् अश्विनौ तुष्टाव । तौ च अश्विनौ मेघं प्रेरितवन्तौ । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे सुदानू! शोभनदानावश्विनौ! औशिजाय उशिक्पुत्राय वणिजे वाणिज्यं कुर्वते दीर्घश्रवसे एतत्संज्ञाय ऋषये याभिः युष्मदीयाभिः ऊतिभिः हेतुभूताभिः कोशः मेघः मधु माधुर्योपेतं वृष्टिजलम् अक्षरत् असिञ्चत् । युष्मत्प्रसादादपेक्षिता वृष्टिर्जातेत्यर्थः । अपि च उशिजः पुत्रम् स्तोतारम् कक्षीवन्तम् एतत्संज्ञमृषिम् याभिः ऊतिभिः आवतम् अरक्षतम् ताभिः सर्वाभिः । कक्ष्या रज्जुरश्वस्य तया[4] युक्तः कक्षीवान् ॥ ११ ॥

---

१. लेखस्य मूको. २. °क्रीयमाणः मूको. ३. पालयित° मूको. ४. नास्ति मूको.

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम् ॥ १२ ॥

याभिः । रसाम् । क्षोदसा । उद्नः । पिपिन्वथुः । अनश्वम् । याभिः । रथम् । आवतम् । जिषे । याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजत । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१२॥

**स्कन्द०** अत्रेतिहासमाचक्षते — 'पणिभिरसुरैरपह्रियमाणा गा अनुगच्छन्तो देवगोपाला रसां नामान्तरिक्षनदीमगाधोदकां नोत्तरितुं शेकुः । तत् ज्ञात्वा देवाः सङ्क्रुद्धा रसां शेपुः, निरुदका भवेति । सा प्रत्यानीतासु गोष्वश्विनौ परिचचार । तामश्विनौ गत्वा पुनरगाधोदकां चक्रतुः' इति । तदेतदिहोच्यते[1] । याभिः ऊतिभिर्गत्वा रसाम् नामान्तरिक्षनदीम् क्षोदसा[2] 'क्षोदः' (निघ १,१२) इत्युदकनाम । तृतीयानिर्देशाच्च रहितामिति वाक्यशेषः । देवशापादुदकेन रहिताम् । उद्नः[3] पिपिन्वथुः पिन्वतिरत्र सामर्थ्यात् पूरणार्थः । उदकेन पूरितवन्तौ स्थः । अनश्वम् अश्ववियुक्तं च रथम् । कस्य । स्वभूतमश्विनोरेव । कुत एतत् । 'अश्विनोरसनं रथम्' (ऋ १,१२०,१०) इति मन्त्रान्तरे दर्शनात् । याभिः ऊतिभिः आवतम् अवतिरत्र गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थो[3] द्रष्टव्यः । [4]लडर्थे लङ्[4] 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति । आवयथः । शत्रून् प्रति गमयथ इत्यर्थः । अथवा आवतमिति अवतिः शुद्ध एव प्रकृत्यर्थे वर्तते । अनश्वं रथमिति तृतीयार्थे द्वितीया । अनश्वेन च रथेन याभिरूतिभिः[5] शत्रून् प्रति गच्छथ इत्यर्थः । जिषे जेतुं शत्रून् । याभिः च त्रिशोकः अत्रापीतिहासमाचक्षते[6] — 'त्रिशोको नाम राजर्षिः[2] आत्मीयाभिः गोभिः सह स्वर्गं गच्छेयमिति कामयमानोऽश्विनौ तुष्टाव । तस्यागत्याश्विनौ स्वर्गं गा[2] निन्यतुः' इति । तदेतदिहोच्यते । याभिश्च युष्मदूतिभिः हेतुभूताभिः त्रिशोक ऋषिः उस्रियाः[2] गाः उदाजत अज गतिक्षेपणयोः । उत्क्षिप्तवान् । स्वर्गं गमितवानित्यर्थः । अस्मानपि प्रति । ताभिः ॥ १२ ॥

**वेङ्कट०** पणिभिरपहृतासु गोषु तत्र गमनार्थं रसाया एव नद्या उदकं प्रथममास्येन अश्विनौ पपतुः[7] । अथ कार्ये समाप्ते प्रागुदकेन यः क्षुण्णो[8] मार्ग आस्यात्मकः[9], तेनैव पुनरपि अश्विनौ पूरितवन्ताविति[10] । तथाऽनश्वः च कदाचित् अश्विनो रथः अभूत् युद्धे तं जयाय युद्धमध्ये ररक्षतुः[11] । त्रिशोकः आत्मीयाभिः गोभिः सह स्वर्गं जिगमिषुः स्वर्गे गा उदाजत[12] इति ॥ १२ ॥

**मुद्गल०** हे अश्विना! याभिः ऊतिभिः हेतुभूताभिः रसाम् नदीम् अनावृष्ट्या जलरहिताम् क्षोदसा कूलानि सम्पिषता उद्नः उदकेन पिपिन्वथुः युवां पूरितवन्तौ । यथा अनश्वम् अश्वैर्वियुक्तम् आत्मीयम् रथम् जिषे जेतुम् याभिः ऊतिभिः आवतम् अगमयतम् । अपि च याभिः ऊतिभिः कण्वपुत्रः त्रिशोकः ऋषिः उस्रियाः अपहृता गाः उदाजत उदगमयत् असुरसकाशात् लेभे । ताभिः सर्वाभिः ॥ १२ ॥

---

१. दिहाप्यु° अ. २. नास्ति अ. ३. °च्चात्रान्त° अ. ४-४. लिडर्थे लट् मूको. ५. नास्ति कु. ६. अत्रेतिहा° अ. ७. पपथुः वि[1,2] ववर्धतुः वि[3] अ[2]. ८. कर्मणो वि[3] अ[2]. ९. आध्यात्मिकः अ[2]; आध्यात्मकः वि[3]. १०. °विह वि[3] अ[2]. ११. °क्षथुः वि[1,2] अ[1] कु ल लपं; र(१र)रक्षतुः वि[3] अ[2]. १२-१२. उदाजतम् कु.

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १३ ॥

याभिः । सूर्यम् । परिऽयाथः । पराऽवति । मन्धातारम् । क्षैत्रऽपत्येषु । आवतम् । याभिः ।
विप्रम् । प्र । भरत्ऽवाजम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥

**स्कन्द०** याभिः ऊतिभिः सूर्यम् आदित्यम् परियाथः[1] परिप्राप्नुथः । परावति दूरे स्थितम् । केन पुनर्दूरे स्थितमश्विनौ ! परिप्राप्नुथः । स्वरथचक्रेण । कुत एतत् । 'न्यघ्न्यस्य मूर्धनि' ( ऋ १,३०,१९ ) इति मन्त्रान्तरे दर्शनात् । मन्धातारम्[2] मान्धातारं च राजानं प्रति याभिरूतिभिः । क्षैत्रपत्येषु 'निमित्तात् कर्मसंयोगे' ( पावा २, ३, ३६ ) इत्येषा सप्तमी 'चर्मणि द्वीपिनं हन्ति' इति यथा । क्षेत्रपतित्वार्थम् । शत्रुणाऽऽक्रान्तस्य स्वस्य विषयस्य पुनरपि स्वामिनं कर्तुमित्यर्थः । आवतम् आगतवन्तौ स्थः । अत्रेतिहासमाचक्षते — 'मान्धातुर्विषयभूमिमनन्तरो राजा आचक्राम । स तं स्वबलेन निग्रहीतुमशक्नुवन् अश्विनौ तुष्टाव । आगत्य च तस्याश्विनौ शत्रून् निगृह्य विषयं प्रत्यर्पयाञ्चक्रतुः' इति । तदेतदुक्तं मन्धातारमिति । याभिः च । अत्रापीतिहासमाचक्षते— 'भरद्वाज ऋषिर्धनकामोऽश्विनौ तुष्टाव । तस्य स्वरथेनानीयाश्विनौ प्रभूतं धनं ददतुः' इति । तदेतत् कक्षीवान् दर्शयिष्यति — 'यदयातं दिवोदासाय' ( ऋ १,११६,१८ ) इति । तदेवेहाप्युच्यते । याभिश्च ऊतिभिः विप्रम् मेधाविनम् भरद्वाजम् प्रभूतधनदानार्थं प्रकर्षेण गतवन्तौ[3] स्थः । अस्मानपि प्रति । ताभिः ॥ १३ ॥

**वेङ्कट०** याभिः सूर्यम्[4] परिगच्छथः दूरे । [5]'न्यघ्न्यस्य मूर्धनि' इति मन्त्रः[5] । मन्धातारम्[6] च शत्रुभ्यस्तेषुतेषु क्षैत्रपत्येषु सप्तद्वीपविषयेषु ररक्षथुः । याभिः च मेधाविनम् भरद्वाजम् प्र आवतम् ॥ १३ ॥

**मुद्गल०** हे अश्विनौ ! परावति दूरदेशे स्थितम् सूर्यम् तमोरूपेण स्वर्भानुनाऽऽवृतमादित्यं तस्मात् तमसो मोचयितुम् याभिः ऊतिभिः परियाथः युवां परितो गच्छथः । तथा मन्धातारम् ऋषिम् क्षैत्रपत्येषु क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः, तत्सम्बन्धिषु कर्मसु आवतम् अरक्षतम् । अपि च याभिः ऊतिभिः विप्रम् मेधाविनम् भरद्वाजम् ऋषिम् अन्नप्रदानेन प्र आवतम् प्रकर्षेण अरक्षतम् । ताभिः सर्वाभिः ॥ १३ ॥

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १४ ॥

याभिः । महाम् । अतिथिऽग्वम् । कशःऽजुवम् । दिवःऽदासम् । शम्बरऽहत्ये । आवतम् ।
याभिः । पूःऽभिद्ये । त्रसदस्युम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥

---

१. नास्ति मूको. २. मान्धा° अ कु. ३. आग° ति. ४. नास्ति लपं. ५-५. नास्ति कु. ६. मान्धा° अ°.

स्कन्द० अत्रेतिहासमाचक्षते—'दिवोदासो नाम राजा शम्बरनाम्नाऽसुरेण युयुत्समानोऽश्विनौ स्तुत्वा सहायावाजुहाव। तस्याऽऽगत्याश्विनौ सहायौ बभूवतुः' इति। तदेतदिहोच्यते। याभिः ऊतिभिः महाम् वीर्यतः प्रभावतो वा महान्तम्। अतिथीन् प्रति परिचारकतया गच्छति इत्यतिथिग्वस्तम् अतिथिग्वम्। अतिथीनां परिचारकमित्यर्थः। कशोजुवम्[1] कशशब्दः[2] कशापर्यायः। 'कशा' (निघ १,११) इति वाङ्नाम। जवतिर्गत्यर्थः। स्तुतिलक्षणया वाचा युवां प्रति गन्तारम्। युवयोरेव स्तोतारमित्यर्थः। दिवोदासम् राजानं प्रति शम्बरनाम्नोऽसुरस्य वधे साहाय्यं कर्तुमागतवन्तौ[3] स्थः। [4]याभिः च[4]। अत्रापीतिहासमाचक्षते—'त्रसदस्यो राज्ञः पुरमुपरुध्य बलात् शत्रवो ग्रहीतुमारेभिरे। सोऽश्विनौ तुष्टाव। तस्याऽऽगत्याश्विनौ[5] शत्रून् बभञ्जतुः' इति। तदेतत् सध्वंसो दर्शयिष्यति—'याभिर्नरा त्रसदस्युम्' (ऋ ८, ८, २१) इति। तदेतदिहाप्युच्यते। याभिः चोतिभिः पूर्भिद्ये पूर्नगरम्, सा भिद्यते येन यस्मिन् वा सङ्ग्रामे स पूर्भिद्यः, तस्मिन् पूर्भिद्ये। त्रसदस्युम् आवतम् त्रसदस्युं राजानं प्रति गतवन्तौ स्थः। अस्मानपि प्रति ताभिः॥ १४॥

वेङ्कट० याभिः महान्तम् अतिथीन् प्रति गन्तारं तान्[7] परिचरन्तं [8]शम्बरभयाद्भद्रं प्रति गच्छन्तं[8] दिवोदासम् शम्बरहनने[9] ररक्षथुः[10]। याभिः च [11]पुरो भेदने[11] त्रसदस्युम् आवतम्॥ १४॥

मुद्गल० हे अश्विनौ! महाम् महान्तम् अतिथिग्वम् अतिथिभिर्गन्तव्यम् कशोजुवम् असुरभीत्या उदकं प्रवेष्टुं गन्तारम् एवं भूतम् दिवोदासम् एतत्संज्ञकं राजर्षिम् शम्बरहत्ये शम्ब आयुधम्, तद्युक्तः शम्बरोऽसुरः, तस्य हनने विषयभूते सति याभिः ऊतिभिः आवतम् अरक्षतम्। अपि च याभिः ऊतिभिः पूर्भिद्ये पुराणि नगराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः सङ्ग्रामस्तस्मिन् त्रसदस्युम् एतत्संज्ञकमृषिं पुरुकुत्सपुत्रम् आवतम् अरक्षतम्। ताभिरित्यादि पूर्ववत्॥ १४॥

**याभि॑र्व॒म्रं वि॑पिपा॒नमु॑पस्तु॒तं क॒लिं याभि॑र्वि॒त्तजा॑निं दुव॒स्यथः॑।**
**याभि॒र्व्य॑श्वमु॒त पृ॒थिमाव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम्॥ १५॥**

याभिः॑। व॒म्रम्। वि॒ऽपि॒पा॒नम्। उ॒प॒ऽस्तु॒तम्। क॒लिम्। याभिः॑। वि॒त्तऽजा॑निम्। दु॒व॒स्यथः॑।
याभिः॑। विऽअ॑श्वम्। उ॒त। पृ॒थिम्। आव॑तम्। ताभिः॑। ऊँ इति॑। सु। ऊ॒तिऽभिः॑। अ॒श्वि॒ना॒। आ। ग॒त॒म्॥

स्कन्द० अत्रेतिहासमाचक्षते—'वम्र ऋषिर्ग्रीष्मे तपस्यन् अत्यन्ततृषितो बभूव। स उदकार्थम्[12] [13]अश्विनौ तुष्टाव। तस्मै आगत्याश्विनावनभ्रे[13] नभसि वृष्टिं चक्रतुः' इति। तथापरमितिहासमाचक्षते—'कलिर्नाम ऋषिर्जरया परीतस्तरुणीं भार्यां लेभे। स तत्प्रीत्यै पुनर्यौवनमात्मन इच्छन् अश्विनौ तुष्टाव। तमागत्याश्विनौ पुनर्यौवनं चक्रतुः' इति। तदेतत् घोषा वक्ष्यति—'युवं विप्रस्य' (ऋ १०, ३९,८) इति। तदेतदितिहासद्वयमिहोच्यते। याभिः चोतिभिः वम्रम् ऋषिम् विपिपानम् पा पाने। सामर्थ्याच्चान्तर्णीतसनर्थो[14] द्रष्टव्यः। विविधं पिपासन्तम्। अत्यन्ततृषितमित्यर्थः। उपस्तुतम् कर्तर्ययं क्तप्रत्ययश्छान्दसत्वात्। उपस्तोतारम्। कलिम् च याभिः ऊतिभिः वित्तजानिम्

---

१. नास्ति अ. २. कशश° अ कु. ३. कृतवन्तौ अ. ४-४. नास्ति कु ति. ५. तस्याश्वि° ति. ६. °स्मान् अ कु. ७. नास्ति वि[१] अ[१]. ८-८. नास्ति कु; °याद्भवं वि[१,२] ल लपं; °याद्भृदं वि[२] अ. ९. °हननेन वि[१] अ[१]. १०. रक्षतु° वि[१]; °क्षतु अ[१]. ११-११. पुराद्भेदने वि अ[१]. १२. °दकार्थी कु ति. १३-१३. °श्विनौ भभ्रे ति. १४. °च्चात्रान्त° अ.

वित्तशब्दो विन्दतेर्लाभार्थस्य द्रष्टव्यः। वित्ता जाया येन स वित्तजानिः लब्धभार्यकः तं वित्तजानिम्। दुवस्यथः 'दुवस्यति' (निघ ३,५) इति परिचरणकर्मा। वृष्टिप्रदानेन पुनर्यौवनकरणेन च[१] परिचरितवन्तौ स्थः। याभिः च अत्रापीतिहासमाचक्षते—'ऋषयः क्वचित् समेताः कोऽस्मास्वश्विनौ सम्यग्यजत इति जिज्ञासमाना ऊचुः। सर्वेऽश्विनौ स्वयज्ञेषु सहाह्वयामः। तद्यस्य न आहूतावश्विनौ स्वरूपेणागमिष्यतः स[२] सम्यग्यजत इति। तत्राश्विनावाहूतौ कक्षीवतो व्यश्वस्य दीर्घतमसः पृथेश्च यज्ञे स्वरूपेणाजग्मतुः'[३] इति। तदेतच्छशकर्णो वक्ष्यति "यद्वां कक्षीवाँ उत"[४] (ऋ ८,९,१०) इति। तदेवेहोच्यते। याभिः चोतिभिः व्यश्वम् ऋषिम् प्रति[५] उत पृथिम् प्रति आवतम् गतवन्तौ[६] स्थः। अस्मानपि प्रति। ताभिः॥ १५॥

वेङ्कट० याभिः वम्रादींस्त्रीन् ररक्षथुः। कलिर्नाम[७] वृद्धः सन् तरुणीं जायां विस्वा[८] पुनर्यौवनम् अलभत। दुवस्यतिः प्रीणनार्थः। याभिः च आङ्गिरसम् व्यश्वम् अपि च पृथिम् आवतम्॥ १५॥

मुद्गल० हे अश्विनौ! वम्रम् विखनसः पुत्रम् एतत्संज्ञम् ऋषिम् विपिपानम् विशेषेण पार्थिवं रसं पिबन्तम् याभिः ऊतिभिः अरक्षतम्। कीदृशम्। उपस्तुतम् समीपस्थैः सम्यक् स्तुतम् इति स्तूयमानम्। वित्तजानिम् लब्धभार्यम् कलिम् एतत्संज्ञकमृषिम् याभिः ऊतिभिः दुवस्यथः रक्षथः। उत अपि च व्यश्वम् विगताश्वम् पृथिम् एतत्संज्ञं वैनं राजर्षिम् याभिः ऊतिभिः आवतम् अरक्षतम्। अन्यत् पूर्ववत्॥ १५॥

इति प्रथमाष्टके सप्तमाध्याये पञ्चत्रिंशो वर्गः॥

याभि॑र्नरा श॒यवे॒ याभि॒रत्र॑ये॒ याभिः॑ पु॒रा मन॑वे गा॒तुमी॒षथुः॑।
याभिः॒ शारी॒राज॑तं॒ स्यूम॑रश्मये॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम्॥ १६॥

याभिः॑। न॒रा॒। श॒यवे॑। याभिः॑। अत्र॑ये। याभिः॑। पु॒रा। मन॑वे। गा॒तुम्। ई॒षथुः॑। याभिः॑। शारीः॑। आज॑तम्। स्यूम॑ऽरश्मये। ताभिः॑। ऊँ॒ इति॑। सु। ऊ॒तिऽभिः॑। अ॒श्वि॒ना॒। आ। ग॒त॒म्॥

स्कन्द० याभिः नरा मनुष्याकारौ! हे अश्विनौ! शयवे शयोरर्थाय। शयोर्गाम् अधेनुं[१] निवृत्तप्रसवां वृद्धां च धेनुं कर्तुमित्यर्थः। [४]तदेतत्पुरस्तादप्युक्तम्—'याभिर्धेनुम्'[४] (ऋ १,११२,३) इति। याभिः च अत्रये अत्रेरर्थाय। अत्रिमसुरैरग्निकूटे प्रक्षिप्तमुद्धर्तुं बलं चासुरप्रतिबन्धसमर्थं सहाख्येनास्मै दातुमित्यर्थः। तदेतत् पुरस्तादप्युक्तम्—'तप्तं घर्मम्' (ऋ १,११२,७) इति। याभिः च पुरा मनवे अत्रेतिहासमाचक्षते—'मनुर्नाम राजा। स महत्यामनावृष्टौ[१०] व्यतीतायाम् अन्नक्षयात् प्रजासु कर्षितुमशक्नुवतीष्वन्नक्षयेण च बाध्यमानास्त्वन्नकामोऽश्विनौ तुष्टाव। तस्मै आगत्याश्विनौ हलेन कर्षयित्वा यवान्नं ददतुः' इति। तदेतत् कक्षीवान् वक्ष्यति—'युवं वृकेण' (ऋ १,११७,२१) इति। सौभरिरपि वक्ष्यति—'दशस्यन्ता मनवे' (ऋ ८,२२,६) इति। तदेवेहाप्युच्यते। याभिः ऊतिभिः पुरा पूर्वस्मिन् काले मनवे मनोरर्थाय। हलेन

---

१. नास्ति अ ति. २. नास्ति अ. ३. आज° ति. ४-४. नास्ति ति. ५. नास्ति ति. ६. आग° ति. ७. कलिरपि कु. ८. गृहीत्वा कु; हित्वा वि[२] अ[२]. ९. धेनुं अ ति. १०. °त्या···ना° ति.

कर्षयित्वा मनवेऽन्नं दातुमित्यर्थः[1]। गातुम् गमनम् ईषथुः इच्छयाऽत्र[2] तत्पूर्वकमनुष्ठानं लक्ष्यते। गमनम्[3] अनुष्ठितवन्तौ स्थः। अथवाऽत्र[4] इषतिगातुशब्दयोर्द्वयोरपि गमनवचनत्वात् तस्य च तदेव प्रति करणत्वासम्भवात् सामान्यविशेषभेदेन गातेरिषतेश्च क्रियासाधनभावः समर्थयितव्यः। गोपोषं पुष्यति, ओदनपाकं पचति, उष्ट्रासिका आस्यते, हतशायिकाः शय्यन्त इति यथा। 'याभिः च शारीः' इत्यादि। अत्रापीतिहासमाचक्षते—'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्। सालावृका मर्कटा उच्यन्ते। तेषामद्यमानानां स्यूमरश्मिर्ऋषिरश्विनौ तुष्टाव। तं प्रत्यागत्याश्विनाविषुभिः सालावृकान् निरुरुधुः' इति। तदेतदुच्यते[5]। याभिश्रोतिभिर्गत्वा शारीः शरमयीरिषूः आजतम् अज गतिक्षेपणयोः। सालावृकान् प्रति क्षिप्तवन्तौ स्थः। स्यूमरश्मये[6] स्यूमरश्मेर्ऋषेरर्थाय। अस्मानपि प्रति। ताभिः ॥ १६ ॥

वेङ्कट० अधेनोः धेनूकरणार्थम्[7] अग्निप्रशमनार्थं च शयुम् अत्रिं च 'प्रति गमनेच्छां चक्रतुः[8]। याभिः च पुरा मनवे राज्ञे[9] अनावृष्ट्या अनडुत्सु परिक्षीणेषु कर्षणविमुखे राष्ट्रे[10] ररक्षतुः[11]। इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्। तेषां स्यूमरश्मिरश्विनौ तुष्टाव। [12]स वृकेभ्योऽश्विभ्यां[12] शरमयीः इषूः वृकवधार्थं[13] विसृज्य रक्षितः ॥ १६ ॥

मुद्गल० हे नरा! नेतारावश्विनौ! पुरा पूर्वस्मिन् काले शयवे एतत्संज्ञकाय ऋषये गातुम् दुःखात् निर्गमलक्षणं मार्गम् याभिः ऊतिभिः ईषथुः युवां वाञ्छितवन्तौ। कृतवन्तावित्यर्थः। किं तत्। सामर्थ्यात् 'शयवे चिन्नासत्या शचीभिः' (ऋ १,११६,२२) इत्यस्याम् ऋचि प्रतिपादितम्। तथा अत्रये ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय सन्तापकारिणोऽग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गम् याभिः ऊतिभिः युवाम् इष्टवन्तौ। एतच्च 'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ १,११६,८) इत्यादौ प्रसिद्धम्। तथा मनवे एतन्नाम्ने राजर्षये याभिः ऊतिभिः यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवन्तौ। अपि च स्यूमरश्मये स्यूमा[14] स्यूतः सम्बद्धो रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये याभिः ऊतिभिः शारीः शरो नाम वेणुविशेषः, तद्विकारभूता इषूः आजतम् शत्रून् प्रति प्रेरयतम्। ताभिः इत्यादि समानम् ॥ १६ ॥

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना।
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ॥ १७ ॥

याभिः। पठर्वा। जठरस्य। मज्मना। अग्निः। न। अदीदेत्। चितः। इद्धः। अज्मन्। आ।
याभिः। शर्यातम्। अवथः। महाऽधने। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥

स्कन्द० अत्रेतिहासमाचक्षते—'पठर्वा नाम ऋषिरामयावी कृशो विवर्णो बभूव। सोऽश्विनौ तुष्टाव।

---

१. ददतुरि° मूको. २. °या अ कु. ३. नास्ति कु. ४. अथवा कु. ५. तदेतदिहोच्यते ति. ६. नास्ति अ. ७. धेनु° कु. ८-८. नास्ति कु; °च्छाया अ[1]; °गमनेच्छा वि[1,2,3] अ[2] ल लपं. ९. नास्ति वि[1] अ[2]. १०. राज्ञे राष्ट्रे लपं. ११. ररक्षथुः कु. १२-१२. सालावृके° वि[1] अ[2]. १३ उपध्यानार्थम् वि[1] अ[2]. १४. नास्ति मूको.

तमश्विनौ दीप्ताग्निम् इव[१] बलवन्तमतितेजस्विनं चक्रतुः' इति। तदेतदिहोच्यते। याभिः युष्मदूतिभिः हेतुभूताभिः। पठर्वा[२] नाम ऋषिः। जठरस्य मज्मन् तात्स्थ्याचात्र ताच्छब्द्यम्। 'मज्मना (निघ २,९) इति बलनाम। जाठरस्याग्नेः प्रवृद्ध्येत्यर्थः[३]। अग्निः न अदीदेत् अग्निरिव अदीप्यत[४]। कतमोऽग्निः। चितः चयनेन संस्कृतः। इद्धः[१] आहुतिसमूहेन दीप्तः। अज्मन् आ 'अज्मा' (निघ ३,४) इति गृहनाम। आकारोऽध्यर्थे। गृहेऽधि गृहस्योपरि। यज्ञगृहे इत्यर्थः। याभिश्च शर्यातम् अत्रापीतिहासमाचक्षते—'शर्यातो नाम राजा सङ्ग्रामे भग्नबलो नश्यन् शत्रुभिरवगम्यमानोऽश्विनौ[५] तुष्टाव। तस्यागत्याश्विनौ[६] शत्रून् प्रतिबभञ्जतुः' इति। तदेतदिहोच्यते। याभिः च ऊतिभिर्गत्वा शर्यातम् नाम राजानम् अवथः पालितवन्तौ स्थः। महाधने सङ्ग्रामे। अस्मानपि प्रति ताभिः ॥ १७ ॥

**वेङ्कट०** [७]पठर्वा †नाम सन्नजाठराग्निः† पश्चात् प्रवृद्धाग्नेः जठरस्य दीप्तिबलेन गृहे यजमानैः होमार्थं ‡सञ्चितः काष्ठैः‡ समिद्धः इव अग्निः प्रजज्वाल। याभिः च शर्यातम् अवथः सङ्ग्रामे[७] ॥ १७ ॥

**मुद्गल०** हे अश्विनौ! जठरस्य जठरोपलक्षितस्य शरीरस्य मज्मना बलेन युक्तः सन् पठर्वा एतत्संज्ञो राजर्षिः अज्मन् अज्मनि सङ्ग्रामे[८] याभिः[९] युष्मदीयाभिरूतिभिः[१०] आ समन्तात् अदीदेत् अदीप्यत। दृष्टान्तः। चितः काष्ठैरभिचितः इद्धः यज्ञगृहे ऋत्विग्भिः प्रज्वालितः अग्निः न यथा अग्निः प्रकाशते तद्वदित्यर्थः। अपि च शर्यातम् मानवम् इन्द्रेण सह स्पर्धमानम् महाधने महता धनेनोपेते सङ्ग्रामे याभिः ऊतिभिः अवथः रक्षथः। [११]ताभिः इत्यादि गतम्[११] ॥ १७ ॥

## याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः
## याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१८॥

याभिः। अङ्गिरः। मनसा। निऽरण्यथः। अग्रम्। गच्छथः। विऽवरे। गोऽअर्णसः। याभिः।
मनुम्। शूरम्। इषा। सम्ऽआवतम्। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥१८॥

**स्कन्द०** याभिः ऊतिभिर्गत्वा[१२] स्तोतॄन् प्रति हे अङ्गिरः! सोऽयमित्यभिसम्बन्धात् [१३]अङ्गिरश्शब्देन अत्राङ्गिरःसम्बद्धावश्विनौ[१३] उच्येते। व्यत्ययेन च[१] द्विवचनस्य स्थाने एकवचनम्। अङ्गिरःसम्बद्धौ। कः पुनरङ्गिरसोऽश्विनोश्च सम्बन्धः। स्तोतृस्तुत्यलक्षणः[१४]। अस्मत्पितुरङ्गिरसः स्तुत्यावित्यर्थः। मनसा स्वेन चित्तेन। निरण्यथः निशब्दोऽत्र प्रकर्षे। निरुक्तं निशुष्कमिति यथा। रण्यथ [१५]इत्यपि रमेर्वा[१५] [१६]छान्दसं णत्वम्[१६]। रणिर्वा रमेरर्थे द्रष्टव्यः। अत्यन्तं रमेथे। याभिश्च अग्रम् उपरिभागम् गच्छथः। किमर्थम्। उच्यते। विवरे 'निमित्तात् कर्मसंयोगे' (पावा २,३,३६) इत्येवं सप्तमी, 'चर्मणि द्वीपिनं हन्ति' इति यथा। विवरार्थम्। विवरं कर्तुमित्यर्थः। कस्य। गोअर्णसः गोशब्दोऽत्र गमेः क्रियाशब्दः गमनार्हवचनः। 'अर्णः' (निघ १,१२) इत्युदकनाम। प्राभूत्यात्

१. नास्ति अ ति. २. नास्ति अ. ३. प्रवृद्ध्यर्थे कु; °वृद्ध्यर्थः अ. ४. °ष्यत यज्ञगृह इत्यर्थः ति. ५. °त्रुभिरनव° अ कु. ६ नास्ति ति. ७-७. नास्ति वि[१] अ[२]. †-† नामासन्नजातोऽग्निः कु; °म सन्नजारोग्निः वि[१]. ‡-‡ सञ्चितकाष्ठैः कु. ८. सं मूको. ९. याभिः ऊतिभिः मै[२]. १०. °भिः स्तुतिभिः मै[१]. ११-११. नास्ति मै[२] १२. त्रुटितम् अ. १३-१३. °शब्दोऽत्र नांगिर° ति. १४. स्तोत्रस्तुत्य° ति. १५-१५. इत्यपरमे° ति. १६-१६. छान्दसत्वणत्वं ति.

सस्यसम्पत्तिकरत्वाच्च गमनार्हमुदकं यस्य स गोअर्णा मेघस्तस्य। याभिः च गत्वा मनुम् राजानम् शूरम् इषा स्वयं हलकर्षितेनान्नेन सम् आवतम् अवतिरत्र गत्यर्थः। [1]सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। समगमयतम्। हलेन कर्षित्वा अन्नं मनवे दत्तमित्यर्थः। तदेतत् पुरस्तादप्युक्तम्। 'याभिः पुरा मनवे' (ऋ १,११२,१६) इति। अस्मानपि ताभिः[1] ॥ १८ ॥

वेङ्कट० [2]याभिः गमनशीलौ! स्तोतॄन् धनैः निरमेथे बुद्धिपूर्वम्। याभिः च असुरैः अपहृताभिः गोभिः युक्तस्य पर्वतस्य विवरे प्रवेशे युद्धार्थं गतानाम् देवानाम् अग्रम् अगच्छतम्। याभिः च मनुम् राजानम् शूरम् स्वयं हलकर्षितेन अन्नेन प्रावतम्[2] ॥ १८ ॥

मुद्गल० अङ्गिर इति आमन्त्रितं वाक्याद् बहिर्भूतम् तेन चात्मानं सम्बोध्य स्तुतौ ऋषिः[3] प्रेरयति। हे अङ्गिरः! अङ्गिरसां गोत्रज! त्वम् अश्विनौ स्तुहि[4]। हे अश्विना! अश्विनौ! मनसा मननीयेन स्तोत्रेण प्रीतौ सन्तौ युवाम् याभिः ऊतिभिः निरण्यथः स्तोतॄन् नितरां रमयथः। तथा गोअर्णसः गोरूपस्यारणीयस्य धनस्य पणिभिः गुहायां निहितस्य त्रिवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिः ऊतिभिः सह युवाम् अग्रम् सर्वेभ्यो देवेभ्यः पुरस्तात् गच्छथः। अपि च शूरम् वीर्यवन्तम् मनुम् इषा पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन याभिः ऊतिभिः सम् आवतम् सम्यगरक्षतम्। ताभिः सर्वाभिः ॥ १८ ॥

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम्।
याभिः सुदास ऊहथुः सुदेव्यं१ ताभिरू षु ऊतिभिरश्विना गतम् ॥ १९ ॥

याभिः। पत्नीः। विऽमदाय। निऽऊहथुः। आ। घ। वा। याभिः। अरुणीः। अशिक्षतम्।
याभिः। सुऽदासे। ऊहथुः। सुऽदेव्यम्। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥

स्कन्द० अत्रेतिहासमाचक्षते— 'विमद ऋषिः परिणीय महत्या विभूत्या भार्यां स्वगृहं निनीषन् अश्विनौ तुष्टाव। तस्यागत्याश्विनौ भार्यां स्वसेनापरिवृतेन रथेन निन्यतुः। गाश्चास्मै प्रभूता ददतुः' इति। तदेतत् कक्षीवान् वक्ष्यति— 'यावर्भगाय' (ऋ १,११६,१) इति। घोषाऽपि वक्ष्यति— 'युवं रथेन' (ऋ १०, ३९, ७) इति। तदेवेहाप्युच्यते। याभिः ऊतिभिर्गत्वा पत्नीः व्यत्ययेनेदमेकवचनस्य स्थाने बहुवचनम्। पत्नीम्। विमदाय विमदस्यर्षेरर्थाय न्यूहथुः रथेनोढवन्तौ स्थः। आ घ वा आ इत्येषोऽपीत्येतस्य स्थाने। घ इति पदपूरणः। वाशब्दश्चार्थे। अपि च याभिः ऊतिभिर्गत्वा अरुणीः अरुणवर्णा गाः अशिक्षतम् दत्तवन्तौ स्थः। कस्मै। प्रकृतत्वात् विमदायैव। याभिश्च सुदासे इत्यादि। अत्रापीतिहासमाचक्षते— [5]'सुदा नाम[5] पैजवनो राजा। अस्य विश्वामित्रः पुरोहितो बभूव। स यष्टुकामः सारवत् प्रभूतं धनमश्विनौ ययाचे[6]। तस्मै रथेनानीयाश्विनौ ददतुः' इति। तदेतत् प्रस्कण्वेनोक्तम्— 'सुदासे दस्रा' (ऋ १,४७,६) इति। तदेवेहाप्युच्यते। याभिः चोतिभिः सुदासे[7] सुदासो राज्ञोऽर्थाय

---

१-१. नास्ति ति. २-२. नास्ति वि[1] अ[1]. ३. ऋषिं मूको. ४. स्तूयते मूको. ५-५. सुदासनामा अ कु; °दासो नाम ति. ६. °चे तौ ति. ७. नास्ति अ कु.

ऊहथुः रथेनानीतवन्तौ स्थः। सुदेव्यम् शोभनं देवयोग्यं च। किं तत्। 'सुदासे दस्रा' (ऋ १,४७,६) इति मन्त्रान्तरे दर्शनात् धनमन्नं च। अस्मानपि प्रति ताभिः ॥ १९ ॥

**वेङ्कट०** विमदाय परिणीतां भार्यां याभिः स्वगृहं प्रत्यूहथुः। याभिः विमदाय अरुणीः गाः च अशिक्षतम्[1]। याभिः सुदासे राज्ञे धनम् ऊहथुः ॥ १९ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! विमदाय एतन्नाम्ने ऋषये याभिः ऊतिभिः पत्नीः भार्याः पुरुमित्रस्य दुहितरम् न्यूहथुः नितरां युवां प्रापितवन्तौ। घ वा पूरणौ। तथा याभिः ऊतिभिः अरुणीः अरुणवर्णाः आरोचमाना गाः आ आभिमुख्येन अशिक्षतम् अदत्तम्। तथा पिजवनपुत्राय सुदासे कल्याणदानाय राज्ञे सुदेव्यम् प्रशस्तं धनम् याभिः ऊतिभिः ऊहथुः प्रापितवन्तौ। ताभिः इत्यादि गतम् ॥ १९ ॥

याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम्।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ॥ २० ॥

याभिः। शंताती इति शम्ऽताती। भवथः। ददाशुषे। भुज्युम्। याभिः। अवथः। याभिः। अध्रिऽगुम्। ओम्याऽवतीम्। सुऽभराम्। ऋतऽस्तुभम्। ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥

**स्कन्द०** याभिः ऊतिभिर्गत्वा शंताती 'शिवशमरिष्टस्य करे' (पा ४,४,१४३) इत्येवमयं शंशब्दात् कर्तरि तातिल् प्रत्ययः। सुखकरौ युवाम् भवथः। ददाशुषे सर्वस्मै यजमानाय। भुज्युम् समुद्रे विपन्ननावं सखिभिश्च त्यक्तम् याभिः ऊतिभिर्गत्वा अवथः व्यत्ययेनायं भूते लट्प्रत्ययः। नौभिरश्वैः रथैश्चोत्तारणेन पालितवन्तौ स्थः। याभिः अध्रिगुम्। अत्रेतिहासमाचक्षते—'नमुचौ हते सुरमणीयं मधु अश्विभ्यां सह पिबन्तमिन्द्रं प्रमत्त इति ज्ञात्वासुरा हन्तुमीषुः[2]। तमश्विनावजानन्तमेव पालयाञ्चक्रतुः' इति। तदेतत् काक्षीवतः सुकीर्तिर्वक्ष्यति— 'युवं सुरामम्' (ऋ १०,१३१,४) इति। तदेवेहाप्युच्यते। अध्रिगुशब्देन ह्यत्र गवे अधृतत्वादिन्द्र उच्यते। 'ऋचीषमायाध्रिगवे' (ऋ १,६१,१) इति यथा। अत्रापीतिहासमाचक्षते— 'देवाः सर्वे इन्द्रं ब्रह्माणं वव्रुः। सोऽब्रवीत्—अधृतोऽहं[3] गव इति। अनूबन्ध्यादिगोयागवर्जमहं ब्रह्मत्वं करोमीति। गोयागे त्वहमधृतः'[4] इति। तस्माद् गवे अधृतत्वादुपपन्नम् इन्द्रस्याध्रिगुत्वम्[5]। अधृतगमनत्वात् वा[6]। ओम्यावतीम् अवतेः पालनार्थस्येदं रूपम्। फलकृतेन[7] पालनेन तद्वतीम्। अस्मत्पालनफलामित्यर्थः[8]। सुभराम् युष्मद्गुणैः सम्पूर्णाम्। ऋतस्तुभम् 'ऋतम्' (निघ ३,१०) इति सत्यनाम। स्तोभतिरर्चतिकर्मा (तु. निघ ३,१४)। सत्यस्तुतिम्। इमाम् अस्मदीयां[9] प्रति ताभिः ॥ २० ॥

**वेङ्कट०** याभिः शङ्करौ भवथः यजमानाय। भुज्यम् च समुद्रमध्ये विपन्ननावम् याभिः[10] अवथः। याभिः

---

१. °तम् दत्तवन्तौ स्थः वि[1] अ[2]. २. °मियेषु मूको. ३. अव्र° अ कु; अवृ° ति. ४. °मव्र° अ कु; °मवृ° ति. ५. इन्द्रस्या··· अ. ६. नास्ति अ. ७. °कृते कु. ८. °पालनामि° अ; नास्ति ति. ९. आत्मीयां अ. १०. °भिः च वि[1] अ[2].

च अधृतगमनम्[1] इन्द्रम् । 'युवं सुरामश्विना' ( ऋ १०,१३१,४ ) इति मन्त्रः । पालनवतीं धनपूर्णामिमां सत्यां स्तुतिम् ताभिः आ गतम् इति[2] ॥ २० ॥

मुद्गल० हे अश्विना! अश्विनौ! दाशुषे हवींषि दत्तवते यजमानाय याभिः ऊतिभिः शंताती सुखस्य कर्तारौ भवथः । याभिः च ऊतिभिः भुज्युम् तुग्रस्य पुत्रम् अवथः । याभिः च अध्रिगुम् अध्रिगुर्देवानां[3] शमिता । अपि च ऋतस्तुभम् ऋतं सत्यं स्तोभति उच्चारयतीति ऋतस्तुप् । एतत्संज्ञमृषिम् । ओम्यावतीम् ओम्येति सुखनाम तद्युक्ताम् । सुभराम् सुखेन भरणीयाम् इषम् याभिः ऊतिभिः प्रापयथः । ताभिः सर्वाभिः ॥ २० ॥

इति प्रथमाष्टके सप्तमाध्याये षट्त्रिंशो वर्गः ॥

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।
मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ २१ ॥

याभिः । कृशानुम् । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वन्तम् । आवतम् । मधु ।
प्रियम् । भरथः । यत् । सरट्ऽभ्यः । ताभिः । ॐ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २१ ॥

स्कन्द० अत्रेतिहासमाचक्षते— 'कृशानुर्नाम सोमपालः । तं सोममपजिहीर्षन्तोऽसुराः अभिदुद्रुवुः । स तान् हन्तुमिषूंश्चिक्षेप' । तदेतद्वामदेवो दर्शयिष्यति— 'सृजद्यदस्मा अव ह' ( ऋ ४,२७,३ ) इति । 'तस्मै इषूंश्चिक्षिप्सतेऽश्विनावत्रमोघानिषून् ददतुः' इति । तथापरमितिहासमाचक्षते— 'शर्यातस्य राज्ञो मृगयायां महता वेगेन मृगमनुधावन्नश्वो भृगुमाप । तमश्विनौ वारयाञ्चक्रतुः' इति । तदेतदितिहासद्वयमिहोच्यते । याभिः ऊतिभिः गत्वा कृशानुम् सोमपालम् असने असु क्षेपणे । असुरान् हन्तुमिषूणां क्षेपणकाले दुवस्यथः दुवस्यतिः परिचरणकर्मा (तु. निघ ३,५) । परिचरितवन्तौ स्थः [4]अमोघानामिषूणां प्रदानेन[4] । जवे वेगे महति । सप्तमीश्रुतेर्वर्तमानमिति वाक्यशेषः । याभिः यूनः तरुणस्य शर्यातस्य राज्ञः स्वभूतम् अर्वन्तम् अश्वं भृगुप्रपाताद्रक्षितवन्तौ स्थः । मधु प्रियम् अत्रापीतिहासमाचक्षते— 'सरडा नाम मधुकर्यः मक्षिकाः । ताः कस्यांचिदनावृष्ट्यां शुष्कासु [5]सर्वासु पुष्पजातिषु[5] क्षुधा बाध्यमाना मध्वर्थिन्योऽश्विनावाजुहवुः । ताभ्य उपगम्याश्विनौ मधु ददतुः । तत् ताः पपुः' इति । तदेतत् कक्षीवान् वक्ष्यति— 'उत स्या वां मधुमत्' ( ऋ १,११९,९ ) इति । घोषापि वक्ष्यति— 'युवोर्ह मक्षा' ( ऋ १०,४०,६ ) इति । तदेवेहाप्युच्यते । मधु प्रियमित्यादिना । मधु प्रियम् इष्टम् भरथः हरतेरिदं रूपम्[6] । भत्वं 'हृग्रहोर्भश्छन्दसि' ( पावा ८,२,३२ ) । व्यत्ययेन भूते लट् । आहरतं प्रापयतम् । दत्तवन्तौ स्थ इत्यर्थः । यत् तृतीयाबहुवचनस्यात्र लुक् । याभिः [7]सरड्भ्यः सरडाख्या मधुकर्यः, ताभ्यो मक्षिकाभ्यः । अस्मानपि प्रति ताभिः[7] ॥ २१ ॥

---

१. धृत° लपं; अवधृ° वि[2]. २. नास्ति कु. ३. देवानां मूको.. ४-४. अमोघनां प्रधानानामिषूणां अ, ५-५. सर्वपुष्प° अ कु, ६. नास्ति अ कु. ७-७. नास्ति अ.

**वेङ्कट०** याभिः[1] कृशानुम् नाम सोमपालमसुरैः सोममपजिहीर्षद्भिः सह युध्यन्तं क्षीणशरम् इषुप्रदानेन ररक्षथुः इषुक्षेपणकाले[2]। मृगयाम् अटतः शार्यातस्य[3] च[4] राज्ञः यूनः। अश्वः प्रमादात् तपस्यन्तं स्थाणुभूतं भृगुं प्रति पपात। तम् अतिजवे[5] वर्तमानम् अश्विनौ निवारयामासतुः। चिन्तितमात्रौ तौ युवां वृष्ट्यभावात् हीनेषु पुष्पेषु[6] मधु आहृतवन्तौ यद् हितम् सरड्भ्यः[7] ॥ २१ ॥

**मुद्गल०** स्वानादिषु सोमपालेषु मध्ये कृशानुरेकः सोमपालः। तम् कृशानुम् असने इषवोऽस्यन्ते अस्मिन्निति असनः सङ्ग्रामः, तस्मिन् सङ्ग्रामे हे अश्विनौ! याभिः ऊतिभिः दुवस्यथः रक्षथः। तथा याभिः च जवे वेगे प्रवृत्तम् यूनः तरुणस्य पुरुकुत्सस्य अर्वन्तम् अश्वम् आवतम् रक्षतम्। अपि च यत् मधु क्षौद्रम् प्रियम् सर्वेषामनुकूलवेद्यं तत् सरड्भ्यः मधुमक्षिकाभ्यः याभिश्चोतिभिः भरथः सम्पादयथः। ताभिः सर्वाभिः ॥ २१ ॥

याभिर्नरं॑ गोषु॒युधं॑ नृ॒षाह्ये॒ क्षेत्र॑स्य सा॒ता तन॑यस्य॒ जिन्व॑थः।
याभी॒ रथाँ॒ अव॑थो॒ याभि॒रर्व॑त॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम्॥ २२ ॥

याभि॑ः। नर॑म्। गो॒षु॒ऽयुध॑म्। नृ॒ऽसह्ये॑। क्षेत्र॑स्य। सा॒ता। तन॑यस्य। जिन्व॑थः।
याभि॑ः। रथा॑न्। अव॑थः। याभि॑ः। अर्व॑तः। ताभि॑ः। ऊँ इति॑। सु। ऊ॒तिऽभि॑ः। अ॒श्वि॒ना॒। आ। ग॒त॒म् ॥

**स्कन्द०** याभिः ऊतिभिर्गत्वा नरम् सर्वमनुष्यं स्तोतारं यष्टारं च। गोषुयुधम् गोष्वपह्रियमाणासु तद्रक्षार्थं यो युध्यते स गोषुयुत् तं गोषुयुधम्। नृषाह्ये नरो यत्राभिभूयन्ते प्रतियोद्धृभिः स नृषाह्यः सङ्ग्रामः, तस्मिन्। चोरैः सह सङ्ग्रामे। क्षेत्रस्य च साता[8] सातौ लाभे तनयस्य अपत्यस्य च जिन्वथः 'जिन्वतिः[8] प्रीतिकर्मा' ( या ६,२२ )। जयकरणेन क्षेत्रापत्यदानेन च प्रीणयथः। याभिः च रथान् स्तोतुः स्वभूतान् अवथः रक्षथः। याभिः चाश्वान् | अस्मानपि प्रति ताभिः ॥ २२ ॥

**वेङ्कट०** याभिः भरद्वाजम्[9] नरम् गोनिमित्तं युध्यन्तं युद्धे, क्षेत्रस्य तनयस्य च[10] भजननिमित्तं युध्यन्तं जिन्वथः[11]। याभिः च तस्य रथान् अश्वांश्च अवथः ॥ २२ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! गोषुयुधम् गोविषयं युद्धं कुर्वन्तम् नरम् यज्ञस्य नेतारं यजमानम् याभिः ऊतिभिः नृषाह्ये नृभिः सोढव्ये सङ्ग्रामे जिन्वथः प्रीणयथः। रक्षथ इत्यर्थः। तथा क्षेत्रस्य गृहादिरूपस्य तनयस्य धनस्य च साता सातये सम्भजनार्थम् याभिः ऊतिभिः [12]यजमानं रक्षथः। याभिः च यजमानानां[12] रथान् रक्षथः। तथा याभिः ऊतिभिः अर्वतः तदीयान्[1] अश्वांश्च अवथः रक्षथः। ताभिः सर्वाभिः ॥ २२ ॥

---

१. नास्ति मूको. २. इषुप्रेषण° कु; क्षेपण° वि[1] अ[1]. ३. शयात° वि[1] अ[1] कु; शर्यात° वि[1,2] अ[2]; शर्यातस्य लपं. ४. नास्ति वि[2] अ[2] कु. ५. °वेन वि[2] अ. ६. नास्ति वि[1,2] अ[1] लपं. ७. सरघे (°खे वि[1] °घे अ[1]:) वि[1-3] अ[1,2] ल लपं. ८. नास्ति अ. ९. भार° वि[1] अ[1]. १०. नास्ति वि[2] अ[1]. ११. °थोः रथो वि[1] अ[1]. १२-१२. नास्ति मूको.

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ २३ ॥

याभिः । कुत्सम् । आर्जुनेयम् । शतक्रतू इति शतऽक्रतू । प्र । तुर्वीतिम् । प्र । च । दभीतिम् । आवतम् ।
याभिः । ध्वसन्तिम् । पुरुऽसन्तिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'कुत्सस्तुर्वीतिर्दभीतिश्चेषुः'[1] अपि नामाश्विनौ साक्षाद्रूपेण पश्येयमिति । तेषां परया भक्त्याऽऽराधितावश्विनौ दर्शनमुपजग्मतुः' इति । तदेतदिहोच्यते । पुरस्तादप्युक्तम् । 'याभिः कुत्सम्' ( ऋ १, ११२, ९ ) इति । याभिः ऊतिभिः पालनैः पूर्वं मामेव कुत्सम् प्रति । कतमम् । आर्जुनेयम् अर्जुनी नाम कुत्सस्य माता, [2]तस्या अपत्यम्[2] । हे शतक्रतू ! बहुकर्माणौ ! बहुप्रज्ञौ ! वा । न च केवलं कुत्सम् । किं तर्हि । प्र तुर्वीतिम् प्र च दभीतिम् आवतम् प्रेत्येष उपेत्यस्य स्थाने । चशब्दश्च दभीतिमित्यस्मात् परो द्रष्टव्यः । अवतिरपि[3] गत्यर्थः । तुर्वीतिं दभीतिं च दर्शनार्थमुपगतवन्तौ स्थः । याभिः ध्वसन्तिम् इत्यादि । अत्रापीतिहासमाचक्षते—'ध्वसन्तिर्नाम वेश्या तथा पुरुषन्तिः । ते उपहासकुशले इति श्रुत्वाऽश्विनौ[4] सम्भोगार्थमुपजग्मतुः' इति । तदेतदिहोच्यते । याभिः च [5]ध्वसन्तिम् वेश्याम्[5] पुरुषन्तिम् च आवतम् सम्भोगार्थमुपगतवन्तौ स्थः । अस्मानपि प्रति ताभिः ऊ सु ऊतिभिः अश्विना ! आ गतम् ॥२३॥

**वेङ्कट०** याभिः कुत्सम् अर्जुन्याः पुत्रं मां शतकर्माणौ प्र आवतम्, तुर्वीतिम् दभीतिम् च । ध्वस्रो नाम राजा ध्वसन्तिरुच्यते । तस्य भार्या पुरुषन्तिः[6] । 'ध्वस्रयोः पुरुषन्त्योः' ( ऋ ९,५८,३ ) इति मन्त्रः ॥ २३ ॥

**मुद्गल०** हे शतक्रतू ! बहुविधकर्माणावश्विनौ ! आर्जुनेयम् अर्जुन इतीन्द्रस्य नाम तस्य पुत्रम् कुत्सम् याभिः ऊतिभिः प्र आवतम् प्रकर्षेण अरक्षतम् । तथा तुर्वीतिम् दभीतिम् च याभिरूतिभिः प्र आवतम् । अपि च याभिः ध्वसन्तिम् एतत्संज्ञम् पुरुषन्तिम् एतन्नामानं च[7] ऋषिम् आवतम् अरक्षतम् । ताभिः सर्वाभिः ॥ २३ ॥

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥ २४ ॥

अप्नस्वतीम् । अश्विना । वाचम् । अस्मे इति । कृतम् । नः । दस्रा । वृषणा । मनीषाम् ।
अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ २४ ॥

**स्कन्द०** अप्नस्वतीम्[8] 'अप्नः' (निघ २,१) इति कर्मनाम । यागकर्मणा तद्वतीम् । हे अश्विनौ ! वाचम् इमाम् अस्मे अस्माकं स्वभूताम् कृतम् कुरुतम् । न च केवलां वाचम् । किं तर्हि । नः अस्माकं

१. इयेषुः मूको. २-२. तस्याप° मूको. ३. आव° मूको. ४. श्रुत्वा अ ति. ५-५. °सन्ती वेश्य कु. ६. नास्ति अ. ७. पुरुषन्ती अ[1,2] वि[1,2] कु. ८. नास्ति मूको.

स्वभूतां हे दस्रा! दस्रनामानौ। अन्यतरनाम्नापि चेदं साहचर्यादुभयोरभिधानम्। क्रियाशब्दो वा। दंसेर्दर्शनार्थस्य[1] दस्यतेर्वोपक्षयार्थस्य दस्रशब्दः। दर्शनीयावुपक्षपयितारौ वा शत्रूणाम्। वृषणा! वर्षितारौ!। मनीषाम्[2] प्रज्ञामपि। चित्तमप्यस्माकं यागपरं कुरुतमित्यर्थः। कथं पुनरिदम् उभयं भवति। उच्यते। यद्यश्विनावागच्छतः। आगतयोर्हि तयोर्यागः क्रियते। तेन क्रियमाणेन कर्मवत्यौ [3]वाक्प्रज्ञे भवतः। अथवा† वाक्प्रज्ञाकरणेन[3] तद्धेतुभूतमागमनमेव प्रतिपाद्यते। यागार्थमागच्छतमित्यर्थः। कस्मात्। उच्यते। [4]यस्मात् अद्यूत्ये अवसे[4] दीव्यति-र्विजिगीषार्थः। देवनं[5] द्यूतम्, विजिगीषा यस्मिन् नास्ति तदद्यूतम् अविजिगीषम्। अद्यूतमेवा अद्यूत्यम्। स्वार्थिको यत्प्रत्ययः, छान्दसत्वात् चतुर्थ्यर्थे च। अवस्तर्पणम्। यद्युवयोरेव योग्यत्वादन्यया देवतया विजिगीषितुमशक्यं सोमतर्पणं तदर्थम् नि ह्वये नियमेन आह्वये[6] वाम् युवाम्। किञ्च वृधे वर्धनाय च सर्वदा नः अस्माकम् भवतम् वाजसातौ सङ्ग्रामे ॥ २४ ॥

वेङ्कट० कर्मवतीम् अश्विनौ! वाचम् अस्माकं कुरुतं[7] दर्शनीयौ![8] वर्षितारौ! प्रज्ञया[9]। नः इति पूरणम्। अद्यूत्ये[10] बलाभावाद् युद्धवर्जिते सङ्ग्रामे [11]रक्षणाय वाम्†[11] नि ह्वये। तथा सति अस्मिन् सङ्ग्रामे वर्धनाय[12] च भवतम्। अप्रस्वतीम् वाचं च कुरुतम् इति[13] ॥ २४ ॥

मुद्गल० हे अश्विनौ! अस्मे अस्माकम् वाचम् अप्नस्वतीम् 'अप्नः' (निघ २,१) इति कर्मनाम। विहितैः कर्मभिः संयुक्ताम् कृतम् कुरुतम्। तथा नः अस्माकम् मनीषाम् बुद्धिं हे वृषणा! कामानां वर्षकौ! दस्रा! शत्रूणाम् उपक्षपयितारौ! अश्विनौ! वेदार्थज्ञानसमर्थां कुरुतम्। अपि च यस्मात् युवाम् एवंगुणविशिष्टौ तस्मात् वाम् युवाम् अवसे रक्षणाय नि ह्वये नितराम् आह्वये। कदा। अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे। तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते। आहूतौ च युवाम् वाजसातौ वाजस्यान्नस्य सम्भजने नः अस्माकम् वृधे वर्धनाय भवतम् ॥ २४ ॥

**द्युभि॑र॒क्तुभि॒ः परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥ २५ ॥**

द्युऽभि॑ः । अ॒क्तुऽभि॑ः । परि॑ । पा॒त॒म् । अ॒स्मान् । अरि॑ष्टेभिः । अ॒श्वि॒ना॒ । सौभ॑गेभिः ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धु॑ः । पृ॒थि॒वी । उ॒त । द्यौः ॥ २५ ॥

स्कन्द० 'द्युः' ( निघ १,९ ) इति अह्नो नामधेयम्। अक्तुः इति रात्रेः ( तु. निघ १,७ )। सप्तम्यर्थे च तृतीया। अहस्सु रात्रिषु च। परि पातम् पालयतम् अस्मान्। किञ्च अरिष्टेभिः अहिंसितैः हे अश्विनौ! सौभगेभिः 'भगः' ( निघ २,१० ) इति धननाम। शोभनानि धनानि सुभगानि सुभगान्येव सौभगानि तैः सौभगेभिः। तृतीयाश्रुतेः साकाङ्क्षत्वात् संयाजयतमिति वाक्यशेषः।

---

१. दंसेर्द° अ कु. २. नास्ति अ. ३-३. नास्ति अ. † अतश्चात्र कर्मवत् ति. ४-४. त्रुटितम् ति. ५. देवं ति. ६. आह्वयामि अ. ७. °रुतञ्च वि. ८. यौ वि[1] अ[2]. ९. प्रज्ञा लपं. १०. अदूत्ये लपं. ११-११. रक्षितवान् वि[1]. † नास्ति वि[1] अ[2]. १२. वर्धमानाय ल वि[1']. १३. नास्ति कु.

अहिंसितानि च शोभनानि च धनान्यस्मभ्यं दत्तमित्यर्थः । तत् नः मित्रः इत्याद्युक्तार्थम्[1] ( ऋ १,९४,१६ द्र.) ॥ २५ ॥

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥
इति भर्तृध्रुवसुतस्य[2] स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये
सप्तमोऽध्यायः ॥

**वेङ्कट०** अहोरात्रैः अस्मान् परि-रक्षतम् । अपि वा अहोरात्रेभ्यः अनुपहिंसितैः भवदीयैः कल्याणैः । इतिहासा विस्पष्टा भविष्यन्ति । 'नासत्याभ्याम्'[3] ( ऋ १,११६,१-२५ ) इत्यादिषु । बहुत्रैः सूक्तं[4] निरूपणीयम्[5] इति[6] ॥ २५ ॥

इत्थं सप्तममध्यायं व्याकरोत् प्रथमेऽष्टके ।
[7]यो जातो[7] गोपनकुले[8] माधवो वेङ्कटात्मजः[9] ॥
इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके सप्तमोऽध्यायः ॥

**मुद्गल०** हे अश्विना! अश्विनौ! द्युभिः दिवसैः अक्तुभिः रात्रिभिश्च अस्मान् स्तोतॄन् परि पातम् परितो रक्षतम् । सर्वदा अस्मान् रक्षतमित्यर्थः । तथा अरिष्टेभिः अहिंसितैः सौभगेभिः सुभगत्वैः सुभगत्वापादकैर्धनैरस्मान् रक्षतम् । यदस्माभिः प्रार्थितम् नः अस्मदीयम् तत् मित्रादयः षड् देवताः ममहन्ताम् पूजयन्ताम् । उत-शब्दः समुच्चये ॥ २५ ॥

इति प्रथमाष्टके सप्तमाध्याये सप्तत्रिंशो वर्गः ॥

—*—

**इति ऋग्वेदे सभाष्ये प्रथमाष्टके सप्तमोऽध्यायः ॥**



१. द्युक्तार्थमिति अ; °थर्क्त ति. २. ध्रुवपुत्रस्य अ. ३-३. नासत्यादिषु वि[2] अ[2]. ४. सूक्तैः वि[1]. ५. °णीयः वि[1]. ६. नास्ति कु. ७-७. ···जातो वि[1,2] अ[2] ल; जातो यो कु; प्रजातो ल शोधः; नास्ति वि[1]. ८. ···कुले वि[1]. ९ सुन्दरीसुतः वि[2] अ[2].

[ ११३ ]

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । आ । अगात् । चित्रः । प्रऽकेतः । अजनिष्ट । विऽभ्वा ।
यथा । प्रऽसूता । सवितुः । सवाय । एव । रात्री । उषसे । योनिम् । अरैक् ॥ १ ॥

**स्कन्द०** 'उषस्यम्'[1] । उषोदेवत्यमेतत्[2] सूक्तम् । 'सम्यक् पृथक् चास्त्युषस्येषु रात्रेः'। उषस्येषु सूक्तेषु सम्यक् सह पृथक् चास्ति रात्रेः स्तुतिः । इदम् श्रेष्ठम् इति श्रेष्ठशब्दः प्रशस्यवचनः । ज्योतिषाम् इति निर्धारणे षष्ठी । इदमादित्यादीनां[3] ज्योतिषां मध्ये प्रशस्यतममुषआख्यम् ज्योतिः आ अगात् आ इत्येष उदित्येतस्य स्थाने । उद्गता इयमुषाः । उदितेत्यर्थः । उदितायां च तस्याम् चित्रः व्यत्ययेनात्र पुँल्लिङ्गता । चित्रं पूज्यं वा । प्रकेतः[4] 'केतः' ( निघ ३,९ ) इति प्रज्ञानाम । प्रकृष्टज्ञानं प्रकाशाख्यम्[4] अजनिष्ट जातम् । विभ्वा प्रथमार्थे तृतीया । विभु[5] । सर्वव्यापीत्यर्थः । किञ्च यथा प्रसूता उत्पन्ना स्वयं रात्रिः सवितुः आदित्यस्य सकाशात् । आदित्यो हि रात्रिम् [6]अस्तमयेन जनयति । तेन रात्रिः[6] आदित्यादुत्पद्यते इति[7] । अत इदमुच्यते—यथा स्वयं प्रसूता रात्रिः सवितुस्सकाशादिति । सवाय[8] एव रात्री उषसे उषसे इति षष्ठ्यर्थे चतुर्थी । सवायेत्येतेन चास्य सम्बन्धः । उषसो जन्मने एव एवं रात्री [9]योनिम् स्थानमात्मैकदेशम्[9] अपररात्रलक्षणम् अरैक् रेचितवती । प्रकल्पितवतीत्यर्थः । यथा रात्रिरादित्यास्तमयादनन्तरं स्वयमुत्पन्ना एवं तदनन्तरमुषा जनिष्यत इत्येवमुषसः स्थानं प्रकल्पितवतीत्यखिलार्थः । अथवा यथा प्रसूतेति उषा उच्यते, न रात्रिः । सवितुरित्यपि सवायेत्येतेन सम्बध्यते । उषस इत्यपि तादर्थ्ये चतुर्थी । यथा प्रसूता उत्पन्ना सवितुः सवाय जन्मने । आत्मनोऽनन्तरमुषा ह्यादित्यं जनयति । अतस्तदर्थैवास्या उत्पत्तिरिति व्यपदिश्यते । एवं रात्रिरुषसे उषसोऽर्थम् । उषसो जन्मार्थमित्यर्थः । योनिम् आरैक् स्थानं प्रकल्पितवती । न ह्यप्रकल्पिते राज्या[10] स्थाने उषसो जन्म [11]सम्भवतीति रात्रिरस्याः स्थानं प्रकल्पितवती[11] । एवमियं रात्रेः स्तुतिः, उषसो वा[12] । ॥ १ ॥

**वेङ्कट०**

[13]इदं श्रेष्ठम् अथाध्यायं माधवो व्याचिकीर्षति[14] ।
रूपेऽभिन्ने[15] स्वरे भिन्ने शब्दवृत्तिं प्रदर्शयन् ॥ १ ॥

अर्थाभेदे तु शब्दस्य सर्वत्र सदृशः स्वरः ।
यदा न तं स्वरं[16] पश्येदन्यथार्थं तदा[17] नयेत् ॥ २ ॥

'पुरुतमं पुरूणाम्'[18] ऋग् भवेत्तत्र निदर्शनम् ।
तमप्चेदनुदात्तः स्यात्तथा ह्यन्यत्र दर्शनम् ॥ ३ ॥

---

१. नास्ति मूको. २. श्रीरस्तु अथ ध्रुवपुत्रस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये अष्टमोध्यायः प्रारभ्यते इदं श्रेष्ठमुषो° अ. ३. °दित्यनां अ. ४. °ख्यं वा अ. ५. विभुः मूको. ६-६. नास्ति अ. ७. ति अ; नास्ति कु. ८. नास्ति अ. ९-९. योनिस्था° मूको. १०. रात्र्याः मूको. ११-११. सम्भवति मूको. वें अ ऋ. १२. वा । रात्रिरस्याः स्थानं प्रकल्पितवती मूको. १३. पृ ३५६ द्र. १४. °कीर्षितं वि[२]. १५. रूपे भिन्ने मूको. १६. नास्ति वि[२]. १७. तथा वि[२] अ[१]. १८. ऋ १,५,२.

'शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः'[१]।
नात्रोदात्तौ तमौ दृष्टौ दृश्यते तु पुरूतमे ॥ ४ ॥

बहून् ग्लपयतीत्यर्थस्तेन[२] तत्र प्रदर्शितः ।
सर्वत्रैवं समानेषु स्वरेणाऽर्थो व्यवस्थितः ॥ ५ ॥

'होम गन्तारमूतये'[३], 'जेतारमपराजितम्'[४] ।
'पाता सुतमिन्द्रो अस्तु'[५], 'स चेत्ता देवता पदम्'[६] ॥ ६ ॥

'इन्द्रो विश्वस्य दमिता'[७] 'भेत्ता[८] पुरां शश्वतीनाम्'[९] ।
'विभक्तारं हवामहे'[१०] तृन्तृचोः स्युर्निदर्शनम् ॥ ७ ॥

तृन्तृचोश्चार्थभेदोऽयं प्रकृत्यर्थः स्फुटस्तृनि ।
तृचि स्फुटः[११] प्रत्ययार्थः प्रकृत्यर्थोपसर्जनः[१२] ॥ ८ ॥

'लुङ् लङ्लृङ्क्ष्वडुदात्तो' यः स भूतार्थस्य सूचकः[१३] ।
वाचकान्प्रत्ययानाहुस्तत्राकारं[१४] स्फुटं वदेत् ॥ ९ ॥

नञमाहुरथैके तं प्रतिषेधस्य सूचकम् ।
छान्दसेषु लकारेषु सम्प्रत्यर्थस्य सूचकः ॥ १० ॥

अष्टके प्रथमेऽस्माभिः स्वर इत्थं प्रपञ्चितः[१५] ।
स्थापनीयः प्रयत्नेन वाक्यार्थे पण्डितैरयम् ॥ ११ ॥

अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित् ।
एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति ॥ १२ ॥

[१६]कुत्सः । इदम् प्रशस्यतमम् ज्योतिषाम्[१६] ज्योतिः उषआख्यं प्रादुरभूत् । चित्रं प्रज्ञानं विभूतं[१७] जातं मनुष्याणाम् । यथा इयम् रात्रेः जाता सवितुः आदित्यस्य प्रसवाय भवति[१८], एवम् अस्याः[१९] उषसो रात्रिः[२०] योनिम् अरिचद् आत्मनोऽन्ते स्थानं प्रकल्पितवती ॥ १ ॥

मुद्गल० 'इदम्' इति विंशत्यृचमष्टमं सूक्तम् । आङ्गिरसः कुत्स ऋषिः । त्रिष्टुप् छन्दः । उषा देवता रात्रिश्च दृष्टलिङ्गात् ॥

ज्योतिषाम् ग्रहनक्षत्रादीनां द्योतमानानां मध्ये इदम् उषआख्यं ज्योतिः श्रेष्ठम् प्रशस्यतमम् । अस्य कोऽतिशय इति चेद् उच्यते । नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति,

---

१. ऋ १,१२७,९. २. ग्लाप° वि[१] लपं. ३. ऋ १,९,९. ४. ऋ १,११,२. ५. ऋ ६,२३,३; °न्द्रोऽस्तु वेंकअ. ६. ऋ १,२२,५. ७. ऋ ५,३४,६. ८. नास्ति वि[२] अ[१]. ९. ऋ ८,१७,१४. १०. ऋ १,२२,७. ११. स्पष्टः वि[२] अ[१]. १२. °सर्जनं वि[२] अ[१]. १३. सूचकम् वि[१] लपं. १४. °कारान् अ[१]. १५. प्रदर्शितः वि[२] अ[१]. १६-१६. इदम् आदित्यानां ज्योतिषां मध्ये प्रशस्यतमम् वि[२] अ[२]. १७. °भूर्ति वि[१] लपं; विभूततमं कु; हि(? वि)भूतं वि[२] अ[२]; विभूषितं वि[२] ल लपं. १८. भवतु वि[२] अ[२]. १९. अन्याः वि[२] अ[२]. २०. नास्ति अ[१] कु.

नान्यत्। चन्द्रस्तु यद्यप्यन्यत् प्रकाशयति तथाप्यविस्पष्टप्रकाशः। औषसं तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकारनिराकरणेन विशेषेण प्रकाशकम्। अतः प्रशस्यतममित्यर्थः। तादृशं ज्योतिः आ अगात् पूर्वस्यां दिश्यागमत्। आगते च तस्मिन् चित्रः चायनीयः प्रकेतः अन्धकारावृतस्य सर्वस्य पदार्थस्य विज्ञापकस्तदीयो रश्मिः। विभ्वा विभुर्व्याप्तः सन् अजनिष्ट प्रादुरभूत्। किञ्च यथा रात्री रात्रिः स्वयम् सवितुः सूर्यसकाशात् प्रसूता उत्पन्ना। सूर्यो ह्यस्तं गच्छन् रात्रिं जनयति। तस्मिन्ननस्तमिते[१] रात्रेरुत्पत्तेरभावात्। एवमेव रात्रिरपि उषसे सवाय उषस उत्पत्तये तदर्थम् योनिम् स्थानं स्वकीयापरभागलक्षणम् अरैक् आरेचितवती कल्पितवती। दत्तवतीत्यर्थः ॥ १ ॥

**रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।**
**समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥**

रुशत्ऽवत्सा। रुशती। श्वेत्या। आ। अगात्। अरैक्। ऊँ इति। कृष्णा। सदनानि। अस्याः। समानबन्धू इति समानऽबन्धू। अमृते इति। अनूची इति। द्यावा। वर्णम्। चरतः। आमिनाने इत्याऽमिनाने ॥२॥

**स्कन्द०** रुशद्वत्सा[२] रुशच्छब्दो दीप्तिवचनः। वत्स इत्यादित्य उच्यते। स ह्युषसो वत्सस्थानीयोऽपत्यत्वात्। कथम् अपत्यत्वम्। श्रुतेर्दर्शनात्। एवं हि श्रुतौ श्रूयते—'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये। तामृश्यो भूत्वा रोहितं भूतामभ्यैत्' इत्येवमाद्युपक्रम्य 'तद्वा इदं प्रजापते रेतः सिक्तमधावत्तत्सरोऽभवत्' (ऐब्रा ३,३३) इति च। 'तदग्निना वैश्वानरेण पर्यादधुः। तं मरुतोऽधून्वन्। तदग्निर्वैश्वानरः प्राच्यावयत्। तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्यो अभवत्' (ऐब्रा ३,३४) इत्येवं[३] प्रजापतेः सकाशादुषसि जात आदित्य इति श्रूयते। अतश्चोपपन्नमस्य तदपत्यत्वम्। यद्वा प्रातःप्रातरुषसः सकाशादादित्यो जायते। तदभिप्रायमस्यापत्यत्वम्। असत्यपि चापत्यत्वे तदीयरसहरणसामान्यादेष[४] वत्सव्यपदेशः। यथाहि पशोर्वत्सः पयआख्यं रसं पिबन्नाहरति। एवमसावादित्य उषसोऽवश्यायाख्यम्। दीप्ताऽऽदित्याख्यवत्सा। रुशती स्वयमपि [५]च दीप्ता[५]। श्वेत्या उषसो नामैतत् (तु. निघ १,८)। उषाः। आ अगात् उदिता। अरैक् रेचितवती। उ इति पदपूरणः। कृष्णा तमःसम्बन्धात् कृष्णवर्णा रात्रिः। सदनानि स्थानानि। अस्याः [६]उषसः। ते[६] उभे रात्र्युषसौ समानबन्धू समानो बन्धुर्ययोस्ते समानबन्धू। प्रजापतिर्हि रात्र्युषसोः समानबन्धुः जनयितृत्वात्। आदित्यो वा। स हि जनयितृत्वेन[८] रात्रेर्बन्धुः, जन्यत्वेनोषसः, जनयितृत्वेन[२] वा[७] उभयोः। स ह्यस्तमयेन रात्रिं जनयति उदयेन चोषसम्। अमृते अमरणधर्माणौ। अहरन्तरेषु पुनःपुनरपि दृश्यमानत्वात्। अनूची परस्परेणानुगते। परस्परतः संवर्तिन्यौ सम्बद्धे चेत्यर्थः[२]। द्यावा द्युतेर्दीप्यतेर्वा दीप्त्यर्थस्येदं रूपम्। स्वेनस्वेन[८] तेजसा दीप्ते। वर्णम् कृष्णं शुक्लं चात्मीयं वर्णम्। चरतः गच्छतः। प्राप्नुत इत्यर्थः। अथवा द्यावेति दिवः पर्यायः, तृतीयैकवचनान्तश्चात्र द्रष्टव्यः। तृतीयानिर्देशाच्चात्र योग्यक्रियापदाध्याहारः। दिवा सह महत्त्वादिना गुणेन स्पर्धमाने दिवा वानुगृह्यमाणे स्वंस्वं वर्णं प्राप्नुत इति। द्यौर्हि तमसो[९] ज्योतिषश्चात्मन्यवकाशदानेन[१०] अनुगृह्णाति रात्र्युषसोः। आमिनाने आङीषदर्थे। मीङ्

---

१. °न्नस्तमिते मूको. २. नास्ति मूको. ३. नास्ति अ. ४-४. रसहरण° अ. ५-५. नास्ति अ. ६-६. उषसः···मूको. ७. च अ. ८. स्वेन अ. ९. तमसा कु. १०. °न्यवदानेन न मूको.

हिंसायाम् । ईषद्धिंसत्यौ । किम् । सामर्थ्यात् परस्पररूपम् । रात्रिर्ह्युषसो रूपं ज्योतिरीषद्धिनस्ति । उषा अपि रात्रेस्तमः । अथवा द्यावेति सप्तम्येकवचनस्य आकार आदेशः । चरत इत्येतेन चास्य सम्बन्धः । दिवि चरतो गच्छतः । वर्णमित्येतत्तु आमिनाने[1] इत्येतेन सम्बध्यते । आत्मीयं रूपमीषद्धिंसत्यौ । अथवा आमिनाने[1] इत्याकारोऽध्यर्थे । मीनातिरपि सामर्थ्यात् करोत्यर्थे । आत्मीयं रूपमधि उपरि कुर्वाणे । कस्य । सामर्थ्यात् प्रकृतत्वाच्च दिव एव ॥ २ ॥

वेङ्कट० श्वेतवत्सा श्वेता उषाः आ अगात् । सूर्यं[2] वत्समाह साहचर्यात् । अरिचत् कृष्णा सदनानि[2] अस्याः रात्रिः । अथैने[3] संस्तौति—[4]समानबन्धू समानबन्धने[4] अमरणधर्माणौ अनूची द्योतमाने अन्योन्यस्य अध्यात्मम्[4] आत्मीयम् वर्णम् कुर्वाणे चरतः ॥ २ ॥

मुद्गल० श्वेत्या इति उषसो नामधेयम् (तु. निघ १,८) । रुशती दीप्ता श्वेत्या श्वेतवर्णोषाः रुशद्वत्सा रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता । यथा मातुः समीपे वत्सः सञ्चरति एवम् उषसः समीपे सूर्यस्य नित्यमवस्थानात् तद्वत्सत्वम् । तादृशी सती आ अगात् आगतवती । आगतायाः अस्याः उषसः कृष्णा कृष्णवर्णा रात्रिः सदनानि स्थानानि स्वकीयान्स्यार्धयामलक्षणानि अरैक् आरेचितवती कल्पितवती । दत्तवतीत्यर्थः । उ पदपूरणम् । अपि च एते राज्युषसौ समानबन्धू समानेनैकेन सूर्याख्येन बन्धुना सख्या युक्ते अमृते मरणरहिते कालात्मकतया नित्यत्वात् । अनूची अन्वञ्चन्त्यौ प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छन्त्यौ एवंभूते वर्णम् सर्वेषां प्राणिनां रूपम् आमिनाने जरयन्त्यौ एवंविधे सत्यौ द्यावा द्योतमाने चरतः प्रतिदिवसम् आवर्तेते ॥ २ ॥

**समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।**
**न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३ ॥**

समानः । अध्वा । स्वस्रोः । अनन्तः । तम् । अन्याऽअन्या । चरतः । देवशिष्टे इति देवऽशिष्टे । न । मेथेते इति । न । तस्थतुः । सुमेके इति सुऽमेके । नक्तोषसा । सऽमनसा । विरूपे इति विऽरूपे ॥ ३ ॥

स्कन्द० तम् इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः[5] । योऽयं समानः अध्वा गमनमार्ग आगामिकाललक्षणः स्वस्रोः भगिन्योः । राज्युषसौ ह्येकेन प्रजापतिना आदित्येन वा जन्येते इत्युपपन्नमनयोर्भगिनीत्वम् । कीदृशः । अनन्तः अत्यन्तबहुः[7] । तम् अन्यान्या अन्यान्याशब्दः परस्परपर्यायः । तृतीयैकवचनान्तश्चात्र[8] द्रष्टव्यः । तृतीयाश्रुतेर्योग्यक्रियाध्याहारः । परस्परेण सम्बद्धे चरतः गच्छतः । देवशिष्टे शासिरत्र शुद्धोऽपि सामर्थ्यात् सोपसर्गार्थो द्रष्टव्यः । सर्वप्राणिनामुपकाराय देवैरनुशिष्टे । अनुज्ञाते इत्यर्थः । परस्परसम्बद्धे अपि च गच्छतः । न मेथेते 'मेथतिराक्रोशकर्मा' ( या ४,२ ) । मनुष्यवत् परस्परं नाक्रोशतः । न तस्थतुः क्षणमपि न तिष्ठतः । कीदृश्यौ । सुमेके मेकशब्दो मुखवचन इति केचिदाहुः । सुमुख्यौ । सृष्टेः प्रथमः संवत्सरो मेक इत्युच्यत इत्यन्ये । तथाहि 'मेकः संवत्सरः, ऋतवो मेकपुत्राः' इति पौराणिकाः स्मरन्ति ।

---

१. °नानेन अ. २-२. साहचर्या···दनानि वि[1] अ[1]. ३. °थैवं कु. ४-४. समान यः वि[1] ल; समान··· वि[2]; समानबन्धने अ[1]; समानबन्धू वि[1] अ[1]. ५. नास्ति कु. ६. °ध्याहर्तव्यः अ. ७. °त्यन्तबहुः अ. ८. °न्तश्च अ.

शोभनो मेको ययोः सम्बन्धी सृष्टिकालजन्यतया ते सुमेके। आद्यसंवत्सरसृष्टे इत्यर्थः। के। नक्तोषसा राज्युषसौ। समनसा सङ्गतचित्ते। परस्परवशवर्तिन्याविरयर्थः। विरूपे विभिन्नरूपे विचित्ररूपे वा ॥ ३ ॥

**वेङ्कट०** एकः मार्गः अपर्यन्तः अहोरात्रयोः गमनस्य। तम् देवैः अनुशिष्टे चरतः। एकस्यां गतायाम् अन्या। तस्यां गतायाम् अपरा। ते न [१]सङ्घर्षाद् आक्रोशतः[१]। न च[२] क्षणमपि तिष्ठतः शोभनपरिमाणे[३] 'संवत्सरो वै सुमेकः स ह्येकचरः ( तु. माश १,७,२,२६ ) इति तु[४] ब्राह्मणम्। अहोरात्रे सुमनस्के[५] विभिन्नरूपे[६] ॥ ३ ॥

**मुद्गल०** स्वस्रोः भगिन्योः राज्युषसोः अध्वा सञ्चरणसाधनभूतो मार्गः समानः एक एव। येनैवाकाकाशमार्गेण उषा निर्गच्छति तेनैव रात्रिरपि। स च मार्गः अनन्तः अवसानरहितः। तम मार्गम् देवशिष्टे देवेन द्योतमानेन सूर्येण अनुशिष्टे शिक्षिते सत्यौ अन्यान्या एकैका चरतः क्रमेण गच्छतः। अपि च सुमेके शोभनमेहने सर्वेषामुत्पादकत्वात् शोभनप्रजनने नक्तोषासा रात्रिरुषाश्च विरूपे तमःप्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते अपि समनसा समानमनस्के ऐकमत्यं प्राप्ते सत्यौ न मेथेते परस्परं न हिंस्तः। तथा न तस्थतुः क्वचिदपि न तिष्ठतः सर्वदा लोकानुग्रहार्थं गच्छत इत्यर्थः ॥ ३ ॥

भास्व॑ती ने॒त्री सू॒नृता॑नाम॒चेति चि॒त्रा वि दुरो॑ न आवः।
प्रार्प्या॒ जग॒द्व्यु॑ नो रा॒यो अ॑ख्यदु॒षा अ॑जीग॒र्भुव॑नानि॒ विश्वा॑ ॥ ४ ॥

भास्व॑ती। ने॒त्री। सू॒नृता॑नाम्। अचे॑ति। चि॒त्रा। वि। दुरः॑। नः॒। आ॒व॒रित्या॑वः।
प्र॒ऽअर्प्य॑। जग॑त्। वि। ऊँ इति॑। नः॒। रा॒यः। अ॒ख्य॒त्। उ॒षाः। अ॒जी॒गः। भुव॑नानि। विश्वा॑ ॥ ४ ॥

**स्कन्द०** भास्वती दीप्तिमती। नेत्री प्रवर्तयित्री। सूनृतानाम् अपठितमपि वाङ्नामैतत्। वाचाम्। उषउदयकाले हि प्राणिनां वाचः प्रवर्तन्ते। अतः सैव तासां प्रवर्तयित्रीत्युच्यते। अचेति चेत्यते ज्ञायते। दृश्यत इत्यर्थः। चित्रा विचित्रा पूज्या वा दृश्यमानैव। दुरः[७] सर्वार्थानां दृशां वाग्द्वाराणि। नः अस्मभ्यम्। '[८]वि आवः[८] विवृणोति। प्रकाशयतीत्यर्थः। न चेदानीमेव केवलम्[९]। किं तर्हि। पूर्वस्मिन्नपि काले। प्रार्प्या अर्पयित्वेत्यर्थः। प्रगमय्य जगत्। तेषु तेषु व्यापारेषु कृत्स्नं जगत् प्रवर्त्येत्यर्थः। वि उ नः उ इति पदपूरणः। नः अस्मभ्यम् रायः[१०] धनानि। [११]वि अख्यत् ख्यातिरत्र[११] अन्तर्णीतण्यर्थो द्रष्टव्यः। विविधं ख्यापितवती। प्रकाशितवतीत्यर्थः। किञ्च उषाः अजीगः जिगर्तिरत्र सामर्थ्यात् गत्यर्थः। 'यो वां दूतो न धिष्ण्यावजीगः' ( ऋ ७,६७,१ ) इति यथा। उषाः गच्छति भुवनानि विश्वा सर्वाणि भूतजातानि प्रति ॥ ४ ॥

**वेङ्कट०** उषा वाचाम् नेत्री पूर्वस्यां प्रज्ञायते चित्रवर्णा। अन्धकारपरिवृतानि च अस्माकं

---

१-१. संघर्षा… कु; °र्षाद् आक्रोशं कुरुतः वि[१] अ[१]. २. नास्ति वि[१] अ[२] लपं. ३. °णामे वि[१] लपं. ४. नास्ति वि[२,३] अ[२]. ५. °मनस्ते वि[१] लपं. ६. °भिन्नरूपेण वि[१] अ[२]; भिन्नरू° कु; °न्नरूप इति वि[२] अ[१]. ७. विदुरः अ. ८-८. द्यावापृथिव्यापि अ. ९. नास्ति अ. १०. °यः घटादीनि अ. ११-११. त्रुटितम् अ.

द्वाराणि विवृणोति। मनुष्यचक्षुषि[1] अन्धकारेण तिरोहितम् जगत्[2] समर्पयन्ती अस्माकं धनार्थं[3] व्यौच्छत्। सेयम् उषाः विश्वानि एव[4] भुवनानि [5]उज्जगार †एव इति†[5] ॥ ४ ॥

मुद्गल० भास्वती विशिष्टप्रकाशनयुक्ता सूनृतानाम् वाचाम् नेत्री उत्पादयित्री। उषसः प्रादुर्भावानन्तरं हि पशुपक्षिमृगादयः सर्वे शब्दं कुर्वन्ति। एवंभूता उषाः अचेति अस्माभिरज्ञायि। चित्रा चायनीया ज्ञाता सा नः अस्माकम् दुरः द्वाराणि तमसा तिरोहितानि[6] वि आवः व्यवृणोत्। यथाऽस्माभिर्दृश्यन्ते तथा तमो निवार्य प्रकाशयतीत्यर्थः। अपि च जगत् सर्वं भुवनम् प्रार्प्य प्रकाशं गमयित्वा नः अस्माकम् रायः धनानि वि अख्यत् विशिष्टप्रकाशनयुक्तानि अकरोत्। उ पदपूरणम्। सा उषाः विश्वा भुवनानि सर्वाणि भुवनानि तमसा तिरोहितत्वेन अविद्यमानकल्पानि अजीगः उद्गिरति स्वमुखान्निर्गमयति। स्वकीयेन प्रकाशेन तमो निःसार्य पुनरुत्पन्नानीव करोतीत्यर्थः ॥ ४ ॥

जिह्मश्ये॒३॑ चरि॑तवे म॒घोन्या॑भो॒गय॑ इ॒ष्टये॑ रा॒य उ॑ त्वम्।
द॒भ्रं पश्य॑द्भ्य उर्वि॒या वि॒चक्ष॑ उ॒षा अ॑जीग॒र्भुव॑नानि॒ विश्वा॑ ॥ ५ ॥

जि॒ह्म॒ऽश्ये॑। चरि॑तवे। म॒घोनी॑। आ॒ऽभो॒गये॑। इ॒ष्टये॑। रा॒ये। ऊँ॒ इति॑। त्व॒म्।
द॒भ्रम्। पश्य॑त्ऽभ्यः। उ॒र्वि॒या। वि॒ऽचक्षे॑। उ॒षाः। अ॒जी॒ग॒रिति॑। भुव॑नानि। विश्वा॑ ॥ ५ ॥

स्कन्द० जिह्मशब्दः कुटिलवचनः। शीङ् स्वप्ने। किञ्चित् प्रति कुटिलशयनाय। चरितवे गमनाय अन्यं प्रति। मघोनी धनवत्युषाः आभोगये सम्भोगायान्यं प्रति। इष्टये यागायान्यं[7] प्रति। राये उ त्वम् उ इति पदपूरणः। त्वमिति सर्वनाम, एकशब्देन समानार्थः। एकशब्दश्चान्यार्थे। धनायान्यं प्रति[7]। उषसि ह्यागतायां कश्चिन्निद्रालुः पार्श्वेनावस्थाय सङ्कोच्य जङ्घे कुटिलः [8]शेते। कश्चित् देशान्तरं गच्छति। कश्चित्[8] भोजनादिसम्भोगान् कर्तुमारभते। कश्चिद्यष्टुं कश्चिद्धनार्थं यतते। एतदुच्यते जिह्मश्य इत्यादिना। दभ्रम् पश्यद्भ्यः 'दभ्रम्' (निघ ३,२) इति अल्पनाम। तमसा आच्छादितत्वाद् अल्पं पश्यद्भ्यो मनुष्येभ्यः। उर्विया विचक्षे उर्वियेति प्रथमाया इयादेशः। विचक्षे इत्यपि चक्षिरन्तर्णीतण्यर्थः तुमर्थे च केन् प्रत्ययः। विस्तीर्णं विख्यापयितुम्। तमसा चाभिभूतत्वाद् अस्फुटं पश्यद्भ्यः। स्फुटं दर्शयितुमित्यर्थः। एवम् उषाः अजीगः भुवनानि विश्वा ॥ ५ ॥

वेङ्कट० कुटिलं शयानस्य चरणार्थम्[9] उषाः आभोगार्थं[10] यागार्थं धनार्थं चाऽपरं प्रति, अन्धकारात् स्वल्पम् पश्यद्भ्यः मनुष्येभ्यः उरु दर्शनार्थम्[11] ॥ ५ ॥

मुद्गल० मघोनी धनवती उषाः जिह्मश्ये जिह्मं वक्रं शयानाय पुरुषाय चरितवे चरितुं शयनादुत्थाय स्वापेक्षितं प्रति गन्तुं व्युच्छन्ती भवति। त्वम् एकं प्रति आभोगये आभोग्याय शब्दादिविषयार्थम्। तथाऽपरं प्रति इष्टये यागार्थम्, तथाऽन्यं प्रति राये धनार्थं च

---

१. मनुष्याणां च° वि[1] अ[2]. २. जवात् वि[2]. ३. यानार्थं लपं. ४. नास्ति वि[1] अ[2]. ५-५. उज्जहाती विजिह्वं स्पृद्ये वि[1] अ[2]. †-† नास्ति कु. ६. रोहितानि मूको. ७. नास्ति अ[1]. ८-८. शेते···कश्चित् कु; शेते···न्तर° अ. ९. शयनार्थं कु लपं. १० अभो° वि[1] लपं; °भोगार्थं भोजनादिसंभोगं कर्तुं वि[1] अ[2]. ११. उददर्श° वि[1] लपं.

व्युच्छन्तीति[१] शेषः। उ चार्थे। अपि च दभ्रम् अल्पम् पश्यद्भ्यः अन्धकारावृतत्वेन ईषद् द्रष्टृभ्यः। विचक्षे विशिष्टप्रकाशाय व्युच्छन्ती उर्विया उर्वी विस्तीर्णा उषाः सर्वाणि भूतजातानि तमसा तिरोहितानि प्रकाशदानेन उद्गीर्णानीव करोति ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये प्रथमो वर्गः ॥

क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।
विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥ ६ ॥

क्षत्राय । त्वम् । श्रवसे । त्वम् । महीयै । इष्टये । त्वम् । अर्थम्ऽइव । त्वम् । इत्यै ।
विऽसदृशा । जीविता । अभिऽप्रचक्षे । उषाः । अजीगरिति । भुवनानि । विश्वा ॥ ६ ॥

**स्कन्द०** क्षत्राय[२] 'क्षत्रम्' (निघ २,१०) इति धननाम। धनाय त्वम् एकं प्रति। श्रवसे त्वम् अन्नायान्यं प्रति। महीयै महतेर्दानकर्मणो महेर्वा पूजार्थस्येदं रूपम्। दानार्थं[३] पूजार्थं वान्यं प्रति। इष्टये त्वम् यागायान्यं प्रति। अर्थमिव त्वम् इत्यै इतिर्गमनम्। यथा अर्थी नियमेनादरेण वा अर्थं प्रति गच्छति तद्वत् नियमेनादरेण वा गमनायान्यं प्रति। एवम् विसदृशा विसदृशानि। जीविता कर्तर्ययं क्तप्रत्ययः। जीवितानि[४]। अभिप्रचक्षे अभिप्रकाशयितुम्। उषाः अजीगः भुवनानि विश्वा ॥५॥

**वेङ्कट०** [५]एकं च[५] प्रति धनाय इव प्रेरयितुम्, अपरं[६] प्रति अन्नाय इव महते अन्यं[७] प्रति यागाय अपरं प्रति [८]सिषाधयिषितम्† अर्थं प्रति गन्तुम् एवं नानाजातीयकानि जीवनसाधनानि अभिप्रदर्शयितुमिति[८] ॥ ६ ॥

**मुद्गल०** क्षत्राय धनार्थम् त्वम् एकं प्रति उषा व्युच्छन्तीति शेषः। तथा श्रवसे अन्नार्थम् त्वम् एकं प्रति व्युच्छन्ती। तथा महीयै महत्यै इष्टये अग्निष्टोमादिमहायज्ञार्थम् त्वम् एकं प्रति व्युच्छन्ती। तथा अर्थम् इव अपेक्षितमर्थं प्रति इत्यै गमनार्थम् त्वम् एकं प्रति व्युच्छन्ती। अपि च विसदृशा विलक्षणानि नानारूपाणि जीविता जीवितानि जीवनोपायभूतानि कृषिवाणिज्यादीनि अभिप्रचक्षे आभिमुख्येन प्रकाशयितुं व्युच्छन्ती उषाः सर्वाणि भूतजातानि तमसा निगीर्णानि अजीगः प्रकाशनेन उद्गीर्णानीवाकरोत् ॥ ६ ॥

एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः ।
विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ ॥ ७ ॥

एषा । दिवः । दुहिता । प्रति । अदर्शि । विऽउच्छन्ती । युवतिः । शुक्रऽवासाः ।
विश्वस्य । ईशाना । पार्थिवस्य । वस्वः । उषः । अद्य । इह । सुऽभगे । वि । उच्छ ॥ ७ ॥

---

१. युच्छती° मै[१]. २. नास्ति मूको. ३. नास्ति अ. ४. जीवानि मूको. ५-५. क्षत्राय त्वं कंचन कु; कंचन वि[१] अ[१,२]; (ए)कं च क. ६. परं वि[१] अ[१]. ७. अन्नं अ[१] कु. ८-८. नास्ति वि[१,३] लपं अ[१].
† सिसाध° अ[१] वि[१] क.

**स्कन्द०** एषा उषाः दिवः दुहिता द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते। प्रति अदर्शि प्रतिशब्दोऽत्र धात्वर्थानुवादी। दृश्यते। व्युच्छन्ती उच्छी विवासे। तमांसि विवासयन्तीत्यर्थः। युवतिः सर्वदैव तरुणी। शुक्रवासाः शुक्रः प्रकाशो वासःस्थानीयो यस्याः सा शुक्रवासाः। विश्वस्य सर्वस्य ईशाना ईश्वरी। पार्थिवस्य पृथिव्यां भवस्य। वस्वः धनस्य। परः पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। हे उषः! अद्य इह अस्मदीये यज्ञे सुभगे! सुधने! वि उच्छ तमांसि विवासय[1] ॥ ७ ॥

**वेङ्कट०** [2]†एषा दिवः दुहिता प्रति† दृश्यते प्रादुर्भवन्ती तरुणी शुक्लदीप्तिः विश्वस्य पार्थिवस्य धनस्य ईशाना। उषः! अद्य शोभनधने! वि उच्छ अत्र[2] ॥ ७ ॥

**मुद्गल०** दिवः दुहिता व्योम्नो दुहितृस्थानीया। तस्य हि पूर्वार्धे उषा उत्पद्यते। सा एषा उषाः व्युच्छन्ती तमो वर्जयन्ती प्रति अदर्शि सर्वैः प्राणिभिर्दृष्टाऽभूत्। कीदृशी सा। युवतिः यावयित्री फलानां पुरुषैः प्रापयित्री। शुक्रवासाः श्वेतवसना। तथा विश्वस्य सर्वस्य पार्थिवस्य पृथिव्याः सम्बन्धिनः वस्वः धनस्य ईशाना ईश्वरी। हे सुभगे! शोभनधने! उषः! तादृशी त्वम् अद्य अस्मिन् काले इह अस्मिन् देवयजनदेशे वि उच्छ तमांसि विवासय। वर्जयेत्यर्थः ॥ ७ ॥

परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम्।
व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती ॥ ८ ॥

पराऽयतीनाम्। अनु। एति। पाथः। आऽयतीनाम्। प्रथमा। शश्वतीनाम्।
विऽउच्छन्ती। जीवम्। उत्ऽईरयन्ती। उषाः। मृतम्। कम्। चन। बोधयन्ती ॥ ८ ॥

**स्कन्द०** परायतीनाम् परागच्छन्तीनां गवादिजातीनाम् अनु एति अनुगच्छति पाथः पन्थानम्[3]। आयतीनाम् आगच्छन्तीनां च प्रथमा अग्रिमा[4] शश्वतीनाम् बह्वीनां नित्यानां वा। याश्च दूरवर्तिन्यो गवादिजातयो याश्च सन्निकृष्टाः सर्वव्यापित्वात् ताः[4] [5]सर्वा अनुगच्छतीत्यर्थः[5]। किं कुर्वती[6]। उच्यते। व्युच्छन्ती[7] तमांसि विवासयन्ती। जीवम् उदीरयन्ती जीवं प्राणिजातम्। उदित्येष प्रेत्येतस्य स्थाने। प्राणिजातं च तेषु तेषु व्यापारेषु प्रेरयन्ती। का। उषाः मृतम् कम् चन बोधयन्ती मृतशब्दोऽत्र लुप्तोपमो द्रष्टव्यः। मृतमिव च कञ्चिदत्यन्तनिश्चेष्टं सुप्तं सर्वप्राणिजातं[8] प्रबोधयन्ती ॥ ८ ॥

**वेङ्कट०** [9]परागच्छन्तीनाम् उषसां मार्गम् अनु गच्छति† तासाम् अन्तिमा‡ भवति। आगच्छन्तीनां बह्वीनाम् प्रथमा भवति[9]। प्रादुर्भवन्ती प्राणिजातं शयनाद् उत्थापयन्ती गतेन्द्रियत्वात्[10] मृतम् इव कम् चन बोधयन्ती ॥ ८ ॥

**मुद्गल०** परायतीनाम् परागच्छन्तीनाम् अतीतानाम् उषसां सम्बन्धि पाथः अन्तरिक्षैकदेशलक्षणं

---

१. विवासयन्ती जीव कु. २-२. नास्ति वि[1] लपं. †-† नास्ति वि[1] अ[1]. ३. पन्थानः मूको. ४. नास्ति कु. ५-५. सर्वाननुगच्छन्ती° अ. ६. कुर्वन्ती मूको. ७. नास्ति मूको. ८. प्राणिजातं अ. ९-९. नास्ति वि[1] लपं. † °च्छसि अ[1]. ‡ °न्तिका अ[1]. १०. तदिन्द्रि° ल वि[1,2] अ[1].

स्थानम् अद्यतनी उषाः अनु एति अनुगच्छति । अतीता उषसो यथा व्युष्टाः, एवमेवैषापि व्युच्छतीत्यर्थः । तथा आयतीनाम् आगच्छन्तीनाम् शश्वतीनाम् बह्वीनाम् उषसाम् प्रथमा आद्या भवति । एषा यथा वर्तत एवमेवागामिन्योऽप्युषस इत्यर्थः । तादृशी व्युच्छन्ती तमो वर्जयन्ती । जीवम् प्राणिनं जीवात्मानम् उदीरयन्ती शयनाद् ऊर्ध्वं प्रेरयन्ती उषाः मृतम् स्वापसमये प्रलीनेन्द्रियत्वात् मृतमिव सन्तम् कम् चन कमपि पुरुषम् बोधयन्ती पुनरिन्द्रियप्रवेशेन चेतनं कुर्वती प्रवर्तते इति शेषः ॥ ८ ॥

उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।
यन्मानुषान् यक्ष्यमाणाँ अजीगस्तद् देवेषु चकृषे भद्रमप्नः ॥ ९ ॥

उषः । यत् । अग्निम् । सम्ऽइधे । चकर्थ । वि । यत् । आवः । चक्षसा । सूर्यस्य ।
यत् । मानुषान् । यक्ष्यमाणान् । अजीगरिति । तत् । देवेषु । चकृषे । भद्रम् । अप्नः ॥ ९ ॥

**स्कन्द०** हे उषः! यत् आहवनीयाख्यम् अग्निम् समिधे समिन्धनाय चकर्थ करोषि । समिन्धयसीत्यर्थः । उषसि ह्युदितायामग्निहोत्रिण आहवनीयं समिन्धयन्ति, नानुदितायाम् । अतस्तमुषा एव समिन्धयतीत्युच्यते । वि यत् आवः । विवृणोषीत्यर्थः[1] । चक्षसा[2] दर्शनेन प्रकाशाख्येन । सूर्यस्य सम्बन्धिना । सूर्यप्रभवेनेत्यर्थः । उषसो हि प्रकाश उदेष्यतः सूर्यात् प्रभवति । यत् च मानुषान् मनुष्यान् यक्ष्यमाणान् प्रति अजीगः गच्छसि । तत् त्रिविधमपि देवेषु निर्धारण एषा सप्तमी । देवानां मध्ये त्वमेवैका चकृषे करोषि भद्रम् कल्याणम् अप्नः कर्म ॥ ९ ॥

**वेङ्कट०** उषः! यत् त्वम्[3] अग्निम् समिन्धनाय[4] चकर्थ, [5]यत् च[5] सूर्यतेजसा जगत् रक्षसि[6], यत् च यक्ष्यमाणान् मानुषान्[7] उद्गिरसि[8], तत् इदं [9]त्रिविधं देवमध्ये[9] कृतवती[10] [11]कल्याणं कर्म[11] ॥ ९ ॥

**मुद्गल०** हे उषः! त्वम् अग्निम् गार्हपत्यादिरूपम् समिधे समिन्धनाय प्रज्वलनार्थम् यत् चकर्थ कृतवती । उषःकाले ह्यग्नयो होमार्थम् उपसमिध्यन्ते । अपि च तमसा तिरोहितं जगत् सूर्यस्य चक्षसा प्रकाशेन यत् वि आवः व्यवृणोः तमसा विश्लिष्टमकरोः । तथा मानुषान् मनोः पुत्रान् मनुष्यान् यक्ष्यमाणान् यागं करिष्यतः यत् त्वम् अजीगः पूर्वं तमसा ग्रस्तान्[12] प्रकाशनेनोद्गीर्णान्[13] इवाकरोः[14] । हे उषः! देवेषु मध्ये त्वमेव भद्रम् भजनीयम् तत् एतत् त्रिविधम् अप्नः कर्म चकृषे कृतवती ॥ ९ ॥

कियात्या यत् समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥ १० ॥

---

१. विवृणोरित्य° कु; विवृणोतीत्य° अ. २ चक्षुषा मूको. ३. नास्ति वि[2] अ[1]. ४. °मिन्धानाय वि[1] ल. ५-५. नास्ति वि[1]. ६. •क्षति वि[1,2] लपं; °क्षति (?सि) ल. ७. मनुष्यात् वि[2] अ[2]. ८. गच्छसि वि[1] अ[2]. ९-९. त्रिविधदेव° वि[1] अ[2]. १०. °वती करोषि वि[2] अ[1]. ११-११. °ल्याणकर्मणा १२. °स्तात् मै[2]. १३. °द्गीर्णं मूको. १४. वाकरोः मूको.

कियति । आ । यत् । समया । भवाति । याः । विऽऊषुः । याः । च । नूनम् । विऽउच्छान् ।
अनु । पूर्वाः । कृपते । वावशाना । प्रऽदीध्याना । जोषम् । अन्याभिः । एति ॥ १० ॥

**स्कन्द०** आ-कारोऽत्र पदपूरणः, स्विदित्यस्य वार्थे । स्विच्छब्दश्च पुनरित्यनेन समानार्थो वितर्कवचनः । कियति पुनर्जगतः प्रदेशे समया भवाति समयाशब्दः समीपवचनः । समीपीभवत्युषाः । नैव जानीमः, कियत्यपि जगतः प्रदेशे समीपीभवत्युषा इति । सर्वव्यापिन्येव[1] लक्ष्यत इत्यर्थः । या किं करोति इत्युच्यते । यत् प्रथमैकवचनस्यात्र लुग्द्रष्टव्यः । याः व्यूषुः या उषसः पूर्वकालेषु व्युष्टवत्यः । याः च नूनम् व्युच्छान् नूनमिति पदपूरणः, इदानीमित्यस्य[1] वार्थे । याश्चेदानीं व्युच्छन्ति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ताः सर्वाः । पूर्वाः पूर्ववृत्ताः । अनु कृपते 'कृपायति[2], कृपण्यति' (निघ ३,१४) इत्यर्चतिकर्मसु पाठात् कृपिरत्र[3] [4]स्तुत्यर्थः । स्तौति[4] । यश्चोषस्युदितायां स्तोतारः स्तुवन्ति तदुषा एव स्तौतीत्युच्यते । वावशाना वश कान्तौ, वाश्ट शब्दे[5] इत्यनयोरन्यतरस्येदं रूपम् । कामयमाना, [6]शब्दं वा कुर्वतीत्यर्थः† । यश्चोषस्युदितायां[6] [7]लोकाः कामयन्ते[7] शब्दं वा कुर्वन्ति तदुषस्येवोपचर्यते । या च प्रदीध्याना दीध्यतेर्दीप्त्यर्थस्य रूपम् । प्रकर्षेण दीप्यमाना । जोषम् प्रति अन्याभिः उषोभिः सह एति गच्छति । तुल्यकालाभिरुषोभिः सहैकतां प्रतिपद्यते, न विरुध्यत इत्यर्थः ॥ १० ॥

**वेङ्कट०** कियति [8]देशे स्विद्, यस्मिन्[8] इयं सङ्गच्छन्ती[9] देशे[10] समीपे भवति । अहम् इह[11] पश्यामि । क्व[12] चेयमन्यत्र सङ्गच्छत इति वितर्कः । याः पुरा व्यूषुः, याः च[13] सम्प्रति व्युच्छन्ति[14] सर्वास्ताः कियति भवन्ति । सेयम्[15] पूर्वाः उषसः अनु कल्पते कामयमाना । तासां पश्चाद् भवति । प्रदीप्यमाना सह अन्याभिः आगच्छति ॥ १० ॥

**मुद्गल०** उषाः समया भवाति समीपस्था भवतीति यत् एतत् तत्कियति काले प्रवृत्तं परिसमाप्तम् । आ-कारः प्रश्नार्थः । एतदुक्तं भवति—उषा येन कालेन संयुक्ता स कालः कियान् । तस्य कालस्य किं परिमाणमिति । अनेन उषसोऽनन्तरत्वमुक्तम् । तदेव स्पष्टीकरोति । पुरा याः उषसः व्यूषुः व्युष्टाः सञ्जाताः । नूनम् अवश्यम् इतः परम् याः च उषसः व्युच्छान् व्युच्छन्ति व्युष्टा भविष्यन्ति । तत्र पूर्वाः व्युष्टा अतीता उषसः वावशाना कामयमाना इदानीं वर्तमानोषाः अनु कृपते अनुकल्पते समर्था भवति । अतीता उषसो यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोतीत्यर्थः । तथा प्रदीध्याना प्रकर्षेण दीप्यमानोषाः अन्याभिः आगामिनीभिरुषोभिः जोषम् सह एति सङ्गच्छते । आगामिन्योऽपि एतदीयं प्रकाशम् अनुकुर्वन्तीत्यर्थः ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये द्वितीयो वर्गः ॥

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ११ ॥

---

१. नास्ति अ. २. कृया मूको. ३. त्रुटितम् अ. ४-४. त्रुटितम् मूको. ५. शब्दने अ. ६-६. नास्ति अ. † कुर्वन्ती° कु. ७-७. ··· कामयन्त अ कु. ८-८. देशेऽद्यास्मिन् अ[1]; देशेऽस्मिन् य° वि[2] अ[2]. ९. ··· च्छन्ती वि[2]; नास्ति वि[2] अ[1]; व्युच्छन्ती कु. १०. नास्ति वि[2] अ[2]. ११. इव वि[2,3] अ[2] ल लपं. १२. क्व क्व अ[1] वि[2] कु. १३. च नूनं वि[1] लपं. १४. गच्छन्ति वि[2] अ[2]. १५. सेयम् वि[1,2] अ[2] लपं.

ईयुः । ते । ये । पूर्वऽतराम् । अपश्यन् । विऽउच्छन्तीम् । उषसम् । मर्त्यासः ।
अस्माभिः । ऊँ इति । नु । प्रतिऽचक्ष्या । अभूत् । ओ इति । ते । यन्ति । ये । अपरीषु । पश्यान् ॥ ११ ॥

**स्कन्द०** ईयुः ते गतास्ते[१] । मृतास्त इत्यर्थः । ये पूर्वतराम् पूर्वप्रवृत्ततराम्[२] । अतीतकालामित्यर्थः । अपश्यन् दृष्टवन्तः । व्युच्छन्तीम् तमांसि विवासयन्तीम् उषसम् मर्त्यासः मनुष्याः । [३]अस्माभिः उ नु[३] उकारोऽत्र अपिशब्दस्यार्थे । नुशब्दः पदपूरणः । अस्माभिरपीदानीन्तनैः प्रतिचक्ष्या प्रतिशब्दोऽत्र धात्वर्थानुवादी । चक्षतिः पश्यतिकर्मा (तु. निघ ३,११) । द्रष्टव्या । अभूत् भवति । अस्मदादयोऽपि[४] वर्तमानकालामुषसं पश्यन्तीत्यर्थः[५] । ओ ते यन्ति ओ इति आङः उञा सहैकादेशः । आ उ ओ[६] इति । उश्च पदपूरणः । यन्तीत्यपि लृडर्थे लट् । आयास्यन्ति ते, ये अपरीषु द्वितीयार्थे सप्तम्येषा । अपराः पश्चिमाः । आगामिकाला इत्यर्थः । पश्यान् द्रक्ष्यन्ति । अतीतैर्वर्तमानैरागामिभिश्च सर्वैर्मनुष्यैरुषा दृश्यते, नास्मदादिवत् कैश्चिदेवेति समस्तार्थः ॥ ११ ॥

**वेङ्कट०** मृताः ते ये[७] पूर्वतराम् उषसम् मर्त्याः अपश्यन् । अस्माभिः इदानीम् प्रतिद्रष्टव्या[८] भवति । आगच्छन्ति ते ये एनाम् उत्तरासु रात्रिषु पश्यन्ति[९] ॥ ११ ॥

**मुद्गल०** ये मर्त्यासः मरणधर्माणो[१०] मनुष्याः व्युच्छन्तीम् विवासयन्तीम् पूर्वतराम् अतिशयेन पूर्वां विप्रकृष्टाम् उषसम् अपश्यन् दृष्टवन्तः, ते मनुष्याः ईयुः गताः । तथा अस्माभिः उ[११] अपि नु इदानीम् प्रतिचक्ष्या प्रकर्षेण द्रष्टव्या अभूत् जाता । तथा अपरीषु भाविनीषु रात्रिषु ये मनुष्या एनाम् उषसम् पश्यान् पश्यन्ति, ते ओ[११] आ उ इति निपातद्वयसमुदायः । तत्र उ इत्येतद् अवधारणे । एव आ यन्ति आगच्छन्त्येव । कालत्रयेऽप्येषा व्याप्य वर्तत इत्यर्थः[१२] ॥ ११ ॥

**यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती ।**
**सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ ॥ १२ ॥**

यावयत्ऽद्वेषाः । ऋतऽपाः । ऋतेऽजाः । सुम्नऽवरी । सूनृताः । ईरयन्ती ।
सुऽमङ्गलीः । बिभ्रती । देवऽवीतिम् । इह । अद्य । उषः । श्रेष्ठऽतमा । वि । उच्छ ॥ १२ ॥

**स्कन्द०** उषः इत्यामन्त्रणयोगाद् व्युच्छ इति मध्यमपुरुषयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । यावयद्द्वेषाः इत्यादीनि च नामन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यावयद्द्वेषाः यौतिरत्र पृथग्भावार्थः । द्वेषश्शब्दोऽपि[१३] द्वेष्यत्वान्नक्तञ्चरान् रक्षआदीनाह । द्वेषाणां[६] यावयित्री[१४] यावयद्द्वेषाः । राजदन्तादित्वात् परनिपातः । द्वेषाणां नक्तञ्चराणां रक्षआदीनां पृथग्भावयित्री । अपनेत्रीत्यर्थः । ऋतपाः यज्ञस्य पालयित्री । यज्ञो ह्युषस्युदितायां क्रियते न रात्रौ । अतस्तस्य पालयित्रीत्युच्यते । ऋतेजाः ऋतशब्दोऽत्रादित्यवचनः पञ्चम्याश्च स्थाने सप्तमी । आदित्याज्जनित्री । सुम्नावरी 'सुम्नम्'

---

१-१. ते गताः कु. २. पूर्वप्रवृत्तां अ. ३-३. नास्ति अ. ४. अस्मादयो कु. ५. °श्यतीत्य° अ. ६. नास्ति अ. ७. नास्ति वि[१,२] अ[१] ल लपं. ८. °ष्टव्यं वि[३] अ[२]. ९. नास्ति वि[३] अ[२]. १०. नास्ति मै[२]. ११. नास्ति मूको. १२. °र्थः । उ पूरणः मूको. १३. द्वेषश° मूको. १४. संयात्री अ.

( निघ ३,६ ) इति सुखनाम तद्वती । प्राणिनां सुखकरीत्यर्थः । तच्छब्दोऽध्याहर्तव्यः[१] । सा सूनृताः वाचः ईरयन्ती प्रेरयन्ती । उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते । अतः सैव ताः प्रेरयन्तीति व्यपदिश्यते । सुमङ्गलीः सुष्ठु मङ्गल्या सती । बिभ्रती धारयन्ती[२] । देववीतिम् देवकामम् । देवानस्मदीयहविःकामान् कुर्वतीत्यर्थः[३] । इह अस्मदीये यज्ञे । अद्य हे उषः! श्रेष्ठतमा अतिशयेन प्रशस्या वि उच्छ तमांसि विवासय ॥ १२ ॥

**वेङ्कट०** पृथक्क्रियमाणशत्रुका सत्यस्य पालयित्री सत्ये जाता[४] सुखवती वाचः[५] प्रेरयन्ती शोभनमङ्गला यज्ञम्[६] धारयन्ती श्रेष्ठतमा इह अद्य उषः![७] व्युच्छ[८] ॥ १२ ॥

**मुद्गल०** यावयद्द्वेषाः यावयन्ति अस्मत्तः पृथक्कृतानि द्वेषांसि द्वेष्टॄणि यया सा तथोक्ता। नह्युषसि जातायां राक्षसादयोऽवतिष्ठन्ते, यतस्ते निशाचराः । ऋतपाः ऋतस्य सत्यस्य पालयित्री ऋतेजाः यज्ञार्थं प्रादुर्भूता । सत्यामुषसि अहनि यागा अनुष्ठीयन्ते । अतो यज्ञार्थं जातेत्युच्यते । सुम्नावरी सुखवती सूनृताः प्रियसत्यात्मिका वाचः[९] पशुपक्षिमृगादीनां वचांसि वा[१०] ईरयन्ती प्रेरयन्ती उत्पादयन्ती सुमङ्गलीः सौमङ्गल्योपेता । पत्या कदाचिदपि न वियुक्तेत्यर्थः । देववीतिम् देवैः काम्यमानं यज्ञम् बिभ्रती धारयन्ती हे उषः! श्रेष्ठतमा उक्तेन प्रकारेण अतिप्रशस्ता त्वम् इह अस्मिन् देवयजनदेशे अद्य अस्मिन् यागसमये वि उच्छ तमो विवासय ॥ १२ ॥

**शश्व॑त्पु॒रोषा व्यु॑वास दे॒व्यथो॑ अ॒द्येदं व्या॑वो म॒घोनी॑ ।**
**अथो॒ व्यु॑च्छा॒दुत्त॑राँ॒ अनु॒ द्यून॒जरा॒मृता॑ चरति स्व॒धाभि॑: ॥ १३ ॥**

शश्व॑त् । पु॒रा । उ॒षाः । वि । उ॒वा॒स॒ । दे॒वी । अथो॒ इति॑ । अ॒द्य । इ॒दम् । वि । आ॒व॒: । म॒घोनी॑ ।
अथो॒ इति॑ । वि । उ॒च्छा॒त् । उत्ऽत॑रान् । अनु॑ । द्यून् । अ॒जरा॑ । अ॒मृता॑ । च॒र॒ति॒ । स्व॒धाभि॑: ॥

**स्कन्द०** एतस्मादित्येतत्समानार्थः अथो शब्दः । तच्छ्रुतेर्यस्मादित्यध्याहार्यम् । शश्वत् बहून् कालान्[१] नित्यं वा । पुरा पूर्वेष्वपि कालेषु । उषाः देवी वि उवास वसिरत्रान्तर्णीतण्यर्थः । तमांस्यस्मदीये कर्मणि विवासितवती । अथो एतस्मात्कारणात् प्रसादवत्त्वात् कारणात् । अद्य अस्मदीये कर्मणि वि आवः विवृणोतु[११] विवृतवती वा । प्रकाशयतु[१०] प्रकाशितवती वेत्यर्थः । मघोनी धनवती । अथो एतस्मादेव कारणात् वि उच्छात् आशिष्ययं लिङर्थे लेट् । विवासयेत्तमांस्यस्मदीये कर्मणीत्याशास्महे । उत्तरान् अनु द्यून् अनुशब्दोऽत्र 'लक्षणेत्थंभूताख्यान०' (पा १,४,९०) इत्येवं कर्मप्रवचनीयः प्रतिशब्दस्य[१२] समानार्थः । 'द्युः' ( निघ १, ९ ) इत्यहर्नाम । उत्तराण्यहानि प्रति । आगामिन्यपि काल इत्यर्थः । कीदृशी । उच्यते । अजरा जरावर्जिता । अमृता मरणवर्जिता । चरति सर्वत्र गच्छति । स्वधाभिः स्वधाशब्दोऽत्र सामर्थ्यात्[१३] ज्योतिर्वचनः । स्वैर्ज्योतिर्भिः । सर्वं ज्योतिर्भिर्व्याप्नोतीत्यर्थः । अथवा 'स्वधा' (निघ २,७) इत्यन्ननाम । हविर्लक्षणैरन्नैर्निमित्तभूतैर्गच्छति । हवींष्युपभोक्तुं यज्ञेषु गच्छतीत्यर्थः ॥ १३ ॥

---

१. °हार्यः अ २. °यती मूको. ३. °र्वन्ती° मूको. ४. ज्ञाता वि[३] अ[२]. ५. वाचं वि[३] अ[२]. ६. °ज्ञं च कु वि[३]. अ[१,२] ७. नास्ति वि[१]; उषाः वि[३] अ[१] कु ल लपं; ८. नास्ति वि[१]. ९. उषाः मूको. १०. नास्ति मूको. प्रसादत्वात्का° कु. ११. °णोतु अ, १२. °शब्देन अ, १३. नास्ति अ.

**वेङ्कट०** नित्यम् पुरा चेयं व्यौच्छत् देवी । अथ अस्मिन् अहनि धनवती सेयम् इदम् व्यागात् (?) । अथ उत्तराण्यपि अहानि प्रति व्युच्छतु । सेयं जरामरणवर्जिता प्रदित्सितैः अन्नैः सह सर्वदा वर्तते ॥ १३ ॥

**मुद्गल०** देवी देवनशीला उषाः पुरा पूर्वस्मिन् काले [1]शश्वत् नित्यं सततम् वि उवास व्यौच्छत् । अथो अनन्तरम् अद्य अस्मिन् काले[1] मघोनी धनवती उषाः तमसा तिरोहितम् इदम् सर्वं जगत् वि आवः विवासितं प्रकाशनेन तमसा वियुक्तमकरोत् । अथो अनन्तरम् उत्तरान् ऊर्ध्वतरान् भाविनः द्यून् दिवसान् अनु[2] अनुलक्ष्य आगामिष्वपि दिवसेषु व्युच्छात् व्युच्छति विवासयति । अतः कालत्रयव्यापिनी सा उषाः अजरा जरारहिता सर्वदैकरूपा अमृता मरणरहिता च सती स्वधाभिः आत्मीयैः तेजोभिः सह चरति वर्तते ॥ १३ ॥

## व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः ।
## प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ॥ १४ ॥

वि । अञ्जिऽभिः । दिवः । आतासु । अद्यौत् । अप । कृष्णाम् । निःऽनिजम् । देवी । आवरित्यावः । प्रऽबोधयन्ती । अरुणेभिः । अश्वैः । आ । उषाः । याति । सुऽयुजा । रथेन ॥ १४ ॥

**स्कन्द०** वि-शब्दः अद्यौत् इत्याख्यातेन सम्बन्धयितव्यः । अञ्जिभिः इति, अञ्जिशब्दो व्यक्तिरूपत्वात् ज्योतिर्वचनः । ततो [3]ज्योतिर्भिः दिवः अवयवभूतासु आतासु[3] आततासु[4] दिक्षु[5] वि अद्यौत् विविधं द्योतते । किञ्च कृष्णाम् निर्णिजम् कृष्णामिति षष्ठ्याः स्थाने व्यत्ययेन द्वितीया । [3]'निर्णिक्' (निघ ३,७) इत्यपि रूपनाम । कृष्णवर्णाया रात्रेः सम्बन्धिनमेवंलक्षणं रूपम् । अप[2] आवः आवृणोति[3] । अपनयतीत्यर्थः । किञ्च सुप्तान् प्राणिनः प्रबोधयन्ती अरुणेभिः अरुणवर्णैः अश्वैः । सुयुजा सुयुक्तेन रथेन उषाः आ याति आगच्छति[6] ॥ १४ ॥

**वेङ्कट०** विद्योतते [7]अन्तरिक्षस्य अञ्जनसाधनैः[7] ज्योतिर्भिः दिवः सम्बन्धिनीषु दिक्षु । अपवृणोति कृष्णं रूपं रात्रिकृतम् । सेयम् प्रबोधयन्ती अरुणैः अश्वैः सुयुक्तेन रथेन उषाः[8] आगच्छति ॥ १४ ॥

**मुद्गल०** दिवः नभसः सम्बन्धिनीषु आतासु आततासु विस्तीर्णासु दिक्षु उषाः अञ्जिभिः व्यञ्जकैः प्रकाशकैः तेजोभिः वि अद्यौत् विद्योतते प्रकाशते । सा उषाः देवी देवनशीला कृष्णाम् निर्णिजम् 'निर्णिक्' इति रूपनाम । रात्रिकृतं कृष्णरूपम् अप आवः अपावृणोत् प्रकाशेन तिरस्कृतवती । अपि च अरुणेभिः अरुणैः लोहितवर्णैः अश्वैः व्यापनशीलैः स्वकीयैः किरणैः सुयुजा सम्यक् युक्तेन रथेन उषाः आ याति आगच्छति । किं कुर्वती । प्रबोधयन्ती सुप्तान् प्राणिनः प्रबुद्धान् कुर्वती ॥ १४ ॥

## आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
## ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥ १५ ॥

---

१. नास्ति मै[१]. २. नास्ति मूको. ३-३. नास्ति अ. ४. त्रुटितम् मूको. ५. नास्ति अ. ६. °च्छत्युषाः मूको. ७-७.° रिक्षे । साधनैः वि[१] ल; °क्ष···न सा° अ[१] कु. ८. उषः वि[३] अ[२].

आऽवहन्ती । पोष्या । वार्याणि । चित्रम् । केतुम् । कृणुते । चेकिताना ।
ईयुषीणाम् । उपऽमा । शश्वतीनाम् । विऽभातीनाम् । प्रथमा । उषाः । वि । अश्वैत् ॥ १५ ॥

**स्कन्द०** आवहन्ती **आनयन्ती स्तोतृणां 'यष्टॄणां चार्थाय'**। **स्तोतृभ्यो यष्टृभ्यश्च ददातीत्यर्थः**। पोष्या **पोषणसमर्थानि धनानि**। वार्याणि **वरणीयानि**। **अत्यन्तोत्कृष्टानीत्यर्थः**[२]। चित्रम् **विचित्रं पूज्यं वा** केतुम् **प्रज्ञानं प्रकाशाख्यम्** कृणुते **करोति**[३]। चेकिताना **ज्ञायमाना**। **दृश्यमानैवेत्यर्थः**। **किञ्च** ईयुषीणाम् उपमा शश्वतीनाम् 'शश्वत्' ( निघ ३,१ ) **इति बहुनाम**। **निर्धारणे चोभयत्र षष्ठी**। **गन्त्रीणां बह्वीनां मध्ये उपमानभूता**। **अत्यन्तोत्कृष्टेत्यर्थः**। **किञ्च** विभातीनां प्रथमा **भा दीप्तौ**। **दीप्यमानानां मध्ये प्रथमाः उत्कृष्टा**। उषा वि अश्वैत् **श्वयतेर्गत्यर्थस्य वृद्ध्यर्थस्य वेदं रूपम्**। **विविधं सर्वत्र गच्छति वर्धते वा ॥ १५ ॥**

**वेङ्कट०** आवहन्ती **पोषणसमर्थानि धनानि** चित्रम् **प्रज्ञानं करोति ज्ञायमाना**[४]। **गतानां**[५] **बह्वीनाम् अन्तिमा उषाः अतः**[६] **परं**[७] **व्युच्छन्तीनां मुख्या** उषाः **प्राच्यां वृद्धासीत् ॥ १५ ॥**

**मुद्गल०** पोष्या **यावज्जीवं पोषणसमर्थानि** वार्याणि **वरणीयानि धनानि** आवहन्ती **अस्मभ्यम् आनयन्ती** चेकिताना **सर्वजनं प्रज्ञापयन्ती उषाः** चित्रम् **विचित्रम् आश्चर्यभूतम्** केतुम् **प्रज्ञापकं रश्मिं कृत्स्नजगत्प्रकाशनसमर्थं** कृणुते **स्वात्मनः प्रकाशात् कुरुते**। **सैषा** ईयुषीणाम् **गमनवतीनां पूर्वनिष्पन्नानाम्** शश्वतीनाम् **बह्वीनाम् उषसाम्** उपमा **उप समीपे निर्मिता** विभातीनाम् **विशेषेण प्रकाशमानानाम् आगामिनीनाम् उषसाम्** प्रथमा **आद्या एवंभूता** उषाः वि अश्वैत् **तेजसा प्रवृद्धासीत् ॥ १५ ॥**

**इति प्रथमाष्टके अष्टमाध्याये तृतीयो वर्गः ॥**

**उदीर्ध्वं जीवो असुर्न आगादप प्रागात् तम आ ज्योतिरेति ।**
**आरैक् पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥ १६ ॥**

उत् । ईर्ध्वम् । जीवः । असुः । नः । आ । अगात् । अप । प्र । अगात् । तमः । आ । ज्योतिः । एति ।
अरैक् । पन्थाम् । यातवे । सूर्याय । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥ १६ ॥

**स्कन्द०** उत् ईर्ध्वम्[८] **ईर गतौ**। **ऋत्विजां वायं प्रैषः, पुत्रपौत्रप्रभृतीनां वा । ऊर्ध्वं गच्छत यष्टुं स्तोतुं च**। **शयनेभ्य उत्तिष्ठतेत्यर्थः**। **किं कारणम्**। **उच्यते**। **यस्मात्** जीवः **जीवितस्थानीया** असुः 'असुरिति प्राणनाम' (या ३,८)। **प्राणस्थानीया च**। नः **अस्माकम्** आ अगात् **आ इत्येष उदित्येतस्य स्थाने**। **उद्गता**। **का**। **प्रकृतत्वादुषाः**। **यस्माज्जीवितात् प्राणेभ्यश्च प्रियतमाऽस्माकमुषा उदितेत्यर्थः**। **उद्गतायां च तस्याम्** अप प्र अगात् तमः **अप प्रेति व्यत्यासेनोपसर्गौ योजयितव्यौ**। **अगादित्यपि च वर्तमानकाले लुङ्प्रत्ययो द्रष्टव्यः**। 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ )

---

१-१. नास्ति अ. २. चात्य° अ. ३. नास्ति अ. ४. जायमाना वि[३] अ[२]. ५. आगतानां वि[३] अ[२]. ६. नास्ति कु. ७. नास्ति वि[३] अ[२]. ८. नास्ति मूको.

इति। प्रकर्षेणापगच्छति शार्वरं तमः। आ ज्योतिरेति ज्योतिश्चौषसः प्रकाशाख्यं सर्वत्र [१]आ एति[१] आगच्छति[२]। सर्वं व्याप्नोतीत्यर्थः। एत्य च अरैक् पन्थाम् रेचयति पन्थानम्। यातवे गन्तुम्। सूर्याय सूर्यार्थम्। सूर्यो गमिष्यतीत्येवमर्थमित्यर्थः। केन पुनर्व्यापारेण औषसं ज्योतिः सूर्यस्य पन्थानं रेचयति। आत्मापगमनेन। कुत एतत्। औषसस्य ज्योतिषोऽन्ते सूर्योदयदर्शनात्। यस्माच्च अगन्म गताः प्राप्ता वयम्। क्व। उच्यते। यत्र व्यवस्थिताः अध्वर्य्वादय ऋत्विजः प्रतिरन्ते वसतीवर्येकधनादिभिः प्रवर्धयन्ति आयुः अन्ननामैतत्। सोमादि-हविर्लक्षणमन्नम्। यस्मादुषा उदिता वयमपि यज्ञं कर्तुं प्रवृत्ता इत्यर्थः ॥ १६ ॥

**वेङ्कट०** उद्गच्छत[३] शयनात्। जीवयिता प्राणः अस्मान् आगतः। [४]अप प्र अगात् च नैशम् तमः[४]। ज्योतिः च आगच्छति। [५]सूर्यस्य गमनार्थम्[५] उषाः पन्थानम्[६] अरिचत्। गच्छामः यत्र वर्धयन्ति अन्नम्[७] उदाराः[८] ॥ १६ ॥

**मुद्गल०** हे मनुष्याः! उत् ऊर्ध्वम् शयनं परित्यज्य उद्गच्छत। नः अस्माकम् असुः शरीरस्य प्रेरयिता जीवः जीवात्मा आ अगात् आगतवान्। तमः अप प्र अगात् अपक्रान्तम्। उषसः प्रकाशे सति सर्वजीवनव्यापारयोगः। तस्मात् परमात्मरूपतया स च जीवः तदेव ज्योतिः आ एति आगच्छति। सूर्याय सूर्यस्य पन्थाम् मार्गम् अरैक् विविक्तीकरोति यातवे गमनाय। तस्मिन्देशे अगन्म गच्छामः यत्र यस्मिन्देशे आयुः अन्नम् प्रतिरन्ते प्रपूर्वस्तिरतिर्वर्धनार्थः। उदारा दानेन प्रवर्धयन्ति ॥ १६ ॥

स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः।
अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत् ॥ १७ ॥

स्यूमना। वाचः। उत्। इयर्ति। वह्निः। स्तवानः। रेभः। उषसः। विऽभातीः।
अद्य। तत्। उच्छ। गृणते। मघोनि। अस्मे इति। आयुः। नि। दिदीहि। प्रजाऽवत् ॥ १७ ॥

**स्कन्द०** अद्या तदुच्छेति तच्छब्दश्रुतेर्यच्छब्दोऽत्राध्याहर्तव्यः[९]। यस्मात् स्यूमना स्यूमशब्दोऽत्र सुखवचनः। सुखेनाक्लेशेन। स्तुतिलक्षणाः वाचः। उत् इयर्ति ऋ गतौ। सामर्थ्याच्चात्रान्तर्णीत-ण्यर्थः। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण व्यपदेशः। होत्राख्य ऋत्विक् कुत्सनामा वा ऋषिः उद्गमयति। उच्चारयतीत्यर्थः। बलवान् वह्निः उच्यते वहनसमर्थत्वात्। स्तवानः स्तुवन्। रेभः स्तोतृनामैतत् ( तु. निघ ३,१६ )। स्तोता च। किं स्तुवन्[१०]। उच्यते। यस्मात् उषसो विभातीः विविधं दीप्यमानाः। अद्य तत् उच्छ तदिति [१]पञ्चम्या लुग् द्रष्टव्यः[१]। तस्मादद्य व्युच्छ विविधं तमांसि विवासय। गृणते स्तुवतो[११] ममार्थाय। हे मघोनि! धनवति!। किञ्च अस्मे अस्मभ्यम्। आयुः चिरंजीवित्वमन्नं वा नि दिदीहि ददातेरेतद् रूपम्[१२]। नियमेन देहि। प्रजावत् प्रजासहितम् ॥ १७ ॥

---

१-१. नास्ति अ. २. गच्छ॰ अ. ३. उद्गच्छन्तं वि[२] अ[२]. ४-४. अवप्रागाच्छनैः शमः वि[२] अ[२]. ५-५. सूर्यगम॰ वि[२] अ[२]. ६. अध्वानं वि[२] अ[२]. ७. नास्ति वि[२] अ[२]. ८. उदारात् वि[२] अ[२]. ९. ॰च्छब्दोध्याहार्यः अ. १०. कुर्वन् अ. ११. ॰वते अ. १२. नास्ति अ.

**वेङ्कट०** अनुस्यूताः स्तुतिवाचः प्रेरयति[1] होता। स्तुवानः[2] स्तोता व्युच्छन्तीः उषसः। अद्य तथा सति व्युच्छ स्तुवते मह्यम्। उषः! अस्मासु आयुः[3] नितरां दीपय प्रजायुक्तम् इति[4] ॥ १७ ॥

**मुद्गल०** वह्निः स्तोतॄणां वोढा रेभः स्तोता उषसः विभातीः तमसोऽपनोदनेन प्रकाशमाना उषोदेवताः स्तुवानः स्तुवन् वाचः [5]वेदरूपायाः सम्बन्धीनि[5] स्यूमना स्यूमानि अनुस्यूतानि सन्ततानि उक्थानि उत् इयर्ति उद्गमयति उच्चारयति। अतो हे मघोनि! मघवत्युषः! अद्य अस्मिन् समये गृणते स्तुवते तस्मै पुरुषाय तत् उच्छ दृष्टिनिरोधकतया प्रसिद्धं नैशं तमः विवासय वर्जय। अस्मे अस्मभ्यं च प्रजावत् प्रजाभिः पुत्रपौत्रादिभिर्युक्तम् आयुः अन्नं नि दिदीहि नितरां प्रकाशय। प्रयच्छेत्यर्थः ॥ १७ ॥

## या गोम॑तीरु॒षस॒: सर्व॑वीरा व्यु॒च्छन्ति॑ दा॒शुषे॒ मर्त्या॑य ।
## वा॒योरि॑व सू॒नृता॑नामुद॒र्के ता अ॑श्व॒दा अ॑श्नवत् सोम॒सुत्वा॑ ॥ १८ ॥

याः । गोऽम॑तीः । उ॒षस॑: । सर्व॑ऽवीराः । वि॒ऽउ॒च्छन्ति॑ । दा॒शुषे॑ । मर्त्या॑य ।
वा॒योःऽइ॑व । सू॒नृता॑नाम् । उ॒त्ऽअ॒र्के । ताः । अ॒श्व॒ऽदाः । अ॒श्न॒व॒त् । सो॒म॒ऽसुत्वा॑ ॥ १८ ॥

**स्कन्द०** याः गोमतीः अरुणीभिः स्वाभिर्गोभिः गोमत्यः उषसः सर्ववीराः सर्वैर्वीरैरुपेताः। अखण्डिताशेषपरिजनपुत्रपौत्रादिका[6] इत्यर्थः। व्युच्छन्ति विविधं तमांसि विवासयन्ति। दाशुषे मर्त्याय दाश्वानिति यजमाननाम शाकपूणिना पठितम्। [7]तादर्थ्ये चोभयत्र चतुर्थी। यजमानस्य मनुष्यस्यार्थाय। कस्यां[7] वेलायाम्। उच्यते। वायोरिव सूनृतानाम् उदर्के[8] सूनृतेत्यपठितमपि वाङ्नाम। उदर्क इत्युद्भव उच्यते। [9]यादृग् वायोः प्रवहतः उद्भवः तादृशि सूनृतानां काकादिवाचाम् उद्भवे। प्रभातवेलायामित्यर्थः। तदा हि काकादिवाचामुद्भवः[9]। ताः अश्वदाः स्तोतृभ्यो यष्टृभ्यश्चाश्वान् दात्रीः। अश्नवत् व्याप्नोति। केन। सामर्थ्यात् स्तुतिभिर्हविर्भिश्च। स्तौति यजति चेत्यर्थः। सोमसुत्वा सोमाभिषवकारी यजमानः। अथवा दक्षिणादाने अश्वस्यापि[10] दानविधानाद् अश्वदा इति सोमसुत्वनो विशेषणं नोषसाम्। अश्वस्य दाता यजमान इति ॥ १८ ॥

**वेङ्कट०** याः गोमत्यः उषसः सर्वैः वीरैः युक्ताः वि उच्छन्ति यजमानाय मनुष्याय। महावातस्य इव उपस्तुतीनाम् अन्ते ताः अश्वदाः उषसः व्याप्नोति यजमानः ॥ १८ ॥

**मुद्गल०** दाशुषे हवींषि दत्तवते मर्त्याय मनुष्याय यजमानाय गोमतीः गोमत्यः बहुभिर्गोभिर्युक्ताः सर्ववीराः सर्वैः सरणसमर्थैः शूरैर्युक्ताः याः उषसः वि उच्छन्ति तमो वर्जयन्ति वायोरिव वायुवत् शीघ्रं प्रवर्तमानानाम् सूनृतानाम् स्तुतिरूपाणां वाचाम् उदर्के समाप्तौ अश्वदाः अश्वानां दात्रीः ताः उषसः सोमसुत्वा सोमानाम् अभिषोता यजमानः अश्नवत् व्याप्नोतु ॥ १८ ॥

---

१. °ति इति वि[२] अ[२]. २. स्तवानः कु; स्तुन्वानः वि[२] अ[१]. ३. यत् वि[२] अ[२]. ४. नास्ति कु. ५-५. देवरूपायाः सम्बन्धिनी मूको. ६ °परिजनपुत्र इत्यर्थः अ. ७-७. नास्ति अ. ८. तु. वैप १,९०५ e. ९-९. यादृग्वायोः ··· उद्भवः ··· कादिवाचामुद्भवे। प्रभातवेलायामित्यर्थ। तदा ··· कादिवाचामुद्भवः (°चामुद्भवः अ.) अ कु. १०. नास्ति अ. ११. °च्छन्ती वि[२] अ[२]. १२-१२. नेता वि[२] अ[२].

माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि ।
प्रशस्तिकृद् ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारे ॥ १९ ॥

माता । देवानाम् । अदितेः । अनीकम् । यज्ञस्य । केतुः । बृहती । वि । भाहि ।
प्रशस्तिऽकृत् । ब्रह्मणे । नः । वि । उच्छ । आ । नः । जने । जनय । विश्वऽवारे ॥ १९ ॥

**स्कन्द०** विभाहीति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । माता 'इत्यादीनि च नामन्त्रितानि[1] । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतया योज्यानि । या त्वम् माता । कस्य । देवानाम् देवशब्देन अत्र[2] आदित्या उच्यन्ते । तेषां हि माता उषाः । तत्[3] 'रुशद्वत्सा रुशती' ( ऋ १,११३,२ ) इत्यत्र[4] व्याख्यातम् । प्रतिमासं चादित्यभेदमङ्गीकृत्य बहुवचनम् । अदितेः अनीकम् अदितिशब्देनात्रादीनत्वात् समग्रज्योतिरुच्यते । अनीकशब्दोऽपि ब्राह्मणानीकं क्षत्रियानीकमिति प्रयोगदर्शनात् समूहवचनः । अदीनस्य समग्रस्य प्रकाशाख्यस्य ज्योतिषः समूहः । अथवा अनीकशब्दः खड्गमुखवचनः । इहाग्रत्वसामान्यादुषसि प्रयुज्यते । अदीनस्य समग्रस्याहर्लक्षणस्य ज्योतिषो मुखभूतेत्यर्थः । यज्ञस्य केतुः कित ज्ञाने इत्यस्य सामर्थ्यादन्तर्णीतण्यर्थस्य रूपम् । यज्ञस्य ज्ञापयित्री । प्रकाशयित्रीत्यर्थः । बृहती महती । तच्छब्द इदानीमध्याहर्तव्यः । सा त्वम् वि भाहि विविधं दीप्यस्व । किञ्च या त्वम् प्रशस्तिकृत् प्रशस्तयः स्तुतय उच्यन्ते । तासां कर्त्री । उषसि ह्युदितायां स्तुतयः क्रियन्ते । तद्धेतुत्वात् सैव तत्र कर्त्रीति व्यपदिश्यते । ब्रह्मणे नः ब्रह्मणे इति तादर्थ्ये चतुर्थी । अस्माकं सम्बन्धिनः स्तुतिलक्षणस्य ब्रह्मणोऽर्थाय । वि उच्छ विविधं तमांसि विवासय । वयं स्तुतीः करिष्याम इत्येवमर्थं तमांस्यपनयेत्यर्थः । किञ्च आ नः जने जनय आ इत्येष उपेत्येतस्य स्थाने । जन इति लोक उच्यते । निर्धारणे च[5] सप्तमी । लोकस्य मध्ये । अस्मानुपजनय धनादिभिर्वर्धय । हे विश्ववारे! सर्वस्य वरणीये! ॥ १९ ॥

**वेङ्कट०** निर्मात्री देवानाम्, अतश्च देवमातुः अदितेः प्रत्यनीकम् इयम् भवति । सा त्वम् यज्ञस्य प्रज्ञापयित्री महती[5] व्युच्छ । स्तुतेः कर्त्री । उषसि हि वन्दिनः स्तुवन्ति देवान् मनुष्यान् च । सा त्वम् अस्माकम् [6]अपि स्तुतीः श्रोतुम् वि उच्छ । व्युष्टा च[7] अस्मान्[8] जने प्रादुर्भावय सर्वैः वरणीये! ॥ १९ ॥

**मुद्गल०** हे उषः! त्वम् देवानाम् माता जननी । उषसि सर्वे देवाः स्तुत्या प्रबोध्यन्ते । अतः सा तज्जननवत्युच्यते । अत एव अदितेः देवानां मातुः अनीकम् प्रत्यनीकम् । प्रतिस्पर्धिनी त्वमित्यर्थः । यज्ञस्य केतुः यज्ञस्य केतयित्री ज्ञापयित्री बृहती महती सती वि भाहि प्रकाशस्व । अपि च प्रशस्तिकृत् सम्यक् स्तुतमिति प्रशंसनं कुर्वती नः अस्मदीयाय ब्रह्मणे मन्त्ररूपाय स्तोत्राय वि उच्छ विवासय । तदनन्तरं हे विश्ववारे! सर्वैर्वरणीये उषः! नः अस्मान् जने जनपदे आ जनय आभिमुख्येन प्रादुर्भावय । अवस्थापयेत्यर्थः ॥ १९ ॥

---

१-१. °त्या ··· म° अ. २. नास्ति कु. ३. तद्वा अ. ४. नास्ति अ. ५. मही वि[2] ल..
६-६. अपि तु ल; अपि स्तोतुम् कु. ७. वा वि[3] अ[2]. ८. अस्माकम् वि[1] ल; अस्मात् वि[2] अ[3].

यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २० ॥

यत् । चित्रम् । अप्नः । उषसः । वहन्ति । ईजानाय । शशमानाय । भद्रम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ २० ॥

**स्कन्द०** यत् चित्रम् विचित्रं पूज्यं वा अप्नः कर्मनामैतत् ( तु. निघ २,१ ) । यागलक्षणं कर्म प्रति । उषसः वहन्ति प्रापयन्ति । किम् । सामर्थ्यादात्मानम् । गच्छन्तीत्यर्थः । किमर्थम् । ईजानाय शशमानाय शशमान इत्यर्चतिकर्मा ( तु. निघ ३,१४ ) । तादर्थ्ये चोभयत्र चतुर्थी । यजतः स्तुवतश्चार्थाय । कीदृशं कर्म प्रति । भद्रम् कल्याणम् । तन्नो मित्रः इत्याद्युक्तार्थम् ( ऋ १,९४,१६ द्र. ) ॥ २० ॥

**वेङ्कट०** यत् [१]पूज्यं कर्म[१] उषसः वहन्ति[२] ईजानाय भजते[३] च भजनीयम्, तत् त्वम् अस्मभ्यम् अपि आ वह इति[४] ॥ २० ॥

**मुद्गल०** चित्रम् चायनीयम् अप्नः आप्तव्यम् यत् धनम् उषसो वहन्ति आनयन्ति, ईजानाय हविर्भिरिष्टवते शशमानाय स्तुतिभिः सम्भजमानाय पुरुषाय भद्रम् भजनीयम् तद्भवतीति शेषः । यद्नेन सूक्तेन प्रार्थितं तत् मित्रादयः षड् देवताः ममहन्ताम् पूजितं कुर्वन्तु ॥ २० ॥

इति प्रथमाष्टके अष्टमाध्याये चतुर्थो वर्गः ।

## [ ११४ ]

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ १ ॥

इमाः । रुद्राय । तवसे । कपर्दिने । क्षयत्ऽवीराय । प्र । भरामहे । मतीः ।
यथा । शम् । असत् । द्विऽपदे । चतुःऽपदे । विश्वम् । पुष्टम् । ग्रामे । अस्मिन् । अनातुरम् ॥१॥

**स्कन्द०** 'रौद्रम्' ( बृदे ३, ३९ ) । रुद्रदेवत्यमेतत् सूक्तम् । इमाः रुद्राय तवसे इति तवश्शब्दोऽत्र बलवचनः । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । कपर्दिने शिरसि चूडा कपर्द उच्यते । तद्वान् कपर्दी । क्षयद्वीराय इति क्षि निवासगत्योरित्यस्य क्षियतेर्वा गतिकर्मणो रूपम् । शुद्धोऽपि चात्र सामर्थ्यादभिपूर्वार्थे द्रष्टव्यः[५] । वीराणामपि शत्रूणामभिगन्ता क्षयद्वीरः । षष्ठीसमासे छान्दसः पूर्वनिपातः । अथवा क्षयतिः निवासार्थ एव । आत्मीयानां वीराणामभिप्रेतेषु निवासयिता क्षयद्वीरः । सर्वत्र च तादर्थ्ये चतुर्थी[६] । इमा रुद्रस्य बलवतश्चूडावतोऽपि वीराणामपि शत्रूणामभिगन्तुः[७] स्वेषां वा वीराणामभिप्रेतेषु स्थानेषु निवासयितुरर्थाय प्र भरामहे । हरतेरिदं रूपम् ।

---

१-१. पूज्यकर्म वि[२] अ[२]. २. वहन्ती कु अ[१]. ३. नास्ति कु. ४. नास्ति वि[१] अ[२].
५. °व्यम् कु. ६. नास्ति अ. ७. ग·तुं अ.

प्रहरामः प्रापयामः। रुद्रं स्तोतुमुच्चारयाम इत्यर्थः। मतीः 'मन्यते' ( निघ ३,१४ ) इत्यर्चतिकर्मा। स्तुतीः। कथञ्च पुनरुच्चारयामः। यथा सुस्तुते रुद्रे द्विपदे चतुष्पदे चास्मदीयाय[1] शम् सुखम् असत् भवति। विश्वम् पुष्टम् सर्वञ्च पुष्टं भवति ग्रामे अस्मिन् अस्मदीये। अनातुरम् अनामयञ्च ॥ १ ॥

**वेङ्कट०** इमाः स्तुतीर्वयम्[2] रुद्राय वृद्धाय जटिने क्षपितवीराय[3] कतुम् [4]प्र भरामहे[4]। यथा सुखं भवति द्विपदे चतुष्पदे च, विश्वम् च पुष्टम् अस्मिन् ग्रामे[5] अरोगम् ॥ १ ॥

**मुद्गल०** 'इमा रुद्राय' इत्येकादशर्चं नवमं सूक्तम्। [6]कुत्स ऋषिः[6]। दशम्येकादश्यौ त्रिष्टुभौ। शिष्टाः जगत्यः। रुद्रो देवता।

रुद्राय रोदयति सर्वमन्तकाले इति रुद्रः, तस्मै रुद्राय मतीः मननीयाः इमाः स्तुतीः प्र भरामहे प्रकर्षेण निष्पादयामः। कीदृशाय। तवसे प्रवृद्धाय कपर्दिने जटिलाय क्षयद्वीराय क्षयन्तो विनश्यन्तो वीरा यस्मिन् तादृशाय। यथा येन प्रकारेण शम् शमनं रोगाणाम् उपशमनम् द्विपदे अस्मदीयाय मनुष्याय चतुष्पदे गवाश्वप्रभृतये च असत् भवेत्। तेन प्रकारेण स्तुतीः कुर्म इत्यर्थः। अतः अस्मिन् अस्मदीये ग्रामे वर्तमानम् विश्वम् प्राणिजातम् अनातुरम् आतुरा रुग्णास्तै रहितं सत् पुष्टम् प्रवृद्धं भवतु ॥ १ ॥

मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ २ ॥

मृळ। नः। रुद्र। उत। नः। मयः। कृधि। क्षयत्ऽवीराय। नमसा। विधेम। ते।
यत्। शम्। च। योः। च। मनुः। आऽयेजे। पिता। तत्। अश्याम। तव। रुद्र। प्रऽनीतिषु ॥

**स्कन्द०** [7]मृळ सुखय नः षष्ठ्यन्तमेतत्। तच्छ्रुतेश्च योग्यपदाध्याहारः। अस्माकं †सम्बन्धिनः पुत्रपौत्रादीन् नः†[7] अस्माकमपि मयः कृधि सुखं कुरु। किञ्च क्षयद्वीराय नमसा [8]विधेम ते क्षयद्वीराय ते इत्युभयत्र द्वितीयार्थे चतुर्थी। क्षयद्वीरं त्वां नमसा हविर्लक्षणेनान्नेन विधेम नित्यं परिचरामेत्याशास्महे। किञ्च[8] यत् शम् च शमनञ्च। कस्य। सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम्। योः च यौतिः पृथग्भावे[9]। पृथग्भवनं च। असम्बद्धञ्चेत्यर्थः[10]। केन। सामर्थ्यादुत्पित्सुभिरनिष्टैः। मनुः आयेजे यजिरत्र यागपूर्विकायां तत्फलभूतायामवाप्तौ द्रष्टव्यः। तत्र यागेनावाप्तवानित्यर्थः[11]। पिता सर्वप्रजानाम्। वयमपि तत् एव अश्याम प्राप्नुयाम। ते तव हे रुद्र! प्रणीतिषु प्रकृष्टा नीतय उपदेशाः प्रणीतयः, तासु। सप्तमीनिर्देशात् वर्तमाना इति शेषः[12]। तृतीयार्थे वा सप्तमी। त्वदुपदेशैश्चेष्टमाना इत्यर्थः ॥ २ ॥

**वेङ्कट०** सुखय अस्मान् रुद्र!। अपि च अस्माकं सुखं कुरु। क्षपितवीराय[13] वयं तुभ्यम् अन्नेन

---

१. °दीर्यं अ. २. स्तुती वि[1] अ[2]. ३. क्षपित्रवी° वि[1] अ[2]; °तवीर्याय वि[2] अ[1]. ४-४. हवामहे वि[1,2] अ[1] कु ल लपं. ५. नास्ति वि[1] अ[2]. ६. नास्ति मै[2]. ७-७. नास्ति अ. †-† °न्धिन··· कु. ८-८. त्रुटितम् अ. ९. °भावः अ. १०. °र्थः। किंच अ. ११. °नाप्तवा° कु. १२. °वाक्यशेषः अ. १३. क्षपित्रवी° वि[1] अ[2].

परिचरामः । यत् सर्वेषाम् पिता मनुः[1] शम् च योः च[2] देवेभ्यः मनुष्येभ्यः[3] याचितवान् तत् वयं लभेमहि[4] तव रुद्र! प्रणयनेषु ॥ २ ॥

मुद्गल० हे रुद्र! नः अस्मभ्यमस्मदर्थम् मृळ त्वं सुखयिता भव। उत अपि च तदनन्तरम् नः अस्माकम् मयः सुखम् कृधि कुरु। वयं च क्षयद्वीराय क्षपितसर्ववीरं ते त्वाम् नमसा हविर्लक्षणेनान्नेन विधेम परिचरेम। अपि च पिता उत्पादकः मनुः स्वकीयाभ्यः प्रजाभ्यः शम् च रोगाणां शमनम् योः च भयानां यावनं च यत् एतत् द्वयम् आयेजे देवेभ्यः सकाशात् प्राप्य दत्तवान् हे रुद्र! तव प्रणीतिषु प्रकृष्टनयनेषु सत्सु तत् वयम् अश्याम व्याप्नुयाम ॥ २ ॥

अश्याम॑ ते सु॒म॒तिं दे॑वय॒ज्यया॑ क्ष॒यद्वी॑रस्य॒ तव॑ रुद्र मीढ्वः ।
सु॒म्ना॒यन्निद् विशो॑ अ॒स्माक॒मा च॒रारि॑ष्टवीरा जुहवाम ते ह॒विः ॥ ३ ॥

अ॒श्याम॑ । ते॒ । सु॒ऽम॒तिम् । दे॒व॒ऽय॒ज्यया॑ । क्ष॒यत्ऽवी॑रस्य । तव॑ । रु॒द्र॒ । मी॒ढ्व॒ः ।
सु॒म्न॒ऽयन् । इत् । विशः॑ । अ॒स्माक॑म् । आ । च॒र॒ । अरि॑ष्टऽवीराः । जु॒ह॒वा॒म॒ । ते॒ । ह॒विः ॥३॥

स्कन्द० अश्याम ते सुमतिम् शोभनाम् अनुग्रहरूपां बुद्धिम्। तवानुग्राह्याः बुद्धौ भवेमेत्यर्थः[5]। केन। उच्यते। देवयज्यया देवयागेन अविगुणेन यागेन। कस्य। उच्यते। क्षयद्वीरस्य तव हे रुद्र! मीढ्वः! मिह सेचने वृष्टिलक्षणेनोदकेन सेक्तः!। अथवा मीढशब्दस्य धननाम्नो मत्वन्तस्येदं छान्दसं रूपम्। धनवन्! इत्यर्थः। किञ्च सुम्नायन् 'सुम्नम्' ( निघ ३,६ ) इति सुखनाम। अस्मदीय-हविरुपयोगनिमित्तं सुखमिच्छन्। इत् शब्दस्तु पदपूरणः। विशः मनुष्यान् अस्माकम् सम्बन्धिनः पुत्रपौत्रादीन् ऋत्विजो वा प्रति। आ चर आगच्छ। आगतस्य अरिष्टवीराः अहिंसितपुत्रपौत्रा वयम् जुहवाम ते हविरित्याशास्महे ॥ ३ ॥

वेङ्कट० प्राप्नुयाम तव सुमतिम् यागेन क्षपितवीरस्य तव। रुद्र! सेक्तः![6] सुखम् इच्छन् अस्माकम् पुत्रपौत्रादीन् [7]आ चर[7]। अनुपहिंसितवीराः सन्तः वयं तुभ्यम् हविः जुहवाम ॥ ३ ॥

मुद्गल० हे मीढ्वः! सेक्तः कामाभिवर्षक! रुद्र! क्षयद्वीरस्य क्षपितप्रतिपक्षस्य तव सुमतिम् शोभनां कल्याणीम् अनुग्रहात्मिकां बुद्धिम् ते त्वत्सम्बन्धिनो वयम् देवयज्यया देवयागेन त्वद्देवत्येन यज्ञेन अश्याम प्राप्नुयाम। त्वं च अस्माकं विशः प्रजाः अभिलक्ष्य आ चर आगच्छ। किं कुर्वन्। सुम्नायन् इत् सुम्नं सुखम्, प्रजानां सुखमिच्छन्नेव। सुखप्रद एव भवेत्यर्थः। ततो वयम् अरिष्टवीराः अरिष्टा अहिंसिता वीराः प्रजाः येषां ते तथाभूताः सन्तः ते तुभ्यम् हविः चरुपुरोडाशादिकम् जुहवाम वयं चोदिते आधारे प्रक्षिपाम ॥ ३ ॥

त्वे॒षं व॒यं रु॒द्रं य॑ज्ञ॒साधं॑ व॒ङ्कुं क॒विमव॑से॒ नि ह्व॑यामहे ।
आ॒रे अ॒स्मद् दैव्यं॒ हेळो॑ अस्यतु सु॒म॒तिमिद् व॒यम॒स्या वृ॑णीमहे ॥ ४ ॥

---

१. नास्ति मूको. २. च मनुः मूको. ३. मनुष्यामा ल वि[१] [२] अ[१]; मनुष्याय वि[२] अ[२]; नास्ति कु. ४. °हि तर्हि वि[१] अ[२]. ५. भवामे* अ. ६. सेक्ता वि[१] अ[२]. ७-७. आभर कु.

त्वेषम् । वयम् । रुद्रम् । यज्ञऽसाधम् । वङ्कुम् । कविम् । अवसे । नि । ह्वयामहे ।
आरे । अस्मत् । दैव्यम् । हेळः । अस्यतु । सुऽमतिम् । इत् । वयम् । अस्य । आ । वृणीमहे ॥ ४ ॥

स्कन्द० त्वेषम् दीप्तम्[1] वयम् रुद्रम् यज्ञसाधम् यज्ञानां साधयितारम् वङ्कुम् वङ्कुशब्दोऽत्र वकि कौटिल्ये इत्यस्य वक्रगामिवचनः । 'वङ्कू वातस्य पर्णिना' ( ऋ ८,१,११ ) इति यथा । वक्रगामिनम् कविम् मेधाविनम् अवसे हविषा तर्पणाय पालनाय वा आत्मनः नि ह्वयामहे नियमेनाह्वयामः । अत एतत् ज्ञात्वा आरे दूरे अस्मत् अस्मत्तः दैव्यं[2] हेळः क्रोधनामैतत् (तु. निघ २,१३) । देवानां स्वभूतं क्रोधम् अस्यतु क्षिपतु । यथास्मभ्यं देवा न क्रुध्येयुस्तथा करोत्वित्यर्थः । किञ्च सुमतिम् इत् इच्छब्दोऽत्रै-वार्थे । शोभनामेवानुग्रहरूपां बुद्धिम् आत्मन उपरि वयम् अस्य रुद्रस्य आ वृणीमहे प्रार्थयामहे ॥ ४ ॥

वेङ्कट० दीप्तं वयम्[3] यज्ञस्य[4] साधयितारं कुटिलगमनम् कविम् अवसे अभिमुखम् आह्वयामः । सः दैव्यम् क्रोधम् अस्मत्तो दूरे क्षिपतु[5] । सुमतिम् एव [6]वयम् अस्य[6] प्रार्थयामहे ॥ ४ ॥

मुद्गल० अवसे रक्षणाय रुद्रम् महादेवम् वयम् नि ह्वयामहे नितराम् आह्वयामः । कीदृशम् । त्वेषम् दीप्तम् यज्ञसाधम् यज्ञस्य साधयितारम् । एष हि यज्ञं स्विष्टं[7] करोति । वङ्कुम् कुटिलगन्तारम् कविम् क्रान्तदर्शिनम् । स च रुद्रः दैव्यम् देवस्य द्योतमानस्य सम्बन्धिनम् हेळः क्रोधम् अस्मत् आरे अस्मत्तो दूरदेशे अस्यतु प्रेरयतु । अस्य महादेवस्य सुमतिम् इत् शोभनाम् अनुग्रहरूपां बुद्धिमेव वयम् आ वृणीमहे आभिमुख्येन सम्भजामहे ॥ ४ ॥

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।
हस्ते बिभ्रद् भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥ ५ ॥

दिवः । वराहम् । अरुषम् । कपर्दिनम् । त्वेषम् । रूपम् । नमसा । नि । ह्वयामहे ।
हस्ते । बिभ्रत् । भेषजा । वार्याणि । शर्म । वर्म । छर्दिः । अस्मभ्यम् । यंसत् ॥ ५ ॥

स्कन्द० दिवः द्युलोकात् वराहम्[8] वराहनामासुरः[9] तत्सदृशम् । अत्यन्तबलवन्तमित्यर्थः । अथवा 'वराहः' ( निघ १,१० ) इति मेघनाम । तत्सदृशम् । एकदेशसादृश्येन चैष समस्तसादृश्यव्यपदेशः । रुद्रस्य नीलत्वात् कण्ठो मेघसदृशः । मेघसदृशकण्ठमित्यर्थः । अथवा वराहः सूकर उच्यते । तदाकारम् । देवता हि माहाभाग्ययोगात् तं तमाकारं भजते । अत उपपन्नो रुद्रस्य वराहाकारव्यपदेशः । अरुषम् अरुषतिर्गतिकर्मा (तु. निघ २,१४) । गन्तारं शत्रून् यज्ञान्वा प्रति । कपर्दिनम् त्वेषम् रूपम् अन्तर्णीतमत्वर्थो रूपशब्दो द्रष्टव्यः । माहाभाग्ययोगादनेकप्रकारै रूपै रूपवन्तम् । नमसा नमस्कारेण । स्तुत्येत्यर्थः । अथवा नमो हविर्लक्षणमन्नम् । तेन निमित्तेन । हविरुपभोक्तुमित्यर्थः । नि ह्वयामहे नियमेन ह्वयामः । आहूतश्च सन्नागत्य हस्ते बिभ्रत् धारयन् । हस्तधारणेन चात्र[10] तदुत्तरकालभावि दानं लक्ष्यते ।

१. दीप्तिम् मूको. २. नास्ति अ. ३. नास्ति वि[1,2] अ[1] कु ल लपं. ४. यस्य वि[1] लपं; प्रज्ञस्य वि[2]. ५. क्षिपति वि[2] अ[2]. ६-६. अस्य वयम् वि[2] अ[1,2]. ७. विष्टम् मै[2]. ८. नास्ति कु. ९. °हनामानसुरम् अ. १०. च अ.

ददादित्यर्थः। किम्। उच्यते। भेषजा सर्वरोगोपशमनसमर्थान्यौषधानि। वार्याणि वरणीयानि। अत्यन्तोत्कृष्टानीत्यर्थः। शर्म अत्र सुखमुच्यते। वर्म अत्र कवचमुच्यते। शत्रुप्रयुक्तहिंसाप्रतिबन्धसमर्थं च कवचम्। छर्दिः गृहनामैतत् (तु. निघ ३,४)। गृहं च अस्मभ्यम् यंसत् प्रयच्छतु। भेषजानि च ददातु [१]सुखादीनि चेत्यर्थः[१] ॥५॥

**वेङ्कट०** दिवः वराहारम्[२] आरोचमानं [३]जटिलं दीप्तं[३] श्लाघमानम्[४] नमसा[५] अभिमुखम् आह्वयामः। स देवः हस्ते दधानो वरणीयानि भेषजानि सुखं रक्षां गृहं च अस्मभ्यम् प्रयच्छतु ॥ ५ ॥

**मुद्गल०** वराहम् वराहारम् उत्कृष्टभोजनम् अरुषम् आरोचमानम् कपर्दिनम् जटाभिर्युक्तम् त्वेषम् तेजसा दीप्यमानम् रूपम् निरूपणीयं वेदान्तैरधिगम्यम्। एवंभूतं रुद्रम् नमसा हविर्लक्षणेनान्नेन दिवः द्युलोकसकाशात् नि ह्वयामहे नितराम् आह्वयामः। स आहूतो रुद्रः हस्ते स्वकीये बाहौ वार्याणि सर्वैर्वरणीयानि भेषजा भैषज्यानि रोगशमनहेतुभूतानि बिभ्रत् धारयन् अस्मभ्यम् स्तोतृभ्यः शर्म आरोग्यलक्षणं सुखम् वर्म आयुधानां निवारकं कवचम् छर्दिः गृहं च यंसत् प्रयच्छतु ॥५॥

इति प्रथमाष्टके अष्टमाध्याये पञ्चमो वर्गः ॥

इ॒दं पि॒त्रे म॒रुता॑मुच्यते॒ वचः॑ स्वा॒दोः स्वादी॑यो रु॒द्राय॒ वर्ध॑नम् ।
रास्वा॑ च नो अमृत मर्त॒भोज॑नं॒ त्मने॑ तो॒काय॒ तन॑याय मृळ ॥ ६ ॥

इ॒दम् । पि॒त्रे । म॒रुता॑म् । उ॒च्य॒ते॒ । वचः॑ । स्वा॒दोः । स्वादी॑यः । रु॒द्राय॑ । वर्ध॑नम् ।
रास्व॑ । च॒ । नः॒ । अ॒मृ॒त॒ । म॒र्त॒ऽभोज॑नम् । त्मने॑ । तो॒काय॑ । तन॑याय । मृ॒ळ ॥ ६ ॥

**स्कन्द०** रास्व इति मध्यमपुरुषसंयोगाद् अमृत इति चामन्त्रणयोगात् [६]प्रत्यक्षकृतोऽयं मन्त्रः। इदं पित्रे मरुताम् पितृभूताय। उच्यते †वचः स्तुतिवचनं स्वादोः प्रीतिकरादपि स्वादीयः†[६] स्वादुतरम्। अत्यन्तं मनसः प्रीतिकरमित्यर्थः। कस्मै। रुद्राय। वर्धनम् वृद्धिहेतुः[७]। स्तुतिर्हि देवानां वृद्धिकरी। एतच्छ्रुत्वा रास्व च रातिर्दानकर्मा। चशब्दः समुच्चये। मृळेत्येतदपेक्षश्च समुच्चयः। [८]देहि। †नः अस्मभ्यम्† हे[८] अमृत! मर्तभोजनम् 'भोजनम्' (निघ २,१०) इति धननाम। मर्तोपभोग्यं धनम्। त्मने तोकाय तनयाय मृळ मृड सुखने। सुखं च कुरु। कस्मै। उच्यते। त्मने आत्मन एव मम तोकाय तनयाय। तोकं तनयमित्युभे अपत्यनामनी (तु. निघ २, २)। पुत्रपौत्रभेदेन त्वपुनरुक्ते। पुत्रेभ्यश्च पौत्रेभ्यश्च ॥ ६ ॥

**वेङ्कट०** मरुताम् पित्रे देवाय इदम् अत्यन्तं स्वादुभूतम् वर्धनम्[९] वचः उच्यते। देहि च अस्मभ्यं देव! मर्तानां भोजनम् अन्नम्। आत्मने पुत्राय पौत्राय[१०] च प्रसीद ॥ ६ ॥

**मुद्गल०** इदम् स्तुतिलक्षणम्[११] वचः मरुताम् एकोनपञ्चाशत्सङ्ख्याकानाम् पित्रे जनकाय रुद्राय ईश्वराय उच्यते उच्चार्यते। कीदृशम्। स्वादोः स्वादीयः रसवतो मधुघृतादेरपि स्वादुतरम् अतिशयेन

---

१-१. नास्ति अ. २. वराहं अ[१] कु. ३-३. °टिलदी° अ[१] वि[१]. ४. रूपम् अनेप्रकारैं रूपैर्वै रूपवन्तं श्लाघ° वि[१] अ[२]. ५. नास्ति वि[१] लपं. ६-६. प्रत्य......अ. †-† त्रुटितम् कु. ७. °हेतुं अ. ८-८. नास्ति अ. †-† त्रुटितम् मूको. ९. वर्धमानम् वि[१] अ[२]. १०. तत्पुत्राय वि[१] अ[२]; पुत्राय वि[२] अ[१]; नास्ति वि[१] कु लपं. ११. श्रुति° मूको.

हर्षजनकमित्यर्थः। वर्धनम् स्तुत्यस्य प्रवर्धकम्। स्तोत्रेण हि देवता हृष्टा सती वर्धते। रुद्रस्य च मरुतां पितृत्वम् एवम् आम्नायते—'पुरा इन्द्रः असुरान् जिगाय। तदानीं दितिः असुरमाता इन्द्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशात् गर्भं लेभे। इमं वृत्तान्तमवगच्छन् इन्द्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद। पुनरप्येकैकं सप्तखण्डमकरोत्। ते सर्वे गर्भैकदेशा योनेर्निर्गत्यारुदन्। एतस्मिन्नवसरे लीलार्थं गच्छन्तौ पार्वतीपरमेश्वराविमान् ददृशतुः। महेशं[1] प्रति पार्वती एवमवोचत्। इमे मांसखण्डा यथा प्रत्येकं पुत्राः सम्पद्यन्तामेवं त्वया कार्यं मयि चेत् प्रीतिरस्तीति। स च महेश्वरः तान् समानरूपान् समानवयसः समानालङ्कारान् पुत्रान् कृत्वा गौर्यै प्रददौ, तवेमे पुत्राः सन्तु' इति। अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयन्ते। रौद्रेषु च मरुतां पिता रुद्र इति। अपि च[2] हे अमृत! मरणरहित रुद्र! मर्तभोजनम् मर्तानां मनुष्याणां भोगपर्याप्तमन्नम् नः अस्मभ्यम् रास्व प्रयच्छ। तथा त्मने आत्मने। द्वितीयार्थे[2] चतुर्थी[2]। माम् तोकाय तोकं पुत्रम् तनयाय तनयं तत्पुत्रञ्च मृळ सुखय॥ ६॥

**मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम्।**
**मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः॥ ७॥**

मा। नः। म॒हान्त॑म्। उ॒त। मा। नः। अ॒र्भ॒कम्। मा। नः। उक्ष॑न्तम्। उ॒त। मा। नः। उ॒क्षि॒तम्।
मा। नः। व॒धीः। पि॒तर॑म्। मा। उ॒त। मा॒तर॑म्। मा। नः। प्रि॒याः। त॒न्वः॑। रु॒द्र॒। रि॒रि॒षः॥ ७॥

**स्कन्द०** मा नः इति षष्ठीश्रुतेर्योग्यतत्सम्बन्धिपदाध्याहारः। अस्माकं स्वभूतम् महान्तम्। उत मा नः अर्भकम् अल्पनामैतत् (तु. निघ ३,२१)। अल्पम्। बालमित्यर्थः। मा च नः उक्षन्तम् उक्ष सेचने। सिञ्चन्तम्। किम्। सामर्थ्याद्रेतः। रेतस्सेकसमर्थम्। युवानमित्यर्थः। उत मा नः उक्षितम् सिक्तं गर्भस्थम्। मा च नः वधीः पितरम्। मा उत मातरम्। मा च नः प्रियाः तन्वः एकवचनस्य स्थाने बहुवचनम्। प्रियं स्वमेव शरीरम्। हे रुद्र! रिरिषः हिंसीः॥ ७॥

**वेङ्कट०** मा[3] अस्माकं वृद्धम्, मा च बालम्, मा च रेतः सिञ्चन्तं[4] युवानम्, मा च निषिक्तम्, मा च नः वधीः पितरम्, मा च मातरम्, [5]मा च अस्माकम्[5] प्रियाणि अङ्गानि रुद्र![2] हिंसीः॥७॥

**मुद्गल०** हे रुद्र! नः अस्माकं मध्ये महान्तम् वृद्धम् मा वधीः मा हिंसीः। उत अपि च नः अस्माकम् अर्भकम् बालम् मा हिंसीः। तथा नः अस्माकं मध्ये उक्षन्तम् सेक्तारं मध्यवयस्कं युवानम् मा वधीः। उत अपि च नः अस्माकम् उक्षितम् गर्भरूपेण स्त्रीषु निषिक्तम् अपत्यम् मा वधीः। तथा नः अस्माकम् पितरम् जनकम् मा वधीः। उत अपि च मातरम् जननीम् मा वधीः। तथा नः अस्माकम् प्रियाः स्नेहविषयाः तन्वः शरीराणि हे रुद्र! मा रिरिषः मा हिंसीः॥ ७॥

---

१. महेश्वरां मै[1]. २. नास्ति मूको. ३. नास्ति वि[1] लपं. ४. सिञ्चतं वि[1] अ[1,2]. ५-५. नास्ति वि[1] अ[1]. ६. °नि मा वि[1] अ[1].

मा न॑स्तो॒के तन॑ये॒ मा न॒ आयौ॒ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः ।
वी॒रान् मा नो॑ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तः॒ सद॒मित् त्वा॑ हवामहे ॥ ८ ॥

मा । नः॒ । तो॒के । तन॑ये । मा । नः॒ । आयौ॑ । मा । नः॒ । गोषु॑ । मा । नः॒ । अश्वे॑षु । रि॒रि॒षः॒ ।
वी॒रान् । मा । नः॒ । रु॒द्र॒ । भा॒मि॒तः । व॒धीः॒ । ह॒विष्म॑न्तः । सद॑म् । इत् । त्वा॒ । ह॒वा॒म॒हे॒ ॥ ८ ॥

**स्कन्द०** तोके इत्यादौ द्वितीयार्थे सप्तमी । मा अस्माकं तोकं तनयं पुत्रांश्च पौत्रांश्च । मा च नः आयौ । आयव इति मनुष्यनामसु (तु. निघ २,३) पाठाद् आयुशब्दोऽत्र मनुष्यवचनः । परिचारकमनुष्यान्[1] । मा च नः गोषु गाः । मा च नः अश्वान् रिरिषः । वीरान् स्वभ्रातृप्रभृतीन् । मा नः हे रुद्र! भामितः । भाम क्रोधे । क्रुद्धः वधीः । कस्मात् । उच्यते । यस्मात् हविष्मन्तः हविषा संयुक्ताः । सदम् इत् सदंशब्दः सदेत्यस्य[2] पर्यायः । इच्छब्द एवार्थे । सदैव त्वा हवामहे । यागाय त्वां वयमाह्वयामः ॥ ८ ॥

**वेङ्कट०** मा अस्माकं पुत्रे तत्पुत्रे च, मा च अन्यस्मिन्[3] मदीये पुरुषे मा नः गोषु, मा च अस्माकम् अश्वेषु हिंसीः । मा चास्माकम् समर्थान् क्रुद्धः वधीः हविष्मन्तः[4] सदैव त्वां वयम्[5] हवामहे ॥ ८ ॥

**मुद्गल०** हे रुद्र! नः अस्माकं तोकादिविषये मा रिरिषः मा हिंसीः । तोकः पुत्रः तनयः तत्पुत्रः । आयुः पुत्रपौत्रव्यतिरिक्तो योऽस्मदीयो मनुष्यस्तस्मिन् गोषु पश्वादिषु अश्वेषु च मा रिरिषः हिंसां मा कृथाः । तथा हे रुद्र! वीरान् विक्रान्तान् शौर्योपेतान् नः अस्मदीयान् भामितः क्रुद्धः सन् मा वधीः मा हिंसीः । वयं च हविष्मन्तः हविर्भिर्युक्ताः सन्तः सदम् इत् सर्वदैव त्वा त्वां हवामहे आह्वयामहे ॥ ८ ॥

उप॑ ते॒ स्तोमा॑न् पशु॒पाइ॒वाक॑रं॒ रास्वा॑ पितर्मरुतां सु॒म्नम॒स्मे ।
भ॒द्रा हि ते॑ सुम॒तिर्मृ॑ळ॒यत्त॒माथा॑ व॒यमव॒ इत् ते॑ वृणीमहे ॥ ९ ॥

उप॑ । ते॒ । स्तोमा॑न् । प॒शु॒पाःऽइ॑व । आ । अ॒क॒र॒म् । रास्व॑ । पित॒रिति॑ । म॒रु॒ता॒म् । सु॒म्नम् । अ॒स्मे इति॑ ।
भ॒द्रा । हि । ते॒ । सु॒ऽम॒तिः । मृ॒ळ॒य॒त्ऽत॑मा । अथ॑ । व॒यम् । अवः॑ । इत् । ते॒ । वृ॒णी॒म॒हे॒ ॥ ९ ॥

**स्कन्द०** उप इत्युपसर्गः आ अकरम् इत्याख्यातेन सम्बन्धयितव्यः । ते तव स्तोमान् । पशुपाः इव यथा पशुपालः पशून् विक्षिप्तान्[2] सतः एकीकृत्य ग्रामस्यात्मनो वा समीपे करोति । एवमुपाकरं भवतः समीपे कृतवानहम् । भवत्सन्निधौ सर्वान् उच्चारितवानित्यर्थः । एतत् ज्ञात्वा रास्व देहि । हे पितः मरुताम्! सुम्नम् सुखमस्मभ्यम् । किञ्च भद्रा हि यस्मात्[2] भद्रा कल्याणी ते तव सुमतिः शोभनानुग्रहात्मिका[6] बुद्धिरस्मासु मृळयत्तमा अस्माकमतिशयेन सुखकरी । अथ एतस्मात् कारणात् वयम् अवः पालनम् । इत् शब्दस्तु पदपूरणः । ते तव सम्बन्धि वृणीमहे प्रार्थयामः । आत्मानं पाल्यमानमिच्छाम इत्यर्थः ॥ ९ ॥

---

१. परिचारककर्ममनुष्यवचनः कु. २. नास्ति अ. ३. अस्मान्यस्मिन् वि[१] अ[१]. ४. °ष्मतः वि[१] अ[१]. ५. नास्ति वि[१] अ[१] लपं. ६. नास्ति मूको.

**वेङ्कट०** यथा गोपः[1] प्रातः **समर्पितान् पशून् सायम् उपाकरोति**[2] **एवम् अहम् तुभ्यम्** स्तोमान् [3]उप आ अकरम्[3]। देहि मरुताम् पितः! **सुखम् अस्मभ्यम्**। **भजनीया** हि ते सुमतिः **सुखयितृतमा**। वयम् **तव रक्षणम् एव** वृणीमहे ॥ ९ ॥

**मुद्गल०** स्तोमान् **स्तुतिरूपान् मन्त्रान्** ते **तुभ्यम्** उप आ अकरम् **उपाकरोमि**। **दृष्टान्तः**। पशुपाः इव **यथा पशूनां** पालयिता **गोपः** प्रातःकाले **स्वस्मै समर्पितान् पशून् सायंकाले स्वामिभ्यः प्रत्यर्पयति, एवं त्वत्सकाशात् लब्धान् स्तुतिरूपान् मन्त्रान् स्तुतिसाधनतया तुभ्यं प्रत्यर्पयामीत्यर्थः**। **हे** मरुतां पितः! **मरुत्संज्ञानां देवानाम् उत्पादक** रुद्र! अस्मे **अस्मभ्यम्** सुम्नम् **सुखम्** रास्व **देहि**। **अपि च** ते त्वदीया सुमतिः **कल्याणी** बुद्धिः मृळयत्तमा **अतिशयेन सुखयितृतमा**। **अत एव** भद्रा **भजनीया** हि **यस्मादेवं तस्मात्** अथ **अनन्तरम्** वयं ते **त्वदीयम्** अवः **रक्षणम्** वृणीमहे **सम्भजामहे**। इत् **पूरणम्** ॥ ९ ॥

आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु।
मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ १० ॥

आरे। ते। गोऽघ्नम्। उत। पुरुषऽघ्नम्। क्षयत्ऽवीर। सुम्नम्। अस्मे इति। ते। अस्तु।
मृळ। च। नः। अधि। च। ब्रूहि। देव। अध। च। नः। शर्म। यच्छ। द्विऽबर्हाः ॥१०॥

**स्कन्द०** अस्त्वित्यर्धर्चान्तमाख्यातं प्रथमपादेऽप्यनुषक्तव्यम्। आरे अस्तु **दूरे असक्तो भवतु**। ते **तव**। **षष्ठीश्रुतेर्बलं रूपं वेति** शेषः। गोघ्नम् **गवां** हन्तृ। उत पुरुषघ्नम् **पुरुषाणां हन्तृ**[4]। हे क्षयद्वीर! **वीराणामपि शत्रूणामभिगन्तः! स्वेषां वा वीराणामभिप्रेतेषु स्थानेषु निवासयितः!**। सुम्नम् **यदेव बलं रूपं वा** [5]इति शेषः। ते[5] तव तदेव अस्मे **अस्तु**। **किञ्च** मृळ च **सुखय च** नः। अधि च **उपरि च** ब्रूहि देव! **आज्ञापय च यद्यदस्माभिः कर्तव्यमित्यर्थः**। अध च **अधशब्दोऽत्र अपिशब्दस्यार्थे**। अपि च नः शर्म **गृहम्** यच्छ **प्रयच्छ**। द्विबर्हाः **बृंहिर्वृध्यर्थः**। **द्वयोर्वर्धयिता यष्टुः स्तोतुश्च द्विबर्हाः**। **अथवा द्वयोः स्थानयोः प्रवृद्धो द्विबर्हाः**। **कतमयोर्द्वयोः**। **यज्ञसङ्ग्रामयोर्वा वीर्येण, मध्यमोत्तमयोर्वा रूपेण**। **रुद्रो हि मध्यमस्थानीयः सन् आप्रवृद्धो दिव्यादित्यात् शक्नोति प्रभूतान् रसान् प्रतिग्रहीतुम्**। **अप्यन्तरिक्षे आप्रवृद्धः शक्नोति च वर्षयितुम्**। **अत उपपन्नमस्य वृद्धत्वम्**। **तन्निबन्धनश्च द्विबर्हाः इति व्यपदेशः**। **प्रत्यक्षकृतश्चायं मन्त्रः, द्विबर्हा इति च नामन्त्रणम्**। **अतो यत्तच्छन्दाध्याहृत्यैकवाक्यता नेया**। **यस्त्वं द्विबर्हाः स त्वं शर्म यच्छेति** ॥ १० ॥

**वेङ्कट०** दूरे **तव गोहननम् अपि च पुरुषहननम्**। क्षयद्वीर! **सुखम् अस्मासु तव** अस्तु। **सुखय** च **अस्मान्**। अधि च **अस्मान्** ब्रूहि **देव**![6]। अध च **सुखम् प्रयच्छ अस्मभ्यम्, द्वयोः स्थानयोः परिवृढः** ॥ १० ॥

---

१. गोपाः ल.　२. उपाक° वि[1] अ[2].　३-३. उपकारं वि[1] लपं.　४. °न्तृ किं तर्हि अ.
५. नास्ति कु.　६. नास्ति ल वि[1,2] अ[1,2].

**मुद्गल०** हे क्षयद्वीर! क्षपितसर्वशत्रुजन[1] रुद्र! ते त्वदीयम् गोघ्नम् यत् गोहननम् उत अपि च पुरुषघ्नम् पुरुषहननं तदुभयम् आरे दूरेऽस्मत्तो विप्रकृष्टदेशे[2] भवतु। अस्मे अस्मासु ते त्वदीयम् सुम्नम् सुखम् अस्तु भवतु। अपि च नः अस्माकम् मृळ सुखसिद्ध्यर्थं प्रसन्नो भव। हे देव! द्योतमान रुद्र! नः अस्मान् अधि ब्रूहि च। अधिवचनं पक्षपातेन वचनम् 'ब्राह्मणायाधिब्रूयात्' (तै २,५,११,९) इति यथा। अथ च अथ अनन्तरं च द्विबर्हाः द्वयोः स्थानयोः पृथिव्याम् अन्तरिक्षे च परिवृढः स्वामी स त्वम् नः अस्मभ्यम् शर्म सुखम् यच्छ देहि ॥ १० ॥

अवो॑चाम॒ नमो॑ अस्मा अव॒स्यवः॑ शृ॒णोतु॑ नो॒ हवं॑ रु॒द्रो म॒रुत्वा॑न् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ११ ॥

अवो॑चाम । नमः॑ । अ॒स्मै । अ॒व॒स्यवः॑ । शृ॒णोतु॑ । नः॒ । हव॑म् । रु॒द्रः । म॒रुत्वा॑न् ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ११ ॥

**स्कन्द०** अवोचाम[3] उक्तवन्तो वयम् नमः नमस्काररूपं स्तुतिलक्षणं [4]वचः अस्मै[4] रुद्राय अवस्यवः पालनकामाः। एवं ज्ञात्वा शृणोतु नः हवं रुद्रः मरुत्वान् मरुद्भिः स्वसखैः सहितः। तत् नः मित्रः इत्याद्युक्तार्थम् (ऋ १,९४,१६ द्र.) ॥ ११ ॥

**वेङ्कट०** उक्तवन्तो वयम् नमस्कारम् अस्मै रक्षणेच्छवः। सोऽयमाह्वानम् शृणोतु रुद्रः मरुद्भिः सहितः ॥ ११ ॥

**मुद्गल०** अवस्यवः अवः अन्नम् इच्छन्तो वयम् अवोचाम एतत् सूक्तरूपं स्तोत्रमवादिष्म। अस्मै रुद्राय नमः नमस्कारोऽस्तु। मरुत्वान् मरुद्भिः स्वकीयैः पुत्रैर्युक्तः रुद्रः च नः अस्माकम् हवम् आह्वानम् शृणोतु स्वीकरोतु। यद् अस्माभिरुक्तम् नः अस्मदीयं तत्सर्वम् मित्रादयः षड् देवताः ममहन्ताम् पूजयन्तु। उत-शब्दोऽप्यर्थे ॥ ११ ॥

इति प्रथमाष्टके अष्टमाध्याये षष्ठो वर्गः ॥

## [ ११५ ]

चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः ।
आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षं॒ सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च ॥ १ ॥

चि॒त्रम् । दे॒वाना॑म् । उत् । अ॒गा॒त् । अनी॑कम् । चक्षुः॑ । मि॒त्रस्य॑ । वरु॑णस्य । अ॒ग्नेः ।
आ । अ॒प्राः॒ । द्यावा॑पृथि॒वी इति॑ । अ॒न्तरि॑क्षम् । सूर्यः॑ । आ॒त्मा । जग॑तः । त॒स्थुषः॑ । च॒ ॥ १ ॥

**स्कन्द०** 'अथ सौर्यमुत्तरम्'। चित्रम्[1] विचित्रं पूज्यं वा ज्योतिः उत् अगात् उदितम्। किंरूपम्। उच्यते।

---

१. क्षयित॰ मूको. २. ॰कृष्टे देशे मै². ३. नास्ति मूको. ४-४. नास्ति भ.

देवानाम् रश्मीनाम् अनीकम् समूहम् । रश्मिसमूहरूपमित्यर्थः[1] । चक्षुः चक्षुःस्थानीयञ्च मित्रस्य वरुणस्य अग्नेः । मित्रादिग्रहणं[2] चात्र प्रदर्शनार्थं द्रष्टव्यम् । देवानां मनुष्याणामन्येषाञ्च प्राणिनामित्यर्थः । उद्गस्य च आ अप्राः प्रा पूरणे । आपूरयति द्यावापृथिवी च अन्तरिक्षम् च । केन । सामर्थ्याद्रश्मिभिः । कतमदिदम् ईदृशं ज्योतिः । उच्यते । योऽयम् सूर्यः[3] आत्मा जगतः तस्थुषः च जङ्गमस्य स्थावरस्य च आत्मभूतः सर्वानुप्रवेशित्वात् ॥ १ ॥

**वेङ्कट०** चायनीयम् देवानाम् उत् अगात् अनीकम् सङ्घः[4] । आदित्ये हि सर्वे देवा वसन्ति । तदिदम् मित्रस्य वरुणस्य अग्नेः प्रकाशकम्[5] । अपि वा चक्षुर्भूतम् । आपूरयत्[6] द्यावापृथिव्यौ [7]च अन्तरिक्षम् च महत्त्वेन । सूर्यः आत्मा जङ्गमस्य स्थावरस्य च[7] जीवभूतः ॥ १ ॥

**मुद्गल०** 'चित्रम्' इति षडृचं दशमं सूक्तम्[8] । कुत्स ऋषिः[8] । त्रिष्टुप् छन्दः[8] । सूर्यो देवता[8] ।

देवानाम् दीव्यन्तीति देवा रश्मयः तेषाम् अनीकम् समूहरूपम् चित्रम् आश्चर्यकरं सूर्यस्य मण्डलम् उद् अगात् उदयाचलं प्राप्तमासीत् । कीदृशम् । मित्रस्य वरुणस्य अग्नेः च । उपलक्षणमेतत् । एतदुपलक्षितानां जगताम् चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा । उदयं प्राप्य च द्यावापृथिवी दिवं पृथिवीम् अन्तरिक्षम् च आ अप्राः स्वकीयेन तेजसा समन्ताद् अपूरयत् । ईदृग्भूतो मण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा स्वरूपभूतः । स हि सर्वस्य स्थावरजङ्गमात्मकस्य वर्गस्य कारणम् । कारणात् कार्यं नातिरिच्यते ॥ १ ॥

**सूर्यो॑ दे॒वीमु॒षसं॒ रोच॑माना॒ं मर्यो॒ न योषा॑म॒भ्येति प॒श्चात् ।**
**यत्रा॒ नरो॑ देव॒यन्तो॑ यु॒गानि॑ वितन्व॒ते प्रति॑ भ॒द्राय॑ भ॒द्रम् ॥ २ ॥**

सूर्यः॑ । दे॒वीम् । उ॒षस॑म् । रोच॑मानाम् । मर्यः॑ । न । योषा॑म् । अ॒भि । ए॒ति । प॒श्चात् ।
यत्र॑ । नरः॑ । दे॒व॒ऽयन्तः॑ । यु॒गानि॑ । वि॒ऽत॒न्व॒ते । प्रति॑ । भ॒द्राय॑ । भ॒द्रम् ॥ २ ॥

**स्कन्द०** सूर्यः देवीम् उषसम् रोचमानाम् दीप्यमानाम् । मर्यः न योषाम् यथा कश्चित् मनुष्यः कांचित् स्त्रियं यान्तीं पश्चादभिगच्छति, एवम् अभि एति अभिगच्छति पश्चात् । उषस्युदितायां पश्चादुदेतीत्यर्थः । कस्मिन् काले । उच्यते । यत्र नरः मनुष्याः देवयन्तः देवमिममेव सूर्यं यष्टुमिच्छन्तः । युगानि वितन्वते युगशब्दः कालवचनः सामर्थ्याच्चाग्निहोत्रकालेषु[9] वर्तते, प्रतीत्येतेन सम्बध्यते । अग्निहोत्रकालान् प्रति अग्निहोत्रकालेषु वितन्वते विततं कुर्वन्ति । भद्राय तत्फलाय भद्रम् अग्निहोत्रलक्षणं कर्म । यदा स्वेषु कालेषु मनुष्या अग्निहोत्रं जुह्वति तदा सूर्य उषसं पश्चादभ्येतीति समस्तार्थः ॥ २ ॥

**वेङ्कट०** सूर्यः देवीम् उषसम् दीप्यमानाम् मनुष्यः इव स्त्रियम् पश्चात् अभि गच्छति[11] । यस्याम् उषसि

---

१. °हस्वरूप° अ. २. मित्रग्र° अ. ३. सूर्योनाम अ. ४. सङ्घ कु. ५. प्रकाशम् वि[1] लपं. ६. आपूरय ल अ[1] वि[1,2]; °रयति ल शोधः. ७. नास्ति वि[3] अ[1]. ८. नास्ति मै[2]. ९. °षु उषोदयं ०युदित उदितइत्यत्रमादिष्विरत्यर्थः अ. १०. यथा मूको. ११. °च्छसि वि[1] अ[1]; अपि गच्छति वि[1] लपं.

मनुष्या देवान् कामयमाना अग्निहोत्रादीनि कर्माणि प्रति वितन्वते। भद्रम् च भद्राय कुर्वन्ति, यद्वा कर्षणार्थं युगानि युञ्जन्तीति[1] ॥ २ ॥

**मुद्गल॰** सूर्यः देवीम् दानादिगुणयुक्ताम् रोचमानाम् उषसम् पश्चात् अभि एति उषसः प्रादुर्भावानन्तरम् अभिलक्ष्य गच्छति। दृष्टान्तः। मर्यः न योषाम् यथा कश्चित् मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं सततम् अनुगच्छति तद्वत्। यत्र यस्याम् उषसि जातायाम् देवयन्तः द्योतमानं सूर्यं यष्टुमिच्छन्तः[2] नरः यज्ञस्य नेतारः यजमानाः युगानि कर्तव्यानि कर्माणि वितन्वते विस्तारयन्ति। ताम् उषसम् अनुगच्छन्तीत्यर्थः। एवंविधम् भद्रम् कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय। स्तुम इति शेषः ॥ २ ॥

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ ३ ॥

भद्राः। अश्वाः। हरितः। सूर्यस्य। चित्राः। एतऽग्वाः। अनुऽमाद्यासः।
नमस्यन्तः। दिवः। आ। पृष्ठम्। अस्थुः। परि। द्यावापृथिवी इति। यन्ति। सद्यः ॥ ३ ॥

**स्कन्द॰** भद्राः अश्वाः हयाः हरितः[3] हरितवर्णाः सूर्यस्य स्वभूताः चित्राः। एतग्वाः 'एतग्वाः' (तु. निघ १,१४) इति अश्वनामान्यत्र, इह त्वश्वेन पौनरुक्त्यप्रसङ्गात् क्रियाशब्दः। अतीतेष्वहस्सु गतस्यैव[4] मार्गस्य गन्तार इत्यर्थः। अनुमाद्यासः मदतिरर्चतिकर्मा (तु. निघ ३,१४)। अनुष्टुत्याः। नमस्यन्तः पूजयन्तः सूर्यम् दिवः पृष्ठम् उपरिभागम् आ अस्थुः आतिष्ठन्ति। आस्थाय च द्यावापृथिवी उभे अपि परि यन्ति परिगच्छन्ति[5] सद्यः समान एवाहनि ॥ ३ ॥

**वेङ्कट॰** भजनीयाः अश्वाः हरिन्नामधेयाः सूर्यस्य चित्रवर्णाः[6]। 'एतग्वाः' इति च अश्वनाम। स्तुत्या अनुमोदनीयाः प्रह्वीभवन्तः दिवः पृष्ठस्थानीयमादित्यम् आ तस्थुः। ततः द्यावापृथिव्यौ परिगच्छन्ति[7] सद्यः एव ॥ ३ ॥

**मुद्गल॰** भद्राः कल्याणाः। अश्वाः एतग्वाः इत्येतदुभयमश्वनाम। तत्रैकं क्रियापरं योजनीयम्। अश्वाः तुरगाः हरितः हर्तारः चित्राः विचित्रावयवाः अनुमाद्यासः अनुक्रमेण सर्वैः स्तुत्या मादनीयाः। एवंभूताः सूर्यस्य एतग्वाः अश्वाः नमस्यन्तः अस्माभिर्नमस्यमानाः सन्तः दिवः अन्तरिक्षस्य पृष्ठम् उपरिप्रदेशं पूर्वभागलक्षणम् आ अस्थुः आतिष्ठन्ति। आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यः तदानीमेव एकेनाह्ना परि यन्ति परितो गच्छन्ति। व्याप्नुवन्तीत्यर्थः ॥ ३ ॥

तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ४ ॥

---

१. °ञ्जन्ति कु. २. द्रष्टुमि° मै[2]. ३. नास्ति मूको. ४. नास्ति कु. ५. नास्ति अ.
६. °वर्णे वि[2] लपं ७. °च्छति कु.

तत् । सूर्यस्य । देवऽत्वम् । तत् । महिऽत्वम् । मध्या । कर्तोः । विऽततम् । सम् । जभार ।
यदा । इत् । अयुक्त । हरितः । सधऽस्थात् । आत् । रात्री । वासः । तनुते । सिमस्मै ॥ ४ ॥

**स्कन्द०** तत् सूर्यस्य देवत्वम् तत् च महित्वम् महत्त्वम् तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । यत् मध्या मध्ये कर्तोः कर्मनामैतत् (तु. निघ २,१) । कृष्यादेः कर्मणः । अपरिसमाप्तेष्वेव प्रारब्धेषु कर्मस्वित्यर्थः । [1]विततम् आत्मीयं[1] रश्मिजालम् सम् जभार क्षणेनैकेन संहरति । महत्त्वाद्धीदमत्यन्तदुरुपसंहारं नान्यः सूर्यात् क्षणेनैकेन[2] संहर्तुं शक्नोतीत्यर्थः । कदा पुनरुपसंहारः । उच्यते । यदा इत् अयुक्त इच्छब्दः पदपूरणः । यदास्तमयादनन्तरमुत्तरेण[3] मेरुं गन्तुं युङ्क्ते हरितः स्वानश्वान् । क्व । उच्यते । सधस्थात् सह तिष्ठन्ति यत्राश्वाः स[4] सधस्थो रथ इहाभिप्रेतः । सप्तम्यर्थे चैषा पञ्चमी । सर्वेषामश्वानां [5]सहस्थानभूते आत्मीये रथ इत्यर्थः[5] । आत् तदैव[6] च रात्री वासः वासश्शब्दोऽत्र क्रियाशब्दो वा[7] वस आच्छादन इत्यस्य वस्त्रवचनो वा । सामर्थ्याच्च कृष्णं वास आह नान्यत् । तत्सारूप्याच्च तमसि प्रयुज्यते । कृत्स्नस्य जगत आच्छादयितृ कृष्णवासस्सरूपं वा तमः तनुते विस्तारयति । सिमस्मै सिमेति सर्वपर्यायः । सप्तम्यर्थे चैषा चतुर्थी । सर्वस्मिन् जगति ॥ ४ ॥

**वेङ्कट०** तत् सूर्यस्य ऐश्वर्यम् तत्[8] महत्त्वं यत् मध्ये कर्मणः विततम् तत् कर्मास्तंयन्तं[9] सूर्यं दृष्ट्वा कर्मकरः[10] संहरति[11] । यदा एवायम् अश्वान् प्रातर्गमनाय रथे[12] नियोजयति तत्र नियुक्त्यनन्तरमेव रात्री[13] सर्वस्मै वासः[14] तनुते अहरुद्गमयति । यद्वा[15] रथाद् यदा अश्वान् विमोचयति अनन्तरम् एव रात्री वासःसदृशम्[16] अन्धकारं विकरोति[17] ॥ ४ ॥

**मुद्गल०** सूर्यस्य सर्वप्रेरकस्यादित्यस्य तत् देवत्वम् ईश्वरत्वम् महित्वम् माहात्म्यञ्च तत् एव । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यत् कर्तोः कर्मनामैतत् । प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणः मध्या मध्ये अपरिसमाप्त एव तस्मिन् कर्मणि विततम् विस्तीर्णं स्वकीयं रश्मिजालम् अस्तंगच्छन् सूर्यः सम् जभार अस्मात् लोकात् स्वात्मन्युपसंहरति । अपि च इत् अवधारणे । यदा इत् यस्मिन्नेव काले हरितः रसहरणशीलान् स्वरश्मीन् सधस्थात् सहस्थानाद् अस्मात् पार्थिवाल्लोकाद् आदाय अयुक्त अन्यत्र संयुक्तान् करोति । आत् अनन्तरमेव रात्री निशा वासः आच्छादयितृ तमः सिमस्मै सर्वस्मिन् लोके तनुते विस्तारयति ॥ ४ ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद् रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥ ५ ॥

तत् । मित्रस्य । वरुणस्य । अभिऽचक्षे । सूर्यः । रूपम् । कृणुते । द्योः । उपऽस्थे ।
अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति ॥५॥

---

१-१. नास्ति अ. २-२. क्षणेनैकेनापि कु. ३. मयानन्त° कु. ४. नास्ति अ. ५-५. स्थानभूत आत्मीयो रथो भवतीत्यर्थः अ. ६. तदेव अ. ७. नास्ति कु. ८. तं वि[1] अ[1]. ९. नास्ति वि[1] अ[1]. १०. कराः वि[1] लपं. ११. °रन्ति लपं वि[1]. १२. रथात् वि[1,2] अ[1,2] ल लपं. १३. रात्रिः कु. १४. वासं कु वि[1] अ[1]. १५. यदा वि[2]. १६. वसः वि[1] लपं. १७. करोति अ[1] कु; अपि क° वि[1]; निकरोति वि[1] अ[2].

स्कन्द० तच्छब्दाद् योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यदिदं प्रातः प्रागुदयाद् दीप्तिवर्जितं प्रकाशमात्रसम्बद्धम् तत् मित्रस्य वरुणस्य मित्रवरुणग्रहणमत्र प्रदर्शनार्थं द्रष्टव्यम्। देवानां मनुष्याणामन्येषां च प्राणिनाम्। अभिचक्षे अभिदर्शनाय। सूर्यः आत्मनः रूपम् कृणुते करोति। द्योः उपस्थे दिवः समीपे। द्युलोकस्य पूर्वस्मिन् प्रान्त इत्यर्थः। अनन्तम् अन्यत् अन्यत्तु मध्येऽह्नः अनन्तमत्यन्तमहत्। रुशत् अत्यन्तदीप्तम् अस्य सूर्यस्य पाजः बलनामैतत् (तु. निघ २,९)। सामर्थ्याच्चान्तर्णीतमत्वर्थम्[1]। बलवत्। अत्यन्ततीव्रत्वाद् दुरभिभवमित्यर्थः। कृष्णम् अन्यत् अपि तमोलक्षणमस्य स्वरूपम्। हरितः अश्वाः सम् भरन्ति मेरुमुत्तरेण सूर्यं नयन्तः प्रकल्पयन्ति। मेरुणा हि व्यवधीयमानः सूर्यस्तमः करोति। अतस्तस्यैव देशान्तरस्थस्य तद्रूपमिति व्यपदिश्यते। मेरुणा च व्यवधानं सूर्यस्याश्वाः कुर्वन्ति। अत [2]एतदुच्यते — कृष्णमन्यद्धरितः सं भरन्तीति[2] ॥ ५ ॥

वेङ्कट० तत्[3] मित्रावरुणयोः अहोरात्रयोः दर्शनाय[4] सूर्यः रूपम् करोति दिवः उपस्थे अन्तरिक्षे। तस्य [5]अपर्यन्तम् अन्यतरतः स्थितम्[5] श्वेतम् तेजः रश्मयः सम् भरन्ति कृष्णम् च अन्यत् अन्धकारम् इति। अह्नि श्वेतं तेजः सम्भरन्ति रात्रौ अन्धकारम्। 'द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान्' (तै ३,२,२,१) इत्यध्वर्यूणां मन्त्रः ॥ ५ ॥

मुद्गल० तत् तदानीम् उदयसमये मित्रस्य वरुणस्य एतदुभयोपलक्षितस्य सर्वस्य जगतः अभिचक्षे आभिमुख्येन प्रकाशनाय[6] द्योः नभसः उपस्थे उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपम् सर्वस्य निरूपकं प्रकाशकं तेजः कृणुते करोति। अपि च अस्य सूर्यस्य हरितः रसहरणशीला रश्मयो हरिद्वर्णाः अश्वा[6] वा अनन्तम् अवसानरहितं कृत्स्नस्य जगतो व्यापकम् रुशत् दीप्यमानं श्वेतवर्णम् पाजः अतिबलस्यापि नैशस्य[7] तमसो निवारणे समर्थम् अन्यत् तमसो विलक्षणम्[8] तेजः सम् भरन्ति अहनि स्वकीयागमनेन निष्पादयन्ति। तथा च कृष्णम् कृष्णवर्णम् अन्यत् तमः स्वकीयापगमनेन रात्रौ। अस्य रश्मयोऽप्येवं कुर्वन्ति, किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः ॥ ५ ॥

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ६ ॥

अद्य। देवाः। उत्ऽइता। सूर्यस्य। निः। अंहसः। पिपृत। निः। अवद्यात्।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ ६ ॥

स्कन्द० सौर्यत्वादस्या ऋचः देवा इह रश्मय उच्यन्ते, नान्ये। अद्य हे देवाः! सूर्यस्य रश्मयः! सूर्यस्य[9] उदिता सूर्योदयवेलायाम् एव[9] अंहसः पापादधर्माख्यात् निः पिपृत पृ पालनपूरणयोरित्यस्य छान्दसं ह्रस्वत्वम्। निश्चयेन पालयतास्मान्। न च केवलादंहसः। किं तर्हि। निः अवद्यात् अवद्यं गर्हितमुच्यते। अन्यस्मादपि गर्ह्यात् निश्चयेनैवास्मान् पालयत। तत् नः मित्रः इत्याद्युक्तार्थम् (ऋ १,९४,१६ द्र.) ॥ ६ ॥

---

१. °र्थ्याच्चेहान्तर्णीतमत्वर्थः अ. २-२. नास्ति अ. ३. तं वि[२] अ[२]. ४. नास्ति वि[२] अ[३]. ५-५. पर्यन्तमन्यतरस्थितं कु; °तरस्थितं अ[१,२] वि[२,१]. ६. नास्ति मूको. ७. नैशां मूको. ८. विचक्षणं मूको. ९. नास्ति कु.

**वेङ्कट०** अद्य देवाः! [1]सूर्यस्य उदये[1] सरस्मान्[2] दारिद्र्याच्च पापाच्च निःसारयत। तत् नः इति[3] ॥ ६ ॥

**मुद्गल०** हे देवाः! द्योतमानाः सूर्यरश्मयः! अद्य अस्मिन् काले सूर्यस्य आदित्यस्य उदिता उदितौ उदये सति इतस्ततः प्रसरन्तो यूयम् अस्मान् अंहसः पापात् अवद्यात्[4] गर्हणाच्च निः पिपृत निष्कृष्य पालयत। यदिदमस्माभिरुक्तम् नः अस्मदीयम् तत् मित्रादयः षड् देवताः ममहन्ताम् पूजयन्तु अनुमन्यन्ताम्। रक्षन्त्विति यावत्। उत समुच्चये ॥ ६ ॥

इति प्रथमाष्टके अष्टमाध्याये सप्तमो वर्गः ॥

इति प्रथमे मण्डले षोडशोऽनुवाकः ॥

## [ ११६ ]

**नास॑त्याभ्यां ब॒र्हिरि॑व॒ प्र वृ॑ञ्जे॒ स्तोमाँ॑ इयर्म्य॒भ्रिये॑व॒ वातः॑ ।**
**यावर्भ॑गाय विम॒दाय॑ जा॒यां से॑ना॒जुवा॑ न्यू॒हतू॒ रथे॑न ॥ १ ॥**

नास॑त्याभ्याम्। ब॒र्हिःऽइ॑व। प्र। वृ॒ञ्जे॒। स्तोमा॑न्। इ॒य॒र्मि॒। अ॒भ्रिया॑ऽइव। वातः॑।
यौ। अर्भ॑गाय। वि॒ऽम॒दाय॑। जा॒याम्। से॒ना॒ऽजुवा॑। नि॒ऽऊ॒हतुः॑। रथे॑न ॥ १ ॥

**स्कन्द०** 'कक्षीवान् दैर्घतमसो नासत्याभ्यामिति स्मृतः'। कक्षीवान्नाम दीर्घतमसः पुत्रः 'नासत्याभ्याम्' इत्यतः परम् ऋषिः स्मृतः। अत्र ऋषिः अयमा पारुच्छेपात्। 'पञ्चाश्विनानि सूक्तानि'। पञ्चैतानि सूक्तानि अश्विदेवत्यानि। नासत्याभ्याम्[5] अश्विनोरेको नासत्यनामा, दस्रनामापरः। साहचर्यात्त्वन्यतरनाम्नापि सर्वत्रोभयोरभिधानम्। न वा असत्यौ सत्यावेव नासत्यौ। तादर्थ्ये चात्र चतुर्थी। नासत्ययोरर्थाय। बर्हिरिव प्र वृञ्जे वृञ्जतिरिह संस्कारार्थः। यथा कश्चिद्वेदिस्तरणार्थं बर्हिः संस्करोति तद्वत् संस्करोमि स्तोमान्। संस्कृत्य च[2] इयर्मि इयर्तिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। गमयामि। उच्चारणेन प्रेरयामीत्यर्थः। कथम्। अभ्रियेव वातः 'समुद्राभ्राद् घः' (पा ४, ४, ११८) इत्येवमयं समूहे घप्रत्ययः। द्वितीयाबहुवचनस्य चाकारः। अभ्रसमूहानिव वातः। यौ किं कृतवन्तौ। उच्यते। यौ अर्भगाय विमदाय जायाम्[1] अर्भकमित्यल्पनाम (तु. या ३,२०)। तस्य पर्यायोऽर्भशब्दः। कै गै शब्दे। अग्न्यर्थं योऽल्पम् 'अग्निमीळे भुजां यविष्ठम्' (ऋ १०,२०,२) इति सूक्तद्वयमात्रमगायत्। अल्पाया वा भार्याया गन्ता सोऽर्भगः। तस्यार्भगस्य विमदस्य ऋषेरर्थाय। तस्यैव भार्याम्। सेनाजुवा सेनया सह गन्त्रा। स्वसेनापरिवृतेनेत्यर्थः। न्यूहतुः तद्गृहं प्रति न्यूढवन्तौ स्वेन रथेन। एतत् कुत्सेनाप्युक्तम्—'याभिः पत्नीः' (ऋ १,११२,१९) इति। इतिहासश्चास्यास्माभिः तत्रैव कथितः। सर्वत्र चात्र यत् कुत्सेन कथितं तस्येतिहासः[6] तत एवावगन्तव्यः[7] ॥ १ ॥

**वेङ्कट०** कक्षीवान् दैर्घतमस उशिक्प्रसूतः। यथा कश्चित् यज्ञार्थं बर्हिः प्रवृङ्क्ते[8] एवम् अहम् स्तोमान्

---

१-१. सूर्योद° वि[1] अ[1]. २. °स्मात् वि[1] अ[1]. ३. नास्ति कु. ४. निरव° मूको. ५. नास्ति मूको. ६. हासं मूको. ७. °गन्तव्यं कु. ८. °वृक्तः वि[1] अ[1,2].

अन्यूनातिरिक्तं सुष्ठु[1] करोमि। स्तोमान् प्रेरयामि अभ्रसमूहान् इव वातः। यौ बालाय[2] विमदाय ऊढभार्याय स्वगृहं प्रतिगच्छते[3] शत्रुभिः अभिभूताय तदीयाम्[4] भार्याम् सेनां [5]प्रति गच्छता[5] रथेन तद्गृहम् प्रति न्यूहतुः। 'याभिः पत्नीर्विमदाय' (ऋ १,११२,१९) इति कुत्सः ॥ १ ॥

मुद्गल० सप्तदशे अनुवाके पञ्च सूक्तानि। तत्र 'नासत्याभ्याम्' इति पञ्चविंशत्यृचं प्रथमं सूक्तम्[6]। कक्षीवान् ऋषिः[6]। त्रिष्टुप् छन्दः[6]। अश्विनौ देवता†[6]।

बर्हिरिव यथा कश्चित् यजमानः यागार्थं बर्हिः प्र वृञ्जे प्रकर्षेण अन्यूनातिरिक्तं यागाय पर्याप्तं दर्भं वृङ्क्ते छिनत्ति सम्पादयतीति यावत्। एवम् अहम् नासत्याभ्याम् अश्विभ्याम् स्तोमान् स्तुतीः इयर्मि सम्पादयामि। एतदेव विशदीक्रियते। अभ्रिया इव यथा अभ्रियाणि अभ्रेषु मेघेषु अवस्थितानि उदकानि वातः वायुः वर्षणार्थं बहुशः प्रेरयति एवमहमश्विभ्यां स्तोत्राणि इयर्मि बहुशः प्रेरयामि। कीदृशावश्विनौ। अर्भगाय बालाय स्वयंवरलब्धभार्याय विमदाय एतत्संज्ञाय राजर्षये मध्येमार्गं स्वयंवरार्थमागतैः ताम् अलभमानैरन्यैः नृपैः सह योद्धुमशक्नुवते तस्मै सेनाजुवा शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यौ अश्विनौ जायाम् भार्यां परैरनुक्रान्ताम् न्यूहतुः शत्रून् निहत्य तदीयं गृहं प्रापयामासतुः। ताभ्यामित्यर्थः ॥ १ ॥

वी॒ळु॒पत्म॑भिराशु॒हेम॑भिर्वा दे॒वानां॑ वा जू॒तिभि॒ः शाश॑दाना।
तद् रास॑भो नासत्या स॒हस्र॑मा॒जा य॒मस्य॑ प्र॒धने॑ जिगाय ॥ २ ॥

वी॒ळु॒पत्म॑ऽभिः। आ॒शु॒हेम॑ऽभिः। वा॒। दे॒वाना॑म्। वा॒। जू॒तिऽभि॑ः। शाश॑दाना।
तत्। रास॑भः। ना॒स॒त्या॒। स॒हस्र॑म्। आ॒जा। य॒मस्य॑। प्र॒ऽधने॑। जि॒गा॒य॒ ॥ २ ॥

स्कन्द० अत्र 'प्रजापतिर्वै सोमाय राज्ञे' (ऐब्रा ४, ७) इत्याद्यैतरेयब्राह्मणाधीतमिहाप्याक्रष्टव्यम्। प्रजापतिः सवितुः दुहितरं सूर्यां[7] सोमाय राज्ञे प्रायच्छत्। ये त्वन्ये देवास्तां वरयितुमागच्छन्, तेभ्यो विवाहादनन्तरमृक्सहस्रमददात्[8], यदेतदाश्विनं नाम। तस्मिन्देवा विवादमकुर्वन्, ममेदमस्तु ममेदमस्त्विति। तेऽब्रुवन्, आजिं धावाम, यो नो जेष्यति तस्येदं भविष्यतीति। तेऽग्नेर्गृहपतेरुपर्यादित्यं काष्ठां कृत्वाभ्यधावन्[9]। काष्ठा आज्यन्त उच्यते। अश्वतरीरथेनाग्नि-राजिमधावत्। गोभिररुणैरुषाः। हरिरथेनेन्द्रः। गर्दभरथेनाश्विनौ। तत्राश्विनावजयतामिति। तदेतदिहोच्यते वीळुपत्मभिः इत्यादिना — वीळु दृढं पत्म पतनं येषाम्। सन्ततमपि गच्छतां येषां गतिर्न[10] हीयत इत्यर्थः। ते वीळुपत्मानोऽश्विनोः स्वभूताः रासभाः। तैर्वीळुपत्मभिः। आशुहेमभिः वा हि गतौ। वाशब्दश्चात्र चार्थे। शीघ्रगामिभिश्च[11]। देवानाम् वा जूतिभिः अत्रापि वाशब्दश्चार्थ एव[12]। जूतिभिरिति जवतेर्गत्यर्थस्य करणे क्तिन् प्रत्ययः। देवानां च गमनैः। देवानामेव योग्या नान्यस्येत्यर्थः। तैः शाशदाना शदिर्गत्यर्थः। ताच्छील्ये चात्र शानच्। षष्ठीद्विवचनस्य चाकारः[13]। गमनशीलयोर्द्वयोः स्वभूतः रासभः गर्दभः रथे नियुक्तस्सन्

१. नास्ति वि[1,2] ल लपं. २. बलाय वि[1] अ[1] लपं. ३. °गच्छ वि[3] अ[3]; प्रति गच्छते कु. ४. ताम् मूको. ५-५. °च्छतां वि[3] अ[3]; प्रतिगच्छता ल. ६. नास्ति मै[2]. † °ते मूको. ७. सूर्याय अ. ८. °माददात् अ. ९. °मिधा° मूको. १०. हविर्न अ. ११. °गामिदच मूको. १२. नास्ति कु. १३. आकारः अ.

हे नासत्यौ! तत् सहस्रम् तच्छब्दश्रुतेरुक्तेतिहासार्थयुक्तो यच्छब्दोऽध्याहार्यः । यत् सूर्याविवाहानन्तरं प्रजापतिर्देवेभ्योऽददात् तत् सहस्रमृचाम्[1] । आजा अश्वादेर्धावनभूमिराजिरुच्यते, तस्याम् । यमस्य तमसां यमनाद्यम[2] आदित्य इहोच्यते, तस्य सम्बन्धिन्याम् । कः पुनरादित्यस्याजिसम्बन्धः । उच्यते । आदित्यस्तस्या अन्तः आसीत् । तथाहि ब्राह्मणम् । 'तेऽग्नेर्गृहपतेरुपर्यादित्यं [3]काष्ठामकुर्वत' (ऐब्रा ४, ७) इति । प्रधने सङ्ग्रामे । अग्न्यादिभिः सह[3] संस्पर्धायामित्यर्थः । जिगाय जितवान् ॥ २ ॥

वेङ्कट० दृढपतनैः[4] आशुगमनैः च देवानाम् च प्रोत्साहनैः गच्छतोः तत्[5] प्रजापतिना दत्तम् सहस्रम् आश्विनं नाम । भवतोः अश्वः रासभः नासत्यौ! बलस्य प्रख्यापने युद्धे जिगाय ॥ २ ॥

मुद्गल० वीळुपत्मभिः 'वीळु' (निघ २,१०) इति बलनाम । बलवदुत्पतनैः[6] आशुहेमभिः शीघ्रगमनैः । वा-द्वयं समुच्चये । हे नासत्या! अश्विनौ! एवंभूतैरश्वैः देवानाम् इन्द्रादीनाम् जूतिभिः प्रेरणैश्च शाशदाना शाशद्यमानयोरत्यर्थं प्रेर्यमाणयोर्युवयोर्वाहनभूतो यः रासभः प्रजापतिना दत्तः सः यमस्य वैवस्वतस्य प्रीतिकरे प्रधने प्रकीर्णधनोपेते आजा आजौ सङ्ग्रामे तत् शत्रूणाम् सहस्रम् जिगाय जितवान् । वैवस्वतो हि बहूनां मरणहेतुना सङ्ग्रामेण तुष्टो भवति ॥ २ ॥

तुग्रो॑ ह भु॒ज्युम॑श्विनोदमे॒घे र॒यिं न कश्चि॑न्ममृ॒वाँ अवा॑हाः ।
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भिरन्तरिक्ष॒प्रुद्भि॒रपो॑दकाभिः ॥ ३ ॥

तुग्रः॑ । ह॒ । भु॒ज्युम् । अ॒श्वि॒ना॒ । उ॒द॒ऽमे॒घे । र॒यिम् । न । कः । चि॒त् । म॒मृ॒ऽवान् । अव॑ । अ॒हाः॒ ।
तम् । ऊ॒ह॒थुः॒ । नौ॒भिः । आ॒त्म॒न्ऽवती॑भिः । अ॒न्त॒रि॒क्ष॒प्रुत्ऽभिः॑ । अप॑ऽउदकाभिः ॥ ३ ॥

स्कन्द० तुग्रः इति सोऽयमित्यभिसम्बन्धात् पितृशब्देनेदं पुत्रस्याभिधानम् । द्वितीयार्थे च प्रथमा । ह इति पदपूरणः[7] । तुग्रपुत्रम् भुज्युम् नाम राजानं हे अश्विनौ! उदमेघे मिह सेचने । उदकेन सिञ्चति सिच्यते वेति उदमेघः समुद्रस्तत्र । रयिम् न कः चित् ममृवान् यथा धनं कश्चित् म्रियमाणो जहाति एवम् अव अहाः । अवेत्येष परीत्येतस्य स्थाने । ओहाक् त्यागे । प्रथमपुरुष-बहुवचनस्य स्थाने मध्यमपुरुषैकवचनमेतत् । विपन्ननावं सन्तं परित्यक्तवन्तः । के । सखायः । कुत एतत् । 'उत त्यं भुज्युमश्विना' (ऋ ७,६८,७) इति मन्त्रान्तरे दर्शनात् । तम् युवाम् ऊहथुः तटं प्रापितवन्तौ । उत्तारितवन्तावित्यर्थः । केन । उच्यते । नौभिः । कीदृशीभिः । उच्यते । आत्मन्वतीभिः आत्मसंयुक्ताभिः । स्वयमेवेत्यर्थः । अन्तरिक्षप्रुद्भिः 'प्रवते' (निघ २,१४) इति गतिकर्मा । अन्तरिक्षगामिनीभिः । उदकमसंस्पृशन्तीभिरिव गच्छन्तीभिरित्यर्थः । अपोदकाभिः व्यपगतोदकाभिः । मनागप्युदकेनाभिद्यमानाभिरित्यर्थः । तदेतत् कुत्सेनाप्युक्तम् 'भुज्युं याभिः' (ऋ १, ११२,६) इति ॥ ३ ॥

---

१. °मृचम् अ. २. नास्ति अ. ३-३. नास्ति अ. ४. °ढगमनैः वि[1] अ[2]. ५. तव वि[1] अ[2]. ६. बलादुत्पततैः मूको. ७. °पूरणम् कु.

वेङ्कट० तुग्रः ह[1] भुज्युम् पुत्रम् अश्विनौ! समुद्रे धनम् इव कः चित् म्रियमाणः समुद्रमध्यस्थानां शत्रूणां योधनार्थम् अपिवा अन्येन कारणेन प्रहितवान्। समुद्रमध्ये तस्य नौः सन्नाऽभवत्। अथ अश्विनौ! युवाम् तम् समुद्रस्य पारे[2] ऊहथुः नौभिः युष्मदीयाभिः अन्तरिक्षेण गच्छन्तीभिः सुश्लिष्टत्वात् अप्रविष्टोदकाभिः ॥ ३ ॥

मुद्गल० अत्रेयमाख्यायिका—'तुग्रो नाम अश्विनोः प्रियः कश्चित् राजर्षिः। स च द्वीपान्तरवर्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत्। सा च नौर्मध्ये-समुद्रम् अतिदूरं गता वायुवशेन भिन्नाऽऽसीत्। तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव। स्तुतौ च सेनया सहितम् आत्मीयासु नौष्वारोप्य पितुः तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुः' इति। अयमर्थ इदमादिकेन तृचेन प्रतिपाद्यते। ह इति प्रसिद्धौ। तुग्रः खलु पूर्वं शत्रुभिः पीडितः सन् जयार्थम् उदमेघे उदकैर्मिह्यते सिच्यते इति उदमेघः समुद्रः, तस्मिन् भुज्युम् एतत्संज्ञं प्रियं पुत्रम् अव अहाः नावा गन्तुं पर्यत्याक्षीत्। दृष्टान्तः। ममृवान् म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यः रयिम् न यथा धनं परित्यजति तद्वत् हे अश्विनौ! तम् च भुज्युं मध्ये-समुद्रं निमग्नम् नौभिः पितृसमीपम् ऊहथुः युवां प्रापितवन्तौ। कीदृशीभिः। आत्मन्वतीभिः आत्मीयाभिः। युवयोः स्वभूताभिरित्यर्थः। अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वाद् अन्तरिक्षे जलस्यो-परिष्टादेव गन्त्रीभिः अपोदकाभिः सुश्लिष्टत्वात् अपगतोदकाभिः। अप्रविष्टोदकाभिरित्यर्थः ॥ ३ ॥

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः।
समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ ४ ॥

तिस्रः। क्षपः। त्रिः। अहा। अतिव्रजत्ऽभिः। नासत्या। भुज्युम्। ऊहथुः। पतङ्गैः।
समुद्रस्य। धन्वन्। आर्द्रस्य। पारे। त्रिऽभिः। रथैः। शतपत्ऽभिः। षट्ऽअश्वैः ॥ ४ ॥

स्कन्द० न च केवलाभिर्नौभिः। किं तर्हि। [3]तिस्रः क्षपः[3] 'क्षपः' (निघ १,७) इति रात्रिनाम। तिस्रः रात्रीः त्रीणि चाहानि सातत्येन अतिव्रजद्भिः सुष्ठु गच्छद्भिः हे नासत्यौ! भुज्युम् ऊहथुः पतङ्गैः 'पतङ्गाः' (निघ १,१४) इत्यश्वनाम। अश्वैः। क्व प्रदेशे। उच्यते। समुद्रस्य एकदेशभूते धन्वन् धन्वनि निरुदके प्रदेशे[4]। आर्द्रस्य पारे सोदकः प्रदेशः आर्द्रः, तस्य पारे अन्ते। समुद्रस्य मध्ये या उदकेन परिक्षिप्ताः भूमयः[5] तास्वित्यर्थः। न च केवलैरश्वैः। किं तर्हि। त्रिभिः रथैः रथैश्च त्रिभिः। द्वाभ्यामात्मनोः यानाभ्याम् एकेन भुज्योः। कीदृशैः। शतपद्भिः शतपादैः। शतशब्दश्चात्र बहुनाम सामर्थ्याच्चात्राद्ये बहुत्वे वर्तते। पादशब्दोऽपि चक्रपादवचनः। त्रिचक्रपादैरित्यर्थः। कुत एतत्। 'क्व त्री चक्रा त्रिवृतो रथस्य' (ऋ १,३४,९) इत्येवमादिषु मन्त्रान्तरेष्वश्विनोः रथस्य त्रिचक्रदर्शनात्। षळश्वैः षड्भिरश्वैर्युक्तैः ॥ ४ ॥

वेङ्कट० भुज्युः[6] त्रिभिः अहोरात्रैः समुद्रमध्यात् स्वगृहं नीतः। तिस्रः रात्रीः त्रीणि च अहानि

---

१. खलु वि[3] अ[2]. २. पारं वि[3] अ[2]. ३. नास्ति मूको. ४. देशे अ. ५. त्रुटितम् कु; भूमयः अ. ६. भुज्युं वि[3] अ[2].

भवद्भ्यां[1] सह अतिगच्छद्भिः नासत्यौ! भुज्युम् ऊहथुः समुद्रमध्याद् अश्वैः, [2]समुद्रस्य मध्यस्थे[2] स्थले तथा समुद्रस्य पारे[3] तुग्रस्य गृहम् त्रिभिः च रथैः शतगमनसाधनैः षडश्वैः। [4]स्थले आनयनाय पतङ्गा रथाश्व†[4] ॥ ४ ॥

**मुद्गल॰** हे नासत्या! नासत्यौ! सेनया सह उदके निमग्नम् भुज्युम् तिस्रः क्षपः त्रिसङ्ख्याका रात्रीः त्रिः अहा त्रिवारमावृत्तान्यहानि च अतिव्रजद्भिः अतिक्रम्य गच्छद्भिरेतावन्तं कालम् अतिव्याप्य वर्तमानैः पतङ्गैः पतद्भिः त्रिभिः त्रिसङ्ख्याकैः रथैः ऊहथुः युवाम् ऊढवन्तौ। क्वेति चेत्। उच्यते। समुद्रस्य अम्बुराशेर्मध्ये धन्वन् धन्वनि जलवर्जितप्रदेशे[5] आर्द्रस्य उदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे। कथम्भूतै रथैः। शतपद्भिः शतसङ्ख्याकैश्चक्रलक्षणैः पादैरुपेतैः षडश्वैः षड्भिरश्वैर्युक्तैः ॥४॥

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥ ५ ॥

अनारम्भणे । तत् । अवीरयेथाम् । अनास्थाने । अग्रभणे । समुद्रे ।
यत् । अश्विनौ । ऊहथुः । भुज्युम् । अस्तम् । शतऽअरित्राम् । नावम् । आतस्थिऽवांसम् ॥ ५ ॥

**स्कन्द॰** अनारम्भणे आरभ्यतेऽस्मिन्निति आरम्भणमालम्बनमुच्यते तत्र। निरालम्बने। तत् अवीरयेथाम् वीरकर्म कृतवन्तौ स्थः। न चानारम्भणे एव केवले। किं तर्हि। अनास्थाने यस्मिन्नीषदपि स्थातुं न शक्यते सोऽनास्थानस्तत्र। न चानास्थाने एव केवले। किं तर्हि। अग्रभणे ग्रहीतुमपि यस्मिन्न शक्यते सोऽग्रभणः लताशाखादिरहितस्तत्र। क्व। उच्यते। समुद्रे। कतमत्। उच्यते। यत् हे अश्विनौ! ऊहथुः भुज्यम् अस्तम् क्षिप्तम्। विपन्ननावं सन्तं सखिभिस्त्यक्तमित्यर्थः। शतारित्राम् अर्यतेऽनेनेत्यरित्रं नावो गमनसाधनं यद् अवकल्पकः इत्यपभ्रंशेन नाविका आहुः। तच्छतेन युक्तां युष्मदीयाम् नावम् आतस्थिवांसम् आस्थितवन्तम् ॥ ५ ॥

**वेङ्कट॰** दण्डकाष्ठाद्यारम्भणवर्जिते वृक्षशाखादिग्रहणवर्जिते आस्थानवर्जिते[6] समुद्रे तत् युवाम् वीरकर्म कृतवन्तौ स्थः[7]। यत् युवाम् अश्विनौ! भुज्युम् स्वगृहम् न्यूहथुः[8] शतदर्विकाम्[9] नावम् आतस्थिवांसम्। 'भुज्युं याभिरव्यथिभिः' (ऋ १, ११२, ६) इति कुत्सः ॥ ५ ॥

**मुद्गल॰** हे अश्विना! अश्विनौ! अनारम्भणे आलम्बनरहिते[10] समुद्रे तत् कर्म अवीरयेथाम् विक्रान्तवन्तौ युवाम्। अनारम्भणमेव स्पष्टीकरोति। अनास्थाने आस्थीयते अस्मिन्निति आस्थानः भूप्रदेशः तद्रहिते। स्थातुमशक्ये जले इत्यर्थः। अग्रभणे अग्रहणे। हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन्नित्यर्थः। किं पुनस्तत्कर्म। भुज्युम् समुद्रे मग्नम् शतारित्राम् बह्वरित्राम्। यैः काष्ठैः पार्श्वतो बद्धैर्जललोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि। ईदृशीं नावम् आतस्थिवांसम् आस्थितवन्तम् आरूढवन्तं कृत्वा

---

१. इवन्त्यां वि[१] अ[२]. २-२. °द्रमध्ये वि[१] अ[२]. ३. पारात् वि[१] ल. ४-४. त्रुटितम् ल; अनायातं गा रथाश्चेति वि[१] लपं. † रथाश्वेति वि[१] अ[१]; रथाश्वेति वि[२] अ[१]. ५. °वर्ति मूको. ६. स्थान-विजावे वि[१] ल; स्थाने विजाये वि[२] अ[१]; स्थाने जाते च वि[१] अ[२]. ७. रथो वि[१] अ[२]. ८. प्रत्यूधुः वि[१] अ[२]. ९. शरार्चिकां वि[१] अ[२]; °दर्वीकाम् कु. १०. °लम्भन मूको.

अस्तम् पितुस्तुग्रस्य गृहं प्रति यत् ऊहथुः तत्प्रापणमन्यैर्दुःशकं युवां समुद्रमध्ये कृतवन्तावित्यर्थः ॥५॥

इति प्रथमाष्टके अष्टमाध्याये अष्टमो वर्गः ॥

यमश्विना दुदथुः श्वेतमश्वमघाश्वाय शश्वदित् स्वस्ति ।
तद् वां दात्रं महि कीर्तेन्यं भूत् पैद्वो वाजी सदमिद्धव्यो अर्यः ॥ ६ ॥

यम् । अश्विना । दुदथुः । श्वेतम् । अश्वम् । अघऽअश्वाय । शश्वत् । इत् । स्वस्ति ।
तत् । वाम् । दात्रम् । महि । कीर्तेन्यम् । भूत् । पैद्वः । वाजी । सदम् । इत् । हव्यः । अर्यः ॥ ६ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'अघाश्वो नाम राजा युयुत्सुरात्मनोऽश्वम् अश्विनौ ययाचे, सततं चाविनाशम् । तस्मै अश्विनौ बलवन्तमत्यन्तवेगिनं जयकरं सर्वत्राप्रतिहतगमनमश्वं सततं चाविनाशं ददतुः' इति। तदेतदिहोच्यते। यम् हे अश्विनौ ! ददथुः श्वेतम् अश्वम् अघाश्वाय। शश्वत् इति नित्यपर्यायः। इत् शब्दः पदपूरणः, चार्थे वा। नित्यं च स्वस्ति अविनाशम्। तद् वाम् युवयोः दात्रम् दानम् महि महत् कीर्तेन्यम् कीर्तनार्हम् अभूत्। किं कारणम् अभूत्[1]। यस्मात् पैद्वः अश्वनामैतत् (तु० निघ १,१४)। अश्वः। वाजी बलवान्। सदम् इत् हव्यः सदैव च सङ्ग्रामेष्वाह्वातव्यः। अथवा सदमित्येतत् वाजीत्येतेन सम्बध्यते। वाजशब्दश्च वेगवचनः। वेगवान् सदैव, हव्यश्च सङ्ग्रामेष्विति। अर्यः ईश्वरश्च। क। सामर्थ्याद् गमने। सर्वत्राप्रतिहतगतिरित्यर्थः ॥ ६ ॥

**वेङ्कट०** अघाश्वो[2] नाम कश्चित्। तस्मै[3] शत्रुजयार्थम् अश्विनौ ! कञ्चन श्वेतम् अश्वम् ददथुः[4]। सः अश्वः तस्मै सदा[5] स्वस्ति करोति। तत् युवयोः दानं महत् सर्वदा कीर्तनीयं भवति। अश्वः बलवान् सदा[5] एव युद्धेष्वाह्वातव्यो भवति [6]धनस्य प्रदाता[6] ॥ ६ ॥

**मुद्गल०** अत्रेदमाख्यायते—'पेदुर्नाम कश्चित्। स चाश्विनौ तुष्टाव। तस्मै प्रीतौ कञ्चित् श्वेतवर्णम् अश्वं दत्तवन्तौ। स चाश्वस्तस्य प्रौढं जयं चकार' इति। एतदत्र प्रतिपाद्यते। हे अश्विना! अश्विनौ! युवाम् अघाश्वाय अहन्तव्याश्वाय पेदुनाम्ने राजर्षये यम् श्वेतम्० श्वेतवर्णम् अश्वम् ददथुः दत्तवन्तौ। सोऽश्वः तस्मै स्वस्ति जयलक्षणं मङ्गलम् शश्वत् इत् नित्यमेव चकार। वाम् युवयोः तत् दात्रम् दानम् महि महद् अतिगम्भीरम् अत एव कीर्तेन्यम् सर्वैः कीर्तनीयं प्रशस्यम् भूत् अभूत्। तस्मात् पैद्वः पेदोः सम्बन्धी पतनशीलः अर्यः शत्रूणां प्रेरयिता वाजी वेजनवान् सोऽश्वः सदम् इत् सदैव हव्यः अस्माभिरप्याह्वातव्यः ॥ ६ ॥

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंन्धिम् ।
कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः ॥ ७ ॥

---

१. नास्ति अ. २. अघाश्वो वि[२] अ[१]. ३. तमस्मै वि[१]. ४. ददतुः वि[१,२] अ[१] कु, ल लपं.
५. सर्वदा वि[२] अ[२]. ६-६. नास्ति कु.

युवम् । नरा । स्तुवते । पज्रियाय । कक्षीवते । अरदतम् । पुरम्ऽधिम् ।
कारोतरात् । शफात् । अश्वस्य । वृष्णः । शतम् । कुम्भान् । असिञ्चतम् । सुरायाः ॥ ७ ॥

**स्कन्द०** युवम् युवां हे नरा! **मनुष्याकारौ!** स्तुवते पज्रियाय **पाज इति अन्ननाम। तेन हविर्लक्षणेन तद्वान् पज्रः। रो मत्वर्थीयः। पृषोदरादित्वात् साधुः। आकारस्य च ह्रस्वत्वम्।** [1]**पज्र एव पज्रियः। स्वार्थिकस्तद्धितः**[1] **छान्दसत्वात्। हविर्लक्षणेनान्नेनान्नवते। स्तुवते यजते चेत्यर्थः। अथवा पज्रा अङ्गिरस उच्यन्ते। तेषामपत्यभूतः पज्रियः। पौराणिका हि कक्षीवन्तमाङ्गिरसं स्मरन्ति। एवं ह्याहुः**[2]—'... ... ... ... । उशिजो बृहदुक्थश्च[3] ऋषिर्दीर्घतमास्तथा। कक्षीवांश्च त्रयस्त्रिंशत् स्मृता ह्यङ्गिरसां वराः' ॥ **इति। एवमङ्गिरसामपत्यं त्रयस्त्रिंशत्तमः कक्षीवान्, तस्मै** कक्षीवते। **मह्यमेवेत्यर्थः।** अरदतम् **रद विलेखनेऽन्यत्र, इह तु सम्प्रदान-चतुर्थीश्रुतेर्दानार्थः। दत्तवन्तौ स्थः।** पुरन्धिम् **बह्वर्थविषयां प्रज्ञाम्। अथवा** रदतिः **विलेखनार्थ एव। चतुर्थी तु षष्ठ्यर्थे। कक्षीवतो बह्वर्थविषयां प्रज्ञां विलिखितवन्तौ जडां सतीं तीक्ष्णीकृतवन्तौ। अतीतानागतवर्तमानसमर्थां सर्वार्थग्रहणसमर्थां च कक्षीवतः प्रज्ञां कृतवन्तौ स्थ इत्यर्थः। तदेतत् कुत्सेनाप्युक्तम्** 'याभिस्त्रिमन्तुः' (ऋ १,११२,४) **इति। किञ्च** कारोतरात् **इत्यादि। अत्रेतिहासमाचक्षते—'अश्विनौ यदृच्छया पर्यटन्तौ पिबन् मत्तो**[4] **बालसमूहो**[5] **ददर्श। स तौ सुरां ययाचे। तस्मै अश्विनौ देवतामाहाभाग्यात् अश्वशफादुद्रिच्य घटशतं सुराया ददतुः' इति। तदेतदिहोच्यते—कारोतरादित्यादिना। कारोतर इति कूपनाम** (निघ ३, २३)। **तत्सादृश्याच्चे-हाश्वशफे**[6] **प्रयुज्यते। वर्तुलत्वादिना सादृश्येन कूपसदृशात्।** शफात् अश्वस्य [7]**खुरः शफ**[7] **उच्यते। पञ्चमीनिर्देशाच्चात्र योग्यक्रियापदाध्याहारः। अश्वस्य शफादुद्रिच्य। कीदृशस्य।** वृष्णः **वर्षितुः। प्रजननसमर्थस्येत्यर्थः।** शतम् कुम्भान् **कुम्भो घट उच्यते। घटशतम्** असिञ्चतम् **क्षारितवन्तौ। मत्तबालकेभ्यो दत्तवन्ताविरयर्थः। कस्य घटशतम्। उच्यते।** सुरायाः। **परस्तात् पुनरपि वक्ष्यति** 'शफादश्वस्य वाजिनो जनाय' (**ऋ १,११७,६**) **इति ॥ ७ ॥**

**वेङ्कट०** युवम्[8] नरा! स्तुवते **पज्रकुलाय**[9] कक्षीवते **मह्यम् प्रच्छन्नां बुद्धिं शस्त्रेणेव**[10] अरदतम्। 'कक्षीवन्तं स्तोतारम्' (**ऋ १,११२,११**) **इति कुत्सः। कूपसदृशाद्** वर्षितुः अश्वस्य शफात्[11] सुरायाः शतम् कुम्भान् **क्रमेण पूरितवन्तौ कस्मैचन**[12] **याचमानाय ॥ ७ ॥**

**मुद्गल०** **अत्रेयमाख्यायिका—'कक्षीवान् ऋषिः पुरा तमसा तिरोहितज्ञानः सन् ज्ञानार्थमश्विनौ तुष्टाव। तस्मै अश्विनौ प्रभूतां धियं दत्तवन्तौ' इति। तदाह। हे** नरा! **नेताराववश्विनौ!** युवम् **युवाम्** पज्रियाय **अङ्गिरसां कुले जाताय** कक्षीवते स्तुवते **युवयोः स्तुतिं कुर्वते मह्यम्** पुरन्धिम् **प्रभूतां धियं बुद्धिम्** अरदतम् **व्यलिखतम्। यथा सर्वार्थगोचरा भवति तथा कृतवन्तावित्यर्थः। अपि च** कारोतरात् **कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषः, यस्मिन्** सुरायाः **स्रावणं क्रियते। लुप्तोपममेतत्। तस्मात्** कारोतरात् **यथा सुरायाः सम्पादकाः तां स्रावयन्ति, एवमेव युवाम्** वृष्णः **सेचनसमर्थस्य युष्मदीयस्य** अश्वस्य शफात् **खुरात्**

---

**१-१. नास्ति अ.** २. **°हुः** अङ्गिरसो वै···धसश्चेत्येवमाद्युपक्रम्य **अ.** ३. बृबदु[२] कु; बृन्दू° **अ.**
**४. मत्तं मूको.** ५. **°मूहं मूको.** ६. **°च्चात्राश्व° अ.** ७-७. **शफः** खुरः **अ.** ८. युवाम **वि[१] अ[१].**
**९.** वज्र° ल **वि**[१२]; प्रज्ञ° **वि[१] अ[२].** १०. शास्त्रेण **वि[१].** ११. शफान् **वि[१] अ[२].** १२. तस्मै **वि[१] अ[१];** अस्मै **वि[१] अ[२].**

सुरायाः शतम् कुम्भान् असङ्ख्यातान् सुराघटान् असिञ्चतम् अपूरयतम्। ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचन्ते तेषामित्यर्थः ॥ ७ ॥

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ ८ ॥

हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् । ऊर्जम् । अस्मै । अधत्तम् ।
ऋबीसे । अत्रिम् । अश्विना । अवऽनीतम् । उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥ ८ ॥

स्कन्द० हिमेन[1] हिममित्युदकनाम । वृष्टिलक्षणेनोदकेन । यत्रासुरैरत्रिः प्रक्षिप्तः[2] तम् अग्निम् घ्रंसम् घृ क्षरणदीप्त्योरित्यस्यायं क्रियाशब्दः, नत्वहर्नाम । अत्यन्तदीप्तम् । अवारयेथाम् निशमितवन्तौ स्थः । किञ्च पितुमतीम् ऊर्जम् [3]"पितुः" (निघ २,७) इत्यन्ननाम[3] । ऊर्क्शब्दोऽत्र[4] ऊर्ज बलप्राणनयोरित्यस्य बलवचनः । अन्नसहितमसुरप्रतिबन्धसमर्थं बलम् अस्मै उत्तरार्धर्चस्थस्यात्रेरयमन्वादेशः । अस्मै अत्रये । अधत्तम् दत्तवन्तौ स्थः । किञ्च ऋबीसे अग्निकूटे अत्रिम् ऋषिं हे अश्विनौ! अवनीतम् अधोनीतम् । असुरैः प्रक्षिप्तमित्यर्थः । उत् निन्यथुः ऊर्ध्वं नीतवन्तौ युवामित्यर्थः । सर्वगणम् सर्वेणेन्द्रियगणेनोपेतम् । अविकलाङ्गमित्यर्थः । स्वस्ति अन्तर्णीतमत्वर्थोऽत्र स्वस्तिशब्दः[5] । स्वस्तिमन्तम् अविनष्टम् । जीवन्तमित्यर्थः । तदेतत् कुत्सेनाप्युक्तम् 'तप्तं घर्मम्' (ऋ १,११२,७) इति ॥ ८ ॥

वेङ्कट० हिमवर्षेण अग्निम् क्षरद्दीप्तिम् अवारयेथाम् । अन्नवन्तम् रसं च तत्र अस्मै अत्रये अधत्तम् । अपगतभास्के[6] गतभास्के[7] वाग्नावसुरैः[8] प्रक्षिप्तम् अत्रिम्[9] अश्विनौ! उत् निन्यथुः अविकलसर्वेन्द्रियगणम् अविनाशेन । यद्वा[10] अत्रिः पुत्रपौत्रैः[10] सह प्रक्षिप्तः ॥ ८ ॥

मुद्गल० अत्रेदमाख्यानम्—'अत्रिम् ऋषिम् असुराः शतद्वारपीडायन्त्रगृहे प्रवेश्य तुषाग्निना अबाधिषत । तदानीं तेन ऋषिणा स्तुतावश्विनावग्निमुदकेनोपशमय्य तस्मात् पीडागृहाद् अविकलेन्द्रियवर्गं सन्तं निरगमयताम्' इति । तदाह । हे अश्विना! अश्विनौ! हिमेन हिमवत् शीतेनोदकेन घ्रंसम् दीप्यमानम् अत्रेर्बाधनार्थम् असुरैः प्रक्षिप्तम् तुषाग्निम् अवारयेथाम् निवारितवन्तौ । अपि च अस्मै अत्रये पितुमतीम् अन्नयुक्तम् ऊर्जम् बलप्रदं रसात्मकं क्षीरादिकम् अधत्तम् प्रायच्छतम् । ऋबीसे अपगतप्रकाशे पीडायन्त्रगृहे अवनीतम् अवाङ्मुखतया असुरैः प्रापितम् अत्रिम् सर्वगणम् सर्वेन्द्रियगणोपेतम् स्वस्ति अविनाशो यथा भवति तथा उत् निन्यथुः तस्माद् गृहादुद्गमय्य युवां स्वगृहं प्रापितवन्तौ ॥ ८ ॥

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ ९ ॥

---

१. नास्ति मूको. २. नास्ति अ. ३-३. नास्ति अ. ४. ऊर्ज° अ. ५. शब्दः अ. ६. नास्ति वि[1] अ[1]. ७. विगत° वि[1] अ[2]; नास्ति वि[1] अ[1] कु. ८. मग्ना° कु. ९. इति वि[1] अ[2]. १०-१०. स्त्रीपुत्र° वि[1] अ[2].

परा । अवतम् । नासत्या । अनुदेथाम् । उच्चाऽबुध्नम् । चक्रथुः । जिह्मऽबारम् ।
क्षरन् । आपः । न । पायनाय । राये । सहस्राय । तृष्यते । गोतमस्य ॥ ९ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'गोतमस्तृषितोऽश्विनावुदकं ययाचे । तस्मै अश्विनौ कूपं हस्ताभ्यां प्रेर्यप्रेर्य एतत्सकाशं नीत्वाऽधोमुखं च कृत्वा तेनोदकं ददतुः' इति[1] । तदेतदिहोच्यते। परा अवतम् नासत्या अनुदेथाम् इति । 'अवतः' ( निघ ३,२३ ) इति कूपनाम । कूपं हे नासत्यौ! परा अनुदेथाम् । नुद प्रेरणे । पराङ्मुखं गोतमं प्रति प्रेरितवन्तौ स्थः । नीतं च सन्तम् उच्चाबुध्नम् चक्रथुः जिह्मबारम् जिह्मशब्दोऽत्राधोभाववचनः न कुटिलवचनः । उपरिबुध्नमधोमुखं कृतवन्तौ स्थ इत्यर्थः । अधोमुखाच्च तस्मात् क्षरन् सृतवत्यः आपः । पायनाय पानार्थम् । कथम् । न राये सहस्राय न-शब्दोऽत्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयो द्रष्टव्यः । राये सहस्रायेति प्रथमाबहुवचनस्य स्थाने चतुर्थी । धनानीव सहस्रसङ्ख्यानि । यथा कूपकलशादधोमुखात् सहस्रसङ्ख्याका रूपकाः क्षरन्ति तद्वदित्यर्थः । कस्य पानाय। तृष्यते गोतमस्य तृष्यते इति षष्ठ्यर्थे चतुर्थी । तृषा बाध्यमानस्य गोतमस्य पानायेति ॥ ९ ॥

**वेङ्कट०** परा अनुदेथाम् कूपम् अश्विनौ ! । तम् उच्चैःस्थितमूलम्[2] नीचीनद्वारम् चक्रथुः । तस्मात् कूपात्[3] उदकानि इव पिपासोः गोतमस्य पानार्थं धनानि च अक्षरन्[4] सहस्राय धनाय तृष्यते गोतमाय । 'ऊर्ध्वं नुनुद्रेऽवतं त ओजसा' ( ऋ १,८५,१० ) इति गोतमः ॥ ९ ॥

**मुद्गल०** अत्रेदमाख्यानम्—'कदाचिन्मरुभूमौ वर्तमानस्य स्तोतुर्गोतमस्य ऋषेः समीपं देशान्तरे वर्तमानं कूपम् उत्खायाश्विनौ प्रापयेताम्, प्रापय्य च तं कूपं स्नानपानादिसौकर्याय उपरिमूलमधोबिलम् अवास्थापयताम्' इति । तदेतदाह—हे नासत्या! सत्यस्वभावश्विनौ! युवाम् अवतम् अवस्तात् तं कूपम् परा अनुदेथाम् गोतमस्य ऋषेः समीपे प्रेरिषाथाम् । तदनन्तरं कूपम् उच्चाबुध्नम् उच्चैरुपरिष्टात् बुध्नो मूलम् यस्य स तथोक्तः तम्[5] जिह्मबारम् जिह्मम् अधस्ताद्वर्त्तमानं तथा वक्रं बारं द्वारं यस्य स तथोक्त एवंगुणविशिष्टम् चक्रथुः युवाम् अकृषाथाम् । तस्मात् कूपात् तृष्यते पिपासतः गोतमस्य पायनाय पानार्थम् आपः न आपश्च । अयं नशब्दश्चार्थे । क्षरन् प्रवाहरूपेण निरगमन् । कीदृशाय । राये हवींषि दत्तवते सहस्राय सहनशीलाय ॥ ९ ॥

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् ।
प्रातिरतं जहितस्यायुर्दस्रादित् पतिमकृणुतं कनीनाम् ॥ १० ॥

जुजुरुषः । नासत्या । उत । वव्रिम् । प्र । अमुञ्चतम् । द्रापिम्ऽइव । च्यवानात् ।
प्र । अतिरतम् । जहितस्य । आयुः । दस्रा । आत् । इत् । पतिम् । अकृणुतम् । कनीनाम् ॥ १० ॥

**स्कन्द०** अत्र शतपथे अधीतमितिहासमाचक्षते—'शार्यातो नाम राजा सङ्क्रीडद्भिः कृतापराधाय कुपिताय जीर्णाय च्यवनाय प्रत्यापत्त्यर्थं सुकन्यां नाम [6]कन्यकां दुहितरं ददौ। तां[6] तत्रासीनां दृष्ट्वाश्विनौ पुनःपुनरूचतुः । किं जीर्णीकृतरूपं कामयसे । आवां

---

१. नास्ति अ. २. °रम् च वि[1] कु. ३. नास्ति वि[1] अ[2]. ४. अक्षरत् कु. ५. नास्ति मूको. ६-६. कन्यां स्वदुहितरं अ.

सम्भजेति । सा तौ प्रत्युवाच, यस्मै मां पिता अदात् नाहं तं जीवन्तं हास्यामीति । तदृषिर्ज्ञात्वा सुकन्यामुवाच, यदि त्वामेतौ पुनरेवं ब्रूयातां ततस्त्वमेनौ प्रतिब्रूयाः, '[1]असर्वौवसुसमृद्धौ[1] सन्तौ पतिं मे निन्दथ इति । तौ यदि त्वां प्रति[2] ब्रूयाताम्, केनासर्वौवसुसमृद्धौ चेति । तत एनौ प्रतिब्रूयाः, [3]पतिं मे पुनर्युवानं[3] कुरुतम् अथ वां वक्ष्यामीति । सा तौ तथोवाच । तामश्विनौ प्रत्यूचतुः । एतं ह्रदमवतरतु, अतो यत् कामयते तेन वयसा युक्त उत्तरिष्यतीति । स ऋषिस्तं ह्रदमवतीर्योत्ततार युवा भूत्वा' ( तु. माश ४,१,५,१-१३ ) इति । तदेतदिहोच्यते जुजुरुषः नासत्या इत्यादिना— उत शब्दोऽप्यर्थे । अपि पूर्वोक्तानि कर्माणि चक्रथुः । अपीदमन्यत् । किं तत् । उच्यते । जुजुरुषः [4]जीर्णात् वृद्धीभूतात्[4] हे नासत्यौ ! वव्रिम् रूपं जरालक्षणम् प्र अमुञ्चतम् प्रमोचितवन्तौ । अपनीतवन्तौ स्थ इत्यर्थः । किमिव । उच्यते । द्रापिमिव कवचमिव योद्धुः शरीरात् । कुतोऽपनीतवन्तौ । च्यवानात् च्यवननाम्न[5] ऋषेः । अपनीय च जराम् प्रातिरतम् प्रपूर्वस्तिरतिर्वृद्ध्यर्थः । प्रवर्धितवन्तौ स्थः । जहितस्य ओहाक् त्यागे । त्यक्तस्वायुषः[6] । क्षणप्रायायुष इत्यर्थः । प्रवर्धितवन्तौ आयुः जीवितलक्षणम् हे दस्रा ! आत् इत् अथैनम् पतिम् भर्तारम् अकृणुतम् कृतवन्तौ स्थः कनीनाम् कन्यकानां सुकन्याप्रभृतीनाम् ॥ १० ॥

**वेङ्कट०** जीर्णात्[7] च्यवानात्[8] नासत्यौ ! अपि च[9] जराम् । 'प्र वव्रेर्वव्रिश्चिकेत' (ऋ ५,१९,१) इति मन्त्रः । तस्मात्[10] जरां निद्राम् इव अनायासेन प्र अमुञ्चतम् 'द्रापे अन्धसस्पते' ( मा १६,४७ ) इत्यत्र वाजसनेयके[11] निष्वापयतीति[12] द्रापिः इति प्रतिपादितम् । कवचम् इव इति[13] अन्ये वदन्ति । तथा[14] पुत्रैः सरस्वत्याः तीरे त्यक्तस्य आयुः [15]च अवर्धयतम्[15] । अनन्तरं चैनम् युवतीनाम् पतिम् अकृणुतम् युवानम् इति । अत्र शाट्यायनकम्—'च्यवनो वै भार्गवः वास्तुपस्य ब्राह्मणम् अवेत् । स पुत्रान् अब्रवीत्, वास्तुपस्य[16] वै ब्राह्मणं वेद, तं मा वास्तौ निधाय त्रिः पुनःप्रयाणं प्रयातेति । तेऽब्रुवन्, [17]न शक्ष्याम[17], आक्रोशनवन्तो भविष्यामः पितरमहासिषुरिति । नेति होवाच । तेन वै यूयं वसीयांसो भविष्यथ । तेनो एव मम पुनर्युवताया आशा । हित्वैव मा प्रयातेति तान् अज्ञापयत् । तं सरस्वत्यै शैशवे निधाय त्रिः पुनःप्रयाणं प्रायन् । सोऽकामयत, वास्तुहीनः पुनर्युवा स्याम्, कुमारीं जायां विन्देय, सहस्रेण यजेयेति । स एतत् सामापश्यत् । तेनास्तुत । तं तुष्टुवांसं शर्यातो मानवो ग्रामेणाध्यवास्यत् । तं कुमारा गोपाला अविपाला मृदा शकृत्पिण्डैः आसपांसुभिरदिहन् । सोऽसञ्ज्ञां शार्यातेभ्यः[18] अकरोत् । तत् न माता पुत्रमजानात् न पुत्रो मातरमित्युक्त्वा तत्परिहारार्थं शर्यातकन्यायां सुकन्यायां याचितायां राजा[19] नेति ह उवाच, अन्यद् धनं वृणीष्व इति । ऋषिश्च नेति होवाच । अथ[19] कन्यां तस्मै ददौ । सा ह तदेव निर्विद्योपविवेश इति उक्त्वा आह । अश्विनौ दर्विहोमिणौ भिषज्यन्ताविदं चेरतुः अपीतसोमौ[20] । तौ हैनामेत्योचतुः[21]—कुमारि ! स्थविरो वा अयम् असर्वो नालं पतित्वाय[22] । आवयोः जायैधीति । नेति होवाच । यस्मा एव मा पिता अदात्, तस्य जाया भविष्यामीत्युक्तम् । अथ तयोः गतयोः सुकन्यामृषिः कुमारि ! को न्वेष घोषोऽभूदिति पप्रच्छ । सा तु तस्मै यथावृत्तम् उवाच । तौ त्वैतद् एव आगत्य श्वः

---

१-१. °सर्वा वसुवसु° अ. २. नास्ति अ. ३-३. °पुनर्मे पतिं युवानं अ. ४-४. जीर्णान् वृद्धीभूतान् मूको. ५. °नाम्नश्च अ. ६. °क्तस्यायु° मूको. ७. जीर्ण वि[1]. ८. च्यवनात् वि[2] अ[2]. ९. नास्ति वि[2] अ[2]. १०. ताम् वि[2] ल लपं. ११. °यकाम् अ[1] कु. १२. निष्वाप° वि[2] अ[1] कु. १३. नास्ति वि[2] अ[1]. १४. तथापि वि[2] अ[2]. १५-१५. वर्ध° वि[2] अ[2]. १६. भस्य° वि[2] अ[2]. १७-१७. नास्ति वि[2] अ[2]. १८. शर्या कु. १९ नाति वि[1,2] अ[1] कु ल लपं[1]. २०. अनपिसोमौ ल लपं. २१. मा (ग) त्यो° वि[2]. २२. पतित्वानाय वि[2] अ[2]; पतित्वनाय वि[2] अ[1] ल लपं.

वक्तारौ। [१]तौ त्वं[१] ब्रूताद्, युवां वा असर्वौ स्थः यौ देवौ सन्तावसोमपौ स्थः। सर्वौ वै मम पतिः यः सोमप इति। तौ वै वक्तारौ, कस्तस्येशे[२] यदावम् अपिसोमौ[३] स्यावेति। [४]अयं मम[४] पतिरिति ब्रूतात्। तेनो एव मे[५] पुनर्युवताया आशेति। तथा तया कथितौ ऊचतुः ऋषे! अपिसोमौ[३] नौ भगवः कुर्विति। तथेति होवाच। तं वै नु [७]मा युवं पुनर्युवानं[७] कुरुतम् इति। तं ह सरस्वत्यै शैशवम्[८] अभ्यवचकृषतुः[९]। स होवाच कुमारि! सर्वे वै सदृशा उदेष्यामोऽनेन मा लक्ष्मकेण[१०] जानीतादिति। ते ह सर्वे एव सदृशा उदेयुर्यत् कल्याणतमं रूपाणां तेन[११] रूपेण। तं हेयं ज्ञात्वा बाहावभिपेदे,[१२] अयं मम पतिरिति'[१३] ( तु. जैब्रा ३,१२०-१२५ ) ॥ १० ॥

**मुद्गल०** अत्रेदमाख्यानम्—'वलीपलितादिभिरुपेतो जीर्णः पुत्रादिभिः परित्यक्तः च्यवनाख्य ऋषिरश्विनौ तुष्टाव। स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्यौवनम् अकुरुताम्' इति। तदेतदाह। हे नासत्या! अश्विनौ! जुजुरुषः जीर्णात् च्यवानात् च्यवनाख्याद् ऋषेः सकाशात् वव्रिम् कृत्स्नं शरीरम् आवृत्यावस्थितां जराम् प्र अमुञ्चतम् प्रकर्षेणामोचयतम्। दृष्टान्तः। द्रापिमिव द्रापिरिति कवचस्याख्या। यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चात् शरीरात् पृथक्करोति तद्वत्। उत अपि च हे दस्रा! अश्विनौ! जहितस्य पुत्रादिभिः परित्यक्तस्य ऋषेः आयुः जीवनम् प्र अतिरतम् प्रावर्द्धयतम्। आत् इत् अनन्तरमेव युवानं सन्तम् कनीनाम् कन्यानाम् पतिम् भर्तारम् अकृणुतम् अकुरुतम् ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये नवमो वर्गः ॥

## तद् वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम्।
## यद् विद्वांसा निधिमिवापगूळ्हमुद् दर्शतादूपथुर्वन्दनाय ॥ ११ ॥

तत्। वाम्। नरा। शंस्यम्। राध्यम्। च। अभिष्टिऽमत्। नासत्या। वरूथम्।
यत्। विद्वांसा। निधिम्ऽइव। अपऽगूळ्हम्। उत्। दर्शतात्। ऊपथुः। वन्दनाय ॥ ११ ॥

**स्कन्द०** तत् कर्म वाम् युवयोः हे नरा! मनुष्याकारौ! शंस्यम् स्तुत्यम् राध्यम् च आराधनीयं च। अभिष्टिमत्[१४] अभिष्टिरिच्छा प्रार्थना, तद्वच्च[१५]। प्रार्थनीयं चेत्यर्थः[१६]। हे नासत्या! वरुथं वरणीयम्[१७]। सम्भजनीयं चेत्यर्थः। कतमत्। उच्यते। यत् विद्वांसा निधिमिव अपगूळ्हम् यथा कौचिद्विद्वांसौ पुरुषौ निधिम् अपगूढम् आच्छादितम्[१८] उत्खनेताम् एवम् दर्शतात् अत्यन्तागाधत्वात् दर्शनीयकूपात् उत् ऊपथुः उत्खातवन्तौ स्थः। उत्तारितवन्तावित्यर्थः। वन्दनाय द्वितीयार्थे चतुर्थ्येषा। वन्दनमृषिम्। तदेतत् कुत्सेनाप्युक्तम् 'याभी रेभन्निवृतम्' (ऋ १,११२,५) इति[१९] ॥ ११ ॥

**वेङ्कट०** तत् युवयोः नरौ! स्तोतव्यम् राधनीयं लालनीयम्[१९] च अन्वेषणवत्[२०] च अभ्येष्टव्यम् वरणीयं च यत् युवां पतिं पतितं[२१] जानन्तौ तिरोहितम् निधिम् इव कूपे [२२]पतितम् वन्दनम्[२२] प्रयत्नेन दर्शनीयात् अगाधात् कूपात् [२३]उत् ऊपथुः[२३]। छन्दोऽनुविधानाय विभक्तिव्यत्यय[२४] ऋगन्तेषु भवति ॥ ११ ॥

---

१-१. त्वाम् कु. २. °स्येश° वि[१] अ[२]. ३. अपि सोमपौ वि[१,३] अ[१,२] कु. ४-४. अयमेव वि[२] ल लपं. ५. मे वि[१,२] अ[१] ल लपं. ६. मम वि[१] अ[२] कु. ७-७. मां पुनर्युवाम् कु. ८. शैवलं कु. ९. °कर्षतुः वि[२] ल लपं. १०. पक्ष्केन वि[१] अ[२]; पक्ष्मकेन कु. ११. न कु. १२. वाहा° वि[२] कु ल लपं. १३. इत्य (इति वि[१] अ[२].) विकृतं ब्राह्मणं शाट्यायनके श्रौतव्यं सुकन्याब्राह्मणम् (सुकन्या इति वि[१] अ[२].) वि[१] अ[२] कु. १४. नास्ति मूको. १५. नास्ति अ. १६. चेत्य° अ. १७. °यम् च अ. १८. °तं तम् अ. १९. नास्ति वि[१] अ[१]. २०. °न्वेषणम् कु. २१. पतिं मूको. २२-२२. नास्ति वि[१] अ[२]. २३-२३. ऊपथुः कु; ऊचतुः वि[१] अ[१]; धूपकः वि[१] अ[२]. २४. °त्ययं च वि[१] अ[२].

**मुद्गल०** अत्रेदमाख्यानम्। वन्दनो नाम कश्चिद् ऋषिः। स चासुरैः कूपे निखात उत्तरितुमशक्नुवन् अश्विनावस्तौत्। तमश्विनौ कूपादुन्निन्यतुरिति। तदाह। नरा! आरोग्यस्य नेतारौ! हे नासत्या! अश्विनौ! वाम् युवयोः सम्बन्धि अभिष्टिमत् अभ्येषणयुक्तम् आभिमुख्येन प्राप्तव्यं तथा वरूथम् वरणीयं कामयितव्यं तत् कर्म शंस्यम् अस्माभिः प्रशंसनीयम् राध्यम् आराधनीयं च। किं पुनस्तत्कर्म। विद्वांसा विद्वांसौ तौ युवाम् निधिमिव निक्षिप्तं धनमिव अपगूळ्हम् अरण्ये निर्जनदेशेऽसुरैर्निगूढम् वन्दनाय वन्दनम् ऋषिम् दर्शतात् अध्वगैः पिपासुभिः द्रष्टव्यात् कूपात् उद् ऊपथुः उदहार्ष्टम्। एवं यदेतत् कूपादुद्धरणं तदित्यर्थः॥ ११॥

तद् वां नरा सनये दंसं उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच॥ १२॥

तत्। वाम्। नरा। सनये। दंसः। उग्रम्। आविः। कृणोमि। तन्यतुः। न। वृष्टिम्।
दध्यङ्। ह। यत्। मधु। आथर्वणः। वाम्। अश्वस्य। शीर्ष्णा। प्र। यत्। ईम्। उवाच॥ १२॥

**स्कन्द०** तत् वाम् युवयोः हे नरौ! सनये अभिप्रेतलाभाय दंसः कर्म उग्रम् अप्रसह्यम्। आविः कृणोमि प्रकाशीकरोमि, तन्यतुः न स्तनयित्नुशब्द इव वृष्टिम्। कतमत्। उच्यते। दध्यङ् ह यदित्यादि। अत्रेतिहासमाचक्षते—'आथर्वणाय[1] दधीचे मध्वाख्यं परं ब्रह्म इन्द्र उवाच, प्रोच्य च एवमुवाच, यदि वक्ष्यसि शिरस्ते पतिष्यतीति। तमश्विनौ मध्वर्थिनावागत्य ऊचतुः। प्रब्रूहि नौ परं ब्रह्मेति। स तौ प्रत्युवाच, शिरःपातभयान्न ब्रवीमीति। तौ तं[2] प्रत्यूचतुः, अन्यत्ते आवां शिर आदध्वहे, तेन प्रब्रूहि। स तथेति प्रपेदे। तस्याश्विनौ शिरश्छित्त्वा अश्वशिर आदधाते। तेनासौ तावध्यापयाञ्चकार' इति। तदेतदिहोच्यते दध्यङ् ह यदित्यादिना। दध्यङ् नाम ऋषिः। हशब्दः पदपूरणः। यत् मधु मध्वाख्यं ब्रह्म आथर्वणः अथर्वपुत्रः वाम् युवाभ्याम् आहितेन अश्वस्य शीर्ष्णा शिरसा प्र उवाच। यदीम् इति निपातौ पदपूरणौ। अथवा द्विर्यच्छब्दश्रुतेः प्रोवाचेत्याख्यातं भेदेन योजयितव्यम्। यदिन्द्रेण निषिद्धोऽपि सन् युष्मद्गौरवाद् दध्यङ् ह प्रोवाच, यच्चाश्वस्य शीर्ष्णा प्रोवाच, न स्वेन, तदुभयमप्युग्रं कर्माऽऽविष्कृणोमि॥ १२॥

**वेङ्कट०** अथ च्यवन[3] उवाच, कुरुक्षेत्रेऽपशीर्ष्णा यज्ञेन[4] यजमाना न[5] कामम् आप्नुवन्ति। दध्यङ् ह 'वा आथर्वणः[6] यज्ञस्य[2] यथा शिरः प्रतिनिधीयते, [7]यथैष† कृत्स्नो भवति[7]', तथा वेद। ततो ज्ञात्वा देवेभ्यः यजमानेभ्यो यज्ञस्य शिरः सन्धत्तम् इति। अथ तमेत्योचतुः, उप त्वाऽऽयावेति। कस्मै[8] कामायेति। यथैतद् यज्ञस्य शिरः प्रतिनिधीयत इति। स[9] होवाच, इन्द्रेण वा उक्तोऽस्मि, यदि वा इदम्[10] अन्यस्मै ब्रूयाः शिरस्ते छिन्द्याम् इति। तस्माद् बिभेमीति। तौ होचतुः, आवां त्वा तस्मात् त्रास्यावह[11] इति। यदा नौ उपनेष्यसे

१. नास्ति अ. २. नास्ति कु. ३. च्यवानः वि[1] लपं. ४. यज्ञे वि[1] अ[2]. ५. न तं कु. ६. वाऽऽथ° वि[2] ल; अथ° लपं. ७-७. यथैषोकृत्सो…कृत्स्नो भवति वि[1] अ[2]. † तथैव वि[1] लपं. ८. तस्म वि[1,3] अ[1] लपं. ९. नास्ति वि[3] अ[2]. १०. वेदम् वि[1,2] अ[1]. ११. ज्ञास्यावहे वि[1,2]; अ[1,2]; ल लपं.

अथ ते[1] शिरश्छित्त्वा अन्यत्र उपधास्यावः । अथाश्वस्य शिर आहृत्य तत् ते प्रति निधास्यावः। तेन नौ अनुवक्ष्यसीति । एवम् उक्त्वा अश्वस्य शिरः प्रतिसन्धाय[2] तेन ह[3] स्म संवदमानौ आसाते साम गायमानौ ऋचं[4] यजुः अभिव्याहरन्तौ । ताभ्यां ह श्रद्धाय तेनाश्वस्य शीर्ष्णा-नूवाच[5]। तद् इन्द्रोऽन्वबुध्यत[6] प्र हाभ्याम्[7] अवोचद् इति । तस्याहृत्य शिरः प्राच्छिनद् 'इदम् अश्वशीर्षम्[8]। अथ यद् अस्य स्वं शिर आसीत् तद् इमो मनीषिणौ प्रतिसमधत्ताम्' इति वाजसनेयकशाट्यायनकयोरुक्तमिति ( तु. जैब्रा ३,१२६-१२७ )।

तत् युवयोः उद्गूर्णं कर्म अहम्, लाभाय आविः कृणोमि, स्तनयित्नुः इव वृष्टिम्। ईम् इति पूरणः ॥ १२ ॥

मुद्गल० अत्रेयमाख्यायिका—'इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि, शिरस्ते छेत्स्यामीत्युवाच । ततोऽश्विनौ अश्वस्य शिरश्छित्त्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्ताम्। तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास । तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। तदाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्ताम्' इति। तदेतत् प्रतिपाद्यते। हे नरा! नरौ अश्विनौ! वाम् युवयोः सम्बन्धि उग्रम् उद्गूर्णम् अन्यैर्दुःशकम् दंसः कर्मनामैतत् (तु. निघ २,१) । युवाभ्यां पुरा कृतं तत् कर्म सनये धनलाभार्थम् आविः कृणोमि प्रकटीकरोमि। दृष्टान्तः। तन्यतुः न यथा मेघस्थः शब्दः वृष्टिम् मेघान्तर्वर्तमानम् उदकं प्रवर्षेण सर्वत्र प्रकट-यति तद्वत्। किं तत्कर्म। आथर्वणः अथवर्णः पुत्रः दध्यङ् एतत्संज्ञ ऋषिः अश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वाम् युवाभ्याम् ईम् इमाम् मधु मधुविद्याम् यत् ह यदा खलु प्र उवाच प्रोक्तवान्। तदानीम् अश्वस्य शिरसः सन्धानलक्षणं पुनर्मनुष्यस्य शिरसः प्रति-सन्धानलक्षणञ्च यत् भवदीयं कर्म तदाविष्कृणोमीत्यर्थः ॥ १२ ॥

अजो॑हवीन्नासत्या क॒रा वां॑ म॒हे याम॑न् पुरुभु॒जा पुर॑न्धिः ।
श्रु॒तं तच्छासु॑रिव वध्रिम॒त्या हिर॑ण्यहस्तमश्विनावदत्तम् ॥ १३ ॥

अजो॑हवीत् । ना॒स॒त्या॒ । क॒रा॒ । वा॒म् । म॒हे । याम॑न् । पु॒रु॒ऽभु॒जा॒ । पुर॑म्ऽधिः ।
श्रु॒तम् । तत् । शासुः॑ऽइव । व॒ध्रि॒ऽम॒त्याः । हिर॑ण्यऽहस्तम । अ॒श्वि॒नौ॒ । अ॒द॒त्त॒म् ॥ १३ ॥

स्कन्द० अत्रेतिहासमाचक्षते—'वध्रिमती नाम योद्ध्री सङ्ग्रामे शत्रुभिश्छिन्नहस्ताऽश्विनौ तुष्टाव। तस्या अश्विनौ हिरण्मयं हस्तं ददतुः' इति। तदिहोच्यते। अजोहवीत् आहूतवती हे नासत्यौ! करा[9] पूर्वपदलोपोऽत्र द्रष्टव्यः। छिन्नकरा शत्रुभिश्छिन्नहस्ता। अथवा स्तुतीनां कर्त्री करा। वाम् युवाम्। मंह महति यामन् यान्ति योद्धारो यस्मिन् स यामा[10] सङ्ग्राम इहाभिप्रेतस्तत्र। हे पुरुभुजा बहूनां हविषामभ्यवहर्तारौ पालयितारौ वा आर्तानाम्। पुरन्धिः बहुप्रज्ञा। श्रुतम् युवामपि श्रुतवन्तौ। तदाह्वानम् शासुरिव शासितुरिव पितुराचार्यस्य वा। महताऽऽदरेणेत्यर्थः।

---

१. ते स्वं कु. २. प्रतिनिधीवत इति। होवाच, इन्द्रेण वोक्तोऽस्मि संशय वि[1,2] अ[1] कु ल लपं. ३. नास्ति कु. ४. °चं च कु. ५. प्रोवाच वि[2] अ[2]. ६. अन्ववबु° वि[1,2]अ[1] ल लपं. ७. प्राहा° ल; प्रज्ञा° वि[2] अ[2]. ८-८. अश्वस्य शीर्षम् वि[2] अ[2]. ९. नास्ति अ. १०. यामः कु.

कल्याह्वानम् । उच्यते । वध्रिमत्याः । [1]श्रुत्वा च[1] हिरण्यहस्तम् हिरण्यशब्देनात्र तद्विकार उच्यते । हिरण्यमयौ हस्तौ यस्मिन् स हिरण्यहस्तो बाहुः, तम् । हे अश्विनौ! अदत्तम् दत्तवन्तौ स्थः ॥ १३ ॥

**वेङ्कट०** आजुहाव वाम् नासत्यौ! कर्मणाम् आश्चर्याणां कर्तारौ महति यज्ञे बहूनां हविषां भोक्तारौ [2]स्त्री वध्रीमती[2] । तत् च आह्वानं भवद्भ्यां श्रुतम् आदरेण, यथा शासितुः आचार्यस्य शासनम् । अथ अस्यै हिरण्यहस्तम् नाम पुत्रम् अदत्तम् ॥ १३ ॥

**मुद्गल०** वध्रिमती नाम कस्यचित् राजर्षेः पुत्री नपुंसकभर्तृका । सा पुत्रलाभार्थम् अश्विनावाजुहाव । तदाह्वानं श्रुत्वाऽश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः । तदेतदाह । पुरुभुजा! बहूनां पालकौ प्रभूतहस्तौ हे नासत्या! अश्विनौ! महे महनीये पूजनीये यामन् यामनि याति गच्छतीति याम स्तोत्रम्, तस्मिन् । करा अभिमतफलस्य कर्तारौ वाम् युवाम् पुरन्धिः बहुधीर्वध्रिमती वध्रिः पुत्रोत्पादनाशक्तः पण्डकः, तद्वती एतत्संज्ञा राजपुत्री अजोहवीत् पुनःपुनः स्तुत्या पुत्रलाभार्थम् आहूतवती । युवां च वध्रिमत्याः तदाह्वानम् श्रुतम् अशृणुतम् । दृष्टान्तः । शासुः इव यथा शासुराचार्यस्य वचनं शिष्योऽवहितः सन् ऐकाग्र्येण शृणोति तद्वत् । श्रुत्वा च हे अश्विनौ! तस्यै हिरण्यहस्तम् सुवर्णमयपाणिम् एतत्संज्ञं पुत्रम् अदत्तम् प्रायच्छतम् ॥ १३ ॥

आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम् ।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥ १४ ॥

आस्नः । वृकस्य । वर्तिकाम् । अभीके । युवम् । नरा । नासत्या । अमुमुक्तम् ।
उतो इति । कविम् । पुरुऽभुजा । युवम् । ह । कृपमाणम् । अकृणुतम् । विऽचक्षे ॥ १४ ॥

**स्कन्द०** आस्नः आस्यात् वृकस्य वर्तिकाम् नाम चटकाम् अभीके सङ्ग्रामनामैतत् ( तु. निघ २,१७ ) वृकेण सहास्याः सङ्ग्रामे । वृकेण ग्रस्यमानां सतीमित्यर्थः । युवम् हे नरा! नासत्या! अमुमुक्तम् मोचितवन्तौ । तदेतत् कुत्सेनाप्युक्तम् 'याभिर्वर्तिकाम् ( ऋ १, ११२, ८ ) इति । किञ्च उतो कविमित्यादि । अत्रेतिहासमाचक्षते—'कण्व ऋषिरन्धोऽश्विनौ तुष्टाव । तस्याश्विनौ चक्षुर्ददतुः' इति । तदेतदिहोच्यते । उतो अपि च कविम् मेधाविनं कण्वम् हे पुरुभुजा! युवम् ह-शब्दः पदपूरणः । कृपमाणम् 'कृपायति,[3] कृपण्यति' ( निघ ३,१४ ) इत्यर्चतिकर्मसु पाठात्, 'कृपण्युः' ( निघ ३,१६ ) इति स्तोतृनामसु च पाठात् कृपिः स्तुत्यर्थ इति गम्यते । स्तुवन्तम् अकृणुतम् कृतवन्तौ विचक्षे विविधाय दर्शनाय । अन्धं सन्तं चक्षुःप्रदानेन दर्शनसमर्थं[4] कृतवन्तावित्यर्थः । तदेतत् मन्त्रान्तरेऽपि कक्षीवान् वक्ष्यति 'युवं कण्वायापिरिप्ताय' (ऋ १,११८,७) इति । कुत्सेनाप्युक्तम् 'याभिः कण्वं प्र सिषासन्तम्' (ऋ १,११२,५) इति ॥ १४ ॥

**वेङ्कट०** वृकेण सह वर्त्तिकायाः सङ्ग्रामे तां वृको जग्राह । अथ [5]वृकस्य आस्यात्[5] तां[6] मोचितवन्तौ इति । अपि च कविम् उशनसः पितरम् अन्यं वा एवंनामानं[7] स्तुवन्तं दर्शनाय अकृणुतम् इति[8] ॥ १४ ॥

---

१-१. नास्ति अ. २-२. स्त्रीवद् ह्रीमती कु. ३. कृपा मूको. ४. °र्शनवन्तं अ. ५-५. वृकास्यात् वि[२] अ[२]. ६. तं वि[१] लपं. ७. वैल्वनामानं वि[२,३] ल अ[१,२]. ८. नास्ति कु.

**मुद्गल०** वर्तिका चटकसदृशस्य पक्षिणः स्त्री ताम् अरण्ये वर्तमानेन शुना ग्रस्तां पुरा किलाऽश्विनावमोचयताम् । तदेतदाह । हे नरा! नेतारौ! नासत्या! अश्विनौ! युवम् युवाम् अर्भाके अभिगते वृकवर्तिकयोः सङ्ग्रामे वृकस्य विकर्तकस्य[1] शुनः आस्नः आस्यात् वर्तिकाम् चटकसदृशीम् अमुमुक्तम् अमोचयतम् । उतो अपि च हे पुरुभुजा! बहूनां पालकावश्विनौ! युवम् ह युवां खलु कृपमाणम् स्तुतिं कुर्वाणं कविम् एतन्नामानं विचक्षे विशेषज्ञाने समर्थम् अकृणुतम् अकुरुतम् । ह प्रसिद्धौ ॥ १४ ॥

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥ १५ ॥

चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य । परिऽतक्म्यायाम् ।
सद्यः । जङ्घाम् । आयसीम् । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तम् ॥ १५ ॥

**स्कन्द०** चरति गच्छति येन तत् चरित्रम् जङ्घा इहाभिप्रेता । हि-शब्दश्च पदपूरणः । गमनसाधनं जङ्घालक्षणम् वेरिव पक्षिण इव पर्णम् पिच्छम् अच्छेदि शत्रुभिः विश्पलायाः छिन्नमासीत् । आजा आजौ सङ्ग्रामे खेलस्य खेलनाम्नो राज्ञः । परितक्म्यायाम् सेनायां वर्तमानायाम् तत्र युवामेव सद्यः तस्यामेव वेलायां जङ्घाम् अन्याम् आयसीम् लोहमयीम् विश्पलायै विश्पलानाम्न्यै स्त्रियै । धने हिते निमित्ते एषा सप्तमी । प्रयोजनस्य च[2] निमित्तत्वेन विवक्षा । धनाय हिताय । सर्तवे गन्तुम् । हितं[3] धनं प्राप्तुं योऽनया प्रक्रान्तः सङ्ग्रामः तत्र गमनस्याव्याघातार्थमित्यर्थः । प्रत्यधत्तम् प्रतिनिहितवन्तौ स्थः । कृतवन्तावित्यर्थः ॥ १५ ॥

**वेङ्कट०** खेलनाम्नो राज्ञः[4] युद्धे गच्छन्त्यां विश्पलायां तस्याः[5] चरित्रं जघनप्रदेशे[6], पक्षिणः पर्णम् इव व्याधैः, शत्रुभिः अच्छेदि । अथ तस्याः हितम् धनम् [7]प्रति सरणाय[7] आयसीम् जङ्घां तस्यै विश्पलायै तदानीम् एव प्रति अधत्तम् इति ॥ १५ ॥

**मुद्गल०** अगस्त्यपुरोहितः खेलो नाम राजा । तस्य सम्बन्धिनी विश्पला नाम स्त्री सङ्ग्रामे शत्रुभिश्छिन्नपादाऽऽसीत् । पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्य अयोमयपादं समधत्ताम् । तदेतदाह । आजा आजौ सङ्ग्रामेऽगस्त्यपुरोहितस्य खेलस्य सम्बन्धिन्या विश्पलाख्यायाः चरित्रम् चरणम् वेरिव पर्णम् वेः पक्षिणः पतत्रमिव अच्छेदि हि पुरा छिन्नमभूत् खलु । हे अश्विनौ युवाम् अगस्त्येन स्तुतौ सन्तौ परितक्म्यायाम् परितक्म्या रात्रिः तस्याम् आगत्य सद्यः तदानीमेव हिते शत्रुभिः निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्तुं गन्तुम् विश्वलायै आयसीमयोमयीं जङ्घां जङ्घोपलक्षितं पादम् प्रत्यधत्तम् सन्धानमेकीकरणं कृतवन्तावित्यर्थः ॥ १५ ॥

इति प्रथमाष्टके अष्टमाध्याये दशमो वर्गः ॥

शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥ १६ ॥

---

१. विवर्तिकस्य मूको. २. नास्ति कु. ३. नास्ति अ. ४. °ज्ञः य वि[1] अ[2]. ५. तस्य वि[2], ६. जङ्घाप्रदेशं कु. ७-७. °तिसरेण वि[1] अ[2].

शतम् । मेषान् । वृक्ये । चक्षदानम् । ऋज्रऽअश्वम् । तम् । पिता । अन्धम् । चकार ।
तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अनर्वन् ॥ १६ ॥

**स्कन्द०** '[1]ऋज्राश्वं तं[1] पिता अन्धम् इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यं युवयोः स्वभूता कशा वृकी भूत्वोपतस्थे तम् । शतम् मेषान् । एकञ्चेति वाक्यशेषः । कुत एतत् । 'ऋज्राश्वः शतमेकं च मेषान्' ( ऋ १, ११७, १८ ) इति मन्त्रान्तरे दर्शनात् । वृक्ये वृक्या आहारार्थम् । चक्षदानम् क्षदिरत्र विशसनार्थः । विशसन्तम् ऋज्राश्वम् नाम राजपुत्रं पिता शापेन अन्धम् चकार । तस्मै अक्षिणी हे नासत्यौ! विचक्षे विविधं दर्शनाय[2] आ अधत्तम् । हे दस्रा! भिषजौ! वैद्यभूतौ! । अनर्वन् अर्तेर्गत्यर्थस्येदं रूपम् । अन्यं प्रत्याश्रिततया यो न गतः सोऽनर्वा । व्यत्ययेन चात्रैकवचनम् । अनर्वणी[3] अनन्याश्रिते स्वायत्ते । पित्रा शापेनापनेतुमशक्ये इत्यर्थः । तदेतत् कुत्सेनाप्युक्तम् 'याभिः शचीभिर्वृषणा' ( ऋ १,११२, ८ ) इति ॥ १६ ॥

**वेङ्कट०** पौराणां मेषान् गृहीत्वा लीलार्थम्[4] वृक्ये[5] विशसन्तम् ऋज्राश्वम् तम् पिता पौरहितार्थम्[6] अन्धं चकार । तस्मै दर्शनाय अनर्वणी अप्रत्यृते शीघ्रगमने सूक्ष्मदर्शने अक्षिणी[7] आधत्तम् इति[8] ॥ १६ ॥

**मुद्गल०** वृषागिरः पुत्रः ऋज्राश्वो नाम राजर्षिः । तस्य समीपेऽश्विनोर्वाहनभूतो रासभो वृकी भूत्वात-स्थे । स च तस्या आहारार्थम् एकोत्तरशतसङ्ख्याकान् पौरजनानां मेषान् शकलीकृत्य प्रददौ । एवं पौराहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनौ अस्माद्वा-हननिमित्तमस्याऽऽन्ध्यं जातमिति जानन्तौ तस्मै अक्षिणी प्रायच्छताम् इति । तदेतदाह । य ऋज्राश्वः शतम् शतसंख्याकान् मेषान् वृक्ये आत्मना पोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् । तम् चक्षदानम् क्षदतिरत्तिकर्मा अत्र शकलीकरणार्थः । शकलीकृत्य दत्तवन्तम् ऋज्राश्वम् पिता शापेन अन्धम् दृष्टिहीनम् चकार कृतवान् । हे नासत्या! सत्यस्वभावौ! दस्रा! दर्शनीयौ! भिषजौ! देवानां वैद्यभूतौ! अश्विनौ! अनर्वन् अनर्वणी द्रष्टव्यं प्रति पितृशापाद् गमनरहिते अक्षी चक्षुषी विचक्षे विविधं द्रष्टुं समर्थे तस्मै ऋज्राश्वाय आ अधत्तम् अकुरुतम् ॥ १६ ॥

## आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती ।
## विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ॥ १७ ॥

आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयन्ती ।
विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः । सम् । ऊँ इति । श्रिया । नासत्या । सचेथे इति ॥ १७ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'सूर्यस्य दुहितरं देवा वरयामासुः । त ऊचुः आजिं धावामः । यो नो जेष्यति तस्येयं भविष्यतीति । तामश्विनौ जिग्यतुः । सा जिताश्विनोः रथमारुरोह' इति । तदेतदिहोच्यते । वां रथं दुहिता सूर्यस्य । कार्ष्मेव क्रियते तदिति कार्ष्मं, शुभाशुभलक्षणं कर्म ।

---

१-१. नास्ति अ. २. नास्ति अ. ३. °र्वणि कु. ४. लीनार्थं वि[1] लपं. ५. वृक्यै कु. ६. नास्ति वि[1] अ[2]. ७. अक्षी वि[1] अ[2]. ८. नास्ति कु.

तद्यथा कर्तारमातिष्ठति एवम् आ अतिष्ठत् आस्थितवती । आरूढेत्यर्थः । अर्वता 'अर्वा' ( निघ १, १४ ) इत्यश्वनाम, सामर्थ्याच्चेहान्तर्णीतमत्वर्थम् । अश्ववता रथेन जयन्ती व्यत्ययेनायं भूतकाले कर्मणि च शतृप्रत्ययः । जिता सती । तां चारोहन्तीं विश्वे सर्वे देवाः अनु अमन्यन्त अनुमोदितवन्तः हृद्भिः हृदयैः । तस्यां च भार्यायां सत्यां श्रिया लक्ष्म्या हे नासत्या! सम् उ सचेथे उकारोऽत्र पदपूरणः । शप् च कर्मणि व्यत्ययेन । सम्यक् सेव्येथे । युवां श्रीमन्तौ जातौ स्थ इत्यर्थः ॥ १७ ॥

ङ्कट० कार्ष्मशब्दः काष्ठावचनः । यथा[1] आजिं धावन् शीघ्रं काष्ठाम् आतिष्ठति एवं भवद्भ्यां शीघ्रैः अश्वैः स्वयंवरे जीयमाना आजिं[2] धावद्भिः सूर्यस्य दुहिता युवयोः रथम् आ अतिष्ठत् । तच्च भवतोः बलं दृष्ट्वा स्वयंवरार्थम् आगताः विश्वे देवाः हृदयैः एव[3] अनु अमन्यन्त । तदानीं जयश्रिया सह संयुक्तौ[4] भवथ इति[3] ॥ १७ ॥

मुद्गल० 'सविता दुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत् । तां सूर्यां सर्वे देवा वरयामासुः । तेऽन्योन्यमूचुः आदित्यम् अवधिं कृत्वा आजिं धावाम, योऽस्माकं मध्ये उज्जेष्यति तस्येयं भविष्यतीति । तत्राश्विनावुदजयताम् । सा च सूर्या जितवतोस्तयोः रथम् आरुरोह' ( तु. ऐब्रा ४, ७ ) इतीदमाख्यानम् । हे अश्विनौ ! वाम युवयोः रथम् कार्ष्मेव कार्ष्मशब्दः काष्ठवाची । यथा काष्ठम् आजिधावनस्यावधितया निर्दिष्टं लक्ष्यम् आशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति । एवं सर्वेभ्यो देवेभ्यः पूर्वम् अर्वता शीघ्रम् अवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्याम् जयन्ती जीयमाना सूर्यस्य सवितुः दुहिता आ अतिष्ठत् आरूढवती । विश्वे सर्वे इतरे देवाः एतदारोहणस्थानं हृद्भिः हृदयैः अनु अमन्यन्त अन्वजानन् । तदानीं हे नासत्या! अश्विनौ! श्रिया ऋक्सहस्रलाभरूपया सम्पदा युवाम् सम् उ सचेथे सङ्गच्छेथे ॥ १७ ॥

यद्यातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ १८ ॥

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता ।
रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च । शिंशुमारः । च । युक्ता ॥ १८ ॥

स्कन्द० यत् यदा अयातम् गतवन्तौ स्थः । दिवोदासाय दिवोदासार्थम् । शम्बरवधे दिवोदासस्य साहाय्यं कर्तुमित्यर्थः । तदेतत् कुत्सेनाप्युक्तम् 'दिवोदासं शम्बरहत्ये' (ऋ १,११२,१४) इति । वर्तिः वर्तन्या मार्गेण । भरद्वाजाय भरद्वाजस्यार्थाय । भरद्वाजाय धनकामाय स्तुवते धनं दातुमित्यर्थः । हे अश्विनौ! यदेति वचनात्तदेत्यध्याहार्यम् । तदा हयन्ता गतिकर्मायम् । गच्छन्तौ युवाम् । रेवत् धनसंयुक्तम् । उवाह ऊढवान् । यद्दिवोदासीयेभ्यो योद्धृभ्यः भरद्वाजाय च दास्यते धनं तेन सह युवामूढवानित्यर्थः । सचनः सेव्यः । वाम् युवयोः स्वभूतः रथः[5] ।

---

१. नास्ति वि[1] अ[1]; यदा अ[1,2]. २. जीवं वि[1] अ[2]. ३. नास्ति कु. ४. संयुक्ता वि[1] अ[1].
५. नास्ति अ.

तदैव च वृषभः च शिंशुमारः च युक्ता वृषभो बलीवर्दः। शिंशुमारो नाम उदकचरो ग्राहविशेषः। तौ तस्मिन् रथे युवाभ्यां नियुक्तावास्ताम् ॥ १८ ॥

**वेङ्कट०** यदा युवां दिवोदासं रक्षितुं मार्गगमनाय[1] अयातम् [2]भरद्वाजकुलजाय आहूयमानौ[2]। तदानीं युवयोः सचनः सेव्यः रथः धनयुक्तम् वाम्[3] उवाह। तदानीं तस्मिन् रथे वाहार्थम् ऋषभः च शिंशुमारः च युक्ताविति[†] ॥ १८ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! हयन्ता स्तुतिभिराहूयमानौ युवाम् भरद्वाजाय सम्भ्रियमाणहविर्लक्षणान्नाय[4] यजमानाय दिवोदासाय एतत्संज्ञाय राजर्षये अभीष्टं फलम् दातुम् वर्तिः तदीयं गृहम् यत् यदा अयातम् अगच्छतम्। तदानीम् रेवत् धनयुक्तमन्नम् वाम् युवयोः सचनः सेवनो रथः उवाह तस्मै दिवोदासाय प्रापयामास। अपि च तस्मिन् रथे वृषभः अनड्वान् शिंशुमारः ग्राहश्च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय युक्ता वाहनतया संयुक्तावास्ताम्। च पूरणः ॥ १८ ॥

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥ १९ ॥

रयिम्। सुऽक्षत्रम्। सुऽअपत्यम्। आयुः। सुऽवीर्यम्। नासत्या। वहन्ता।
आ। जह्नावीम्। सऽमनसा। उप। वाजैः। त्रिः। अह्नः। भागम्। दधतीम्। अयातम् ॥ १९ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'जह्नोर्भार्या धनादिकामा सोमेनायजत्। तस्यै अश्विनावागत्य धनादीनि ददतुः' इति। तदेतदिहोच्यते रयिमित्यादिना। रयिम् धनम्। सुक्षत्रम् क्षत्रमित्यपठितमपि बलनाम। सुबलम्। शोभनेनासुरादिदुष्टजननिरासपटुना बलेन सहितमित्यर्थः। स्वपत्यम् शोभनैश्चापत्यैः सहितम्। आयुः अन्नं च अथवा जीवितं च। सुवीर्यम् शोभनं च वीर्यम्। हे नासत्यौ! आ वहन्ता प्रापयन्तौ। ददतावित्यर्थः। जह्नावीम् जह्नुशब्दस्यायं 'मनोरौ वा' ( पा ४,१,३८ ) इत्यौकारः स्त्रीप्रत्ययश्च छान्दसत्वात्। जह्नोर्भार्या जह्नावी। अथवा जह्नोरपत्यं जाह्नवी। तस्य वा[5] प्रजा जाह्नवी सती जह्नावीत्युच्यते। प्रथमद्वितीययोरक्षरयोः स्वरव्यत्ययश्छान्दसत्वात्। जह्नोः प्रजां तां बलाकाश्वकुशिकगाधिविश्वामित्रप्रभृतिकामित्यर्थः। समनसा समानेन चित्तेन। तुल्यचित्तौ सन्तावित्यर्थः। वाजैः अन्नैः हविराख्यैर्निमित्तभूतैः। त्रिः एकस्यैव अह्नः प्रातस्सवने माध्यन्दिने सवने तृतीयसवने च। भागम् सोमस्य सामर्थ्यात्। दधतीम् युवाभ्यां ददतीम्[6] उप अयातम् उपागतवन्तौ युवाम् ॥ १९ ॥

**वेङ्कट०** रयिम् शोभनबलं शोभनापत्यम् अन्नम् सुवीर्यम् च नासत्यौ! प्रयच्छन्तौ[7] जह्नोः अपत्यभूतां प्रजां बलाकाश्वकुशिकविश्वामित्रप्रभृतिम्[8] एकचित्तौ अन्नैः सह उपागच्छतम् अह्नः त्रिः युवाभ्यां हविः प्रयच्छन्तीम् इति[†] ॥ १९ ॥

---

१. मार्गे गमनाय कु. २-२. °ल जाताय आहू° कु; °कुलजातायाभूषमानौ वि[1] अ[1]. † आभूयमानौ वि[1] लपं. ३. °क्तौ कु. ४. °लक्षणाय मूको. ५. नास्ति मूको. ६. दध° अ. ७. °यच्छत्यौ वि[1] अ[1]. ८. बलाकाश्वकु° वि[1,2] कु अ[1] लपं.

**मुद्गल०** हे नासत्या! अश्विनौ! सुक्षत्रम् शोभनबलम् रयिम् धनम् स्वपत्यम् शोभनैः पुत्रादिभिरुपेतम् सुवीर्यम् शोभनवीर्योपेतम् आयुः अन्ननामैतत् ( तु. निघ २,७ )। एवंगुणविशिष्टम् अन्नं च उप वहन्ता धारयन्तौ युवाम् समनसा समानमनस्कौ सन्तौ जह्नावीम् जह्नोर्महर्षेः सम्बन्धिनीं प्रजाम् आ अयातम् आभिमुख्येनागच्छतम्। कीदृशीम्। वाजैः हविर्लक्षणैरन्नैरुपेताम् अह्नः अत्राहःशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते। तस्य प्रातःसवनादिरूपेण त्रिः त्रिधा विभक्तम् भागम् अंशम् दधतीम् बिभ्रतीम्। अनुसवनं हविर्भिर्यजमानामित्यर्थः ॥ १९ ॥

## परि॑विष्टं जाहु॒षं वि॒श्वत॑ः सीं सु॒गेभि॒र्नक्त॑मूहथू॒ रजो॑भिः ।
## वि॒भि॒न्दुना॑ नासत्या॒ रथे॑न॒ वि पर्व॑ताँ अजर॒यू अ॑यातम् ॥ २० ॥

परि॑ऽविष्टम् । जा॒हु॒षम् । वि॒श्वत॑ः । सी॒म् । सु॒ऽगेभि॑ः । नक्त॑म् । ऊ॒ह॒थुः॒ । रज॑ःऽभिः ।
वि॒ऽभि॒न्दुना॑ । ना॒स॒त्या॒ । रथे॑न । वि । पर्व॑तान् । अ॒ज॒र॒यू॒ इति॑ । अ॒या॒त॒म् ॥ २० ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'जाहुषो नाम ऋषिर्वृद्धो वृद्धया भार्यया वृद्धैश्च पुत्रपौत्रादिभिः परिवृतः देवानियाज। तं दृष्ट्वा असुरास्तुङ्गैः पर्वतैः परिक्षिप्ते मरुदेशे[1] प्रचिक्षिपुः। स ततः प्रवृद्धत्वात् स्वयं निर्गन्तुमशक्नुवन् अश्विनौ महाकारुणिकौ तुष्टाव। तमश्विनावागत्य एकयैव राज्या अश्वेन रथेन तान् पर्वतानतिक्रामयाञ्चक्रतुः' इति। तदेतदिहोच्यते परिविष्टम् इत्यादिना। परिशब्दोऽत्र विश्वतः इत्येतेन पौनरुक्त्यप्रसङ्गात् धात्वर्थानुवादी। विषिर्व्याप्त्यर्थः। व्याप्तं जरया जाहुषम् नामर्षिं विश्वतः सर्वतः स्वतः पुत्रतो दारतश्च। सपुत्रदारं वृद्धमित्यर्थः। सीम् इति पदपूरणः। सुगेभिः सुगमनैरश्वैः। नक्तम् रात्रौ ऊहथुः ऊढवन्तौ युवाम्। रजोभिः रजश्शब्दोऽत्र तेजोवचनः[2] अन्तर्णीतमत्वर्थश्च तेजस्विभिः। शीघ्रगामिभिरित्यर्थः। विभिन्दुना पर्वतभेदनसमर्थेन हे नासत्या! रथेन तुङ्गानपि पर्वतान् हे(?) अजरयू युशब्दोऽत्र तद्वदर्थे 'अश्वयुर्गव्यू रथयुः' ( ऋ १,५१,१४ ) इति यथा। अजरावन्तौ। जरारहितावित्यर्थः। वि अयातम् यातिरत्रान्तर्णीतण्यर्थः। विगमितवन्तौ युवाम्। अतिक्रमितवन्तावित्यर्थः[3] ॥ २० ॥

**वेङ्कट०** विश्वतः परिगृह्यावष्टभ्यासुरैः पर्वतैः[4] परिवृतम् जाहुषम् नाम देवानां यजमानं सुगमैः मार्गैः नक्तम् ऊहथुः। तदानीं पर्वतानां विभेत्रा रथेन पर्वतानां मध्ये जरारहितौ अजीर्णौ सन्तौ गतवन्ताविति[5] ॥ २० ॥

**मुद्गल०** जाहुषो नाम कश्चित् राजा। विश्वतः सर्वतः परिविष्टम् शत्रुभिः परिवृतं तम् जाहुषम् राजानं हे नासत्या! अश्विनौ अजरयू जरारहितौ नित्यतरुणौ युवाम् विभिन्दुना विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन नक्तम् रात्रौ सुगेभिः सुष्ठु गन्तुं शक्यैः रजोभिः रञ्जकैर्मार्गैः ऊहथुः तस्मात् शत्रुसमूहात् निरगमयतम्[6]। सीम् पूरणम्। निर्गतेन तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् वि अयातम् विशेषेण अगच्छतम् ॥ २० ॥

इति प्रथमाष्टके अष्टमाध्याये एकादशो वर्गः ॥

---

१. मेरुप्रदेशे अ. २. नास्ति अ. ३. अतिक्रामि° कु. ४. परिवृतैः वि[1] अ[2]. ५. °वन्तौ कु.
६. °गच्छतम् मूको.

एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥ २१ ॥

एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना । सनये । सहस्रा ।
निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥ २१ ॥

**स्कन्द०** एकस्याः[1] व्यत्ययेनात्र स्त्रीलिङ्गता सप्तम्यर्थे च षष्ठी । एकस्मिन् वस्तोः अह्नि । यस्मिन्नेवाहूतौ स्थस्तस्मिन्नेवाह्नीत्यर्थः । आवतम् । अवतिर्गत्यर्थः । गतवन्तौ युवाम् रणाय सङ्ग्रामार्थम् । सङ्ग्रामेऽस्य साहाय्यं कर्तुमित्यर्थः । वशम् नाम राजानं प्रति हे अश्विना! सनये लाभाय । सहस्रा षष्ठीबहुवचनस्यायमाकारः । सहस्रसङ्ख्याकानां धनानाम् । तदेतत् कुत्सेनाप्युक्तम् 'याभिर्वशम्' ( ऋ १,११२,१० ) इति । किञ्च निरहतमित्यादि । अत्रेतिहासमाचक्षते — 'पृथुश्रवा नाम राजा सन्ततैर्बहुभिर्दुर्भिक्षैः पीड्यमानोऽश्विनावियाज तुष्टाव च । तस्याश्विनौ तु महत्या वृष्ट्या तान्यपनिन्यतुः' इति । तदेतदिहोच्यते निरहतम् इत्यादिना । निर्हतवन्तौ युवाम् दुच्छुनाः दुर्भिक्षा उच्यन्ते ताः । इन्द्रवन्ता इन्द्रसहितौ सन्तौ । इन्द्रेण सह वृष्टिं प्रदायेत्यर्थः । पृथुश्रवसः राज्ञः हे वृषणौ! वर्षितारौ! अरातीः दानवर्जिताः । यासु कश्चित् कस्मैचित् किंचिद् अपि दातुं न शक्नोतीत्यर्थः ॥ २१ ॥

**वेङ्कट०** एकस्य अह्नः कृतौ[2] यो रणः तस्य यथा वशो राजा सहस्रं धनं लभते एवं तं ररक्षतुः[3] इति[4] । सहस्रा इति चतुर्थ्येकवचनस्याऽऽकारः । किञ्च पृथुश्रवसः तस्य निर्हतवन्तौ[5] उपद्रवकारिणः शत्रून् हे वर्षितारौ! कामानाम् इन्द्रसहितौ[6] इति[4] । अथवा पृथुश्रवाः च नाम अपरः । तस्य शत्रूंश्च निरहतम् इति[4] ॥ २१ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! वशम् एतत्संज्ञमृषिम् एकस्याः वस्तोः एकस्याह्नः रणाय रमणीयाय सहस्रा सहस्रसङ्ख्याय सनये धनलाभाय आवतम् अरक्षतम् । स ऋषिः प्रत्यहं यथा सहस्रसङ्ख्यं धनं लभते तथा रक्षितवन्तावित्यर्थः । अपि च हे वृषणौ! कामानां वर्षितारावश्विनौ! इन्द्रवन्ता इन्द्रेण संयुक्तौ युवाम् दुच्छुनाः दुष्टसुखा दुःखस्य कर्त्रीः पृथुश्रवसः विस्तीर्णयशसः अरातीः शत्रून् निरहतम् निःशेषेणावधिष्टम् ॥ २१ ॥

शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ २२ ॥

शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः ।
शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥ २२ ॥

---

१. नास्ति कु. २. कृते वि[3] अ[2]. ३. रक्षतुः वि[3] अ[2]. ४. नास्ति कु. ५. निहत° कु अ[1] वि[1]. ६. °सहितं वि[3] अ[2].

**स्कन्द०** अत्रेतिहासमाचक्षते—'शरो नाम ऋषिः। स मरुदेशे गच्छन् पिपासितः सन् सुदूरतोयं कूपं ददर्श। स ततः पातुमशक्नुवन् अश्विनौ तुष्टाव। तस्याश्विनौ सुलभ्यं चक्रतुः' इति। तदेतदिहोच्यते शरस्य चित् इत्यादिना। शरस्यापि आर्चत्कस्य ऋचत्कनाम्न ऋषेः पुत्रस्य। अवतात् 'अवतः' (निघ ३, २३) इति कूपनाम। सप्तम्यर्थे चात्र पञ्चमी कूपे। नीचात् द्वितीयैकवचनस्यायं 'सुपां सुलुक्' (पा ७, १, ३९) इति आदादेशः। नीचम्। सुदूरवर्तित्वाद् ग्रहीतुमशक्यमित्यर्थः। उच्चा अयमपि द्वितीयैकवचनस्याकारः। उच्चम्। हस्तग्राह्यमित्यर्थः। आ चक्रथुः आभिमुख्येन कृतवन्तौ स्थः। पातवे पानार्थम्। वाः उदकनामैतत् (तु. निघ १,१२)। उदकम्। शयवे चित् शयवे राज्ञे। हे नासत्यौ! शचीभिः स्वाभिरतिशयवतीभिः प्रज्ञाभिः कर्मभिर्वा। जसुरये। जसि ताडने। ताडयित्रे शत्रूणाम्। ताडिताय वा। गोः प्रसवनिवृत्त्या अधेनुत्वापत्त्या च पीडितायेत्यर्थः। स्तर्यम् निवृत्तप्रसवा स्तरीरुच्यते, ताम् पिप्यथुः आप्यायितवन्तौ। धेनुकां[1] कृतवन्तावित्यर्थः। काम्। उच्यते। गाम्। तदेतत् परस्तादपि पुनर्वक्ष्यति 'अधेनुं दस्रा' (ऋ १,११७,२०) इति। कुत्सेनाप्युक्तम् 'याभिर्धेनुम्' (ऋ १,११२,३) इति ॥ २२ ॥

**वेङ्कट०** तृषितस्य ऋचत्कपुत्रस्य[2] शराख्यस्य नीचोदकात् कूपात् पानाय जलम् उच्चैः आ चक्रथुः[3] अश्विनौ!। तथा शयवे हे नासत्यौ! कर्मभिः उपक्षीणाय क्षुधिताय निवृत्तप्रसवाम् गाम् आप्यायितवन्ताविति[4] ॥ २२ ॥

**मुद्गल०** आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य चित् एतत्संज्ञस्यापि स्तोतुः पिपासितस्य पातवे पानार्थम् नीचात् नीचीनात् अवतात् कूपात् उच्चा उच्चैरुपरिष्टात् वाः उदकं हे अश्विनौ! युवाम् आ चक्रथुः आभिमुख्येन कृतवन्तौ तथा हे नासत्या! अश्विनौ! शचीभिः युष्मदीयैः कर्मभिः परिचरणैः जसुरये श्रान्ताय शयवे चित् शयुनाम्ने ऋषये स्तर्यम् निवृत्तप्रसवाम् गाम् अग्निहोत्रार्थस्य पयसो दोग्ध्रीम् पिप्यथुः पयसा युवाम् आपूरितवन्तौ ॥ २२ ॥

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥ २३ ॥

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः ।
पशुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् । ददथुः । विश्वकाय ॥ २३ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'विश्वको नाम राजर्षिः। तस्य बालः पुत्रः प्रमादादुपननाश। स्नेहाद्विपत्त्याशङ्कया तस्य पालनं पुनश्च दर्शनमिच्छन् अश्विनौ तुष्टाव। तस्मै तमानीयाश्विनौ ददतुः' इति। तदेतदिहोच्यते अवस्यते इत्यादिना। अवः पालनम्, तत् कामयमानाय। स्तुवते कृष्णियाय अपत्येऽयं घप्रत्ययो द्रष्टव्यः। कृष्णनाम्न ऋषेः पुत्राय। ऋजूयते ऋजु न्याय्यम्, तदिच्छते। साधुवृत्तायेत्यर्थः। हे नासत्यौ! शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा। पशुम् न नष्टमिव दर्शनाय

१. °नुतां मूको. २. ऋचीक° कु. ३. °क्रतुः ल वि''३ अ''२. ४. °न्तौ कु.

इवशब्दोऽत्र नेत्यनेन पौनरुक्त्याद् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' ( तु. या ७,३१ ) इति पदपूरणः। यथा पशुं नष्टं कश्चिदानीय कस्मैचिद्दर्शनाय दद्याद् एवम् विष्णाप्वम् नाम पुत्रं ददथुः दत्तवन्तौ युवाम् विश्वकाय ऋषये ॥ २३ ॥

**वेङ्कट०** रक्षणम् इच्छते स्तुवते कृष्णपुत्राय आर्जवम् इच्छते विश्वकनाम्ने[1] नासत्यौ! कर्मभिः नष्टम् इव पशुम् विनष्टम् विष्णाप्वम्[2] नाम पुत्रम्[3] दर्शनाय ददथुः इति[4]। इव इति पूरणो न इत्यनेन पौनरुक्त्यादिति[5] ॥ २३ ॥

**मुद्गल०** अवस्यते अवनं रक्षणम् आत्मन इच्छते स्तुवते स्तुतिं कुर्वते कृष्णियाय कृष्णो नाम कश्चित्, तस्य पुत्राय ऋजूयते आर्जवमिच्छते विश्वकाय एतत्संज्ञाय ऋषये हे नासत्या! अश्विनौ! युवाम् शचीभिः आत्मीयैः कर्मभिः विष्णाप्वम् विष्णाप्वं नाम विनष्टं पुत्रम् दर्शनाय दर्शनार्थम् ददथुः दत्तवन्तौ। दृष्टान्तः। पशुम् न नष्टम् इव एक उपमार्थीयः पूरकः। यथा कश्चिद् विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् ॥ २३ ॥

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्व१न्तः ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥ २४ ॥

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् । श्नथितम् । अप्ऽसु । अन्तरिति ।
विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् । उत् । निन्यथुः । सोमम्ऽइव । स्रुवेण ॥ २४ ॥

**स्कन्द०** दश रात्रीः नव च द्यून् दिवसान् अशिवेन शिवं सुखम्, ततोऽन्यदशिवं दुःखम्। तत्करत्वादत्रासुरा अशिवा उच्यन्ते। समूहाभिप्रायश्चैकवचनम्। दुःखकरेणासुरसमूहेन। अवनद्धम् नह बन्धने। बद्धम्। श्नथितम् ताडितम्। अप्सु अन्तः अपां मध्ये। विप्रुतम् विगतम्। रहितमित्यर्थः। केन। 'सं तं रिणीथो विप्रुतम्' ( ऋ १,११७,४ ) इति परस्ताद्दर्शनात् कर्मभिः। निश्चेष्टं सन्तम्। मृतकल्पमित्यर्थः। रेभम् नाम ऋषिम्। उदनि उदके। प्रवृक्तम् वृजी वर्जनेऽन्यत्र, इह तु सामर्थ्यान्निमज्जने। निमग्नम् उत् निन्यथुः ऊर्ध्वं नीतवन्तौ स्थः। उत्तारितवन्तावित्यर्थः। सोमम् इव स्रुवेण यथा कश्चित् स्रुवेण सोममुन्नयति तद्वत्। स्रुवेण च सोमस्योन्नयनाऽविधानात् स्रुवशब्देन कुतश्चित् सादृश्यात् चमसादिसोमपात्रमुच्यते। अथवा कठानामग्निहोत्रहोमः सोमेन ब्रह्मवर्चसकामस्य विधीयते। तदभिप्रायमेतदुपमानम्। तदेतत् कुत्सेनाप्युक्तम् 'याभी रेभम्' ( ऋ १,११२,५ ) इति ॥ २४ ॥

**वेङ्कट०** दश रात्रीः नव च[6] अहानि अशिवेन निगडेन बद्धम् अप्सु अन्तः अवनद्धम् निगूढं विप्लुतचित्तं रेभनामानम् उदके असुरैः इत्थम् [7]प्रवृक्तम् वृश्चतिः[7] छेदनकर्मा, इह तु हिंसार्थः। तम् उत् निन्यथुः, सोमम् इव स्रुवेण[8] सोमोऽप्यग्निहोत्रहविर्भवति ॥ २४ ॥

---

१. विष्वक[2] वि[1,2] अ[1] ल लपं; विश्वनाम्ने वि[3] अ[3]. २. विष्णापुं वि[3] अ[3]. ३. पुत्रस्य वि[1] लपं. ४. नास्ति कु. ५. पौनरुक्त्यं स्यात् वि[2] अ[1] कु. ६. नास्ति वि[3] अ[3]. ७-७. प्रयुक्त च इत्थं विवृश्चतिः वि[3] अ[3]. ८. °ण आह्वाता स्तुतिः वि[1] लपं.

**मुद्गल०** पुरा खलु रेभमृषिं पाशैर्बद्ध्वा असुराः कूपे कस्यचिद् दिवसस्य सायंकाले प्रचिक्षिपुः। स चाश्विनौ स्तुवन् दश रात्रीः नवाहानि च कूपमध्ये तथैवावतस्थे। दशमेऽहनि प्रातरश्विनौ तं कूपाद् उदतारयतामिति। तदाह। अप्सु कूपान्तर्वर्तमानासु अन्तः मध्येऽसुरैः पातितम् अशिवेन दुःखहेतुना दाम्ना अवनद्धम् बद्धम् श्नथितम् शत्रुभिर्हिंसितम् दश रात्रीः दशसङ्ख्याका निशाः नव द्यून् नवसङ्ख्याकानि अहानि च एतावन्तं कालं तत्रैव कूपेऽवस्थितम् अत एव उदनि उदके विप्रुतम् विप्लुतं व्याक्षिप्तसर्वाङ्गम् प्रवृक्तम् प्रवृञ्जनेन सन्तप्तं घर्ममिव व्यथया सन्तप्यमानम् एवंभूतम् रेभम् ऋषिं हे अश्विनौ! युवाम् उत् निन्यथुः तस्मात् कूपात् उन्नीतम् उत्तीर्णं कृतवन्तौ। दृष्टान्तः। सोममिव यथाग्निहोत्रहोमार्थम् अभिषुतं सोमरसं कूपसदृशेऽग्निहोत्रस्थालीमध्ये वर्तमानम् स्रुवेण अध्वर्युरुन्नयति तद्वत् ॥ २४ ॥

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः।
उत पश्यन्नश्नुवन् दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ २५ ॥

प्र। वाम्। दंसांसि। अश्विनौ। अवोचम्। अस्य। पतिः। स्याम्। सुऽगवः। सुऽवीरः।
उत। पश्यन्। अश्नुवन्। दीर्घम्। आयुः। अस्तम्ऽइव। इत्। जरिमाणम्। जगम्याम् ॥ २५ ॥

**स्कन्द०** वाम् युवयोः दंसांसि कर्माणि हे अश्विनौ! प्र अवोचम् प्रोक्तवानहम्। अतो ब्रवीमि। युष्मत्प्रसादेन अस्य। बुद्धिस्थस्याभिप्रेतस्य धनादेरयं प्रतिनिर्देशः। यदिदमस्मदभिलषितं धनादि अस्य पतिः स्वामी स्याम् भवेयमहम्। सुगवः शोभना गावो यस्य स सुगवः। छान्दसत्वादकारः समासान्तः। शोभनाभिर्गोभिरुपेतः सन्नित्यर्थः। सुवीरः शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतः। उत अपि च पश्यन् चक्षुषा। अनन्धश्च सन्नित्यर्थः। अश्नुवन् प्राप्नुवंश्च दीर्घम् आयुः। अस्तम् इव इत् इच्छब्दः पदपूरणः। यथा कश्चित् स्वगृहमनुद्विग्नो गच्छेत् तद्वत्। जरिमाणम् जरात्वम्। जरामित्यर्थः। जगम्याम् गच्छेयम् ॥ २५ ॥

**वेङ्कट०** इत्थम् प्र[1] अवोचम् युवयोः कर्माणि। सोऽहं शोभनगोयुक्तः शोभनवीरः[2] च[3] सन् अस्य उभयस्य स्वामी स्याम्। अपि च चक्षुषा अनन्धः सन् पश्यन् दीर्घम् च आयुः [4]प्र अश्नुवन्[4] स्वगृहम् इव अनुद्विग्नहृदयः सन् क्रमेण जराम् गच्छेयमिति[5] ॥ २५ ॥

**मुद्गल०** एवमनेन सूक्तेनाश्विनोर्महिमानं प्रशस्याधुना मन्त्रद्रष्टा स्वाभीष्टं प्रार्थयते। हे अश्विनौ! वाम् युवयोः दंसांसि पुराकृतानि कर्माणि प्रावोचम् इत्थम् उक्तवानस्मि। सोऽहम् सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरश्च भूत्वा अस्य राष्ट्रस्य पतिः अधिपतिः[6] स्याम् भवेयम्। उत अपि च पश्यन् अक्षिभ्यां पश्यन्। उपलक्षणमेतत्। सर्वैरिन्द्रियैः स्वस्वविषयसमर्थैः दीर्घम् वर्षशतरूपेणायतम् आयुः जीवितं च अश्नुवन् प्राप्नुवन् अहम् अस्तम् इव यथा गृहं स्वामी

---

१. नास्ति वि[1] लपं. २. °वीरस्य वि[1] अ[1]. ३. नास्ति वि[1] अ[1]. ४-४. प्राप्नुवन् वि[1] अ[1].
५. °च्छेयम् कु. ६. नास्ति मै[1].

निष्कण्टकं प्रविशति एवम् जरिमाणम् जराम् जगम्याम् कण्टकराहित्येन प्राप्नुयाम्। वृद्धः सन् चिरकालं निवसेयमित्यर्थः। इत् पूरणः ॥ २५ ॥

इति प्रथमाष्टके अष्टमाध्याये द्वादशो वर्गः ॥

## [ ११७ ]

मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम्।
बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ १ ॥

मध्वः। सोमस्य। अश्विना। मदाय। प्रत्नः। होता। आ। विवासते। वाम्।
बर्हिष्मती। रातिः। विऽश्रिता। गीः। इषा। यातम्। नासत्या। उप। वाजैः ॥ १ ॥

**स्कन्द०** मध्वः[१] मधुस्वादस्य सोमस्य अश्विना![१] हे अश्विनौ! मदाय मदार्थम्। मधुस्वादं सोमं पीत्वा मदिष्यथ इत्येवमर्थमित्यर्थः। प्रत्नः पुराणः होता नामर्त्विक्। अथवा कक्षीवान्नामर्षिः। [२]आत्मन एव[२] परोक्षरूपेण प्रथमपुरुषेण निर्देशः। आ विवासते परिचरति वाम् युवाम्। किञ्च बर्हिष्मती वेद्यां स्तीर्णेन बर्हिषा तद्वती। बर्हिषि सादितहविष्केत्यर्थः। रातिः दानं सवनीयपुरोडाशादेः। विश्रिता विविधमाश्रिता। मनसा चिकीर्षितेत्यर्थः। गीः स्तुतिश्च। एतत् ज्ञात्वा इषा अन्नेन सोमाख्येन निमित्तेन। सोमं पातुमित्यर्थः। यातं नासत्या! उप उपयातम् उपगच्छतं हे नासत्यौ! वाजैः अन्नैश्चरुपुरोडाशादिभिः। चरुपुरोडाशादीनि भक्षयितुमित्यर्थः। अथवा इषा वाजैरिति सहयोगलक्षणा तृतीया। अस्मभ्यं यद्देयमन्नं बलानि च तैः सह। तानि गृहीत्वोपगच्छतमित्यर्थः ॥ १ ॥

**वेङ्कट०** अश्विनौ! मधुसदृशेन सोमेन युवां मादयितुं पुराणः आह्वाता स्तुतिभिः[३] वाम्[४] परिचरति। किञ्च स्तीर्णेन बर्हिषा तद्वती अस्माकम् रातिः सोमस्य दानम्। एवम् विश्रिता विस्तीर्णा स्तुतिश्च। तौ युवामस्मान् अन्नेन बलैः च सह उपागच्छतमिति[५] ॥ १ ॥

**मुद्गल०** 'मध्वः' इति पञ्चविंशत्यृचं द्वितीयं सूक्तम्[६]। कक्षीवान् ऋषिः[६]। त्रिष्टुप् छन्दः[६]। अश्विनौ देवता[६] ॥

हे अश्विना! अश्विनौ! मध्वः मधुना माधुर्योपेतेन सोमस्य सोमेन मदाय युवयोर्मदार्थम् प्रत्नः चिरन्तनः होता होमनिष्पादको यजमानः वाम् युवाम् आ विवासते विवासतिः परिचरणकर्मा (तु. निघ ३,५)। आङ् मर्यादायाम्। यथाशास्त्रं परिचरति। अपि च रातिः दातव्यं हविः बर्हिष्मती आस्तीर्णेन बर्हिषा युक्तम्। युष्मदर्थं बर्हिष्यासादितमित्यर्थः। तथा गीः स्तुतिलक्षणा वाक् च विश्रिता ऋत्विक्षु समवेता। तैः स्तुतिरपि क्रियत इत्यर्थः। अतो हे नासत्या! सत्यवन्तावश्विनौ! इषा अस्मभ्यं दातव्येनान्नेन वाजैः बलैश्च सह युवाम् उप यातम् अस्मत्समीपं प्राप्नुतम् ॥ १ ॥

---

१. नास्ति मूको. २-२. आत्मानमेव मूको. ३. स्तुतिः वि[१] अ[२]. ४. वा वि[१] अ[२]. ५. °च्छतम् कु. ६. नास्ति मै[२]. † °ते मै[१].

**यो वा॑मश्विना॒ मन॑सो॒ जवी॑यान् र॒थः स्व॒श्वो॒ विश॑ आ॒जिगा॑ति ।**
**येन॒ गच्छ॑थः सु॒कृतो॑ दु॒रो॒णं तेन॑ नरा व॒र्तिर॒स्मभ्यं॑ यातम् ॥ २ ॥**

यः । वा॒म् । अ॒श्विना॒ । मन॑सः । जवी॑यान् । रथः॑ । सु॒ऽअश्वः॑ । विशः॑ । आ॒ऽजिगा॑ति ।
येन॑ । गच्छ॑थः । सु॒ऽकृतः॑ । दु॒रो॒णम् । तेन॑ । न॒रा॒ । व॒र्तिः । अ॒स्मभ्य॑म् । या॒त॒म् ॥ २ ॥

**स्कन्द०** यः वाम् युवयोः स्वभूतः हे अश्विनौ! मनसः सकाशात् जवीयान् वेगवत्तरो रथः स्वश्वः शोभनैरश्वैर्युक्तः विशः मनुष्यान् प्रति[1] आजिगाति आगच्छति। येन गच्छथः सुकृतः पुण्यकृतो यजमानस्य स्वभूतम् दुरोणम् गृहम्। तेन हे नरा! मनुष्याकारौ! वर्तिः वर्तन्या मार्गेण अस्मभ्यम् अस्मदर्थम्। अस्मान् प्रतीत्यर्थः। यातम् गच्छतम् ॥ २ ॥

**वेङ्कट०** अश्विनौ! यः[2] युवयोः मनसः अपि वेगवत्तरो रथः शोभनाश्वयुक्तः मनुष्यान् प्रति गच्छति, येन च यजमानस्य गृहम् प्रति[3] गच्छथः, तेन अस्मदर्थम् गमनमार्गम् प्रति आगच्छतमिति[4] ॥ २ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! वाम् युवयोः स्वभूतः मनसः जवीयान् मनसोऽप्यतिशयेन वेगवान् स्वश्वः शोभनाश्वः। एवंभूतो [5]यः रथः विशः प्रजा[5] आजिगाति आभिमुख्येन गच्छति। येन रथेन सुकृतः शोभनं यागं कुर्वतो यजमानस्य दुरोणम् देवयजनलक्षणं गृहम् गच्छथः। हे नरा! नेताराव-श्विनौ! तेन रथेन अस्मभ्यम् अस्माकम् वर्तिः वर्तनाधिकरणं गृहम् यातम् आगच्छतम् ॥ २ ॥

**ऋषिं॑ नरा॒वंह॑सः॒ पाञ्च॑जन्यमृ॒बीसा॒दत्रिं॑ मुञ्चथो ग॒णेन॑ ।**
**मि॒नन्ता॒ दस्यो॒रशि॑वस्य मा॒या अ॑नुपू॒र्वं वृ॑षणा चो॒दय॑न्ता ॥ ३ ॥**

ऋषि॑म् । न॒रौ॒ । अंह॑सः । पाञ्च॑ऽजन्यम् । ऋ॒बीसा॑त् । अत्रि॑म् । मु॒ञ्चथः॑ । ग॒णेन॑ ।
मि॒नन्ता॑ । दस्योः॑ । अशि॑वस्य । मा॒याः । अ॒नु॒ऽपू॒र्वम् । वृ॒ष॒णा॒ । चो॒दय॑न्ता ॥ ३ ॥

**स्कन्द०** ऋषिम् हे नरौ! अंहसः पापाद् दाहकत्वात्, विनाशकत्वादित्यर्थः। पाञ्चजन्यम् 'बाह्यो दैव्यः पाञ्चजन्यः' (तु. पावा ४,३,५८) इत्येवमयं हितेऽत्र ञ्यप्रत्ययो[6] द्रष्टव्यः। पञ्चभ्योऽपि जनेभ्यः गन्धर्वाः पितरो देवाः असुरा रक्षांसीत्येतेभ्यः निषादपञ्चमेभ्यो वा चतुर्भ्यो वर्णेभ्यो हितम्। पञ्चानां हि जनानां स्थितिकरी वृष्टिः, तस्या हेतुभूतो यज्ञः, तस्य कर्ता अत्रिरित्येवमस्य हितत्वम्। ऋबीसात् अग्निकूटात् अत्रिम् नाम मुञ्चथः मोचितवन्तौ स्थः। उद्धृतवन्तावित्यर्थः। गणेन सह। कस्य। सामर्थ्यादिन्द्रियाणाम्। अविनष्टसर्वाङ्गमित्यर्थः। मिनन्ता मीञ्[7] हिंसायाम्। दस्योः 'विजानीह्यार्यान् ये च दस्यवः' (ऋ १,५१,८) इत्यार्यप्रतियोगित्वदर्शनाद्दस्युशब्दोऽनार्यवचनः समूहाभिप्रायं चैकवचनम्। येनासावग्निकूटे प्रक्षिप्तः तस्यानार्यस्य असुरसमूहस्य अशिवस्य[8] मायाः शठप्रज्ञाः। उद्धरणाचोर्ध्वम् अनुपूर्वम् क्रियाविशेषणमेतत्। आनुपूर्व्येण यथायोग्य-मित्यर्थः। वृषणा! वर्षितारावित्यर्थः। तासुतास्वभिप्रेतफलासु अत्रिम् चोदयन्ता उपदेशादिना

---

१. प्रतिः कु. २. यौ वि[1] अ[1,2] कु. ३. नास्ति वि[1] ल लपं. ४. °च्छतम् कु. ५-५. त्रुटितम् मै[2]. ६. त्यप्र° मूको. ७. मीङ् मूको. ८. नास्ति अ.

प्रेरयन्तौ। तदेतत् कुत्सेनाप्युक्तम् 'तप्तं घर्मम्' ( ऋ १, ११२, ७ ) इति ॥ ३ ॥

**वेङ्कट०** ऋषिम्[1] नेतारौ पञ्चजनहितम्[2]। अत्रिर्हि[3] सूर्यम् अरोचयत्। तम्[4] ऋबीसात् अग्नेः अंहसः उपद्रवाद् यथा मुक्तो भवति एवम् सपुत्रपौत्रं सेन्द्रियं वा[5] अमुञ्चतम्[6]। हिंसन्तौ दस्योः उपक्षपयितुः असुरवर्गस्य नानाविधाः मायाः,[7] अनुक्रमेण तास्ताः तैः[8] कृताः प्रेरयन्ताविति[9] ॥ ३ ॥

**मुद्गल०** हे नरौ! नेतारौ! वृषणा! कामानां वर्षितारावश्विनौ! पाञ्चजन्यम् निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः, तेषु भवम्। स्वर्भानुना गृहीतममुं सूर्यं मोचयन्नत्रिः सर्वेषां हिताचरणात् तत्र भव इत्युच्यते। तादृशम् अत्रिम् ऋषिम् अंहसः पापरूपात् ऋबीसात् शतद्वारयन्त्रगृहेऽत्रेः पीडार्थम् असुरैः प्रक्षिप्तात् तुषाग्नेः सकाशात् गणेन इन्द्रियवर्गेण सह मुञ्चथः अमोचयतम्। किं कुर्वन्तौ। मिनन्ता शत्रून् हिंसन्तौ। दस्योः उपक्षपयितुः अशिवस्य दुःखकारिणोऽसुरस्य सम्बन्धिनीः तस्मिन् अत्रौ प्रयुक्ताः मायाः च अनुपूर्वम् आनुपूर्व्येण चोदयन्ता प्रेरयन्तौ निवारयन्तौ ॥ ३ ॥

**अश्वं न गूळ्हमश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु।**
**सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥ ४ ॥**

अश्वम्। न। गूळ्हम्। अश्विना। दुःऽएवैः। ऋषिम्। नरा। वृषणा। रेभम्। अप्ऽसु।
सम्। तम्। रिणीथः। विऽप्रुतम्। दंसःऽभिः। न। वाम्। जूर्यन्ति। पूर्व्या। कृतानि ॥४॥

**स्कन्द०** अश्वम् न इवात्यन्तशोभनं चोरापहृतं वा गूळहम् संवृतम्। अदृश्यतामापादितमित्यर्थः। हे अश्विनौ! दुरेवैः पापकामैरसुरैः ऋषिम् हे नरा! वृषणा रेभम् नाम[10] अप्सु अपां मध्ये। तम् तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यो युवामाजुहाव तम्। सम् रिणीथः रिणातिर्गतिकर्मा (तु. निघ २,१४)। सम्यग् गतौ स्थः विप्रुतम् विगतम्। रहितमित्यर्थः। दंसोभिः। निश्चेष्टं सन्तम्। मृतकल्पमित्यर्थः। तदेतत् परस्तादप्युक्तम् 'दश रात्रीः' ( ऋ १,११६,२४ ) इत्यादिना। न वाम् युवयोः जूर्यन्ति जीर्यन्ते। विनश्यन्तीत्यर्थः। पूर्व्या 'पूर्व्यम्'[11] ( निघ ३,२७ ) इति पुराणनाम। पुराणानि कृतानि कर्माणि ॥ ४ ॥

**वेङ्कट०** [12]अश्वम् इव अप्सु गूढम्† पापागमनैः असुरैः नेतारौ! अश्विनौ! रेभम् ऋषिम्‡ सहगतवन्तौ युवाम् असुरकर्मभिः¶ विप्लुतम्। न युवयोः कर्माणि[12] पूर्वकालकृतानि[13] कदाचन जीर्यन्ति। न विनश्यन्त्याश्चर्यभूतान्यृषिभिः धार्यमाणानीति[14] ॥ ४ ॥

**मुद्गल०** नरा! नेतारौ! वृषणा! कामानां वर्षकौ! हे अश्विना! अश्विनौ! दुरेवैः दुष्प्रापैरसुरैः अप्सु कूपस्थेषूदकेषु गूळ्हम् निगूढं निखातम् रेभम् ऋषिम् कूपादुन्नीय विप्रुतम् विश्लिष्टावयवं तम् अश्वम् न व्याधितमश्वमिव दंसोभिः आत्मीयैः भैषज्यरूपैः कर्मभिः सम् रिणीथः समधत्तम्।

---

१. ऋषीन् वि[1] लपं. २. °जनसहितम् वि[1] अ[2]. ३. अत्रिभिः वि[1] अ[2]. ४. तत्र वि[1] अ[2]. ५. युवां कु. ६. °तमिति वि[1,2] अ ल लपं. ७. नास्ति वि[1] अ[2]. ८. तेन वि[1] अ[2]. ९. °यन्तौ कु. १०. नामानं अ. ११. पूर्वम् कु. १२-१२. नास्ति वि[1] अ[2]. † गूळ्हम् वि[2] ल लपं. ‡ °षिम् सम् तम् वि[1,2] अ[1] ल लपं. ¶ सुकर्मभिः वि[2] कु; सुरकर्मभिः अ[1]. १३. °नि कदा वि[1] अ[2]. १४. °णाति कु.

सर्वैरवयवैरुपेतमकुरुतमित्यर्थः । वाम् युवयोः सम्बन्धीनि पूर्व्या चिरन्तनानि कृतानि कर्माणि न जूर्यन्ति न हि जीर्णानि भवन्ति ॥ ४ ॥

सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम् ।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥ ५ ॥

सुसुप्वांसम् । न । निःऽऋतेः । उपऽस्थे । सूर्यम् । न । दस्रा । तमसि । क्षियन्तम् ।
शुभे । रुक्मम् । न । दर्शतम् । निऽखातम् । उत् । ऊपथुः । अश्विना । वन्दनाय ॥ ५ ॥

**स्कन्द०** सुषुप्वांसम् न सुप्तमिव । कश्चित् निर्ऋतेः पृथिव्या एकदेशभूते । उपस्थे स्थाने । भूम्यामित्यर्थः । सूर्यम् न सूर्यमिव । हे दस्रा! तमसि क्षियन्तम् निवसन्तम् । कदा पुनः सूर्यः तमसि न्युषितवान् येनैवमुच्यते सूर्यमिव तमसि क्षियन्तमिति । उच्यते । 'यदा वृत्रो'[१] महत्तमस्ततान तच्च हत्वेन्द्रः सूर्यं दिव्यारोहयाञ्चकारेति । तदेतत् सव्येनोक्तम् 'वृत्रं यदिन्द्र शवसावधीः' ( ऋ १,५१,४ ) इति । शुभे शोभायै च । रुक्मम् न रुक्मो नामाभरणविशेषः । तमिव कश्चित् दर्शतम्[२] दर्शनीयम् । निखातम् सन्तम् उत् ऊपथुः उत्खातवन्तौ हे अश्विनौ! वन्दनाय द्वितीयार्थे चतुर्थी । वन्दनमृषिम् । यथा भूमौ सुप्तं कञ्चित् कश्चिद्धस्तेन गृहीत्वा उत्थापयेत्, यथा च वृत्रततेन तमसा अवष्टब्धं सूर्यं दिव्यारोहणार्थमिन्द्र उद्धृतवान् । यथा चात्मनः शोभनार्थं रुक्मं निखातं सन्तं कश्चिदुद्धरेत्, एवं युवां वन्दनं कूपे निपतितं तत उद्धृतवन्ताविति समस्तार्थः । तदेतत् पुरस्तादप्युक्तम् 'तद्वां नरा शंस्यम्' ( ऋ १,११६,११ ) इति । कुत्सेनाप्युक्तम् 'उद्वन्दनमैरयतं स्वर्दृशे' ( ऋ १,११२,५ ) इति ॥ ५ ॥

**वेङ्कट०** यथा कश्चन भूम्याः[३] उपस्थे शयानं[४] सुप्तं हस्तेन प्रबोध्योत्थापयति[५] । यथा वा '[६]दर्शनीयौ! नैशे[६] तमसि वसन्तम् सूर्यम् काल उत्थापयति । यथा वा[७] कश्चन[८] भूम्याम् निखातम् रुक्माभरणम् अलङ्करणार्थम् उद्वपति[९] । एवं वन्दनम् उत् ऊपथुः कूपाद् असुरनिहितम् इति[७] ॥ ५ ॥

**मुद्गल०** निर्ऋतेः पृथिव्याः उपस्थे उत्सङ्गे सुषुप्वांसम् न सुप्तवन्तं पुरुषमिव कूपमध्ये शयानम्, सूर्यम् न सूर्यमिव तमसि कूपान्तर्गतान्धकारे क्षियन्तम् निवसन्तम् । सूर्यमिव तेजस्विनमित्यर्थः । शुभे शोभनार्थं निर्मितम् रुक्मम् न रोचमानं सुवर्णमयाभरणमिव दर्शतम् दर्शनीयम् । एवंगुणविशिष्टं कूपे असुरैः निखातम् वन्दनाय वन्दनम् ऋषिम् हे दस्रा! दर्शनीयौ! अश्विना! अश्विनौ! युवाम् उत् ऊपथुः उद्धृतवन्तौ ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये त्रयोदशो वर्गः ॥

तद् वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् ।
शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥ ६ ॥

---

१-१. नास्ति अ. २. नास्ति अ. ३. भूम्यां वि[३] अ[२]. ४. शयानं? ल. ५. प्रबोधयति वि[२] अ[२]. ६-६. नास्ति वि[२] अ[१]; दर्शनीयो नैशो वि[१] अ[२]. ७. नास्ति कु. ८. कंचन वि[१] ल; केचन ल शोधः; °न दर्शनीयं वि[२] अ[२]. ९. उद्वपन्ति वि[१] ल; उत्थापयति वि[३] अ[२].

तत् । वाम् । नरा । शंस्यम् । पज्रियेण । कक्षीवता । नासत्या । परिऽज्मन् ।
शफात् । अश्वस्य । वाजिनः । जनाय । शतम् । कुम्भान् । असिञ्चतम् । मधूनाम् ॥ ६ ॥

**स्कन्द०** तत् **कर्म** वाम् **युवयोः** । हे नरा ! शंस्यम् **स्तुत्यम्** । पज्रियेण **पाजोऽन्नं**[1] **हविर्लक्षणम्** **तद्वता । अथवा पज्राः अङ्गिरसः तदपत्यभूतेन मया** कक्षीवता । हे नासत्या ! परिज्मन् **सर्वतो गच्छन्ति देवा यत्र स परिज्मा यज्ञः, तस्मिन् । यत् कर्म कतमत् । उच्यते ।** शफात् **खुरात्** अश्वस्य वाजिनः **वेगवतो बलवतो वा । जनानामर्थाय ।** शतम् कुम्भान् असिञ्चतम् **क्षारितवन्तौ स्थः** मधूनाम् **मधुस्वादूनां सुराणाम् । तदेतत् पुरस्तादप्युक्तम्** 'कारोतरात्' **( ऋ १, ११६,७ ) इति ॥ ६ ॥**

**वेङ्कट०** तत्[2] **युवयोः कर्म**[3] **नेतारौ !**[4] **शंसनीयं पज्राणां**[5] **पुत्रेण** कक्षीवता **मया नासत्यौ ! परितः यत्रयत्र मां जना गन्तारः भवन्ति तत्रतत्र**[6] **यद् युवाम् बलवतः** अश्वस्य शफात्[7] **जनार्थम्** मधूनाम् शतम् कुम्भान् **आपूरयतम् इति**[8] ॥ ६ ॥

**मुद्गल०** हे नरा ! **नेतारौ !** नासत्या ! **अश्विनौ !** परिज्मन् **परिगमने अभीष्टस्य प्रापणे निमित्तभूते सति** पज्रियेण **पज्राणाम् अङ्गिरसां कुले जातेन** कक्षीवता **मया** वाम् **युवयोः सम्बन्धि** तत् **कर्म** शंस्यम् **प्रकर्षेण शंसनीयं यत्** जनाय **अपेक्षमाणाय पुरुषाय** वाजिनः **वेगवतः त्वदीयाश्वस्य** शफात् **निर्गतैः** मधूनाम् **मधुभिः** शतम् कुम्भान् **शतसङ्ख्याकान् कुम्भान्** असिञ्चतम् **आपूरयतम् । यदेतद् मधुना पूरणं तत् शंस्यमित्यर्थः ॥ ६ ॥**

**युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।**
**घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ॥ ७ ॥**

युवम् । नरा । स्तुवते । कृष्णियाय । विष्णाप्वम् । ददथुः । विश्वकाय ।
घोषायै । चित् । पितृऽसदे । दुरोणे । पतिम् । जूर्यन्त्यै । अश्विना । अदत्तम् ॥ ७ ॥

**स्कन्द०** युवम् हे नरा ! स्तुवते कृष्णियाय **कृष्णनाम्न ऋषेः पुत्राय ।** विष्णाप्वम् **नामास्य पुत्रमपनष्टमानीय** ददथुः विश्वकाय **ऋषये । तदेतत् पुरस्तादप्युक्तम्** 'अवस्यते स्तुवते कृष्णियाय' **( ऋ १, ११६, २३ ) इति ।** घोषायै चित् । **अत्रेतिहासमाचक्षते—'घोषा नाम कक्षीवतो दुहिता । सा दुर्भगत्वात् पत्या परित्यक्ता पितुरेव गृहे जरां जगाम । सा जीर्णा अश्विनौ शोभनं भगं ययाचे । तस्यै अश्विनौ स्वयमेव भगतां जग्मतुः' इति । तदेतद् घोषैव वक्ष्यति 'अमाजुरश्चित्' ( ऋ १०, ३९, ३ ) इति । तां सुभगीभूतां पतिर्भेजे । तदेतदिहोच्यते घोषायै चिदित्यादिना । चिच्छब्दोऽत्र चार्थे । घोषायै च ।** पितृषदे **पिता यत्र सीदति तिष्ठति तत् पितृषदम् तस्मिन्** 'दुरोणे **गृहे**'[9] जूर्यन्त्यै **जरां प्राप्नुवत्यै** पतिम् हे अश्विनौ ! अदत्तम् **सौभाग्यकरणद्वारेण दत्तवन्तौ स्थः ॥ ७ ॥**

---

१. पाजो° अ. २ यत् वि[१] अ[१]. ३. नास्ति वि[१,२] कु अ[१] ल. ४. °रौ तत् वि[१] अ[१]. ५. वज्राणां वि[१-३] अ[१] लपं. ६. नास्ति वि[१] अ[१]. ७. शफाः वि[१]; शफान् वि[१] अ[१]. ८. नास्ति कु. ९ ९. गृहे दुरोणे अ.

**वेङ्कट०** युवाम् नरौ! स्तुवते कृष्णनाम्नः पुत्राय विश्वकनाम्ने विनष्टम्[1] विष्णाप्वम् नाम पुत्रम् ददथुः। घोषा नाम काचन स्त्री पिता यत्र सीदति तस्मिन् पितृगृहे दौर्भाग्याद् अलब्धपतिकैव जीर्णाऽऽसीत्। तस्यै सौभाग्यं प्रदाय पतिम् अदत्तम् इति[2] ॥ ७ ॥

**मुद्गल०** हे नरा! नेतारावश्विनौ! युवम् युवाम् स्तुवते स्तोत्रम् कुर्वते कृष्णियाय कृष्णाख्यस्य पुत्राय विश्वकाय [3]विष्णाप्वम् ददथुः[3] विष्णाप्वं नाम विनष्टपुत्रं दत्तवन्तौ। घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता कुष्ठिनी सती कस्मैचिद्वराय अदत्ता पितृगृहे निषण्णा जीर्णाऽऽसीत्। साऽश्विनो-रनुग्रहात् नष्टकुष्ठा आसीत् पतिम् च[4] लेभे। तदेतदाह। हे अश्विनौ! पितृषदे पितृसम्बद्धे दुरोणे स्वकीये जनकगृहे कुष्ठरोगेण भर्तारमप्राप्य पितृषदे पितृसमीपे निषण्णायै जूर्यन्त्यै जरां प्राप्नुवत्यै घोषायै चित् एतत्संज्ञायै ब्रह्मवादिन्यै अपि रोगोपशमनेन पतिम् भर्तारम् अदत्तम् युवां दत्तवन्तौ ॥ ७ ॥

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय।
प्रवाच्यं तद् वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ८ ॥

युवम्। श्यावाय। रुशतीम्। अदत्तम्। महः। क्षोणस्य। अश्विना। कण्वाय।
प्रऽवाच्यम्। तत्। वृषणा। कृतम्। वाम्। यत्। नार्षदाय। श्रवः। अधिऽअधत्तम् ॥ ८ ॥

**स्कन्द०** युवम् युवाम् श्यावाय कुष्ठितत्वात् श्याववर्णाय अग्नेः पुत्रस्य घोरस्य ज्येष्ठपुत्राय रुशतीम् दीप्तां त्वचम् अदत्तम् दत्तवन्तौ स्थः। तं हि युवां विकृत्य छित्त्वा च जङ्घयोर्मध्ये शिरसि च पुनश्च सन्धाय हिरण्यत्वचं पुनरुज्जीवयाञ्चक्रथुः। तदेतत् परस्तादपि वक्ष्यति 'त्रिधा ह श्यावमश्विना' (ऋ १, ११७, २४) इति। महः द्वितीयैकवचनान्तमेतत्। महच्च अदत्तम्[5]। किम्। 'युवं कण्वाया-पिरिप्ताय' (ऋ १, ११८, ७) इति मन्त्रान्तरे दर्शनाच्चक्षुः। कीदृशाय। उच्यते। क्षोणस्य टुक्षु शब्दे[6] इत्यस्येदं रूपम्। चतुर्थ्यर्थे षष्ठी। शब्दयित्रे। आह्वात्रे स्तोत्रे वेत्यर्थः। कस्मै। उच्यते। हे अश्विनौ! कण्वाय ऋषये। किञ्च प्रवाच्यम् प्रकर्षेण वक्तव्यम् तत् हे वृषणा! कृतम् कर्म वाम् युवयोः यत् नार्षदाय ऋषये बधिराय श्रवः श्रोत्रम् अध्यधत्तम् अधिशब्दः 'अधिपरी अनर्थकौ' (पा १, ४, ९३) इति कर्मप्रवचनीयः पदपूरणः। दत्तवन्तौ स्थः ॥ ८ ॥

**वेङ्कट०** युवाम्[7] श्यावाय[8] कुष्ठिने दीप्तां त्वचम् अदत्तम् प्रस्कण्वायान्यस्मै वा। किञ्च अश्विनौ! नार्षदाय कण्वाय[9] महतो वाचस्य[9] शब्दमन्धकारे प्रक्षिप्ताय यत् युवाम् उपरि[10] अधत्तम्[11] तत् युवयोः कृतम् प्रकर्षेण वाच्यम्। क्षौतिः शब्दकर्मा। शब्दकरणाद्वीणा क्षोणः[12]। अत्र शाट्यायनकम्—'कण्वो वै नार्षदो बकस्यासुरस्य दुहितरम् अविन्दत। तस्यां हास्य त्रिशोकनभाकौ[13] पुत्रौ[14] जज्ञाते। सा ह क्रुद्धा ज्ञातीनाययौ। तां हान्वाजगाम। तं ह असुरा अवलेपेनावलिम्पन्त ऊचुः, अत्र व्युष्टां विजानीहि, यदि ब्राह्मणोऽसीति। तदु ह अश्विनौ अवबुबुधाते[15]। अश्विनौ हि वै देवानां बन्धमुचौ[16]। तौ हैनम् अदृश्यमानावेत्य[17] ऊचतुः, यदैव त्वावां वीणां समाघ्नन्तौ उपर्युपर्यतिपतावोऽथ[18]

---

१. नास्ति वि[1] अ[2]. २. नास्ति कु. ३-३. नास्ति मै[2]. ४. नास्ति मूको. ५. दत्तम् मूको. ६. शब्दने मूको. ७. नास्ति वि[1,2] अ[1,2] ल लपं. ८. श्याविने वि[1] अ[1]. ९. वाणस्य कु. १०. नास्ति वि[1] ल; उपर्युपरि वि[1] अ[1]. ११. धत्तम् वि[1] अ[2]. १२. क्षोणः कु. १३. °कनाभाकौ वि[1] अ[1,2] कु. १४. नास्ति वि[1,2] ल. १५. अनुबु° वि[1,2] ल; नास्ति वि[1] अ[1]. १६. बद्धमुचौ वि[1,2] अ[1]. १७. °माना उपेत्य वि[1,2] ल लपं. १८. °पतावाऽथ ल शोधः.

व्युष्टां विजानीताद् '[1]इत्युक्त्वा[1] आह। अथ हैतो वीणां समाघ्नन्तौ उपर्युपरि अतिपेततुः[2]। स होवाच, अपहरतेदम्। एतर्हि यावत् युङ्ग्ध्वं सीराणि इति। ते होचुः, ब्राह्मणो वायम् ऋषिः आस[3]। [4]उप ह[4] वास्य जाया, हन्तास्मा इमां ददामेति। तां हास्मै ददुः' ॥ ८ ॥

मुद्गल० हे अश्विना! अश्विनौ! युवम् युवाम् श्यावाय कुष्ठरोगेण श्यामवर्णाय ऋषये रुशतीम् दीप्तत्वचं स्त्रियम् अदत्तम् प्रायच्छतम्। अपि च क्षोणस्य क्षोणाय यः दृष्टिराहित्येन गन्तुमशक्तः सन् एकस्मिन्नेवावस्थाने निवसति तस्मै निवसते कण्वाय ऋषये महः तेजः तैजसं चक्षुरिन्द्रियम् अदत्तमिति शेषः। तथा हे वृषणा! कामानां वर्षितारावश्विनौ! वाम् युवयोः तत् कृतम् कर्म प्रवाच्यम् प्रकर्षेण वाचनीयं शंसनीयम् नार्षदाय नृषदपुत्राय बधिराय ऋषये श्रवः श्रवणेन्द्रियम् यत् अध्यधत्तम् दत्तवन्तौ स्थ इति यत् तदित्यर्थः ॥ ८ ॥

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम्।
सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम् ॥ ९ ॥

पुरु। वर्पांसि। अश्विना। दधाना। नि। पेदवे। ऊहथुः। आशुम्। अश्वम्।
सहस्रऽसाम्। वाजिनम्। अप्रतिऽइतम्। अहिऽहनम्। श्रवस्यम्। तरुत्रम् ॥ ९ ॥

स्कन्द० अत्रेतिहासमाचक्षते—'पेदुर्नाम राजा। तस्मै परया भक्त्या परितुष्टावश्विनौ महावीर्यं श्वेतमश्वं ददतुः' इति। तत्परस्ताद्वक्ष्यति[5] 'युवं श्वेतं पेदव इन्द्रजूतम्' ( ऋ १,११८,९ ) इति। घोषापि वक्ष्यति 'युवं श्वेतं पदेवऽश्विनाश्वम्' ( ऋ १०,३९,१० ) इति। तदेतदिहोच्यते पुरु वर्पांसि इत्यादिना। पुरु बहूनि वर्पांसि रूपाणि हे अश्विना! दधाना धारयन्तौ। आत्मनो देवतामाहात्म्यान्नानारूपतां प्रतिपद्यमानावित्यर्थः। पेदवे राज्ञे नि ऊहथुः नियमेन प्रापितवन्तौ स्थः। दत्तवन्तावित्यर्थः। आशुम् शीघ्रम् अश्वम् सहस्रसाम् सङ्ग्रामसहस्राणां[6] तन्निमित्तभूतधनसहस्राणां वा सम्भक्तारम्। वाजिनम् बलवन्तं वेगवन्तं वा। अप्रतीतम् अप्रतिगतपूर्वं शत्रुभिः। अहिहनम् हि गतौ। अगन्ता [7]अनंष्टा अहिः[7]। बलावलेपेन अनंष्टुरपि[8] शत्रोर्हन्तारम् अहिनाम्नो वा असुरस्य। श्रवस्यम् श्रवः कीर्तिः। तद्वदर्थे यत् प्रत्ययः। 'अश्वयुर्गव्यू रथयुः' ( ऋ १,५१,१४ ) इति यथा। कीर्तिमन्तम्। तरुत्रम् तरतिः प्लवनार्थः। प्लवनं च गमनं प्लवतेर्गत्यर्थत्वात्। गन्तारं[9] शत्रून् प्रति ॥ ९ ॥

वेङ्कट० पुरूणि कर्मरूपाणि[10] अश्विनौ! दधानौ[11] पेदवे राज्ञे शीघ्रगन्तारम् अश्वम् नि ऊहथुः [12]सहस्रस्य धनस्य[12] सम्भक्तारम् बलवन्तं शत्रुभिः अप्रतिगतम् आहन्तॄणां शत्रूणां हन्तारम्[13] कीर्तिहेतुम्[14] तारकम् ॥ ९ ॥

---

१-१. इत्यादिकमुक्त्वा वि[1] अ[2] कु. २. अधिपेततुः अ[1] कु. ३. आसत् कु. ४-४. दुःखभरा अ[1] कु; दुरावहारा वि[1] अ[1]. ५. तदेतत्परस्ता° कु. ६. सहस्रसंग्रामानां सहस्रा° अ. ७-७. नास्ति अ; अनष्टा° कु. ८. अनष्टु° मूको. ९. नास्ति अ. १०. कर्माणि वि[1] अ[1]. ११. नास्ति वि[1,2] अ[1,2] कु ल. १२-१२. सहस्रधनस्य वि[1] कु. १३. नास्ति कु. १४. °हेतुकम् वि[1] अ[1].

मुद्गल० हे अश्विना! अश्विनौ! पुरु पुरूणि बहूनि वर्पांसि रूपनामैतत् (तु. निघ ३,७)। आत्मीयैः कर्मभिः कृतानि रूपाणि दधाना धारयन्तौ युवाम् आशुम् शीघ्रगामिनम् अश्वम् पेदवे पेदुनाम्ने स्तुवते नि ऊहथुः नितरां प्रापितवन्तौ। दत्तवन्तावित्यर्थः। कीदृशमश्वम्। सहस्रसाम् सहस्रसङ्ख्याकस्य धनस्य सनितारं दातारम् वाजिनम् बलवन्तम् अत एव अप्रतीतम् शत्रुभिरप्रतिगतम् अहिहनम् शत्रून् हन्तारम् श्रवस्यम् श्रवः श्रवणीयं स्तोत्रं तत्र भवम्। स्तुतिविषयमित्यर्थः। तरुत्रम् तरितारम्॥ ९॥

## एतानि॑ वां श्रव॒स्या॑ सुदानू॒ ब्रह्मा॑ङ्गू॒षं सद॑नं॒ रोद॑स्योः।
## यद् वां॑ प॒ज्रासो॑ अश्विना॒ हव॑न्ते या॒तमि॒षा च॑ वि॒दुषे॑ च॒ वाज॑म्॥ १०॥

एता॑नि। वा॒म्। श्र॒व॒स्या॑। सु॒दा॒नू॒ इति॑ सु॒ऽदा॒नू॒। ब्रह्म॑। आ॒ङ्गू॒षम्। सद॑नम्। रोद॑स्योः।
यत्। वा॒म्। प॒ज्रासः॑। अ॒श्वि॒ना॒। हव॑न्ते। या॒तम्। इ॒षा। च॒। वि॒दुषे॑। च॒। वाज॑म्॥ १०॥

स्कन्द० एतानि वाम् युवयोः श्रवस्या[1] 'श्रवः' (निघ २, ७) इत्यन्ननाम। स्वार्थे चात्र यत्[2] प्रत्ययः। अन्नानि हविर्लक्षणानि। सुदानू! शोभनदातारौ! ब्रह्म च स्तुतिलक्षणं याज्यानुवाक्यादिगतम्। आङ्गूषम् स्तोत्रं च शस्त्रलक्षणम्। कीदृशम्। सदनम् सीदतो यस्मिन् तत् सदनम्। रोदस्योः द्यावापृथिव्योः उभयोरपि[3]। द्यावापृथिव्यौ यच्छ्रोतुं निषीदत इत्यर्थः। एतद् ज्ञात्वा यत् यदा वाम् युवाम्[4] पज्रासः पाजसाऽन्नेन[5] हविर्लक्षणेन तद्वन्तः[6] ऋत्विजः। अथवा पितृशब्देनेदं सोऽयमित्यभिसम्बन्धादपत्यस्याभिधानम्। पज्राणामङ्गिरसामपत्यभूता मत्प्रभृतयः। हे अश्विनौ! हवन्ते आह्वयन्ते[7]। यदेति वचनात्तदेत्यध्याहार्यम्। तदा यातम् गच्छतम्। इषा चतुर्थ्यर्थे तृतीया। अन्नाय च। अस्माकम् विदुषे च विज्ञानाय च। अन्नं विज्ञानं चास्मभ्यं दातुमित्यर्थः। वाजम् अन्नमस्मदीयं हविर्लक्षणम्॥ १०॥

वेङ्कट० हे शोभनदानावश्विनौ! एतानि युवयोः श्रोत्रहितानि सर्वेषां तात्पर्येण[8] श्रवणीयानि कर्माणि। बृहच्च स्तोत्रमेतद्धि महत् यत् 'नासत्याभ्याम्' (ऋ १,११६,१) इत्यादिकं येन स्तोता द्यावापृथिव्योरुभयोरपि सीदति। यदा युवाम् पज्रकुलजाताः[9] हवन्ते तदान्नेन सह गच्छतम्[10]। अथ तदन्नम् विदुषे कक्षीवते दत्तम् च इति[11]॥ १०॥

मुद्गल० हे सुदानू! शोभनदानावश्विनौ! वाम् युवयोः सम्बन्धीनि एतानि समनन्तरोक्तानि वीर्याणि श्रवस्या श्रवणीयानि सर्वैर्ज्ञातव्यानि भवन्ति। तदर्थम् रोदस्योः द्यावापृथिव्यात्मना वर्तमानयोर्युवयोः सदनम् स्तोतृसमीपे निवेशनम् आङ्गूषम् आघोषणीयम् ब्रह्म मन्त्ररूपं स्तोत्रम्। निष्पन्नमिति शेषः। यत् यदा पज्रासः अङ्गिरसां गोत्रोत्पन्ना यजमानाः हे अश्विना! अश्विनौ! वाम् युवाम् हवन्ते[12] स्तुतिभिरात्मरक्षार्थम् आह्वयन्ति। तदानीम् इषा दातव्येनान्नेन सह आ यातम् आगच्छतम्

१. °स्या वा अ. २. यच्प्र° कु. ३. उभे अपि अ. ४. युवयोः कु. ५. वाजसा° अ. ६. द्वतः अ. ७. °यन्ति कु. ८. तात्पर्ये वि[1] लपं. ९. पज्रकुल जाता वि[1] कु; पुत्रकुले जाता अ[1]; वज्रकुले जाता वि[1] अ[2] १०. यच्छतम् कु. ११. नास्ति कु. १२. स्तुवन्ते मूको.

च । विदुषे युष्मद्विषयं स्तोत्रं जानते मह्यम् च वाजम् अन्नं प्रयच्छतमिति शेषः ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये चतुर्दशो वर्गः ॥

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥११॥

सूनोः । मानेन । अश्विना । गृणाना । वाजम् । विप्राय । भुरणा । रदन्ता ।
अगस्त्ये । ब्रह्मणा । ववृधाना । सम् । विश्पलाम् । नासत्या । अरिणीतम् ॥ ११ ॥

**स्कन्द०** [1]'सूनोः मानेन[1] 'सूनुः' ( निघ २,२ ) इत्यपत्यनाम । मीयतेऽनेनेति मानः कुम्भः । षष्ठीतृतीये च व्यत्यासेन योजयितव्ये । सूनुनापत्यभूतेन[2] कुम्भस्य । अगस्त्यो ह्युर्वशीदर्शनात् मित्रावरुणयोः स्कन्नाद्रेतसः कुम्भे जातः । एवं ह्याख्यानविद आहुः—'बहुधा पतितं रेतः कलशेऽथ जले स्थले । स्थले वसिष्ठस्तु मुनिः सम्भूत[3] ऋषिसत्तमः ॥ कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः ।' ( तु. बृदे ५,१५१-१५२ ) इति । वसिष्ठोऽपि तत्पुत्रो वा वक्ष्यति 'सत्रे ह जातौ' ( ऋ ७, ३३, १३ ) इति । एवं कुम्भस्यापत्यभूतोऽगस्त्यः खेलस्य च पुरोहितः[4] । तेन हे[5] अश्विना ! गृणाना स्तूयमानौ । वाजम् बलमन्नं वा । विप्राय मेधाविने तस्मै । हे भुरणा ! '[6]भुरण्यति' ( निघ २, १४ ) इति गतिकर्मा[6] । गन्तारौ शत्रून् यज्ञान् वा प्रति । रदन्ता रद विलेखनेऽन्यत्र इह तु सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । ददतौ । अगस्त्ये षष्ठ्यर्थेऽत्र सप्तमी । अगस्त्यस्य स्वभूतेन[7] स्तुतिरूपेण ब्रह्मणा ववृधाना अत्यर्थं वर्धमानौ । विश्पलाम् नाम खेलस्य सेनाया योद्ध्रीं स्त्रियं शत्रुभिः छिन्नजङ्घां प्रति हे नासत्यौ ! सम् अरिणीतम् 'रिणाति' (निघ २,१४) इति गतिकर्मा । आयसीं जङ्घां तस्यै दातुं सम्यग् अगच्छतं युवाम् । पुरस्तादप्युक्तमेतत् 'चरित्रं हि वेरिव' ( ऋ १,११६,१५ ) इति ॥ ११ ॥

**वेङ्कट०** भरद्वाजपुत्रस्य स्तोत्रेण अश्विनौ ! स्तूयमानौ युवाम् अन्नम् विप्राय भरद्वाजाय भरणशीलौ ![8] । रदतिर्दानकर्मा । प्रयच्छन्तौ । एतच्च कृतवन्तावित्याह [9]'अगस्त्ये इति । खेलपुरोहिते†[9] अगस्त्ये स्तोत्रेण वर्धमानौ खेलस्य योद्ध्रीं स्त्रियं शत्रुभिः छिन्नजङ्घां तत्प्रतिसन्धानार्थम्[10] सह[11] गतवन्ताविति[12] ॥ ११ ॥

**मुद्गल०** हे भुरणा ! भर्तारौ पोषकौ ! नासत्या ! सत्यस्वभावौ ! अश्विना ! अश्विनौ ! सूनोः कुम्भात् प्रसूतस्यागस्त्यस्य खेलपुरोहितस्य सम्बन्धिना मानेन स्तुत्यस्य परिच्छेदकेन स्तोत्रेण गृणाना स्तूयमानौ विप्राय मेधाविने भरद्वाजाय ऋषये वाजम् अन्नम् रदन्ता विलिखन्तौ निष्पादयन्तौ युवाम् विश्पलाम् सङ्ग्रामे छिन्नजङ्घां खेलस्य सम्बन्धिनीं स्त्रियम् सम् अरिणीतम् पुनः आयस्या जङ्घया समयोजयतम् । तृतीयेन पादेन प्रथमपादोक्तोऽर्थो विव्रियते । अगस्त्ये ऋषौ ब्रह्मणा मन्त्ररूपेण स्तोत्रेण ववृधाना प्रवर्धिताविति ॥ ११ ॥

---

१-१. नास्ति मूको. २. °नास्याप° मूको. ३. संभूतो मूको. ४. °तः पुरोहितत्वात् अ. ५. नास्ति अ. ६-६. °रण्यतिर्गति° अ. ७. °तेन तेन अ. ८. °शीलो वि[१] अ[२]; °शीलाय अ[१]. ९-९. नास्ति वि[१] लपं. † खलु पुराहिते वि[२]; खलु पुरोहितः अ[१]; खेलपुरोहितः कु. १०. प्रति° वि[१] अ[२]. ११. नास्ति वि[१] अ[१]. १२. °वन्तौ कु.

कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा ।
हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥ १२ ॥

कुह । यान्ता । सुऽस्तुतिम् । काव्यस्य । दिवः । नपाता । वृषणा । शयुऽत्रा ।
हिरण्यस्यऽइव । कलशम् । निऽखातम् । उत् । ऊपथुः । दशमे । अश्विना । अहन् ॥ १२ ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'अश्विनौ यदृच्छया पर्यटन्तौ श्लक्ष्णोच्चारणां रमणीयामुशनसः स्तुतिं शुश्रुवतुः । तौ भक्त्या परितुष्टावानीय हिरण्यकलशमस्य शयने निचख्नतुः' इति । तदेतदिहोच्यते कुह यान्तेत्यादिना । कुह क्वापि यान्ता गच्छन्तौ । अन्यत्रापि क्वापि गच्छन्तावित्यर्थः । सुष्टुतिम् शोभनां स्तुतिम् । द्वितीयाश्रुतेः श्रुत्वेति वाक्यशेषः । काव्यस्य कविपुत्रस्योशनसः । हे दिवः नपाता! दिवो हि पुत्र आदित्यः । कुत एतत् । ऐतरेयब्राह्मणे 'प्रजापतिरकामयत । प्रजायेय । भूयान् स्याम्' इत्युपक्रम्य 'अग्निरेव पृथिव्या अजायत । वायुरन्तरिक्षात् । आदित्यो दिवः' ( ऐब्रा ५,३२,१ ) इति श्रुतेः । एवं ह्यैतिहासिकाः स्मरन्ति—'दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः । सविता स ऋचीकोऽर्को भानुरागवहो रविः ॥ पुरा विवस्वतः सर्वे तेषां ज्येष्ठः तथापरः ।' इति । एवं दिवः पुत्रो विवस्वान् । तस्य पुत्रावश्विनौ । एवं हीतिहासमाचक्षते—त्वाष्ट्री[1] सरण्यूर्विवस्वत आदित्याद् यमौ मिथुनौ जनयाञ्चकार । सा सवर्णां प्रतिनिधायान्याम् आश्वं[2] रूपं कृत्वा प्रदुद्राव । विवस्वानादित्यः आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव । ततोऽश्विनौ जज्ञाते' इति । एवमश्विनौ दिवः पौत्रौ । हे वृषणा! वर्षितारौ! शयुत्रा शयने । हिरण्यस्येव कलशम् इवशब्दोऽत्र 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' ( तु. या ७, ३१ ) इति पदपूरणः । हिरण्यस्य कलशम् । निखातम् सन्तम् । उत् वपिनास्य सम्बन्धाभावात् योग्यक्रियापदाध्याहारः । उत्खाय ऊपथुः वपिः प्रकिरणार्थः । विकीर्णवन्तौ स्थः । किं तदानीमेव । न । किं तर्हि । यस्मिन्नेव स्तुतिः श्रुता ततः दशमे हे अश्विनौ! अहन् अहनि ॥ १२ ॥

**वेङ्कट०** शयुशब्दः[3] शयनवचनः । इह तु[4] असुरनिवासवचनः । आदित्यपुत्रौ अश्विनौ! काव्यस्य उशनसः सुस्तोत्रं प्रति तच्छ्रवणेच्छया कस्मिन्[5] असुरनिलये गन्तारौ । युवाम् असुरैः जले निखातं रेभं[6] तस्मिन् असुरपुरे दशमे अहनि जलात् उत् ऊपथुः यथा[7] 'हिरण्यस्य पूर्णम्[8] कलशम् निखातम् तद्वत्[9] ॥ १२ ॥

**मुद्गल०** पुरा खलु उशनसः स्तुतिं श्रोतुं गच्छन्तावश्विनौ मार्गमध्ये कूपे पतितं रेभं दृष्ट्वा तं कूपादुदतारयताम् । तदानीम् अश्विभ्यां गन्तव्यं काव्यस्य निवासस्थानमजानन् ऋषिरश्विनौ पृच्छति । हे दिवः नपाता! द्योतमानस्य सूर्यस्य पुत्रौ वृषणा! कामाभिवर्षकौ! अश्विना! अश्विनौ! कुह कुत्र शयुत्रा शयने निवासस्थाने वर्तमानस्य काव्यस्य भार्गवस्य सुष्टुतिम् शोभनां स्तुतिं श्रोतुम् यान्ता गच्छन्तौ युवाम् हिरण्यस्येव कलशम् यथा हिरण्यपूरितं कलशम् निखातम् भूम्यां निक्षिप्तं सर्वैर्दुर्ज्ञातं कश्चिदभिज्ञ उद्धरति । एवमसुरैः कूपे निखातं दश रात्रीः नवाहानि

---

१. त्वाष्ट्री कु. २. अश्व अ. ३. शय° वि[1,2] अ[1] ल. ४. नास्ति वि[1] अ[2]. ५. तस्मिन् वि[1] अ[1,2]. ६. रेफं वि[1,3] अ[2] कु लपं; रथं वि[2] अ[1]. ७. तथा वि[1] अ[1]; यदा अ[1]. ८-८. हिरण्यपूर्णं वि[1] अ[2]. ९. नास्ति कु.

च तत्रैव निवसन्तं रेभमंवगत्य दशमे अहन् अहनि उत् ऊपथुः कूपादुन्नीतवन्तौ । किं तन्निवासस्थानमिति प्रश्नः ॥ १२ ॥

युवं च्यवा॑नमश्विना॒ जर॑न्तं॒ पुन॒र्युवा॑नं चक्रथुः॒ शची॑भिः ।
यु॒वो रथं॑ दुहि॒ता सूर्य॑स्य स॒ह श्रि॒या ना॑सत्यावृणीत ॥ १३ ॥

यु॒वम् । च्यवा॑नम् । अ॒श्वि॒ना॒ । जर॑न्तम् । पुनः॑ । युवा॑नम् । च॒क्र॒थुः॒ । शची॑भिः ।
यु॒वोः । रथ॑म् । दु॒हि॒ता । सूर्य॑स्य । स॒ह । श्रि॒या । ना॒स॒त्या॒ । अ॒वृ॒णी॒त ॥ १३ ॥

**स्कन्द०** युवम् युवाम् च्यवानम् नामर्षिम् हे अश्विनौ! [1]जरन्तम् जीर्णं[1] सन्तम् पुनः युवानम् तरुणम् चक्रथुः शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा । तत्पुरस्तादप्युक्तम् 'जुजुरुषो नासत्योत वव्रिम्' ( ऋ १, ११६,१० ) इति । किञ्च युवोः[2] युवयोः स्वभूतम् रथम् दुहिता सूर्यस्य सूर्या[3] नामाजौ जिता सती । सह श्रिया लक्ष्म्या । ऐश्वर्यं युवयोर्जनयन्तीत्यर्थः[4] । हे नासत्यौ! अवृणीत सम्भक्तवती । आरूढेत्यर्थः । तदेतत् पुरस्तादप्युक्तम् 'आ वां रथं दुहिता' ( ऋ १, ११६, १७ ) इति ॥ १३ ॥

**वेङ्कट०** व्याख्यातप्राया[5] इति[6] । श्रिया कान्त्या सहितेति[7] ॥ १३ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! युवम् शचीभिः आत्मीयैः भैषज्यलक्षणैः कर्मभिः जरन्तम् जीर्यन्तम् च्यवानम् स्तुतीनां च्यावयितारम् एतत्संज्ञम् ऋषिम् पुनः युवानम् पुनर्यौवनोपेतम् चक्रथुः कृतवन्तौ । अपि च हे नासत्या! अश्विनौ! युवोः युवयोः रथम् सूर्यस्य दुहिता सूर्याख्या श्रिया सह ऋक्सहस्ररूपया सम्पदा सह अवृणीत समभजत । आगत्यारूढवतीत्यर्थः । 'आ वां रथं दुहिता' इत्यत्र लिखितम् आख्यानम् अत्रापि द्रष्टव्यम् ॥ १३ ॥

यु॒वं तुग्रा॑य पू॒र्व्येभि॒रेवैः॑ पुनर्म॒न्याव॑भवतं युवाना ।
यु॒वं भु॒ज्युमर्ण॑सो॒ निः स॑मु॒द्राद् विभि॑रूहथुर्ऋ॒ज्रेभि॒रश्वैः॑ ॥ १४ ॥

यु॒वम् । तुग्रा॑य । पू॒र्व्येभिः॑ । एवैः॑ । पु॒नः॒ऽम॒न्यौ । अ॒भ॒व॒त॒म् । यु॒वा॒ना॒ ।
यु॒वम् । भु॒ज्युम् । अर्ण॑सः । निः । स॒मु॒द्रात् । विऽभिः॑ । ऊ॒ह॒थुः॒ । ऋ॒ज्रेभिः॑ । अश्वैः॑ ॥ १४ ॥

**स्कन्द०** युवम् युवाम् तुग्राय पितृशब्दोऽयं सोऽयमित्यभिसम्बन्धात् पुत्रे प्रयुज्यते । षष्ठ्यर्थे चतुर्थी । तुग्रपुत्रस्य भुज्योः । पूर्व्येभिः पूर्वैः एवैः पालनैः कामैर्वा । यस्मात् पूर्वं पालितवन्तौ कामान् वा सम्पादितवन्तौ तस्मादित्यर्थः । पुनर्मन्यौ पुनश्शब्दोऽत्रान्तर्णीतवीप्सार्थः । 'मन्यते' (निघ २,६;३,१४ ) इत्यर्चतिकर्मा कान्तिकर्मा वा । पुनःपुनः स्तुत्यौ काम्यौ वा । अभवतम् हे युवाना! तरुणौ! यस्मात् युवम्[8] भुज्युम् अर्णसः उदकात् समुद्रात् तात्स्थ्यात् ताच्छब्द्यम् । समुद्रस्थात् । विभिः वयः पक्षिणः, तत्सदृशैः । निः इत्यस्योपसर्गस्यापादानस्य च श्रुतेर्योग्यक्रियापदाध्या-

---

१-१. नास्ति अ. २. नास्ति मूको. ३. भार्या मूको. ४. °यतीत्य° मूको. ५. उत्तरा व्याख्या° मूको. ६. नास्ति कु. ७. संहिते वि[1] अ[2]; °हिता कु. ८. च तं अ.

हारः। निष्कृष्य ऊहथुः प्रापितवन्तौ । तटम् उत्तारितवन्तावित्यर्थः। ऋज्रेभिः ऋजुगामिभिः स्वेभिः अश्वैः ॥ १४ ॥

**वेङ्कट०** युवम् तुग्राय भुज्योः पित्रे[१] प्रत्नैः भवतोः गमनैः पुनःपुनः स्तोतव्यौ! अभवतम्[२] युवानौ! युवम्[३] तत्पुत्रम् भुज्युम् समुद्रमध्ये विपन्ननौकम् समुद्रस्थात् उदकात् गन्तृभिः ऋजुगामिभिः अश्वैः ततः उत् ऊहथुः ॥ १४ ॥

**मुद्गल०** हे युवाना! दुःखानां यावयितारावश्विनौ! युवम् युवाम् पूर्व्येभिः पूर्वकालीनैः चिरन्तनैः एवैः स्तुत्यं प्रति गन्तृभिः स्तोत्रैः तुग्राय भुज्योः जनकस्य सम्बन्धिभिः पुनर्मन्यौ यथा भुज्योः समुद्रगमनात्पूर्वं युवां स्तोतव्यौ तथा पुनरपीदानीं स्तोतव्यौ अभवतम्। यदा युवम् समुद्रमध्ये सेनया सह निमग्नम् भुज्युम् तुग्रस्य पुत्रम् अर्णसः अर्णस्वतः प्रौढोदकयुक्तात् समुद्रात् अम्बुराशेः सकाशात् विभिः गन्तृभिः ऋज्रेभिः शीघ्रगतियुक्तैः अश्वैः च निः ऊहथुः निर्गमय्य पितृसमीपं प्रापितवन्तौ। तदानीं पुनरप्यतिशयेन स्तोतव्यौ जातावित्यर्थः। 'तुग्रो ह भुज्युम्' ( ऋ १,११६,३ ) इत्यत्रोक्तमाख्यानमनुसन्धेयम् ॥ १४ ॥

**अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।**
**निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥ १५ ॥**

अजोहवीत् । अश्विना । तौग्र्यः । वाम् । प्रऽऊळ्हः । समुद्रम् । अव्यथिः । जगन्वान् ।
निः । तम् । ऊहथुः । सुऽयुजा । रथेन । मनःऽजवसा । वृषणा । स्वस्ति ॥ १५ ॥

**स्कन्द०** अजोहवीत्[४] आहूतवान् हे अश्विनौ! तौग्र्यः तुग्रपुत्रो भुज्युः वाम् युवाम्। प्रोळ्हः प्रापितः। विपन्नया नावा प्रक्षिप्त इत्यर्थः। समुद्रम् जगन्वान् गतः। समुद्रे निमग्न इत्यर्थः। अव्यथिः अविकलचित्तः[५]। स्थिरयुष्मद्भक्तिरित्यर्थः। तम् युवाम् निः ऊहथुः। सुयुजा सुयुक्तेन रथेन। मनोजवसा मनस्तुल्यवेगेन। हे वृषणा! स्वस्ति अन्तर्णीतमत्वर्थमिदम्। स्वस्तिमन्तम्। अविनष्ट-जीवितमित्यर्थः ॥ १५ ॥

**वेङ्कट०** [६]आहूतवान् अश्विनौ! तुग्रपुत्रः† वाम् समुद्रमध्यं‡ प्रापितः विपन्नायाम् अपि नावि¶ भवदा-श्रयादव्यथां§ गतः। ततः तम् निः ऊहथुः सुयुक्तेन रथेन मनोवेगेन वर्षितारौ! अविनाशम्[६] ॥ १५ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! वाम् युवाम् तौग्र्यः तुग्रपुत्रः प्रोळ्हः पित्रा प्रापितः समुद्रम् अब्धिम् जगन्वान् भुज्युरुदके निमग्नोऽपि अव्यथिः व्यथां पीडाम् अप्राप्त एव सन् अजोहवीत् स्तुतिभि-राह्वयत्। तम् आह्वातारं हे मनोजवसा! मनोवद्वेगयुक्तौ![७] वृषणा! कामाभिवर्षकावश्विनौ![८] सुयुजा

---

१. पुत्रे वि[१] अ[२]; नास्ति अ[१]. २. अन्नवन्त वि[१] अ[२]. ३. युवां वि[१] अ[२]. ४. नास्ति मूको. ५. °चित्तेन अ. ६-६. नास्ति वि[१]. † °पुत्रैः वि[१] अ[२]. ‡ समुद्रमध्यस्थं वि[१] ल. ¶ नास्ति वि[१] अ[१] ल. § °याद् यथा वि[१२] अ[१२] कु ल लपं. ७. मनोवेगवद्वेग° मै[२]. ८. कामानां वर्ष° मै[२].

सुष्ठु अश्वैर्युक्तेन रथेन स्वस्ति क्षेमं यथा भवति तथा निः ऊहथुः जलान्निर्गमय्य युवां पितृगृहं प्रापितवन्तौ ॥ १५ ॥

इति प्रथमाष्टके अष्टमाध्याये पञ्चदशो वर्गः ॥

अजोहवीदश्विना वर्तिका वामास्नो यत् सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ १६ ॥

अजोहवीत् । अश्विना । वर्तिका । वाम् । आस्नः । यत् । सीम् । अमुञ्चतम् । वृकस्य ।
वि । जयुषा । ययथुः । सानु । अद्रेः । जातम् । विष्वाचः । अहतम् । विषेण ॥ १६ ॥

स्कन्द० अजोहवीत् आहूतवती[1] हे अश्विनौ! वर्तिका चटका वाम् युवाम् । आस्नः आस्यात् । यत् यदा । सीम् इति पदपूरणः । अमुञ्चतम् मोचितवन्तौ स्थः । वृकस्य अवयवभूतात् । वृकेण ग्रस्यमानां सतीमित्यर्थः । कुत्सेनाप्युक्तम् 'याभिर्वर्तिकाम्' ( ऋ १, ११२, ८ ) इति । जयुषा जितवता शत्रून् रथेन वि ययथुः विविधं गच्छथः युवाम् । सानु समुच्छ्रितं शिखरम् अद्रेः पर्वतस्य मेघस्य वा । जातम् जायते तदिति जातं सर्वं भूतजातम् । विष्वाचः विषुशब्दो नानापर्यायः । अञ्चतिर्गत्यर्थः । नानागामिनः । इतश्चेतश्च गन्तुर्मेघस्य स्वभूतेनेत्यर्थः । अहतम् हथो[2] युवाम् विषेण उदकेन । सर्वस्मै भूतजाताय प्रभूतां[3] वृष्टिं दत्थ[4] इत्यर्थः ॥ १६ ॥

वेङ्कट० अह्वयत्[5] अश्विनौ! दूत्यार्थं[6] गच्छन्ती[7] वर्तिका वाम् यदा, युवाम् आदित्यस्य वृकभूतस्य[8] आस्यात् हस्तेन ताम् अमुञ्चतम् । [9]जयशीलेन रथेन पर्वतस्य सानु† वि ययथुः सानूनां मध्येन गतवन्तौ । 'परिविष्टं जाहुषम्' ( ऋ १,११६,२० ) इत्युक्तम् । तथा विष्वाचः असुरात् जातम् असुरम् विषेण अहतम् । अत्र यास्कः[9] 'आदित्योऽपि वृक उच्यते' ( ५,२१ ) इत्यादि ॥ १६ ॥

मुद्गल० 'आस्नो वृकस्य' ( ऋ १,११६,१४ ) इत्यर्धर्चे यदुक्तं तदत्र पूर्वार्धेन प्रतिपाद्यते । वर्तिका चटकसदृशस्य पक्षिणः स्त्री वृकेणारण्यश्वुना ग्रस्ता सती सा हे अश्विना! अश्विनौ! वाम् युवां तदा अजोहवीत् आहूतवती यत् सीम् यदा खलु वृकस्य आस्नः आस्यात् अमुञ्चतम् वर्तिकाम् अमोचयतम् । अपि च युवाम् जयुषा जयशीलेन रथेन अद्रेः पर्वतस्य सानु समुच्छ्रितप्रदेशम् वि ययथुः । शत्रुभिरावेष्टितं जाहुषाख्यं स्तोतारं शत्रुसमूहान्निर्गमय्य तेन सह अन्यैर्गन्तुमशक्यं पर्वताग्रं गतवन्तावित्यर्थः । गत्वा च विष्वाचः विविधगतियुक्तस्य मेघस्य सम्बन्धिना विषेण उदकेन जातम् उत्पन्नं सर्वभूतजातम् अहतम् अगमयतम् ॥ १६ ॥

शतं मेषान् वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा ।
आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ॥ १७ ॥

---

१. °ती वर्तिका अ. २. अहथो मूको. ३. प्रभूतं कु. ४. दत्तम् मूको. ५. आह्वयत् वि[१] अ[१] ल. ६. दूत्यर्थ वि[२] अ[१] ल लपं; °र्थे वि[१]. ७. गच्छन्ति वि[१,२] अ[१] लपं. ८. वृकस्य वि[१] अ[१]. ९-९. नास्ति वि[१] अ[१]. † सानुं कु.

शतम् । मेषान् । वृक्ये । मम्हानम् । तमः । प्रऽनीतम् । अशिवेन । पित्रा ।
आ । अक्षी इति । ऋज्रऽअश्वे । अश्विनौ । अधत्तम् । ज्योतिः । अन्धाय । चक्रथुः । विऽचक्षे ॥ १७ ॥

**स्कन्द०** शतम् मेषान् एकं चेति वाक्यशेषः । कुत एतत् । 'ऋज्राश्वः शतमेकं च मेषान्' ( ऋ १, ११७, १८ ) इति मन्त्रान्तरे दर्शनात् । वृक्ये ममहानम् मंहतेर्दानकर्मणः ( तु. निघ ३,२० ) एतद्रूपम् । चतुर्थ्यर्थे द्वितीया । आहारार्थं विशस्यविशस्य ददते । तमः आन्ध्यलक्षणम् । प्रणीतम्[1] इयमपि चतुर्थ्यर्थे एव द्वितीया । शापेन प्रापिताय । अशिवेन [2]दुःखकरेण च पित्रा[2] अक्षी अक्षिणी ऋज्राश्वे इयमपि चतुर्थ्यर्थ एव सप्तमी । ऋज्राश्वाय हे अश्विनौ ! आ अधत्तम् मर्यादया दत्तवन्तौ । [3]किं दत्तवन्तौ[3] । ज्योतिः दर्शनसामर्थ्यलक्षणम् । अन्धाय षष्ठ्यर्थे चतुर्थी । अन्धस्य[4] चक्रथुः कृतवन्तौ युवाम् विचक्षे विविधं दर्शनाय ॥ १७ ॥

**वेङ्कट०** [5]शतम् मेषान्[5] वृक्यै प्रयच्छन्तम् क्रुद्धेन पौरहितेन[6] पित्रा तमः प्रणीतम् अन्धीकृतं[7] दृष्ट्वा तस्मिन् अक्षिणी आ अधत्तम् । आधाय च तयोः तस्मै अन्धाय[8] ज्योतिः चक्षुः[9] आधत्तम् दर्शनाय ॥ १७ ॥

**मुद्गल०** 'शतं मेषान् वृक्ये चक्षदानम्' ( ऋ १, ११६, १६ ) इत्यत्र यदाख्यानमवादिष्म तदत्राप्यनुसन्धेयम् । शतम् शतसङ्ख्याकान् मेषान् वृक्ये वृकीरूपेणावस्थितायाश्विनोर्वाहनाय रासभाय ममहानम् पूजितवन्तम् आहारार्थं समर्पितवन्तम् अशिवेन असुखकारिणा पित्रा स्वकीयेन जनकेन तमः दृष्टिराहित्येन कृतम् अन्धम् प्रणीतम् प्रापितम् ऋज्राश्वम् चक्षुष्मन्तम् अश्विनौ अकुरुतामिति शेषः । एतदेव विशदयति । हे अश्विनौ ! अक्षी पितृशापान्नष्टे चक्षुषी ऋज्राश्वे एतत्संज्ञके राजर्षौ आ अधत्तम् पुनर्दर्शनसमर्थे अकुरुतम् । तदेवाह । अन्धाय दृष्टिहीनाय ज्योतिः प्रकाशकं चक्षुः विचक्षे विविधं[10] जगद् द्रष्टुम् चक्रथुः युवां कृतवन्तौ ॥ १७ ॥

## शुनमन्धाय भरमह्वयत् सा वृकीरश्विना वृषणा नरेति ।
## जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥ १८ ॥

शुनम् । अन्धाय । भरम् । अह्वयत् । सा । वृकीः । अश्विना । वृषणा । नरा । इति ।
जारः । कनीनःऽइव । चक्षदानः । ऋज्रऽअश्वः । शतम् । एकम् । च । मेषान् ॥ १८ ॥

**स्कन्द०** कस्मात् पुनर्हेतोः मेषान् वृक्ये ददावृज्राश्वः । उच्यते । 'शुनम्' ( निघ ३, ६ ) इति सुखनाम । शुनम् शत्रुजयलक्षणम् । अन्धाय मह्यम् । भरम् सप्तम्यर्थे द्वितीया । भरे सङ्ग्रामे । अह्वयत्[11] आह्वानं सर्वत्र प्रापणार्थम् । अतस्तेन हेतुभूतेन फलमत्र प्रापणं लक्ष्यते । भविष्यति च काले लङ् 'छन्दसि लुङ्लङ्लिटः' ( पा ३, ४, ६ ) इति । प्रापयिष्यति । करिष्यतीत्यर्थः । सा वृकीः हे अश्विनौ ! वृषणा ! नरा ! छान्दसत्वादत्रानुदात्ताभावः । इति-शब्दः चक्षदानः इत्येतेन सम्बन्धयितव्यः । क इवाह्वयत् । उच्यते । जारः

१. °तम् अपि अ. २-२. °करो अ. ३-३. के च दत्ते मूको. ४. नास्ति मूको. ५. नास्ति वि[2] कु. ६. पौराहिते वि[1] अ[2]. ७. अन्धीकृतं वि[1] अ[2]. ८. आराय वि[1] अ[2]. ९. च कु. १०. विविधे मूको. ११. आह्वयत् अ.

कनीन इव कनीनशब्दोऽत्र न कन्यावचनः, कन्याया जारत्वासम्भवात्[1]। न च स कन्यायाः[2] सम्भवति, भर्तुरभावात्। कन्यावचनत्वे च नेदमाह्वानस्योपमानं सम्भवति। न वक्ष्यमाणस्य क्षदनस्य। कन्याया जारेणाह्वानस्य क्षदनस्य वा असम्भवात्। अत इदं कनतेः कान्तिकर्मणो (तु. निघ २,६) रूपम्। कनतीति कनः कामयिता। कन एव कनीनः[3]। स्वार्थिकः खः प्रत्ययश्छान्दसत्वात्। यथा जारः कामयिता कस्यांचित्कमनीयायां सक्तस्तां नियमेनाह्वयति तद्वदित्यर्थः। ऋज्राश्वो हि योगैश्वर्यात् पूर्वमेव ज्ञातवान्, इयं वृकी अश्विनोः कशा। सा ममान्धीभूतस्य मृते पितरि शत्रुभी रुद्धस्य शत्रुजयं करिष्यतीति चक्षदानः। इतिशब्दोऽत्र हेत्वर्थः। 'हन्तीति पलायते, वर्षतीति धावति' (पाका ३,३,१५६) इति यथा। क्षदिः विशसनार्थः। एतस्माद्धेतोः विशसमानः ऋज्राश्वः शतम् एकम् च मेषान् वृक्या आहारार्थं ददाविति[4] वाक्यशेषः ॥ १८ ॥

वेङ्कट० सुखम् अन्धाय परिपूर्णम् आजुहाव सा वृकीः अश्विना! वृषणा! नरा! इति। परिदेवनासूक्तमामन्त्रितम्[5] उच्चैर्लौकिका वदन्ति। तत्कृतोऽनिघातः[6] इत्युक्तम्। कन्यायाः[7] कुमार्याः पतिः इव अन्धीभावात्। प्राक् यस्यै स[8] वृक्यै शतम् एकम् च मेषान् भक्षणाय शकलीचकार तस्या वृक्याः प्रीत्यर्थं चक्षुराधत्तम् इति ॥ १८ ॥

मुद्गल० भरम् पोषणहेतुभूतं चक्षुरिन्द्रियेण निष्पाद्यम् शुनम् सुखम् अन्धाय दृष्टिहीनाय तस्मै ऋज्राश्वाय इच्छन्ती सा वृकीः हे अश्विना! अश्विनौ! अश्वयुक्तौ! हे वृषणा! कामानां वर्षितारौ! इति एवं सम्बोध्य नरा नेतारौ अश्विनौ अह्वयत् आहूतवती। आह्वयन्त्याः तस्याः कोऽभिप्राय इति चेत्, तदुच्यते। कनीन इव यथा प्राप्तयौवनः कामुकः जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति एवम् ऋज्राश्वः मह्यम् शतम् एकम् च एकोत्तरशतसङ्ख्याकान् मेषान् पौरजनानां स्वभूतान् अपहृत्य चक्षदानः शकलीकुर्वन् प्रादात्। तेनेदृशीं दुर्दशां प्राप्त इति ॥ १८ ॥

## मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः।
## अथा युवामिदह्वयत् पुरंधिरागच्छतं सीं वृषणाववोभिः ॥ १९ ॥

मही। वाम्। ऊतिः। अश्विना। मयःऽभूः। उत। स्रामम्। धिष्ण्या। सम्। रिणीथः।
अथ। युवाम्। इत्। अह्वयत्। पुरम्ऽधिः। आ। अगच्छतम्। सीम्। वृषणौ। अवःऽभिः ॥

स्कन्द० अथ युवाम् इत्येतस्माच्छन्दसमानार्थाथशब्दश्रुतेर्यस्माच्छब्दोऽध्याहर्तव्यः[9]। यस्मात् महीः[10] महती वाम् युवयोः ऊतिः पालनं हे अश्विनौ! मयोभूः सुखस्य भावयित्री जनयित्री। उत स्रामम् स्रामशब्दः 'द्वार्भ्यः[11] स्रामम्[12] स्वप्नाय अन्धम्[13] अधर्माय बधिरम्' (मा ३०,१०) इति पुरुषमेधमन्त्रेषु प्रयोगदर्शनात्[14] काणवचनः। यस्मात्व काणम् [15]अपि हे धिष्ण्या![15] धिषणा वाक्, तस्याः पुत्रौ!। अथवा धीः प्रज्ञा। ष्णै वेष्टने। प्रज्ञा वेष्टयित्रो सर्वार्थग्रहणसमर्थौ ययोस्तौ

१. °वात्। अत इदं कनतेः कान्तिकर्मणः। स्त्रिया जार उच्यते अ. २. कन्यायां कु. ३. कानी° अ. ४. इति अ. ५. °वनासूक्तमा° वि[1] अ[2] लपं; °वना सूक्तमा° ल; °न्त्रिकम् वि[2]. ६. °निपातः अ[1] वि[1,2] लपं; °निखातः कु. ७. नास्ति कु. कन्याः वि[1] अ[2]. ८. नास्ति वि[1] अ[2]. ९. °नार्थादथ° अ. १०. नास्ति मूको. ११. द्वार्भ्यां मूको. १२. स्रामः कु. १३. नास्ति कु. १४. °योगवचनात् अ. १५-१५. नास्ति अ.

धिष्ण्यौ। अत्यन्तप्रज्ञावित्यर्थः । सम् रिणीथः 'रिणाति' (निघ २,१४) इति [1]गतिकर्मा । इह[1] चान्तर्णीतण्यर्थः । सङ्गमयथः । केन । सामर्थ्यात् द्वितीयेनाक्ष्णा । काणमप्यकाणं शक्नुथः कर्तुमित्यर्थः । अथ एतस्मात्कारणात् युवाम् । इत्-शब्दः पदपूरणः । अह्वयत् [1]आहूतवती । पुरन्धिः[1] बहुप्रज्ञा । कासौ । वध्रिमती । कुत एतत् । तस्याः 'अजोहवीन्नासत्या' (ऋ १,११६,१३) इति पुरन्धित्वदर्शनात् । अथवा कक्षीवानपि हि पुरन्धिः 'कक्षीवते अरदतम्' ( ऋ १,११६,७ ) इति दर्शनात् । आहूयमानौ च आ अगच्छतम् आगतवन्तौ [1]युवाम् । सीम् इति[1] पदपूरणः । हे वृषणौ! अवोभिः पालनैः सम्बद्धौ। वध्रिमतीं हिरण्यमयहस्तप्रदानेन कक्षीवन्तं[2] वा त्रिकालविषयसर्वार्थविषयज्ञानप्रदानेन पालयन्तावित्यर्थः ॥ १९ ॥

वेङ्कट० महती युवयोः ऊतिः अश्विनौ! सुखस्य भावयित्री । [3]किञ्च मया स्तुत्यौ[3]! सह[4] विनाशयथः । अथ[4] युवाम्[5] इदम्[4] अह्वयत् बहुधीः वृकी । युवाम् अपि रक्षणैः ताम् आ अगच्छतम्[6] ॥१९॥

मुद्गल० हे अश्विना! अश्विनौ! वाम् युवयोः मही महती ऊतिः पालनम् मयोभूः मयसः सुखस्य भावयित्री उत अपि च हे धिष्ण्या! धिषणा स्तुतिलक्षणा वाक् तया स्तोतव्यौ! स्रामम् व्याधितं पुरुषं विश्लिष्टाङ्गम् अन्ध्यादिकम् सम् रिणीथः सङ्गतावयवं कुरुथः । अथ अपिच युवाम् इत् युवामेव पुरन्धिः बहुधीर्घोषा अह्वयत् रोगोपशमनार्थमाहूतवती । हे वृषणौ ! कामानां वर्षितारावश्विनौ! अवोभिः रक्षणैः सह आ अगच्छतम् आभिमुख्येन सीम् एनां प्राप्तवन्तौ ॥ १९ ॥

अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥ २० ॥

अधेनुम् । दस्रा । स्तर्यम् । विऽसक्ताम् । अपिन्वतम् । शयवे । अश्विना । गाम् ।
युवम् । शचीभिः । विऽमदाय । जायाम् । नि । ऊहथुः । पुरुऽमित्रस्य । योषाम् । ॥ २० ॥

स्कन्द० अधेनुम् हे दस्रौ!। स्तर्यम् निवृत्तप्रसवां च विषक्ताम्[7] च। सजतिरत्र सदोऽर्थे। विविधं चावसन्नाम्। दुर्बलां वृद्धां चेत्यर्थः[8] । अपिन्वतम् युवं सेचितवन्तौ च। धेनुकां कृतवन्तावित्यर्थः । शयवे शयोरर्थाय हे अश्विनौ! गाम् । तदेतत् पुरस्तादप्युक्तम् 'शयवे चित्' ( ऋ १,११६,२२ ) इति । किञ्च युवम् शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा । विमदाय षष्ठ्यर्थे चात्र चतुर्थी । विमदस्य ऋषेः जायाम् भार्यां परिणीतमात्रां सेनापरिवृतेन रथेन नि ऊहथुः तद्गृहं प्रत्यूढवन्तौ । पुरुमित्रस्य मित्रग्रहणमत्र प्रदर्शनार्थम् । बहुमित्रस्वजनस्य । योषाम् स्त्रियम् । तदेतत् पुरस्तादप्युक्तम् 'यावर्भगाय' ( ऋ १,११६,१ ) इति ॥ २० ॥

वेङ्कट० निवृत्तप्रसवाम् दर्शनीयौ! चिरकालं तथाभूतां स्थिताम् गाम् युवाम् ऋषये शयवे अपिन्वतम्[9] । प्रज्ञाभिः विमदाय च जायाम् गृहम्[10] नि ऊहथुः पुरुमित्रस्य दुहितरम् ॥ २० ॥

---

१-१. नास्ति अ.　२. कक्षीवन्तौ अ.　३-३. किञ्चानया स्तुत्या वि[1] लपं.　४. नास्ति वि[3] अ[2].
५. वाम् कु.　६. आगतम् वि[1] अ[1].　७. विसक्तां अ.　८. वेत्य अ.　९. अपिबतं वि[1] लपं.
१०. नास्ति ल.

**मुद्गल०** हे दस्रा! दर्शनीयावश्विनौ! विषक्ताम् विशेषेण सक्तावयवां कृशावयवामित्यर्थः। अत एव स्तर्यम् निवृत्तप्रसवाम् अत एव अधेनुम् अदोग्ध्रीम्। एवंभूताम् गाम् शयवे एतत्संज्ञाय ऋषये अपिन्वतम् पयसा अपूरयतम्। अपि च पुरुमित्रस्य पुरुमित्रो नाम कश्चिद्राजा तस्य योषाम् कुमारीम् शचीभिः आत्मीयैः कर्मभिः विमदाय एतत्संज्ञाय ऋषये शत्रुभिः सह योद्धुमशक्ताय जायाम् युवम् युवाम् नि ऊहथुः विमदस्य गृहं प्रापितवन्तौ ॥ २० ॥

इति प्रथमाष्टके अष्टमाध्याये षोडशो वर्गः ॥

**यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।**
**अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥ २१ ॥**

यवम् । वृकेण । अश्विना । वपन्ता । इषम् । दुहन्ता । मनुषाय । दस्रा ।
अभि । दस्युम् । बकुरेण । धमन्ता । उरु । ज्योतिः । चक्रथुः । आर्याय ॥ २१ ॥

**स्कन्द०** यवग्रहणमत्र प्रदर्शनार्थम्। यवादिधान्यम्। वृकेण वृक इति लाङ्गलमत्रोच्यते तेन हे अश्विनौ! वपन्ता प्रकिरन्तौ। इषम् इड् इत्यन्ननाम (तु. निघ २,७)। तद्धेतुत्वादत्र वृष्ट्युदके वर्तते। अन्नहेतुभूतं च वृष्ट्युदकम्। दुहन्ता क्षारयन्तौ[1]। मनुषाय मनुषशब्दोऽत्र [2]मनोः पर्यायः[2]। मनुनाम्नो राज्ञोऽर्थाय हे दस्रा!। तदेतत् कुत्सेनोक्तम् 'याभिः पुरा मनवे' (ऋ १,११२,१६) इति। अथवा वपिरन्तर्णीतण्यर्थः। मनुषायेत्यपि मनुष्यपर्यायः। यवादिधान्यं कर्षकैर्वापयन्तौ वृष्ट्युदकं च क्षारयन्तौ मनुष्यस्यार्थाय। दस्युम् चाऽनार्यं रक्षःपिशाचादिकम्। बकुरेण भयङ्करेण स्वेनायुधेन ज्योतिषा वा। अभि धमन्ता 'धमति' (निघ २,१९) इति वधकर्मा। अभिघ्नन्तौ[3]। उरु विस्तीर्णमात्मनो ज्योतिः तेजः प्रभालक्षणम् चक्रथुः[4] कृतवन्तौ युवाम् आर्याय आर्यस्यार्थाय। वपनवृष्टिदोहनदस्युहननैस्त्रिभिः[5] कर्मभिर्महाप्रभावौ युवां जातौ साधूनामनुग्रहार्थमित्यर्थः। अथवा अभि दस्युमिति दस्युशब्देनोपलक्षणत्वात्[6] दुर्भिक्ष[7] उच्यते। बकुरशब्देनापि महान् वृष्ट्युदकसमूहः। ज्योतिःशब्देनापि सुभिक्षमिति[8]। महत्त्वाद् भयङ्करेण[9] वृष्ट्युदकसमूहेनाभिघ्नन्तौ विस्तीर्णं सुभिक्षं कृतवन्तौ कुरुथो वा[10] आर्यस्यार्थायेत्यर्थः ॥ २१ ॥

**वेङ्कट०** अश्विनौ! विकर्तनेन लाङ्गलेन भूमिं कृषन्तौ यवम् च सरस्वतीतीरे वपन्तौ[11] वृष्टिं च अस्मै दुहन्तौ दस्युम्[12] च भयङ्करेण आयुधेन घ्नन्तौ दुर्भिक्षापनयनेन विस्तीर्णम्[13] ज्योतिः चक्रथुः मनवे ॥ २१ ॥

**मुद्गल०** आर्याय विदुषे मनुषाय मनवे मनोरर्थं हे दस्रा! दर्शनीयौ! अश्विना! अश्विनौ! वृकेण लाङ्गलेन कर्षकैः कृष्टदेशे यवम् यवाद्युपलक्षितं सर्वं धान्यजातम् वपन्ता वापयन्तौ तथा इषम् अन्ननामैतत्। तत्कारणभूतं वृष्ट्युदकं च दुहन्ता मेघात् क्षारयन्तौ तथा दस्युम् उपक्षयकारिणम् असुरपिशाचादिकम् बकुरेण बकुरो नाम भासमानो वज्रः, तेन अभि धमन्ता अभिघ्नन्तौ। एवं त्रिविधं कर्म कुर्वन्तौ युवाम् उरु विस्तीर्णम् ज्योतिः स्वकीयं तेजः माहात्म्यम् चक्रथुः कृतवन्तौ ॥ २१ ॥

---

१. क्षरय° अ. २-२. मनुष्यपर्या° अ. ३. °घ्नन्तः कु. ४. °क्रतुः अ. ५-५. यववचनं वृष्टिदोहनं दस्यु° अ. ६. °नोपक्षपणत्वात् अ. ७. °भिक्षं अ. ८. सुभिक्षं दुर्भिक्षमिति अ. ९. °करणे अ. १०. युवां कु; वां अ. ११. प्रवपन्तौ अ[1] कु. १२. दस्यून् वि[1] अ[2] कु. १३. विकीर्णं वि[1] लपं.

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।
स वां मधु प्र वोचदृतायन् त्वाष्ट्रं यद् दस्रावपिकक्ष्यं वाम् ॥ २२ ॥

आथर्वणाय । अश्विना । दधीचे । अश्व्यम् । शिरः । प्रति । ऐरयतम् ।
सः । वाम् । मधु । प्र । वोचत् । ऋतऽयन् । त्वाष्ट्रम् । यत् । दस्रौ । अपिऽकक्ष्यम् । वाम् ॥ २२ ॥

**स्कन्द०** आथर्वणाय[१] षष्ठ्यर्थे चतुर्थी । अथर्वणः पुत्रस्य । हे अश्विनौ! दधीचे [२]दध्यङ्नाम्न ऋषेः[२] । अश्व्यम् अश्वस्यावयवभूतम् शिरः प्रति ऐरयतम् प्रतीत्येष उपेत्येतस्य स्थाने । उपगमितवन्तौ । युवाम् आहितवन्तावित्यर्थः । आहितेनैतेन सः वाम् युवाभ्याम् मधु मध्वाख्यं परं ब्रह्म प्र वोचत् प्रोक्तवान् । ऋतायन्[३] 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) इति क्यच् प्रत्ययः परेच्छायामत्र द्रष्टव्यः । 'रक्षा राजन्नघायतः' ( ऋ १,९१,८ ) इति यथा । ऋतं सत्यम्, तदेव ब्रह्म, तद्युवयोरिच्छन् । तदेतत् पुरस्तादप्युक्तम् 'तद् वां नरा सनये' ( ऋ १,११६,१२ ) इति । कीदृशं यत् ब्रह्म । उच्यते । त्वाष्ट्रम् त्वष्ट्रा दृष्टत्वात् त्वाष्ट्रम्[४] । त्वष्ट्रा ज्ञातमेव यदित्यर्थः । दस्रौ[४]! अपिकक्ष्यम् गुह्यम् वाम् युवयोः । युवां न कस्मैचिद् ब्रूथ[५] इत्यर्थः । अथवा त्वाष्ट्रं यदित्यश्वशिरसो विशेषणं न ब्रह्मणः । त्वष्टेत्यत्रेन्द्र उच्यते, शत्रूणां तनूकर्तृत्वात् । युवाभ्यां शर्यणावति निहितं शत्रूणां तनूकर्त्रा इन्द्रेण दृष्टं यच्छिरः । गुह्यमपि युवयोरित्यर्थः । तदेतत् गौतमेनोक्तम् 'इच्छन्नश्वस्य यच्छिरः' ( ऋ १,८४,१४ ) इति ॥ २२ ॥

**वेङ्कट०** [६]अथर्वणः पुत्राय[६] अश्विनौ! दधीचे अश्वस्य शिरः छित्वा प्रत्यधत्तम् । अथ तेन शिरसा [७]सः युवाभ्याम्[७] मध्वाख्यं परं ब्रह्म प्रावोचत् यज्ञम् इच्छन् संहितम् । अपि वा[८] प्रतिज्ञां सत्यां कर्तुम् इच्छन् । त्वष्टा शिल्पविद् भवति । स च नूनम् एतद् वेद यत् अश्विभ्याम् असौ[९] प्रोवाच । [१०]कक्षस्य शिरसः[१०] अप्ययोऽपिकक्षः, तस्य विश्लिष्टस्य यत् सन्धाननिमित्तं तत् अपिकक्ष्यम् छिन्नस्य शिरसः[११] प्रतिसन्धानोपायभूतं मधु इति[१२] ॥ २२ ॥

**मुद्गल०** 'तद्वां नरा सनये' इत्यत्रोक्तमाख्यानमिहाप्यनुसन्धेयम् । हे अश्विना! अश्विनौ! आथर्वणाय अथर्वणः पुत्राय दधीचे दध्यङ्नाम्ने महर्षये अश्व्यम् अश्वस्य सम्बन्धि शिरः प्रति ऐरयतम् प्रत्यधत्तम् । तदीयं मानुषं शिरः प्रच्छिद्यान्यत्र निधायाश्व्येन शिरसा तमृषिं समयोजयतमित्यर्थः । सः च वाम् युवाभ्यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामीति पुरा कृतां प्रतिज्ञाम् ऋतायन् सत्यमात्मन इच्छन् मधु मधुविद्याम् त्वाष्ट्रम् त्वष्टुरिन्द्रात् लब्धम् प्र वोचत् प्रोक्तवान् । हे दस्रौ! दर्शनीयौ अश्विनौ! वाम् युवयोः सम्बन्धि यत् अपिकक्ष्यम् छिन्नस्य यज्ञशिरसः कक्ष्यप्रदेशेन पुनःसन्धानभूतं प्रवर्ग्यविद्याख्यं रहस्यं तदपि वाम् युवाभ्यां प्रावोचदित्यर्थः ॥ २२ ॥

सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।
अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ॥ २३ ॥

---

१. नास्ति मूको. २-२. दध्यङ्नाम्न ऋषये कु. ३. ऋतय° कु. ४. नास्ति अ. ५. ब्रूथं कु. ६-६. अथर्वपुत्रस्य वि[३] अ[२]. ७-७. नास्ति वि[३] अ[२]. ८. वा युवयोः वि[३] अ[२]. ९. नास्ति वि[३] अ[२]. १०-१०. कक्षशिरसः मूको. ११. यज्ञशिरसः अ[१] कु. १२. नास्ति कु.

सदा । कवी इति । सुऽमतिम् । आ । चके । वाम् । विश्वाः । धियः । अश्विना । प्र । अवतम् । मे । अस्मे इति । रयिम् । नासत्या । बृहन्तम् । अपत्यऽसाचम् । श्रुत्यम् । रराथाम् ॥ २३ ॥

**स्कन्द०** सदा कवी! **मेधाविनौ!** सुमतिम् **भक्तानुग्रहात्मिकां शोभनां बुद्धिम्।** आ चके **कामये** वाम् **युवयोः स्वभूताम्। 'युवयोरनुग्राह्यो भवेयमित्येवं कामये' इत्यर्थः। एतत् ज्ञात्वा** विश्वाः **सर्वाणि** धियः **प्रज्ञाः कर्माणि वा हे अश्विनौ!** प्र अवतम् **प्रकर्षेण रक्षतम्** मे **मम। किञ्च** अस्मे[२] **अस्मभ्यम्** रयिम् **धनम्। हे** नासत्या! **'बृहन्तम् महत्[३]।** अपत्यसाचम् **अपत्यानि यत् सचते तदपत्यसाचम्। अपत्यसहितमित्यर्थः।** श्रुत्यम् **श्रुतं प्रख्यातं लोके** रराथाम् **दत्तम्॥ २३ ॥**

**वेङ्कट०** सदा **मेधाविनौ! युवयोः अहम् प्रमतिम् कामये। सर्वाणि कर्माणि अश्विनौ!** प्र अवतम् **मे। अस्मभ्यम्[४] धनम् नासत्यौ! महत् अपत्यानां सम्भक्तृ[५] श्रवणनिमित्तं प्रयच्छतम्॥ २३ ॥**

**मुद्गल०** हे कवी! **मेधाविनावश्विनौ!** वाम् **युवयोः** सुमतिम् **कल्याणीम् अनुग्रहात्मिकां बुद्धिम्** सदा **सर्वदा** आ चके **आभिमुख्येन प्रार्थये।** मे **मदीयानि** विश्वाः धियः **सर्वाणि कर्माणि युवाम्** प्र अवतम् **प्रकर्षेण रक्षतम्। अपि च** अस्मे **अस्मभ्यं हे** नासत्या! **सत्यभूतौ!** अश्विना! **अश्विनौ!** बृहन्तम् **महान्तम्** अपत्यसाचम् **अपत्यैः पुत्रादिभिः समवेतम्** श्रुत्यम् **प्रशंसनीयम् उत्कृष्टम्** रयिम् **धनम्** रराथाम् **प्रयच्छतम्॥ २३ ॥**

## हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।
## त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥ २४ ॥

हिरण्यऽहस्तम् । अश्विना । रराणा । पुत्रम् । नरा । वध्रिऽमत्याः । अदत्तम् ।
त्रिधा । ह । श्यावम् । अश्विना । विऽकस्तम् । उत् । जीवसे । ऐरयतम् । सुदानू इति सुऽदानू ॥ २४ ॥

**स्कन्द०** हिरण्यहस्तम्[६] **हिरण्मयौ हस्तौ यस्मिन् स हिरण्यहस्तो बाहुः, तं हे अश्विनौ!** रराणा **ददतौ** पुत्रम् **हे** नरा! **। कस्य पुत्रम्। उच्यते।** वध्रिमत्याः **।** अदत्तम् **दत्तवन्तौ स्थः युवाम्। कस्मै। प्रकृतत्वात् वध्रिमत्यै। तस्यै एव अत्र वध्रिमत्यै अव्यवहितदानसम्बन्धे सम्भवति [७]नरापदव्यवहितपुत्रकस्य सम्बन्धस्य[७] अन्याय्यत्वात्[८] दानसम्बन्धे चतुर्थ्या न्याय्यत्वात्[८] संहितायाश्च तुल्यत्वात् वध्रिमत्यै इति चतुर्थ्यन्ते पदे कर्तव्ये यत् पदकारेण षष्ठ्यन्तं पदं कृतं तत्र तस्याभिप्रायः पर्येष्यः[९]। हिरण्यहस्तबाहुमात्रदानं[१०] च पुरस्तादप्युक्तम् 'श्रुतं तच्छासुरिव' ( ऋ १,११६,१३ ) इति। किञ्च** त्रिधा **त्रिभिः प्रकारैः। जङ्घयोर्मध्ये शिरसि च।** ह-**शब्दः** पदपूरणः। श्यावम्[११] **कुष्ठितत्वात् श्याववर्णम्[१२] [३]अग्नेः पुत्रस्य[३] घोरस्य ज्येष्ठपुत्रं हे अश्विनौ!** विकस्तम् **विकस्तिरत्र छेदनार्थः। विविधं छिन्नम्।** जीवसे **जीवनाय।** उत् ऐरयतम् **ऊर्ध्वं गमितवन्तौ स्थः, उत्थापितवन्तौ युवाम्। पुनरुज्जीवितवन्तौ[१३] युवामित्यर्थः।** हे सुदानू! **शोभनदातारौ!।** तदेतत् **पुरस्तादप्युक्तम्** 'युवं

---

१-१. [०]मद्वयोरभावे कामयत अ. २. अस्मै अ. ३-३. नास्ति अ. ४. मह्यं वि[१] अ[२]. ५. सम्भर्तं वि[१] ल लर्प. ६. नास्ति मूको. ७-७. [०]दव्य··· अ. ८. [०]यत्वात् मूको. ९. नास्ति अ. १०. ···हस्त[०] अ. ११. श्यावः अ. १२. [०]वर्णः [अ]. १३. पुनः···वन्तौ अ.

श्यावाय' ( ऋ १, ११७, ८ ) इति। कुत्सेनाप्युक्तम् 'याभिः शचीभिः' ( ऋ १,११२,८ ) इति ॥ २४ ॥

**वेङ्कट०** हिरण्यहस्तम् **नाम अश्विनौ! रममाणौ** पुत्रम् **नेतारौ!** वध्रिमत्याः अदत्तम्। श्यावम् च कुष्ठिनम् **ऋषिं**[1] **कुब्जम् अश्विनौ!** त्रिधा **छिन्नं सन्धाय जीवनार्थं पुनरप्युत्थापितवन्तौ शोभनदानौ!** ॥ २४ ॥

**मुद्गल०** रराणा[2] **रममाणौ** नरा! **नेतारौ!** अश्विना! हे **अश्विनौ!** हिरण्यहस्तम् **नाम** पुत्रम् वध्रिमत्याः **एतत्संज्ञायै ब्रह्मवादिन्यै** अदत्तम् ह **प्रायच्छतं** खलु। **अपि च** हे सुदानू! शोभनदानौ! अश्विना! **अश्विनौ!** त्रिधा **त्रेधा** विकस्तम् **विच्छिन्नम्** श्यावम् **श्यावाख्यमृषिम्** जीवसे जीवितुम् उत् ऐरयतम् **असुरैस्त्रिधा खण्डितं शरीरं पुनरेकीकृत्योदगमयतमित्यर्थः** ॥ २४ ॥

**एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।**
**ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥ २५ ॥**

एतानि । वाम् । अश्विना । वीर्याणि । प्र । पूर्व्याणि । आयवः । अवोचन् ।
ब्रह्म । कृण्वन्तः । वृषणा । युवऽभ्याम् । सुऽवीरासः । विदथम् । आ । वदेम ॥ २५ ॥

**स्कन्द०** एतानि वाम् **युवयोः** हे अश्विना! वीर्याणि **वीरकर्माणि** पूर्व्याणि **पुराणानि** आयवः **मनुष्याः सर्वे स्तोतारः** प्र अवोचन् **प्रब्रुवन्ति। किञ्च** ब्रह्म **स्तुतिरूपम्** कृण्वन्तः **कुर्वन्तो वयं** हे वृषणा! **वर्षितारौ!** युवभ्याम् **युवाभ्याम् युवयोरर्थाय** सुवीरासः **शोभनैः पुत्रैः पौत्रैश्च युक्ताः। विदथम् सप्तम्यर्थे द्वितीया। यज्ञे।** आ वदेम **मर्यादया** वदेमेत्येतदाशास्महे[3] ॥ २५ ॥

**वेङ्कट०** एतानि **युवयोः अश्विनौ!** वीर्याणि **पूर्वकालकृतानि** सम्प्रतितनाः प्र अवोचन् **स्तोत्रम्** कृण्वन्तः[4] **वर्षितारौ! युवाभ्याम्। अथ अभिलषितम्** आशास्ते। सपुत्राः वयम् गृहं प्राप्य **पुत्रादीन्**[5] आ वदेम **इति। सूक्ते अस्मिन् प्रकारान्तरेणाऽपदानानि अश्विनोरुक्तानीति**[6] ॥ २५ ॥

**मुद्गल०** हे अश्विना! **अश्विनौ!** वाम् **युवयोः सम्बन्धीनि** पूर्व्याणि **प्रत्नानि** एतानि **इदानीं मयोक्तानि** वीर्याणि **वीरकर्माणि** आयवः **मनुष्या मदीयाः** पित्रादयः प्र अवोचन् **उक्तवन्तः। वयञ्च** हे वृषणा! **कामानां वर्षकावश्विनौ!** युवाभ्याम् ब्रह्म **मन्त्रात्मकं स्तोत्रम्** कृण्वन्तः **कुर्वन्तः** सुवीरासः **सुवीराः शोभनैर्वीरैः पुत्रादिभिरुपेताः** सन्तः विदथम् **यज्ञम्** आ वदेम **आभिमुख्येन स्तुतीरुच्चारयामः** ॥ २५ ॥

**इति प्रथमाष्टके अष्टमाध्याये सप्तदशो वर्गः ॥**

---

१. कुब्जं वि[१] अ[१]. २. हे रा° मूको. ३. वदेमेत्याशास्महे अ. ४. कृण्वन्तौ वि[३] अ[२]. ५. पुत्रादि वि[३] अ[२]. ६. °क्तानि कु.

## [ ११८ ]

**आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ् ।**
**यो मर्त्यस्य मनसो जवीयान् त्रिवन्धुरो वृषणा वातरंहाः ॥ १ ॥**

आ । वाम् । रथः । अश्विना । श्येनऽपत्वा । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् ।
यः । मर्त्यस्य । मनसः । जवीयान् । त्रिऽवन्धुरः । वृषणा । वातऽरंहाः ॥ १ ॥

**स्कन्द०** आकारः यात्वित्याख्यातेन सम्बन्धयितव्यः । वाम् युवयोः स्वभूतो रथः । हे अश्विनौ! श्येनपत्वा[1] श्येनसदृशैः शीघ्रैरश्वैर्यः पतति[2] गच्छति स श्येनपत्वा[1] । सुमृळीकः सुसुखः । स्ववान् अस्मभ्यं यद्देयं धनं तेन सहेत्यर्थः । आ यातु आगच्छतु । अर्वाङ् अस्मदभिमुखः[3] । यः कीदृशः । उच्यते । यः मर्त्यस्य मनुष्यस्य स्वभूतात् मनसः जवीयान् वेगवत्तरः । त्रिवन्धुरः त्रिसारथिस्थानः[4] । हे वृषणा! वातरंहाः क्षिप्रनामैतत् ( तु निघ २,१५ ) । रंहतिर्गतिकर्मा[5] ( तु. निघ २,१४ ) । वात इव यो रंहति गच्छति स वातरंहाः[6] क्षिप्रः[7] ॥ १ ॥

**वेङ्कट०** अश्विनौ! श्येनैः अश्वैः पतन् युवयोः रथः सुखयिता धनपूर्णः अस्मदभिमुखः[3] आगच्छतु । यः मर्त्यस्य मनसः अपि वेगवत्तरः । मनुष्यः[8] यदा अश्विनौ चिन्तयित्वा विरतमतिः भवति[9] [10]ततः प्रागेव[10] आगच्छतीति[11] मनसः जवीयान् । त्रिवन्धुरः वर्षितारौ! वातवेगः ॥ १ ॥

**मुद्गल०** 'आ वाम्' इत्येकादशर्चं तृतीयं सूक्तम्[12] । कक्षीवान् ऋषिः[12] । त्रिष्टुप् छन्दः[12] । अश्विनौ देवता†[12] ।

हे अश्विना! अश्विनौ! वाम् युवयोः स्वभूतः रथः अर्वाङ् अस्मदभिमुखः[13] सन् आ यातु आगच्छतु । कीदृशो रथः । श्येनपत्वा [14]श्येन इत्यश्वनाम[14] ( तु. निघ १,१४) । शंसनीयगमनैरश्वैः पतन् गच्छन् । सुमृळीकः शोभनसुखयुक्तः । स्ववान् धनवान् । हे वृषणा! कामानां वर्षितारौ! अश्विनौ! यः युष्मदीयो रथः मर्त्यस्य मनुष्यस्य मनसः जवीयान् अतिशयेन वेगवान् । तद्यथा वेगेन कृत्स्नं जगद्व्याप्नोति ततोऽप्यतिशयेन क्षणमात्रादेव सर्वं जगत् पर्यटतीत्यर्थः । त्रिवन्धुरः वन्धुरं वेष्टितं सारथेः स्थानम्, त्रिप्रकारेण[15] वन्धुरेण युक्तः । वातरंहाः वातस्य वायो रंहो वेग इव वेगो यस्य स तथोक्तः । अनेन अप्रतिहतगतित्वमुच्यते । स रथ इति पूर्वत्रान्वयः ॥ १ ॥

**त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।**
**पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥ २ ॥**

त्रिऽवन्धुरेण । त्रिऽवृता । रथेन । त्रिऽचक्रेण । सुऽवृता । आ । यातम् । अर्वाक् ।
पिन्वतम् । गाः । जिन्वतम् । अर्वतः । नः । वर्धयतम् । अश्विना । वीरम् । अस्मे इति ॥ २ ॥

---

१. °त्वात् अ. २. व्रतति अ. ३. °मुखम् कु. ४. °स्थाने अ. ५. हन्तिर्गति° अ. ६. °रंहः अ. ७. क्षिप्रं अ. ८. नास्ति वि[1] ल[1]. ९. नास्ति वि[1] अ[2]. १०-१०. तत्प्रागेव कु. ११. गच्छति वि[1] अ[2]; °च्छति वि[1,2] अ[1] ल लपं. १२. नास्ति मै[2]. † °ते मै[1]. १३. तु. ऋ १,३५,१० प्रभृ.; वैतु. मूको. सा. °खम्. १४-१४. सेनाम मूको. १५. त्रिः प्रका° मूको.

**स्कन्द०** त्रिवन्धुरेण त्रिसारथिस्थानेन। त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्, तेन त्रिवृता स्वेन रथेन। त्रिचक्रेण अवयवभूतान्यपि त्रीण्येव चक्राणि यस्य स त्रिचक्रः, तेन। सुवृता सुगमनेन। आ यातम् आगच्छतम् अर्वाक् अस्मदभिमुखम् आगत्य च पिन्वतम् सेचयतम्। धेनुकाः कुरुत-मित्यर्थः। गाः। जिन्वतम् प्रीणयतम् अर्वतः अश्वान् नः अस्माकम्। वर्धयतम् हे अश्विनौ! वीरम् पुत्रपौत्रादिम् अस्मे अस्माकम्॥ २॥

**वेङ्कट०** त्रिवन्धुरेण[1] त्रिसन्धानेन[2] प्रउगाकारेण त्रिचक्रेण शोभनवर्तनेन आगच्छतम् अभिमुखम्। निर्गमयतम् [3]अस्मभ्यम् पशून्। प्रयच्छतम्[3] अश्वान्। वर्धयतम् च अश्विनौ! पुत्रम् अस्माकम्॥२॥

**मुद्गल०** त्रिबन्धुरेण बन्धुरं सारथेः स्थानम्। त्रिप्रकारबन्धुरोपेतेन त्रिवृता त्रिधा वर्तमानेन त्रिचक्रेण चक्रत्रयोपेतेन सुवृता [4]शोभनं गच्छता[4] रथेन अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम्। आगत्य चास्मदीयाः गाः पिन्वतम् पयसा पूरयतम्। नः अस्माकम् अर्वतः अश्वान् जिन्वतम् प्रीणयतम्। अपि च हे अश्विना! अश्विनौ! अस्मे अस्माकम् वीरम् पुत्रादिकम् वर्धयतम् प्रवृद्धं कुरुतम्॥ २॥

**प्र॒वद्या॑मना सु॒वृता॒ रथे॑न॒ दस्रा॑वि॒मं शृ॑णुतं॒ श्लोक॒मद्रेः॑।**
**किम॒ङ्ग वां॒ प्रत्यव॑र्तिं॒ गमि॑ष्ठा॒हुर्विप्रा॑सो अश्विना पु॒रा॒जाः॥ ३॥**

प्र॒वत्ऽया॑मना। सु॒ऽवृता॑। रथे॑न। दस्रौ॑। इ॒मम्। शृ॒णु॒त॒म्। श्लोक॑म्। अद्रेः॑।
किम्। अ॒ङ्ग। वा॒म्। प्रति॑। अव॑र्तिम्। गमि॑ष्ठा। आ॒हुः। विप्रा॑सः। अ॒श्वि॒ना॒। पु॒रा॒ऽजाः॥ ३॥

**स्कन्द०** 'प्रवते' (निघ २,४१) इति गतिकर्मा। यान्ति देवता यस्मिन् स यामा यज्ञः। यज्ञानां गन्ता प्रवद्यामा[5]। षष्ठीसमासे पूर्वनिपातश्छान्दसत्वात्। तेन प्रवद्यामना। सुवृता। सुगमनेन स्वेन रथेन। तृतीया-श्रुतेः साकाङ्क्षत्वादागत्येति वाक्यशेषः। हे दस्रौ! इमम् शृणुतम् श्लोकम् शब्दम् अद्रेः[6] अभि-षवग्राव्णः। परेणार्धर्चेन उक्तमात्रौ अनागच्छन्तौ कुपित इवाह— किम् अङ्ग क्षिप्रम्। वाम् युवाम् अवर्तिम् तृतीयार्थे द्वितीया अवर्तन्या अमार्गेणापि। [7]प्रति गमिष्ठा[7] प्रतीत्येव उपेत्येतस्य स्थाने। अति-शयेनोपगन्तारौ यज्ञान्। आहुः विप्रासः[8] मेधाविनः हे अश्विनौ! पुराजाः पुरा जाताः। मुधैव[9] वृद्धाः एतदाहुः। [7]नैव हि युवां[7] क्षिप्रमुपगन्तारौ यज्ञानां यावस्मद्यज्ञमुक्तमात्रेण नागच्छथ इत्यर्थः॥ ३॥

**वेङ्कट०** शीघ्रगमनेन[10] सुवृता[11] रथेन आगत्य इमम् स्तोत्रम्[12] शृणुतम् आद्रियमाणस्य। किम् अङ्ग युवाम् मनुष्याणाम् दारिद्र्यम् प्रति गन्तारौ वदन्ति अश्विनौ! पुरा जाता[13] मेधाविनः। तथा सति आगच्छतम् इति[14]॥ ३॥

**मुद्गल०** हे दस्रौ! दर्शनीयावश्विनौ! प्रवद्यामना प्रकृष्टगमनेन शीघ्रगामिना सुवृता शोभनवर्तनेन रथेन आगत्य अद्रेः आदरं कुर्वतः स्तोतुः इमम् श्लोकम् स्तुतिलक्षणाम् इमां वाचम् शृणुतम् अङ्ग अश्विना!

---

१. त्रिवन्धुरेण कु. २. नास्ति वि[1,2] अ[1,2] लपं; °न्धानैः वि[3]. ३-३. नास्ति वि[3] अ[3]. ४-४. शोभनवर्तनेन मै[2]. ५. प्रपद्यमाना अ ६. नास्ति अ. ७-७. नास्ति अ. ८. विप्रियासः अ. ९. वृथैव कु. १०. °गमनौ वि[3] अ[3]. ११. सुव्रता अ[1,2] वि[3]. १२. स्तोमं कु. १३. जाता मुधैव वृद्धा एव तदाहुः वि[3] अ[3]. १४. नास्ति कु.

हे अश्विनौ! पुराजाः पूर्वजाताः चिरन्तनाः विप्रासः मेधाविनः वाम् युवाम् अवर्तिम् स्तोतॄणां दारिद्र्यम् प्रति तत्परिहर्तुम्[1] गमिष्ठा गन्तृतमौ आहुः कथयन्ति। किम् शब्दः फलप्रदर्शनप्रश्ने वर्तते। किं न कथयन्ति, कथयन्त्येव सर्वे। तथा सति आगन्तव्यमिति ॥ ३ ॥

आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः।
ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ॥ ४ ॥

आ। वाम्। श्येनासः। अश्विना। वहन्तु। रथे। युक्तासः। आशवः। पतङ्गाः।
ये। अप्ऽतुरः। दिव्यासः। न। गृध्राः। अभि। प्रयः। नासत्या। वहन्ति ॥ ४ ॥

**स्कन्द०** आकारो वहन्त्वित्याख्यातेन सम्बन्धयितव्यः। वाम् युवाम्[2] श्येनासः श्येनसदृशाः हे अश्विनौ! आ वहन्तु अस्मान् प्रति रथे युक्तासः युक्तास्सन्तः[3] आशवः क्षिप्राः पतङ्गाः अश्वनामैतत् (तु. निघ १, १४)। अश्वाः। ये किं कुर्वन्ति। उच्यते। ये अप्तुरः आपोऽन्तरिक्षम्, तत्र [4]त्वरितारः त्वारयितारो[4] वा मेघस्य। अथवा आप उदकानि, तत्र त्वरितारः[5]। दिव्यासः न दिव्या इव गृध्राः। अभि प्रयः[6] हविर्लक्षणमन्नं प्रति हे नासत्यौ! वहन्ति ॥ ४ ॥

**वेङ्कट०** आ वहन्तु वाम् अश्वाः अश्विनौ![7] अश्नुवानाः[8] पतनशीलाः रथे युक्ताः। ये उदकस्य प्रेरयितारः[9] अन्तरिक्षस्थाः गृध्राः इव युवां हविर्लक्षणम् अन्नम् प्रति नासत्यौ! वहन्ति ॥ ४ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! वाम् युवयोः रथे युक्तासः युक्ताः सारथिना वहनप्रदेशे योजिताः आशवः व्याप्नुवन्तः पतङ्गाः पतनसमर्थाः श्येनासः शंसनीयगमना अश्वाः वाम् युवाम् आ वहन्तु अस्मत्समीपमानयन्तु। ये अश्वाः अप्तुरः आप इव त्वरोपेताः दिव्यासः न गृध्राः अन्तरिक्षे वर्तमाना गृध्राख्याः पक्षिण इव शीघ्रं गच्छन्तः। हे नासत्या! अश्विनौ! युवाम् प्रयः हविर्लक्षणमन्नमभिलक्ष्य वहन्ति प्रापयन्ति। तादृशा इति पूर्वत्र सम्बन्धः ॥ ४ ॥

आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य।
परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके ॥ ५ ॥

आ। वाम्। रथम्। युवतिः। तिष्ठत्। अत्र। जुष्ट्वी। नरा। दुहिता। सूर्यस्य।
परि। वाम्। अश्वाः। वपुषः। पतङ्गाः। वयः। वहन्तु। अरुषाः। अभीके ॥ ५ ॥

**स्कन्द०** आकारस्तिष्ठदित्याख्यातेन सम्बन्धयितव्यः। [10]वाम् युवयोः स्वभूतम् रथम्[10] युवतिः प्राप्तयौवना आ तिष्ठत् आस्थितवती। आजौ जिता सती आरूढेत्यर्थः। अत्र अश्विनोरयं सन्निहितयोः प्रतिनिर्देशः। एतयोर्युवयोरश्विनोः जुष्ट्वी जुषिः प्रीत्यर्थः। प्रीत्वा। युवयोरनुरज्येत्यर्थः।

---

१. तत्प्रतिहर्तुं मै[2]. २. नास्ति अ. ३. नियु° अ. ४-४. नास्ति अ; °तारौ त्वारयितारौ कु. ५. °तारौ कु. ६. प्रायः अ. ७. नास्ति वि[1]. ८. अश्नुवाः अश्विनाः वि[1] लपं. ९. °रः अप्तुरः अन्तरिक्षे त्वरितारो वा वि[2] अ[2]. १०-१०. युवां अ.

'हे नरा!' मनुष्याकारौ! दुहिता सूर्यस्य सूर्या नाम। तदेतत् पुरस्तादप्युक्तम् 'आ वां रथं दुहिता' (ऋ १,११६,१७) इति। किञ्च परि वाम् परि इत्येष वहन्त्वित्याख्यातेन सम्बन्धयितव्यः। वाम् युवाम् अश्वाः अशू व्याप्तौ। व्यापारः। वपुषः "वपु." (निघ ३,७) इति[1] रूपनाम इह चान्तर्णीतमत्वर्थम्[2]। वपुष्मन्तः रूपवन्तः। पतङ्गाः अश्वनामैतत्। अश्वाः वयः पक्षिसदृशाः शीघ्राः परि वहन्तु परिप्रापयन्तु। अरुषाः 'अरुषति' (निघ २,२४) इति गतिकर्मा। गमनशीलाः। अभीके[3] आसन्ननामैतत् (तु. निघ ३,२९)। आसन्ने यागकाले ॥ ५ ॥

**वेङ्कट०** [4]सूर्यस्य दुहिता युवतिः प्रीता[4] स्वयंवरे युवयोः रथम् नरौ! अतिष्ठत्। परि आ वहन्तु[5] वाम्[6] अश्वाः उदकात् समुद्रात् गमनशीलाः पतनशीला आरोचमाना अन्तिके ॥ ५ ॥

**मुद्गल०** हे नरा! नेतारावश्विनौ! युवतिः तरुणी सूर्यस्य दुहिता जुष्ट्वी प्रीता सती वाम् युवयोः अत्र इमम् रथम् आ तिष्ठत् [7]आरूढवती। तथा सहितौ वाम् युवाम् अश्वाः अभीके गृहसमीपे तं रथम् परि वहन्तु प्रापयन्तु[7]। कीदृशा अश्वाः। वपुषः शरीरवन्तः पतङ्गाः उत्पतनसमर्थाः वयः गच्छन्तः अरुषाः आरोचमानाः ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये अष्टादशो वर्गः ॥

**उद् वन्द॑नमैरतं दं॒सना॑भि॒रुद् रे॒भं द॑स्रा वृषणा॒ शची॑भिः।**
**निष्टौ॒ग्र्यं पा॑रयथः समु॒द्रात् पुन॒श्च्यवा॑नं चक्रथु॒र्युवा॑नम् ॥ ६ ॥**

उत्। वन्द॑नम्। ऐ॒र॒त॒म्। दं॒सना॑भिः। उत्। रे॒भम्। द॒स्रा॒। वृ॒ष॒णा॒। शची॑भिः।
निः। तौ॒ग्र्य॒म्। पा॒र॒य॒थः॒। स॒मु॒द्रात्। पुन॒रिति॑। च्यवा॑नम्। च॒क्र॒थुः॒। युवा॑नम् ॥ ६ ॥

**स्कन्द०** वन्दनम् ऋषिम् उत् ऐरतम् ईरिरत्रान्तर्णीतण्यर्थः। ऊर्ध्वं गमितवन्तौ। कूपाद् उत्तारितवन्तावित्यर्थः। दंसनाभिः दर्शनीयाभिः। काभिः। शचीभिरिति वक्ष्यति। उत् रेभम् रेभं च ह्रदादुत्तारितवन्तौ युवां हे दस्रा! वृषणा! वर्षितारौ! शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा। किञ्च तौग्र्यम् तुग्रपुत्रं भुज्युम् निः पारयथः निरित्युपसर्गस्य [8]समुद्रादित्यपादानस्य च श्रुतेर्योग्यक्रियापदाध्याहारः[8]। निष्कृष्य समुद्रात् पालितवन्तौ युवाम्। किञ्च च्यवानम् ऋषिं सुकन्याया वचनात्[9] चक्रथुः पुनः युवानम् ॥ ६ ॥

**वेङ्कट०** इयं निगदसिद्धेति ॥ ६ ॥

**मुद्गल०** हे अश्विनौ! वन्दनम् एतत्संज्ञम् ऋषिम् दंसनाभिः आत्मीयैः कर्मभिः कूपात् उत् ऐरतम् उदैयतम् उदगमयतम्। हे दस्रा! दर्शनीयौ! वृषणा! कामानां वर्षितारावश्विनौ! शचीभिः कर्मभिः रेभम् एतत्संज्ञम् ऋषिं दश रात्रीर्नवाहानि च कूपे निवसन्तं तस्मादुदैरयतम् उदतारयतम्। तथा तौग्र्यम्

---

१-१. नास्ति अ. २. °त्वर्थः अ. ३. नास्ति अ. ४. सूर्यदुहिता ल; सूर्यस्य दुहिता प्रीता कु; सूर्यप्रीतया वि'' अ' लपं. ५. °वहन् वि' अ'. ६. °युवाम् वि' अ'. ७-७. नास्ति मै'. ८-८. °पादानश्रुतेर्यो° अ. ९. °नात् युवानं अ.

तुग्रस्य पुत्रं भुज्युं समुद्रे निमग्नम् आत्मीयाभिर्नौभिरश्वैश्च समुद्रात् [1]निः पारयथः तीरदेशं प्रापितवन्तौ। तथा च्यवानम् च्यवनमृषिं जीर्णम् पुनः युवानम् यौवनोपेतम्[1] चक्रथुः कृतवन्तौ ॥ ६ ॥

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम् ।
युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥ ७ ॥

युवम् । अत्रये । अवऽनीताय । तप्तम् । ऊर्जम् । ओमानम् । अश्विनौ । अधत्तम् ।
युवम् । कण्वाय । अपिऽरिप्ताय । चक्षुः । प्रति । अधत्तम् । सुऽस्तुतिम् । जुजुषाणा ॥ ७ ॥

**स्कन्द०** युवम् युवाम् अत्रये ऋषये अवनीताय अधःप्रापिताय तप्तम् अग्निकूटं प्रति। अग्निकूटे प्रक्षिप्तमित्यर्थः। तत उत्तार्य ऊर्जम् अन्नम्। ओमानम् अवतेरिदं रूपम्। पालनं च। हे अश्विनौ! अधत्तम् दत्तवन्तौ। किञ्च युवम् कण्वाय ऋषये अपिरिप्ताय अपीत्येषोऽवेत्येतस्य स्थाने। रिपिर्लिपिना समानार्थः। अवलिप्ताय घट्टिताक्षाय[2]। अन्धायेत्यर्थः। चक्षुः प्रति अधत्तम् प्रतिनिहितवन्तौ। दत्तवन्तावित्यर्थः। सुष्टुतिम् शोभनां तदीयां स्तुतिम् जुजुषाणा अत्यर्थं पुनःपुनर्वा सेवमानौ ॥ ७ ॥

**वेङ्कट०** युवाम् अत्रये प्रक्षिप्ताय तप्तम् अग्निं प्रति रसम् अन्नम् च दत्तवन्तौ। युवाम् कण्वाय च असुरैः हर्म्ये कुड्ये अपिलिप्ताय[3] आदित्योदयज्ञाननिमित्तम् चक्षुः प्रति[4] अधत्तम्, तस्य सुष्टुतिम् सेवमानौ ॥ ७ ॥

**मुद्गल०** हे अश्विनौ! युवम् युवाम् अवनीताय शतद्वारे[5] पीडायन्त्रगृहे अवस्तान्नीताय अत्रये तप्तम् तत्पीडार्थं प्रक्षिप्तं तुषाग्निं शीतोदकेन अवारयेथाम्। अपि च अत्रये ओमानम् सुखकरम् ऊर्जम् रसवदन्नम् अधत्तम् प्रायच्छतम्। तथा सुष्टुतिम् शोभनां स्तुतिम् जुजुषाणा सेवमानौ युवम् युवाम् अपिरिप्ताय असुरैर्ब्राह्मण्यपरीक्षार्थम् इहासीनः सन् व्युष्टामुषसं जानीहीति अन्धकारवति गृहे प्रवेशिताय कण्वाय ऋषये चक्षुः व्युष्टाया उषसः प्रकाशकं वीणाशब्दम् प्रति अधत्तम् कृतवन्तौ ॥ ७ ॥

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।
अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥ ८ ॥

युवम् । धेनुम् । शयवे । नाधिताय । अपिन्वतम् । अश्विना । पूर्व्याय ।
अमुञ्चतम् । वर्तिकाम् । अंहसः । निः । प्रति । जङ्घाम् । विश्पलायाः । अधत्तम् ॥ ८ ॥

**स्कन्द०** युवम् युवाम् धेनुम् शयवे राज्ञे नाधिताय कर्तर्ययं क्तप्रत्ययः। याचितवते अपिन्वतम् सेचितवन्तौ पयः हे अश्विनौ! पूर्व्याय पुराणाय। किञ्च अमुञ्चतम् निः इति पादान्त्यः उपसर्गोऽपकृष्टव्यः। निर्मोचितवन्तौ युवाम् वर्तिकाम् नाम चटकाम् अंहसः पापात् क्रूरात् वृकात्।

---

१-१. नि तं मूको. २. घटि° अ. ३. लिप्ताय अ[1]; कु विलिप्ताय लपं. ४. इति वि[1] अ[2]. ५. °द्वचे मूको.

किञ्च जङ्घाम् आयसीम् विश्पलायाः छिन्नजङ्घायाः सत्याः प्रति अधत्तम् आहितवन्तौ युवाम् ॥ ८ ॥

**वेङ्कट०** युवाम्[1] धेनुम् शयवे याचमानाय अधुक्षतम् अश्विनौ! प्रज्ञाय। निः अमुञ्चतम् च[2] वर्तिकाम् आहन्तुः[3] वृकात्। प्रति अधत्तम् च जङ्घाम् विश्पलायाः ॥ ८ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! युवम् युवाम् पूर्व्याय पुरातनाय नाधिताय याचमानाय शयवे एतत्संज्ञाय ऋषये धेनुम् निवृत्तप्रसवां दोग्ध्रीम् अपिन्वतम् पयसासिञ्चतम्। सर्वदा पयस्विनी-मकुरुतम् इत्यर्थः। अपि च वर्तिकाम् वृकेण ग्रस्तां चटकसदृशीं शकुनिम् अंहसः वृकास्य-लक्षणात्[4] पापात् निः अमुञ्चतम् निरमोचयतम्। तथा विश्पलायाः विश्पलायै सङ्ग्रामे छिन्नजङ्घायै अगस्त्यपुरोहितस्य खेलस्य सम्बन्धिन्यै एतत्संज्ञायै स्त्रियै आयसीम् जङ्घाम् प्रति अधत्तम् प्रत्य-स्थापयतम्। समयोजयतमित्यर्थः ॥ ८ ॥

युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम्।
जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥ ९ ॥

युवम्। श्वेतम्। पेदवे। इन्द्रऽजूतम्। अहिऽहनम्। अश्विना। अदत्तम्। अश्वम्।
जोहूत्रम्। अर्यः। अभिऽभूतिम्। उग्रम्। सहस्रऽसाम्। वृषणम्। वीळुऽअङ्गम् ॥ ९ ॥

**स्कन्द०** युवाम् श्वेतम् शुक्लम्[2]। पेद्वे राज्ञे इन्द्रजूतम् कर्तर्ययं क्तप्रत्ययः। इन्द्रमिव गन्तारं शत्रून् प्रति। अहिहनम् हि गतौ। शौर्यावलेपादगन्तुरपि[6] शत्रोरहिनाम्नो वा असुरस्य हन्तारम्। हे अश्विनौ! अदत्तम् दत्तवन्तौ। अश्वम् जोहूत्रम् आह्वातव्यं सङ्ग्रामेषु जयकरत्वात्। अर्यः अरेर्वैरिणः सर्वस्य अभिभूतिम् अभिभवितारम्। उग्रम् अप्रसह्यम्। सहस्रसाम् सङ्ग्रामसह-स्राणां तन्निमित्तभूतधनसहस्राणां वा सम्भक्तारम्। वृषणम् वर्षितारं रेतस्सेचनसमर्थम्[7]। तरुणं बलवन्तं वेत्यर्थः। वीड्वङ्गम् दृढाङ्गम् ॥ ९ ॥

**वेङ्कट०** युवां श्वेतवर्णम् पेदवे राज्ञे इन्द्रेण[8] प्रेरितं शत्रूणां हन्तारम् अश्वम्[9] अश्विनौ! अदत्तम् अरेरर्थं सङ्ग्रामेषु[10] आह्वातव्यम् अभिभवितारम् अप्रसह्यं सहस्रस्य धनस्य[10] सम्भक्तारं कामानां वर्षितारं दृढाङ्गं ॥ ९ ॥

**मुद्गल०** अश्विना! हे अश्विनौ! पेदवे पेदुनाम्ने राज्ञे युवम् युवाम् श्वेतम् श्वेतवर्णं कञ्चिद् अश्वम्[11] अदत्तम् प्रायच्छतम्। कीदृशम्। इन्द्रजूतम् इन्द्रेण युवाभ्यां गमितम्। दत्तमित्यर्थः। अहिहनम् शत्रूणां हन्तारम् जोहूत्रम् अतिशयेन सङ्ग्रामेष्वाह्वातारम् अर्यः अरेः शत्रोः अभिभूतिम् अभिभावुकम् उग्रम् उद्गूर्णं वीर्यवन्तमित्यर्थः। सहस्रसाम् सहस्रसङ्ख्याकस्य धनस्य सम्भक्तारम् वृषणम् सेक्तारं युवानमित्यर्थः। वीड्वङ्गम् दृढाङ्गमित्यर्थः ॥ ९ ॥

---

१. युवं वि[1,3] अ[2] लपं. २. च तां च वि[2]. ३. आहतुः वि[1] अ[1]. ४. वृकलक्ष° मै[1]; वृकस्य लक्ष° मै[2]. ५. नास्ति अ. ६. °र्यापलेपा° कु. ७. सेचतः सेच° अ. ८. °ण इन्द्रेण ल. ९. नास्ति वि[1,3] अ[1]. १०. सङ्ग्रामे वि[1] अ[2]. ११. °हस्रधन° कु.

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः ।
आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम् ॥ १० ॥

ता । वाम् । नरा । सु । अवसे । सुऽजाता । हवामहे । अश्विना । नाधमानाः ।
आ । नः । उप । वसुऽमता । रथेन । गिरः । जुषाणा । सुविताय । यातम् ॥ १० ॥

**स्कन्द०** तच्छब्दश्रुतेः प्रत्यक्षकृतत्वाच्च[1] मन्त्रस्य[2] सुजाता इत्यस्य चानामन्त्रितत्वात् तत्सम्बन्धी यच्छब्दोऽध्याहार्यः । यौ सुजातौ सुजन्मानौ [3]ता वाम्[3] तौ युवाम् हे नरा ! सु अवसे द्वितीयार्थे चतुर्थी । नाधमानाः इत्येतेन च सम्बन्धः । शोभनमवः तर्पणं पालनं वा याचमाना वयम् हवामहे आह्वयामः । हे अश्विनौ ! एतज्ज्ञात्वा आ नः उप आ उप[4] इत्युपसर्गौ यातमित्याख्यातेन सम्बन्धयितव्यौ । नः अस्मान् वसुमता अस्मभ्यं[5] [5]दित्सितेन धनेन[5] तद्वता स्वेन रथेन गिरः स्तुतीरस्मदीयाः[6] जुषाणा सेवमानौ सुविताय सुगताय यागकर्मणे प्रजायै वाऽस्माकम् उप आ यातम् उपागच्छतम् ॥ १० ॥

**वेङ्कट०** तौ वाम् रक्षणार्थं[7] शोभनजातौ[8] सुष्ठु हवामहे अश्विनौ ![9] याचमानाः । आगच्छतम्[10] अस्मान् धनवता रथेन स्तुतीः सेवमानौ[11] अभ्युदयार्थम् ॥ १० ॥

**मुद्गल०** हे नरा ! नेतारौ ! अश्विना ! अश्विनौ ! सुजाता शोभनजन्मानौ ता वाम् तौ युवाम् नाधमानाः धनं याचमाना वयं स्तोतारः अवसे रक्षणार्थम् सु हवामहे शोभनम् आह्वयामहे । गिरः स्तुतीः जुषाणा सेवमानौ युवाम् वसुमता धनयुक्तेन रथेन नः अस्मान् उप आ यातम् उपागच्छतम् । किमर्थम्[12] । सुविताय सुष्ठुप्राप्तव्याय धनाय[13] ॥ १० ॥

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।
हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥ ११ ॥

आ । श्येनस्य । जवसा । नूतनेन । अस्मे इति । यातम् । नासत्या । सऽजोषाः ।
हवे । हि । वाम् । अश्विना । रातऽहव्यः । शश्वत्ऽतमायाः । उषसः । विऽउष्टौ ॥ ११ ॥

**स्कन्द०** आ इत्युपसर्गो यातमित्याख्यातेन सम्बन्धयितव्यः । श्येनस्य जवसा वेगेन । नूतनेन नवेन । यादृशः प्रथमोऽश्रान्तस्य श्येनस्य वेगस्तादृशेन वेगेनेत्यर्थः । अस्मे [14]अस्मान् प्रति[14] आ यातम् आगच्छतम् हे नासत्यौ ! । सजोषाः व्यत्ययेनेदमेकवचनम् । सजोषसौ । सम्प्रीयमाणावित्यर्थः । कस्मात् । उच्यते । हवे हि यस्मादाह्वयामि वाम् युवाम् रातहव्यः दत्तहविष्कः सन् मनसा शश्वत्तमायाः अत्यन्तनित्यायाः उषसः व्युष्टौ विवासनवेलायां तमसः । उषउदयवेलायामित्यर्थः ॥ ११ ॥[15]

---

१. °तत्वात् अ. २. मन्त्रे अ. ३-३. नास्ति मूको. ४. नास्ति अ. ५-५. °धनेन दित्सितेन अ. ६. स्तुतिर° मूको. ७. रक्षार्थं वि[1] अ[1,2] कु. ८. °जाताः वि[1] अ[2]. ९. अश्विना वि[1] अ[2]. १०. °तम् अथ वि[1] अ[2]. ११. सेवमानो वि[1] अ[2]. १२. कीदृशौ युवाम् मूको. १३. °य । सुजाता शोभनं जातं जन्म ययोस्तौ सुजातौ मूको १४-१४. नास्ति अ. १५. °वेलामि° कु.

**वेङ्कट०** आ यातम् श्येनस्य वेगेन नूतनेन अस्मान् प्रति नासत्यौ! सहितौ। ह्वयामि[1] हि वाम् अश्विनौ![2] दत्तहविष्को नित्यायाः उषसः व्युच्छने ॥ ११ ॥

**मुद्गल०** हे नासत्या! अश्विनौ! सजोषाः सजोषसौ समानप्रीतियुक्तौ श्येनस्य शंसनीयं गच्छतोऽश्वस्य नूतनेन नवतरेण जवसा वेगेन सहितौ युवाम् अस्मे अस्मान् आ यातम् आगच्छतम्। हे अश्विना! अश्विनौ! रातहव्यः युवाभ्यां दातव्येन हविषा युक्तः सन् शश्वत्तमायाः कालात्मिकाया नित्यायाः उषसः व्युष्टौ विवासनसमये वाम् युवाम् हुवे आह्वयामि। हि यस्मादेवं तस्मादायातमित्यर्थः ॥ ११ ॥

इति प्रथमाष्टके अष्टमाध्याये एकोनविंशो वर्गः ॥

## [ ११९ ]

### आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे।
### सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥ १ ॥

आ। वाम्। रथम्। पुरुऽमायम्। मनःऽजुवम्। जीरऽअश्वम्। यज्ञियम्। जीवसे। हुवे। सहस्रऽकेतुम्। वनिनम्। शतत्ऽवसुम्। श्रुष्टिऽवानम्। वरिवःऽधाम्। अभि। प्रयः ॥ १ ॥

**स्कन्द०** आ इत्युपसर्गो हुवे इत्याख्यातेन [3]सम्बन्धयितव्यः। वाम् युवयोः स्वभूतम् रथम् पुरुमायम् बहुप्रज्ञम् मनोजवम् मनोवद् गन्तारम् जीराश्वम् जीरमिति क्षिप्रनाम (तु. निघ २,१५)। क्षिप्राश्वम्। यज्ञियम् यज्ञार्हम्। जीवसे जीवितुम्। आहूतो मां जीवयिष्यतीत्येवमर्थमित्यर्थः। आ हुवे[3] आह्वयामि। सहस्रकेतुम् केतुः पताकोच्यते। सहस्रपताकम्। वनिनम् वनमुदकम्, तद्वन्तम् सम्भजनवन्तं वा। शतद्वसुम् शतधनम्। श्रुष्टीवानम् श्रुष्टिरिति क्षिप्रनाम[4] (तु. या ६,१२)। [5]तद्वन्तम्। वरिवोधाम्[5] धनस्य स्तोतृभ्यो दातारम्। अभि प्रयः हविर्लक्षणमन्नं प्रति ॥ १ ॥

**वेङ्कट०** [4]युवयोः रथम्[4] बहुप्रकारनिर्माणम्[6] मनोवेगम्[7] क्षिप्राश्वम् यज्ञार्हम् जीवनाय अहम्[8] आ हुवे। अनेककेतुमालाकृताऽनेकक्षुद्रकेतुम्[9] भजनवन्तं बहुधनम्[10] क्षिप्रवन्तं क्षिप्रम् एव स्तोतॄणाम् अभिगन्तारम्[11] [12]धनस्य दातारम्[12] हविर्लक्षणम् अन्नम्[13] प्रति ॥ १ ॥

**मुद्गल०** 'आ वां रथम्' इति दशर्चं चतुर्थं सूक्तम्[14]। कक्षीवान् ऋषिः[14]। जगती छन्दः[14]। अश्विनौ देवता†[14]।

हे अश्विनौ! वाम् युवयोः सम्बन्धिनम् रथम् जीवसे जीवनार्थम् प्रयः हविर्लक्षणमन्नम् अभि[15] अभिलक्ष्य आ हुवे आह्वयामि। कीदृशम्। पुरुमायम् बहुविधाश्चर्यम् मनोजुवम् मन इव शीघ्रं गच्छन्तम् जीराश्वम् जववदश्वोपेतम् यज्ञियम् यज्ञेष्वाह्वातुमर्हम् सहस्रकेतुम् अनेकध्वजं सहस्रस्य धनस्य केतयितारं वा वनिनम् उदकवन्तम् शतद्वसुम् शतसङ्ख्याकैर्धनैर्युक्तम् श्रुष्टीवानम् श्रुष्टीति क्षिप्रनाम। क्षिप्रं सम्भजमानम् वरिवोधाम् वरिवसो धनस्य दातारम् ॥ १ ॥

---

१. आह्वयामि कु. २. अश्विना वि[2] अ[2]. ३-३. नास्ति अ. ४. क्षिप्रन ~~मनुपर्याय~~ अ. ५-५. नास्ति वि[1] लपं. ६. °कारं निर्मा° वि[2] अ[2]. ७. मनोवेगेन वि[12] ल. ८. अहम् अहम् वि[12] ल कपं. ९. °केतुमालानेक° वि[2] अ[2]. १०. बहूधानं वि[2] अ[2]. ११. अभिगन्ता° वि[2] अ[2]. १२-१२. नास्ति वि[2] अ[2]. १३. अन्नं वि[2] अ[2]. १४. नास्ति मै[2]. † °ते मै[2]. १५. नास्ति मूको.

ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः ।
स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत् ॥ २ ॥

ऊर्ध्वा । धीतिः । प्रति । अस्य । प्रऽयामनि । अधायि । शस्मन् । सम् । अयन्ते । आ । दिशः ।
स्वदामि । घर्मम् । प्रति । यन्ति । ऊतयः । आ । वाम् । ऊर्जानी । रथम् । अश्विना । अरुहत् ॥

**स्कन्द०** ऊर्ध्वा[1] ऊर्ध्वत्वेनात्र व्यापाराभिमुख्यं लक्ष्यते । स्तुतेश्च व्यापारो युवाभ्यां सम्बन्धः । [2]तदभिमुखी । धीतिः[2] स्तुत्येषु धीयमानत्वात् स्तुतिरुच्यते । सा अस्य युष्मदर्थस्य प्रयामनि प्र इत्येष आ इत्येतस्य स्थाने । आगमने सति । आगतेऽस्मिन्[3] रथे इत्यर्थः । प्रति अधायि प्रतिशब्दोऽत्र धात्वर्थानुवादी[4] । दधातिर्धारणार्थः । धार्यते । स्तोतृभिः क्रियत इत्यर्थः । शस्मन् शासनम् । चतुर्थ्याश्चात्र लुक् । आज्ञायै[5] च सम् अयन्ते आ दिशः । सर्वा आज्ञाश्च प्रतिग्रहीतुं[6] सर्वत आगच्छन्तीत्यर्थः । अहमपि स्वदामि घर्मम् 'घर्मः' ( निघ ३,१७ ) इति यज्ञनाम । यज्ञस्य चाऽऽस्वदनासम्भवात् स्वदिः करोत्यर्थः । करोमि यज्ञम् । क्रियमाणे च तस्मिन् प्रति कर्मप्रवचनीयोऽयम् । तच्छ्रुतेस्तत्सम्बन्धिपदाध्याहारः[7] । युवां प्रति । यन्ति गच्छन्ति । ऊतयः तर्पणानि । सोमेन युवां तर्प्येथे इत्यर्थः । किञ्च वाम् युवयोः स्वभूता[8] ऊर्जानी अन्नवती । ऐश्वर्ययुक्तेत्यर्थः । रथम् हे अश्विनौ! आ अरुहत् आरूढा आजौ जिता सती सूर्या । तदेतत् पुरस्तादप्युक्तम् 'आ वां रथं दुहिता सूर्यस्य' ( ऋ १,११६,१७ ) इति ॥ २ ॥

**वेङ्कट०** [9]भवतोः अस्य[9] रथस्य गमने[10] मदीया वाक् ऊर्ध्वा प्रति अधायि । अन्तरिक्षे निहितेत्यर्थः । तथा गते सति मया शंसने क्रियमाणे सर्वा दिशः तच्छ्रवणार्थं सङ्गता आसन् । तत्राहम् आश्विनं [11]घर्माख्यं हविः स्तोत्रैः†[11] स्वदयामि । मरुतः च[12] तच्छ्रवणार्थम् प्रति यन्ति । तम् इमं भवतो रथम् ऊर्जानी नाम सूर्यस्य दुहिता पुरा[12] आरूढवती ॥ २ ॥

**मुद्गल०** अस्य रथस्य प्र यामनि प्रयाणे प्रगमने सति शस्मन् अश्विनोः शंसने धीतिः अस्मदीया बुद्धिः ऊर्ध्वा उन्मुखा प्रति अधायि प्रत्यस्थायि । तदनन्तरम् दिशः देष्टव्याः स्तुतयोऽपि सम् अयन्ते अश्विभ्यां सङ्गच्छन्ते । आकारः समुच्चये । अहञ्च स्तोता घर्मम् महावीरस्थं क्षरणशीलाज्यादिकं[13] हविः स्वदामि स्वादूकरोमि । ऊतयः अवितारो रक्षका ऋत्विजश्च प्रति यन्ति घर्मं प्रति गच्छन्ति संस्कारार्थम् । अपि च हे अश्विना! अश्विनौ! वाम् युवयोः रथम् ऊर्जानी सूर्यस्य दुहिता आ अरुहत् आरूढवती ॥ २ ॥

सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे ।
युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम् ॥ ३ ॥

सम् । यत् । मिथः । पस्पृधानासः । अग्मत । शुभे । मखाः । अमिताः । जायवः । रणे ।
युवोः । अह । प्रवणे । चेकिते । रथः । यत् । अश्विना । वहथः । सूरिम् । आ । वरम् ॥ ३ ॥

---

१. नास्ति मूको. २-२. नास्ति अ. ३. अगते कु. ४. ...नुवादी अ. ५. °यैव अ. ६. °गृही° अ. ७. ...सम्बन्धि° अ. ८. °भूतम् अ. ९-९ भवतो कु. १०. आगमने वि[2] अ[2] लपं. ११-११. नास्ति वि[2] अ[1]. † स्तोत्रं कु. १२. नास्ति वि[2] अ[1]. १३. क्षरशी° मूको.

**स्कन्द०** यत् यदा मिथः परस्परतः पस्पृधानासः स्पर्धमाना इव युष्मदीया अश्वाः सम्[1]अग्मत रथे[1] युक्तास्सन्तः मेघं प्रति सम्यगगच्छन्ति। शुभे उदकार्थम्। मखाः यज्ञस्य युष्मदानयनेन वृष्टिद्वारेण वा कर्तारः। अमिताः अपरिमिताः। बहव इत्यर्थः। अथवा बलेनापरिमिताः। महाबला इत्यर्थः। जायवः जयशीला[2] इत्यर्थः। रणे सङ्ग्रामे। अथवा यत् रणे इति समानाधिकरणे। मिथः पस्पृधानास इत्यादिभिरपि योद्धार उच्यन्ते, नाश्वाः। यस्मिन् सङ्ग्रामे परस्परतः स्पर्धमाना योद्धारः सङ्गच्छन्ते। शुभे शोभार्थम्। जयार्थमित्यर्थः। मखा अमिता जायवश्च। यदा यस्मिन् वेति श्रुतेः तदा तस्मिन् वेत्यध्याहार्यम्। तदा तस्मिन् वा [3]युवोः अह[3] अहेति विनिग्रहार्थीय एवशब्देन समानार्थः। युवयोरेव स्वभूतः। प्रवणे निम्ने देशे [4]चिकिते ज्ञायते। लक्ष्यत[4] इत्यर्थः। कोऽसौ। उच्यते। रथः। किमपेक्षं पुनरेतद्रथस्य निम्नदेशवर्तित्वम्। उच्यते। अश्वापेक्षम्। अश्वा ह्युच्चा रथो नीचः। तेन[5] स तेभ्यो निम्नदेशवर्ती। [6]उच्चत्वाद् अश्वानां[6] तेभ्यो नीचो रथो दृश्यत इत्यर्थः। न च सङ्ग्रामे एव केवले। किं तर्हि। यत् यदा हे अश्विनौ! वहथः प्रापयथः सूरिम् आ 'सूरिः' ( निघ ३, १६ ) इति स्तोतृनाम। आकारः प्रतीत्यस्यार्थे[7]। स्तोतारं प्रति। वरम् वरणीयं धनम्। यदा च स्तोतृभ्यो दानार्थं रथेन धनं[8] नयथ इत्यर्थः॥ ३॥

**वेङ्कट०** यदा[9] कल्याणे युद्धे परस्परं स्पर्धमानाः[10] दातारः बहवो यज्ञशीला यजमाना जयशीलाः मिथः सम् अग्मत तदानीं युवयोरेव रथः युद्धाग्रे दृश्यते। यत् युवाम् अश्विनौ अवभीतौ(?)[11] वरिष्ठं सुवीर्यञ्च तम् आ वहथः तत्र रथम्॥ ३॥

**मुद्गल०** मखाः मखवन्तो यज्ञोपेताः अमिताः अपरिमिताः जायवः जयशीला मनुष्याः रणे सङ्ग्रामे शुभे शोभनाय तदर्थम् मिथः पस्पृधानासः अन्योन्यं स्पर्धमानाः यत् यदा सम् अग्मत सङ्गच्छन्ते। तदानीं हे अश्विना! अश्विनौ! युवोः अह युवयोरेव रथः प्रवणे प्रकर्षेण सम्भजनीये भूतले चेकिते ज्ञायते। देवेषु मध्ये युवामेव रक्षणार्थं शीघ्रं रथेनागच्छथ इत्यर्थः। यत् येन रथेन सूरिम् स्तोतारं प्रति वरम् श्रेष्ठं धनम् आ वहथः प्रापयथः, स रथ इत्यर्थः॥ ३॥

## युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ।
## यासिष्टं वर्तिर्वृषणा विजेन्यं दिवोदासाय महि चेति वामवः॥ ४॥

युवम्। भुज्युम्। भुरमाणम्। विऽभिः। गतम्। स्वयुक्तिऽभिः। निऽवहन्ता। पितृऽभ्यः। आ। यासिष्टम्। वर्तिः। वृषणा। विऽजेन्यम्। दिवःऽदासाय। महि। चेति। वाम्। अवः॥४॥

**स्कन्द०** युवम् युवाम् भुज्युम् नाम राजानम् भुरमाणम्। भुरतिर्ग्रसनार्थः[12]। ग्रस्यमानं मत्स्यैः[13] [1]मकरैश्च। गतम्[1] समुद्रे निमग्नमित्यर्थः। विभिः पक्षिसदृशैः शीघ्रैरश्वैः। स्वयुक्तिभिः

---

१-१. नास्ति अ. २. नास्ति अ. ३-३. युवयोरह मूको. ४-४. चेति लक्ष्यत अ. ५. केन अ. ६६. उच्चानामश्वा° अ. ७. °त्यस्य अ. ८. नास्ति कु. ९. मिथो यदा कु; यत् वि[१] लपं; यथा वि[१] अ[२]. १०. वर्धमाना वि[१] अ[२]. ११. अभि कु; अभीतं वि[१] अ[२]. १२. °गमनार्थः अ[२]. १३. मत्स्ये अ.

स्वयमेव ये रथे युज्यन्ते ते स्वयुक्तयः, तैः । निवहन्ता नियमेन वहन्तौ । पितृभ्यः पितृणामर्थाय । पितृणामस्य[1] स्वर्गादप्रच्युतिहेतोः । प्रजासन्तानादेरविच्छेदार्थमित्यर्थः । आ यासिष्टम् तदा प्रत्यागतवन्तौ स्थः । वर्तिः वर्तन्या मार्गेण हे वृषणा! । किञ्च विजेन्यम् विजेतृ शत्रूणाम् । दिवोदासाय दिवोदासार्थम्[1] । महि महत् । चेति ज्ञायते लोकैः । प्रकाशमित्यर्थः । वाम् युवयोः स्वभूतम् अवः पालनं शम्बरवधे ॥ ४ ॥

**वेङ्कट०** युवाम्[2] भुज्युम् समुद्रमध्ये ह्रियमाणम् अश्वैः स्वयमेव युज्यमानैः समुद्रे गतम् समुद्रमध्यात् [3]पितृणां दर्शनार्थम्[3] तीरम्[4] आनिवहन्तौ । गतौ च वर्तिः वृकेण गृहीतम् विजेतव्यं वृकात् । दिवोदासविषये च[5] महत् ज्ञायते युवयोः पालनम्[6] ॥ ४ ॥

**मुद्गल०** हे वृषणा! कामानां वर्षितारावश्विनौ! युवम् युवाम् भुरमाणम् बिभिः अश्वैः भ्रियमाणम् गतम् समुद्रे निमग्नम् भुज्युम् तुग्रपुत्रम् स्वयुक्तिभिः स्वयमेव युज्यमानैरश्वैर्नौविशेषैश्च निवहन्ता नितरां वहन्तौ पितृभ्यः आ आङ् मर्यादायाम् । यत्र पितरः तुग्रादय आसते तावत्पर्यन्तमित्यर्थः । विजेन्यम् अतिदूरस्थम् वर्तिः तुग्रस्य गृहं प्रति यासिष्टम् अगच्छतम् । अपि च दिवोदासाय राज्ञे कृतम् वाम् युवयोः सम्बन्धि अवः रक्षणं शम्बरहननरूपम् महि महत् गम्भीरम् चेति अस्माभिर्ज्ञायते ॥ ४ ॥

युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यम् ।
आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥ ५ ॥

युवोः । अश्विना । वपुषे । युवाऽयुजम् । रथम् । वाणी इति । येमतुः । अस्य । शर्ध्यम् ।
आ । वाम् । पतिऽत्वम् । सख्याय । जग्मुषी । योषा । अवृणीत । जेन्या । युवाम् । पती इति ॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'अश्विनौ काष्ठमयेन दुर्बलेन रथेन गच्छन्तौ दृष्ट्वा [7]वृत्रोऽपजहास[7] । तच्छ्रुत्वा अमर्षेण द्यावापृथिव्यौ तं रथं सुवर्णखचितं बलवन्तं चक्रथुः' इति । तदेतदिहोच्यते। युवोः युवयोः स्वभूतं हे अश्विनौ! वपुषे वपुः रूपं शोभा, तदर्थम् । युवायुजम् युवाभ्यां [7]युज्यते इति[7] युवायुक्, तं युवायुजम् । युवयोरेव योग्यमित्यर्थः । रथम् वाणी अपठितमपीदमिह[8] द्यावापृथिवीनामधेयम् । द्यावापृथिव्यौ । येमतुः यमु बन्धने । सुवर्णेन बद्धवत्यौ । न च केवलम्[1] । किं तर्हि । अस्य रथस्य शर्ध्यम् 'शर्धः' ( निघ २,९ ) इति बलनाम । शर्ध एव शर्ध्यम् । स्वार्थिकस्तद्धितः । बलं च बद्धवत्यौ । बलवन्तं च एनं कृतवत्यावित्यर्थः । किञ्च आ वाम् आकारस्य जग्मुषी इत्येतेन सम्बन्धः । [7]आ जग्मुषी[7] युवां प्रति । आजौ जिता युवां प्रत्यागता सतीत्यर्थः । पतित्वम् चतुर्थ्यर्थे द्वितीया । पतित्वाय । सख्याय च । एतौ मे पती च सखायौ च स्यातामित्येवमर्थमित्यर्थः[9] । योषा स्त्री [10]सूर्या नाम[10] अवृणीत वृतवती जेन्या जेतारौ युवाम् पती भर्तारौ ॥ ५ ॥

---

१. नास्ति अ. २. युवा वि[१] अ[२]. ३-३. पितृदर्शं° वि[१] अ[२]. ४. तिर वि[१] अ[१] कु; तीरे वि[१,२] अ[२] ल. ५. नास्ति वि[१] अ[२]. ६. प(?अ,वनं युवयो वधेः वि[१] अ[२]. ७-७. नास्ति अ. ८. °पीहेदं अ. ९. °त्येवमित्यर्थः अ, १०-१०. सूर्यनामा अ.

**वेङ्कट०** 'युवयोः अश्विनौ'[1]! शोभार्थम्[2] [3]युवाभ्यां युक्तम्[3] रथम् शब्दकारिण्यौ बडवे गच्छतः अस्य[4] [5]शर्धेन प्राप्तव्यं काष्ठम् इत्यर्थः[5]। युवयोः पतित्वम्[6] युवाभ्याम्[7] सख्यसिद्ध्यर्थम् जग्मुषी सूर्यस्य दुहिता अवृणीत युवाम् पती स्वयंवरे जेतारौ ॥ ५ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! युवोः युवयोः वाणी वननीयौ प्रशस्यौ अश्वौ युवायुजम् युवाभ्यां युज्यमानम् रथम् आजिधावनसमये अस्य रथस्य यत् शर्ध्यम् प्राप्यम् आदित्याख्यमवधिभूतं लक्ष्यम् वपुषे शोभनार्थं तत् येमतुः सर्वेभ्यो देवेभ्यः पूर्वं प्रापयामासतुः। तदनन्तरं च आ जग्मुषी आगतवती जेन्या आजिधावनेन जीयमाना योषा सूर्या सख्याय सखित्वाय वाम् युवयोः पतित्वम् अवृणीत। कथमिति। मम युवाम् एव पती भर्ताराविति ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये विंशो वर्गः ॥

**युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये।**
**युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा ॥ ६ ॥**

युवम्। रेभम्। परिऽसूतेः। उरुष्यथः। हिमेन। घर्मम्। परिऽतप्तम्। अत्रये।
युवम्। शयोः। अवसम्। पिप्यथुः। गवि। प्र। दीर्घेण। वन्दनः। तारि। आयुषा ॥ ६ ॥

**स्कन्द०** युवम् युवाम् रेभम् ऋषिम् परिषूतेः षू प्रेरणे। असुरैरुदके सर्वतः प्रेरणात्। निमज्जनादित्यर्थः। उरुष्यथः रक्षितवन्तौ। युवामेव हिमेन वृष्ट्युदकेन। घर्मम् दीप्तम्। परितप्तम् सर्वतश्च तप्तम् अग्निकूटम्। अत्रये अत्रेरर्थाय। साकाङ्क्षत्वात् 'हिमेनाग्निं घ्रंसम्' (ऋ १,११६,८) इत्यादौ च दर्शनात् निशमितवन्ताविति वाक्यशेषः। युवामेव शयोः राज्ञः स्वभूतायाम् अवसम् अवसं पथ्यदनमुच्यते' (तु. या १,१७)। पयोलक्षणं पथ्यदनम्'। पिप्यथुः आप्यायितवन्तौ गवि। युवाभ्यामेव च दीर्घेण वन्दनः ऋषिः कूपादुत्तार्य प्रवर्धितः आयुषा जीवितेन ॥ ६ ॥

**वेङ्कट०** युवाम् रेभम्[10] उदकेन[11] परिष्कृतम् ततो रक्षितवन्तौ। तथा सर्वतः तप्तम् अग्निम् अत्रये शीतेन वृष्ट्युदकेन[12] शमितवन्तौ। युवाम् शयोः[13] ऋषेः गवि पयोलक्षणम् अवसम्[14] अन्नम् आप्यायितवन्तौ। कूपे पतितः वन्दनः दीर्घेण आयुषा दत्तेन कूपाद् युवाभ्याम् उत्तारितः ॥ ६ ॥

**मुद्गल०** हे अश्विनौ! युवम् युवाम् रेभम् ऋषिम् परिषूतेः परितः प्रेरकाद् उपद्रवात् उरुष्यथः रक्षथः[15]। तथा अत्रये ऋषये परितप्तम् परितः तप्तम् घर्मम् असुरैः पीडार्थं प्रक्षिप्तं दीप्यमानं तुषाग्निम् हिमेन शीतोदकेन अवारयेथाम्। अपि च शयोः एतत्संज्ञस्य ऋषेः गवि निवृत्तप्रसवायां धेनौ अवसम् रक्षकं पयः युवम् युवाम् पिप्यथुः प्रवर्धितवन्तौ। तथा जीर्णाङ्गः वन्दनः ऋषिः दीर्घेण आयुषा प्र तारि युवाभ्यां प्रवर्धितः ॥ ६ ॥

---

१-१. नास्ति वि[1] लपं; युवयोः अश्विनं वि[3] अ[3]. २. शोभनार्थं वि[1,3] अ[3] लपं. ३-३ युवयोरेव योग्यं वि[3] अ[3]. ४. स्यात् वि[3] अ[3]. ५-५. प्राप्तव्यां काष्ठाम् कु; प्राप्तव्यं काष्ठमिवात्यर्थं वि[1] लपं. ६. परत्वम् वि[3] अ[3]. ७. द्वाभ्याम् वि[1] लपं. ८. नास्ति कु. ९. पथ्योद० मूको. १०. रेफम् कु. ११. उदके वि[3] अ[3]. १२. वृष्ण्युदकेन वि[3] अ[3]. १३. शंयो वि[3] अ[3] ल. १४. नास्ति वि[3] अ[3]. १५. त्रुटितम् मै[3].

युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ ७ ॥

युवम् । वन्दनम् । निःऽऋतम् । जरण्यया । रथम् । न । दस्रा । करणा । सम् । इन्वथः ।
क्षेत्रात् । आ । विप्रम् । जनथः । विपन्यया । प्र । वाम् । अत्र । विधते । दंसना । भुवत् ॥७॥

**स्कन्द०** युवम् युवाम्[1] वन्दनम् ऋषिम् निर्ऋतम् निश्चयेन गतं प्राप्तम् । व्याप्तमित्यर्थः । जरण्यया जरया । रथम् न यथा कश्चित् तक्षा पुराणं रथं पुनर्नवं कुर्यात् एवं हे दस्रा! करणा करणेन पुनर्यौवनस्य सम् इन्वथः सम्यग्व्याप्तवन्तौ । किञ्च क्षेत्रादा विप्रमित्यादि । अत्रेतिहासमाचक्षते— 'कश्चिदृषिर्मृतभार्यो वृद्धश्च पुत्रकामोऽश्विनौ तुष्टाव । तस्याश्विनावयोनिजं क्षेत्रात् पुत्रं जनयाञ्चक्रतुः' इति । तदेतदिहोच्यते । क्षेत्रात् कृष्टा भूमिः[2] क्षेत्रमुच्यते । ततः विप्रम् मेधाविनम् । आ जनथः आकारोऽत्र धात्वर्थानुवादी । जनितवन्तौ युवाम् । विपन्यया स्तुत्या हेतुना । स्तुतौ सन्तावित्यर्थः । प्र वाम् अत्र प्रेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । अत्रेत्यपि प्रथमार्थे सप्तमी । प्रवृत्तिर्युवयोरेषा क्षेत्रजननलक्षणा स्तुतिभिः परिचरितुस्तस्य ऋषेरर्थाय दंसना दर्शनीया भुवत् अभवत् । युवां मुक्त्वा नान्यस्य कस्यचिदीदृशी प्रवृत्तिरित्यर्थः ॥ ७ ॥

**वेङ्कट०** युवम् वन्दनम् निर्गतं जरया युवत्वात् पुनरपि जीर्णम् रथम् इव दर्शनीयौ! चक्षुरादिभिः सम्पूरितवन्तौ । तस्य[3] ऋषेः पुत्रम् इच्छतः[4] भार्यायाः पुत्रं[5] मेधाविनम्[6] आ जनथः[7] यौवनप्रदानेन तस्य स्तुत्या प्रीतौ । युवयोः कर्म परिचरते[8] वन्दनाय अस्मिन् अभ्युदये प्राभवत् ॥ ७ ॥

**मुद्गल०** हे दस्रा! अश्विनौ! युवम् युवाम् जरण्यया जरया निर्ऋतम् निःशेषेण प्राप्तम् वन्दनम् ऋषिम् करणा कर्मणां कर्तारौ शिल्पकुशलौ सम् इन्वथः समधत्तं पुनर्युवानमकुरुतम् । दृष्टान्तः । रथम् न यथा कश्चित् शिल्पी जीर्णं रथं पुनरप्यभिनवं करोति तद्वत् । अपि च विपन्यया स्तुत्या गर्भस्थितेन वामदेवेन स्तुतौ सन्तौ क्षेत्रात् आ आ समुच्चये । मातुरुदरलक्षणात् जन्मस्थानात् विप्रम् मेधाविनं तम् ऋषिम् जनथः जनयथश्च । तथा वाम् युवयोः दंसना रक्षणात्मकं कर्म अत्र अस्मै विधते परिचरते यजमानाय प्र भुवत् प्रभवतु रक्षितुं समर्थं भवतु ॥ ७ ॥

अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥ ८ ॥

अगच्छतम् । कृपमाणम् । पराऽवति । पितुः । स्वस्य । त्यजसा । निऽबाधितम् ।
स्वःऽवतीः । इतः । ऊतीः । युवोः । अह । चित्राः । अभीके । अभवन् । अभिष्टयः ॥ ८ ॥

---

१. नास्ति कु. २. नास्ति अ. ३. यस्य वि[1] अ[2]. ४. इच्छन्तौ वि[1] अ[2]. ५. °त्रम् इच्छन्तौ वि[1] अ[2]. ६. मेधाविनौ वि[1] अ[2]. ७. जनयथः कु. ८. परिचरतो वि[1] अ[2].

**स्कन्द०** अगच्छतम् **चक्षुःप्रदानार्थं गतवन्तौ युवाम्** कृपमाणम् **स्तुवन्तम्** ऋज्राश्वं प्रति परावति **दूरे। सप्तमीश्रुतेः स्थितमिति वाक्यशेषः**[1]। पितुः स्वस्य **आत्मीयस्य** त्यजसा **क्रोधेन** निबाधितम् **शापजनितेनान्ध्येनात्यन्तपीडितम्। किञ्च** स्ववर्तीः **सर्वैः परिचारकैस्तद्वत्यः। सहेत्यर्थः।** इतः **स्थानस्यायं प्रतिनिर्देशः**[1]। **अस्मात् स्थानात्**[1]। ऊतीः **यज्ञान् प्रति गतयः।** युवोः[2] **युवयोः।** अह **शब्दस्तु पदपूरणः।** चित्राः **विचित्राः पूज्या वा।** अभीके **आसन्ननामैतत्** ( तु. निघ ३,२९ )। **आसन्ने यागकाले।** अभवन् **भवन्ति**[1]। अभिष्टयः **अभियागाश्च। सर्वैः परिचारकैः सह इतः स्थानाद् यज्ञान् प्रत्यासन्ने यागकाले युवां गच्छथः, तत्र चाभीज्येथे इत्यर्थः। अथवा** [2]'अभीके' ( निघ २,१७ ) **इति सङ्ग्रामनाम**[2]। **अभिष्टिशब्दोऽपि इषेर्गत्यर्थस्य। सर्वैः स्वैर्योद्धृभिः सह गच्छथो युवां सङ्ग्रामे, गत्वा चाभिगच्छथः शत्रूनित्यर्थः ॥ ८ ॥**

**वेङ्कट०** अगच्छतम् **स्तुवन्तं दूरे स्थितम्** पितुः **आत्मीयस्य त्यागेन** निबाधितम् **ऋज्राश्वम्।** [3]**अभ्युदयवत्यः ऊतयः**[3] **युवयोः एव अत्र भवन्ति, चित्राणि च अभ्येषणानि अन्तिके भवन्ति ॥ ८ ॥**

**मुद्गल०** हे **अश्विनौ!** परावति **दूरदेशे समुद्रमध्ये** स्वस्य पितुः **तुग्रस्य** त्यजसा **त्यागेन** निबाधितम् **पीडितं भुज्युम्** कृपमाणम् **युवां** [4]**स्तुवन्तम्** अगच्छतम्[4] **रक्षणार्थं गतवन्तौ। यस्मादेवं तस्मात् हे अश्विनौ!** स्ववर्तीः **स्ववर्त्यः शोभनगमनयुक्ताः** इतः **इतोमुखात्** चित्राः **चायनीयाः** युवोः अह **युवयोरेव** ऊतीः **ऊतयः रक्षाः** अभीके **समीपे** अभिष्टयः **सर्वैः प्राणिभिरन्वेषणीयाः** अभवन् **भवन्ति ॥ ८ ॥**

उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति ।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥ ९ ॥

उत । स्या । वाम् । मधुऽमत् । मक्षिका । अरपत् । मदे । सोमस्य । औशिजः । हुवन्यति ।
युवम् । दधीचः । मनः । आ । विवासथः । अथ । शिरः । प्रति । वाम् । अश्व्यम् । वदत् ॥ ९ ॥

**स्कन्द०** उत **अपिच** स्या वाम् **तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यस्यै मधु दत्तवन्तौ स्थः सा वां युवाम्।** मधुमत् **मधुसंयुक्तम्।** मक्षिका **जात्यभिप्रायमिदमेकवचनम्। सरडाख्या मक्षिकाजातिः।** अरपत् **रप लप व्यक्तायां वाचि। मधु मह्यं दत्तमित्येतत्।** [4]**व्यक्तमुक्तवतीत्यर्थः। तदेतत्**[5] **कुत्सेनाप्युक्तम्** 'मधु प्रियं भरथः' ( ऋ १,११२,२१ ) **इति। अथवा मक्षिकाशब्देनात्र कुतश्चित् मक्षिकासादृश्याद् दधीचो** [6]**या वाक् सोच्यते**[6]। **सा युवाभ्यां मधुशब्दसंयुक्तं परं ब्रह्म व्यक्तमुक्तवती। किञ्च** [7]**मदे निमित्त एषा सप्तमी। मदे निमित्ते**[7]। सोमस्य **सम्बन्धिनि। प्रयोजनस्य चात्र निमित्तत्वेन विविक्षा। सोमजन्यो यो मदः, तदर्थमित्यर्थः।** औशिजः **उशिजोऽपत्यभूतः। कोऽसौ। कक्षीवान्।** [8]**तम् उशिजः प्रपौत्रं**[8] **पौराणिकाः स्मरन्ति—'उशिजो बृहदुक्थश्च**[9] **ऋषिर्दीर्घतमास्तथा। कक्षीवांश्च त्रयस्त्रिंशत् स्मृता ह्यङ्गिरसां वराः॥' इति। सः** हुवन्यति **युवामाह्वयति**[10]। **आत्मन एवायं परोक्षरूपेण प्रथम-**

---

**१. नास्ति अ.** **२-२.** अभीकनाम **अ.** **३-३.** अभ्युदयतः पटुतवः **वि**[1] **अ**[2]. **४-४. नास्ति मूको.** **५-५.** °वक्तव्यं **अ.** **६-६.** या वाक् सोच्यते **अ;** ···उच्यते **कु.** **७-७.** सप्तमी मदे निमित्ते **अ.** **८-८. नास्ति अ.** **९.** बृहदु° **मूको.** **१०.** °माश्रय° **कु.**

पुरुषेण निर्देशः। अहमुशिजः प्रपौत्रः कक्षीवानाह्वयामीत्यर्थः। अथवा उशिजः पुत्रः **औशिजः** दीर्घश्रवाः। स युवामाहूतवान्। तदेतत् कुत्सेनाप्युक्तम् 'याभिः सुदानू' ( ऋ १,११२,११ ) इति। युवम् दधीचः ऋषेः मनः आ विवासथः परिचरितवन्तौ। युवामाराधितवन्तावित्यर्थः। अथ[1] आराधनानन्तरम्[2] शिरः तृतीयार्थे द्वितीया। शिरसा प्रति वाम् युवां प्रति। युवाभ्या-मित्यर्थः। अश्व्यम् अत्रापि तृतीयार्थे द्वितीया। अश्वस्यावयवभूतेन। वदत् उक्तवान् मध्वाख्यं परं ब्रह्म। कः। प्रकृतत्वात् 'दध्यङ् ह यन्मध्वाथर्वणो वाम्' ( ऋ १,११६,१२ ) इति दर्शनाच्च दध्यङ्। अथवा शिरः अश्व्यम् इति स्वार्थे एव प्रथमा। शिरस एव वदनं प्रति कर्तृत्वम्। शिर उदितवद् इति ॥ ९ ॥

**वेङ्कट०** अपि च सा वाम् मक्षिकाजातिः रसवत् मधु याचितवती। युवयोः सोमस्य मदे सति औशिजः च वाम् आह्वयति कक्षीवान्। युवाम्[3] दधीचः ऋषेः मधुप्रदानार्थम् मनः आराधितवन्तौ। ततो भवद्भ्यां [4]प्रतिहितम् अस्य[4] अश्व्यम् तच्छिरः ब्रह्म प्रति अवदत् ॥ ९ ॥

**मुद्गल०** उत अपि च हे अश्विनौ! मधुमत् मधुमन्तौ वाम् युवाम् स्या सा मक्षिका सरघा मधुकामा सती अरपत् अस्तौत्। तथा औशिजः उशिजः पुत्रः कक्षीवान् सोमस्य पानेन युवयोः मदे हर्षे निमित्तभूते सति हुवन्यति युवाम् आह्वयति। युवम् युवाञ्च तस्यै मक्षिकायै मधु दातुं मधुविद्यार्थिनौ सन्तौ दधीचः आथर्वणस्य ऋषेः मनः चित्तं शुश्रूषया आ विवासथः पर्यचरतम्। अथ अनन्तरं तस्मिन्प्रीते सति अश्व्यम् युवाभ्यां प्रतिहितम् अश्वस्य सम्बन्धि यत् शिरः तत् वाम् युवां प्रति मधुविद्याम् वदत् अवदत्। स ऋषि-राश्वेन शिरसा उपदिष्टवानित्यर्थः ॥ ९ ॥

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥ १० ॥

युवम्। पेदवे। पुरुऽवारम्। अश्विना। स्पृधाम्। श्वेतम्। तरुतारम्। दुवस्यथः।
शर्यैः। अभिऽद्युम्। पृतनासु। दुस्तरम्। चर्कृत्यम्। इन्द्रम्ऽइव। चर्षणिऽसहम्। ॥ १० ॥

**स्कन्द०** युवम् युवाम् पेदवे राज्ञे पुरुवारम् बहुना वरणीयं वारयितारं वा शत्रूणाम् [5]हे अश्विनौ![5] श्वेतम् अश्वम् स्पृधाम् सङ्ग्रामाणाम् तरुतारम्[6] निस्तरितारम् दुवस्यथः[7] पेदव इति सम्प्रदानश्रुतेः दुवस्यतिरत्र दानार्थः। दत्तवन्तौ। कीदृशम्। उच्यते। अभिद्युम् 'अभिगतं दीप्तिम्'। दीप्तमित्यर्थः। शर्यैः शर्या इषवः[8] तैः। पृतनासु सङ्ग्रामेषु। दुष्टरम् 'अवतिरति' ( निघ २,१९ ) इति[10] वधकर्मसु पाठात् तिरतिर्हननार्थः। तस्येदं रूपम्। दुर्हणम्। चर्कृत्यम् इदमपि कृन्ततेर्वधकर्मणः[11] ( तु. निघ २,१९ ) रूपम्। अत्यर्थं हन्तारम्। इन्द्रम् इव चर्षणीसहम् मनुष्याणां शत्रुभूतानामभिभवितारम् ॥ १० ॥

---

१. अथवा अ. २. °नाच्चानन्त° मूको. ३. नास्ति वि[1-3] अ[1,2] ल लपं. ४-४. प्रतिनिहितं कु; °तम ··· वि[3] अ[2]. ५-५. नास्ति अ. ६. तरि° अ. ७. दुव° अ. ८-८. गतदीप्ति अ. ९. °षवः इत्यर्थः अ. १०. °तीति आतिरदिति अ. ११. कृन्तेर्व° कु.

**वेङ्कट०** युवाम् पेद्वे राज्ञे[1] बहुभिः वरणीयम् अश्विनौ! शत्रूणाम् तारकम्[2] श्वेतम् अश्वम् अदत्तम्[3] विशरणकुशलैः सङ्ग्रामेषु तरितुम् अशक्यम[4] अभिगतदीप्तिम्[5] सङ्ग्रामेषु पुनःपुनः प्रयोज्यम् इन्द्रम्[3] इव शत्रूणाम् अभिभवितारम् ॥ १० ॥

**मुद्गल०** हे अश्विना अश्विनौ! पेद्वे पेदुनाम्ने पुरुवारम् बहुभिर्वरणीयम् स्पृधाम् सङ्ग्रामे स्पर्धमानानां शत्रूणाम् तरुतारम् तारकम् श्वेतम् शुभ्रवर्णम् इन्द्रात् लब्धमश्वम् युवम् युवाम् दुवस्यथः दत्तवन्तौ। पुनरपि कीदृशम्। शर्यैः योद्धृभिः पृतनासु सङ्ग्रामेषु दुस्तरम् तरितुमशक्यम् अभिद्युम् अभिगतदीप्तिम् चर्कृत्यम् सर्वेषु कार्येषु पुनःपुनः प्रयोज्यम् इन्द्रमिव चर्षणीसहम्। इन्द्रो यथा शत्रून् अभिभवति एवं शत्रुजनानामभिभवितारमित्यर्थः ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये एकविंशो वर्गः ॥

## [ १२० ]

### का राधद्धोत्राश्विना वां को वां जोष उभयोः। कथा विधात्यप्रचेताः ॥१॥

का। राधत्। होत्रा। अश्विना। वाम्। कः। वाम्। जोषे। उभयोः। कथा। विधाति। अप्रऽचेताः ॥

**स्कन्द०** किंशब्दोऽत्र प्रकारे द्रष्टव्यः[6]। का किंप्रकारा [7]राधत् आराधयति[7]। होत्रा हूयतेऽसाविति होत्रा आहुतिः। यज्ञनाम वा होत्राशब्दः। आहुतिरिज्या वा। हे अश्विना! वाम् युवाम्। कः किंप्रकारो यजमानः स्तोता वा। वाम् युवयोः जोषे प्रीतौ[6]। साकाङ्क्षत्वाद्वर्तमान इति वाक्यशेषः। उभयोः द्वयोरपि सहितयोः। किंप्रकारस्य यजमानस्य स्तोतुर्वा युवामुभावपि प्रीयेथे इत्यर्थः। कथा केन प्रकारेण विधाति [8]युवां परिचरति[8] अप्रचेताः अज्ञः[9]। एतत्सर्वं कथय। तत् सुखमहं करोमीत्यर्थः ॥ १ ॥

**वेङ्कट०** कीदृशी वाक् वाम्[10] आराधयति अश्विनौ! कः वाम्[11] स्तोता युवयोः उभयोः पर्याप्त्यर्थं भवति[12]। केन[13] प्रकारेण वाम् अज्ञः परिचरति ॥ १ ॥

**मुद्गल०** 'का राधत्' इति द्वादशर्चं पञ्चमं सूक्तम्। कक्षीवान् ऋषिः। आद्या गायत्री। द्वितीया 'विद्वांसौ' इत्येषा ककुप्, मध्यमपादस्य द्वादशाक्षरत्वात्। 'मध्यमश्चेत् ककुप्' ( ऋअ १,५,३ ) इति तल्लक्षणम्। तृतीया 'ता विद्वांसा' इत्येषा ककुप्। मध्यमपादस्य काविराट् 'नवकयोर्मध्ये जागतः काविराट्' ( ऋअ १,५,३ ) इत्युक्तलक्षणत्वात्। [14]चतुर्थी 'वि पृच्छामि' इत्येषा[14] नष्टरूपी, 'नववैराजत्रयोदशैर्नष्टरूपी' ( ऋअ १,६,६ ) इत्युक्तलक्षणोपेतत्वात्। 'प्र या घोषे' इति पञ्चमी तनुशिरा, 'एकादशिनोः परः षट्कस्तनुशिरा' ( ऋअ १,५,५ ) इत्युक्तलक्षणत्वात्[15]। 'श्रुतं गायत्रम्' इत्येषा षष्ठी। यद्यपि पादसङ्ख्यया न[16] उष्णिक्, तथाप्यक्षरसङ्ख्यया

---

१. नास्ति वि[1,3] अ[1] ल लपं. २. तारके वि[1] अ[2]. ३. नास्ति वि[1] अ[2]. ४. शक्यं कु. ५. अभिगतदीप्तिः वि[1] अ[2]. ६. नास्ति अ. ७-७. °आरधत् राध° अ. ८-८. °चरित अ. ९. अज्ञः मूको. १०. युवाम् कु. ११. वा कु. १२. नास्ति वि[1] लपं. १३. तेन वि[1] अ[2]. १४-१४. नास्ति मूको. १५. लक्षणात् मै[2]. १६. नास्ति मूको.

उष्णिक्। 'युवं हि' इति सप्तमी विष्टारबृहती 'अष्टिनोर्मध्ये दशकौ विष्टारबृहती' ( ऋअ १, ७, ५ ) इति लक्षणोपेतत्वात्। 'मा कस्मै' इति अष्टमी कृतिः 'जागतावष्टकश्च कृतिः' ( ऋअ १,६,३ ) इत्युक्तलक्षणसद्भावात्। 'दुहीयन्' इति नवमी विराट्। दशम्याद्यास्तिस्रो गायत्र्यः। अश्विनौ देवता[1] ॥

हे अश्विना! अश्विनौ वाम् युवाम् का होत्रा वाङ्नामैतत् ( तु. निघ १,११ )। कीदृशी स्तुतिलक्षणा वाक् राधत् आराधयति प्रीतौ करोति। युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः। किञ्च वाम् युवयोरुभयोः जोषे जोषणे सेवने समर्थः कः स्तोता विद्यते। युष्मद्गुणाभिज्ञः कश्चिदपि नास्तीत्यर्थः। अप्रचेताः युवयोर्माहात्म्यम् अजानंश्च कथा केन प्रकारेण विधाति युवां परिचरति[2]। युष्मद्विषयं परिचरणमपि न कर्तुं शक्यत इत्यर्थः ॥ १ ॥

## वि॒द्वांसा॒विद् दुरः॑ पृच्छे॒दवि॑द्वानि॒त्थाप॑रो अ॒चेताः॑। नू चि॒न्नु मर्ते॒ अक्रौ॑ ॥२॥

वि॒द्वांसौ॑। इत्। दुरः॑। पृ॒च्छे॒त्। अवि॑द्वान्। इ॒त्था। अप॑रः। अ॒चेताः॑। नु। चि॒त्। नु। मर्ते॑। अक्रौ॑ ॥२॥

**स्कन्द॰** परस्यामृचि तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः[3]। तया[4] चैकवाक्यता। यौ विद्वांसौ जानन्तौ। इत शब्दः[5] पदपूरणः। दुरः स्तुतेः द्वाराणि। उपायान्[6] इत्यर्थः। पृच्छेत्[7] पृच्छति सर्वं स्तोता। अविद्वान् इत्था। 'इत्था' ( निघ ३,१० ) इति सत्यनाम। सत्यमेवाजानन् अशाठ्येन। अपरः[8] न्यूनशक्तिः अचेताः ज्ञातुमसमर्थः [5]स्वयम्। नु चित् नु नु† इति[5] पदपूरणः। चित् शब्द एवार्थे। पुराणावेव। मर्ते षष्ठ्यर्थेऽत्र सप्तमी। मर्त्यस्य मनुष्यस्य। अक्रौ आङ्पूर्वस्य क्रमेरिदं छान्दसं रूपम्। आक्रमितारौ। वशीकर्तारावित्यर्थः ॥ २ ॥

**वेङ्कट॰** विद्वांसौ एव द्वाराणि प्रष्टुम् अर्हति[9] अविद्वान् इत्थम् अन्यः चेतोविवर्जितः[10]। क्षिप्रम् एव मर्त्येषु अनाक्रान्तौ ॥ २ ॥

**मुद्गल॰** इत्था इत्थम्, अनेन पूर्वोक्तप्रकारेण अविद्वान् अज्ञः स्तोता विद्वांसौ इत् सर्वज्ञावश्विनावेव दुरः द्वाराणि स्तुतिपरिचरणयोरुपायभूतान्[11] मार्गान्[12] पृच्छेत् प्रष्टुमर्हति। अपरः अश्विभ्याम् अन्यः सर्वोऽपि अचेताः चेतसा ज्ञानेन रहितः। तस्मादश्विनावेव पृच्छेदित्यर्थः। तौ च अक्रौ शत्रुभिरनाक्रान्तावश्विनौ नु चित् क्षिप्रमेव मर्ते मनुष्ये स्तोतरि भक्तानुग्राहकतया सनिं धत्त इति वाक्यशेषः। नु पूरणः ॥ २ ॥

## ता वि॒द्वांसा॑ हवामहे वां॒ ता नो॑ वि॒द्वांसा॒ मन्म॑ वोचेतम॒द्य। प्राच॒द् दय॑मानो यु॒वाकुः॑ ॥ ३ ॥

ता। वि॒द्वांसा॑। ह॒वा॒म॒हे॒। वा॒म्। ता। नः॒। वि॒द्वांसा॑। मन्म॑। वो॒चे॒त॒म्। अ॒द्य। प्र। आ॒र्च॒त्। दय॑मानः। यु॒वाकुः॑।

**स्कन्द॰** तौ[7] विद्वांसौ हवामहे आह्वयामो वयम्। युवामाहूतौ च सन्तौ नः अस्मभ्यम्। विद्वांसौ मन्म

---

१. नास्ति मै[2]; °ते मै[1]. २. प्रति चरति मूको. ३. °हार्यः अ. ४. तथा अ. ५-५. नास्ति अ. †नास्ति मूको. ६. उपाय अ. ७. नास्ति अ. ८. °पर इत्यर्थः अ. ९. अर्हन्ति वि[3] अ[2]. १०. चेतावर्जितः कु. ११. परिचर° मै[2]. १२. नास्ति मूको.

मन्यतीत्यर्चतिकर्मा (तु. निघ २,१४)। मननं मन्म स्तुतिः। यथा युवामेव स्तुमः तां वोचेतम् कथयत-मित्याशास्महे। [1]अद्य अस्मिन्नहनि। कस्मात्। उच्यते[1]। यस्मात् प्र आर्चन् अर्चतिरत्र शुद्धोऽपि सन्नन्तो द्रष्टव्यः। उत्तमपुरुषस्य स्थाने प्रथमपुरुषः। प्रकर्षेणार्चिचिषामि। स्तोतुमिच्छामीत्यर्थः। दयमानः दधद्धवींषि। युवाकुः युष्मत्कामः॥ ३॥

वेङ्कट० तौ[2] विद्वांसौ हवामहे वाम्[3]। तौ अस्माकं विद्वांसौ अभिलषितं वाचा वोचेतम्। अद्य स्तौति हवींषि ददत् युष्मत्कामः कक्षीवान्[4]॥ ३॥

मुद्गल० हे अश्विनौ! विद्वांसा [5]सर्वज्ञौ ता[5] वाम् तौ युवाम् हवामहे आह्वयामहे। ता तौ आहूतौ विद्वांसा अभिज्ञौ युवाम् नः अस्मभ्यम् मन्म मननीयं ज्ञातव्यं स्तोत्रम् अद्य अस्मिन्काले वोचेतम् ब्रुवाणौ भूयास्तम्। स चाहम् युवाकुः युवां कामयमानः दयमानः युवाभ्यां हविः प्रयच्छन् प्र आर्चत् प्रार्च प्रकर्षेण स्तौमि॥ ३॥

वि पृच्छामि पाक्या३ न देवान् वषट्कृतस्याद्भुतस्य दस्रा।
पातं च सह्यसो युवं च रभ्यसो नः॥ ४॥

वि। पृच्छामि। पाक्या। न। देवान्। वषट्ऽकृतस्य। अद्भुतस्य। दस्रा।
पातम्। च। सह्यसः। युवम्। च। रभ्यसः। नः॥ ४॥

स्कन्द० वि विविधं [1]स्तुत्युपायान् पृच्छामि[1] पाक्या भूतेऽत्र काले ण्यप्रत्ययो द्रष्टव्यः। प्रज्ञायाश्च यत् परिपक्वत्वं तदश्विनोरेवापदिश्यते। परिपक्वप्रज्ञौ युवाम्। न देवान् न तु देवानन्यान्। युवां पृच्छामि नान्यान् [2]देवानित्यर्थः। एवम्[2] अस्मत्स्तुतिपरोऽयमिति ज्ञात्वा वषट्कृतस्य अद्भुतस्य वषट्कारेण करणं होमः। अद्भुतम् (निघ ३,३) इति महन्नाम। तृतीयार्थे चोभयत्र षष्ठी। वषट्कारहुतेन सोमेन महतास्मदीयेन। साकाङ्क्षत्वात् तृप्यतमिति वाक्यशेषः। हे दस्रा![6] पातम् च रक्षतं च सह्यसः सहीयसः अतिशयेनाभिभवितुः शत्रबलात्। युवाम् च रभ्यसः रभ्यो रभीयः अतिशयेन वेगवत्। चशब्द-श्चास्मात् परो द्रष्टव्यः। वेगवत्तराच्च। नः अस्मान्॥ ४॥

वेङ्कट० पक्तव्यप्रज्ञः[7] विद्वान् अहं भूत्वा वषट्कृतस्य महतः सोमस्य[8] पानार्थम् न अन्यान् देवान् वि[9] पृच्छामि। युवाम्[10] एव मदीयं सोमं सहीयांसं[11] पिबतम्, कृणुतम् च अस्मान् वेगवतः॥ ४॥

मुद्गल० हे अश्विनौ! युवम् युवाम् वि पृच्छामि विशेषेण प्रष्टुमिच्छामि। पाक्या न पक्तव्यप्रज्ञान् परिपक्व-मतीन् अन्यान् देवान् न पृच्छामि। किन्तु युवामेव सर्वज्ञौ पृच्छामीत्यर्थः। हे दस्रा! दर्शनीया-वश्विनौ! तौ युवाम् वषट्कृतस्य वषट्कारेणाग्नौ हुतस्य अद्भुतस्य आश्चर्यभूतस्य महतः सह्यसः अतिशयेन बलवतः बलोत्पादकस्य स्वांशलक्षणमेकदेशम् पातम् च, नः अस्मान् च रभ्यसः अतिशयेन रभस्विनः प्रौढोद्यमान् कुरुतम्॥ ४॥

---

१-१. नास्ति अ. २. ता वि[1] लपं. ३. नास्ति वि[1] अ[1]. ४. नास्ति वि[1] लपं. ५-५. त्रुटितम् मै[2]. ६. तस्मा कु. ७. वक्तव्य° वि[1,2] अ[1] लपं. ८. स्तोमस्य वि[1] अ[1]. ९. नास्ति वि[1] अ[1]. १०. वाम् वि[1] अ[1]. ११. महीयांसं वि[1] अ[1].

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम् । प्रैषयुर्न विद्वान् ॥५॥

प्र । या । घोषे । भृगवाणे । न । शोभे । यया । वाचा । यजति । पज्रियः । वाम् । प्र । इषऽयुः । न । विद्वान् ॥

स्कन्द० प्र या घोषे घोष्यमाणत्वाद् घोषः स्तोमः, तस्मिन् । सप्तमीश्रुतेः साकाङ्क्षत्वात् स्थितेति वाक्यशेषः । भृगवाणे न भृगवाणशब्दो भृगोः पर्यायः[1] । षष्ठ्यर्थे च सप्तमी । भृगोरिव । प्र शोभे प्रकर्षेण शोभते । यया वाचा यजति तृतीयपादाद्यः प्र-शब्द इहापकृष्टव्यः । प्रकर्षेण यजति । पज्रियः पाजो हविर्लक्षणमन्नम्, तद्वान् पज्रियः । अथवा पज्रा अङ्गिरसः, तेषामपत्यभूतः पज्रियः । कोऽसौ । कक्षीवान् । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । कं यजति । उच्यते । वाम् युवाम् । क इव । उच्यते । इषयुः न अन्नकाम इव कश्चित् । विद्वान् जानन् । किम् । सामर्थ्याद् यष्टुं वा, युष्मन्माहात्म्यं वा साकाङ्क्षत्वात् ॥ ५ ॥

वेङ्कट० घोषो नाम ऋषिः । तस्मिन् या वाक् भृगौ च प्रकर्षेण शुशुभे युष्मत्स्तुतिभूता । [2]यया च[2] तादृश्या वाचा पज्रकुले[3] जातः कक्षीवान् [4]अधुना वाम् यजति । स तया स्तुत्या कक्षीवान्[4] इदानीम् अन्नकामः[5] प्रभवतु ॥ ५ ॥

मुद्गल० हे अश्विनौ! प्रभवति समर्था भवति सा वाक् या वाक् युष्मत्स्तुतिरूपा घोषे घोषाख्यायाः पुत्रे सुहस्त्याख्ये ऋषौ भृगवाणे न भृगौ च शोभे शोभते । यया च स्तुतिलक्षणया वाचा पज्रियः पज्रा अङ्गिरसः, तेषां कुलोत्पन्नः कक्षीवान् वाम् युवाम् यजति पूजयति स्तौति । सापि शोभत इत्यर्थः । इषयुः न इषम् अन्नम् आत्मनः कामयमानश्च विद्वान् स्तुत्यभिज्ञः कक्षीवान् ऋषिः प्रभवतु । युष्मदनुग्रहात् सम्पूर्णकामो भवत्वित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये द्वाविंशो वर्गः ॥

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् । आक्षी शुभस्पती दन् ॥६॥

श्रुतम् । गायत्रम् । तकवानस्य । अहम् । चित् । हि । रिरेभ । अश्विना । वाम् ।
आ । अक्षी इति । शुभः । पती इति । दन् ॥ ६ ॥

स्कन्द० श्रुतम् लडर्थे लोट् । शृणुथः । गायत्रम् 'गायति' ( निघ ३,१४ ) इत्यर्चतिकर्मसु पाठाद् अर्चतिकर्मायम् । गीयतेऽनेनेति गायत्रं स्तोत्रम् । तकवानस्य तकतेर्गतिकर्मणः ( तु. निघ २,१४ ) एतद्रूपम् । उपगच्छतः स्तोतुः । एतत् ज्ञात्वा अहम् चित् अहम् अपि । हि-शब्दस्तु पदपूरणः । रिरेभ स्तुतवान् स्तौमि वा । हे अश्विनौ! वाम् युवाम् । किञ्च अक्षी अक्षिणी हे शुभः पती! वृष्टिलक्षणस्योदकस्यापि पती! । [6]आ दन्[6] भूतकालेऽत्र शतृप्रत्ययो द्रष्टव्यः । व्यत्ययेन चैकवचनम् । मर्यादया दत्तवन्तौ युवाम् ऋज्राश्वाय ॥ ६ ॥

---

१. नास्ति अ. २. च या कु. ३. वज्रकुले वि[1,2] अ[1]; यज्ञकुले वि[3] अ[3]. ४-४. नास्ति कु. ५. नास्ति वि[1,2] ल लपं. ६. नास्ति अ.

**वेङ्कट०** अशृणुतम्[1] गायत्रम् [2]साम अन्धत्वात् स्खलितं[2] गच्छतः ऋज्राश्वस्य[3]। सः हि अहम् [4]इव वाम् अश्विनौ![4] तुष्टाव अक्षी आददानः भवद्भ्याम् शुभः पती! ॥ ६ ॥

**मुद्गल०** हे अश्विना! अश्विनौ! गायत्रम् गातव्यं गायत्रीयुक्तं स्तोत्रम् तकवानस्य स्खलद्गतेरन्धस्य ऋज्राश्वस्य सम्बन्धि श्रुतम् अशृणुतम्, अहम् चित् अहमिव वाम् युवाम्[5] सः हि रिरेभ स्तुतवान् किं कुर्वन्। हे शुभः पती! शोभनस्य कर्मणः पालकौ पितरौ! अक्षी युवाभ्यां दत्ते चक्षुषी आ दन् आददानः। तस्मै इव मह्यम् अप्यभिमतफलं प्रयच्छतम् इति भावः ॥ ६ ॥

युवं ह्यास्तं महो रन् युवं वा यन्निरततंसतम्।
ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥ ७ ॥

युवम्। हि। आस्तम्। महः। रन्। युवम्। वा। यत्। निःऽअततंसतम्।
ता। नः। वसू इति। सुऽगोपा। स्यातम्। पातम्। नः। वृकात्। अघऽयोः ॥ ७ ॥

**स्कन्द०** द्वितीयपादस्थो यच्छब्दः प्रथमपादेऽप्यनुषक्तव्यः। यौ युवाम्। हि-शब्दस्तु पदपूरणः। आस्तम् अस भुवि। लडर्थे चात्र लङ्। भवथः। महः महतो धनस्य रन् रा दाने। प्रथमासमानाधिकरणश्चात्र शतृप्रत्ययः। दातारौ। युवम्[6] [7]वा यत् वा[7]-शब्दः चशब्दस्यार्थे। यच्छब्दस्तु खलु पुंद्वितीया-विभक्तिकः[8]। यौ च युवाम् निरततंसतम्[9] तसु उपक्षये इत्येतस्येदं रूपम्, न तनोतेः। अत्यर्थमुपक्षयथः[10] यस्मै देयं तस्मै च धनं दत्थः,[11] य उपक्षयितव्यः तमुपक्षयथ इत्यर्थः। ता तौ नः अस्मान् हे वसू! प्रशस्यौ! वसुमन्तौ! वा सुगोपा सुष्ठु गोप्तारौ स्यातम् भवतम्। पातम् रक्षतञ्च नः अस्मान् वृकात् प्राणिविशेषात् अघायोः [12]पापकामात्। भक्षयितुमिच्छत[12] इत्यर्थः। अथवा कुक वृक इत्यस्य वृकशब्द आदातृवचनः। आदातुश्चोरादेः[13] पापकामात् ॥ ७ ॥

**वेङ्कट०** युवम्[14] हि आस्तम् आढ्यस्य[15] महतः धनस्य दातारौ। युवाम् एव यदि कञ्चन[16] निरततंसतम्[17] तसिरुपक्षयकर्मा। आढ्यं दरिद्रं च पुरुषं कुरुतः। तौ नः वासयितारौ! [18]सुगोप्तारौ भवतम्[18]। रक्षतं[19] च अस्मान् [20]स्तेनाद् अघम् इच्छतः[20]।

**मुद्गल०** हे अश्विनौ! महः महतः धनस्य रन् रातारौ दातारौ युवम् युवाम्[21] कञ्चन आस्तम् [22]युवम् युवाम् वा यत्[22] निरततंसतम् धनानि निरगमयतम्। रक्षकौ विनाशकावपि युवामेवेत्यर्थः। हे वसू! वासयितारावश्विनौ! ता[23] तादृशौ[24] युवाम् नः अस्माकम् सुगोपा सुष्ठु गोपायितारौ रक्षितारौ स्यातम् भवतम्। अपि च नः अस्मान् अघायोः अघं पापफलमस्माकमिच्छतः वृकात् स्तेनात् पातम् रक्षतम्। हि पूरणः ॥ ७ ॥

---

१. शृणुतं कु; आश्रृणुतम् वि[2] ल. २-२. सामान्यत्वात् स्तोतुं पतितं वि[3] अ[2]. ३. ऋज्रास्य वि[2]. ४-४. युवावश्वि° वि[3] अ[2]. ५. नास्ति मै[2]. ६. युवाम् कु[2]. ७-७. नास्ति अ. ८. द्वितीया° अ. ९. निरन्तरं सन्ततं अ. १०. °क्षयथाः कु. ११. दत्वा इत्यर्थः अ; दत्तं कु. १२-१२. पाप ··· अ. १३. आदातुः अ. १४. युवाम् वि[3] अ[2]. १५. आद्यस्य वि[3] अ[2]. १६. किं वि[2]; किञ्चन कु. १७. °तंसतम् अत्यर्थमुपक्षयं कुरुतः वि[3] अ[2]. १८-१८. सुगोप्तारं भवन्तम् वि[3] अ[2]. १९. रक्षणं वि[2] अ[1]; नास्ति वि[3] अ[2]. २०-२०. सोध (?°घ) मि[च्छ] नः वि[3] अ[1]. २१. युवां यत् मूको. २२-२२. नास्ति मूको. २३. ता वा मूको. २४. °शौ युवम् मूको.

**मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः। स्तनाभुजो अशिश्वीः ॥८॥**

मा। कस्मै। धातम्। अभि। अमित्रिणे। नः। मा। अकुत्र। नः। गृहेभ्यः। धेनवः। गुः। स्तनऽभुजः। अशिश्वीः ॥ ८ ॥

**स्कन्द०** मा कस्मै चित् अभि धातम् अयं दधातिर्दानार्थः। आभिमुख्येन [1]दत्तम्। किम्। द्वितीये[1] पादे धेनूनामुपादानात् तत्सान्निध्याद् धेनूर्वा धनं वा। अमित्रिणे अमित्राय। नः अस्माकम्। मा च अकुत्र यत्र ज्ञायते किं तदिति तदकिं चोरस्थानम् तत्राकुत्र। अज्ञेये चोरस्थान इत्यर्थः। अस्माकं सम्बन्धिभ्यः गृहेभ्यः युवाभ्यां दत्ताः धेनवः दुह्यन्ते या गावः ताः। गुः गमन्। चोरैर्मापहारिषतेत्यर्थः[2]। स्तनभुजः स्तना भुज्यन्ते यासां ताः स्तनभुजः। दोग्ध्यः[3] इत्यर्थः। अशिश्वीः शिशवो बाला वत्सकाः, तद्रहिताः। गृहेषु बद्धवत्सका इत्यर्थः। युष्मत्प्रसादेनेति शेषः ॥ ८ ॥

**वेङ्कट०** मा अस्मान् कस्मै चित् मैत्रीवर्जिताय अभि दत्तम्[4]। मा च अस्मद्गृहेभ्यः[5] धेनवः अप्रज्ञाते[6] देशे गमन्[7] स्तनं वत्सान् भोजयन्त्यः स्तनैर्वा अस्मान् रक्षन्त्यः शिशुवर्जिताः। वत्सान् [8]अपहाय मा गमन्निति†[8] ॥ ८ ॥

**मुद्गल०** हे अश्विनौ! अमित्रिणे अमित्रं मित्रराहित्यम् तद्वते कस्मै चिदपि शत्रवे नः अस्मान् मा अभि धातम् आभिमुख्येन मा स्थापयतम्। अपि च नः अस्माकम् गृहेभ्यः सकाशात् स्तनभुजः स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः धेनवः गावः अशिश्वीः शिशुना वत्सेन विरहिता अस्मदीये गृहेऽशयाना वा सत्यः अकुत्र चित् अस्माभिरगम्ये प्रदेशे मा गुः मा गच्छन्तु ॥ ८ ॥

**दुहीयन् मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै।**
**इषे च नो मिमीतं धेनुमत्यै ॥९॥**

दुहीयन्। मित्रऽधितये। युवाकु। राये। च। नः। मिमीतम्। वाजऽवत्यै।
इषे। च। नः। मिमीतम्। धेनुऽमत्यै ॥ ९ ॥

**स्कन्द०** दुहीयन् दुह्यताम् मित्रधितये धेट् पाने इत्यस्य दधातेर्वा[9] दानार्थस्येदं रूपम्। मित्राणां पानार्थं मित्रेभ्यो वा दानार्थम्। युवाकु यु मिश्रणे। मिश्रणीयं पयः। पानार्हमित्यर्थः[10]। युष्मत्कामं वा युवाकु। युवयोः यागयोग्यमित्यर्थः[11]। किञ्च राये च सर्वत्रात्र द्वितीयार्थे चतुर्थी। धनम् च नः अस्मभ्यम् मिमीतम् मिमीहिर्याच्ञाकर्मा (तु. निघ ३,१९)। याच्ञया अत्र तत्पूर्वकं दानं लक्ष्यते। दत्तम्। वाजवत्यै बलवतीम्। बलसहितं धनम्, न केवलमित्यर्थः। इषे च अन्नं च। नः अस्मभ्यम्[12] मिमीतम् दत्तम्। धेनुमत्यै धेनुमतीम्। धेनुभिस्सहितमन्नम्, न केवलमित्यर्थः ॥ ९ ॥

---

१-१. नास्ति अ. २. 'हरिषते' मूको. ३. त्रुटितम् मूको. ४. धत्तम् वि[1] अ[2]. ५. अस्मान् गृ° वि[1] अ[2]. ६. नास्ति वि[2]. ७. अगमन् ल; नास्ति वि[1] लपं. ८-८. उवमिति वि[1] अ[2]. † अगमयन्निति वि[1,2] अ[1], ल लपं; गमन् कु. ९. नास्ति अ. १०. °नार्थमि° अ. ११. योग्यमित्यर्थः अ. १२. यं कु. १३. नास्ति कु.

**वेङ्कट०** '[1]युष्मत्कामाः† मित्रधारणार्थं कामाद् युवाम् दुहीयन् तथा सति धनाय बलवते अस्मान् कुरुतम् तथा धेनुयुक्ताय च अन्नाय कुरुतम् इति‡'[1] ॥ ९ ॥

**मुद्गल०** हे अश्विनौ! युवाकु युवां कामयमानाः स्तुतिभिर्यावयितारः स्तोतारः मित्रधितये मित्राणां बन्धुजनानां धारणार्थम् दुहीयन् युष्मत्सकाशाद् धनानि दुहन्ति प्राप्नुवन्ति । अतः नः अस्मानपि वाजवत्यै अन्नयुक्ताय च राये धनाय मिमीतम् कुरुतम् तथा धेनुमत्यै धेनुभिर्युक्तायै इषे अन्नाय च नः अस्मान् मिमीतम् कुरुतम् । अस्मभ्यं स्तोतृभ्यः बलयुक्तं धनं गोयुक्तमन्नं[2] च प्रयच्छतमित्यर्थः ॥ ९ ॥

## अश्विनो॑रसनं॒ रथ॑मन॒श्वं वा॒जिनी॑वतोः । तेना॒हं भूरि॑ चाकन ॥ १० ॥

अ॒श्विनोः॑ । अ॒स॒न॒म् । रथ॑म् । अ॒न॒श्वम् । वा॒जिनी॑ऽवतोः । तेन॑ । अ॒हम् । भूरि॑ । चा॒क॒न॒ ॥ १० ॥

**स्कन्द०** अश्विनोः स्वभूतम् असनम् रथम् स्तुतिभिः सम्भक्तवानहम् । स्तुतवानित्यर्थः । कीदृशम् । अनश्वम् अश्ववर्जितम् । वाजिनीवतोः वाजो बलम्, तद्वती सेना वाजिनी । अन्नं वा हविर्लक्षणं वाजम्, तद्वती । सत्राहीनादियागसन्ततिर्वाजिनी, तद्वतोः । स्वार्थिको वा एको मत्वर्थीयः, बलवतोरन्नवतोर्वा । तेन स्तुतेन हेतुना अहम् भूरि बहु चाकन कामयेऽश्विनौ । यस्मात् तं रथं स्तुतवान्[3] तस्माद्[4] बहु यद्यदभिप्रेतं तत्सर्वमश्विनौ याचे इत्यर्थः ॥ १० ॥

**वेङ्कट०** अश्विनोः अभजम् रथम्[5] अश्वरहितम् अन्नवतोः । तेन अहम् बहु कामये ॥ १० ॥

**मुद्गल०** वाजिनीवतोः वाजम् अन्नं, तद्वत्क्रियावतोः अश्विनोः अनश्वम् अश्वरहितम् अश्वराहित्येऽपि सामर्थ्याऽतिशयेन गच्छन्तम् रथम् असनम् अहम् स्तोता समभजम् । तेन च रथेन भूरि प्रभूतं श्रेयः चाकन कामये ॥ १० ॥

## अ॒यं स॑मह मा तनूह्याते॒ जनाँ॒ अनु॑ । सो॒म॒पेयं॑ सु॒खो रथः॑ ॥ ११ ॥

अ॒यम् । स॒म॒ह॒ । मा॒ । त॒नु॒ । उ॒ह्याते॑ । जना॑न् । अनु॑ । सो॒म॒ऽपेय॑म् । सु॒ऽखः । रथः॑ ॥ ११ ॥

**स्कन्द०** '[6]कतमोयं रथः'[6] । उच्यते । यः अयम् हे समह! महः उत्सवः पूजा वा,[7] सहितो महेन समहः । नित्योत्सवयुक्तः पूज्यो वा । व्यत्ययेन चात्रैकवचनम् । हे समहौ! नित्योत्सवयुक्तौ पूज्यौ वेत्यर्थः । मा माम् तनु लडर्थेऽयं लोट् । प्रथमपुरुषस्य स्थाने मध्यमपुरुषः । तनुते । सर्वकामसमृद्ध्या विस्तारयतीत्यर्थः । ऊह्याते प्राप्यते च युवाभ्याम् । जनान् अनु मनुष्यान् शत्रुभूतान् प्रति सोमपेयम् सोमपानं च प्रति सुखः रथः ॥ ११ ॥

**वेङ्कट०** अयम् त्वं[9] स्तुतियुक्त रथ[8]! मां[9] विस्तीर्णं कुरु[9] । सोऽयम् ऊह्यते अश्विभ्याम्[10] जनेषु[9]

---

१-१. नास्ति वि[3] अ[2]. † युष्मान् कामाः वि[1] लपं. ‡ नास्ति कु. २. गोपयु[*] मूको. ३. स्तुता अ. ४. तस्मान् कु; कस्मात् अ. ५. नास्ति वि[3] अ[2]. ६-६. नास्ति कु; कतमो यो रथः अ. ७. नास्ति वि[1]. अ[1,2] ८. रथं वि[3] अ[2]. ९. मा वि[1,2] अ[1] ल लपं १०. अश्विनेषु वि[3] अ[2].

सोमपेयं प्रति सुह्वारः[1] रथः ॥ ११ ॥

**मुद्गल०** हे समह! धनेन सहित! रथ! अयम् पुरोवर्ती त्वम् मा माम् तनु विस्तारय पुत्रपौत्रधनादिभिः समृद्धं कुरु। स च सुखः शोभनावकाशः रथः जनान् अनु स्तोतृजनेषु सोमपेयम् सोमपानं प्रति ऊह्याते उह्यते अश्विभ्यां नीयते। अतोऽश्विभ्यां यद्दीयते तत्सर्वं रथ एव ददातीति रथं सम्बोध्य प्रार्थना ॥ ११ ॥

## अध॒ स्वप्न॑स्य॒ निर्वि॑दे॒ऽभु॑ञ्जतश्च रे॒वतः॑ । उ॒भा ता बस्रि॑ नश्यतः ॥ १२ ॥

अध॑ । स्वप्न॑स्य । निः । वि॒दे॒ । अभु॑ञ्जतः । च॒ । रे॒वतः॑ । उ॒भा । ता । बस्रि॑ । न॒श्य॒तः॒ ॥१२॥

**स्कन्द०** 'उत्तमा स्वप्ननाशिनी'। पञ्चानामाश्विनानां सूक्तानामुत्तमा या ऋग् एषा स्वप्ननाशनार्था। अध-शब्दोऽत्र पदपूरणः, एतस्मादित्यस्यार्थे वा। एतस्मात् पञ्चभिः सूक्तैः अश्विनोः[2] स्तुतेः करणात्[3]। स्वप्नस्य स्वप्नशब्देनात्र यः शयितुर्दुःस्वप्न इष्यते स उच्यते, न स्वप्नमात्रम्। द्वितीयार्थे च षष्ठी। दुःस्वप्नम्। निः विदे विद सत्तायामित्यस्यान्तर्णीतण्यर्थस्य रूपम्। निर्वेदयामि निस्सत्ताकं[4] करोमि। नाशयामीत्यर्थः। न च केवलं दुःस्वप्नम्। किं तर्हि। अभुञ्जतः च इयमपि द्वितीयार्थे एव षष्ठी। अभुञ्जानं च। भोक्तुं[5] चासमर्थमित्यर्थः। कम्। सामर्थ्याज्जाठराग्निम्। रेवतः धनवतः[5]। सति भोज्ये या भोजनाशक्तिः[6] ताञ्चेत्यर्थः। नाश्यमानौ उभा उभावपि ता तौ बस्रि निपातोऽयं [7]क्षिप्रार्थः। क्षिप्रम्। नश्यतः[7] लोडर्थेऽत्र लट्। अश्विनोः प्रसादेन मत्तो नश्यताम् ॥ १२ ॥

**वेङ्कट०** भिक्षमाणः कक्षीवान्[8] अलभमानो धनम् कदर्यं निन्दति[9]। अध[10] स्वप्नस्य [11]अहं रात्रौ[11] दृष्टस्य प्रातरदृश्यमानार्थस्य आश्रितान् अरक्षतः[12] कदर्यतया वाऽभुञ्जानस्य धनवतः च निर्विदे। तौ उभौ अपि क्षिप्रम् नश्यतः इति निर्वेदः ॥ १२ ॥

**मुद्गल०** अध इदानीं प्रभातसमये स्वप्नस्य स्वप्नं प्रति निर्विदे निर्विण्णोऽस्मि। तथा अभुञ्जतः परान् अरक्षतः रेवतः धनवतः पुरुषस्य। एवंभूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि। यतः ता उभा तावुभौ बस्रि क्षिप्रं नश्यतो नाशं प्राप्नुतः। स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते, कदर्यस्येव धनम् अभुक्तम् अदत्तं सत् क्षिप्रमेव नश्यति। तदुभयविषयो निर्वेदो मां बाधत इत्यर्थः। च पूरणः ॥ १२ ॥

इति प्रथमाष्टके अष्टमाध्याये त्रयोविंशो वर्गः ॥

इति प्रथमे मण्डले सप्तदशोऽनुवाकः ॥

---

१. सुखकरो कु. २. नास्ति अ. ३. कारणात् कु. ४. निस्सत्तां मूको. ५. °तः सतः अ. ६. भोजनशक्तिः मूको. ७-७. नास्ति अ. ८. कक्षीन् वि[2] अ[2]. ९. निवृत्यर्थं वि[2] अ[2]. १०. अथ कु; नास्ति वि[2] अ[2]. ११-११. अहो रात्रैः वि[2] अ[2]. १२. अरक्षितः वि[2] अ[2].

[१२१]

कदित्था नॄँः पात्रं देवयतां श्रवद् गिरो अङ्गिरसां तुरण्यन् ।
प्र यदानड् विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥ १ ॥

कत् । इत्था । नॄन् । पात्रम् । देवऽयताम् । श्रवत् । गिरः । आङ्गिरसाम् । तुरण्यन् ।
प्र । यत् । आनट् । विशः । आ । हर्म्यस्य । उरु । क्रंसते । अध्वरे । यजत्रः ॥ १ ॥

**स्कन्द०** 'ऐन्द्रं च'। ऐन्द्रमेतत्सूक्तम् । 'ऐन्द्रं यदुच्यते सूक्तं तत्र कदित्थेत्येतत् षष्ठमौशिजस्य । वैश्वदेवमप्येतत् समाम्नातम् प्रतिनाभानेदिष्ठं ब्राह्मणोक्तम्' ॥ तत्रेत्ययम् 'ऐन्द्रं च वैश्वदेवं च उत्तस्ये दानसंस्तवः' इत्येतेषां परस्तादुक्तानां प्रतिनिर्देशः । तेषां मध्ये यदैन्द्रं सूक्तमुच्यते कदित्थेत्येतत् षष्ठमौशिजस्य कक्षीवतः । एतद् वैश्वदेवमपि । एवं हि साङ्ख्यायनानां ब्राह्मणे समाम्नातम् "तद्यानि तत्र वैश्वदेवानि भवन्ति[१] तान्युद्धृत्यान्यानि प्राजापत्यान्यनिरुक्तानि[२] परोक्षवैश्वदेवान्यधीयन्ते 'प्र वः पान्तं रघुमन्यवोऽन्धः[३]" (ऋ १,१२२,१), 'तं प्रत्नथा पूर्वथा [४]विश्वथेमथा[४]" (ऋ ५,४४,१), कदित्था नॄँ पात्रं देवयताम्[४]" इति प्रतिनाभानेदिष्ठम्" (शांब्रा २४,९) इति । अत्र ब्राह्मणे परोक्षवैश्वदेवं प्रतिनाभानेदिष्ठं चेदमुक्तम् । प्रतिनाभानेदिष्ठमिति च नाभानेदिष्ठस्य प्रतिनिधिरुच्यते । नाभानेदिष्ठं[५] वैश्वदेवम् । तस्य प्रतिनिधित्वादिदमपि वैश्वदेवम् । परोक्षवैश्वदेवं तु इन्द्रादन्यासां 'स्तम्भीद्ध द्याम्' (ऋ १,१२१,२) इत्यादीनां देवतानां विशेषणत्वेन कीर्त्यमानत्वात् । कत्-शब्दोऽत्र 'कद्ध नूनम्' (ऋ १, ३८,१) इतिवत् कदेत्यस्यार्थे । कदा इत्था सत्यम् । नॄन्[६] षष्ठ्यर्थेऽत्र च[६] द्वितीया । मनुष्याणामस्माकं स्वभूतम् । पात्रम् ग्रहचमसादि[७] देवयताम् देवकामानाम् अङ्गिरसाम् पितृशब्दस्यायं[८] सोऽयमित्यभिसम्बन्धादपत्ये प्रयोगः । अङ्गिरसोऽपत्यभूतानाम् । तुरण्यन् त्वरमाण इन्द्रः[९] । पिबेदिति वाक्यशेषः । श्रवत् शृणुयाच्च गिरः स्तुतिलक्षणा वाचः । 'प्र आनट्' प्रेत्ययमुपसर्गो वीत्यस्यार्थे । व्याप्नोति विशः मनुष्यान् यष्टॄन् । आकारस्तु पदपूरणे मर्यादायां वा । मर्यादया व्याप्नोति । किञ्च' हर्म्यस्य हरतेरिदं रूपम् । हर्तुः शत्रुधनानामिन्द्रस्य । उरु बहु । क्रंसते करोतेरयम् लेटि[१०] । नुमागमश्छान्दसत्वात् । क्रमेर्वा करोतेरर्थे । करोति । अध्वरे यज्ञे । यजत्रः यष्टा मनुष्यः । अथवा[६] 'हर्म्यम्' (निघ ३,४) इति गृहनाम । सप्तम्यर्थेऽत्र षष्ठी । अध्वरे इत्येतेन चास्य सम्बन्धः । क्रंसते इति क्रमिः स्वार्थे एव । यज्ञगृहे योऽध्वरः, तस्मिन् बहु क्रामतीन्द्रः । पुनःपुनः गच्छतीत्यर्थः । यजत्रः यष्टव्यः ॥ १ ॥

**वेङ्कट०** देवान् इच्छताम् अङ्गिरसाम् अस्माकम् इत्थं प्रवृत्ताः[११] स्तुतीः[१२] इन्द्रः कदा शृणोति आश्रितान् वा तान् नॄन् क्षिप्रकारी । यदा कामानाम्[१३] आहरणशीलस्येन्द्रस्य यजमानः विशः ऋत्विजः प्रकर्षेण व्याप्नोति, ततोऽसाविन्द्रस्तस्य यज्ञे[१४] गन्तुं विस्तीर्णम् अवकाशं क्रमते यज्ञेषु यष्टव्यः ॥ १ ॥

---

१. नास्ति मूको. २. अनिरुक्तानि प्राजापत्यानि मूको. ३. °न्यव° मूको. ४-४. नास्ति मूको. ५. °नेदिष्ठान् अ. ६. नास्ति अ. ७. गृह° मूको. ८. प्रतिश° अ. ९. किं अ. १०. लेटि कु. ११. प्रवृद्धाः वि[२] अ[१]. १२. स्तुतिः वि[१] लपं. १३. कामान् वि[२] अ[२]. १४. यज्ञेषु वि[२] अ[२].

**मुद्गल०** अष्टादशेऽनुवाके षट् सूक्तानि। तत्र 'कदित्था' इति पञ्चदशर्चं प्रथमं सूक्तम्[१]। कक्षीवान् ऋषिः[१]। त्रिष्टुप् छन्दः[१]। विश्वे देवा इन्द्रो वा[२] देवता[१]॥

नून् स्तुतेर्नेतॄणां पुरुषाणाम् पात्रम् रक्षणशील इन्द्रः तुरण्यन् गोरूपधनं प्रेरयन् देवयताम् देवं द्योतमानम् इन्द्रम् आत्मन इच्छताम् अङ्गिरसाम् ऋषीणाम् अस्माकम् इत्था इत्थं प्रयुज्यमानाः गिरः स्तुतीः कत् कदा कस्मिन् काले श्रवत् शृणुयात्। यत् यदा स इन्द्रः हर्म्यस्य हर्म्योपलक्षितेन गृहेण युक्तस्य यजमानस्य सम्बन्धिनः विशः ऋत्विग्लक्षण-मनुष्यान् आ आभिमुख्येन प्र आनट् प्राप्नोति। तदानीम् अध्वरे अस्मदीये यज्ञे यजत्रः यष्टव्यः सन् उरु बहुलम् क्रंसते क्रमते। स्वयमेवोत्सहत इत्यर्थः॥ १॥

**स्तम्भी॑द्ध॒ द्यां स ध॒रुणं॑ प्रुषायदृ॒भुर्वाजा॑य॒ द्रवि॑णं॒ नरो॒ गोः।**
**अनु॑ स्व॒जां म॑हि॒षश्च॑क्षत॒ व्रां मेना॒मश्व॑स्य॒ परि॑ मा॒तरं॒ गोः॥ २॥**

स्तम्भी॑त्। ह॒। द्याम्। सः। ध॒रुण॑म्। प्रु॒षा॒य॒त्। ऋ॒भुः। वाजा॑य। द्रवि॑णम्। नरः॑। गोः। अनु॑। स्व॒ऽजाम्। म॒हि॒षः। च॒क्ष॒त॒। व्राम्। मेना॑म्। अश्व॑स्य। परि॑। मा॒तर॑म्। गोः॥ २॥

**स्कन्द०** स्तम्भीत्[२] स्तम्भिः प्रतिबन्धार्थः[३]। तैस्तैरुपकारैः प्रतिबद्धवान्। ह इति पदपूरणः। द्याम् दिवम्। सः प्रकृत इन्द्रः। किञ्च धरुणम् उदकम् प्रुषायत् क्षारयति मेघात्[४]। ऋभुः मेधाविनामैतत् (तु. निघ ३,१५)। मेधावी। वाजाय अन्नाय सत्यलक्षणाय। द्रविणम् धनभूतम्। नरः मनुष्याकारः। कस्य धनभूतम्। उच्यते। गोः माध्यमिकाया वाचः। किञ्च स्वजाम् स्वत एव प्रजापतेर्या जाता सा स्वजा ताम्। महिषः महानिन्द्रः। अनु चक्षत परि-शब्दोऽप्यपकृष्यैतेनैव सम्बन्धयितव्यः। आनुपूर्व्येण सर्वतः पश्यति। जानातीत्यर्थः। व्राम् वरणीयाम् मेनाम् स्त्रियम्। भार्यामित्यर्थः। अश्वस्य अशू व्याप्तौ। व्याप्तुः प्रजापतेः। मातरम् मातृभूताम्। गोः गन्तृत्वादिन्द्रोऽत्र गौरुच्यते। आत्मन एवेत्यर्थः। अथवा व्रा इति रात्रिनाम। उक्तं हि शाकपूणिना रात्रिरपि व्रा उच्यत इति। स्वजा चासौ स्वयमेव जायमानत्वात्[५]। स्वयं जनित्रीं[६] महानिन्द्रो जानाति रात्रिं नाम स्त्रियम् अश्वस्य मातरम्। अश्वग्रहणमत्रोपलक्षणार्थम्। अश्वादेः प्राणिमात्रस्य सम्यगाहारपरिणामादिकरेण मातृभूताम्[१]। गोः उषसश्च॥ २॥

**वेङ्कट०** द्याम् तस्तम्भ। उदकञ्च सः वर्षार्थं[७] रश्मिभिर्दहति, महान् 'हविषः इन्द्रवत् स्तोतुः[८] भवति नेता गोः उदकस्य रश्मेर्वा। स्वजाताम् उषसम् महान् अनुपश्यति। व्रा इत्युषोनाम शाकपूणिपठितम्। अश्वस्य निर्मात्रीं जनयित्रीम् उषसम् स्त्रियं[९] रश्मेः मातरम् पर्यकरोत्[१०]॥२॥

**मुद्गल०** सः इन्द्रः द्याम् द्युलोकम् स्तम्भीत् ह स्तभ्नाति खलु। तथा गोः पणिभिरपहृतस्य गोसमूहस्य नरः नेता स इन्द्रः ऋभुः सूर्यात्मना विस्तीर्णं भासमानः सन् द्रविणम् सर्वैः प्राणिभिरभिद्रवणीयम् धरुणम् उदकनामैतत् (तु. निघ १,१२)। सर्वस्य धारकं वृष्ट्युदकम् वाजाय अन्नार्थम् प्रुषायत् प्रुष्णाति सिञ्चति। प्रवर्षतीत्यर्थः। अपि च महिषः महान् सूर्यरूपीन्द्रः स्वजाम् स्वसकाशात्

---

१. नास्ति मै[२]. २. नास्ति मूको. ३. °बन्धनार्थ अ. ४. मेघान् मूको. ५. नास्ति अ. ६. जनयित्री मूको. ७. पुरुषार्थम् वि[१] अ[२]. ८-८. हविषेन्द्रवत् वि[१,३] अ[१,२] कु. ९ नास्ति वि[१] लपं. १०. पर्यावरोत् वि[३] अ[२].

उत्पन्नाम् त्वाम् रात्रिम् अनु चक्षत अनु पश्चात् पश्यति प्रकाशते। स्वयं प्रौढप्रकाशोऽपि स्वगत्या निष्पादिताया रात्रेरुषसश्च पश्चाद् उदेतीत्यर्थः। अपि चेदमपरम् आश्चर्यं[1] यदयम् अश्वस्य मेनाम् स्त्रीनामैतत् (तु. या ३,२१)। तत्स्त्रियं वडवाम् गोः मातरम् जननीम् परिवैपरीत्ये, विपरीतमकरोत्। कदाचिद् इन्द्रो लीलया अश्वायां गाम् उत्पादयामास। तदत्र प्रतिपाद्यते ॥ २ ॥

नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून्।
तक्षद् वज्रं नियुतं तस्तम्भद् द्यां चतुष्पदे नर्याय द्विपादे ॥ ३ ॥

नक्षत्। हवम्। अरुणीः। पूर्व्यम्। राट्। तुरः। विशाम्। अङ्गिरसाम्। अनु। द्यून्।
तक्षत्। वज्रम्। निऽयुतम्। तस्तम्भत्। द्याम्। चतुःऽपदे। नर्याय। द्विऽपादे ॥ ३ ॥

**स्कन्द०** नक्षत्[2] दक्ष स्तृक्ष नक्ष गतौ। गच्छतीन्द्रः। हवम् आह्वानं प्रति। कदा। उच्यते। यदा अरुणीः अरुणवर्णोषाः। पूर्व्यम् पूर्वं प्रथमम्। राट् आख्यातमेतत्। छान्दसत्वात्तु निघाताभावः। [3]राजते दीप्यते[3]। उषसि उदितमात्रायामित्यर्थः। तुरः त्वरिता तुर्विता वा शत्रूणाम्। कस्य हवम्। उच्यते। विशाम् मनुष्याणाम् अङ्गिरसामृषीणां तदपत्यभूतानां वा अस्माकम्। [4]अनु द्यून् अनुशब्दोऽत्र[4] 'लक्षणेत्थंभूताख्यानभागवीप्सासु'' (पा १,४,९०) इत्येवं वीप्सायां कर्मप्रवचनीयः। 'द्युः' (निघ १,९) इत्यह्नो नामधेयम्। अहान्यहानीत्यर्थः। किञ्च तक्षत् तक्षतिः करोतिकर्मा (तु. या ४,१९)। शुद्धोऽपि सोपसर्गो द्रष्टव्यः। संस्करोति वज्रम्। कीदृशम्। उच्यते। नियुतम् निशब्दोऽत्र प्रकर्षे, निरुक्तं निरुक्तमिति यथा। प्रकर्षेण शत्रुभिः सहात्मनो मिश्रयितारम्। शत्रुशरीरेषु प्रवेष्टारमित्यर्थः। तस्तम्भत् तुल्यत्वेऽपि [4]संहितायाः तक्षदित्यनेन लेडन्तेन[4] समुच्चारणादिदमपि[5] पदकारेण तस्तम्भदिति लेडन्तं परिगृहीतं न लिडन्तं तस्तम्भेति। अत्यर्थं स्तभ्नाति[6] तैस्तैरुपायैः द्याम् दिवम्। कस्यार्थाय सर्वमेतत् करोति। [3]उच्यते। चतुष्पदे[3] नर्याय द्विपादे नरेषु भवन्नर्यम्। मनुष्येषु भवं यच्च चतुष्पात् यच्च द्विपात् तस्य सर्वस्यार्थाय ॥ ३ ॥

**वेङ्कट०** उषसः राजयन्[7] मुख्यम् स्तोत्रं व्याप्नोति क्षिप्रः अङ्गिरसाम् विशाम्[8] स्वभूतम् दिवसेषु। करोति च वज्रम् नितरां पृथग् भावयितारम्। तथा मनुष्यहिताय गवादिकाय द्याम् उपरि अस्तभ्नात् द्विपदे च यथासुखम् स्थातुम् ॥ ३ ॥

**मुद्गल०** अरुणीः अरुणवर्णा उषसः राट् राजयन् प्रकाशयन् सूर्यात्मा इन्द्रः पूर्व्यम् पूर्वैर्ऋषिभिः प्रयुक्तम् हवम् इदानीम् अस्माभिः क्रियमाणमाह्वानम् नक्षत् नक्षतु शृणोतु। कीदृशः। अनु द्यून् अनुदिवसम् विशाम् मनुष्याणाम् अङ्गिरसाम् ऋषीणां स्तोतॄणाम् तुरः धनस्य प्रेरयिता। अपि च। स इन्द्रः वज्रम् स्वकीयम् आयुधम् नियुतम् नितरां युक्तम् तक्षत् अकरोत्। तथा द्याम् द्युलोकम् तस्तम्भत् अस्तम्भयच्च। यथा अधो न पतति तथाऽकरोदित्यर्थः। किमर्थम्। नर्याय नृभ्यो हिताय चतुष्पदे गवाश्वादये द्विपादे मनुष्याय च। एतदुभयार्थमित्यर्थः ॥ ३ ॥

---

१. आश्रयं मूको. २. नास्ति कु. ३-३. नास्ति अ. ४-४. संहितायास्तेन अ. ५. समुच्चर° कु.
६. स्तभ्नोति अ. ७. राजा यद् ळ वि[1]; राजन् वि[1] अ[2]. ८. नास्ति वि[3] अ[2].

अस्य मदे॑ स्व॒र्यं॑ दा ऋ॒तायापी॑वृतमु॒स्रिया॑णा॒मनी॑कम् ।
यद्ध॑ प्र॒सर्गे॑ त्रि॒ककु॒म्निवर्त॒दप॒ द्रुहो॒ मानु॑षस्य॒ दुरो॑ वः ॥ ४ ॥

अ॒स्य । मदे॑ । स्व॒र्य॑म् । दा॒ः । ऋ॒ताय॑ । अपि॑ऽवृतम् । उ॒स्रिया॑णाम् । अनी॑कम् ।
यत् । ह॒ । प्र॒ऽसर्गे॑ । त्रि॒ऽक॒कुप् । नि॒ऽवर्त॑त् । अप॑ । द्रुहः॑ । मानु॑षस्य । दुरः॑ । व॒रिति॑ वः ॥४॥

**स्कन्द०** अस्येत्ययं मदसम्बन्धात् सोमस्य प्रतिनिर्देशः । अस्य सोमस्य मदे "यस्य च भावेन"[१] (पा २,३,३७) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतक्रियाध्याहारः । मदे प्राप्ते । एतेन सोमेन मत्तस्सन्नित्यर्थः । स्वर्यम् स्वृ शब्दोपतापयोः । शब्दकारि । दाः व्यत्ययेनात्र मध्यमः यष्ट्रे ददातीन्द्रः । ऋताय यज्ञार्थम् । अपीवृतम् घटितम् । स्वगोष्ठे द्वारं निरुध्य स्थापितमित्यर्थः[२] । उस्रियाणाम् गवाम् अनीकम् समूहम् । कदा । यत् यदा । ह-शब्दस्तु पदपूरणः । प्रसर्गे प्रसृज्यते यस्मिन् 'स प्रसर्गो' दानकालः, तस्मिन् । त्रिककुप् त्रीणि अभिजनं शौर्यं यशश्च ककुभः सदृशानि समुच्छ्रितानि यस्य स त्रिककुप् । निवर्तत् यष्टारं प्रति निवर्तते । दानार्थं यष्टुरभिमुखो भवतीत्यर्थः । किञ्च द्रुहः द्रोग्धुर्मेघस्य[३] । कस्य द्रोग्धुः । उच्यते । मानुषस्य मनुष्यजातस्य सर्वस्य । मेघो ह्युदकं निरुन्धन् सर्वं मनुष्यजातं द्रोग्धि । तस्य दुरः द्वाराणि उदकनिर्गमनद्वाराणि अप वः अपावृणोति ॥ ४ ॥

**वेङ्कट०** अस्य साम्नाय्यस्य मदे स्वरणकुशलं[४] शब्दायन्ते हि गावः वत्सदर्शने स्वर्यम् [५]दाः परिवृत्तम्[५] गवाम् अनीकम् । यदि हि मानुषस्य उद्योगे[६] युद्धप्रारम्भे त्रिषु अभिजनविद्याशौर्येषु त्रिषु वा लोकेषु उच्छ्रितः[७] इन्द्रो निवर्तते ततोस्मै द्रोग्धॄणि द्वाराणि अपवृणोति[८] ॥ ४ ॥

**मुद्गल०** हे इन्द्र! अस्य सोमस्य पानेन मदे हर्षे सति ऋताय यज्ञार्थम् स्वर्यम् स्तुत्यम् अपीवृतम् पणिभिर्गुहासु निगूढम् उस्रियाणाम् गवाम् अनीकम् सङ्घम् दाः अङ्गिरोभ्यो दत्तवानसि । उत्तरोऽर्धर्चः परोक्षकृतः । यत् ह यदा खलु प्रसर्गे युद्धे त्रिककुप् त्रिषु लोकेषू-च्छ्रित इन्द्रः निवर्तत् नितरां वर्तेत । तदानीं स इन्द्रः द्रुहः दोग्धुः मानुषस्य मनोः सम्बन्धिनोऽसुरस्य पणेः सम्बन्धीनि दुरः द्वाराणि गवामनिर्गमनाय पिहितानि अप वः अपवृणोति उद्घाटयति ॥ ४ ॥

तुभ्यं॒ पयो॒ यत् पि॒तरा॒वनी॑तां॒ राधः॑ सु॒रेत॑स्तु॒रणे॑ भुर॒ण्यू ।
शुचि॒ यत् ते॒ रेक्ण॒ आय॑जन्त सब॒र्दुघा॑या॒ः पय॑ उ॒स्रिया॑याः ॥ ५ ॥

तुभ्य॑म् । पयः॑ । यत् । पि॒तरौ॑ । अनी॑ताम् । राधः॑ । सु॒ऽरेत॑ः । तु॒रणे॑ । भु॒र॒ण्यू इति॑ ।
शुचि॑ । यत् । ते॒ । रेक्णः॑ । आ । अय॑जन्त । स॒ब॒ःऽदुघा॑याः । पयः॑ । उ॒स्रिया॑याः ॥५॥

---

१-१. नास्ति अ. २. स्थपित° कु. ३. दोग्धुः अ. ४. स्वकरण° ल वि[१]; स्वरकरण° ल शोधः. ५-५. दाहपरिव्रतम् वि[२] अ[२]. ६. उद्योगेषु कु. ७. स्थितः वि[२] अ[२]. ८. अववृणोति वि[१,२] अ[२].

**स्कन्द०** तुभ्यम् इति तादर्थ्ये चतुर्थी। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। तवार्थाय तत् पयः उदकम्। त्वं वर्षसीत्येवमर्थं[1] तदुदकमित्यर्थः। यत् कतमत्। उच्यते। यत् पितरौ सर्वस्य पितृभूते द्यावापृथिव्यौ अनीताम् आदित्यं[2] प्रति नीतवत्यौ। यच्च द्यावापृथिवीभ्यामाहृत्य रश्मयो नीतवन्तः तद्धेतुत्वप्रतिपत्त्या द्यावापृथिव्यावेव नीतवत्यावित्युच्यते। राधः धनभूतं सर्वस्य। सुरेतः शोभनमुदकम्। पय इत्यनेन चोदकत्वमुक्तम्[3]। सुरेत इत्यनेन तु तस्य शोभनत्वमुच्यत इति नास्ति पौनरुक्त्यम्। किंरूपाय तुभ्यम्[4]। उच्यते। तुरणे त्वरणाय तुर्वित्रे वा शत्रूणाम्। किंरूपे द्यावापृथिव्यौ। भुरण्यू क्षिप्रे[5]। न च केवलमुदकम्। किं तर्हि। शुचि शुद्धम् यत् ते[5] रेक्णः[6] धनभूतम्। आ अयजन्त आभिमुख्येन दत्तवन्तः। कृतवन्त इत्यर्थः। के। सामर्थ्यात् प्रजापतिप्रभृतयः सर्वे देवाः। सबर्दुघायाः सबः[7] अमृतमुच्यते। अमृतमयं दोग्ध्र्याः पयः क्षीरम् उस्रियायाः गोः। तदपि तुभ्यं तव पानार्थमित्यर्थः। अथवैवमन्यथा अस्या ऋचोऽर्थयोजना। [7]तुभ्यं पय इत्यत्र[7] दध्युच्यते। पितरावपि स्वेषामपत्यानां पितृत्वात् पालयितृत्वाद्वा दंपती यजमानौ। अनीतामित्यपि लडर्थे लङ्। दर्शपूर्णमासयोर्यद्दधि यजमानौ वेदिं[8] प्रति नयतः तवार्थाय। यच्च धनं पुरोडाशाख्यम्। सुरेतः शोभनं प्रणीतालक्षणं संस्कारकमुदकं यस्य तत् सुरेतः। यच्च ते तुभ्यमायजन्त मर्यादया ददति ऋत्विजः पयः [9]उस्रियायाः स्वभूतं[9] तदपि तवैवार्थाय। शिष्टपदयोजना सदृशी॥ ५॥

**वेङ्कट०** त्वदर्थम् [8]आत्मीयं सारं[8] यदा द्यावापृथिवी नयतः [9]शोभनवर्षादिरेतस्कं[9] धनं क्षिप्रकारिणे तुभ्यम् भरणशीले। यदा च तद् गोषु पयोरूपेण परिणतं यजमाना [10]अमृतदुघायाः उस्रियायाः[10] गोः पयोलक्षणम् शुचि धनं तदा आ अयजन्त†[11] प्रायच्छन् अस्य सान्नाय्यस्य मद इति[12]॥ ५॥

**मुद्गल०** हे इन्द्र! तुरणे क्षिप्रकारिणे तुभ्यम् भुरण्यू कृत्स्नं जगत् पोषयन्त्यौ पितरौ उत्पादयन्त्यौ द्यावापृथिव्यौ यत् यदा पयः सान्नाय्यलक्षणं हविः अनीताम् गोष्वनयताम्। न्यधिषातामित्यर्थः। हविषः कारणाद्धि जगदुत्पद्यते। यत् यदा द्यावापृथिवीभ्यां गोष्वानीतम् शुचि शुद्धम् सबर्दुघायाः क्षीरस्य दोग्ध्र्या उस्रियायाः गोः पयः। कीदृशं पयः। राधः गोधनम् सुरेतः सुष्ठु रेतसा उदकेन गोरूधसि उत्पन्नम् रेक्णः धनवदतिप्रियम्। एवंविधं हविः ते तुभ्यम् आ अजयन्त आभिमुख्येन यजमानाः प्रायच्छन्। तदानीं [13]द्रुहो मानुषस्य दुरो द्वाराणि[13] अपवृणोतीति पूर्वया सम्बन्धः॥ ५॥

इति प्रथमाष्टके अष्टमाध्याये चतुर्विंशो वर्गः॥

**अध॒ प्र ज॑ज्ञे त॒रणि॑र्ममत्तु॒ प्र रो॑च्य॒स्या उ॒षसो॒ न सूरः॑।**
**इन्दु॒र्येभि॒राष्ट॒ स्वेदु॑हव्यैः स्रु॒वेण॑ सि॒ञ्चञ्ज॒रणा॒भि धाम॑॥ ६॥**

अध॑। प्र। ज॒ज्ञे॒। त॒रणि॑ः। म॒म॒त्तु॒। प्र। रो॒चि॒। अ॒स्याः। उ॒षस॑ः। न। सूर॑ः।
इन्दु॑ः। येभि॑ः। आष्ट॑। स्वऽइ॑दुहव्यैः। स्रु॒वेण॑। सि॒ञ्चन्। ज॒रणा॑। अ॒भि। धाम॑॥ ६॥

---

१. वर्षती° मूको· २. दित्यं कु. ३. °दकमु° अ. ४. मह्यम् अ. ५. नास्ति अ. ६. ···ण अ. ७-७. नास्ति अ. ८-८. आत्मीयसारं वि[1] अ[2]. ९-९. °वषर्णादि° कु; °वर्षादिशीतस्तम् वि[1] अ[2]. १०-१० °त दुखाखदुस्रियाय वि[1] अ[2] ११-११ नास्ति वि[1] अ[2]. †आयच्छन्त वि[1]; आयजन्तं लपं १२. नास्ति कु. १३-१३ दुरो मानुषस्य द्वा° मूको.

स्कन्द० अथ-शब्दोऽत्र पदपूरणः। एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। यो वृत्रवधादिषु [1]प्र जज्ञे तरणिः यशसा[1] शौर्येण च परिवृद्धोऽभूत्। यश्च प्रकर्षेण अमाद्यत्। अथवा तच्छब्द-मध्याहृत्य स्वार्थे एवायं योज्यो लोट् प्रत्ययः। ममत्तु तृप्यत्विति[2]। यश्च प्र रोचि प्रकर्षेण दीप्यते। [3]अस्याः उषसः न सूरः[3] नशब्दोऽत्र पुरस्तादुपचारोऽप्युपमास्थानीयः। यथायमस्याः उषसः सम्बन्धी सूर्यः, तद्वत्। सूर्यस्योषसः पुत्रत्वेन सम्बन्धः 'रुशद्वत्सा रुशती' (ऋ १, ११३, २) इत्यत्रोक्तः[3]। न च [4]केवल एवंविध एव[4]। किं तर्हि। इन्दुः सोमः। येभिः यैः आष्ट व्याप्तिकर्मायम् (तु. निघ २,१८)। देवैः सह प्राप्तः[5]। स्वेदुहव्यैः स्वेन्दुहव्यैः। नकारलोपश्छान्दसः। स्वा इन्दुहव्या येषां ते स्वेन्दुहव्याः। स्वैः सोमैः देवानां यष्टारः। के पुनस्ते। इन्द्रस्य सखायोऽङ्गिरसः। तैः स्वेन्दुहव्यैः। स्रुवेण स्रुवसदृशेन ग्रहचमसादिना पात्रेण। सिञ्चन् व्यत्ययेनायं कर्मणि शतृप्रत्ययः। सिच्यमानः। अभि धाम स्थानं तेजो वा आहवनीयाख्यं प्रति। आहवनीये हूयमानः[6] इत्यर्थः। न च केवलः[7] इन्दुः। किं तर्हि। जरणा स्तुतिश्च। यो यैर्देवैस्सह 'सोमं पिबति' स्तूयते चेत्यर्थः। यच्छब्दश्रुतेः साकाङ्क्षत्वाच्च तैः स्वसखैरङ्गिरोभिः[8] सह तृप्यत्विति वाक्यशेषः ॥ ६ ॥

वेङ्कट० अथ प्रादुरभूत् सः तरणिः। अस्मान्[9] ममत्तु। सः[10] अस्याः उषसः सूर्यः इव तेजसा[11] प्रकर्षेण दीप्यते सोमः। यैः पीतः स्वभूतसमिद्धहव्यैः[12] सखिभिः यजमानैः ग्रहचमसादिना[13] स्रुवेण[14] साधनेन स्तुत्या सह आहवनीयाख्ये स्थाने[15] सिच्यमानः तान् ममत्त्विति[16] ॥ ६ ॥

मुद्गल० अथ इदानीम् अयम् इन्द्रः स्तुतिभिः प्रीयमाणः सन् प्र जज्ञे प्रकर्षेण प्रादुर्बभूव। सः तरणिः शत्रुभ्यस्तारकोऽस्मान् ममत्तु मादयतु। स च प्र रोचि प्रकृष्टं रोचते। दृष्टान्तः। अस्याः अस्माभिर्दृश्यमानायाः उषसः समीपे वर्तमानः सूरः न सूर्य इव जरणा जरणीयः स्तोतव्यः इन्दुः सोमः धाम आहवनीयलक्षणं स्थानमभिलक्ष्य स्रुवेण सिञ्चन् सिच्यमानः सन् स्वेदुहव्यैः स्वभूतसमृद्धहविष्कैः[17] येभिः यैरस्माभिः आष्ट आश्रितः आसीत्। तान् अस्मान् मादयत्वित्यर्थः ॥ ६ ॥

स्विध्मा यद् वनधितिरपस्यात् सूरो अध्वरे परि रोधना गोः।
यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ॥ ७ ॥

सुऽइध्मा। यत्। वनऽधितिः। अपस्यात्। सूरः। अध्वरे। परि। रोधना। गोः।
यत्। ह। प्रऽभासि। कृत्व्यान्। अनु। द्यून्। अनर्विशे। पशुऽइषे। तुराय ॥ ७ ॥

स्कन्द० [18]स्विध्मा यत्[18] यदा सुष्ठु इद्धा दीप्ता। सुनिशितेत्यर्थः। वनधितिः वनशब्दोऽत्र 'नहि मे अस्त्यघ्न्या' (ऋ ८,१०२,१९) इति दर्शनात् तीक्ष्णवचनः। धितिशब्दः स्वधितिपर्यायः। तीक्ष्णस्वधितिः।

१-१. नास्ति अ. २. तृप्यत्वि° कु. ३. °क्तम् मूको. ४-४. °लमेवंविधमेव मूको. ५ प्राप्तम् मूको. ६. °मानम् अ. ७. °वलम् अ. ८. सखै° अ. ९. अस्माद् अ[1] कु. १०. सः असा वि[3] अ[1] कु. ११. तेजसां वि[3] अ[1]. १२. स्वभूतः समिद्ध[2] अ[1] कु; °द्धव्यैः वि[3] अ[2]. १३. दिनां वि[3] अ[3]. १४. नास्ति वि[3] अ[2]. १५. °ने तान् वि[3] अ[2]. १६. ममत्तु कु. १७. °विष्कैः मूको. १८-१८. नास्ति मूको.

अपस्यात् अपः कर्म विशसनाख्यम्, तत् कर्तुमिच्छति । पशुं विशसतीत्यर्थः । सूरः षष्ठ्यर्थे प्रथमा । सूर्यस्य सम्बन्धिनि अध्वरे यज्ञे । उदिते ह्यादित्ये यज्ञः क्रियत इत्ययं सूर्यस्य यज्ञेन सम्बन्धः । परि रोधना सर्वतो निरोध्री । मारयित्रीत्यर्थः । गोः गोग्रहणमन्त्रोपलक्षणार्थम्[1] । गवादेः पशोः । यत् ह हशब्दश्चार्थे । यदा च प्रभासि भा दीप्तावन्यत्रेह तु गत्यर्थः । यज्ञं प्रति गच्छसि । 'क्रत्वी' ( निघ २,१ ) इति कर्मनाम । क्रत्व्यान् यागकर्मार्हान् प्रति । द्यून् दिवसान् । यागदिवसानित्यर्थः । कस्यार्थाय । उच्यते । अनर्विशे पश्विषे तुराय ऋ गतौ । अगता विशो यस्य सोऽनर्विट्[2] । कोऽसौ । यस्य मित्रादयो वा मनुष्या यष्टृत्वान्नरकं [3]न गताः[3] परिचारका वा सर्वे । पशून् य इच्छति स पश्विट् । देवान् परिचरितुं यस्त्वरते स तुरः । सर्वत्र च तादर्थ्ये चतुर्थी । अगतमनुष्यस्य[4] पशुकामस्य त्वरमाणस्य[5] च यजमानस्यार्थाय । यज्ञमस्याविघ्नेन समापयितुमित्यर्थः । यदेति श्रुतेस्तदेत्यध्याहृत्य परयचैकवाक्यता ॥ ७ ॥

**वेङ्कट०** यथा पशुविशसनाय तीक्ष्णां स्वधितिम् अपश्यन् [6]यज्ञे न† पशुं[6] [7]बध्नाति एवम् अनुदिते त्वयि न[7] प्रवर्तते[8] इति समुदायार्थः । सुष्ठु दीप्ता यदि तीक्ष्णधारा स्वधितिः पशुविशसनार्थं कर्म कर्तुम् इच्छति । अथ प्राज्ञः अध्वर्युः यज्ञे गोः परि रोधनायै[9] भवति यदि कर्मयोग्येषु दिवसेषु त्वं प्रभासि अनसा यः कार्येषु विशति यो वा पशुम् इच्छति क्षिप्रकारी तयोः कार्यकरणाय भासि चेद् यज्ञे पशुं बध्नाति इति[10] ॥ ७ ॥

**मुद्गल०** यत् यदि स्विध्मा सुदीप्तास्या वनधितिः वने छेत्तव्ये वृक्षसमूहे निधातव्या शस्त्री अपस्यात् अपः विशसनात्मकं स्वकीयं कर्म कर्तुम् इच्छेत्, तदानीम् सूरः प्रेरकोऽध्वर्युः अध्वरे यज्ञे गोः पशोः रोधना रोधनाय यूपे नियोजनाय परि भवति समर्थो भवति । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे इन्द्र ! सूर्यात्मना वर्तमानस्त्वम् क्रत्व्यान् 'क्रत्वी' ( निघ २, १ ) इति कर्मनाम । कर्मसु साधून् द्यून् दिवसान् अनुलक्ष्य यत् ह यदा खलु प्रभासि प्रकर्षेण दीप्यसे । तदानीम् अनर्विशे अनसा शकटेन इन्धनाद्याहरणाय अरण्यं प्रविशते तथा गन्तव्यं स्थलं प्रति गन्तुमशक्याय पुरुषाय पश्विषे पशून् प्रेरयते तुराय त्वरमाणाय गोपालाय च सिध्येदभिमतमिति वाक्यशेषः ॥ ७ ॥

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सम् ।
हरिं यत् ते मन्दिनं दुक्षन् वृधे गोरभसमद्रिभिर्वाताप्यम् ॥ ८ ॥

अष्टा । महः । दिवः । आदः । हरी इति । इह । द्युम्नऽसहम् । अभि । योधानः । उत्सम् ।
हरिम् । यत् । ते । मन्दिनम् । धुक्षन् । वृधे । गोऽरभसम् । अद्रिऽभिः । वाताप्यम् ॥ ८ ॥

**स्कन्द०** अष्टा व्याप्ता । महः महतः दिवः द्युलोकस्य । आदः अभक्षयः । हरी इत्येतद् अभि योधान इत्येतेन सम्बन्धयितव्यः[11] । भक्षय । किम् । उच्यते । इह अस्मद्यज्ञे । द्युम्नासाहम् द्युम्नमन्नं मांसमण्डादि, तद्यत् स्वादुत्वेनाभिमतम्, यः तत्सर्वमेवाभिभवति स द्युम्नासाहः, तम् ।

---

१. °ग्रहणमुपल° अ. २. °र्वित् कु. ३-३. नागतः अ. ४. °स्य च अ. ५. त्वरण य मूको. ६-६. यज्ञपशुं वि[1] अ[2]. † नास्ति कु. ७-७. नास्ति वि[1] अ[2]. ८. प्रवर्तत वि[1] अ[1]. ९. °धनाय कु. १०. नास्ति कु. ११. समन्वयि° कु.

हरी अभि योधानः हरी इति तृतीयार्थे प्रथमा । हरिभ्यामभियोधन्[१] [२]उत्सम् मेघम्[२] । वर्षन्नित्यर्थः । कतमं सोमम् । उच्यते । हरिम् हरितवर्णम् यत् यम् ते तवार्थाय । मन्दिनम् स्तुतिमन्तं मोदयितारं वा । धुक्षन् दुग्धवन्तः ऋत्विजः । क्षरितवन्त इत्यर्थः । [२]वृधे वर्धनाय इन्द्रस्य[२] तवात्मनो वा । गोरभसम् गावः स्तुतयः आपो वा । 'रभसः' ( निघ ३,३ ) इति महन्नाम । तस्मात् 'तत् करोति'' ( पावा ३, १, २६ ) इति णिच् । ण्यन्तादच् । गावो रभसयिव्यो[३] यस्य स गोरभसः । गोभिरद्भिर्वा [४]महान् कृत[४] इत्यर्थः । तं गोरभसम् । केन धुक्षन् । उच्यते । अद्रिभिः अभिषवग्रावभिः । वाताप्यम् उदकरूपम् । अथवा वातः प्राणः, तस्याप्यायितारम् । प्राणकरमित्यर्थः ॥ ८ ॥

**वेङ्कट०** अन्नवर्धनम् उदकम् उद्दिश्य मेघं योधमानः महतः दीप्तस्य सोमस्य पाता स त्वम् अश्वौ[५] यजमाने पाययसि, यदा तव वर्धनाय[६] हरितवर्णं मदकरं प्राप्तवेगम् अभिषवग्रावभिः दुहन्ति पातव्यं सोमम् । 'वाताप्यम्' ( निघ ४,३ ) इति उदकनामेति[७] ॥ ८ ॥

**मुद्गल०** हे इन्द्र! महः महतः दिवः मदकरस्य सोमस्य अष्टा पातारौ हरी स्वकीयावश्वौ इह अस्मिन् कर्मणि आदः पीतशेषं सोमं पायय । तथा द्युम्नासाहम् द्युम्नस्यास्मदीयस्याभिभवितारम् उत्सम् उत्स्रावयितारं शत्रुम् योधानः योधनशीलस्त्वम् अभि भव । यत् यदा ते तव वृधे वर्तमानाय हरिम् मनोहरम् मन्दिनम् मदकरम् गोरभसम् अत्र गोशब्दः पयसि वर्तते । पयोबलं तद्वद्वेगवन्तम्[८] । वीर्यवन्तमित्यर्थः । वाताप्यम् वातेन प्राप्तव्यम् । वाततुल्येन शीघ्रकारिणा त्वया यातव्यमित्यर्थः । एवंविधं सोमम् अद्रिभिः ग्रावभिः धुक्षन् दुहन्ति ऋत्विजोऽभिषुण्वन्ति । तदानीम् अष्टेति पूर्वत्र सम्बन्धः ॥ ८ ॥

त्वमा॑य॒सं प्रति॑ वर्तयो॒ गोर्दि॒वो अश्मा॑न॒मुप॑नीत॒मृभ्वा॑ ।
कुत्सा॑य॒ यत्र॑ पुरुहूत व॒न्वञ्छुष्ण॑मन॒न्तैः प॑रि॒यासि॑ व॒धैः ॥ ९ ॥

त्वम् । आ॒य॒सम् । प्रति॑ । व॒र्त॒यः॒ । गोः । दि॒वः । अश्मा॑नम् । उप॑ऽनीतम् । ऋभ्वा॑ ।
कुत्सा॑य । यत्र॑ । पु॒रु॒ऽहू॒त॒ । व॒न्वन् । शुष्ण॑म् । अ॒न॒न्तैः । प॒रि॒ऽयासि॑ । व॒धैः ॥ ९ ॥

**स्कन्द०** त्वम् आयसम् लोहमयं वज्रम् । प्रति वर्तयः गमितवानसि । वक्त्रे प्रोतवानसीत्यर्थः[९] । कम्[१०] । उच्यते । गोः सर्वगताया अपि दिवः । अश्मानम् व्याप्तारं शुष्णं नामासुरम् उपनीतम् प्रापितम् । किम् । सामर्थ्याद्युद्धभूमिम् । ऋभ्वा 'ऋभुः' ( निघ ३,१५ ) इति मेधाविनाम । मेधाविना । केन । सामर्थ्यात्त्वयैव । कस्मिन् काले । उच्यते । कुत्साय कुत्सस्य ऋषेरर्थाय । यत्र[७] यस्मिन् काले । हे पुरुहूत ! बहुभिराहूत! वन्वन् याचमानः । यत् कुत्सस्याभिप्रेतं तत् प्रार्थयमान इत्यर्थः । शुष्णम् नाम असुरम् । अनन्तैः अत्यन्तबहुभिः । परियासि 'वियातः' ( निघ २, १९ ) इति वधकर्मसु पाठात् 'यया वज्रिवः परियास्यंहः' ( ऋ ६,३७,४ ) इति च दर्शनात् यातिरत्र वधार्थः हतवानासि । वधैः प्रहारैः ॥ ९ ॥

---

१. अरि° मूको. २-२. नास्ति अ. ३. रभयि° मूको. ४-४. महत् अ; महत्कृत कु. ५. अश्वेन कु ६. …य वि॑ अ॑. ७. °नाम कु. ८. तद्वेग॑ मै॑. ९. °वानित्यर्थः अ. १०. नास्ति अ.

**वेङ्कट०** त्वम् अयसा निर्मितं प्रेरितवान् असि गन्तुः[1] शुष्णस्य वधार्थं स्वर्गात् शिलासदृशं भूमिष्ठाय[2] तुभ्यं त्वष्टा प्रहितेन सुधन्वनः पुत्रेण [3]त्वष्टुः शिष्येण[3] ऋभ्वा उपनीतम्। यदा कुत्सप्रीत्यर्थं युद्धं भजन् तच्छत्रुं शुष्णासुरम् अपरिमितैः प्रहारैः परिहंसि ॥ ९ ॥

**मुद्गल०** हे इन्द्र! त्वम् गोः गन्तुः शुष्णस्यासुरस्य वधार्थम् आयसम् अयोमयं वज्रम् प्रति वर्तयः आभिमुख्येन व्यसृजः। कीदृशं वज्रम्। दिवः द्युलोकात् ऋभ्वा दीप्तेन त्वष्ट्रा उपनीतम् आनीतम् अश्मानम् शीघ्रं शत्रोर्व्यापकम्। यत्र यदा हे पुरुहूत! पुरुभिर्बहुभिः स्तोतृभिराहूतेन्द्र! कुत्साय एतत्संज्ञाय ऋषये शुष्णम् शोषकमसुरम् अनन्तैः निरवधिकैः वधैः हननसाधनैरायुधैः वन्वन् हिंसन् परियासि परितो गच्छसि। तदानीं तद्वधार्थं वज्रं प्रत्यावर्तयः इत्यर्थः ॥ ९ ॥

**पुरा यत् सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य ।**
**शुष्णस्य चित् परिहितं यदोजो दिवस्परि सुग्रथितं तदादः ॥ १० ॥**

पुरा। यत्। सूरः। तमसः। अपिऽइतेः। तम्। अद्रिऽवः। फलिऽगम्। हेतिम्। अस्य।
शुष्णस्य। चित्। परिऽहितम्। यत्। ओजः। दिवः। परि। सुऽग्रथितम्। तत्। आ। अदरित्यदः॥

**स्कन्द०** अत्रेतिहासमाचक्षते—'वृत्रः किल सूर्यनिरोधनसमर्थं महत्तमस्ततान। तं हत्वेन्द्रः तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाञ्चकार' इति। तदेतत् सव्येनोक्तम् 'वृत्रं यदीन्द्र शवसावधीः' (ऋ १,५१,४) इति। 'तत्र तमस्तन्वतो[4] [5]वृत्रस्य फलिगोऽपि[5] सहायो बभूव। तमपीन्द्रो जघान' इति। तदेतदिहोच्यते। यत् इत्येतस्य तम् इत्येतेन सामानाधिकरण्याद् व्यत्ययेन नपुंसकता। यच्छब्दश्रुतेश्च उक्तेतिहासार्थसंयुक्ततत्पदाध्याहारः[6]। यस्तमस्तन्वतो वृत्रस्य सहायो बभूव तं पुरा प्राक्। सूरः षष्ठ्यर्थे प्रथमा। सूर्यस्य सम्बन्धिनः। सूर्यनिरोधसमर्थस्येत्यर्थः। तमसः अपीतेः अपीत्येषोऽपेत्यस्य स्थाने। अपगतेः। यावत् तत्कृतं सूर्यनिरोधसमर्थं तमो नापगच्छति तावदित्यर्थः। हे अद्रिवः! वज्रोऽत्राद्रिविकारत्वादादरणाद्वा[7] अद्रिरुच्यते, तद्वन्![8] फलिगम् [9]नामासुरं प्रति। हेतिम् वज्रम्। अस्य भूते काले लोडयं द्रष्टव्यः। क्षिप्तवानसि। वज्रेण फलिगं[9] हतवानसीत्यर्थः। शुष्णस्य चित्[10] चिच्छब्दोऽत्र चार्थे। शुष्णनाम्नश्चासुरस्य परिहितम् सर्वतो निहितं यत् ओजः सेनालक्षणं बलम्। दिवः परि द्युलोकस्योपरि सुग्रथितम् युद्धयोग्येन सूचीमुखादिना व्यूहेन व्यवस्थापितम्। तत् आ अदः आदारितवान्। हतवानित्यर्थः। अथवैवमन्यथास्या ऋचोऽर्थयोजना। 'फलिगः' (निघ १,१०) इति मेघनाम। य उदकं निरुध्य स्थितः तं मेघं प्रति पुरा तत्कृतस्य सूर्यनिरोधसमर्थस्य तमसोऽपगतेः वज्रं क्षिप। शुष्णस्य च शोषयितुरादित्यस्य स्वभूतं रश्मिभिराहृतं[10] सर्वतो निहितं यदोजः 'ओजः' (निघ १,१२) इत्युदकनाम। उदकं सुग्रथितम्। तच्चादारयः ॥ १० ॥

**वेङ्कट०** पुरा यदा अयं सूर्यः तमसः सङ्ग्रामात्[11] मुक्तः अभूत्, [12]तदानीं तम् अस्य[12] सूर्यस्य[13]

---

१-१. गन्तुं वि[1] अ[2]. २. भूमिस्थाय वि[1,2] अ[1] कु लपं. ३-३. त्वष्टृशिष्येण वि[1] अ[2]. ४. तमस्यवतो मूको. ५-५. नास्ति अ. ६. °युक्तपदा° मूको. ७. °द्रिवाचकत्वादा° कु. ८. तद्वत् अ. ९. नास्ति अ. १०. °राहृतस्य मूको. ११. संगमनात् वि[1] अ[1] कु लपं. १२-१२. तदानींतनस्य कु; तदानीं तस्य वि[1] अ[2]. १३. सूरस्व वि[1] ल.

अद्रिवः![1] मेघम् आहन्तारम् आ अदः इति सम्बन्धः। तदेवोच्यते, शुष्णासुरस्य[2] सूर्यनिरोधार्थं[3] [4]परिहितम् मेघरूपं[4] यत् ओजः तत् आदित्यतः सुग्रथितम् आदरितवानिति[5] ॥ १० ॥

**मुद्गल०** पुरा यत् यदा सूरः सूर्यः तमसः तमोरूपस्य शुष्णस्यासुरस्य अपीतेः सङ्ग्रामात् मुक्तोऽभवदिति शेषः। तदानीं हे अद्रिवः! वज्रवन्निन्द्र! तम् फलिगम् मेघनामैतत् ( तु. निघ १, १० )। मेघरूपेण आवृण्वन्तम् हेतिम् हन्तारं शुष्णम् असुरम् अस्य निरसितवानसि। तथा शुष्णस्य चित् शोषयितुरसुरस्य च यत् ओजः आच्छादकं बलम् दिवः परि द्योतमानस्य सूर्यस्योपरि परिहितम् आच्छादितम् सुग्रथितम् सुष्ठु सूर्ये सक्तम् तत् ओजः तस्मात् सूर्यात् आ अदः आदृणाः। विश्लिष्टं कृतवानसीत्यर्थः ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये पञ्चविंशो वर्गः ॥

## अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिन्द्र कर्मन्।
## त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुम् ॥ ११ ॥

अनु। त्वा। मही इति। पाजसी इति। अचक्रे इति। द्यावाक्षामा। मदताम्। इन्द्र। कर्मन्। त्वम्। वृत्रम्। आऽशयानम्। सिरासु। महः। वज्रेण। सिस्वपः। वराहुम् ॥ ११ ॥

**स्कन्द०** [6]अन्विति मदतामित्येतेन सम्बध्यते। त्वा त्वाम् मही महत्यौ पाजसी बलवत्यौ[6] अचक्रे क्रमेरिदं रूपम्। अचङ्क्रमणे स्थिरे। द्यावाक्षामा क्षामा पृथिवीनाम ( तु. निघ १, १ ) इति। अनु मदताम् द्यावापृथिव्यौ मदिर्मोदनार्थः। अनुमोदितवत्यौ। हे इन्द्र! कर्मन् कर्मणि वृत्रवधाख्ये। वृत्रघ्नं तं त्वामनुज्ञातवत्यावित्यर्थः। अनुज्ञातश्च सः त्वम् वृत्रम् आशयानम् शेतिरत्र स्थानार्थः, आमाशयो जलाशय इति यथा। तिष्ठन्तम् सिरासु 'सीराः' ( निघ १, १३ ) इति नदीनाम। छान्दसं ह्रस्वत्वम्। नदीषु। नदीभिश्च तदीया आपो लक्ष्यन्ते। अन्तरिक्षे या नद्यः तदप्सु गूहितमित्यर्थः। तद्धिरण्यस्तूपेनोक्तम्[7] 'अतिष्ठन्तीनाम्' (ऋ १, ३२, १० ) इति। महः महांस्त्वम्। महता वज्रेण सिष्वपः आत्यन्तिकेन[8] मरणलक्षणेन स्वापेन स्वापितवान्। मारितवानित्यर्थः। वराहुम् वराहाकारम् ॥ ११ ॥

**वेङ्कट०** इन्द्र! त्वाम्[9] वृत्रवधे उद्युक्तम् महती[10] बलवती[11] चङ्क्रमणवर्जिते[12] द्यावापृथिवी[13] अन्वमदताम्। अथ त्वम् वृत्रम्[14] आभिमुख्येन शयानम् उदकस्य निर्गमनद्वारेषु [15]महता वज्रेण[15] निष्वापितवान्[16] असि वराहम्[17] ॥ ११ ॥

**मुद्गल०** हे इन्द्र! मही मह्यौ पाजसी बलवत्यौ अचक्रे अचङ्क्रमणे सर्वत्र व्याप्य वर्तमाने द्यावाक्षामा द्यावापृथिव्यौ कर्मन् वृत्रवधादिलक्षणे कर्मणि प्रवृत्तम् त्वा त्वाम् अनु मदताम् हृष्टमकुरुताम्।

---

१. दिवो वि[२] अ[२]. २. नास्ति अ[१]. ३. [°]निरोधनार्थं वि[२] अ[२]. ४-४. नास्ति अ[२]. ५. [°]वान् कु. ६-६. पातयेत्यर्थः अनु अ; नास्ति कु. ७. [°]हिरण्यस्तूपे अ. ८. भत्य[°] अ. ९. त्वा वि[१,२] अ[१,२] लपं. १०. महति कु. ११. नास्ति वि[१] लपं. १२. च क्रमण[°] वि[१] अ[१] ल लपं. १३. द्यावा भूमी अ[१] कु; [°]वी भूमी वि[२] अ[२]. १४. वृत्रवधम् कु. १५-१५. महावज्रेण वि[२,३] अ[१,२]. १६. निःस्वपितवान् कु. १७. वराहारम् वि[२] अ[१] कु; पराहारम् वि[२] अ[२].

तदनन्तरम् त्वम् आशयानम् आ समन्तात् व्याप्य वर्तमानम् वराहुम् वराहारम् वृत्रम् असुरम् सिरासु सरणशीलास्वप्सु महः महता वज्रेण सिष्वपः अस्वापयः। वज्रेण हत्वा पातितवानित्यर्थः ॥ ११ ॥

त्वमिन्द्र नर्यो याँ अवो नॄन् तिष्ठा वातस्य सुयुजो वहिष्ठान्।
यं ते काव्य उशना मन्दिनं दाद् वृत्रहणं पार्यं ततक्ष वज्रम् ॥ १२ ॥

त्वम्। इन्द्र। नर्यः। यान्। अवः। नॄन्। तिष्ठ। वातस्य। सुऽयुजः। वहिष्ठान्।
यम्। ते। काव्यः। उशना। मन्दिनम्। दात्। वृत्रऽहनम्। पार्यम्। ततक्ष। वज्रम् ॥ १२ ॥

**स्कन्द०** 'त्वम् हे इन्द्र'[1]! नर्यः नृभ्यो हितः नृषु वा साधुः। यान् अवः पालितवानसि नॄन् मनुष्यानस्मान्। यच्छब्दश्रुतेर्योग्यविभक्त्यर्थयुतस्तच्छब्दोऽध्याहर्तव्यः। तदर्थम् तिष्ठ आतिष्ठ। आरोहेत्यर्थः[2]। वातस्य षष्ठीश्रुतेरत्र सकाशादिति वाक्यशेषः, वहिष्ठान् इत्येतेन च सम्बन्धः। वातस्य सकाशाद्वोढृतमान्। सुयुजः सुखं ये युज्यन्ते, ते सुयुजः, तान्[3] आस्थाय च। यम् ते काव्यः इत्यादि। अत्रेतिहासमाचक्षते—'त्वष्टा इन्द्रार्थं वज्रं चकार' इति। तद्धिरण्यस्तूपेनोक्तम् 'त्वष्टाऽस्मै वज्रम्' (ऋ १,३२,२) इति। 'तं कृतमानीयेन्द्राय उशना ददौ' इति। [4]तदेतदिहोच्यते। †उशना दात् उशना त्वष्ट्रा कृतं सन्तमानीय दत्तवान्। †मन्दिनम् मदयितारम्†। वृत्रहणम् वृत्रस्य[4] हन्तारम्। पार्यम् पृ पालनपूरणयोः। पालयितारं स्तोतॄणाम्[5]। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः[4]। तम् ततक्ष तक्षतिः करोतिकर्मा। शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः। लोडर्थे लिट्। मध्यमपुरुषस्य स्थाने प्रथमपुरुषः। अस्मदीयशत्रुवधार्थं संस्कुरु। निश्येत्यर्थः। वज्रम्[2] ॥ १२ ॥

**वेङ्कट०** त्वम् इन्द्र! मनुष्यहितः यान् रक्षसि नेतॄन् अश्वान् तान् अभितिष्ठ वातसदृशवेगान्[6] सुष्ठु युज्यमानान्। यम् च ते कविपुत्रः उशना मदयितारम् अदात् तं [7]चादत्स्व काव्यः[7] इन्द्राय शत्रूणां हन्तारं युद्धपारगमनहेतुभूतम् अकरोत् वज्रम् इति[8] ॥ १२ ॥

**मुद्गल०** हे इन्द्र! नर्यः नृभ्यो हितः त्वम् यान् नॄन् नेतॄन् अश्वान् अवः अवसि रक्षसि तान् वातस्य तुल्यान् तद्वच्छीघ्रं गच्छतः सुयुजः शोभनं रथेन युज्यमानान् वहिष्ठान् अतिशयेन वोढॄनश्वान् तिष्ठ आतिष्ठ। आरोहेत्यर्थः। काव्यः कवेः पुत्रः उशना मन्दिनम् मदकरम् यम् वज्रम् ते तुभ्यम् दात् दत्तवान्। तं वज्रम् वृत्रहणम् वृत्रस्यासुरस्य घातकम् पार्यम् शत्रूणां पारणेऽतिक्रमणे समर्थञ्च ततक्ष कृतवानसि ॥ १२ ॥

त्वं सूरो हरितो रामयो नॄन् भरच्चक्रमेतशो नायमिन्द्र।
प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ॥ १३ ॥

---

१-१. नास्ति अ. २. नास्ति अ. ३. नात् मूको. ४-४. त्रुटितम् अ. †-† नास्ति मूको.
५. यच्छब्दात् तच्छ° अ. ६. °वेगवान् वि[१] अ[२]. ७-७. स्वकाय कु. ८. नास्ति कु.

त्वम् । सूरः । हरितः । रमयः । नॄन् । भरत् । चक्रम् । एतशः । न । अयम् । इन्द्र ।
प्रऽअस्य । पारम् । नवतिम् । नाव्यानाम् । अपि । कर्तम् । अवर्तयः । अयज्यून् ॥ १३ ॥

**स्कन्द०** [1]त्वम् सूरः[1] षष्ठ्यर्थे प्रथमा । सूर्यस्य स्वभूतान् हरितः हरितवर्णानश्वान् । रमयः रतिं कारितवान् । क्व । अस्यैव सूर्यस्य रथे । नॄन् चतुर्थ्यर्थे द्वितीया । नृभ्यः । मनुष्याणामनुग्रहार्थं सूर्याश्वान् रथे रतिं कारितवानित्यर्थः । किं कुर्वन् । उच्यते । भरत् बिभर्तेर्धारणार्थस्येदं रूपम् । असुरैर्भज्यमानं धारयन् । रक्षन्नित्यर्थः । चक्रम् सूर्यरथस्य । एतशः न द्वितीयार्थे प्रथमा । नशब्द उपमार्थत्वाभावात् पदपूरणः । अश्वं चासुरैरपह्रियमाणम् । तदेतत् सव्येन[2] नोधसा चोक्तम् 'त्वं रथमेतशम्' ( ऋ १,५४,६ ), 'प्रैतशं सूर्ये' ( ऋ १,६१,१५ ) इति । अयम् इन्द्रस्यायं प्रतिनिर्देशः । [1]अयं त्वं[1] हे इन्द्र ! किञ्च प्रास्य असु क्षेपणे । प्रक्षिप । पारम् अन्तम् । नवतिम् षष्ठ्यर्थेऽत्र द्वितीया । नवतेर्नदीनाम् । नाव्यानाम् नौभिस्तार्याणाम् । अगाधाऽऽपगानामित्यर्थः । कर्तम् गर्तम् । [1]अपि अवर्तयः[1] अपि इत्येष प्रेत्येतस्य स्थाने । प्रावर्तयः । कूपे प्रक्षिपेत्यर्थः । अयज्यून् अयजनशीलान् ॥ १३ ॥

**वेङ्कट०** त्वम् इन्द्र ! सूर्यस्य अश्वान् हरितः नेतॄन् उपारमयः[3] । एतशः[4] च[5] जयार्थम् अभरत् चक्रम् सूर्यरथस्य नैकशः[6] अयम्[7] इन्द्र ! बलेन त्वम् तदा आहृतवान् । अथ तस्य शत्रून् अयजमानान् नवतिसङ्ख्यकानाम् नदीनाम् पारम् प्रत्युत्क्षिप्य[8] तत्र तान् अवटम् अपि नीतवान् असि ॥ १३ ॥

**मुद्गल०** हे इन्द्र ! सूरः सूर्यात्मना वर्तमानः त्वम् हरितः हरिद्वर्णान् नॄन् नेतॄन् अश्वान् रमयः उपारमयः[9] । अयम् एतशो न एतश इति सूर्याश्वस्याख्या । नशब्दश्चार्थे । एतशश्च रथस्य चक्रम् भरत् प्रावहत् । अपि च त्वम् नाव्यानाम् नावा तार्याणां नदीनाम् नवतिम् नवतिसङ्ख्याम् अतीत्य वर्तमानम् पारम् तीरदेशम् । [10]सप्तम्यर्थे द्वितीया[10] । तीरदेशे । अयज्यून् अयजमानान् यज्ञविहीनान् असुरादीन् प्रास्य प्रक्षिप्य तत्र कर्तम् कर्तव्यम् अपि कृत्वा तान् अवर्तयः प्रापयः ॥ १३ ॥

**त्वं नो॑ अ॒स्या इ॑न्द्र दु॒र्हणा॑याः पा॒हि व॑ज्रिवो दुरि॒ताद॒भीके॑ ।**
**प्र नो॒ वाजा॑न्र॒थ्यो॒३॒॑ अश्व॑बुध्यानि॒षे य॑न्धि॒ श्रव॑से सू॒नृता॑यै ॥ १४ ॥**

त्वम् । नः । अस्याः । इन्द्र । दुःऽहनायाः । पाहि । वज्रिऽवः । दुःऽइतात् । अभीके ।
प्र । नः । वाजान् । रथ्यः । अश्वऽबुध्यान् । इषे । यन्धि । श्रवसे । सूनृतायै ॥ १४ ॥

**स्कन्द०** त्वम् नः अस्मान् अस्याः हे इन्द्र ! दुर्हणायाः क्लेशेन[11] या हन्ति सा दुर्हणा, तस्याः । कस्याः । स्त्रीलिङ्गनिर्देशाद् दुर्हणायाः । अस्माद् दुर्भिक्षादित्यर्थः । पाहि हे वज्रिवः ! वज्रो यस्मिन्नस्ति स वज्री आयुधसमूहः, तद्वन् ! । न च केवलाद् दुर्भिक्षात् । किं तर्हि । दुरितात् अपुण्याच्च । अभीके सङ्ग्रामे[12] [12]च । किञ्च[1] नः अस्मभ्यम् वाजान् बलानि सेनालक्षणानि । रथ्यः

---

१-१. नास्ति अ. २. सव्ये अ. ३. पारमयः वि[3] अ[2]. ४. एतशस्य वि[1] कु लपं; एतस्य वि[3] अ[2]. ५. नास्ति वि[1,3] अ[1,2] कु लपं. ६. नैतशः वि[1,3] अ[2] कु लपं. ७. यम् वि[3] अ[2] कु. ८. प्रक्षिप्य वि[3] अ[2]. ९. उपरमयः मूको. १०-१०. नास्ति मूको. ११. क्लेशं अ. १२-१२. °ग्रामात् अ.

[१]अश्वबुध्यान् अश्वानां बोधकान्[१] अन्नञ्च प्र यन्धि प्रयच्छ। श्रवसे श्रवः कीर्तिर्धनं वा। तच्च। वाचञ्च ॥ १४ ॥

**वेङ्कट०** त्वम् अस्मान् अस्याः सेनायाः दुर्भरणायाः[२] पाहि वज्रिन्! दुरितात् च। सङ्ग्रामे प्र यन्धि च अस्मभ्यं बलानि। रथ्यः त्वम् अश्वैः बोद्धव्यानि[३] अन्नाय यशसे च सत्याय अस्मान् प्रेरयेति[४] ॥ १४ ॥

**मुद्गल०** हे वज्रिवः! वज्रवन्! इन्द्र! त्वम् दुर्हणायाः दुःखेन हन्तव्यायाः अस्याः अवृत्तेर्दारिद्र्यात् नः अस्मान् पाहि रक्ष। तथा दुरितात् पापात् अभीके अभिप्राप्ते समीपवर्तिनि सङ्ग्रामे अस्मान् रक्ष। अपि च नः अस्मभ्यम् रथ्यः रथयुक्तान् अश्वबुध्यान् अश्वानां बोधकान्। अश्वा यावद्भिर्लभ्यन्ते तावदित्यर्थः। एवंविधान् वाजान् धनानि प्र यन्धि प्रयच्छ। किमर्थम्। इषे अन्नार्थम् श्रवसे कीर्त्यर्थम् सूनृतायै सूनृता प्रियसत्यात्मिका वाक्, तदर्थञ्च ॥ १४ ॥

मा सा ते॑ अ॒स्मत् सु॑म॒तिर्वि द॑स॒द्वाज॑प्रमहः॒ समिषो॑ वरन्त।
आ नो॑ भज मघव॒न् गोष्व॒र्यो मंहि॑ष्ठास्ते सध॒माद॑ः स्याम ॥ १५ ॥

मा। सा। ते॒। अ॒स्मत्। सु॒ऽम॒तिः। वि। द॒स॒त्। वाज॑ऽप्रमहः। सम्। इष॑ः। व॒र॒न्त॒।
आ। न॒ः। भ॒ज॒। म॒घ॒ऽव॒न्। गोषु॑। अ॒र्यः। मंहि॑ष्ठाः। ते॒। स॒ध॒ऽमाद॑ः। स्या॒म ॥ १५ ॥

**स्कन्द०** सा इति तच्छब्दश्रुतेरस्मत्सुमतिरित्येतेन सम्बद्धो यच्छब्दोऽध्याहर्तव्यः। अस्मत् इति सप्तम्यर्थे पञ्चमी। येयमस्मासु सुमतिः शोभनानुग्रहपरा बुद्धिः सा मा ते तव कदाचिदपि वि दसत्। अविच्छिन्ना सर्वदैवास्त्वित्यर्थः। हे वाजप्रमहः! वाजं[५] बलं प्रकर्षेण महद्यस्य स वाजप्रमहाः, तस्य सम्बोधनं वाजप्रमहः!। कस्मात्। उच्यते। यस्मात् इषः अन्नान्यस्मदीयहविर्लक्षणानि सम् वरन्त सम्यक् त्वा सम्भजन्ते। यस्मात् त्वां यजाम इत्यर्थः। किञ्च नः अस्मान् आ भज आभिमुख्येन[६] भज। हे मघवन्! गोषु सप्तमीनिर्देशात् स्थित इति वाक्यशेषः। गवां समूहे स्थित इत्यर्थः। अर्यः यस्त्वमीश्वरः। अथवा अर्यशब्दोऽत्र षष्ठ्यन्तः। अरेः स्वभूतासु गोषु स्थितान्। शत्रोर्या गावस्ता अस्मभ्यं दत्वा अस्मान् भजेत्यर्थः। भज्यमानाश्च वयम् मंहिष्ठाः मंहतीति दानकर्मा (तु. निघ ३,२०)। अतिशयेन दातारः सोमस्येत्यर्थः। ते तुभ्यम्[६] सधमादः सह च मदितारः। सह सोमस्य पातार इत्यर्थः। स्याम नित्यं भवेमेत्याशास्महे ॥ १५ ॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये अष्टमोऽध्यायः ॥

प्रथमोऽष्टकः समाप्तः[६] ॥

**वेङ्कट०** मा सा तव स्तोतृविषया[७] सुमतिः अस्मासु शुष्यतु। अतिशयेन पूजनीयान्न! अस्मान्[८] अन्नानि

---

त्रुटितम् कु; नास्ति अ. २. दुर्हरणायाः वि[१] अ[२]. ३. बोद्धव्यान् कु. ४. प्रेरय(? ये)ति वि[१] लपं; °रय कु. ५. नास्ति अ. ६-६. इति भ्रुवस्वामिसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये अष्टमोध्यायः समाप्तः अ. ७. स्तोत्रवि° वि[१] अ[२]. ८. अस्मभ्यम् कु.

संवृणन्तु[1]। आ भज च मघवन्! गोषु अस्मान् ईश्वरः। दातृतमाः वयम् तुभ्यम् गोभिः पुत्रैश्च सधमादः स्याम इति[2] ॥ १५ ॥

ऋगर्थदीपिका सेयं[3] प्रथमश्चायमष्टकः।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके अष्टमोऽध्यायः ॥

**मुद्गल०** हे वाजप्रमहः! वाजैर्धनैः प्रमहनीयेन्द्र! ते त्वदीया सा सुमतिः शोभनानुग्रहरूपा बुद्धिः अस्मत् अस्मासु मा वि दसत् मा विशुष्यतु। तथा इषः अन्नानि अस्मान् सम् वरन्त संवृतान् कुर्वन्तु। हे मघवन्! धनवन्निन्द्र! अर्यः धनपतिः त्वम् नः अस्मान् गोषु आ भज प्रापय। ते तव मंहिष्ठाः अतिशयेन स्तुतिभिः प्रवर्धयितारो वयम् सधमादः स्याम पुत्रपौत्रादिभिः सह माद्यन्तो भवेम ॥ १५ ॥

इति प्रथमाष्टके अष्टमाध्याये षड्विंशो वर्गः[4] ॥[5]

—※—

## इति ऋग्वेदे सभाष्ये प्रथमाष्टके अष्टमोऽध्यायः ॥



---

१. संवृण्वन्तु अ[1] कु. २. नास्ति कु. ३. चेयं वि[3] अ[2]. ४. °र्गः हरि ओन् मै[2].

५. ऋणमिदमदत्त्वैव त्वन्नाम जपतो मम।
शिवे कथमपर्णेति संज्ञां वोढुं न लज्जसे ॥ मै[1].

यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्।
विनियोगं ब्राह्मणं च मन्त्रस्यार्थं तथैव च ॥

एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत्।
देवतानां च सायुज्यं गच्छत्येव न संशयः ॥

मन्त्रार्थज्ञो जपं जप्यं तथैवाध्ययनं द्विजः।
स्वर्गलोकमवाप्नोति नरकं तु विपर्यये ॥

वासुदेवस्वरूपाय विवस्व ब्रह्मतेजसे।
वेदोवंसाय तंसाय वेदव्यास नमोऽस्तु ते ॥ मै[1].

## द्वितीयोऽष्टकः

वेङ्कट०

द्वितीयोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यत्किञ्चिदिह वक्तव्यमाख्यातेष्वस्ति वैदिकैः ॥ १ ॥

चत्वारि पदजातानि तत्र नामानि कानिचित् ।
आख्यातान्युपसर्गाश्च निपाताश्च तथापरे ॥ २ ॥

शब्दैरुच्चरितैर्द्रव्यं यैरिह प्रतिपद्यते ।
तन्नाम कवयः प्राहुरग्निर्वायुस्तथाश्विनौ ॥ ३ ॥

अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।
तन्नाम कवयः प्राहुर्लिङ्गसङ्ख्यासमन्वितम् ॥ ४ ॥

निर्देशः कर्म करणं प्रदानमपकर्षणम्[1] ।
स्वाम्यर्थोऽथाधिकरणं विभक्त्यर्थाः प्रकीर्त्तिताः ॥ ५ ॥

नामानि नमयन्त्यर्थं[2] प्रधानमिति नामता ।
कारकाणि च तान्याहुः क्रियां कुर्वन्ति तानि[3] हि ॥ ६ ॥

कारकाणां परिस्पन्दः फलस्यैकस्य साधकः ।
लोके पूर्वापरीभूतः क्रियेति व्यपदिश्यते ॥ ७ ॥

वदन्ति वैयाकरणा धातुवाच्यां क्रियां च ताम् ।
कालः सङ्ख्या कारकं च प्रत्ययार्थाः प्रकीर्त्तिताः ॥ ८ ॥

आख्यातस्य च[4] नाम्नश्च सम्बन्धात् स्वार्थदर्शिनः ।
उपसर्गा[5] निपाताश्च न स्वतन्त्रा इति स्थितिः ॥ ९ ॥

आख्यातशब्देषु भवन्ति भेदा धातुः क्रियामेकफलां ब्रवीति ।
अर्थे प्रवृत्ते विरते च धातोर्लट् स्मर्यते शब्दविदैः[6] पुराणैः ॥ १० ॥

'सुतपाव्ने सुता इमे शुचयो यन्ति वीतये'[7] ।
इत्याह गच्छतः सोमान् ऋषिर्हस्तेन दर्शयन् ॥ ११ ॥

---

१. सम्प्रदानम° ल. २. नमन्त्य° वि° लपं. ३. यानि क शोधः. ४. नास्ति लपं. ५. °गांश्च ल ६. °द्भिः मूको. ७. ऋ १,५,५.

'प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे'[1] ।
'परा हि मे विमन्यवः पतन्ति वस्यइष्टये'[2] ॥ १२ ॥

'तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः'[3] ।
'तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे'[4] ॥ १३ ॥

**धात्वर्थस्य प्रवृत्तस्य मन्त्रेष्वेषु प्रतीयते ।**
**विस्पष्टं वर्तमानत्वमीदृशाः सन्ति चापरे ॥ १४ ॥**

**भवन्ती वर्तमानस्य सामीप्येऽपि प्रयुज्यते ।**
'अग्निमीळे पुरोहितम्'[5] 'सुम्नाय वर्तयामसि'[6] ॥ १५ ॥

'इहेन्द्राग्नी उप ह्वये'[7] 'सुते सोमे हवामहे'[8] ।
**एते भवन्ति सूक्तादौ सूक्तान्तस्था इमे पुनः ॥ १६ ॥**

'अर्कैश्च नि ह्वयामहे'[9] 'तं त्वा वयं पतिमग्ने'[10] ।
'वामवसे जोहवीमि'[11] **बहवः सन्ति तादृशाः ॥ १७ ॥**

**अथापि वर्तमानत्वं क्वचिन्नैव विवक्षितम् ।**
'वायविन्द्रश्च चेतथः'[12] 'दक्षं दधाते अपसम्'[13] ॥ १८ ॥

'प्र चेतयति केतुना । धियो विश्वा वि राजति'[14] ।
'सद्यो दाशुषे क्षरसि'[15] **पादास्तत्र निदर्शनम् ॥ १९ ॥**

**एवं यदादियोगे च** 'यं रक्षन्ति प्रचेतसः'[16] ।
'यत्र ग्रावा पृथुबुध्नः'[17] 'यं यज्ञं नयथा नरः'[18] ॥ २० ॥

"वेद मासो धृतव्रतः"[19] **विवक्षाऽपि च दृश्यते ।**
"यद् देवानां मित्रमहः"[20] अग्नेर्भ्राजन्ते अर्चयः[21] ॥ २१ ॥

**तथा तच्छब्दयोगे च** 'स इद् देवेषु गच्छति'[22] ।
'येषामिन्द्रस्ते जयन्ति'[23] **पादौ तत्र निदर्शनम् ॥ २२ ॥**

---

१. ऋ १,१९,१. २. ऋ १,२५,४. ३. ऋ १,२४,११. ४. ऋ १, २४,१२.
५. ऋ १,१,१. ६. ऋ ८,६८,१. ७. ऋ १,२१,१. ८. ऋ ३,४०,१. ९. ऋ १,४७,१०.
१०. ऋ १,६०,५. ११. ऋ १,३४,१२. १२. ऋ १,२,५. १३. ऋ १,२,९. १४. ऋ १,३,१२.
१५. ऋ १,२७,६. १६. ऋ १,४१,१. १७. ऋ १,२८,१. १८. ऋ १,४१,५. १९. ऋ १,२५,८.
२०. ऋ १,४४,१२. २१. ऋ १,४४,१२. २२. ऋ १,१,४. २३. ऋ ८,१६,५.

अथापि दृश्यते भूते 'कारमंशाय जिन्वथ'[1] ।
'शत्रुं न किला विवित्से'[2], 'आण्डा शुष्णस्य भेदति'[3] ॥ २३ ॥

'कदा क्षत्रश्रियं नरमा वरुणं करामहे'[4] ।
प्रयुज्यते भवन्त्यत्र कदायोगे भविष्यति ॥ २४ ॥

'न ता मिनन्ति मायिनः',[5] 'य ईङ्खयन्ति पर्वतान्'[6] ।
'प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन्'[7] ॥ २५ ॥

विधाः पराः[8] पदेष्वेषु[9] बहवः सन्ति तादृशाः[10] ।
इच्छन्तोऽपि न हिंसन्ति जातास्तेऽभीङ्खयन्ति च ॥ २६ ॥

दृश्यन्ते[11] चास्यवामीये वृत्तिभेदास्तथाविधाः[11] ।
शब्दज्ञहृदयस्थास्ते[12] शक्याः शब्दैर्न भाषितुम् ॥ २७ ॥

छन्दसोऽनुविधानाय यत्र भूतभविष्यतोः ।
लट् प्रयुक्तो न कालस्य विवक्षा तत्र विद्यते ॥ २८ ॥

कदादियोगे कालस्य भवत्यभिभवो यथा ।
अर्थस्वभावश्च तथा कालं वाक्येषु बाधते ॥ २९ ॥ इति

## [ १२२ ]

[13]दीर्घतमसः पुत्रः कक्षीवान् ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[13] ।

**प्र वः पान्तं रघुमन्यवोऽन्धो यज्ञं रुद्राय मीळ्हुषे भरध्वम् ।**
**दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥ १ ॥**

प्र । वः । पान्तम् । रघुऽमन्यवः । अन्धः । यज्ञम् । रुद्राय । मीळ्हुषे । भरध्वम् ।
दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽइव । मरुतः । रोदस्योः ॥ १ ॥

**वेङ्कट०** कक्षीवान् । भरध्वम् यूयं पानीयं हे लघुस्तुतयः! सोमम् यज्ञम् च रुद्राय सेक्त्रे । दिवः वीरैः मरुद्भिः सह स्तुतिः क्रियते प्राज्ञस्य मरुतां पितुः[14] 'आ ते पितः' ( ऋ २,३३,१ ) इति । त इमे

---

१. ऋ १,११२,१. २. १,३२,४. ३. ऋ ८,४०,११. ४. ऋ १,२५,५. ५. ऋ ३,५६,१. ६. ऋ १,१९,७. ७. ऋ १,३९,५. ८. विधापराः ल; विधाः विधापरा वेंअऋ. ९. पदेषु वि[1] लपं. १०. °शाः वि[1] वेंअऋ. ११-११. चास्यवामीये···तथाविधा विधाः ल; °स्यवामीये तथा° वि[2] अ[1]; चान्यवामीये तथाविधा विधाः वि[1] लपं. १२. °स्थास्ताः मूको. १३-१३ नास्ति मूको. १४. पितः मूको.

मरुतः च इषुधिना प्रेर्यमाणाः सेनासु इव शराः द्यावापृथिव्योर्मध्ये पतन्ति । तैः स्तूयत इति ॥१॥

**पत्नी॑व पू॒र्वहू॑तिं वावृ॒धध्या॑ उ॒षासा॒नक्ता॑ पुरु॒धा विदा॑ने ।**
**स्त॒रीर्नात्कं॒ व्यु॑तं॒ वसा॑ना॒ सूर्य॑स्य श्रि॒या सु॒दृशी॒ हिर॑ण्यैः ॥ २ ॥**

पत्नी॑ऽइव । पू॒र्वऽहू॑तिम् । व॒वृ॒धध्यै॑ । उ॒ष॒सा॒नक्ता॑ । पु॒रु॒धा । विदा॑ने॒ इति॑ ।
स्त॒रीः । न । अत्क॑म् । विऽउ॑तम् । वसा॑ना । सूर्य॑स्य । श्रि॒या । सु॒ऽदृशी॑ । हिर॑ण्यैः ॥ २ ॥

वेङ्कट० यथा पत्नी पतिं वर्धयितुमनेकप्रकारं जानाति, तद्वत् पूर्वाह्वानं स्तोतारं वर्धयितुम् अहोरात्रे अनेकप्रकारं[1] जानीतः । तयोः उषाः निवृत्तप्रसवा गौरिव तिरोहितं वर्णम् आच्छादयन्ती सूर्यस्य श्रिया हितरमणीयैस्तेजोभिरात्मीयैश्च सुदर्शना भवति ॥ २ ॥

**म॒मत्तु॑ नः॒ परि॑ज्मा वस॒र्हा म॒मत्तु॒ वातो॑ अ॒पां वृष॑ण्वान् ।**
**शि॒शी॒तमि॑न्द्रापर्वता यु॒वं न॒स्तन्नो॒ विश्वे॑ वरिवस्यन्तु दे॒वाः ॥ ३ ॥**

म॒मत्तु॑ । नः॒ । परि॑ऽज्मा । व॒स॒र्हा । म॒मत्तु॑ । वातः॑ । अ॒पाम् । वृष॑ण्ऽवान् ।
शि॒शी॒तम् । इ॒न्द्रा॒प॒र्व॒ता॒ । यु॒वम् । नः॒ । तत् । नः॒ । विश्वे॑ । व॒रि॒व॒स्य॒न्तु॒ । दे॒वाः ॥ ३ ॥

वेङ्कट० मादयतु अस्मान् परितो गन्ता जगच्छादकस्य तमसो हन्ता सूर्यः । ममत्तु च वातः अपाम् वर्षणवान् । तीक्ष्णीकुरुतं युवां चास्मान् इन्द्रापर्वतौ ! । तत् इदमभिलषितं धनम् विश्वे देवाः प्रयच्छन्तु ॥ ३ ॥

**उ॒त त्या मे॑ य॒शसा॑ श्वे॒तना॒यै व्यन्ता॒ पान्तौ॑शि॒जो हु॒वध्यै॑ ।**
**प्र वो॒ नपा॑तम॒पां कृ॑णुध्वं॒ प्र मा॒तरा॑ रास्पि॒नस्या॒योः ॥ ४ ॥**

उ॒त । त्या । मे॒ । य॒शसा॑ । श्वे॒तना॑यै । व्यन्ता॑ । पान्ता॑ । औ॒शि॒जः । हु॒वध्यै॑ ।
प्र । वः॒ । नपा॑तम् । अ॒पाम् । कृ॒णु॒ध्व॒म् । प्र । मा॒तरा॑ । रा॒स्पि॒नस्य॑ । आ॒योः ॥ ४ ॥

वेङ्कट० अपि च इन्द्रापर्वतौ अन्नेन मम श्वेतनायै भवतश्चेति मानं कुरुत[2] । खादन्तौ पिबन्तौ च कक्षीवान् आह्वातुं प्रवृत्तः । यूयमपि तयोर्यागार्थम् अग्निम् प्र कृणुध्वम् पुरस्कुरुत । कीर्तनीयस्य अन्नस्य निर्मातारौ तौ चाग्रतः कृणुध्वम्[3] । रास्पी[4] रपतेः ( तु. या ६,२१ ) शब्दकर्मणः ॥ ४ ॥

**आ वो॑ रुव॒ण्युमौ॑शि॒जो हु॒वध्यै॒ घोषे॑व॒ शंस॒मर्जु॑नस्य॒ नंशे॑ ।**
**प्र वः॑ पू॒ष्णे दा॒वन॒ आँ अच्छा॑ वोचेय व॒सुता॑तिम॒ग्नेः ॥ ५ ॥**

---

१. बहुप्र° वि° अ°. २. कुरुतःमूको. ३. कृणुतम् ल. ४. रास्पि मूको.

आ । वः । रुवण्युम् । औशिजः । हुवध्यै । घोषाऽइव । शंसम् । अर्जुनस्य । नंशे ।
प्र । वः । पूष्णे । दावने । आ । अच्छ । वोचेय । वसुऽतातिम् । अग्नेः ॥ ५ ॥

वेङ्कट० आह्वातुं प्रवृत्तो युष्मदर्थं रवणशीलमग्निं[1] कक्षीवान् [2]घोषेव श्वित्रिणी शुक्लवर्णस्य[2] नाशाय प्र वोचेय युष्माकं पोषकाय अग्नेः दानाय। तस्य वसूनां विस्तारमग्नेरौदार्यं भवदर्थं कीर्तयामीत्यर्थः ॥ ५ ॥

[3]इति द्वितीयाष्टके प्रथमाध्याये प्रथमो वर्गः[3] ॥

श्रुतं मे मित्रावरुणा हवेमोत श्रुतं सदने विश्वतः सीम् ।
श्रोतु नः श्रोतुरातिः सुश्रोतुः सुक्षेत्रा सिन्धुरद्भिः ॥ ६ ॥

श्रुतम् । मे । मित्रावरुणा । हवा । इमा । उत । श्रुतम् । सदने । विश्वतः । सीम् ।
श्रोतु । नः । श्रोतुऽरातिः । सुऽश्रोतुः । सुऽक्षेत्रा । सिन्धुः । अत्ऽभिः ॥ ६ ॥

वेङ्कट० मम इमानि आह्वानान्यपि च शृणुतम्। यज्ञे सर्वत एव शृणोतु अस्मान् श्रवणीयदाना शोभनकीर्तिः शोभनपर्यन्तक्षेत्रा सरस्वती आत्मीयैरुदकैः सह ॥ ६ ॥

स्तुषे सा वां वरुण मित्र रातिर्गवां शता पृक्षयामेषु पज्रे ।
श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुन्धानासो अग्मन् ॥ ७ ॥

स्तुषे । सा । वाम् । वरुण । मित्र । रातिः । गवाम् । शता । पृक्षऽयामेषु । पज्रे ।
श्रुतऽरथे । प्रियऽरथे । दधानाः । सद्यः । पुष्टिम् । निऽरुन्धानासः । अग्मन् ॥ ७ ॥

वेङ्कट० स्तुताऽऽसीत् मित्रावरुणौ! अन्नार्थेष्वभिगमनेषु सा युवयोः गोशतात्मिका रातिः कक्षीवति। मह्यं जानपदैः कथितेत्यर्थः। श्रुतरथनाम्नि प्रियरथे राजनि दीयमाना गावः शीघ्रं मयि पोषं नियच्छन्त आगताः ॥ ७ ॥

अस्य स्तुषे महिमघस्य राधः सचा सनेम नहुषः सुवीराः ।
जनो यः पज्रेभ्यो वाजिनीवानश्वावतो रथिनो मह्यं सूरिः ॥ ८ ॥

अस्य । स्तुषे । महिऽमघस्य । राधः । सचा । सनेम । नहुषः । सुऽवीराः ।
जनः । यः । पज्रेभ्यः । वाजिनीऽवान् । अश्वऽवतः । रथिनः । मह्यम् । सूरिः ॥ ८ ॥

वेङ्कट० अस्य स्तुतमासीत् महाधनस्य धनम्। तद् वयं सह पुत्रैः सम्भजेमहि तस्माद् मनुष्यात्[4]। जनः यः अङ्गिरोभ्यो दत्ताश्वः अश्वावतः रथवतो धनस्य कक्षीवते प्रेरयिता ॥ ८ ॥

---

१. वरण° वि[1,2] ल; रु.ण्यु लपं. २. घोषे···वर्णस्य वि[2] अ[1]. ३-३. नास्ति मूको. ४. मनुष्यान् वि[1].

जनो यो मित्रावरुणावभिध्रुगपो न वां सुनोत्यक्ष्णयाध्रुक् ।
स्वयं स यक्ष्मं हृदये नि धत्त आप यदीं होत्राभिर्ऋतावा ॥ ९ ॥

जनः । यः । मित्रावरुणौ । अभिऽध्रुक् । अपः । न । वाम् । सुनोति । अक्ष्णयाऽध्रुक् ।
स्वयम् । सः । यक्ष्मम् । हृदये । नि । धत्ते । आप । यत् । ईम् । होत्राभिः । ऋतऽवा ॥९॥

वेङ्कट० जनः यः युवयोः मित्रावरुणौ! अभिद्रोहं करोति। सोमोदकानि च यः युवयोः न सुनोति जैह्म्याद् द्रोहं कुर्वन्। सः जनः स्वयम् एव हृदये विषादम् नि धत्ते। यदि एनं जनम् स्तुतिभिः सह यज्ञयुक्त.[1] कक्षीवान् प्रज्वलन् युवयोः स्तोता प्राप्नोत्यन्यो वा यजमानः। व्यथन्तेऽयजमानाः प्रज्वलन्तं[2] दृष्ट्वेति[3] ॥ ९ ॥

स व्राधतो नहुषो दंसुजूतः शर्धस्तरो नरां गूर्तश्रवाः ।
विसृष्टरातिर्याति बाळ्हसृत्वा विश्वासु पृत्सु सदमिच्छूरः ॥ १० ॥

सः । व्राधतः । नहुषः । दंऽसुजूतः । शर्धःऽतरः । नराम् । गूर्तऽश्रवाः ।
विसृष्टऽरातिः । याति । बाळ्हऽसृत्वा । विश्वासु । पृत्ऽसु । सदम् । इत् । शूरः ॥ १० ॥

वेङ्कट० सः महतः[4] शत्रून् मनुष्यान् दमनपरैः सुष्ठु परिवृतः बलवत्तरः मनुष्याणाम् उद्गूर्णान्नः[5] विसृष्टधनः अभियाति बहुशत्रुमध्ये गच्छन् सर्वविधेषु युद्धेषु सदा एव शूरः। यो जनः पज्रेभ्यो[6] दत्तान्न इति ॥ १० ॥

[7]इति द्वितीयाष्टके प्रथमाध्याये द्वितीयो वर्गः[7] ॥

अध ग्मन्ता नहुषो हवं सूरेः श्रोता राजानो अमृतस्य मन्द्राः ।
नभोजुवो यन्निरवस्य राधः प्रशस्तये महिना रथवते ॥ ११ ॥

अध । ग्मन्त । नहुषः । हवम् । सूरेः । श्रोत । राजानः । अमृतस्य । मन्द्राः ।
नभःऽजुवः । यत् । निरवस्य । राधः । प्रऽशस्तये । महिना । रथऽवते ॥ ११ ॥

वेङ्कट० इष्टाश्वप्रभृतिषु सप्तसु राजसु भिक्षितुं प्रवृत्तस्तानाह। सम्प्रति आगच्छत। आगत्य चास्य स्तोतुः मनुष्यस्य आह्वानं शृणुत च। अन्नस्य राजानः! हे मदयितारः! वायोः निर्गच्छतः यत् धनं स्तोत्रे भवति प्रशंसनाय महत्तया रथयुक्ताय। तदस्मभ्यमपि दत्तेति वाक्यशेषः। वायुर्निर्गतो यद्धनं स्तोतृभ्यः प्रयच्छति भूतेरीश्वरस्तादृशमस्मभ्यं दत्त। अल्पं धनं शिरोवाह्यं भवति, बहु चेदनोवाह्यम्, बहुतरं चेद्रथवाह्यम्। तच्छूद्रस्ते रथवान् ॥ ११ ॥

---

१. युक्तः वि[1] लपं. २. °लयन्तं वि[2]; °ज्वलन् अ[1]. ३. नास्ति लपं. ४. °तः अति अपि वि[2]; °नः अपि अ[1]. ५. °न्नो अपि वि[2] अ[1]. ६. वज्रे° वि[2] अ[1] लपं. ७-७. नास्ति मूको.

एतं शर्धं धाम यस्य सूरेरित्यवोचन् दशतयस्य नंशे ।
द्युम्नानि येषु वसुताती रारन् विश्वे सन्वन्तु प्रभृथेषु वाजम् ॥ १२ ॥

एतम् । शर्धम् । धाम । यस्य । सूरेः । इति । अवोचन् । दशऽतयस्य । नंशे ।
द्युम्नानि । येषु । वसुऽतातिः । ररन् । विश्वे । सन्वन्तु । प्रऽभृथेषु । वाजम् ॥ १२ ॥

**वेङ्कट०** एतम् वेगं धारयामः गच्छतः प्राज्ञस्य वायोः योऽयं पुरुषे प्रविष्टः प्राणात्मकः शर्ध-स्तस्यान्नेन धारणं भिक्षितेन इति अवोचन् दशावयवस्य[1] व्याप्त्यर्थम् । अन्नानि येषु उदारः प्रयच्छन् भातीति[2] । सर्वे ते [3]प्राणाश्च दातृषु[3] अन्नं भजन्ताम् ॥ १२ ॥

मन्दामहे दशतयस्य धासेर्द्विर्यत् पञ्च बिभ्रतो यन्त्यन्ना ।
किमिष्टाश्व इष्टरश्मिरेत ईशानासस्तरुष ऋञ्जते नॄन् ॥ १३ ॥

मन्दामहे । दशऽतयस्य । धासेः । द्विः । यत् । पञ्च । बिभ्रतः । यन्ति । अन्ना ।
किम् । इष्टऽअश्वः । इष्टऽरश्मिः । एते । ईशानासः । तरुषः । ऋञ्जते । नॄन् ॥ १३ ॥

**वेङ्कट०** स्तुमः प्राणस्य अन्नार्थम् । यस्मात् दश प्राणाः अन्नानि बिभ्रतः वर्तन्ते । किममी राजानः सम्प्रति इष्टाश्वः इष्टरश्मिः अन्ये च पञ्च दरिद्राणां तरणस्य ईश्वराः याचितॄन् मनुष्यानन्न-प्रदानेन साधयन्तीति समीपस्थान् पृच्छन्ति ॥ १३ ॥

हिरण्यकर्णं मणिग्रीवमर्णस्तन्नो विश्वे वरिवस्यन्तु देवाः ।
अर्यो गिरः सद्य आ जग्मुषीरोस्राश्चाकन्तूभयेष्वस्मे ॥ १४ ॥

हिरण्यऽकर्णम् । मणिऽग्रीवम् । अर्णः । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः ।
अर्यः । गिरः । सद्यः । आ । जग्मुषीः । आ । उस्राः । चाकन्तु । उभयेषु । अस्मे इति ॥ १४ ॥

**वेङ्कट०** [4]हिरण्मयालङ्कारयुक्तकर्णं मणिभिरलङ्कृतग्रीवम्[4]† । शिरःकण्ठयोः क्रमेण वर्णने नाम च सर्वनिघातं दृष्टम् । तत् धनम् अस्मभ्यम् विश्वे देवाः प्रयच्छन्तु मया स्तुताः । उत्तरस्यामृचि वक्ष्यमाणेषूभयविधेषु या गावस्ताः अस्मान् आकामयन्ताम्[5] प्रेरयितुः वाचः सद्यः गच्छन्त्यः ॥ १४ ॥

चत्वारो मा मशर्शारस्य शिश्वस्त्रयो राज्ञ आयवसस्य जिष्णोः ।
रथो वां मित्रावरुणा दीर्घाप्साः स्यूमगभस्तिः सूरो नाद्यौत् ॥ १५ ॥

---

१. °वस्य तस्य वि[2] अ[1]. २. भवती° वि[2] अ[1]. ३-३. °णाः पदा° वि[2] अ[1]. ४-४. °युक्तकर्मणि अलङ्कृत° वि[2]; °क्तकर्णि अलङ्कृत° अ. † तु. वैप १,२४०६ d. ५. अकामयन्ताम् लपं; आकामयन्त वि[2]; अकामयन्त अ[1].

च॒त्वारः॑ । मा॒ । म॒श॒र्शार॑स्य । शिश्वः॑ । त्रयः॑ । राज्ञः॑ । आय॑वसस्य । जि॒ष्णोः ।
रथः॑ । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । दी॒र्घऽअ॑प्साः । स्यूम॑ऽगभस्तिः । सूरः॑ । न । अ॒द्यौत् ॥ १५ ॥

**वेङ्कट०** मशर्शारो नाम कश्चित् तस्य पुत्राः चत्वारः । एवम् आयवसस्य राज्ञः पुत्राः त्रयः । त इमे मां द्योतयन्तु[1] । एवं मित्रावरुणौ! यः वाम् रथः दीर्घगमनोऽनुस्यूतरश्मिस्तेजसा सूर्यं इव मां प्रति द्योतते[2] इति[3] निरूपणीयं प्राज्ञैः[4] ॥ १५ ॥

[5]इति द्वितीयाष्टके प्रथमाध्याये तृतीयो वर्गः[5] ॥

## [ १२३ ]

[5]दीर्घतमसः पुत्रः कक्षीवान् ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[5] ।

पृ॒थू रथो॒ दक्षि॑णाया अयो॒ज्यैनं॑ दे॒वासो॑ अ॒मृता॑सो अस्थुः ।
कृ॒ष्णादुद॑स्थाद॒र्या॒३॒॑ विहा॑या॒श्चिकि॑त्सन्ती॒ मानु॑षाय॒ क्षया॑य ॥ १ ॥

पृ॒थुः । रथः॑ । दक्षि॑णायाः । अ॒यो॒जि॒ । आ । ए॒न॒म् । दे॒वासः॑ । अ॒मृता॑सः । अ॒स्थुः॒ ।
कृ॒ष्णात् । उत् । अ॒स्था॒त् । अ॒र्यी॑ । वि॒ऽहा॑याः । चिकि॑त्सन्ती । मानु॑षाय । क्षया॑य ॥ १ ॥

**वेङ्कट०** उषसि भिक्षणप्रवृत्तान् दानप्रवृत्तांश्च दृष्ट्वा वदति । विस्तीर्णः दक्षिणायाः रथः युक्तः[6] । तं चैनं [7]दक्षिणाया रथम् अमृता[7] देवा आस्थिताः । कृष्णात् नैशात्तमसः उत् अस्थात् अर्थानां दात्री महत्युषाः मानुषाय लोकाय तेजसा प्रज्ञानं कुर्वती[8] ॥ १ ॥

पूर्वा॒ विश्व॑स्माद् भुव॑नादबोधि॒ जय॑न्ती॒ वाजं॑ बृह॒ती स॒नुत्री॑ ।
उ॒च्चा व्य॑ख्यद् युव॒तिः पु॑न॒र्भूरोषा अ॑गन् प्रथ॒मा पू॒र्वहू॑तौ ॥ २ ॥

पूर्वा॑ । विश्व॑स्मात् । भुव॑नात् । अ॒बो॒धि॒ । जय॑न्ती । वाज॑म् । बृ॒ह॒ती । स॒नुत्री॑ ।
उ॒च्चा । वि । अ॒ख्य॒त् । यु॒व॒तिः । पु॒नः॒ऽभूः । आ । उ॒षाः । अ॒ग॒न् । प्र॒थ॒मा । पू॒र्वऽहू॑तौ ॥ २ ॥

**वेङ्कट०** सुप्तात् विश्वस्माद्[9] भूतजातात् पूर्वा इयं प्रबुध्यते जयन्ती अन्नम् महती दात्री । दिव्युच्चैरात्मानं प्रकाशयति तरुणी[10] पुनःपुनर्जायमाना । सैषा[11] आगच्छतु[12] मुख्या प्रथममेवाह्वयति[13] मयि ॥ २ ॥

यद॒द्य भा॒गं वि॒भजा॑सि॒ नृभ्य॒ उषो॑ देवि मर्त्य॒त्रा सु॑जाते ।
दे॒वो नो॒ अत्र॑ सवि॒ता दमू॑ना॒ अना॑गसो वोचति॒ सूर्या॑य ॥ ३ ॥

---

१. °न्योत मूको. २. °तेन वि[2] अ[1] लपं. ३. नास्ति मूको. ४. °ज्ञे वि[1] अ[1]. ५-५. नास्ति मूको. ६. यतः लपं. ७-७. °णारथ° वि[2] अ[1]. ८. °न्ती अ[1]. ९. नास्ति वि[2] अ[1]. १०. तरुणा ल शोधः. ११. सोषा ल शोधः. १२. गच्छ° अ[1]. १३. °मेन बह्वाप° लपं.

यत् । अद्य । भागम् । विऽभजासि । नृऽभ्यः । उषः । देवि । मर्त्यऽत्रा । सुऽजाते ।
देवः । नः । अत्र । सविता । दमूनाः । अनागसः । वोचति । सूर्याय ॥ ३ ॥

वेङ्कट० यत् अद्य धनं प्रयच्छसि मनुष्येभ्यः [1]उषः देवि[1] ! मनुष्येषु शोभनजनने ! । अस्मिन् काले देवः सविता अस्मान् अपापान् वदतु दममनाः सूर्याय[2] । यथोदितो देवः सूर्योऽस्मान् बाधते तथा ब्रवीतु ॥ ३ ॥

गृहंगृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना ।
सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद् भजते वसूनाम् ॥ ४ ॥

गृहम्ऽगृहम् । अहना । याति । अच्छ । दिवेऽदिवे । अधि । नाम । दधाना ।
सिसासन्ती । द्योतना । शश्वत् । आ । अगात् । अग्रम्ऽअग्रम् । इत् । भजते । वसूनाम् ॥४॥

वेङ्कट० गृहंगृहम् उषा अभिगच्छति[3] दिवसेदिवसे नमनं दधाना । जगत् सम्भक्तुमिच्छन्ती तेजसा द्योतयन्ती सर्वदा आगच्छतु । सेयं सर्वेषामेव धनानां हविष्ट्वमापन्नानाम् अग्रम् एव भजते अग्निहोत्रेषु ॥ ४ ॥

भगस्य स्वसा वरुणस्य जामिरुषः सूनृते प्रथमा जरस्व ।
पश्चा स दध्या यो अघस्य धाता जयेम तं दक्षिणया रथेन ॥ ५ ॥

भगस्य । स्वसा । वरुणस्य । जामिः । उषः । सूनृते । प्रथमा । जरस्व ।
पश्चा । सः । दध्याः । यः । अघस्य । धाता । जयेम । तम् । दक्षिणया । रथेन ॥ ५ ॥

वेङ्कट० भगस्य देवस्य स्वसा[4] सहप्रादुर्भावात् वरुणस्य अपि जामिः उषः ! सत्ये ! अग्रिमा त्वमस्मान् जरां कालेन गमय । पश्चात् सः गच्छत्वस्माकं पापस्य निधाता । तम् वयं धनात्मकेन रथेन[5] जयेम इति ॥ ५ ॥

[6]इति द्वितीयाष्टके प्रथमाध्याये चतुर्थो वर्गः[6] ॥

उदीरतां सूनृता उत् पुरंधीरुदग्नयः शुशुचानासो अस्थुः ।
स्पार्हा वसूनि तमसापगूळ्हाविष्कृण्वन्त्युषसो विभातीः ॥ ६ ॥

उत् । ईरताम् । सूनृताः । उत् । पुरम्ऽधीः । उत् । अग्नयः । शुशुचानासः । अस्थुः ।
स्पार्हा । वसूनि । तमसा । अपऽगूळ्हा । आविः । कृण्वन्ति । उषसः । विऽभातीः ॥ ६ ॥

वेङ्कट० उद्गच्छन्ति वाचः प्रज्ञाश्च । अग्नयः चाग्निहोत्रेषु[7] दीप्यमानाः[8] उत्तस्थुः । स्पृहणीयानि धनानि तमसा तिरोहितानि प्रकाशयन्ति उषसः व्युच्छन्त्यः ॥ ६ ॥

---

१-१. एषा देवी अ' ल शोधः. २. सूर्या लपं. ३. अपिग° वि''' लपं. ४. °सापि लपं.
५. नास्ति वि' लपं. ६-६. नास्ति मूको. ७. °त्रे अ'. ८. नास्ति अ'.

अपान्यदेत्यभ्य१॒॑न्यदेति विषुरूपे अहनी सं चरेते ।
परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन ॥ ७ ॥

अप । अन्यत् । एति । अभि । अन्यत् । एति । विषुरूपे इति विषुऽरूपे । अहनी इति ।
सम् । चरेते इति । परिऽक्षितोः । तमः । अन्या । गुहा । अकः । अद्यौत् । उषाः । शोशुचता । रथेन ॥७॥

वेङ्कट० रात्रिसंज्ञकमेकम् अपगच्छति[1] । अभिगच्छति अहः । नानारूपे अहोरात्रे सम् चरेते । परितो-निवसन्त्योरेतयोः अन्या रात्रिः[2] आत्मीयं तमः गुहायां करोति नाशयति । अन्या द्योतते उषाः दीप्यमानेन रथेन ॥ ७ ॥

सदृशीरद्य सदृशीरिदु श्वो दीर्घं सचन्ते वरुणस्य धाम ।
अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परि यन्ति सद्यः ॥ ८ ॥

सऽदृशीः । अद्य । सऽदृशीः । इत् । ऊँ इति । श्वः । दीर्घम् । सचन्ते । वरुणस्य । धाम ।
अनवद्याः । त्रिंशतम् । योजनानि । एकाऽएका । क्रतुम् । परि । यन्ति । सद्यः ॥ ८ ॥

वेङ्कट० समानाः अद्य समाना एव श्वश्वोषसः[3] सदैकरूपाः दीर्घम् वरुणस्य स्थानं सेवन्ते, उदयगिरेश्चान्तरालं सेवन्ते । अनवद्याः उषसः सद्यः एकेनाहोरात्रेण त्रिंशतम् योजनानि आदित्यम् परितो गच्छन्ति । एकैका एवेति त्रिंशन्मुहूर्ता अहोरात्रयोः । तानादित्यमेता अन्वहं परिगच्छन्तीति । एकस्मिन् योजने यदाऽऽदित्यस्तिष्ठति, तदैकं मुहूर्तमिति ॥ ८ ॥

जानत्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट श्वितीची ।
ऋतस्य योषा न मिनाति धामाहरहर्निष्कृतमाचरन्ती ॥ ९ ॥

जानती । अह्नः । प्रथमस्य । नाम । शुक्रा । कृष्णात् । अजनिष्ट । श्वितीची ।
ऋतस्य । योषा । न । मिनाति । धाम । अहःऽअहः । निःऽकृतम् । आऽचरन्ती ॥ ९ ॥

वेङ्कट० [4]प्रथमस्य अह्नः अहर्मुखस्य नमनम् अवगच्छन्ती शुक्लवर्णा श्वेतिमानमञ्चन्ती रात्रेः अजनिष्ट । आदित्यस्य योषा न हिनस्ति स्थानम् अन्वहं संस्कृतं स्थानं तद् आगच्छन्ती[4] ॥ ९ ॥

कन्येव तन्वा३ शाशदानाँ एषि देवि देवमियक्षमाणम् ।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥ १० ॥

---

१. अभिग° वि[2] अ[1]. २. °त्री वि[1]. ३ श्वश्वोषः लपं; श्वेश्वोषसः वि; श्वःश्वः उषसः ऌ.
४-४. नास्ति लपं.

कन्याऽइव । तन्वा । शाशदाना । एषि । देवि । देवम् । इयक्षमाणम् ।
समऽस्मयमाना । युवतिः । पुरस्तात् । आविः । वक्षांसि । कृणुषे । विऽभाती ॥ १० ॥

**वेङ्कट०** कन्येव आत्मशरीरेण जगदाच्छादयन्ती गच्छसि देवि देवम्[1] यष्टुमिच्छन्तम् । हसन्ती युवतिः यथा पुरस्ताद् आत्मीयं वक्षः प्रकाशयति । एवं त्वमात्मीयानि वक्षांसि आविष्करोषि व्युच्छन्ती । देशेष्वनेकेषु प्रादुर्भावाद् बहुवचनं वक्षांसीति ॥ १० ॥

[2]इति द्वितीयाष्टके प्रथमाध्याये पञ्चमो वर्गः[2] ॥

**सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कम् ।**
**भद्रा त्वमुषो वितरं व्युच्छ न तत् ते अन्या उषसो नशन्त ॥ ११ ॥**

सुऽसंकाशा । मातृमृष्टाऽइव । योषा । आविः । तन्वम् । कृणुषे । दृशे । कम् ।
भद्रा । त्वम् । उषः । विऽतरम् । वि । उच्छ । न । तत् । ते । अन्याः । उषसः । नशन्त ॥ ११ ॥

**वेङ्कट०** शोभनसंदर्शना मात्रोद्वर्तितशरीरा कन्येव त्वम् तन्वम् आविः कृणुषे दर्शनाय । यथा त्वां सर्वे पश्येरन् । कल्याणी त्वम् उषः! प्रकर्षेण वि उच्छ । तत् इदं तव रूपम् अन्याः गताः उषसः न व्याप्नुवन् न त्वत्सदृशरूपा गता इति ॥ ११ ॥

**अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य ।**
**परा च यन्ति पुनरा च यन्ति भद्रा नाम वहमाना उषासः ॥ १२ ॥**

अश्वऽवतीः । गोऽमतीः । विश्वऽवाराः । यतमानाः । रश्मिऽभिः । सूर्यस्य ।
परा । च । यन्ति । पुनः । आ । च । यन्ति । भद्रा । नाम । वहमानाः । उषसः ॥ १२ ॥

**वेङ्कट०** अश्ववत्यः गोमत्यः सर्वैर्वरणीयाः सूर्यस्य रश्मिभिः संयतमानाः उषसः काश्चन परा यन्ति अपराः आ यन्ति भद्राणि बहूनि नामानि[3] निगमपठितानि दधानाः उषसः ॥ १२ ॥

**ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि ।**
**उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥ १३ ॥**

ऋतस्य । रश्मिम् । अनुऽयच्छमाना । भद्रम्ऽभद्रम् । क्रतुम् । अस्मासु । धेहि ।
उषः । नः । अद्य । सुऽहवा । वि । उच्छ । अस्मासु । रायः । मघवत्ऽसु । च । स्युरिति स्युः ॥

---

१. देवान् मूको. २. नास्ति मूको. ३. पठितानि मानि वि[1] क अपं; इमानि वि[2] अ[1].

वेङ्कट० आदित्यस्य रश्मिम् अनुबध्नती[1] कल्याणंकल्याणं प्रज्ञानम्[2] अस्मासु धेहि। उषः! अद्य अस्माकम् स्वाह्वाना सती वि उच्छ। हविष्मत्सु अस्मासु धनानि च सन्तु ॥ १३ ॥

[3]इति द्वितीयाष्टके प्रथमाध्याये षष्ठो वर्गः[3] ॥

[ १२४ ]

[3]कक्षीवान् ऋषिः। उषाः देवता। त्रिष्टुप् छन्दः[3]।

उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत्।
देवो नो अत्र सविता न्वर्थं प्रासावीद् द्विपत् प्र चतुष्पदित्यै ॥ १ ॥

उषाः। उच्छन्ती। सम्ऽइधाने। अग्नौ। उत्ऽयन्। सूर्यः। उर्विया। ज्योतिः। अश्रेत्।
देवः। नः। अत्र। सविता। नु। अर्थम्। प्र। असावीत्। द्विऽपत। प्र। चतुःऽपत्। इत्यै ॥१॥

वेङ्कट० उषाः व्युच्छन्ती होमार्थं दीप्यमाने अग्नौ भवति। उद्यन् च सूर्यः विस्तीर्णम् ज्योतिः श्रयति। देवः च सविता अत्र क्षिप्रम् अस्मान् कार्यं प्रति प्रसौति। द्विपत् चतुष्पत् च गमनाय प्र सौति ॥ १ ॥

अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि।
ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥ २ ॥

अमिनती। दैव्यानि। व्रतानि। प्रऽमिनती। मनुष्या। युगानि।
ईयुषीणाम्। उपमा। शश्वतीनाम्। आऽयतीनाम्। प्रथमा। उषाः। वि। अद्यौत् ॥ २ ॥

वेङ्कट० अहिंसन्ती यज्ञान् प्रहिंसन्ती मनुष्याणाम् आयुषो[4] व्यवच्छेदकान्यहोरात्राणि गतानाम्[5] उषसाम् अन्तिमा आयतीनाम् मुख्या प्रादुरभवत् ॥ २ ॥

एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात्।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ३ ॥

एषा। दिवः। दुहिता। प्रति। अदर्शि। ज्योतिः। वसाना। समना। पुरस्तात्।
ऋतस्य। पन्थाम्। अनु। एति। साधु। प्रजानतीऽइव। न। दिशः। मिनाति ॥ ३ ॥

वेङ्कट० एषा दिवः दुहिता प्रति दृश्यते पूर्वस्यां दिशि ज्योतिः आच्छादयन्ती समनस्का। आदित्यस्य पन्थानम्[6] साधु अनुगच्छति। प्रागेवावगच्छन्तीव दिशः च न हिनस्ति रात्रिरिवेति[7] ॥ ३ ॥

---

१. अनुबुध्यन्ती वि[1] लपं; °ध्नन्ती वि[2] अ[1] ल. २. नास्ति वि[2] लपं. ३-३. नास्ति मूको.
४. °र्थं मर्त्य वि[2] लपं. ५. °षोऽपि वि[1] लपं. ६. नास्ति अ[1]. ७. °रेवेति वि[1].

उपो अदर्शि शुन्ध्युवो न वक्षो नोधाइवाविरकृत प्रियाणि ।
अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम् ॥ ४ ॥

उपो इति । अदर्शि । शुन्ध्युवः । न । वक्षः । नोधाःऽइव । आविः । अकृत । प्रियाणि ।
अद्मऽसत् । न । ससतः । बोधयन्ती । शश्वत्ऽतमा । आ । अगात् । पुनः । आऽईयुषीणाम् ॥४॥

**वेङ्कट०** उषा उपदृश्यते शोधयितुरादित्यस्य वक्षः इव । सेयमृषिः नोधाः इव स्तुत्या कामान् आविष्कुरुते रूपाणि । सूदन्नी इवान्ने सीदन्ती सिद्धेऽन्ने स्वामिनः स्वपतः बोधयन्ती नित्या आगता पुनःपुनरागच्छन्तीनामुषसां मध्ये ॥ ४ ॥

पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम् ।
व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥ ५ ॥

पूर्वे । अर्धे । रजसः । अप्त्यस्य । गवाम् । जनित्री । अकृत । प्र । केतुम् ।
वि । ऊँ इति । प्रथते । विऽतरम् । वरीयः । आ । उभा । पृणन्ती । पित्रोः । उपऽस्था ॥ ५ ॥

**वेङ्कट०** अद्भ्यो जातस्य पूर्वस्मिन् भागेऽन्तरिक्षस्योषास्तेजसां जनयित्र्यादित्यस्य तेजः प्रकृणोति[1] । उरुत्वं चातिशयेन तत्र विप्रथयति द्यावापृथिव्योरुभावुपस्थावापूरयन्ती तेजसा ॥ ५ ॥

[2]इति द्वितीयाष्टके प्रथमाध्याये सप्तमो वर्गः[2] ॥

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम् ।
अरेपसा तन्वा३ शाशदाना नार्भादीषते न महो विभाती ॥ ६ ॥

एव । इत् । एषा । पुरुऽतमा । दृशे । कम् । न । अजामिम् । न । परि । वृणक्ति । जामिम् ।
अरेपसा । तन्वा । शाशदाना । न । अर्भात् । ईषते । न । महः । विऽभाती ॥ ६ ॥

**वेङ्कट०** एवमेव एषा पुरुतमा दर्शनाय भवति । न च वर्जयति बन्धुम् अबन्धुं वा । उज्ज्वलया तन्वा सर्वम् अपबाधमाना सेयं कुमारात् न[3] पलायते, न च वृद्धात्, व्युच्छन्ती । सर्वं जरयतीति ॥६॥

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥ ७ ॥

अभ्राताऽइव । पुंसः । एति । प्रतीची । गर्तऽआरुगिव । सनये । धनानाम् ।
जायाऽइव । पत्ये । उशती । सुऽवासाः । उषाः । हस्राऽइव । नि । रिणीते । अप्सः ॥ ७ ॥

---

१. प्रकरोति ल शोधः. २-२ नास्ति मूको. ३. न च वि[2].

**वेङ्कट०** यथा अभ्रातृका कन्यका[1] पुंसः पितॄन् एति अभिमुखी सन्तानकर्मणे पिण्डदानाय, न पतीन्। एवमुषा अभिमुख्यागच्छति, गर्तारोहिणीव धनलाभायाक्षिकान्। गर्तो द्यूतास्तारः, तमपतिकाऽपुत्रा[2] च स्त्री भर्तुर्धनहरणायाऽऽरोहति[3]। तां तत्राक्षेण कितवा घ्नन्ति। न सा ततोऽन्यमाश्रयते, न च तामन्यः परिगृह्णाति, धनमुपगच्छति च दाक्षिणात्येषु। जाया इव पत्ये कामयमाना सुवासाः ऋतुकालेषु उषाः हसना इव स्त्री दन्तान् आत्मीयं रूपं विवृणुत इति ॥ ७ ॥

स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव ।
व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगा इव व्राः ॥ ८ ॥

स्वसा । स्वस्रे । ज्यायस्यै । योनिम् । अरैक् । अप । एति । अस्याः । प्रतिचक्ष्यऽइव ।
विऽउच्छन्ती । रश्मिऽभिः । सूर्यस्य । अञ्जि । अङ्क्ते । समनगाःऽइव । व्राः ॥ ८ ॥

**वेङ्कट०** रात्रिर्ज्येष्ठायै स्वस्रे उषसे[4] स्थानमरिचत्। तामुषसं दृष्ट्वेव रात्रिरपगच्छति तस्याः सकाशात्। अपि वा यथा[5] श्वशुरं[6] दृष्ट्वा स्नुषाऽपगच्छत्येवमिति। सेयं सूर्यतेजोभिः सह प्रादुर्भवन्ती अञ्जनसाधनं तेज आत्मनि अङ्क्ते, यथा [7]युद्धे गच्छन्तो[7] वृता आभरणैः ॥ ८ ॥

आसां पूर्वासामहसु स्वसॄणामपरा पूर्वामभ्येति पश्चात् ।
ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥ ९ ॥

आसाम् । पूर्वासाम् । अहऽसु । स्वसॄणाम् । अपरा । पूर्वाम् । अभि । एति । पश्चात् ।
ताः । प्रत्नऽवत् । नव्यसीः । नूनम् । अस्मे इति । रेवत् । उच्छन्तु । सुऽदिनाः । उषसः ॥ ९ ॥

**वेङ्कट०** आसाम् उषसां पूर्वकालानाम् उत्तरोषाः[8] पूर्वाम् गतांगताम् पश्चात् अभि एति अनुक्रमेण गतेष्वहःस्वगमत्[9]। ताः पुराणा इवेदानीं नवतरा अस्माकं धनयुक्तं व्युच्छन्तु शोभन-दिवसाः। एकस्माज्जननात् सहागमनाद्वा स्वसारः उषसः इति ॥ ९ ॥

प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु ।
रेवदुच्छ मघवद्भ्यो मघोनि रेवत् स्तोत्रे सूनृते जारयन्ती ॥ १० ॥

प्र । बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः । ससन्तु ।
रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे । सूनृते । जरयन्ती ॥ १० ॥

---

१. कन्या अ[1]. २ °मपतीक° वि[1] लपं; °मतिक° वि[2] अ[1]; °मपतिक° ल मूको. ३. °य रोहति लपं. ४. नास्ति वि[1] लपं. ५-५. नास्ति वि[1] लपं. ६. श्वशुरं मूको. ७-७. गच्छन्तो युद्धे लपं. ८. °रा उ° वि[1,2] अ लपं. ९. गते···गमः वि[2]; °गमत् वि[1] अ[1] ल लपं.

**वेङ्कट०** [1]प्र बोधय उषः![1] प्रयच्छतः[2] उदारान् धनवति! । अबुध्यमानाः कदर्याः स्वपन्तु । धनयुक्तं व्युच्छ धनवद्भ्यः मघोनि! रेवत् स्तोत्रे मह्यम् सूनृते! स्तोत्रं कारयन्ती । [3]जरतिः स्तुतिकर्मा ( तु. या १०,८ ) इति[3] ॥ १० ॥

[1]इति द्वितीयाष्टके प्रथमाध्यायेऽष्टमो वर्गः[1] ॥

**अवेयमश्वैद् युवतिः पुरस्ताद् युङ्क्ते गवामरुणानामनीकम् ।**
**वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥ ११ ॥**

अव । इयम् । अश्वैत् । युवतिः । पुरस्तात् । युङ्क्ते । गवाम् । अरुणानाम् । अनीकम् ।
वि । नूनम् । उच्छात् । असति । प्र । केतुः । गृहम्ऽगृहम् । उप । तिष्ठाते । अग्निः ॥ ११ ॥

**वेङ्कट०** इयम् अधो द्योतते युवतिः पूर्वस्यां दिशि । युङ्क्ते च अश्वानाम् अरुणवर्णानां समूहं रथे । सेयं[4] व्युष्टाऽभवत् । सम्प्रति प्रभवति च प्रज्ञानम् । अथाऽनुगृहम् अग्निः स्वाहाप्रतिग्रहार्थं[5] सङ्गच्छते ॥ ११ ॥

**उत् ते वयश्चिद् वसतेरपप्तन् नरश्च ये पितुभाजो व्युष्टौ ।**
**अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ १२ ॥**

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ ।
अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय ॥ १२ ॥

**वेङ्कट०** तव व्युष्टौ पक्षिणोऽपि वसतेः उत् अपप्तन् मनुष्याः च ये अन्नस्य भाजकाः । गृहे वसते याचितृभ्यः प्रयच्छते मनुष्याय त्वम् उषः![6] देवि! बहु धनम् वहसि ॥ १२ ॥

**अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः ।**
**युष्माकं देवीरवसा सनेम सहस्रिणं च शतिनं च वाजम् ॥ १३ ॥**

अस्तोढ्वम् । स्तोम्याः । ब्रह्मणा । मे । अवीवृधध्वम् । उशतीः । उषसः ।
युष्माकम् । देवीः । अवसा । सनेम । सहस्रिणम् । च । शतिनम् । च । वाजम् ॥ १३ ॥

**वेङ्कट०** हे स्तोमार्हा उषसः! यूयं मम अनेन स्तोत्रेण स्तुता भवत[7] । वर्धयतास्मान् कामयमानाः उषसः! । युष्माकम् देव्यः! पालनेन सम्भजेमहि[8] सहस्रसङ्ख्याकं शतसङ्ख्याकम् च अन्नम् ॥ १३ ॥

[1]इति द्वितीयाष्टके प्रथमाध्याये नवमो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. प्रयच्छत ल; प्रयच्छ अ ल शोधः. ३-३. जरयति कर्मेति मूको.
४. सेयम् लपं. ५. स्वभागप्र° वि[२] अ. ६. उष वि[२] ल लपं. ७. नास्ति वि[१] लपं; अभव° वि[२].
८. भजे° लपं.

[ १२५ ]

[1]कक्षीवान् ऋषिः । दानं देवता । त्रिष्टुप् छन्दः, चतुर्थीपञ्चम्यौ जगत्यौ[1] ।

प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान् प्रतिगृह्या नि धत्ते ।
तेन प्रजां वर्धयमान आयू रायस्पोषेण सचते सुवीरः ॥ १ ॥

प्रातरिति । रत्नम् । प्रातःइत्वा । दधाति । तम् । चिकित्वान् । प्रतिऽगृह्य । नि । धत्ते ।
तेन । प्रऽजाम् । वर्धयमानः । आयुः । रायः । पोषेण । सचते । सुऽवीरः ॥ १ ॥

**वेङ्कट०** स्वनयस्य[2] दानस्तुतिः । प्रातः **धनं प्रातरागन्ता स्वनयः प्रयच्छति** । तम् **प्राज्ञः कक्षीवान्** प्रतिगृह्य [3]नि धत्ते[3] । **लिङ्गभेदश्छान्दसः** । तेन **धनेन** प्रजाम् आयुः **च** वर्धयमानः **धनस्य** पोषेण **संसृष्टो भवति शोभनवीरः[4] कक्षीवानिति** ॥ १ ॥

सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥ २ ॥

सुऽगुः । असत् । सुऽहिरण्यः । सुऽअश्वः । बृहत् । अस्मै । वयः । इन्द्रः । दधाति ।
यः । त्वा । आऽयन्तम् । वसुना । प्रातःऽइत्वः । मुक्षीजयाऽइव । पदिम् । उत्ऽसिनाति ॥२॥

**वेङ्कट०** सुगुः भवतु सुहिरण्यः स्वश्वः । **महच्च** अस्मै वयः इन्द्रः [5]**प्रयच्छतु** । यः त्वा आयन्तम् वसुना **धनेन प्रातर्गामिन्! अतिथे! कक्षीवन्!, मुक्षीजा जालपाशिका, यथा जालपाशिकया कश्चित् पक्षिणं निरुन्ध्याद् एवं त्वां निरुणद्धि स्वनयः, इति कक्षीवान् आशिषम्[5] आशास्ते[6] स्वनयाय** ॥ २ ॥

आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन ।
अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः ॥ ३ ॥

आयम् । अद्य । सुऽकृतम् । प्रातः । इच्छन् । इष्टेः । पुत्रम् । वसुऽमता । रथेन ।
अंशोः । सुतम् । पायय । मत्सरस्य । क्षयत्ऽवीरम् । वर्धय । सूनृताभिः ॥ ३ ॥

**वेङ्कट०** **गतवानस्मि** अद्य[7] सुकृतम् प्रातः **एव धनमिच्छन्** इष्टेः पुत्रम् **स्वनयम्** वसुमता रथेन **सहितम्**, अंशोः **सोमलतायाः** सुतम् **माम्** पायय **मादयित्र्याः**,[8] **क्षपितवीरं माम्** वर्धय **धनप्रदात्रीभिर्वाग्भिरिति । वदन्निति शेषः** ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति अ. ३-३. विध° वि[2] लपं. ४. वीरः वि[2] अ. ५-५. नास्ति वि[2] अ[1]. ६. प्रशा° वि[2] अ[1]. ७. नास्ति अ[1]. ८. मदायित्र्या वि[2] अ[1].

उप॑ क्षरन्ति॒ सिन्ध॑वो मयो॒भुव॑ ईजा॒नं च॑ य॒क्ष्यमा॑णं च धे॒नव॑: ।
पृ॒णन्तं॑ च॒ पपु॑रिं च श्र॒व॒स्यवो॑ घृ॒तस्य॒ धारा॒ उप॑ यन्ति वि॒श्वत॑: ॥ ४ ॥

उप॑ । क्ष॒रन्ति॒ । सिन्ध॑वः । म॒यः॒ऽभुव॑: । ई॒जा॒नम् । च॒ । य॒क्ष्यमा॑णम् । च॒ । धे॒नव॑: ।
पृ॒णन्त॑म् । च॒ । पपु॑रिम् । च॒ । श्र॒व॒स्यव॑: । घृ॒तस्य॑ । धारा॑: । उप॑ । य॒न्ति॒ । वि॒श्वत॑: ॥ ४ ॥

**वेङ्कट०** **उपेत्य** क्षरन्ति सिन्धवः **सुखस्य भावयित्र्यः** ईजानम् च यक्ष्यमाणम् च **पयस्विन्यः । याचितृभ्यो धनानि प्रयच्छन्तं दत्तवन्तम्** च **तस्यान्नमिच्छमानाः**[1] **उदकधाराः सर्वत उपक्षरन्ति** ॥ ४ ॥

नाक॑स्य पृ॒ष्ठे अधि॑ तिष्ठति श्रि॒तो यः पृ॒णाति॒ स ह॑ दे॒वेषु॑ गच्छति ।
तस्मा॒ आपो॑ घृ॒तम॑र्षन्ति॒ सिन्ध॑व॒स्तस्मा॑ इ॒यं दक्षि॑णा पिन्वते॒ सदा॑ ॥ ५ ॥

नाक॑स्य । पृ॒ष्ठे । अधि॑ । ति॒ष्ठ॒ति॒ । श्रि॒तः । यः । पृ॒णाति॑ । सः । ह॒ । दे॒वेषु॑ । ग॒च्छ॒ति॒ ।
तस्मै॑ । आप॑: । घृ॒तम् । अ॒र्ष॒न्ति॒ । सिन्ध॑वः । तस्मै॑ । इ॒यम् । दक्षि॑णा । पि॒न्व॒ते॒ । सदा॑ ॥ ५ ॥

**स्वर्गस्योपरि** तिष्ठति श्रितः । यः **प्रयच्छति,** [2]सः **खलु** देवेषु गच्छति[2] । तस्मै **प्रदात्र इमाः**[3] **स्यन्दनशीलाः** आपः **स्वसारं प्रेरयन्ति** । तस्मै इयम् **दीयमाना** दक्षिणा सदा **कामान् दोग्धि** ॥ ५ ॥

दक्षि॑णावतामि॒दि॒मानि॑ चि॒त्रा दक्षि॑णावतां दि॒वि सू॒र्या॑सः ।
दक्षि॑णावन्तो अ॒मृतं॑ भजन्ते॒ दक्षि॑णावन्तः॒ प्र ति॑रन्त॒ आयु॑: ।

दक्षि॑णाऽवताम् । इत् । इ॒मानि॑ । चि॒त्रा । दक्षि॑णाऽवताम् । दि॒वि । सू॒र्या॑सः ।
दक्षि॑णाऽवन्तः । अ॒मृत॑म् । भ॒ज॒न्ते॒ । दक्षि॑णाऽवन्तः । प्र । ति॒र॒न्ते॒ । आयु॑: ॥ ६ ॥

**वेङ्कट०** [4]**प्रदानवतामेवास्मिँल्लोके** इमानि **चित्राणि गृहशय्यासनानि दृश्यन्ते** । दक्षिणावताम्[4] एव **अमुष्मिंश्च लोके सूर्याः प्रकाशं कुर्वन्ति । बहुवचने न तात्पर्यम्**[5]...... । दक्षिणावन्तः **एवामृतत्वम्** भजन्ते । दक्षिणावन्तः **एव** [6]**आयुः वर्धयन्ति**[6] ॥ ६ ॥

मा पृ॒णन्तो॒ दुरि॑तमेन॒ आर॒न् मा जा॑रिषुः सू॒रय॑: सुव्र॒तास॑: ।
अ॒न्यस्तेषां॑ परि॒धिर॑स्तु॒ कश्चि॒दपृ॑णन्तम॒भि सं य॑न्तु॒ शोका॑: ॥ ७ ॥

---

१. °मिच्छन्तः ल **शोधः**. २-२. **नास्ति वि**[1] **लपं**. ३. **नास्ति ल लपं**. ४-४. **नास्ति लपं**.
५. **°वै** ··· भजन्ते **वि**[1] **ल अ**[1]. ६-६. यन्ति **वि**[2] **अ**[1].

मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः ।
अन्यः । तेषाम् । परिऽधिः । अस्तु । कः । चित् । अपृणन्तम् । अभि । सम् । यन्तु । शोकाः ॥

**वेङ्कट०** दरिद्रेभ्यः प्रयच्छन्तो दुर्गतिं पापं च मा गमन्। मा च ते जीर्णा भूवन् प्राज्ञाः सुकर्माणः। अन्यः कः चित् एषाम् [1]परिधिः अस्तु। यो[1] दुरितानि परिदधाति, निरुणद्धि पुरुषान्[2], स परिधिः। अप्रयच्छन्तमेव दुरितादय आभिमुख्येन सङ्गच्छन्ताम् इति कक्षीवतः प्रतिजिघृक्षोः स्वनयमभिगच्छतो वचनानीति ॥ ७ ॥

[3]इति द्वितीयाष्टके प्रथमाध्याये दशमो वर्गः[3] ॥

## [ १२६ ]

[3]आदितः पञ्चानां कक्षीवान् ऋषिः। षष्ठ्याः भावयव्यः, सप्तम्याः रोमशा नाम ब्रह्मवादिनी। आदितः पञ्चानां सप्तम्याश्च भावयव्यः, षष्ठ्या रोमशा देवता। आदितः पञ्च त्रिष्टुभः, अन्त्ये अनुष्टुभौ।

अमन्दान्त्स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥ १ ॥

अमन्दान् । स्तोमान् । प्र । भरे । मनीषा । सिन्धौ । अधि । क्षियतः । भाव्यस्य ।
यः । मे । सहस्रम् । अमिमीत । सवान् । अतूर्तः । राजा । श्रवः । इच्छमानः ॥ १ ॥

**वेङ्कट०** सूक्तेनानेन दत्तानि धनान्यवयवशो निर्दिशति। अनल्पाः स्तुतीरहं प्रज्ञया[4] प्रभरामि सिन्धुदेशे वर्तमानस्य भाव्यपुत्रस्य स्वनयस्य। यः मे सहस्रम् निरमिमीत धनानां प्रसवान् शत्रुभिरतीर्णः राजा प्रशंसामिच्छन् ॥ १ ॥

शतं राज्ञो नाधमानस्य निष्कान्छतमश्वान् प्रयतान्त्सद्य आदम् ।
शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥ २ ॥

शतम् । राज्ञः । नाधमानस्य । निष्कान् । शतम् । अश्वान् । प्रऽयतान् । सद्यः । आदम् ।
शतम् । कक्षीवान् । असुरस्य । गोनाम् । दिवि । श्रवः । अजरम् । आ । ततान ॥ २ ॥

**वेङ्कट०** शतम् राज्ञः ईशानस्य[5] सौवर्णान् निष्कान् शतम् च अश्वान् शुद्धवर्णान् सद्यः एव अहम्[6] आदम् अदिः प्रतिग्रहकर्मा। कक्षीवान् प्राज्ञस्य गवाम् शतम् चाऽऽदत्। स्वनयश्च दिवि कीर्तिं जरया[7] वर्जितां विस्तारितवान् देवेषु ॥ २ ॥

---

१-१. नास्ति वि[2] अ[1]. २. वृषान् वि[1] लपं. ३-३. नास्ति मूको. ४. नास्ति वि[1] लपं; [°]ज्ञायाः वि[2] अ[1]. ५. ईजान[°] वि[1] लपं. ६. एवम् लपं. ७. जरा लपं.

उप॑ मा श्या॒वाः स्व॒नये॑न द॒त्ता व॒धूम॑न्तो॒ दश॒ रथा॑सो अस्थुः ।
ष॒ष्टिः स॒हस्र॒मनु॒ गव्य॒माग॒त् सन॑त् क॒क्षीवाँ॑ अभिपि॒त्वे अह्ना॑म् ॥ ३ ॥

उप॑ । मा । श्या॒वाः । स्व॒नये॑न । द॒त्ताः । व॒धूऽम॑न्तः । दश॑ । रथा॑सः । अ॒स्थुः ।
ष॒ष्टिः । स॒हस्र॑म् । अनु॑ । गव्य॑म् । आ । अ॒गा॒त् । सन॑त् । क॒क्षीवा॑न् । अ॒भि॒ऽपि॒त्वे । अह्ना॑म ॥३॥

वेङ्कट० भूयोभूयः सञ्चरणात् श्याववर्णाः स्वनयेन दत्ताः वधूभिरधिष्ठिताः दश रथाः माम् उपस्थिताः । यथा गोषु भवम् षष्ट्यधिकम् सहस्रम् च माम् अनु आ अगात् । तदेतत् सर्वम्[1] कक्षीवान् अभजत् अह्नाम् अभिप्राप्तौ प्रातः[2] ॥ ३ ॥

च॒त्वा॒रिं॒शद् दश॑रथस्य॒ शोणाः॑ स॒हस्र॒स्याग्रे॒ श्रेणिं॑ नयन्ति ।
म॒द॒च्युतः॑ कृश॒नाव॑तो॒ अत्या॑न् क॒क्षीव॑न्त॒ उद॑मृक्षन्त प॒ज्राः ॥ ४ ॥

च॒त्वा॒रिं॒शत् । दश॑ऽरथस्य । शोणाः॑ । स॒हस्र॑स्य । अग्रे॑ । श्रेणि॑म् । न॒य॒न्ति॒ ।
म॒द॒ऽच्युतः॑ । कृ॒श॒न॒ऽव॑तः । अत्या॑न् । क॒क्षीव॑न्तः । उत् । अ॒मृ॒क्ष॒न्त॒ । प॒ज्राः ॥ ४ ॥

वेङ्कट० दश रथा यस्मिन् सङ्घे स[3] दशरथः तस्य[4] प्रत्येकं चतस्रः शोणवर्णा अश्वा भवन्ति । ताश्च अग्रे गवाम् सहस्रस्य श्रेणिम् नयन्ति । मदस्य च्यावयितॄन् हिरण्मयालङ्कारान्[5] अश्वान् पज्रकुलजातः[6] कक्षीवान् प्रतिगृहीतान् पृष्ठे सम्ममर्श ॥ ४ ॥

पूर्वा॒मनु॒ प्रय॑ति॒मा द॑दे व॒स्त्रीन् यु॒क्ताँ अ॒ष्टाव॒रिधा॑यसो॒ गाः ।
सु॒बन्ध॑वो॒ ये वि॒श्या॑ इव॒ व्रा अन॑स्वन्तः॒ श्रव॒ ऐष॑न्त प॒ज्राः ॥ ५ ॥

पूर्वा॑म् । अनु॑ । प्रऽय॑तिम् । आ । द॒दे॒ । वः॒ । त्रीन् । यु॒क्तान् । अ॒ष्टौ । अ॒रिऽधा॑यसः । गाः ।
सु॒ऽबन्ध॑वः । ये । वि॒श्याः॑ऽइव । व्राः । अन॑स्वन्तः । श्रवः॑ । ऐष॑न्त । प॒ज्राः ॥ ५ ॥

वेङ्कट० 'शतम् राज्ञः' ( ऋ १,१२६,२ ) इत्यादिकं प्रदानं स्वनयात् युष्मदर्थम् अनुक्रमेण प्रतिगृहीतवानहमस्मीति ज्ञातीन् प्रत्याह । त्रीन् युक्तान् रथान् अष्टौ च गाः अभिगन्तॄणां मनुष्याणां धारकाः । शोभनज्ञातयः ये मनुष्येषु भवा इव व्राताः पर्यटन्तोऽनस्संयुक्ताः[7] अन्नम् ऐच्छन् पज्रकुलजाताः[8] ॥५॥

आग॑धिता॒ परि॑गधिता॒ या क॑शी॒केव॒ जङ्ग॑हे ।
ददा॑ति॒ मह्यं॒ यादु॑री॒ याशू॑नां भो॒ज्या॑ श॒ता ॥ ६ ॥

आऽग॑धिता । परि॑ऽगधिता । या । क॒शी॒काऽइ॑व । जङ्ग॑हे ।
ददा॑ति । मह्य॑म् । यादु॑री । याशू॑नाम् । भो॒ज्या॑ । श॒ता ॥ ६ ॥

---

१. नास्ति वि[1] ल लपं. २. °त्ः वि[2]; °त्तश्च अ[1]. ३. नास्ति वि[2] अ[1] लपं. ४. नास्ति मूको. ५. °ण्यम° ल लपं. ६. वज्र° वि[2] अ[1]. ७. °न्तो न संयु° मूको. ८. वज्र° वि[1,2] अ[1] लपं.

वेङ्कट० 'प्रादात् सुतां रोमशां नाम[1] नाम्ना, बृहस्पतिर्भावयव्याय[2] राज्ञे' ॥ (बृदे ३,१५६)

ततस्तमर्थं हरिवान् विदित्वा, प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु [3]शचीसहायः, प्रीत्याऽऽर्चयत्तं विधिनैव[3] राजा ॥
अभ्याजगामाङ्गिरसी च तत्र दृष्ट्वा तयोः सा चरणौ ववन्दे ।
इन्द्रः सखित्वादथ तामुवाच, रोमाणि ते सन्ति न सन्ति राज्ञि ॥
सा बालभावादथ तं[4] जगाद, उपोप[5] [6]मे शक्र! परामृशेति'[6] । (बृदे ४,१-३)

आभिमुख्येन शरीरेण मिश्रिता या अङ्गैश्च परितो मिश्रिता कशीकेव[7] अत्यन्तं पुमांसं हस्ताभ्यां[1] प्रतिगृह्णाति[8] । नकुलस्त्री कशीका[7] । यादुरी स्त्री यदिरभिक्रमणकर्मा । साऽभिक्रमणवती स्त्री[1] मह्यम् यशश्चाहर्तॄणां[9] पुत्राणाम् भोगसाधनानि शतानि ददाति इति । यदृचोः[10] भावयव्यरोमशयोर्दम्पत्योरेव संवादः, तदानीं प्राप्तयौवना या पुमांसमालिङ्गते, सा पुत्रजननयोग्या ॥ ६ ॥

**उपो॑प मे॒ परा॑ मृश॒ मा मे॑ द॒भ्राणि॑ मन्यथाः ।**
**सर्वा॒हम॑स्मि रोम॒शा ग॒न्धारी॑णामिवावि॒का ॥ ७ ॥**

उप॑ऽउप । मे॒ । परा॑ । मृ॒श॒ । मा । मे॒ । द॒भ्राणि॑ । म॒न्य॒थाः॒ ।
सर्वा॑ । अ॒हम् । अ॒स्मि॒ । रो॒म॒शा । ग॒न्धारी॑णाम्ऽइव । अ॒वि॒का ॥ ७ ॥

वेङ्कट० त्वं ममाङ्गानि उप परा मृश । मा मे अल्पानि रोमाणि मंस्थाः । सर्वाङ्गा अहम् अस्मि रोमशा । [11]गन्धारयो नाम जनपदास्तत्र भवत्यूर्णा[11] । यथा गन्धारीणां[12] सम्बन्धिनी अविका इति ॥ ७ ॥

[11]इति द्वितीयाष्टके प्रथमाध्याये एकादशो वर्गः[11] ॥

## [ १२७ ]

[13]दैवोदासिः परुच्छेप ऋषिः । अग्निर्देवता । अत्यष्टिश्छन्दः, षष्ठी अतिधृतिः[13] ।

**अ॒ग्निं होता॑रं मन्ये॒ दास्व॑न्तं॒ वसुं॑ सू॒नुं सह॑सो जा॒तवे॑दसं॒ विप्रं॒ न जा॒तवे॑दसम् ।**
**य ऊ॒र्ध्वया॑ स्वध्व॒रो दे॒वो दे॒वाच्या॑ कृ॒पा ।**
**घृ॒तस्य॒ विभ्रा॑ष्टि॒मनु॑ वष्टि शो॒चिषा॒ऽऽजुह्वा॑नस्य स॒र्पिषः॑ ॥ १ ॥**

अ॒ग्निम् । होता॑रम् । म॒न्ये॒ । दास्व॑न्तम् । वसु॑म् । सू॒नुम् । सह॑सः । जा॒तऽवे॑दसम् । विप्र॑म् । न । जा॒तऽवे॑दसम् ॥ यः । ऊ॒र्ध्वया॑ । सु॒ऽअ॒ध्व॒रः । दे॒वः । दे॒वाच्या॑ । कृ॒पा ।
घृ॒तस्य॑ । विऽभ्रा॑ष्टिम् । अनु॑ । व॒ष्टि॒ । शो॒चिषा॑ । आ॒ऽजुह्वा॑नस्य । स॒र्पिषः॑ ॥ १ ॥

---

१. नास्ति वि[1] लपं. २. °भेव° वि[1] लपं. ३-३. सह ··· विधि° वि[2] ४. तत् लपं. ५. °उप···पो वि[1]; उपप लपं. ६-६. मृशेति वि[2]. ७. कशिका लपं. ८. परिगृ° अ[1]. ९. नास्तिवि[2] अ[1]; मशासाहर्तृणां वि[1] अ[1] ल लपं; ···तृणां वि[2]. १०. मदृच वि[1]'' अ[1] लः यदा यदृचो लपं. ११-११. नास्ति लपं. १२. गा° अ[1] लपं. १३-१३. नास्ति मूको.

**वेङ्कट०** परुच्छेपो[1] दैवोदासिः । तत्र शौनकः —

जागतौ प्रथमौ पादौ पादः षष्ठस्तथैव च ।
अष्टकास्त्वितरे[2] पादाः पारुच्छेपेषु[3] प्रायशः ॥ इति ॥

अग्निम् होतारम् स्तौमि दानवन्तं वासयितारम् सहसः पुत्रम् जातप्रज्ञं ब्राह्मणम् इव । यः ऊर्ध्वया देवानञ्चन्त्या ज्वालया सुयशो भवति । देवः सः घृतस्य [4]विभ्रंशनं ज्वालया[4] अनु कामयते हूयमानस्य सरणशीलस्य[5] । अनुपात्तानि पदानि पूरणानि । यास्कस्त्वाह— 'अभ्यासे भूयांसमर्थं मन्यन्ते यथा अहो दर्शनीय! अहो दर्शनीय! इति । तत्परुच्छेपस्य शीलम् (१०,४२) इति ॥ १ ॥

**यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः ।**
**परिज्मानमिव द्यां होतारं चर्षणीनाम् ।**
**शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ २ ॥**

यजिष्ठम् । त्वा । यजमानाः । हुवेम । ज्येष्ठम् । अङ्गिरसाम् । विप्र । मन्मऽभिः । विप्रेभिः । शुक्र । मन्मऽभिः ।
परिज्मानम्ऽइव । द्याम् । होतारम् । चर्षणीनाम् ।
शोचिःऽकेशम् । वृषणम् । यम् । इमाः । विशः । प्र । अवन्तु । जूतये । विशः ॥ २ ॥

**वेङ्कट०** यष्टृतमं त्वाम्[6] यजमानाः हुवेम प्रशस्यम् अङ्गिरसाम् [7]प्राज्ञ! मन्मभिः[7] मेधाविभिः दीप्त! परितो गन्तारमिव आदित्यम् होतारम् यजमानानाम् । ज्वालाकेशं वर्षितारम् यम्[8] इमाः सर्वविशः स्तोत्रैः प्रगच्छन्ति, तं मदीयाश्च प्रगच्छन्तु[8] कामानामाकर्षणार्थमिति ॥ २ ॥

**स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहन्तरः परशुर्न द्रुहन्तरः ।**
**वीळु चिद् यस्य समृतौ श्रुवद् वनेव यत् स्थिरम् ।**
**निष्षहमाणो यमते नायते धन्वासहा नायते ॥ ३ ॥**

सः । हि । पुरु । चित् । ओजसा । विरुक्मता । दीद्यानः । भवति । द्रुहम्ऽतरः । परशुः । न । द्रुहम्ऽतरः ।
वीळु । चित् । यस्य । सम्ऽऋतौ । श्रुवत् । वनाऽइव । यत् । स्थिरम् ।
निःऽसहमानः । यमते । न । अयते । धन्वऽसहा । न । अयते ॥ ३ ॥

**वेङ्कट०** सः हि बहु अपि विरोचनवता बलेन दीप्यमानः भवति कुठारः इव । दृढमपि यस्य सङ्गतौ श्रूयते । जलानि इव दह्यमानम् यत् स्थिरम् भवति । सोऽयमभिभवन् द्रोग्धॄन्[9] नियच्छति । न च तेभ्यो गच्छति । धनुषाऽभिभवन् शत्रून् न पलायते ॥ ३ ॥

---

१. पुरु° लप. २. °स्वि° वि[1,2] ल लपं. ३. °पे तु ल. ४-४. विभ्रश्यमानज्वा° मूको; विभ्रश्यमानं ज्वा° ल शोधः. ५. नास्ति वि[1] लपं. ६. त्वा वि[1]. ७-७. प्राज्ञभिः वि[1,2]; प्राज्ञैभिः अ[1]; प्राज्ञः! ···भिः ल; प्राज्ञभिः लपं. ८. प्रा° वि[1] लपं. ९. द्रोग्धृन् ल; द्रो लप; द्रुग्धृन् अ[1].

दृळ्हा चिदस्मा अनु दुर्यथा विदे तेजिष्ठाभिररणिभिर्दाष्ट्यवसेऽग्नये दाष्ट्यवसे ।
प्र यः पुरूणि गाहते तक्षद् वनेव शोचिषा ।
स्थिरा चिदन्ना नि रिणात्योजसा नि स्थिराणि चिदोजसा ॥ ४ ॥

दृळ्हा । चित् । अस्मै । अनु । दुः । यथा । विदे । तेजिष्ठाभिः । अरणिऽभिः । दाष्टि । अवसे । अग्नये । दाष्टि । अवसे ॥ प्र । यः । पुरूणि । गाहते । तक्षत् । वनाऽइव । शोचिषा । स्थिरा । चित् । अन्ना । नि । रिणाति । ओजसा । नि । स्थिराणि । चित् । ओजसा ॥ ४ ॥

**वेङ्कट०** सारवन्ति अपि[1] अन्नानि अस्मै अनु दुः यथा अतिथये विदुषे । दीप्ततरैः सह अस्मै अग्नये हविः प्रयच्छति रक्षणाय । यः पुरूणि अपि बलानि प्र गाहते । तनूकरोति च वृक्षानिव तेजसा । स स्थिराण्यपि आत्मनोऽन्नानि काष्ठादीनि विनाशयति बलेन । प्रकारान्तरेणाऽऽह नि स्थिराणि इति ॥४॥

तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात् ।
आदस्यायुर्ग्रभणवद् वीळु शर्म न सूनवे ।
भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः ॥ ५ ॥

तम् । अस्य । पृक्षम् । उपरासु । धीमहि । नक्तम् । यः । सुदर्शऽतरः । दिवाऽतरात् । अप्रऽआयुषे । दिवाऽतरात् ॥ आत् । अस्य । आयुः । ग्रभणऽवत् । वीळु । शर्म । न । सूनवे । भक्तम् । अभक्तम् । अवः । व्यन्तः । अजराः । अग्नयः । व्यन्तः । अजराः ॥ ५ ॥

**वेङ्कट०** तद् अन्नम् अस्य ग्रावसु निधीमहि । रात्रौ यः सुदर्शतरः भवति अह्नोऽपि अप्रगच्छतः । [2]त्रिरम्याभिधानात् समन्वयश्चतुर्थ्याः । अनन्तरम् अस्य अन्नम् स्तोतृभ्यो[2] ग्रहणवद्भवति दृढम् [3]इव गृहं पितृस्वभूतम्[3] सूनवे । यथा पित्र्यं गृहं पुत्रो भजते, एवमन्नमग्नेः स्तोतारः । भजनीयं पुरोडाशादिकम् अभजनीयं काष्ठादिकञ्च अन्नं खादन्तः अजराः भवन्ति अग्नयः ॥ ५ ॥

[4]इति द्वितीयाष्टके प्रथमाध्याये द्वादशो वर्गः[4] ॥

स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः ।
आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा ।
अध स्मास्य हर्षतो हृषीवतो विश्वे जुषन्त पन्थां नरः शुभे न पन्थाम् ॥ ६ ॥

सः । हि । शर्धः । न । मारुतम् । तुविऽस्वनिः । अप्नस्वतीषु । उर्वरासु । इष्टनिः । आर्तनासु । इष्टनिः । आदत् । हव्यानि । आऽददिः । यज्ञस्य । केतुः । अर्हणा । अध । स्म । अस्य । हर्षतः । हृषीवतः । विश्वे । जुषन्त । पन्थाम् । नरः । शुभे । न । पन्थाम् ॥६॥

---

१. नास्ति लपं वि[1]. २-२. °विरम्य...स्तोतृ° वि[2] अ[1]. ३-३. इव...भूतं वि[2] अ[1]. ४-४. नास्ति मूको.

वेङ्कट० सः हि मारुतम् इव शर्धः[1] बहुशब्दः कर्मवतीषु[2] यज्ञभूमिषु[3] अन्वेषणीयः आर्तिष्वपि भक्षयति हवींषि आदानशीलः यज्ञस्य ध्वजभूतः पूजनीयः। [4]अथ अस्य[4] हृष्यतः हर्षवन्तः[5] सर्वे एव मनुष्याः गमनमार्गं सेवन्ते। यथा श्लाघार्थं युवानः पन्थानमलङ्कृताः सेवन्ते प्रकाशम् ॥ ६ ॥

द्विता यदीं कीस्तासो अभिद्यवो नमस्यन्त उपवोचन्त भृगवो मथ्नन्तो दाशा भृगवः।
अग्निरीशे वसूनां शुचिर्यो धर्णिरेषाम्।
प्रियाँ अपिधीँर्वनिषीष्ट मेधिर आ वनिषीष्ट मेधिरः ॥ ७ ॥

द्विता। यत्। ईम्। कीस्तासः। अभिऽद्यवः। नमस्यन्तः। उपऽवोचन्त। भृगवः।
मथ्नन्तः। दाशा। भृगवः ॥ अग्निः। ईशे। वसूनाम्। शुचिः। यः। धर्णिः। एषाम्।
प्रियान्। अपिऽधीन्। वनिषीष्ट। मेधिरः। आ। वनिषीष्ट। मेधिरः ॥ ७ ॥

वेङ्कट० द्विधा यदा एनमग्निम् मेधाविनोऽभिगतदीप्तयः पूजयन्तः उपेत्यास्तुवन्[6] भृगवः अरण्योः हविर्वहनार्थम् मथ्नन्तः, तदानीं भृगूणाम् अग्निः धनानाम् ईश्वर आसीत्, यः एषाम् धारक आसीत्। शुचिः स इदानीम् प्रियात्मनि[7] अपिधीयमानान्[8] पुरोडाशादीन् आभिमुख्येन भजतां यज्ञियः ॥ ७ ॥

विश्वासां त्वा विशां पतिं हवामहे सर्वासां समानं दंपतिं भुजे सत्यगिर्वाहसं भुजे।
अतिथिं मानुषाणां पितुर्न यस्यासया।
अमी च विश्वे अमृतास आ वयो हव्या देवेष्वा वयः ॥ ८ ॥

विश्वासाम्। त्वा। विशाम्। पतिम्। हवामहे। सर्वासाम्। समानम्। दम्ऽपतिम्। भुजे। सत्यऽगिर्वाहसम्।
भुजे ॥ अतिथिम्। मानुषाणाम्। पितुः। न। यस्य। आसया।
अमी इति। च। विश्वे। अमृतासः। आ। वयः। हव्या। देवेषु। आ। वयः ॥ ८ ॥

वेङ्कट० [9]सर्वेषाम् मनुष्याणाम्[9] पतिम् त्वा हवामहे। सर्वासाम्§ एव विशाम् साधारणं गृहपतिम् आत्मनो भोजनाय सत्याः स्तोतृगिरो यस्य वोढव्याः¶ तं‡ मनुष्याणाम् अतिथिम् पितुः इव† सर्वेषां†[1] रक्षकस्य यस्य आस्येन सर्वे एव मनुष्या भुञ्जते। देवाः च हव्यानि हि। देवेषु अन्नमा-भोज्यम् अन्नानि च अग्नौ हूयन्ते। यथा[10] पितुर्धनं पुत्रा आददते, एवं यस्याऽऽस्येनाऽऽददते देवाः मनुष्याणामन्नमिति ॥ ८ ॥

---

१. °र्धः शब्दे अर्था वि[2] अ[1]. २. °षु च अ[1]. ३. °षु अन्ते अ[1]. ४-४. यस्य अ[1]. ५. नास्ति वि[2] अ[1].
६. °स्तुवन्···त्रुटितम् वि[2]. ७. प्रियात्मनः ल. ८. अविधी° वि[2]. ९-९. त्रुटितम् वि[2]. † नास्ति अ[1].
§ सर्वेषामेव° ल लपं. ¶ वोढया लपं. ‡ नास्ति वि[2] कु ल लपं. १०. तथा वि[2] लपं.

त्वम॑ग्ने॒ सह॑सा॒ सह॑न्तमः शु॒ष्मिन्त॑मो जायसे दे॒वता॑तये र॒यिर्न दे॒वता॑तये ।
शु॒ष्मिन्त॑मो॒ हि ते॒ मदो॑ द्यु॒म्निन्त॑म उ॒त क्रतुः॑ ।
अध॑ स्मा ते॒ परि॑ चरन्त्यजर श्रु॒ष्टीवा॑नो॒ नाज॑र ॥ ९ ॥

त्वम् । अ॒ग्ने॒ । सह॑सा । सह॑न्ऽतमः । शु॒ष्मिन्ऽत॑मः । जा॒य॒से॒ । दे॒वऽता॑तये । र॒यिः । न । दे॒वऽता॑तये ।
शु॒ष्मिन्ऽत॑मः । हि । ते॒ । मदः॑ । द्यु॒म्निन्ऽत॑मः । उ॒त । क्रतुः॑ ।
अध॑ । स्म॒ । ते॒ । परि॑ । च॒र॒न्ति॒ । अ॒ज॒र॒ । श्रु॒ष्टीऽवा॑नः । न । अ॒ज॒र॒ ॥ ९ ॥

वेङ्कट० त्वम् अग्ने! बलेन अभिभवितृतमः शोषयितृतमः अरण्योः जायसे । यज्ञार्थम् धनम्[1] इव । तव हि सोमजनितः मदः शोषयितृतमः । प्रज्ञा चातिशयेन दीप्तिमती । तस्मात् त्वाम् परिचरन्ति जरावर्जित! क्षिप्रं व्याप्नुवन्तो दासाः इव[2] ॥ ९ ॥

प्र वो॑ म॒हे सह॑सा॒ सह॑स्वत उष॒र्बुधे॑ पशु॒षे नाग्नये॒ स्तोमो॑ बभूत्व॒ग्नये॑ ।
प्रति॒ यदीं॑ ह॒विष्मा॒न् विश्वा॑सु॒ क्षासु॒ जोगु॑वे ।
अग्रे॑ रे॒भो न ज॑रत ऋषू॒णां जूर्णि॒र्होत॑ ऋषू॒णाम् ॥ १० ॥

प्र । वः॒ । म॒हे । सह॑सा । सह॑स्वते । उ॒षः॒ऽबुधे॑ । प॒शु॒ऽसे । न । अ॒ग्नये॑ । स्तोमः॑ । ब॒भू॒तु॒ । अ॒ग्नये॑ ।
प्रति॑ । यत् । ई॒म् । ह॒विष्मा॑न् । विश्वा॑सु । क्षासु॑ । जोगु॑वे ।
अग्रे॑ । रे॒भः । न । ज॒र॒ते॒ । ऋ॒षू॒णाम् । जूर्णिः॑ । होता॑ । ऋ॒षू॒णाम् ॥ १० ॥

वेङ्कट० प्रभवतु युष्माकं स्तोमः महते बलेन तद्वते[3] अग्निहोत्रार्थमुषसि प्रबुध्यमानाय पशूनां दात्रे उदारायेव अग्नये यदैनम् आसादितहविष्कः सन् दार्शिकीषु पाशुकीषु सौमिकीषु च[4] वेदिषु प्रतिगच्छति तदानीं पश्यतां[5] मनुष्याणाम् अग्रत एनं [6]वन्दी इव[6] स्तौति स्तुतिकुशलः होता[7] ॥ १० ॥

स नो॒ नेदि॑ष्ठं॒ दद॑शान॒ आ भ॒राग्ने॑ दे॒वेभिः॒ सच॑नाः सु॒चे॒तुना॑ म॒हो रा॒यः सु॑चे॒तुना॑ ।
महि॑ शविष्ठ नस्कृधि सं॒चक्षे॑ भु॒जे अ॒स्यै ।
महि॑ स्तो॒तृभ्यो॑ मघवन्त्सु॒वीर्यं॑ मथी॑रु॒ग्रो न शव॑सा ॥ ११ ॥

सः । नः॒ । नेदि॑ष्ठम् । दद॑शानः । आ । भ॒र॒ । अग्ने॑ । दे॒वेभिः॑ । सऽच॑नाः । सु॒ऽचे॒तुना॑ । म॒हः । रा॒यः ।
सु॒ऽचे॒तुना॑ ॥ महि॑ । श॒वि॒ष्ठ॒ । नः॒ । कृ॒धि॒ । स॒म्ऽचक्षे॑ । भु॒जे । अ॒स्यै ।
महि॑ । स्तो॒तृऽभ्यः॑ । म॒घ॒ऽव॒न् । सु॒ऽवीर्य॑म् । मथीः॑ । उ॒ग्रः । न । शव॑सा ॥ ११ ॥

---

१. अन्नम् अ[1]. २. °वेति अ[1]. ३. तन्वते वि[1] अ[1] ल. ४. नास्ति वि[1] अ[1] लपं. ५. अप° वि[1] अ[1]. ६-६. वन्दीवत् वि[2] अ[1]. ७. नास्ति वि[2] अ[1].

**वेङ्कट०** सः अस्मभ्यम् अन्तिकतमम् दृश्यमानः आ भर अग्ने! देवैः सहायः[1] त्वं सर्वमनुष्यसाधारणाग्नो भवसि। शोभनप्रज्ञानेन तेजसाऽऽभरेति। महतः धनस्य नेदिष्ठम् सुचेतुना तेजसाऽऽहृत्य महत् तद्[2] धनम् बलवत्तम! अस्मभ्यं कुरु। समाश्रितानां सन्दर्शनाय च अस्मै त्वं धनवन्! स्तोतृभ्यः महत् शोभनवीर्यम् पृथक्कर्त्ता भवस्यात्मीयाद् धनात्। यथा उग्रः नाम वहननवृत्तिः[3] वध्र्यस्य[4] [5]शिरो बलेन[5] पृथक् करोति ॥ ११ ॥

[6]इति द्वितीयाष्टके प्रथमाध्याये त्रयोदशो वर्गः[6] ॥

## [ १२८ ]

[6]परुच्छेपो दैवोदासिर्ऋषि। अग्निर्देवता। अत्यष्टिश्छन्दः[6]।

**अयं जायत मनुषो धरीमणि होता यजिष्ठ उशिजामनु व्रतमग्निः स्वमनु व्रतम्।**
**विश्वश्रुष्टिः सखीयते रयिरिव श्रवस्यते।**
**अदब्धो होता नि षददिळस्पदे परिवीत इळस्पदे ॥ १ ॥**

अयम्। जायत। मनुषः। धरीमणि। होता। यजिष्ठः। उशिजाम्। अनु। व्रतम्। अग्निः। स्वम्। अनु। व्रतम् ॥ विश्वऽश्रुष्टिः। सखिऽयते। रयिःऽइव। श्रवस्यते।
अदब्धः। होता। नि। सदत्। इळः। पदे। परिऽवीतः। इळः। पदे ॥ १ ॥

**वेङ्कट०** अयम् अजायत मनुष्यस्य धारके यज्ञे होता यष्टृतमः ऋत्विक्कर्म[7] लक्षीकृत्य, मथनाख्यम् स्वम् कर्म यागनिर्वृत्तिरूपं च लक्षीकृत्य विश्वमुखः सखित्वमिच्छते धनमिव अन्नमिच्छते अहिंसितः होता निषीदति इडायाः पदे उत्तरवेद्यामुत्तरनाभौ परिवेष्टितः ऋत्विग्भिः ॥ १ ॥

**तं यज्ञसाधमपि वातयामस्यृतस्य पथा नमसा हविष्मता देवताता हविष्मता।**
**स न ऊर्जामुपाभृत्यया कृपा न जूर्यति।**
**यं मातरिश्वा मनवे परावतो देवं भाः परावतः ॥ २ ॥**

तम्। यज्ञऽसाधम्। अपि। वातयामसि। ऋतस्य। पथा। नमसा। हविष्मता। देवऽताता। हविष्मता।
सः। नः। ऊर्जाम्। उपऽआभृति। अया। कृपा। न। जूर्यति।
यम्। मातरिश्वा। मनवे। पराऽवतः। देवम्। मारिति भाः। पराऽवतः ॥ २ ॥

**वेङ्कट०** तम् यज्ञस्य साधयितारम् अपि सेवामहे यज्ञस्य मार्गेण तीर्थेन हविर्युक्तेन च नमस्कारेण यज्ञे। सः अस्माकं हविषाम् उपाहरणे[8] अनया दीप्त्या न जीर्णो भवति। आ यज्ञसमाप्तेः प्रवर्तमानदीप्तिर्भवति[9]। यम् देवम् मातरिश्वा मनवे राज्ञे पुरा दूराद् उद्धृतवान्[10] ॥ २ ॥

---

१. °हाय ल. २. तत्तद् वि[2]. ३. =अव-ह° ४. बद्धस्य अ[1]; वद्धस्य वि[1,2] लपं; वर्धस्य ल; वध्यस्य ल शोधः. ५-५. नास्ति वि[2] अ[1]. ६-६. नास्ति मूको. ७. नास्ति वि[2] अ[1]. ८. पाकर° वि[2] अ[1] ९. व° वि[1] लपं. १०. धृत° वि[2] अ[1].

एवेन सद्यः पर्येति पार्थिवं मुहुर्गी रेतो वृषभः कनिक्रदद् दधद् रेतः कनिक्रदत् ।
शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः ।
सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु ॥ ३ ॥

एवेन । सद्यः । परि । एति । पार्थिवम् । मुहुःऽगीः । रेतः । वृषभः । कनिक्रदत् । दधत् । रेतः । कनिक्रदत् ।
शतम् । चक्षाणः । अक्षऽभिः । देवः । वनेषु । तुर्वणिः ।
सदः । दधानः । उपरेषु । सानुषु । अग्निः । परेषु । सानुषु ॥ ३ ॥

वेङ्कट० गमनशीलेन तेजसा वा[1] तृणगुल्मादिकम् परिगच्छति, मुहुरुद्गिरति[2] उदकं वर्षिता शब्दं कुर्वन् धारयन् उदकम् । बहूनपि वृक्षान् तेजोभिः पश्यन्, वृक्षेषु देवः क्षिप्रं सम्भक्ता, स्थानम् दधानः शिलासु समुच्छ्रितासु अग्निः पर्वतस्योपरिभवासु ॥ ३ ॥

स सुक्रतुः पुरोहितो दमेदमेऽग्निर्यज्ञस्याध्वरस्य चेतति क्रत्वा यज्ञस्य चेतति ।
क्रत्वा वेधा इषूयते विश्वा जातानि पस्पशे ।
यतो घृतश्रीरतिथिरजायत वह्निर्वेधा अजायत ॥ ४ ॥

सः । सुऽक्रतुः । पुरःऽहितः । दमेऽदमे । अग्निः । यज्ञस्य । अध्वरस्य । चेतति । क्रत्वा । यज्ञस्य । चेतति ।
क्रत्वा । वेधाः । इषुऽयते । विश्वा । जातानि । पस्पशे ।
यतः । घृतऽश्रीः । अतिथिः । अजायत । वह्निः । वेधाः । अजायत ॥ ४ ॥

वेङ्कट० सः सुप्रज्ञः[3] पुरोहितः यज्ञेयज्ञे अग्निः यज्ञम् अहिंसितं जानाति प्रज्ञया कर्मणा । प्राज्ञः[4] अन्नमिच्छते विश्वान्येव जातानि बध्नाति । यस्माद् यजमानाद् घृतस्य श्रयिता अतिथिः अजायत हविषां वोढा कर्मणां कर्ता, तस्मै यजमानायेति ॥ ४ ॥

क्रत्वा यदस्य तविषीषु पृञ्चतेऽग्नेरवेण मरुतां न भोज्येषिराय न भोज्या ।
स हि ष्मा दानमिन्वति वसूनां च मज्मना ।
स नस्त्रासते दुरितादभिह्रुतः शंसादघादभिह्रुतः ॥ ५ ॥

क्रत्वा । यत् । अस्य । तविषीषु । पृञ्चते । अग्नेः । अवेन । मरुताम् । न । भोज्या । इषिराय ।
न । भोज्या ॥ सः । हि । स्म । दानम् । इन्वति । वसूनाम् । च । मज्मना ।
सः । नः । त्रासते । दुःऽइतात् । अभिऽह्रुतः । शंसात् । अघात् । अभिऽह्रुतः ॥ ५ ॥

---

१. व वि[1,2] अ[1] ल. २. °रुद्गिनत्ति अ[1]. ३. प्रज्ञः° वि[2]. ४. प्राज्ञम् वि[2].

वेङ्कट० कर्मणा यत् अस्य प्रवृद्धासु[1] ज्वालासु हवींषि सम्पर्चयति अग्नेः परिरक्षणार्थम्[2] मरुताम्[3] इव भोज्यानि, यथा वा गच्छते पुरुषाय अन्नान्याहरति। सः अग्निः तस्मै देयं धनं वर्धयति, वासयितॄणाम्[4] च वीराणां बलेन तं संयोजयति। सः अग्निः अस्मान् दारिद्र्यात् अभिहन्तुः परिरक्षतात्, तथा[5] निन्दितुः आहन्तुः सकाशाच्च पुरुषादिति ॥ ५ ॥

विश्वो॑ वि॒हाया॑ अर॒तिर्वसु॑र्द॒धे हस्ते॑ दक्षि॑णे त॒रणि॒र्न शि॑श्रथच्छ्र॒वस्य॒या न शि॑श्रथत्।
विश्व॑स्मा॒ इदि॑षुध्य॒ते दे॑व॒त्रा ह॒व्यमोहि॑षे।
विश्व॑स्मा॒ इत् सु॒कृते॒ वार॑मृण्वत्य॒ग्निर्द्वारा॒ व्यृ॑ण्वति ॥ ६ ॥

विश्वः॑। वि॒ऽहायाः॑। अ॒र॒तिः। वसुः॑। द॒धे। हस्ते॑। दक्षि॑णे। त॒रणिः॑। न। शि॒श्र॒थ॒त्। श्र॒व॒स्यया॑। न। शि॒श्र॒थ॒त्॥ विश्व॑स्मै। इत्। इ॒षु॒ध्य॒ते। दे॒व॒ऽत्रा। ह॒व्यम्। आ। ऊ॒हि॒षे। विश्व॑स्मै। इत्। सु॒ऽकृते॑। वार॑म्। ऋ॒ण्व॒ति॒। अ॒ग्निः। द्वारा॑। वि। ऋ॒ण्व॒ति॒ ॥ ६ ॥

वेङ्कट० विश्वः महान् अभिगन्ता अग्नेर्धनम्[6] धारयति हस्ते दक्षिणे धनं ग्रथ्नाति ग्रामान्तरं प्रति गन्ता इव, यथा वा अन्नेच्छया धनं वस्त्रादौ बध्नाति। विश्वस्मै एव देवान् यष्टुमिच्छते देवेषु हव्यम् वहसि। विश्वस्मै एव यजमानाय [7]वरणीयं धनम् प्रक्षिपति अग्निः धनद्वाराणि च[7] विवृणोति ॥ ६ ॥

स मानु॑षे वृ॒जने॒ शन्त॑मो हि॒तो॒३॑ऽग्निर्य॒ज्ञेषु॒ जेन्यो॒ न वि॒श्पतिः॑ प्रि॒यो य॒ज्ञेषु॑ वि॒श्पतिः॑।
स ह॒व्या मानु॑षाणामि॒ळा कृ॒तानि॑ पत्यते।
स न॑स्त्रासते॒ वरु॑णस्य धू॒र्तेर्म॒हो दे॒वस्य॑ धू॒र्तेः ॥ ७ ॥

सः। मानु॑षे। वृ॒जने॑। शम्ऽत॑मः। हि॒तः। अ॒ग्निः। य॒ज्ञेषु॑। जेन्यः॑। न। वि॒श्पतिः॑। प्रि॒यः। य॒ज्ञेषु॑। वि॒श्पतिः॑। सः। ह॒व्या। मानु॑षाणाम्। इ॒ळा। कृ॒तानि॑। प॒त्य॒ते। सः। नः॒। त्रा॒स॒ते॒। वरु॑णस्य। धू॒र्तेः। म॒हः। दे॒वस्य॑। धू॒र्तेः ॥ ७ ॥

वेङ्कट० सः मनुष्यकृते उपद्रवे सुखतमः हितः तत्परिहाराय निहितो भवति अग्निः यज्ञेषु, जयशीलो राजा इव विशां पतिः प्रियतमः। सः अग्निः हवींषि भूम्यां वेद्याम् आसादितानि मानुषाणाम् यागार्थम् अभिपतति। [8]सः अस्मान्[8] पालयति महतः वरुणस्य हिंसायाः। स ह्युपद्रवैर्मनुष्यान् हिनस्ति ॥ ७ ॥

---

१. प्रवृत्तासु वि[1] लपं. २. °णाम् मूको. ३. नास्ति मूको. ४. °तॄन् वि[1]. ५. °था हि वि[2] अ[1]. ६. नास्ति वि[2] अ[1]. ७-७. नास्ति वि[2] अ[1]. ८-८. तान् वि[1] अ[1] लपं; यात् वि[2]; तान्? ल.

अग्निं होतारमीळते वसुधितिं प्रियं चेतिष्ठमरतिं न्येरिरे हव्यवाहं न्येरिरे ।
विश्वायुं विश्ववेदसं होतारं यजतं कविम् ।
देवासो रण्वमवसे वसूयवो गीर्भी रण्वं वसूयवः ॥ ८ ॥

अग्निम् । होतारम् । ईळते । वसुऽधितिम् । प्रियम् । चेतिष्ठम् । अरतिम् । नि । एरिरे । हव्यऽवाहम् ।
नि । एरिरे ॥ विश्वऽआयुम् । विश्वऽवेदसम् । होतारम् । यजतम् । कविम् ।
देवासः । रण्वम् । अवसे । वसुऽयवः । गीःऽभिः । रण्वम् । वसुऽयवः ॥ ८ ॥

**वेङ्कट०** अग्निम् होतारम् ईळते **धनानां दातारम्** प्रियम् **ज्ञातृतमं गमनशीलं हविषां वोढारम्, अभिमुखं प्राप्नुवन्ति सर्वान्नं सर्वधनम्** होतारम् यजनीयम् कविम् देवाः[1] **रमणीयं रक्षणाय शत्रुभ्यो धनमिच्छन्तः स्तुतिभिः** ॥ ८ ॥

[2]इति द्वितीयाष्टके प्रथमाध्याये पञ्चदशो वर्गः[2] ॥

[ १२९[1] ]

[1]परुच्छेपो दैवोदासिर्ऋषिः । इन्द्रो देवता, षष्ठ्यास्तु इन्दुः । अत्यष्टिश्छन्दः, अष्टमीनवम्यौ अतिशक्वर्यौ, एकादशी अष्टिः[2] ।

यं त्वं रथमिन्द्र मेधसातयेऽपाका सन्तमिषिर प्रणयसि प्रानवद्य नयसि ।
सद्यश्चित्तमभिष्टये करो वशश्च वाजिनम् ।
सास्माकमनवद्य तूतुजान वेधसामिमां वाचं न वेधसाम् ॥ १ ॥

यम् । त्वम् । रथम् । इन्द्र । मेधऽसातये । अपाका । सन्तम् । इषिर । प्रऽनयसि । प्र । अनवद्य । नयसि ।
सद्यः । चित् । तम् । अभिष्टये । करः । वशः । च । वाजिनम् ।
सः । अस्माकम् । अनवद्य । तूतुजान । वेधसाम् । इमाम् । वाचम् । न । वेधसाम् ॥ १ ॥

**वेङ्कट०** यम् त्वम् रथम् इन्द्र! **यज्ञभजनाय[4] अनल्पम्** सन्तम् **गमनशील!** प्र णयसि अनवद्य!, सद्यः **एव** तम् **अभ्येषणाय कुरु, कामय च हविष्मन्तम्।** सः त्वम्[3] अस्माकम् अनवद्य! **क्षिप्रकारिन्! परिचरिताम् स्तुतिं च इमाम् शृणु** ॥ १ ॥

स श्रुधि यः स्मा पृतनासु कासु चिद्दक्षाय्य इन्द्र भरहूतये नृभिरसि प्रतूर्तये नृभिः ।
यः शूरैः स्वः सनिता यो विप्रैर्वाजं तरुता ।
तमीशानास इरधन्त वाजिनं पृक्षमत्यं न वाजिनम् ॥ २ ॥

---

१. नास्ति वि[२] अ[१]. २-२. नास्ति मूको. ३. नास्ति मूको. ४. यज्ञे भ[०] वि[१] लपं.

सः । श्रुधि । यः । स्म । पृतनासु । कासु । चित् । दक्षाय्यः । इन्द्र । भरऽहूतये । नृऽभिः । असि । प्रऽतूर्तये । नृऽभिः ॥ यः । शूरैः । स्वरिति स्वः । सनिता । यः । विप्रैः । वाजम् । तरुता । तम् । ईशानासः । इरधन्त । वाजिनम् । पृक्षम् । अत्यम् । न । वाजिनम् ॥ २ ॥

वेङ्कट० सः शृणु, यः त्वम् पृतनासु दुस्तरासु मनुष्यैरात्मनो धारणार्थमाहूतुं हविर्भिर्वर्धनीयो भवसि शत्रूणां प्रतरणाय । यः त्वम् शूरैः मरुद्भिः सह सर्वं सम्भक्ता, यः वा मेधाविभिरश्वैः सङ्ग्रामं तरीता[1], तम् बलिनं हविष ईश्वरा अन्नं याचन्ते, अश्वमिव बलिनम् ॥ २ ॥

दस्मो हि ष्मा वृषणं पिन्वसि त्वचं कं चिद् यावीररुं शूर मर्त्यं परिवृणक्षि मर्त्यम् ।
इन्द्रोत तुभ्यं तद् दिवे तद् रुद्राय स्वयशसे ।
मित्राय वोचं वरुणाय सप्रथः सुमृळीकाय सप्रथः ॥ ३ ॥

दस्मः । हि । स्म । वृषणम् । पिन्वसि । त्वचम् । कम् । चित् । यावीः । अररुम् । शूर । मर्त्यम् । परिऽवृणक्षि । मर्त्यम् ॥ इन्द्र । उत । तुभ्यम् । तत् । दिवे । तत् । रुद्राय । स्वऽयशसे । मित्राय । वोचम् । वरुणाय । सऽप्रथः । सुऽमृळीकाय । सऽप्रथः ॥ ३ ॥

वेङ्कट० दर्शनीयः हि त्वं वर्षितारं मेघम् पिन्वसि । कम् चन अदातारमयजमानम् मर्त्यम् आत्मना पृथक्करोषि । तं वर्जयसि न तत्र गच्छसि । तत् इदं स्तुतिवचः तुभ्यम् अहम्[2] इन्द्र ! दीप्ताय वदामि । तत् एव त्वदीयमन्येभ्योऽपि[3] देवेभ्य इति सर्वतः पृथुतमं सुष्ठु सुखयित्रे तुभ्यम् ॥ ३ ॥

अस्माकं व इन्द्रमुश्मसीष्टये सखायं विश्वायुं प्रासहं युजं वाजेषु प्रासहं युजम् ।
अस्माकं ब्रह्मोतयेऽवा पृत्सुषु कासु चित् ।
नहि त्वा शत्रुः स्तरते स्तृणोषि यं विश्वं शत्रुं स्तृणोषि यम् ॥ ४ ॥

अस्माकम् । वः । इन्द्रम् । उश्मसि । इष्टये । सखायम् । विश्वऽआयुम् । प्रऽसहम् । युजम् । वाजेषु । प्रऽसहम् । युजम् ॥ अस्माकम् । ब्रह्म । ऊतये । अव । पृत्सुषु । कासु । चित् । नहि । त्वा । शत्रुः । स्तरते । स्तृणोषि । यम् । विश्वम् । शत्रुम् । स्तृणोषि । यम् ॥ ४ ॥

वेङ्कट० अस्माकम् युष्माकं च इन्द्रम् इष्टये अभिमतसिद्ध्यर्थं कामयामहे सखायम् सर्वान्नम् अभिभवितारं नियोज्यम् युद्धेषु । अस्माकम् स्तोत्रं रक्षणायाभिगच्छ पृतनासु दुस्तरासु । नहि त्वाम् शत्रुः युद्धे हिनस्ति यम् त्वं व्यासम् स्तृणोषि ॥ ४ ॥

---

१. तरति मूको. २. नास्ति वि[1] अ[1] लपं. ३. °ऽपि तदेव वि[1] लपं.

नि षू नमातिमतिं कयस्य चित् तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः ।
नेषि णो यथा पुरानेनाः शूर मन्यसे ।
विश्वानि पूरोरप पर्षि वह्निरासा वह्निर्नो अच्छ ॥ ५ ॥

नि । सु । नम । अतिऽमतिम् । कयस्य । चित् । तेजिष्ठाभिः । अरणिऽभिः । न । ऊतिऽभिः । उग्राभिः । उग्र । ऊतिऽभिः ॥ नेषि । नः । यथा । पुरा । अनेनाः । शूर । मन्यसे । विश्वानि । पूरोः । अप । पर्षि । वह्निः । आसा । वह्निः । नः । अच्छ ॥ ५ ॥

**वेङ्कट०** सुष्ठु नि नमय अतिमानम् कस्य [1]चिद् अपि[1] शत्रोः[2] तेजिष्ठैः आयुधैः इव भवदीयैः रक्षणैरुद्गूर्णैः उद्गूर्ण ! । नय च अस्मान् यथापुरम् । अनुपद्रवस्त्वम् शूर ! मनुष्यस्योपद्रवाणि तरितुम् मन्यसे, विश्वानि च तानि अप पर्षि । वोढा सन् भवदीयेन निरसनेन अस्मान्[3] प्रति गच्छ शत्रुमतः ॥ ५ ॥

[4]इति द्वितीयाष्टके प्रथमाध्याये षोडशो वर्गः[4] ॥

प्र तद् वोचेयं भव्यायेन्दवे हव्यो न य इषवान् मन्म रेजति रक्षोहा मन्म रेजति ।
स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् ।
अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥ ६ ॥

प्र । तत् । वोचेयम् । भव्याय । इन्दवे । हव्यः । न । यः । इषऽवान् । मन्म । रेजति । रक्षःऽहा । मन्म । रेजति ॥ स्वयम् । सः । अस्मत् । आ । निदः । वधैः । अजेत । दुःऽमतिम् । अव । स्रवेत् । अघऽशंसः । अवऽतरम् । अव । क्षुद्रम्ऽइव । स्रवेत् ॥ ६ ॥

**वेङ्कट०** इयमैकैन्दवी । तत् अहं वचः अनुगुणाय इन्दवे प्र ब्रवीमि, ह्वातव्यः आपत्सु मित्रमिव यः अन्नवान् स्तोत्रम् प्रति गच्छति । 'अन्नवान् कामवान्[5] वा' इति यास्कः (१०, ४२) । रक्षसां हन्ता[6] सः स्वयम् एव अस्मत्तः निन्दितुः मतिम् आयुधैः अपनयतु । सः पापः अवतरम् अव स्रवेत् अत्यन्तमधो गच्छतु, यथा क्षोदनीयं मशकादीति ॥ ६ ॥

वनेम तद्धोत्रया चितन्त्या वनेम रयिं रयिवः सुवीर्यं रण्वं सन्तं सुवीर्यम् ।
दुर्मन्मानं सुमन्तुभिरेमिषा पृचीमहि ।
आ सत्याभिरिन्द्रं द्युम्नहूतिभिर्यजत्रं द्युम्नहूतिभिः ॥ ७ ॥

वनेम । तत् । होत्रया । चितन्त्या । वनेम । रयिम् । रयिऽवः । सुऽवीर्यम् । रण्वम् । सन्तम् । सुऽवीर्यम् । दुःऽमन्मानम् । सुमन्तुऽभिः । आ । ईम् । इषा । पृचीमहि । आ । सत्याभिः । इन्द्रम् । द्युम्नहूतिऽभिः । यजत्रम् । द्युम्नहूतिऽभिः ॥ ७ ॥

---

१-१. नास्ति अ[1]. २. शास्त्रे अ[1]. ३. नास्ति अ[1]. ४-४. नास्ति मूको. ५. नास्ति मूको. ६. त्रुटितम् वि[2] अ[1].

वेङ्कट० वनेम तत् वयं स्तुत्याऽभिलषितं चेतयन्त्या। किमित्याह वनेम धनं धनवन्! शोभनवीर्यं रमणीयं भवत्। शोभनज्ञानैरपि दुर्ज्ञानम् एनम्[१] इन्द्रम् अन्नेन सम्पृचाम। इन्द्रम् सत्याभिः अन्नार्थाभिः स्तुतिभिः यजनीयम् अन्नहेतुभिः आ पृचीमहि ॥ ७ ॥

प्रप्रा वो अस्मे स्वयंशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन् दुर्मतीनाम् ।
स्वयं सा रिषयध्यै या न उपेषे अत्रैः ।
हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥ ८ ॥

प्रऽप्र । वः । अस्मे इति । स्वयंशःऽभिः । ऊती । परिऽवर्गे । इन्द्रः । दुःऽमतीनाम् । दरीमन् ।
दुःऽमतीनाम् ॥ स्वयम् । सा । रिषयध्यै । या । नः । उपऽईषे । अत्रैः ।
हता । ईम् । असत् । न । वक्षति । क्षिप्ता । जूर्णिः । न । वक्षति ॥ ८ ॥

वेङ्कट० अस्माकम् अयम् इन्द्रः युष्माकम् दुर्मतीनाम् स्वभूतयशोभिः परिरक्षणैः छेदने प्रप्र[२] भवति[३]। दरणे च स्वयम् एव[४] सा विनाशाय भवतु सेना। या अस्मान् उपगच्छति। अदनशीलैः राक्षसैः सा हता भवतु न च वहतु त्वया क्षिप्तेति ॥ ८ ॥

त्वं न इन्द्र राया परीणसा याहि पथाँ अनेहसा पुरो याह्यरक्षसा ।
सचस्व नः पराक आ सचस्वास्तमीक आ ।
पाहि नो दूरादारादभिष्टिभिः सदा पाह्यभिष्टिभिः ॥ ९ ॥

त्वम् । नः । इन्द्र । राया । परीणसा । याहि । पथा । अनेहसा । पुरः । याहि । अरक्षसा ।
सचस्व । नः । पराके । आ । सचस्व । अस्तम्ऽईके । आ ।
पाहि । नः । दूरात् । आरात् । अभिष्टिऽभिः । सदा । पाहि । अभिष्टिऽभिः ॥ ९ ॥

वेङ्कट० त्वम् अस्माकम् [५]इन्द्र! महता[५] धनेन[६] पुरः याहि अनुपद्रवेण मार्गेण रक्षोवर्जितेन। सेवस्व अस्मान् दूरे अन्तिके च। रक्ष अस्मान् दूरात् अन्तिकाच्च अभ्येषणैः सदा एव ॥ ९ ॥

त्वं न इन्द्र राया तरूषसोग्रं चित् त्वा महिमा सक्षदवसे महे मित्रं नावसे ।
ओजिष्ठ त्रातरविता रथं कं चिदमर्त्य ।
अन्यमस्मद् रिरिषेः कं चिदद्रिवो रिरिक्षन्तं चिदद्रिवः ॥ १० ॥

---

१ नास्ति वि[१] अ[१]. २. नास्ति वि[१] लपं. ३. भव वि[१] अ[१]. ४. एव स्वयमेव वि[१] लपं. ५-५. नास्ति अ[१]. ६. °नेन तरणकुशलेन अ[१].

त्वम् । नः । इन्द्र । राया । तरूषसा । उग्रम् । चित् । त्वा । महिमा । सक्षत् । अवसे । महे । मित्रम् । न । अवसे ॥ ओजिष्ठ । त्रातः । अवितः । रथम् । कम् । चित् । अमर्त्य । अन्यम् । अस्मत् । रिरिषेः । कम् । चित् । अद्रिऽवः । रिरिक्षन्तम् । चित् । अद्रिऽवः ॥ १० ॥

वेङ्कट० त्वम् अस्माकम् इन्द्र[1]! धनेन[2] तरणकुशलेन[3] रक्ष । उग्रम् चित् महिमा सेवते महते रक्षणाय सखेव । बलिष्ठ! पालक! रक्षक! कम् चन अमर्त्य! रथम् आतिष्ठ । अस्मत्तः अन्यम् कम् चित् हिंस्याः हिंसितुमिच्छन्तं वज्रिन्! ॥ १० ॥

पाहि न इन्द्र सुष्टुत स्रिधोऽवयाता सदमिद् दुर्मतीनां देवः सन् दुर्मतीनाम् ।
हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः ।
अधा हि त्वा जनिता जीजनद् वसो रक्षोहणं त्वा जीजनद् वसो ॥ ११ ॥

पाहि । नः । इन्द्र । सुऽस्तुत । स्रिधः । अवऽयाता । सदम् । इत् । दुःऽमतीनाम । देवः । सन् । दुःऽमतीनाम् ॥ हन्ता । पापस्य । रक्षसः । त्राता । विप्रस्य । माऽवतः । अध । हि । त्वा । जनिता । जीजनत् । वसो इति । रक्षःऽहनम् । त्वा । जीजनत् । वसो इति ॥ ११ ॥

वेङ्कट० पाहि अस्मान् इन्द्र! सुष्ठु स्तुत! शोषयितुः[4] अभिगन्ता सदैव दुर्मतीनाम् देवनशीलः हन्ता कुत्सितस्य रक्षसः त्राता च मेधाविनो मत्सदृशस्य । एतस्मात्कारणाद् वसो! प्रशस्तं त्वां तव पिता जनयति स्म रक्षसां हन्तारम् ॥ ११ ॥

[5]इति द्वितीयाष्टके प्रथमाध्याये सप्तदशो वर्गः[5] ॥

## [ १३० ]

[5]परुच्छेपो दैवोदासिर्ऋषिः । इन्द्रो देवता । अत्यष्टिश्छन्दः, दशमी त्रिष्टुप्[5] ।

एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्तं राजेव सत्पतिः ।
हवामहे त्वा वयं प्रयस्वन्तः सुते सचा ।
पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥ १ ॥

आ । इन्द्र । याहि । उप । नः । पराऽवतः । न । अयम् । अच्छ । विदथानिऽइव । सत्ऽपतिः । अस्तम् । राजाऽइव । सत्ऽपतिः ॥ हवामहे । त्वा । वयम् । प्रयस्वन्तः । सुते । सचा । पुत्रासः । न । पितरम् । वाजऽसातये । मंहिष्ठम् । वाजऽसातये ॥ १ ॥

वेङ्कट० इन्द्र! उपागच्छास्मान् दूरात् न अयम् सोमोऽभिगच्छति हविराहवनीयं गृहान् इव राजा ।

---

१. नास्ति वि[1] लपं. २. °नेन महता अ[1]. ३. नास्ति अ[1]. ४. शोचयितुः वि[1]. ५. नास्ति मूको.

तदेवाह अस्तम् इति। हवामहे त्वा वयम् अन्नवन्तः सुते सह विप्रैः पुत्रा इव पितरम् अन्न-भजनाय दातृतमम् ॥ १ ॥

पिबा सोममिन्द्र सुवानमद्रिभिः कोशेन सिक्तमवतं न वंसगस्तातृषाणो न वंसगः।
मदाय हर्यताय ते तुविष्टमाय धायसे।
आ त्वा यच्छन्तु हरितो न सूर्यमहा विश्वेव सूर्यम् ॥ २ ॥

पिब। सोमम्। इन्द्र। सुवानम्। अद्रिऽभिः। कोशेन। सिक्तम्। अवतम्। न। वंसगः। ततृषाणः। न। वंसगः॥ मदाय। हर्यताय। ते। तुविःऽतमाय। धायसे।
आ। त्वा। यच्छन्तु। हरितः। न। सूर्यम्। अहा। विश्वाऽइव। सूर्यम् ॥ २ ॥

वेङ्कट० पिब सोमम् इन्द्र![1] अभिषूयमाणं ग्रावभिः भक्षया सिक्तजलम् आहावमिव तृषित ऋषभो मदार्थम्। हर्यताय तुभ्यं [2]वृद्धतमाय पानाय आ यच्छन्तु अश्वाः त्वाम्[2] हरितः इव सूर्यम् अहानि[3] सर्वाणीव सूर्यम् ॥ २ ॥

अविन्दद् दिवो निहितं गुहा निधिं वेर्न गर्भं परिवीतमश्मन्यनन्ते अन्तरश्मनि।
व्रजं वज्री गवामिव सिषासन्नङ्गिरस्तमः।
अपावृणोदिष इन्द्रः परीवृता द्वार इषः परीवृताः ॥ ३ ॥

अविन्दत्। दिवः। निऽहितम्। गुहा। निऽधिम्। वेः। न। गर्भम्। परिऽवीतम्। अश्मनि। अनन्ते। अन्तः। अश्मनि॥ व्रजम्। वज्री। गवाम्ऽइव। सिसासन्। अङ्गिरःऽतमः।
अप। अवृणोत्। इषः। इन्द्रः। परिऽवृताः। द्वारः। इषः। परिऽवृताः ॥ ३ ॥

वेङ्कट० असुरैर्गुहायां निहितम् दिवः निधिम् सोमम् इन्द्रः अविन्दत्, पक्षिण इव गर्भम् जरायुणा[4] परिवेष्टितम् पर्वते महति अन्तः। गोव्रजम् आयुधवान् सम्भक्तुं बृहस्पतिः इव अप अवृणोत् अन्नानि सोमलक्षणानि इन्द्रः पर्वते परिवृतानि द्वाराणि अन्नानि। अपावृणोदिति द्विकर्मकः ॥ ३ ॥

दादृहाणो वज्रमिन्द्रो गभस्त्योः क्षद्मेव तिग्ममसनाय सं श्यदहिहत्याय सं श्यत्।
संविव्यान ओजसा शवोभिरिन्द्र मज्मना।
तष्टेव वृक्षं वनिनो नि वृश्चसि परश्वेव नि वृश्चसि ॥ ४ ॥

---

१. नास्ति वि[1] लपं. २-२. नास्ति वि[2] अ[1]. ३. °नि च वि[1] अ[1]. ४ °युषा ल.

दृह्हाणः। वज्रम्। इन्द्रः। गभस्त्योः। क्षद्मऽइव। तिग्मम्। असनाय। सम्। श्यत्। अहिऽहत्याय। सम्। श्यत् ॥ सम्ऽविव्यानः। ओजसा। शवःऽभिः। इन्द्र। मज्मना। तष्टाऽइव। वृक्षम्। वनिनः। नि। वृश्चसि। परश्वाऽइव। नि। वृश्चसि ॥ ४ ॥

**वेङ्कट०** दृंहयन् धारयन् इन्द्रः वज्रम् बाह्वोः परशुमिव शकलीभावसाधनं तीक्ष्णं निरसनाय तीक्ष्णीकरोति अहिं हन्तुम्। परीयमाणो[1] बलेन मज्जकेन परसेनाभिः त्वम् इन्द्र! तष्टेव[2] वृक्षम् परशुना भुजवतः[3] शत्रून् नि वृश्चसि ॥ ४ ॥

**त्वं वृथा नद्य इन्द्र सर्तवेऽच्छा समुद्रमसृजो रथाँइव वाजयतो रथाँइव।**
**इत ऊतीरयुञ्जत समानमर्थमक्षितम्।**
**धेनूरिव मनवे विश्वदोहसो जनाय विश्वदोहसः ॥ ५ ॥**

त्वम्। वृथा। नद्यः। इन्द्र। सर्तवे। अच्छ। समुद्रम्। असृजः। रथान्ऽइव। वाजयतः। रथान्ऽइव। इतः। ऊतीः। अयुञ्जत। समानम्। अर्थम्। अक्षितम्। धेनूःऽइव। मनवे। विश्वऽदोहसः। जनाय। विश्वऽदोहसः ॥ ५ ॥

**वेङ्कट०** त्वम् अनायासेन नदीः इन्द्र! सरणायोदधिं प्रत्यञ्जसा विसृजसि। रथानिव सारथयोऽश्वमिच्छमानाः शत्रुभ्यः। अस्माद् इन्द्र! मरुतः साधारणं वृष्टिलक्षणम् उदकं गमनशीलं प्राप्ताः धेनवः सर्वस्य दोग्ध्र्यः[4] जाताय ॥ ५ ॥

[5]इति द्वितीयाष्टके प्रथमाध्यायेऽष्टादशो वर्गः[5] ॥

**इमां ते वाचं वसूयन्त आयवो रथं न धीरः स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः।**
**शुम्भन्तो जेन्यं यथा वाजेषु विप्र वाजिनम्।**
**अत्यमिव शवसे सातये धना विश्वा धनानि सातये ॥ ६ ॥**

इमाम्। ते। वाचम्। वसुऽयन्तः। आयवः। रथम्। न। धीरः। सुऽअपाः। अतक्षिषुः। सुम्नाय। त्वाम्। अतक्षिषुः ॥ शुम्भन्तः। जेन्यम्। यथा। वाजेषु। विप्र। वाजिनम्। अत्यम्ऽइव। शवसे। सातये। धना। विश्वा। धनानि। सातये ॥ ६ ॥

**वेङ्कट०** इमाम् ते वाचम् धनकामा मनुष्याः रथम् इव प्राज्ञः शोभनकर्मा संस्कृतवन्तः[6] सुखाय त्वाम् च शोभयन्तो जयशीलम्। यथा सङ्ग्रामेषु प्राज्ञ! अश्वं संस्कुर्वन्ति[7] अतनशीलं बलकरणाय[8] विश्वान्येव धनानि त्वत्तः सम्भक्तुम् ॥ ६ ॥

---

१. परिय° मूको. २. तक्षेव वि[२] अ[१]. ३. भजवतः मूको. ४. दोग्धारः ल. ५-५. नास्ति मूको. ६. संस्तुत° वि[१] लपं. ७. कुर्वन्ति वि[१] लपं; °न्तु वि[२] अ[१]. ८. बलकराय मूको.

भिनत् पुरो नवतिमिन्द्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो ।
अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत् ।
महो धनानि दयमान ओजसा विश्वा धनान्योजसा ॥ ७ ॥

भिनत् । पुरः । नवतिम् । इन्द्र । पूरवे । दिवःऽदासाय । महि । दाशुषे । नृतो इति । वज्रेण । दाशुषे ।
नृतो इति ॥ अतिथिऽग्वाय । शम्बरम् । गिरेः । उग्रः । अव । अभरत् ।
महः । धनानि । दयमानः । ओजसा । विश्वा । धनानि । ओजसा ॥ ७ ॥

**वेङ्कट०** भिन्नवानसि इन्द्र[1]! नवतिम् पुरीः पूरवे दिवोदासाय महद्धविः प्रयच्छते नेतः! वज्रेण । अतिथीन् प्रति गच्छते दिवोदासाय शम्बरम् उग्रः इन्द्रः शिलोच्चयाद् दुर्गात् अधो हृतवान् महान्[2] शम्बरस्य सर्वाण्येव धनानि[1] प्रयच्छन् बलेन ॥ ७ ॥

इन्द्रः समत्सु यजमानमार्यं प्रावद् विश्वेषु शतमूतिराजिषु स्वर्मीळ्हेष्वाजिषु ।
मनवे शासदव्रतान् त्वचं कृष्णामरन्धयत् ।
दक्षन्न विश्वं ततृषाणमोषति न्यर्शसानमोषति ॥ ८ ॥

इन्द्रः । समत्ऽसु । यजमानम् । आर्यम् । प्र । आवत् । विश्वेषु । शतम्ऽऊतिः । आजिषु ।
स्वःऽमीळ्हेषु । आजिषु ॥ मनवे । शासत् । अव्रतान् । त्वचम् । कृष्णाम् । अरन्धयत् ।
धक्षत् । न । विश्वम् । ततृषाणम् । ओषति । नि । अर्शसानम् । ओषति ॥ ८ ॥

**वेङ्कट०** इन्द्रः सङ्ग्रामेषु यजमानम् त्रैवर्णिकम् प्ररक्षति सर्वेषु अनेकरक्षणः युद्धेषु सर्वकामानां सेक्तृषु आजिषु । सोऽयम् अयजमानान् मनवे राज्ञे शासत् मेघम् वशमनयत् । [3]सर्वं जनम्[3] न दहति । हिनस्ति परस्वेषु तृष्यन्तम् बाधमानम् ॥ ८ ॥

सूरश्चक्रं प्र वृहज्जात ओजसा प्रपित्वे वाचमरुणो मुषायतीशान आ मुषायति ।
उशना यत् परावतोऽजगन्नूतये कवे ।
सुम्नानि विश्वा मनुषेव तुर्वणिरहा विश्वेव तुर्वणिः ॥ ९ ॥

सूरः । चक्रम् । प्र । वृहत् । जातः । ओजसा । प्रऽपित्वे । वाचम् । अरुणः । मुषायति । ईशानः । आ ।
मुषायति ॥ उशना । यत् । पराऽवतः । अजगन् । ऊतये । कवे ।
सुम्नानि । विश्वा । मनुषाऽइव । तुर्वणिः । अहा । विश्वाऽइव । तुर्वणिः ॥ ९ ॥

---

१. नास्ति मूको. २. महन् वि[२] लपं. ३-३. सोऽयं सर्वजनं वि[२] अ[१].

**वेङ्कट०** सूर्यात्[1] रथस्य चक्रम् ओजसा जनितः इन्द्रः असुरवधाय प्र वृहत् । अथासुराणां[2] प्राप्तावेव असुरैरपहृतां ताम् वाचम् आरोचमानः मुषायति स्म ईश्वरः । यदा[3] काव्यः उशना दूरात् त्वां प्रति कवे! तत्परिरक्षणार्थम् जगाम, तदानीं [4]साधनानि विश्वानि[4] यथा क्षिप्रकारी मनुष्यः अतितरति, यथा वा अहानि सर्वाण्यादित्यः, एवं दुरितानि सर्वाणि अतितरति[5] स्म ॥ ९ ॥

स नो नव्येभिर्वृषकर्मन्नुक्थैः पुरां दर्तः पायुभिः पाहि शग्मैः ।
दिवोदासेभिरिन्द्र स्तवानो वावृधीथा अहोभिरिव द्यौः ॥ १० ॥

सः । नः । नव्येभिः । वृषऽकर्मन् । उक्थैः । पुराम् । दर्तरिति । दर्तः । पायुऽभिः । पाहि । शग्मैः ।
दिवःऽदासेभिः । इन्द्र । स्तवानः । ववृधीथाः । अहोभिःऽइव । द्यौः ॥ १० ॥

**वेङ्कट०** सः अस्मान् नवतरैः वर्षणशीलकर्मन्! उक्थैः पालनैः पाहि शक्तैः । दिवोदासपुत्रैरस्माभिः इन्द्र! त्वम् स्तूयमानो वर्धस्व अहोभिरिव देवनशीलः आदित्यः ॥ १० ॥

[6]इति द्वितीयाष्टके प्रथमाध्याये एकोनविंशो वर्गः[6] ॥

## [ १३१ ]

[6]परुच्छेपो दैवोदासिर्ऋषिः । इन्द्रो देवता । अत्यष्टिश्छन्दः[6] ।

इन्द्राय हि द्यौरसुरो अनम्नतेन्द्राय मही पृथिवी वरीमभिर्द्युम्नसाता वरीमभिः ।
इन्द्रं विश्वे सजोषसो देवासो दधिरे पुरः ।
इन्द्राय विश्वा सवनानि मानुषा रातानि सन्तु मानुषा ॥ १ ॥

इन्द्राय । हि । द्यौः । असुरः । अनम्नत । इन्द्राय । मही । पृथिवी । वरीमऽभिः । द्युम्नऽसाता । वरीमऽभिः ।
इन्द्रम् । विश्वे । सऽजोषसः । देवासः । दधिरे । पुरः ।
इन्द्राय । विश्वा । सवनानि । मानुषा । रातानि । सन्तु । मानुषा ॥ १ ॥

**वेङ्कट०** इन्द्राय हि द्यौः बलवान् अभवत्प्रह्वः । इन्द्राय महती पृथिवी उरुत्वैः दत्तान्ना[7] । इन्द्रम् विश्वे देवाः सङ्गताः पुरस्कुर्वन्ति[8] । इन्द्राय सर्वाणि मनुष्यैः कृतानि, दत्तानि सन्तु सवनानि ॥ १ ॥

विश्वेषु हि त्वा सवनेषु तुञ्जते समानमेकं वृषमण्यवः पृथक् स्वः सनिष्यवः पृथक् ।
तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि ।
इन्द्रं न यज्ञैश्चितयन्त आयवः स्तोमेभिरिन्द्रमायवः ॥ २ ॥

---

१. सूर्य वि[1] लपं. २. अथासुरेषु वि[1,2] ल लपं; यथो सुरेषु रथेषु अ[1]. ३. यः वि[1] लपं. ४-४. नास्ति वि[2] अ[1]. ५. °तिरति वि[1] लपं; तरन्ति वि[2] अ[1] ल. ६-६. नास्ति मूको. ७. दत्तान्न वि[1] लपं; दत्तान्न? ल; त्तान्ने वि[2] अ[1]. ८. °न्ति पुरस्कुर्वन्ति विश्वे देवाः सङ्गताः अ[1].

त्रिश्वेषु । हि । त्वा । सवनेषु । तुञ्जते । समानम् । एकम् । वृषऽमन्यवः । पृथक् । स्वः । सनिष्यवः । पृथक् ॥ तम् । त्वा । नावम् । न । पर्षणिम् । शूषस्य । धुरि । धीमहि । इन्द्रम् । न । यज्ञैः । चितयन्तः । आयवः । स्तोमेभिः । इन्द्रम् । आयवः ॥ २ ॥

वेङ्कट० त्रिष्वपि हि त्वा सवनेषु प्रेरयन्ति साधारणम् एकम् निर्गच्छत्स्तोत्राः[1] पृथक् पृथक् सर्वे सम्भक्तुमिच्छन्तः । तम् त्वा नावम् इव तारयित्रीं नदीतरणाय सुखस्य धुरि निदध्मः[2] । इन्द्रम् एव यज्ञैः मनुष्याः बोधयन्ति स्तोत्रैश्च ॥ २ ॥

**वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य निःसृजः सक्षन्त इन्द्र निःसृजः ।**
**यद् गव्यन्ता द्वा जना स्वर्यन्ता समूहसि ।**
**आविष्करिक्रद् वृषणं सचाभुवं वज्रमिन्द्र सचाभुवम् ॥ ३ ॥**

वि । त्वा । ततस्रे । मिथुनाः । अवस्यवः । व्रजस्य । साता । गव्यस्य । निःऽसृजः । सक्षन्तः । इन्द्र । निःऽसृजः ॥ यत् । गव्यन्ता । द्वा । जना । स्वः । यन्ता । सम्ऽऊहसि । आविः । करिक्रत् । वृषणम् । सचाऽभुवम् । वज्रम् । इन्द्र । सचाऽभुवम् ॥ ३ ॥

वेङ्कट० रक्षणेच्छवः उभयविधाः त्वाम् उपक्षयन्ति[3] गव्यस्य व्रजस्य सातये हविषां स्तुतीनां च निस्रष्टारस्त्वाम् इन्द्र ! भजमानाः । यत् त्वं गा इच्छन्तौ स्वर्गं गच्छन्तौ च द्वौ इमौ जनौ[4] संवहसि अभिलषितं[5] प्रापयसि आविष्कुर्वन् कामानां[6] वर्षितारं त्वयाऽविनाभूतम् वज्रम् इन्द्र ![6] ॥ ३ ॥

**विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिन्द्र शारदीरवातिरः सासहानो अवातिरः ।**
**शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते ।**
**महीममुष्णाः पृथिवीमिमा अपो मन्दसान इमा अपः ॥ ४ ॥**

विदुः । ते । अस्य । वीर्यस्य । पूरवः । पुरः । यत् । इन्द्र । शारदीः । अवऽअतिरः । ससहानः । अवऽअतिरः ॥ शासः । तम । इन्द्र । मर्त्यम् । अयज्युम । शवसः । पते । महीम् । अमुष्णाः । पृथिवीम् । इमाः । अपः । मन्दसानः । इमाः । अपः ॥ ४ ॥

वेङ्कट० जानन्ति तव वीर्यमिदं जनाः । पुरः यत् इन्द्र ! हिंसकासुरसम्बन्धिनीः अवाभिनः अभिभवन् । शासितवानसि तम् मारकं शरन्नामानम् असुरम् अयजमानं[7] बलस्य पते ! । शासित्वा च तमसुरं महदन्तरिक्षम् इमाः वृष्टिलक्षणाः अपः अमुष्णाः तत आहृतवानसि सोमेन मन्दमानः[8] ॥ ४ ॥

---

१. निर्गच्छत्स्तोत्रा मूको. २. निदधुः वि[1] लपं. ३. °पभक्षय° वि[2] अ[1] ल लपं. ४. नास्ति मूको. ५. संवहयस्य मूको. ६. °मान् वि[1] लपं. ७. शरन्नामासु° वि[1]; शरन्नामसु° अ[1] लपं; शरनामासु° ल. ८. मन्दमसानः वि[1] अ[1] लपं.

आदित् ते अस्य वीर्यस्य चर्किरन् मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ।
चकर्थ कारमेभ्यः पृतनासु प्रवन्तवे।
ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यन्तः सनिष्णत ॥ ५ ॥

आत्। इत्। ते। अस्य। वीर्यस्य। चर्किरन्। मदेषु। वृषन्। उशिजः। यत्। आविथ। सखिऽयतः। यत्। आविथ॥ चकर्थ। कारम्। एभ्यः। पृतनासु। प्रऽवन्तवे। ते। अन्याम्ऽअन्याम्। नद्यम्। सनिष्णत। श्रवस्यन्तः। सनिष्णत ॥ ५ ॥

**वेङ्कट०** अनन्तरमेव तव वीर्यमिदं तेजनेषु विकिरन्ति सोमेन, वर्षितः![1] यत् त्वम् कामयमानान् रक्षसि सख्यमिच्छतः। तथा प्रकर्षेण भजनाय पृतनासु कर्म चकर्थ एभ्यः[2]। ते अन्यामन्याम् नदीमन्नमिच्छन्तः सम्भजन्ते ॥ ५ ॥

उतो नो अस्या उषसो जुषेत ह्य१र्कस्य बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः।
यदिन्द्र हन्तवे मृधो वृषा वज्रिञ्चिकेतसि।
आ मे अस्य वेधसो नवीयसो मन्म श्रुधि नवीयसः ॥ ६ ॥

उतो इति। नः। अस्याः। उषसः। जुषेत। हि। अर्कस्य। बोधि। हविषः। हवीमऽभिः। स्वःऽसाता। हवीमऽभिः॥ यत्। इन्द्र। हन्तवे। मृधः। वृषा। वज्रिन्। चिकेतसि। आ। मे। अस्य। वेधसः। नवीयसः। मन्म। श्रुधि। नवीयसः ॥ ६ ॥

**वेङ्कट०** अपि चास्मान् अस्याः उषसः सकाशाद् यदीन्द्रः सेवेत, ततः स्तोत्रं बुध्यते हविषः होमैः सह यज्ञे सर्वैः सम्भक्ते। यदि त्वम् इन्द्र! वज्रिन्! कामानां वर्षिता[3] शत्रून् हन्तुं बुध्यसे, तदर्थं मम नवतरस्य अस्य होतुः स्तोत्रम् आभिमुख्येन शृणु ॥ ६ ॥

त्वं तमिन्द्र वावृधानो अस्मयुरमित्रयन्तं तुविजात मर्त्यं वज्रेण शूर मर्त्यम्।
जहि यो नो अघायति शृणुष्व सुश्रवस्तमः।
रिष्टं न यामन्नप भूतु दुर्मतिर्विश्वाप भूतु दुर्मतिः ॥ ७ ॥

त्वम्। तम्। इन्द्र। ववृधानः। अस्मऽयुः। अमित्रऽयन्तम्। तुविऽजात। मर्त्यम्। वज्रेण। शूर। मर्त्यम्॥ जहि। यः। नः। अघऽयति। शृणुष्व। सुश्रवःऽतमः। रिष्टम्। न। यामन्। अप। भूतु। दुःऽमतिः। विश्वा। अप। भूतु। दुःऽमतिः ॥ ७ ॥

---

1. वर्षयितः वि[2]. 2. नास्ति मूको. 3. °र्षितः ळ लपं

**वेङ्कट०** त्वम् तम् इन्द्र ! वर्धमानः अस्मत्कामः अमित्रत्वम् इच्छन्तम्[1] वृद्धजनन ! बहुजनन ! वा[2] मनुष्यम् वज्रेण[3] जहि शूर !, यः अस्माकं पापमिच्छति । शृणुष्व अस्माकमभिलषितमतिशयेन[4] शोभनश्रवण-स्त्वम्[5] । तवागमने रिष्टम् काष्ठमिवास्माकं दारिद्र्यसद्भावाद्वर्तमाना सर्वा दुर्मतिः क्रमेण नश्यतु ॥७॥

[6]इति द्वितीयाष्टके प्रथमाध्यऽये विंशो वर्गः[6] ॥

## [ १३२ ]

[6]परुच्छेपो दैवोदासिर्ऋषिः । इन्द्रो देवता, षष्ठ्याः प्रथमार्धर्चस्य इन्द्रापर्वतौ । अत्यष्टिः छन्दः[6] ।

**त्वया॑ व॒यं म॑घवन् पू॒र्व्ये॑ धन॒ इन्द्र॑त्वोताः सासह्याम पृतन्य॒तो व॑नु॒याम॑ वनु॒ष्य॒तः ।**
**नेदि॑ष्ठे अ॒स्मिन्नह॒न्यधि॑ वोचा॒ नु सु॒न्व॒ते ।**
**अ॒स्मिन् य॒ज्ञे वि च॑येमा॒ भरे॑ कृ॒तं वा॑ज॒यन्तो॒ भरे॑ कृ॒तम् ॥ १ ॥**

त्वया॑ । व॒यम् । म॒घ॒ऽव॒न् । पू॒र्व्ये॑ । धने॑ । इन्द्र॑त्वाऽऊताः । स॒स॒ह्याम॒ । पृ॒त॒न्य॒तः । व॒नु॒याम॑ । व॒नु॒ष्य॒तः ॥ नेदि॑ष्ठे । अ॒स्मिन् । अह॑नि । अधि॑ । वो॒च॒ । नु । सु॒न्व॒ते । अ॒स्मिन् । य॒ज्ञे । वि । च॒ये॒म॒ । भरे॑ । कृ॒तम् । वा॒ज॒ऽयन्तः॑ । भरे॑ । कृ॒तम् ॥ १ ॥

**वेङ्कट०** त्वया वयम् मघवन् ! प्रत्ने धने [7]तन्निमित्तम् इन्द्र ! त्वया रक्षिताः अभिभवेम[7] शत्रून् , हन्याम च[8] घ्नतः । अन्तिकतमे अस्मिन् अहनि क्षिप्रम् सुन्वते मह्यम् अधि ब्रूहि । वयमिमं यज्ञं कृत्वा सङ्ग्रामे अन्नमिच्छन्तः इन्द्रस्य करणम् वि चयेम । अन्वेषणं विचयः ॥ १ ॥

**स्व॑र्जेषे॒ भर॑ आ॒प्रस्य॒ वक्म॑न्युष॒र्बुधः॒ स्वस्मि॒न्नञ्ज॑सि क्रा॒णस्य॒ स्वस्मि॒न्नञ्ज॑सि ।**
**अह॒न्निन्द्रो॒ यथा॑ वि॒दे शी॒र्ष्णाशी॑र्ष्णोप॒वाच्यः॑ ।**
**अ॒स्म॒त्रा ते॑ स॒ध्र्य॑क् सन्तु रा॒तयो॑ भ॒द्रा भ॒द्रस्य॑ रा॒तयः॑ ॥ २ ॥**

स्वः॒ऽजेषे॑ । भरे॑ । आ॒प्रस्य॑ । वक्म॑नि । उ॒षः॒ऽबुधः॑ । स्वस्मि॑न् । अञ्ज॑सि । क्रा॒णस्य॑ । स्वस्मि॑न् । अञ्ज॑सि ॥ अह॑न् । इन्द्रः॑ । यथा॑ । वि॒दे । शी॒र्ष्णाऽशी॑र्ष्णा । उ॒प॒ऽवाच्यः॑ । अ॒स्म॒ऽत्रा । ते॒ । स॒ध्र्य॑क् । स॒न्तु॒ । रा॒तयः॑ । भ॒द्राः । भ॒द्रस्य॑ । रा॒तयः॑ ॥ २ ॥

**वेङ्कट०** सर्वजयोपाये सङ्ग्रामे हविर्भिरापूरयितुः वचने उषसि प्रबुध्यमानस्य स्वभूते ऋजुतमे कर्म कुर्वाणस्य यथा तेनोक्तम् इन्द्रः अवगच्छति तेनैव प्रकारेण तस्य शत्रून् हन्ति । नमस्कार-साधनभूतैः[9] शिरोभिः स्तोतव्यः । अस्मासु भजनीयस्य ते भजनीयानि दानानि सर्वाणि सह सन्तु ॥ २ ॥

---

१. °त्रमिच्छ° वि[२] अ[१]. २. नास्ति मूको. ३. °ण भरयो अ[१]. ४. चास्मा° वि[२] अ[१]. ५. °वण (त्वं तवागमनीयानि दानानि सर्वाणि सह सन्तु तत्तु प्रायः तत्तवान्नं होतस्तव भवति) स्त्वम् वि[२]. ६-६. नास्ति मूको. ७. नास्ति वि[१]. अ[१]. ८. नास्ति वि[२] अ[१]. ९. नमस्कारभूतैः ल.

तत् तु प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन् यज्ञे वारमकृण्वत क्षयमृतस्य वारसि क्षयम् ।
वि तद् वोचेरध द्वितान्तः पश्यन्ति रश्मिभिः ।
स घा विदे अन्विन्द्रो गवेषणो बन्धुक्षिद्भ्यो गवेषणः ॥ ३ ॥

तत् । तु । प्रयः । प्रत्नऽथा । ते । शुशुक्वनम् । यस्मिन् । यज्ञे । वारम् । अकृण्वत । क्षयम् । ऋतस्य । वाः । असि । क्षयम् ॥ वि । तत् । वोचेः । अध । द्विता । अन्तरिति । पश्यन्ति । रश्मिऽभिः ॥ सः । घ । विदे । अनु । इन्द्रः । गोऽएषणः । बन्धुक्षित्ऽभ्यः । गोऽएषणः ॥ ३ ॥

वेङ्कट० तत् तवान्नं कुसूलादिस्थमिवान्नं[1] होतः! तव भवति, यन्निमित्तमृत्विजः यज्ञे वरणीयं वेद्याख्यमासादस्थानम् अकुर्वन्[2]। त्वं च यज्ञस्य क्षयम् सम्भक्ता भवसि आसन्ने हविषि। तत् देवेभ्योऽनुवाक्यया याज्यया च द्विविधम् वि वोचेः। तच्चान्तःस्थितं हविर्देवा अग्निषु प्रविश्य तत्तेजोभिः पश्यन्ति। सः हि इन्द्रः अनु ज्ञायते पशूनामेषणशीलो बन्धुभ्यः प्रजाभ्यः[3] ॥ ३ ॥

नू इत्था ते पूर्वथा च प्रवाच्यं यदङ्गिरोभ्योऽवृणोरप व्रजमिन्द्र शिक्षन्नप व्रजम् ।
ऐभ्यः समान्या दिशास्मभ्यं जेषि योत्सि च ।
सुन्वद्भ्यो रन्धया कं चिदव्रतं हृणायन्तं चिदव्रतम् ॥ ४ ॥

नु । इत्था । ते । पूर्वऽथा । च । प्रऽवाच्यम् । यत् । अङ्गिरःऽभ्यः । अवृणोः । अप । व्रजम् । इन्द्र । शिक्षन् । अप । व्रजम् ॥ आ । एभ्यः । समान्या । दिशा । अस्मभ्यम् । जेषि । योत्सि । च । सुन्वत्ऽभ्यः । रन्धय । कम् । चित् । अव्रतम् । हृणायन्तम् । चित् । अव्रतम् ॥ ४ ॥

वेङ्कट० क्षिप्रम् इत्थमिव पूर्वस्मिन्नपि काले ते प्रवाच्यम् तत्कर्म, यत् त्वम् इन्द्र! अङ्गिरसामर्थाय गोव्रजम् अप अवृणोः प्रयच्छंस्तेभ्यः पशून्। एभ्यः समानं प्रार्थितोऽतिसृष्टः शत्रुभ्योऽस्मदर्थमभिलषितं धनम् आ जय। युध्यस्व च सुन्वद्भ्यः यजमानेभ्यः। कम् चित् अपि अयजमानं क्रुध्यन्तं वशं नय ॥ ४ ॥

सं यज्जनान् क्रतुभिः शूर ईक्षयद्धने हिते तरुषन्त श्रवस्यवः प्र यक्षन्त श्रवस्यवः ।
तस्मा आयुः प्रजावदिद् बाधे अर्चन्त्योजसा ।
इन्द्र ओक्यं दिधिषन्त धीतयो देवाँ अच्छा न धीतयः ॥ ५ ॥

सम् । यत् । जनान् । क्रतुऽभिः । शूरः । ईक्षयत् । धने । हिते । तरुषन्त । श्रवस्यवः । प्र । यक्षन्त । श्रवस्यवः ॥ तस्मै । आयुः । प्रजाऽवत् । इत् । बाधे । अर्चन्ति । ओजसा । इन्द्रे । ओक्यम् । दिधिषन्त । धीतयः । देवान् । अच्छ । न । धीतयः ॥ ५ ॥

---

१. कुसूलादिस्थमेवा' वि[२]. २. 'दनस्था' वि' अ'. ३ 'भ्यः किञ्चिदप्यजमानं वि' लपं.

**वेङ्कट०** यदा मनुष्यान् इन्द्रः प्रज्ञाभिः[1] संयोजयति । तदानीं तेऽन्नमिच्छमानाः शत्रुषु निहितं धनमुद्दिश्य शत्रून् घ्नन्ति । प्रकर्षेण च यजन्ते । इन्द्राय अन्नं पुत्रादिभिः सहैव यजमानाः शत्रूणाम् आत्मबलेन बाधित्रे प्रयच्छन्ति । तस्मिन् इन्द्रे निवासं धारयन्ति कर्माणि प्रत्येकम् । अन्येषु देवेषु यानि कर्माणि भवन्ति ॥ ५ ॥

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम् ।
दूरे चत्तायच्छन्त्सद् गहनं यदिनक्षत् ।
अस्माकं शत्रून् परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥ ६ ॥

युवम् । तम् । इन्द्रापर्वता । पुरःऽयुधा । यः । नः । पृतन्यात् । अप । तम्ऽतम् । इत् । हतम् । वज्रेण । तम्ऽतम् । इत् । हतम् ॥ दूरे । चत्ताय । छन्त्सत् । गहनम् । यत् । इनक्षत् । अस्माकम् । शत्रून् । परि । शूर । विश्वतः । दर्मा । दर्षीष्ट । विश्वतः ॥ ६ ॥

**वेङ्कट०** युवाम् तम् इन्द्रापर्वतौ ! पुरोयुध्यमानौ[2] यः नः सङ्ग्रामं कर्तुमिच्छति वज्रेण अप हतम् । ताभ्याम् दूरे निवसन्तम् कामयताम् गहनम् विपिनमरण्यम् यद् असौ प्राप्तवान् । इन्द्रमेवाह[3] । शूर ! अस्माकम् शत्रूणां दरणकुशलस्तव वज्रः शत्रून् परितः दारयतु ॥ ६ ॥

[4]इति द्वितीयाष्टके प्रथमाध्याये एकविंशो वर्गः[4] ॥

## [ १३३ ]

[4]परुच्छेपो दैवोदासिर्ऋषिः । इन्द्रो देवता । प्रथमा त्रिष्टुप्, द्वितीयातृतीयाचतुर्थ्योऽनुष्टुभः, पञ्चमी गायत्री, षष्ठी धृतिः, सप्तमी अष्टिः[4] ।

उभे पुनामि रोदसी ऋतेन द्रुहो दहामि सं महीरनिन्द्राः ।
अभिव्लग्य यत्र हता अमित्रा वैलस्थानं परि तृळ्हा अशेरन् ॥ १ ॥

उभे इति । पुनामि । रोदसी इति । ऋतेन । द्रुहः । दहामि । सम् । महीः । अनिन्द्राः । अभिऽव्लग्य । यत्र । हताः । अमित्राः । वैलऽस्थानम् । परि । तृळ्हाः । अशेरन् ॥ १ ॥

**वेङ्कट०** उभे पुनामि समूहन्या[5] खलमिव यज्ञेन द्यावापृथिवी । इन्द्रमयजमानाः द्रोग्ध्रीः प्रजाः सम् दहामि अभिप्लुत्य यस्मिन् सन्दहने हताः अमित्राः वैरनिलयं युद्धस्थानं परितः[6] छिन्नाः शेरते दृढाः[7] ॥ १ ॥

---

१. नास्ति लपं वि[1]. २. °पुरा ल; ३. इन्द्र एव वि[2] अ[1] ल. ४-४. नास्ति मूको. ५. त्रुटितं वि[2] अ[1]. ६. परि वि[1] अ[1]. ७. नास्ति वि[2] अ[1].

अभिव्लग्या चिदद्रिवः शीर्षा यातुमतीनाम् । छिन्धि वटूरिणा पदा महावटूरिणा पदा ॥

अभिऽव्लग्य । चित् । अद्रिऽवः । शीर्षा । यातुऽमतीनाम् । छिन्धि । वटूरिणा । पदा । महाऽवटूरिणा । पदा ॥ २ ॥

वेङ्कट० अभिप्लुत्य इव वज्रिन्! 'शिरांसि हिंसायुक्तानां राक्षसीनां प्रजानां' छिन्धि पादेनाऽऽवेष्टनवता पादस्याधोभागो वटूरः,[२] महता तेन युक्तेन ॥ २ ॥

अवासां मघवञ्जहि शर्धो यातुमतीनाम् ।
वैलस्थानके अर्मके महावैलस्थे अर्मके ॥ ३ ॥

अव । आसाम् । मघऽवन् । जहि । शर्धः । यातुऽमतीनाम् ।
वैलऽस्थानके । अर्मके । महाऽवैलस्थे । अर्मके ॥ ३ ॥

वेङ्कट० अव जहि यातुमतीनाम् बलम् वैलस्थानके[३] । स्वार्थे[४] कः । हिंसके महति ॥ ३ ॥

यासां तिस्रः पञ्चाशतोऽभिव्लङ्गैरपावपः ।
तत् सु ते मनायति तकत् सु ते मनायति ॥ ४ ॥

यासाम् । तिस्रः । पंचाशतः । अभिऽव्लङ्गैः । अपऽअवपः ।
तत् । सु । ते । मनायति । तकत् । सु । ते । मनायति ॥ ४ ॥

वेङ्कट० यासाम् यातुमतीनामध्यर्धं शतमभिप्लवनैर्दिवोऽधो नीतवानसि । तत् कर्म त्वां सुष्ठु पूजयति, तदल्पमपि, उपकारातिशयात् ॥ ४ ॥

पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो नि बर्हय ॥ ५ ॥

पिशङ्गऽभृष्टिम् । अम्भृणम् । पिशाचिम् । इन्द्र । सम् । मृण । सर्वम् । रक्षः । नि । बर्हय ॥५॥

वेङ्कट० त्रीनिमान् राक्षसान् एतेषामनुचरं सर्वं च रक्षः इन्द्र! निनाशय। पिशङ्गदीप्तिः उदकहरः मांसाशनः इति त्रयाणां निर्वचनम् ॥ ५ ॥

अवर्मह इन्द्र दादृहि श्रधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो घृणान्न भीषाँ अद्रिवः।
शुष्मिन्तमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे ।
अपूरुषघ्नो अप्रतीत शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः ॥ ६ ॥

---

१-१. नास्ति लप   २. 'भू° वि[२] वि[१] अ[१] लपं.   ३. नास्ति अ[१].   ४. नास्ति वि[२].

अवः । महः । इन्द्र । ददृहि । श्रुधि । नः । शुशोच । हि । द्यौः । क्षाः । न । भीषा । अद्रिऽवः । घृणात् । न । भीषा । अद्रिऽवः ॥ शुष्मिनऽतमः । हि । शुष्मिऽभिः । वधैः । उग्रेभिः । ईयसे । अपुरुषऽघ्नः । अप्रतिऽइत । शूर । सत्वऽभिः । त्रिऽसप्तैः । शूर । सत्वऽभिः ॥ ६ ॥

**वेङ्कट०** रक्ष महतोऽस्मान् इन्द्र![1] । दारय च शत्रून् । शृणु च अस्मान् । शुशोच हि द्यौः असुरैः पृथिवी च[1] भयेन वज्रिन्! । दीप्तादसुरात् शोषयितृतमः हि त्वम् शोषयितृभिः प्रहारैः उग्रैः[2] गच्छसि पुरुषानबाधमानः शत्रुभिरप्रतिगत! शूर! मरुद्भिः एकविंशत्सङ्ख्याकैः । 'त्रिषप्तासो[3] मरुतः स्वादुसमुदः' ( अ १३,१,३ ) इति मन्त्रः ॥ ६ ॥

वनोति हि सुन्वन् क्षयं परीणसः सुन्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः ।
सुन्वान इत् सिषासति सहस्रा वाज्यवृतः ।
सुन्वानायेन्द्रो ददात्याभुवं रयिं ददात्याभुवम् ॥ ७ ॥

वनोति । हि । सुन्वन् । क्षयम् । परीणसः । सुन्वानः । हि । स्म । यजति । अव । द्विषः । देवानाम् । अव । द्विषः ॥ सुन्वानः । इत् । सिसासति । सहस्रा । वाजी । अवृतः । सुन्वानाय । इन्द्रः । ददाति । आभुवम् । रयिम् । ददाति । आभुवम् । ॥ ७ ॥

**वेङ्कट०** भजते हि यजमानो महतोऽप्ययजमानस्य गृहम् । सुन्वानः अधः करोति हि शत्रून् देवानयजमानान् । सुन्वानः एव च बहूनि धनानि सम्भक्तुमिच्छति बलवान् शत्रुभिरपरिवृतः । सुन्वानाय एव इन्द्रः धनम् ददाति परितो भवत् ॥ ७ ॥

[4]इति द्वितीयाष्टके प्रथमाध्याये द्वाविंशो वर्गः[4] ॥

## [ १३४ ]

[4]परुच्छेपो दैवोदासिर्ऋषिः । वायुर्देवता । अत्यष्टिश्छन्दः, षष्ठ्या अष्टिः[4] ।

आ त्वा जुवो रारहाणा अभि प्रयो वायो वहन्त्विह पूर्वपीतये सोमस्य पूर्वपीतये ।
ऊर्ध्वा ते अनु सूनृता मनस्तिष्ठतु जानती ।
नियुत्वता रथेना याहि दावने वायो मखस्य दावने ॥ १ ॥

आ । त्वा । जुवः । ररहाणाः । अभि । प्रयः । वायो इति । वहन्तु । इह । पूर्वऽपीतये । सोमस्य । पूर्वऽपीतये ॥ ऊर्ध्वा । ते । अनु । सूनृता । मनः । तिष्ठतु । जानती । नियुत्वता । रथेन । आ । याहि । दावने । वायो इति । मखस्य । दावने ॥ १ ॥

---

१. नास्ति मूको. २. नास्ति लपं वि[1]. ३. °सप्ता° वि[1,2] लपं. ४-४. नास्ति मूको.

**वेङ्कट०** वायो ! त्वां गमनशीलाः वेगवत्यो नियुतोऽश्वं प्रति इह आ वहन्तु सोमस्य यज्ञमुखे पानाय। पुरुषस्य कामुकम् मनः जानती तव वाक् ऊर्ध्वा अनु तिष्ठतु [1]शतं गृहाण सहस्रं गृहाणेति निर्गच्छतु। त्वम् वायो! नियुत्वता रथेन धनस्य दानाय आ याहि[1] ॥ १ ॥

मन्दन्तु त्वा मन्दिनो वायविन्दवोऽस्मत्क्राणासः सुकृता अभिद्यवो गोभिः क्राणा अभिद्यवः ।
यद्ध क्राणा इरध्यै दक्षं सचन्त ऊतयः ।
सध्रीचीना नियुतो दावने धिय उप ब्रुवत ईं धियः ॥ २ ॥

मन्दन्तु । त्वा । मन्दिनः । वायो इति । इन्दवः । अस्मत् । क्राणासः । सुऽकृताः । अभिऽद्यवः । गोभिः । क्राणाः । अभिऽद्यवः ॥ यत् । ह । क्राणाः । इरध्यै । दक्षम् । सचन्ते । ऊतयः । सध्रीचीनाः । निऽयुतः । दावने । धियः । उप । ब्रुवते । ईम् । धियः ॥ २ ॥

**वेङ्कट०** [1]मन्दन्तु त्वा मदयितारः वायो! सोमाः अस्माकमभिलषितानि पशुभिः कुर्वाणाः सुसंस्कृताः[1] अभिगतदीप्तयः। यदि खलु परिचरणार्थं यजमानेषु कुर्वाणाः नियुतः वायुं सेवन्ते। ततः सहाञ्चन्तीति[2] नियुतः कामानां[3] धातारस्तेषां दानाय स्तुवन्ति एनाः ॥ २ ॥

वायुर्युङ्क्ते रोहिता वायुररुणा वायू रथे अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ।
प्र बोधया पुरंधिं जार आ ससतीमिव ।
प्र चक्षय रोदसी वासयोषसः श्रवसे वासयोषसः ॥ ३ ॥

वायुः । युङ्क्ते । रोहिता । वायुः । अरुणा । वायुः । रथे । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे ॥ प्र । बोधय । पुरम्ऽधिम् । जारः । आ । ससतीम्ऽइव । प्र । चक्षय । रोदसी इति । वासय । उषसः । श्रवसे । वासय । उषसः ॥ ३ ॥

**वेङ्कट०** [4]वायुः युङ्क्ते[4] रोहितवर्णे कदाचिदरुणे, वायुः रथे गमनशीलौ[5] धुरि वहनाय वोढारौ[6]। प्रबोधय बहुप्रज्ञम्। जारः स्वपतीमसतीं यथा बोधयति। प्रदर्शय चास्मै प्रबोधेन[7] द्यावापृथिवी। विवासय च उषसः अस्मै अन्नाय वायो[8]! ॥ ३ ॥

तुभ्यमुषासः शुचयः परावति भद्रा वस्त्रा तन्वते दंसु रश्मिषु चित्रा नव्येषु रश्मिषु ।
तुभ्यं धेनुः सबर्दुघा विश्वा वसूनि दोहते ।
अजनयो मरुतो वक्षणाभ्यो दिव आ वक्षणाभ्यः ॥ ४ ॥

---

१-१. नास्ति वि[2] अ[1]. २. सहाञ्चन् वि[2] अ[1]. ३. °मान् वि[1] लपं ४-४. नास्ति वि[1] लपं. ५. °ले ल शोधः. ६. वोढ्यौ ल शोधः. ७. °धने वि[1] लपं. ८. वयोः वि[1] लपं; वायोः वि[2] अ[1] ल.

तुभ्यम् । उषसः । शुचयः । पराऽवति । भद्रा । वस्त्रा । तन्वते । दम्ऽसु । रश्मिषु । चित्रा । नव्येषु । रश्मिषु ॥ तुभ्यम् । धेनुः । सबःऽदुघा । विश्वा । वसूनि । दोहते । अजनयः । मरुतः । वक्षणाभ्यः । दिवः । आ । वक्षणाभ्यः ॥ ४ ॥

**वेङ्कट०** तुभ्यम् उषसः[1] निर्मलाः पूर्वस्यां दिशि भजनीयानि तेजांसि तन्वते कल्याणानि दर्शनीयेषु नवतरेषु रश्मिषु । तुभ्यम् धेनुः अमृतस्य दोग्ध्री[2] विश्वानि[3] धनानि[4] घृतं पयो दधि दोग्धि[5] । स त्वम् दिवः नदीभ्यः सकाशाद् इमान् मरुतः अजनयः ॥ ४ ॥

**तुभ्यं शुक्रासः शुचयस्तुरण्यवो मदेषूग्रा इषणन्त भुर्वण्यपामिषन्त भुर्वणि ।**
**त्वां त्सारी दसमानो भगमीट्टे तक्ववीये ।**
**त्वं विश्वस्माद् भुवनात् पासि धर्मणासुर्यात् पासि धर्मणा ॥ ५ ॥**

तुभ्यम् । शुक्रासः । शुचयः । तुरण्यवः । मदेषु । उग्राः । इषणन्त । भुर्वणि । अपाम् । इषन्त । भुर्वणि ॥ त्वाम् । त्सारी । दसमानः । भगम् । ईट्टे । तक्वऽवीये । त्वम् । विश्वस्मात् । भुवनात् । पासि । धर्मणा । असुर्यात् । पासि । धर्मणा ॥ ५ ॥

**वेङ्कट०** तुभ्यम् सोमाः शुचयः त्वरमाणाः, मदेषु च सत्सु उग्राः मरुतः अपाम् [6]वृष्टिलक्षणानां भरणे व्याप्रियन्ते । त्वाम् चौरभयाद्[6] गच्छन् चौरैर्हिंस्यमानः भजनीयं स्तेनैः परिगन्तव्ये देशे स्तौति । त्वम् च असुरपक्षीयात् सर्वस्माद् भूतजातात् कर्मणा तं रक्षसि ॥ ५ ॥

**त्वं नो वायवेषामपूर्व्यः सोमानां प्रथमः पीतिमर्हसि सुतानां पीतिमर्हसि ।**
**उतो विहुत्मतीनां विशां ववर्जुषीणाम् ।**
**विश्वा इत् ते धेनवो दुह्र आशिरं घृतं दुह्रत आशिरम् ॥ ६ ॥**

त्वम् । नः । वायो इति । एषाम् । अपूर्व्यः । सोमानाम् । प्रथमः । पीतिम् । अर्हसि । सुतानाम् । पीतिम् । अर्हसि ॥ उतो इति । विहुत्मतीनाम् । विशाम् । ववर्जुषीणाम् । विश्वाः । इत् । ते । धेनवः । दुह्रे । आऽशिरम् । घृतम् । दुह्रते । आऽशिरम् ॥ ६ ॥

**वेङ्कट०** यज्ञियानामग्रिमः त्वम् वायो![1] एषाम् सुतानाम् अस्मदीयानाम् सोमानाम् प्रथममेव पानम् अर्हसि । किञ्च विविधहोमयुक्तानां याश्च विशः कदर्यतया वर्जयन्ति होमम् तासामुभयीनाम् अपि धेनवः तुभ्यं भूतेरीश्वराय पयः घृतम् च दुह्रते । कदर्याश्च त्वां भजन्ते धनेप्सया ॥ ६ ॥

---

१. °षा° वि[१] लपं. २. द्रोग्ध्री ल. ३. नास्ति वि[२] अ[१]. ४. °नि दोग्ध्री मूको. ५. नास्ति मूको. ६-६. °क्षणा··· वि[२] अ[१].

## [ १३५ ]

[1]परुच्छेपो दैवोदासिर्ऋषिः। आदितस्तिसृणां नवम्याश्च वायुर्देवता, अन्यासाम् इन्द्रवायू। अत्यष्टिश्छन्दः, सप्तम्यष्टम्योस्त्रिष्टुप्[1]।

स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते शतिनीभिर्नियुत्वते।
तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे।
प्र ते सुतासो मधुमन्तो अस्थिरन् मदाय क्रत्वे अस्थिरन् ॥ १ ॥

स्तीर्णम्। बर्हिः। उप। नः। याहि। वीतये। सहस्रेण। निऽयुता। नियुत्वते। शतिनीभिः। नियुत्वते ॥ तुभ्यम्। हि। पूर्वऽपीतये। देवाः। देवाय। येमिरे। प्र। ते। सुतासः। मधुऽमन्तः। अस्थिरन्। मदाय। क्रत्वे। अस्थिरन् ॥ १ ॥

वेङ्कट० स्तीर्णम् बर्हिः उपगच्छ अस्मान् पानाय सहस्रसङ्ख्याभिः शतसङ्ख्याभिश्च नियुद्भिः। तद्वते तुभ्यम् स्तीर्णम्। अनामन्त्रितेऽपि सर्वनिघातो दृष्टः। तुभ्यम् हि देवाय देवाः पूर्वपानार्थम् नियमितवन्तः[2], 'मदग्रा एव वो ग्रहा गृह्यान्तै[3]' (तै ६,४,७,१) इति त्वया प्रपानार्थम्[4]। मधुररसाः[5] सोमाः हविर्धानात् तव मदं प्रज्ञां च कर्तुं प्रतिष्ठन्ते ॥ १ ॥

तुभ्यायं सोमः परिपूतो अद्रिभिः स्पार्हा वसानः परि कोशमर्षति शुक्रा वसानो अर्षति।
तवायं भाग आयुषु सोमो देवेषु हूयते।
वह वायो नियुतो याह्यस्मयुर्जुषाणो याह्यस्मयुः ॥ २ ॥

तुभ्य। अयम्। सोमः। परिऽपूतः। अद्रिऽभिः। स्पार्हा। वसानः। परि। कोशम्। अर्षति। शुक्रा। वसानः। अर्षति ॥ तव। अयम्। भागः। आयुषु। सोमः। देवेषु। हूयते। वह। वायो इति। निऽयुतः। याहि। अस्मऽयुः। जुषाणः। याहि। अस्मऽयुः ॥ २ ॥

वेङ्कट० तुभ्यम् अयम् सोमः अभिषुतो ग्रावभिः ऋजीषाद् विविक्तः स्पृहणीयानि कल्याणानि उदकानि[6] वसानः अंशुं विसृज्य रसात्मकोऽभिषूयमाणो निर्गच्छति[7]। अंशूनपहाय निर्गच्छति। तव अयम् भागः मनुष्येषु स्थितः सोमः देवानां मध्ये हूयते। तथा सति आगच्छ। वायो! नियुतः च[8] गमनार्थमभिगच्छ अस्मत्कामः प्रीयमाणः ॥ २ ॥

आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि वीतये वायो हव्यानि वीतये।
तवायं भाग ऋत्वियः सरश्मिः सूर्ये सचा।
अध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत ॥ ३ ॥

---

१-१. नास्ति मूको २. °यत°: वि[2]. ३. गृह्यन्ता अ[1]; गृह्यन्ते ल. ४. प्रा° वि[2] अ[1], ५. मधुरसाः वि[2] लपं. ६. °कानि च वि[2] अ[1]. ७. निर्गत्य वि[2] अ[1]. ८. नास्ति वि[2] लपं.

आ । नः । नियुत्ऽभिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः । उप । याहि । वीतये । वायो इति । हव्यानि । वीतये ॥ तव । अयम् । भागः । ऋत्वियः । सऽरश्मिः । सूर्ये । सचा । अध्वर्युऽभिः । भरमाणाः । अयंसत । वायो इति । शुक्राः । अयंसत ॥ ३ ॥

**वेङ्कट०** वायो[1] ! अस्मद्यज्ञं शतसहस्रसङ्ख्याभिः अश्वाभिः हवींषि खादितुम् उपागच्छ । तव अयम् भागः प्राप्तकालः सूर्यरश्मिभिः सहितः, उदिते सूर्ये तेन सहितस्तस्मिन्नुदिते गृह्यमाणः । तस्मिन्काले तव अध्वर्युभिः इमे सोमास्त्वदर्थं हविर्धानात् प्रक्रियमाणाः होमार्थं गृहीताः ॥ ३ ॥

**आ वां रथो नियुत्वान् वक्षदवसेऽभि प्रयांसि सुधितानि वीतये वायो हव्यानि वीतये ।**
**पिबतं मध्वो अन्धसः पूर्वपेयं हि वां हितम् ।**
**वायवा चन्द्रेण राधसा गतमिन्द्रश्च राधसा गतम् ॥ ४ ॥**

आ । वाम् । रथः । नियुत्वान् । वक्षत् । अवसे । अभि । प्रयांसि । सुऽधितानि । वीतये । वायो इति । हव्यानि । वीतये ॥ पिबतम् । मध्वः । अन्धसः । पूर्वऽपेयम् । हि । वाम् । हितम् । वायो इति । आ । चन्द्रेण । राधसा । आ । गतम् । इन्द्रः । च । राधसा । आ । गतम् ॥४॥

**वेङ्कट०** इन्द्रवायू ! युवाम् नियुत्वान् आवहतु रथः सोमलक्षणानि सुनिहितानि[2] हवींषि खादितुम् अभि । भवन्तौ च मधुसदृशं सोमम् पिबतम् । युवयोः हि पूर्वपानं देवैर्निहितम् । तथा सति वायो ! त्वम् इन्द्रः च हर्षकेण अस्मभ्यं प्रदित्सितेन धनेन सह आ गच्छतम् ॥ ४ ॥

**आ वां धियो ववृत्युरध्वराँ उपेममिन्दुं मर्मृजन्त वाजिनमाशुमत्यं न वाजिनम् ।**
**तेषां पिबतमस्मयू आ नो गन्तमिहोत्या ।**
**इन्द्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवम् ॥ ५ ॥**

आ । वाम् । धियः । ववृत्युः । अध्वरान् । उप । इमम् । इन्दुम् । मर्मृजन्त । वाजिनम् । आशुम् । अत्यम् । न । वाजिनम् ॥ तेषाम् । पिबतम् । अस्मयू इत्यस्मऽयू । आ । नः । गन्तम् । इह । ऊत्या । इन्द्रवायू इति । सुतानाम् । अद्रिऽभिः । युवम् । मदाय । वाजऽदा । युवम् ॥ ५ ॥

**वेङ्कट०** वाम् अस्मत्परिचरणकर्माणि यज्ञान् प्रत्यावर्तयेयुः । त्वदर्थम् इमम् इन्दुम् अध्वर्यवो दशापवित्रेण परिमृष्टवन्तः [3]शीघ्रम् व्यापिनम् अश्वमिव[3] बलवन्तमारोहणाय । तानिमान् ग्रावभिः सुतान् सोमान् अस्मत्कामौ युवाम्[4] मदाय पिबतम् । आगच्छतं च रक्षणार्थम् इन्द्रवायू ! अन्नस्य दातारौ ! । तेषामिन्दुमित्येकवचनबहुवचनयोः पादभेदात् समन्वयः ॥ ५ ॥

[5]इति द्वितीयाष्टके प्रथमाध्याये चतुर्विंशो वर्गः[5] ।

---

१. नास्ति वि[१] लपं. २. सुहि° वि[१]. ३-३. °शीघ्र॰यापिनो … अ[१]; शीघ्रव्यापिन••• वि[१]; °अश्वानाम् इव ल. ४. युवम् अ[१]. ५-५. नास्ति मूको.

इमे वां सोमा अप्स्वा सुता इहाध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत ।
एते वामभ्यसृक्षत तिरः पवित्रमाशवः ।
युवायवोऽति रोमाण्यव्यया सोमासो अत्यव्यया ॥ ६ ॥

इमे । वाम् । सोमाः । अप्ऽसु । आ । सुताः । इह । अध्वर्युऽभिः । भरमाणाः । अयंसत । वायो इति । शुक्राः । अयंसत ॥ एते । वाम् । अभि । असृक्षत । तिरः । पवित्रम् । आशवः ॥ युवाऽयवः । अति । रोमाणि । अव्यया । सोमासः । अति । अव्यया ॥ ६ ॥

**वेङ्कट०** इमे युवयोः वसतीवरीषु सुताः यज्ञे अध्वर्युभिः हविर्धानात्[1] प्रह्रियमाणा दीप्ताः गृहीताः । एते चाभिषवानन्तरं युवयोरर्थम् तिरः पवित्रम् विसृष्टा आसन् । यथा मध्ये पवित्रम् भवति एवमाशुव्यापिनोऽतिसृष्टाश्चामी सोमाः युष्मत्कामाः अविमयानि दशापवित्रस्थानि रोमाणि अतीत्य गच्छन्ति ॥ ६ ॥

अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र गच्छतं गृहमिन्द्रश्च गच्छतम् ।
वि सूनृता ददृशे रीयते घृतमा पूर्णया नियुता याथो अध्वरमिन्द्रश्च याथो अध्वरम् ॥७॥

अति । वायो इति । ससतः । याहि । शश्वतः । यत्र । ग्रावा । वदति । तत्र । गच्छतम् । गृहम् । इन्द्रः । च । गच्छतम् ॥ वि । सूनृता । ददृशे । रीयते । घृतम् । आ । पूर्णया । निऽयुता । याथः । अध्वरम् । इन्द्रः । च । याथः । अध्वरम् ॥ ७ ॥

**वेङ्कट०** अकर्मपरान् स्वपतः सर्वान् वायो! त्वमतीत्य गच्छ[2] । यत्र अभिषवग्रावा शब्दं करोति तत्र इन्द्रवायू! गच्छतम् । अस्मिन् गृहे स्तुतिवाक् विविधं दृश्यते । [3]घृतम् च[3] होमार्थं गच्छति । तथा सति इन्द्रवायू! यज्ञमिमम् पूर्णया नियुता याथः ॥ ७ ॥

अत्राह तद् वहेथे मध्व आहुतिं यमश्वत्थमुपतिष्ठन्त जायवोऽस्मे ते सन्तु जायवः ।
साकं गावः सुवते पच्यते यवो न ते वाय उप दस्यन्ति धेनवो नाप दस्यन्ति धेनवः ॥८॥

अत्र । अह । तत् । वहेथे इति । मध्वः । आऽहुतिम् । यम् । अश्वत्थम् । उपऽतिष्ठन्त । जायवः । अस्मे इति । ते । सन्तु । जायवः ॥ साकम् । गावः । सुवते । पच्यते । यवः । न । ते । वायो इति । उप । दस्यन्ति । धेनवः । न । अप । दस्यन्ति । धेनवः ॥ ८ ॥

**वेङ्कट०** यम्[4] हविर्भिर्देवान् व्याप्नुवन्तम् [5]शत्रुं जायवः[5] अभ्युदयजन्मानि उपतिष्ठन्ते अधः स्थितानि

---

१. °भिर्विधा° भवि[2]. २. आग° वि[1] अ[1] ल. ३-३. नास्ति वि[1]. ४. यत् मूको. ५-५. अभ्युदय जन्मानि शत्रुजायवः मूको.

भवन्ति । अस्मिन्[1] एव युवां तामिमां[2] सोमस्य आहुतिम् आत्मानं प्रापयेथे । अथाभ्युदयजन्मानि अस्मासु सन्तु । वायो ! तव प्रसादाद् मदीयाः गावः च सह प्रसूयन्ते । यवः च पक्को भवति । न त्वदीयाः धेनवः उप दस्यन्ति[3] न अपि अप दस्यन्ति इत्यल्पो भेदः । 'वायुर्वै पयसः प्रदाता'' ( काठ ३५,१७ ) इति ब्राह्मणम् ॥ ८ ॥

इमे ये ते सु वायो बाह्वोजसोऽन्तर्नदी ते पतयन्त्युक्षणो महि व्राधन्त उक्षणः ।
धन्वञ्चिद् ये अनाशवो जीराश्चिदगिरौकसः ।
सूर्यस्येव रश्मयो दुर्नियन्तवो हस्तयोर्दुर्नियन्तवः ॥ ९ ॥

इमे । ये । ते । सु । वायो इति । बाहुऽओजसः । अन्तः । नदी इति । ते । पतयन्ति । उक्षणः । महि । व्राधन्तः । उक्षणः ॥ धन्वन् । चित् । ये । अनाशवः । जीराः । चित् । अगिराऽओकसः । सूर्यस्यऽइव । रश्मयः । दुःऽनियन्तवः । हस्तयोः । दुःऽनियन्तवः ॥ ९ ॥

वेङ्कट० वायो ! ये इमे त्वदीयाः प्रत्यक्षपोताः[4] बाहुबलाः नद्याम् अन्तः सुष्ठु पतन्ति । उदकसमीपे हि शीघ्रं पतन्ति वाताः सेक्तार उदकबिन्दुभिः महद् वर्धमाना महान्तो भवन्तः । पुनः ते इति पूरणार्थम् । ये च अन्तरिक्षेऽपि निरालम्बे न नश्यन्ति, न पतन्ति । क्षिप्राः अगिरौकसः ये पदार्थान्निगिरन्ति तैः सेव्यमाना गिरौकसोऽतादृशाः । न ह्यपवरकादौ[6] प्रविष्टा वातास्तत्र तिष्ठन्ति । ते इमे सूर्यरश्मय इव हस्ताभ्यां नियन्तुमशक्या[7] भवन्ति ॥ ९ ॥

[8]इति द्वितीयाष्टके प्रथमाध्याये पञ्चविंशो वर्गः[8] ॥

## [ १३६ ]

[8]परुच्छेपो दैवोदासिर्ऋषिः । मित्रावरुणौ देवता, षष्ठीसप्तम्योः लिङ्गोक्ता । अत्यष्टिः छन्दः, सप्तमी त्रिष्टुप्[8] ।

प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां स्वादिष्ठं मृळयद्भ्याम् ।
ता सम्राजा घृतासुती यज्ञेयज्ञ उपस्तुता ।
अथैनोः क्षत्रं न कुतश्चनाधृषे देवत्वं नू चिदाधृषे ॥ १ ॥

प्र । सु । ज्येष्ठम् । निऽचिराभ्याम् । बृहत् । नमः । हव्यम् । मतिम् । भरत । मृळयत्ऽभ्याम् । स्वादिष्ठम् । मृळयत्ऽभ्याम् ॥ ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । यज्ञेऽयज्ञे । उपऽस्तुता । अथ । एनोः । क्षत्रम् । न । कुतः । चन । आऽधृषे । देवऽत्वम् । नु । चित् । आऽधृषे ॥ १ ॥

---

१. तस्मिन् मूको. २. तदिदम् मूको. ३. नोपदस्यन्ति शुष्यन्ति वि[2] अ[1]; नोपद° वि[1] ल. ४. °दापयिता वि[1]; °दापयति अ[1] लपं. ५. °पाता वि[2] अ[1]. ६. °पवरकादेन ल. ७. °मशक्ता वि[1] ल लपं, ८-८. नास्ति मूको.

वेङ्कट० सुष्ठु प्र[1] भरत प्रशस्यं नितरां प्रज्ञाभ्यां महान्तं नमस्कारम् हव्यम् स्तोत्रं चान्नप्रदानेन मनुष्यान् स्वादुतमं[2] सुखयद्भ्यां मित्रावरुणाभ्याम्। तौ हि सर्वेषामीश्वरौ घृतदानौ[3] वर्षणात् सर्वेष्वेव यज्ञेषु उपस्तुतौ भवतः। ततः एनयोः बलं न कुतः चिदपि बलयुक्ताद् आधर्षणाय [4]भवति। न† देवत्वम् एव क्षिप्रम् अन्येषामाधर्षणाय[4] भवति ॥ १ ॥

अदर्शि गातुरुरवे वरीयसी पन्था ऋतस्य समयंस्त रश्मिभिश्चक्षुर्भगस्य रश्मिभिः।
द्युक्षं मित्रस्य सादनमर्यम्णो वरुणस्य च।
अथा दधाते बृहदुक्थ्यं१ वय उपस्तुत्यं बृहद् वयः ॥ २ ॥

अदर्शि। गातुः। उरवे। वरीयसी। पन्थाः। ऋतस्य। सम्। अयंस्त। रश्मिऽभिः। चक्षुः। भगस्य। रश्मिऽभिः ॥ द्युक्षम्। मित्रस्य। सदनम्। अर्यम्णः। वरुणस्य। च।
अथ। दधाते इति। बृहत्। उक्थ्यम्। वयः। उपऽस्तुत्यम्। बृहत्। वयः ॥ २ ॥

वेङ्कट० विस्तीर्णायादित्याय गन्तुं विस्तीर्णा[5] गातुः प्रथमम् अदर्शि। पन्थाः आदित्यस्य रश्मिभिः भगस्य देवस्य तेजो जग्राह। भगतेजसा प्रकाशत इत्यर्थः। [6]‡मित्रस्य आवासस्थानं दीप्तं‡ भवति अर्यम्णः तदनन्तरम् वरुणस्य इति क्रमः। इत्थमह्नि प्रादुर्भूते ‡मित्रावरुणौ धारयेते§ महद् उक्थार्हं हविर्लक्षणमन्नम् उपेत्य स्तोतव्यम्‡[6] ॥ २ ॥

ज्योतिष्मतीमदितिं धारयत्क्षितिं स्वर्वतीमा सचेते दिवेदिवे जागृवांसा दिवेदिवे।
ज्योतिष्मत् क्षत्रमाशाते आदित्या दानुनस्पती।
मित्रस्तयोर्वरुणो यातयज्जनोऽर्यमा यातयज्जनः ॥ ३ ॥

ज्योतिष्मतीम्। अदितिम्। धारयत्ऽक्षितिम्। स्वःऽवतीम्। आ। सचेते इति। दिवेऽदिवे। जागृवांसा। दिवेऽदिवे ॥ ज्योतिष्मत्। क्षत्रम्। आशाते इति। आदित्या। दानुनः। पती इति।
मित्रः। तयोः। वरुणः। यातयत्ऽजनः। अर्यमा। यातयत्ऽजनः ॥ ३ ॥

वेङ्कट० [7]अग्निसहितां वेदिलक्षणां भूमिम् घृतर्त्विङ्मनुष्याम् सर्वैर्हविर्भिर्युक्ताम् जागरणशीलौ[7] मित्रावरुणौ अन्वहम् आभिमुख्येन सेवेते। ताविमावदितेः पुत्रौ दानस्य[8] स्वामिनौ युद्धेषु दीप्तियुक्तं बलं प्राप्नुतः। तयोः मित्रः हतशत्रुजनो[9] भवति वरुणः च एवम् अर्यमा च तत्सहितः ॥ ३ ॥

---

१. नास्ति वि[1] लपं. २. नास्ति वि[2] अ[1]. ३. घृतदोहौ वि; धृतदेहौ अ[1]. ४-४. नास्ति वि[2] अ[1]. † नास्ति वि[1] लपं. ५. अवि° वि[1] लपं. ६-६. नास्ति वि[1]. †-† नास्ति अ[1]; °त्रस्य वासस्था° वि[1] लपं. ‡-‡ नास्ति अ[1] § °रयतः वि[1] लपं. ७-७. नास्ति वि[1] अ[1]. † भूमीम् वि[1]. ८. दानवस्य वि[1] अ[1]. ९. °त्रुजो वि[1] लपं.

अयं मित्राय वरुणाय शन्तमः सोमो भूत्ववपानेष्वाभगो देवो देवेष्वाभगः ।
तं देवासो जुषेरत विश्वे अद्य सजोषसः ।
तथा राजाना करथो यदीमह ऋतावाना यदीमहे ॥ ४ ॥

अयम् । मित्राय । वरुणाय । शम्ऽतमः । सोमः । भूतु । अवऽपानेषु । आऽभगः । देवः । देवेषु । आऽभगः ॥ तम् । देवासः । जुषेरत । विश्वे । अद्य । सऽजोषसः । तथा । राजाना । करथः । यत् । ईमहे । ऋतऽवाना । यत् । ईमहे ॥ ४ ॥

**वेङ्कट०** [1]अयम् मित्रावरुणाभ्यां[1] सुखतमः सोमः भवतु देवानां मध्ये अवपानेषु आभजनीयः देवः । तम् [2]इमम् अद्य सङ्गताः सर्वे देवाः सेवन्ताम् । तथा राजानौ! कुरुथः सत्यवन्तौ, यत् वयं याचामहे इति[2] ॥ ४ ॥

यो मित्राय वरुणायाविधज्जनोऽनर्वाणं तं परि पातो अंहसो दाश्वांसं मर्तमंहसः ।
तमर्यमाभि रक्षत्यृजूयन्तमनु व्रतम् ।
उक्थैर्य एनोः परिभूषति व्रतं स्तोमैराभूषति व्रतम् ॥ ५ ॥

यः । मित्राय । वरुणाय । अविधत् । जनः । अनर्वाणम् । तम् । परि । पातः । अंहसः । दाश्वांसम् । मर्तम् । अंहसः ॥ तम् । अर्यमा । अभि । रक्षति । ऋजुऽयन्तम् । अनु । व्रतम् ॥ उक्थैः । यः । एनोः । परिऽभूषति । व्रतम् । स्तोमैः । आऽभूषति । व्रतम् ॥ ५ ॥

**वेङ्कट०** [3]†यः मित्राय† वरुणाय च परिचरति जनः, हवींषि दत्तवन्तम्[3] तम्[4] [5]मर्त्यम् अप्रत्यृतम्[5] अस्खलितम् इमौ [6]देवौ अंहसः[6] पापात् परि[7] रक्षतः । तम् अर्यमा च देवः अभि रक्षति[7] ऋजुमिच्छन्तम् तस्य कर्म लक्षीकृत्य शस्त्रैः यः एनयोः स्तोत्रैश्च कर्म परितो भवति, आभिमुख्येन च भवति ॥ ५ ॥

नमो दिवे बृहते रोदसीभ्यां मित्राय वोचं वरुणाय मीळ्हुषे सुमृळीकाय मीळ्हुषे ।
इन्द्रमग्निमुप स्तुहि द्युक्षमर्यमणं भगम् ।
ज्योग्जीवन्तः प्रजया सचेमहि सोमस्योती सचेमहि ॥ ६ ॥

नमः । दिवे । बृहते । रोदसीभ्याम् । मित्राय । वोचम् । वरुणाय । मीळ्हुषे । सुऽमृळीकाय । मीळ्हुषे ॥ इन्द्रम् । अग्निम् । उप । स्तुहि । द्युक्षम । अर्यमणम् । भगम् । ज्योक् । जीवन्तः । प्रऽजया । सचेमहि । सोमस्य । ऊती । सचेमहि ॥ ६ ॥

---

१-१. वरुणाभ्याम् वि[1,2] अ[1] लपं. २-२. नास्ति वि[1] अ[1]. ३-३. नास्ति वि[1] अ[1]. †-† नास्ति वि[1]. ४. नास्ति मूको. ५-५. नास्ति अ[1]. ६-६. देवावावहतः मूको. ७. °क्षतु वि[1].

**वेङ्कट०** यथालिङ्गदेवतामन्त्रः । नमः महते दीप्तायान्तरिक्षाय द्यावापृथिवीभ्यां च अहं ब्रवीमि, मित्रावरुणाभ्यां च सेक्तृभ्यां सुखयितृभ्याम् । अथ स्तोतः ![1] इन्द्रम्[2] अग्निम् च उप स्तुहि, दीप्तम् अर्यमणम् भगम् च । चिरम् जीवन्तः प्रजया संसृष्टा भवाम सोमस्य रक्षणेन ॥ ६ ॥

ऊती देवानां वयमिन्द्रवन्तो मंसीमहि स्वयशसो मरुद्भिः ।
अग्निर्मित्रो वरुणः शर्म यंसन् तदश्याम मघवानो वयं च ॥ ७ ॥

ऊती । देवानाम् । वयम् । इन्द्रऽवन्तः । मंसीमहि । स्वऽयशसः । मरुत्ऽभिः ।
अग्निः । मित्रः । वरुणः । शर्म । यंसन् । तत् । अश्याम । मघऽवानः । वयम् । च ॥ ७ ॥

**वेङ्कट०** रक्षणेन[3] देवानाम्[4] वयम् इन्द्रयुक्ताः [5]स्वभूतान्नाः अर्चयाम[5] मरुद्भिः सहितमिन्द्रम् । अस्मभ्यम्[6] अग्न्यादयश्च शर्म[7] सुखं प्रयच्छन्तु । वयम् च अग्न्यादिभिर्दत्तं तत्[7] धनवन्तः प्राप्नुयाम ॥ ७ ॥

[8]इति द्वितीयाष्टके प्रथमाध्याये षड्विंशो वर्गः[8] ॥

द्वितीयस्याष्टकस्याद्यमध्यायं व्याकरोदिति ।

वण्णयस्य[9] कुले जातो माधवः सुन्दरीसुतः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने

द्वितीयाष्टके प्रथमोध्यायः ॥

—*—

**इति ऋग्वेदे सभाष्ये द्वितीयाष्टके प्रथमोऽध्यायः ॥**



---

१. स्तोतारम् वि[2] अ[1].   २. इमम् वि[1] लपं.   ३. नास्ति वि[1] अ[1].   ४. नास्ति वि[2].   ५-५. °नां … मूको.   ६. शर्मास्म मूको.   ७. नास्ति मूको.   ८-८. नास्ति मूको.   ९. वण्य° वि[2] अ[1].

## अथ द्वितीयाष्टके द्वितीयोऽध्यायः

वेङ्कट०

'सुषुमा यातमद्रिभिः' व्याचिख्यासति माधवः ।
प्रदर्शयँल्लिटो वृत्तिं परोक्षे तत्र लिट् स्मृतः ॥ १ ॥

भूतेऽनद्यतने चै[२] 'ये अग्नेः परि जज्ञिरे'[१] ।
'इदं विष्णुर्वि चक्रमे [२]त्रेधा नि दधे पदम्'† ॥ २ ॥

'उवासोषा‡ उच्छाच्च§ नु'[२] 'ततक्षुर्मनसा हरी'[३] ।
दृश्यतेऽद्यतने चापि भूते तत्र निदर्शनम् ॥ ३ ॥

'रश्मिरस्या ततानेति'[४] दिवाद्दृष्टमपश्यतः ।
रश्मिं च [५]रात्रौ विततमेष[५] चाद्यतनो मतः ॥ ४ ॥

अपरोक्षेऽपि[६] लिड् दृष्टो 'जुहुरे वि चितयन्तः'[७] ।
'आ दृळ्हां पुरं विविशुः'[८], 'सहसानं ववन्दिम'[९] ॥ ५ ॥

कर्माणि यौवने चक्रे यानि वव्रिर्ऋषिः पुरा ।
तानि जीर्णः कथयति [१०]स्फुटा चात्रापरोक्षता[१०] ॥ ६ ॥

[११]यद्वा परोक्षमात्मानं[११] प्रथमेनात्र निर्दिशन् ।
पुरुषेण परोक्षां च क्रियामप्यपदिष्टवान् ॥ ७ ॥

'यत्रा नश्चक्रा जरसम्'[१२] दृश्यतेऽत्र भविष्यति ।
[१३]यद्वा लिण्न्याय्य[१३] एवायं देवैः [१४]क्लृप्तं ह्यनूद्यते[१४] ॥ ८ ॥

सृजन्तो हि जगद् देवा मनुष्यस्य शतायुषः ।
जरामकल्पयंस्तस्मादर्थो[१५] भूतोऽत्र विद्यते ॥ ९ ॥

यदा न शक्नुयाद्येषु लिटं स्थापयितुं तदा ।
वाक्यार्थानुगुणांस्तांस्तान् पण्डितोऽर्थान् प्रदर्शयेत् ॥ १० ॥

---

१. ऋ १०, ६२, ६. २-२. नास्ति वि[२] अ[१]. † ऋ १, २२, १७. ‡ नास्ति वि[१] लपं. § ऋ १, ४८, ३. ३. ऋ १, २०, २. ४. ऋ १, ३५, ७. ५-५. रात्रावपि तमेष वेंऋअ. ६. °क्षे च वि[२] अ[१]. ७. ऋ ५,१९,२. ८. ऋ ५,१९,२. ९. ऋ ५,२५,९. १०-१०. स्फुटाञ्चा° वि[१] ल लपं; स्फुटा यात्रा° वि[२] अ[१]. ११-११. यद्वापरो° वेंऋअ. १२. ऋ १,८९,९. १३-१३. °द्वापि न्याय लपं; °न्याय वि[१,२] अ[१] ल. १४-१४. आप्तन्त्वनूद्यते वेंऋअ; अप्तं ह्य° वि[२] अ[१]. १५. °ल्पयन्तस्मा° वें अ अ.

[ १३७ ]

[1]परुच्छेपो दैवोदासिर्ऋषिः । मित्रावरुणौ देवता । अतिशक्वरी छन्दः[1] ।

सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे ।
आ राजाना दिविस्पृशास्मत्रा गन्तमुप नः ।
इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः ॥ १ ॥

सुसुम । आ । यातम् । अद्रिऽभिः । गोऽश्रीताः । मत्सराः । इमे । सोमासः । मत्सराः । इमे ।
आ । राजाना । दिविऽस्पृशा । अस्मऽत्रा । गन्तम् । उप । नः ।
इमे । वाम् । मित्रावरुणा । गोऽआशिरः । सोमाः । शुक्राः । गोऽआशिरः ॥ १ ॥

**वेङ्कट०** परुच्छेपः । सुतवन्तः सोमम् ग्रावभिः, आगच्छतम् । पयसा श्रिताः इमे सोमाः मदकराः । राजानौ ! द्युलोकस्य स्प्रष्टारौ ! असुरेभ्यस्त्रातारौ उप आ गच्छतम् अस्मान् । इमे हि सोमाः मित्रावरुणौ ! युवयोरर्थाय पयोमिश्रणाः[2] ज्वलन्तीति ॥ १ ॥

इम आ यातमिन्दवः सोमासो दध्याशिरः सुतासो दध्याशिरः ।
उत वामुषसो बुधि साकं सूर्यस्य रश्मिभिः ।
सुतो मित्राय वरुणाय पीतये चारुर्ऋताय पीतये ॥ २ ॥

इमे । आ । यातम् । इन्दवः । सोमासः । दधिऽआशिरः । सुतासः । दधिऽआशिरः ।
उत । वाम् । उषसः । बुधि । साकम् । सूर्यस्य । रश्मिऽभिः ।
सुतः । मित्राय । वरुणाय । पीतये । चारुः । ऋताय । पीतये ॥ २ ॥

**वेङ्कट०** आदित्यग्रहो दधिमिश्रणः[3] । इमे वां मित्रावरुणौ ! दीप्ताः सुताः सोमाः दधिमिश्रणाः तथा सति आगच्छतम् । अपिच वाम् उषसः बोधकाले सूर्यरश्मिषु[4] प्रादुर्भूतेषु सुतः सोमोऽस्माभिः मित्राय वरुणाय सत्यभूताय पानाय शोभनः ॥ २ ॥

तां वां धेनुं न वासरीमंशुं दुहन्त्यद्रिभिः सोमं दुहन्त्यद्रिभिः ।
अस्मत्रा गन्तमुप नोऽर्वाञ्चा सोमपीतये ।
अयं वां मित्रावरुणा नृभिः सुतः सोम आ पीतये सुतः ॥ ३ ॥

---

१. नास्ति मूको. २. °श्रणात् वि[2]. ३. °श्रणाः ल. ४. °षु च वि[2] अ[1].

ताम् । वाम् । धेनुम् । न । वासरीम् । अंशुम् । दुहन्ति । अद्रिऽभिः । सोमम् । दुहन्ति । अद्रिऽभिः ॥ अस्मऽत्रा । गन्तम् । उप । नः । अर्वाञ्चा । सोमऽपीतये ।
अयम् । वाम् । मित्रावरुणा । नृऽभिः । सुतः । सोमः । आ । पीतये । सुतः ॥ ३ ॥

**वेङ्कट०** ताम् धेनुम् इव **वासयित्रीम्** वाम् **सोमलताम् ग्रावभिः** दुहन्ति **सोमरसम्**। अस्मत्रा गन्तम् उप नः **अस्मान् उपागच्छतम् अभिमुखौ सोमपानाय**। अयम्[1] **मित्रावरुणौ! युवाभ्याम् आभिमुख्येन पानाय** सोमः सुतः **ऋत्विग्भिः** ॥ ३ ॥

**[2]इति द्वितीयाष्टके द्वितीयाध्याये प्रथमो वर्गः[2] ॥**

# [ १३८ ]

**[2]परुच्छेपो दैवोदासिर्ऋषिः । पूषा देवता । अत्यष्टिः छन्दः[2] ।**

**प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो न तन्दते स्तोत्रमस्य न तन्दते ।**
**अर्चामि सुम्नयन्नहमन्त्यूतिं मयोभुवम् ।**
**विश्वस्य यो मन आयुयुवे मखो देव आयुयुवे मखः ॥ १ ॥**

प्रऽप्र । पूष्णः । तुविऽजातस्य । शस्यते । महिऽत्वम् । अस्य । तवसः । न । तन्दते । स्तोत्रम् । अस्य । न । तन्दते ॥ अर्चामि । सुम्नऽयन् । अहम् । अन्तिऽऊतिम् । मयःऽभुवम् ।
विश्वस्य । यः । मनः । आऽयुयुवे । मखः । देवः । आऽयुयुवे । मखः ॥ १ ॥

**वेङ्कट० अन्वहमुदयाद् बहुजनस्य** पूष्णः **अस्माभिः प्रशंसा क्रियते। महत्त्वम्** अस्य **वृद्धस्य न क्षीणं भवति,** स्तोत्रम् च । **सुखमिच्छन्** अहम् **अन्तिके यस्य रक्षा भवति, तम् सुखस्य भावयितारम् स्तौमि** । विश्वस्य **मनुष्यस्य**[3] [4]यः मनः **आत्मनोऽभिमुखमन्येभ्यो देवेभ्यः पृथक् करोति महनीयः**† देवः[4] ॥ १ ॥

**प्र हि त्वा पूषन्नजिरं न यामनि स्तोमेभिः कृण्व ऋणवो यथा मृध उष्ट्रो न पीपरो मृधः ।**
**हुवे यत् त्वा मयोभुवं देवं सख्याय मर्त्यः ।**
**अस्माकमाङ्गूषान् द्युम्निनस्कृधि वाजेषु द्युम्निनस्कृधि ॥ २ ॥**

प्र । हि । त्वा । पूषन् । अजिरम् । न । यामनि । स्तोमेभिः । कृण्वे । ऋणवः । यथा । मृधः । उष्ट्रः । न । पीपरः । मृधः ॥ हुवे । यत् । त्वा । मयःऽभुवम् । देवम् । सख्याय । मर्त्यः ।
अस्माकम् । आङ्गूषान् । द्युम्निनः । कृधि । वाजेषु । द्युम्निनः । कृधि ॥ २ ॥

---

**१. नास्ति वि[२] अ[१]. २-२. नास्ति मूको. ३.** ष्यस्य आत्मनोऽभिमुखः **वि[१] लपं. ४-४. नास्ति वि[१] लपं.** † मह° **अ[१].**

वेङ्कट० [1]पूषन्! त्वम् मृधः[1] शत्रून् आरया तुदसि एवमहम् त्वा[2] स्तोत्रैः अस्मत्कार्येऽधिकृतं करोमि। यथा गमनशीलमश्वम् गमने योजयन्त्येवम्। तथा सति यथा उष्ट्रः शीघ्रं [3]गच्छत्येवम् शत्रून् पारयाधिगच्छेति। यस्मात् त्वाम् हुवे[3] सुखस्य भावयितारम् देवम् सन्तम् मर्त्यः सन् सख्यसिद्ध्यर्थम्, ततः अस्माकम् स्तोमान् सङ्ग्रामेषु अन्नयुक्तान् कुरु ॥ २ ॥

यस्य॑ ते पूषन्त्स॒ख्ये वि॑प॒न्यव॑ः क्रत्वा॑ चि॒त् सन्तोऽव॑सा बुभुज्रि॒र इति॒ क्रत्वा॑ बुभुज्रि॒रे।
ताम॒नु॑ त्वा॒ नवी॑यसीं नि॒युतं॑ रा॒य ई॑महे।
अहे॑ळमान उरुशंस॒ सरी॑ भव॒ वाजे॑वाजे॒ सरी॑ भव ॥ ३ ॥

यस्य॑। ते॒। पू॒षन्। स॒ख्ये। वि॒प॒न्यव॑ः। क्रत्वा॑। चि॒त्। सन्त॑ः। अव॑सा। बु॒भु॒ज्रि॒रे। इति॑। क्रत्वा॑। बु॒भु॒ज्रि॒रे ॥ ताम्। अनु॑। त्वा॒। नवी॑यसीम्। नि॒ऽयुत॑म्। रा॒यः। ई॒म॒हे॒। अहे॑ळमानः। उ॒रु॒ऽशं॒स॒। सरी॑। भ॒व॒। वाजे॑ऽवाजे। सरी॑। भ॒व॒ ॥ ३ ॥

वेङ्कट० [1]यस्य ते पूषन्[1]! सख्ये स्तोतारः कर्मणा च [2]भवन्तः त्वदीयेन[2] रक्षणेनाभिमतान्भोगान्[3] आत्मीयेन कर्मणा स्तुत्या च भुञ्जते। तादृशीम् त्वदीयां नवतरां स्तुतिम् लक्षीकृत्य त्वां वयम् धनस्य नियुतसङ्ख्याम् याचामहे। तथा [4]सति बहुस्तुते! अक्रुध्यन् अस्माकं सङ्ग्रामेसङ्ग्रामे[4] सर्ता भव रक्षणाय ॥ ३ ॥

अ॒स्या ऊ॒ षु ण॒ उप॑ सा॒तये॑ भु॒वोऽहे॑ळमानो ररि॒वाँ अ॑जाश्व श्रवस्य॒ताम॑जाश्व।
ओ षु त्वा॑ ववृतीमहि॒ स्तोमे॑भिर्दस्म सा॒धुभि॑ः।
न॒हि त्वा॑ पूषन्नति॒मन्य॑ आघृ॒णे न ते॑ स॒ख्यम॑पह्नु॒वे ॥ ४ ॥

अ॒स्याः। ऊँ इति॑। सु। नः॒। उप॑। सा॒तये॑। भु॒वः। अहे॑ळमानः। र॒रि॒ऽवान्। अ॒ज॒ऽअ॒श्व॒। श्र॒व॒स्य॒ताम्। अ॒ज॒ऽअ॒श्व॒ ॥ ओ इति॑। सु। त्वा॒। व॒वृ॒ती॒म॒हि॒। स्तोमे॑भिः। द॒स्म॒। सा॒धुऽभि॑ः। न॒हि। त्वा॒। पू॒षन्। अ॒ति॒ऽमन्ये॑। आ॒घृ॒णे॒। न। ते॒। स॒ख्यम्। अ॒प॒ऽह्नु॒वे ॥ ४ ॥

वेङ्कट० पूषन्! अस्याः स्तुतेः भजनाय सुष्ठु अस्मान् समीपे भव अक्रुध्यन् दानवान्। यस्याश्वा अजाः। धनमिच्छतामस्माकं स्तुतेरिति। शत्रूणामुपक्षपयितः! त्वां वयम् साधुभिः स्तोमैः सुष्ठु आवर्तयामः। नहि त्वामहम् पूषन्! अतिमन्ये। अतिमननमुपेक्षा। आघृणिः आगतदीप्तिः। [5]न ते सख्यम् इत्यत्रापि हीत्यनुषङ्गादनिघातः। त्वया सख्यम् स्तोत्रैरनुपालयामि ॥ ४ ॥

[6]इति द्वितीयाष्टके द्वितीयाध्याये द्वितीयो वर्गः[6] ॥

---

१-१. नास्ति वि[२] अ[१]. २. त्वाम् वि[२] अ[१]. ३-३. त्रुटितम् वि[२] अ[१]. ४. °गान् इत्थम् वि[२] अ[१]. ५. नास्ति वि[१] लपं. ६-६. नास्ति मूको.

[ १३९ ]

[1]परुच्छेपो दैवोदासिर्ऋषिः। प्रथमैकादश्योः विश्वे देवाः देवता, द्वितीयायाः मित्रावरुणौ, तृतीयाचतुर्थीपञ्चमीनाम् अश्विनौ, षष्ठ्याः इन्द्रः, सप्तम्याः अग्निः, अष्टम्याः मरुतः, नवम्याः इन्द्राग्नी, दशम्याः बृहस्पतिः। अत्यष्टिश्छन्दः, पञ्चमी बृहती, अन्त्या त्रिष्टुप्[1]।

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे।
यद्ध क्राणा विवस्वति नाभा संदायि नव्यसी।
अध प्र सू न उप यन्तु धीतयो देवाँ अच्छा न धीतयः॥ १॥

अस्तु। श्रौषट्। पुरः। अग्निम्। धिया। दधे। आ। नु। तत्। शर्धः। दिव्यम्। वृणीमहे। इन्द्रवायू इति। वृणीमहे॥ यत्। ह। क्राणा। विवस्वति। नाभा। सम्ऽदायि। नव्यसी। अध। प्र। सु। नः। उप। यन्तु। धीतयः। देवान्। अच्छ। न। धीतयः॥ १॥

**वेङ्कट०** वैश्वदेवी स्तुतिः। श्रवणम् अस्तु। कर्मणाऽहं यज्ञार्थम् अग्निम् पुरः[2] दधाम्याहवनीयम्। [3]आ वृणीमहे[3] च दिव्यम् तत् शर्धः मारुतम् क्षिप्रम् इन्द्रवायू च। यदा मया क्रियमाणा नवतरेयं स्तुतिः यजमाने स्तुतीनां धर्तरि सम्बद्धा भवति। अथ अस्मान् सुष्ठु लौकिकानि दासादिकृतानि परिचरणादीनि प्रकर्षेण उपगच्छन्तु यथा[4] देवान् प्रति ऋत्विजां कर्माण्युपगच्छन्ति[5]॥ १॥

यद्ध त्यन्मित्रावरुणावृतादध्याददाथे अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना।
युवोरित्थाधि सद्मस्वपश्याम हिरण्ययम्।
धीभिश्चन मनसा स्वेभिरक्षभिः सोमस्य स्वेभिरक्षभिः॥ २॥

यत्। ह। त्यत्। मित्रावरुणौ। ऋतात्। अधि। आददाथे इत्याऽददाथे। अनृतम्। स्वेन। मन्युना। दक्षस्य। स्वेन। मन्युना॥ युवोः। इत्था। अधि। सद्मऽसु। अपश्याम। हिरण्ययम्। धीभिः। चन। मनसा। स्वेभिः। अक्षऽभिः। सोमस्य। स्वेभिः। अक्षऽभिः॥ २॥

**वेङ्कट०** [6]ऋतम् अहः अनृतं[6] रात्रीः। 'न वा इदं दिवा न नक्तमासीत्। अव्यावृत्तं ते देवा [7]मित्रावरुणावब्रुवन्' (तै ६,४,८,३) इत्यादि अध्वर्युब्राह्मणम्। 'मन्युर्मन्यतेर्दीप्तिकर्मणः' (या १०,२९)। मित्रावरुणौ! यत् एतद् युवाम् सत्यभूतादह्नः अधि§ अनृतभूतान्धकारम्† आदित्यस्य स्वभूतेन तेजसा आददथुः‡। अथ व्युष्टायां रजन्यां यज्ञगृहेषु अधि युवयोः[7] हिरण्मयम् इत्थम् अपश्याम कर्मभिः श्रद्धानेन च[8] मनसा सोमयागपरैः सोमस्य स्वभूतैः इन्द्रियैश्च अपश्याम॥ २॥

---

१-१. नास्ति मूको. २-२. पुरा मूको. ३-३. नास्ति वि[2] अ[1]. ४. नास्ति वि[1] लपं; यदा अ[1]. ५. °पतिष्ठन्ति अ[1]. ६-६. यदृत° अ[1]. ७-७. नास्ति वि[1] लपं. † °न्धकार(?) ल; °तादन्धकार अ[1]. ‡ आददौ मूको. § नास्ति मूको. ८. नास्ति वि[1] लपं.

युवां स्तोमेभिर्देवयन्तो अश्विनाश्रावयन्तइव श्लोकमायवो युवां हव्याभ्या३यवः ।
युवोर्विश्वा अधि श्रियः पृक्षश्च विश्ववेदसा ।
प्रुषायन्ते वां पवयो हिरण्यये रथे दस्रा हिरण्यये ॥ ३ ॥

युवाम् । स्तोमेभिः । देवयऽन्तः । अश्विना । आश्रवन्यतःऽइव । श्लोकम् । आयवः । युवाम् । हव्या । अभि । आयवः ॥ युवोः । विश्वाः । अधि । श्रियः । पृक्षः । च । विश्वऽवेदसा । प्रुषायन्ते । वाम् । पवयः । हिरण्यये । रथे । दस्रा । हिरण्यये ॥ ३ ॥

**वेङ्कट०** यथा श्लोकम् आश्रावयन्तः स्तोतारो मनुष्या राजानमभ्याह्वयन्ति, एवम् अश्विनौ ! युवाम् आयवः स्तोमैः हवींषि अभ्याह्वयन्ते देवौ भवन्ताविच्छन्तोऽथवा यजमानाः । किञ्च युवयोः अधि सर्वधनौ ! विश्वाः श्रियः सर्वमन्नम् च स्तोतॄणां वर्तन्ते । तथा हिरण्मये रथे स्थितौ भवन्तौ वाम् दस्रौ ! चक्राणि[1] पवयः गमयन्ति । मधुभाजनानि पवय[2] उच्यन्ते[3] इत्यपरम् । तानि मधु क्षरन्ति ॥ ३ ॥

अचेति दस्रा व्यु१नाकमृण्वथो युञ्जते वां रथयुजो दिविष्टिष्वध्वस्मानो दिविष्टिषु ।
अधि वां स्थाम वन्धुरे रथे दस्रा हिरण्यये ।
पथेव यन्तावनुशासता रजोऽञ्जसा शासता रजः ॥ ४ ॥

अचेति । दस्रा । वि । ऊँ इति । नाकम् । ऋण्वथः । युञ्जते । वाम् । रथऽयुजः । दिविष्टिषु । अध्वस्मानः । दिविष्टिषु ॥ अधि । वाम् । स्थाम । वन्धुरे । रथे । दस्रा । हिरण्यये । पथाऽइव । यन्तौ । अनुऽशासता । रजः । अञ्जसा । शासता । रजः ॥ ४ ॥

**वेङ्कट०** ज्ञायते । दर्शनीयौ ! युवाम् द्युलोकम् स्वरथेन वि ऋण्वथः[4] पृथक्कुरुथः मध्येनागमनात् । अस्माकं दिवोऽन्वेषणेषु सत्सु भवन्तौ सर्वस्य योक्तारौ ध्वंसनरहिताः अश्वाः युञ्जते अस्मत्समीपमानेतुमिति । दर्शनीयौ[5] ! [6]हिरण्मये रथे बन्धुरस्थाने अधि[6] तत्र युवयोः रथस्थानम् । यथा पथा यन्तौ सूर्याचन्द्रमसौ दिग्विभागज्ञापनेन मार्गम् शास्तः एवमेतौ च सर्वेषां मार्गानुशासनम् अञ्जसा कुरुतः । यद्वा यथा मार्गेण गच्छन् क्षेत्रवित् अक्षेत्रविदो मार्गमनुशास्ति तद्वत् इमाविति । एतयोर्द्वित्वकृतं द्विवचनम् ॥ ४ ॥

शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतम् ।
मा वां रातिरुप दसत् कदा चनास्मद् रातिः कदा चन ॥ ५ ॥

शचीभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तम् । दशस्यतम् ।
मा । वाम् । रातिः । उप । दसत् । कदा । चन । अस्मत् । रातिः । कदा । चन ॥ ५ ॥

---

१. चक्रं मूको. २. नास्ति वि[2] अ[1]. ३. नास्ति वि[2] अ[1] ल. ४. व्यवथः वि[1] लपं; व्यृणुथः वि[2] अ[1]. ५. नास्ति वि[1] लपं. ६-६. हिरण्यरथबन्धुरस्थानेधि वि[1] लपं; हिरण्मयौ रथबन्धुरस्थानेऽपि वि[2].

वेङ्कट० कर्मधनौ! अस्मभ्यम् कर्मभिः दिवा नक्तम् च धनानि[1] प्रयच्छतम्। मा युवयोः दानम् कदाचिदपि अस्मत्तः उप दसद्[2] भवतु ॥ ५ ॥

[3]इति द्वितीयाष्टके द्वितीयाध्याये तृतीयो वर्गः[3]।

वृषन्निन्द्र वृषपाणास इन्दव इमे सुता अद्रिषुतास उद्भिदस्तुभ्यं सुतास उद्भिदः।
ते त्वा मन्दन्तु दावने महे चित्राय राधसे।
गीर्भिर्गिर्वाहः स्तवमान आ गहि सुमृळीको न आ गहि ॥ ६ ॥

वृषन्। इन्द्र। वृषऽपानासः। इन्दवः। इमे। सुताः। अद्रिऽसुतासः। उत्ऽभिदः। तुभ्यम्। सुतासः। उत्ऽभिदः॥ ते। त्वा। मदन्तु। दावने। महे। चित्राय। राधसे। गीःऽभिः। गिर्वाहः। स्तवमानः। आ। गहि। सुऽमृळीकः। नः। आ। गहि ॥ ६ ॥

वेङ्कट० [4]वृषन्! इन्द्र![4] वर्षित्रा पेयाः दीप्ताः इमे सोमा वृत्रवधादिषु त्वां प्रेरयन्तु तुभ्यम् अद्रिभिः सुताः उद्भेदकाः[5]। इमे त्वाम्[5] मादयन्तु महतः चित्रस्य धनस्य दानार्थम्। गीर्भिरुह्यमान[6]! अस्मान् स्तोत्रैः[7] स्तूयमानः[7] सुष्ठु सुखयिता भवन्[7] आगच्छ ॥ ६ ॥

ओ षू णो अग्ने शृणुहि त्वमीळितो देवेभ्यो ब्रवसि यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः।
यद्ध त्यामङ्गिरोभ्यो धेनुं देवा अदत्तन।
वि तां दुह्रे अर्यमा कर्तरी सचाँ एष तां वेद मे सचा ॥ ७ ॥

ओ इति। सु। नः। अग्ने। शृणुहि। त्वम्। ईळितः। देवेभ्यः। ब्रवसि। यज्ञियेभ्यः। राजऽभ्यः। यज्ञियेभ्यः॥ यत्। ह। त्याम्। अङ्गिरःऽभ्यः। धेनुम्। देवाः। अदत्तन। वि। ताम्। दुह्रे। अर्यमा। कर्तरि। सचा। एषः। ताम्। वेद। मे। सचा ॥ ७ ॥

वेङ्कट० अग्ने! अस्माकं स्तोत्रम्[8] स्तुतः त्वम् सुष्ठु आ शृणुहि। श्रुत्वा चास्मान् यज्ञार्हेभ्यः आदित्येभ्यः राजभ्यः[8] देवेभ्यः ब्रूहि। यदा हे देवाः![9] यूयम् अङ्गिरोभ्यः प्रार्थितास्तेभ्यः सर्वकामदुघाम् धेनुम् अदत्त ताम्। अस्मिन् प्रयोजककर्तरि सति अर्यमा अग्निना सह कामान् विविधान् दुग्धवान् ताम्[10]। यो मदीयोऽग्निः स एव ताम् धेनुम् अर्यम्णा सह दोग्धुम् ज्ञातवान् नान्यः कश्चित् ॥ ७ ॥

मो षु वो अस्मदभि तानि पौंस्या सना भूवन् द्युम्नानि मोत जारिषुरस्मत् पुरोत जारिषुः।
यद् वश्चित्रं युगेयुगे नव्यं घोषादमर्त्यम्।
अस्मासु तन्मरुतो यच्च दुष्टरं दिधृता यच्च दुष्टरम् ॥ ८ ॥

---

1. नास्ति वि[1] लपं. 2. दस्तं वि[2] अ[1]. 3-3. नास्ति मूको. 4-4. नास्ति वि[1] लपं. 5. त्वा वि[1] लपं. 6. °नः मूको. 7. नास्ति मूको. 8. स्तोतारम् वि[1] अ[1]; नास्ति वि[1] लपं. 9. नास्ति वि[2] अ[1]. 10. तत्र वि[2] अ[1].

मो इति॑ । सु । वः॒ । अ॒स्मत् । अ॒भि । तानि॑ । पौंस्या॑ । सना॑ । भू॒वन् । द्यु॒म्नानि॑ । मा । उ॒त । जा॒रि॒षुः॒ । अ॒स्मत् । पु॒रा । उ॒त । जा॒रि॒षुः॒ ॥ यत् । वः॒ । चि॒त्रम् । यु॒गेऽयु॑गे । नव्य॑म् । घोषा॑त् । अम॑र्त्यम् । अ॒स्मासु॑ । तत् । म॒रु॒तः॒ । यत् । च॒ । दु॒स्तर॑म् । दि॒धृ॒त । यत् । च॒ । दु॒स्तर॑म् ॥ ८ ॥

**वेङ्कट०** सेयं मारुती । ऐन्द्राग्न्युत्तरा । मरुतः ! मा युष्माकम् बलानि[1] अस्मान् अभिभवन्तु । सुः पूरणः । किन्तु भवतां सनातनानि अस्माकमन्नानि सन्तु । अपि च मा अस्माकं शरीराणि भवद्भिरधिष्ठितानि जीर्णानि भवन्तु । यत् च वः पूज्यम् अहन्यहनि घोषात् उच्चैर्मुक्तकण्ठकम्[2] स्तोतव्यम् अमर्त्यम् यत् च दुष्टरम्[3] शर्धमुभयम्[4] तत्[5] अस्मासु[6] धारयत[7] ॥ ८ ॥

द॒ध्यङ् ह॑ मे ज॒नुषं॒ पूर्वो॒ अङ्गि॑राः प्रि॒यमे॑धः॒ कण्वो॒ अत्रि॒र्मनु॑र्विदु॒स्ते मे॒ पूर्वे॒ मनु॑र्विदुः ।
तेषां॑ दे॒वेष्वाय॑तिर॒स्माकं॒ तेषु॒ नाभ॑यः ।
तेषां॑ प॒देन॒ मह्या न॑मे गि॒रेन्द्रा॒ग्नी आ न॑मे गि॒रा ॥ ९ ॥

द॒ध्यङ् । ह॒ । मे॒ । ज॒नुष॑म् । पूर्वः॑ । अङ्गि॑राः । प्रि॒यऽमे॑धः । कण्वः॑ । अत्रिः॑ । मनुः॑ । वि॒दुः॒ । ते । मे॒ । पूर्वे॑ । मनुः॑ । वि॒दुः॒ ॥ तेषा॑म् । दे॒वेषु॑ । आऽय॑तिः । अ॒स्माक॑म् । तेषु॑ । नाभ॑यः । तेषा॑म् । प॒देन॑ । महि॑ । आ । न॒मे॒ । गि॒रा । इ॒न्द्रा॒ग्नी इति॑ । आ । न॒मे॒ । गि॒रा ॥ ९ ॥

**वेङ्कट०** दिवोदासान्मम जन्म पुरातनः[8] आथर्वणः 'दध्यङ् वेद। एवम् अङ्गिरःप्रभृतयश्च ते पञ्च[9] पूर्वे जानन्ति । तेषाम् दध्यङ्प्रभृतीनाम् आगमनमुत्पत्तिः देवेषु भवति । अस्माकम् तेषु नाभयः ज्ञातेयानि । तैर्मयि निहितेन पदेन अहम् 'महत् इन्द्राग्नी स्तोत्रेण नमयाम्यभिमुखं' करोमि । तेभ्यः स्तोत्रकुशलेभ्यः उत्पन्नोऽहमिन्द्राग्नी स्तौमि ॥ ९ ॥

होता॑ यक्षद् व॒निनो॑ वन्त॒ वार्यं॒ बृह॒स्पति॑र्यजति वे॒न उ॒क्षभिः॑ पुरु॒वारे॑भिरु॒क्षभिः॑ ।
ज॒गृ॒भ्मा दू॒रआ॑दिशं॒ श्लोक॒मद्रे॒रध॒ त्मना॑ ।
अधा॑रयदर॒रिन्दा॑नि सु॒क्रतुः॑ पु॒रू सद्मा॑नि सु॒क्रतुः॑ ॥ १० ॥

होता॑ । य॒क्ष॒त् । व॒निनः॑ । व॒न्त॒ । वार्य॑म् । बृह॒स्पतिः॑ । य॒ज॒ति॒ । वे॒नः । उ॒क्षऽभिः॑ । पु॒रु॒ऽवारे॑भिः । उ॒क्षऽभिः॑ ॥ ज॒गृ॒भ्म । दू॒रेऽआ॑दिशम् । श्लोक॑म् । अद्रेः॑ । अध॑ । त्मना॑ । अधा॑रयत् । अ॒र॒रिन्दा॑नि । सु॒ऽक्रतुः॑ । पु॒रु । सद्मा॑नि । सु॒ऽक्रतुः॑ ॥ १० ॥

---

१. °लानि अस्माकं बलानि वि[1] अ[1]. २. °क्तकण्ठम् वि[2] अ[1]. ३. दुष्करं वि[1]. ४. शर्धदुभ° वि[2]. ५. नास्ति मूको. ६. अमस्मासु ल लपं. ७. धारयतः वि[2] अ[1]; धारयन्तः वि[1] ल लपं. ८. °तनं वि[1] लपं. ९-९ नास्ति वि[1] अ[1].

**वेङ्कट०** बृहस्पतिर्देवता। होता यजतु बृहस्पतिम्। सम्भजनशीलाः स्तोतारश्च [1]बृहस्पतेर्वरणीयं धनम् भजन्ताम्[1]। बृहस्पतिः आत्मानं तर्पयति कामयमानः बहुभिर्दैवैर्वरणीयैः उक्षभिः पशुभिः। यस्य निरवद्यत्वाद् दूर आदेशनं भवति तादृशम् श्लोकम् आदरणं कुर्वतो बृहस्पतेः गृहीतवन्तो वयम् इज्यमाने[2] बृहस्पतौ। आत्मनैव सोऽयम् उदकानि बहूनि सदनसाधनानि धारयति सुकर्मा ॥ १० ॥

ये दे॑वासो दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ ।
अ॒प्सु॒क्षितो॑ महि॒नैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वम् ॥ ११ ॥

ये । दे॒वा॒सः॒ । दि॒वि । एका॑दश । स्थ । पृ॒थि॒व्याम् । अधि॑ । एका॑दश । स्थ ।
अ॒प्सु॒ऽक्षितः॑ । म॒हि॒ना । एका॑दश । स्थ । ते । दे॒वा॒सः॒ । य॒ज्ञम् । इ॒मम् । जु॒ष॒ध्व॒म् ॥ ११ ॥

**वेङ्कट०** वैश्वदेवी। 'आपः' (निघ १,३) इत्यन्तरिक्षनाम। अन्तरिक्षायतना रुद्राः माहात्म्येन अष्टौ वसवः प्रजापतिर्वषट्कारः पूषा चेति। पृथिव्यायतना एकादश रुद्राः, द्वादशादित्याः ॥ ११ ॥

[1]इति द्वितीयाष्टके द्वितीयाध्याये चतुर्थो वर्गः[1] ॥

[ १४० ]

[3]औचथ्यो दीर्घतमा ऋषिः। अग्निर्देवता। जगतीच्छन्दः,
दशमी जगतीत्रिष्टुब्वा, द्वादशीत्रयोदश्यौ त्रिष्टुभौ[3]।

वे॒दि॒षदे॑ प्रि॒यधा॑माय सु॒द्युते॑ धा॒सिमि॑व॒ प्र भ॑रा॒ योनि॑म॒ग्नये॑ ।
वस्त्रे॑णेव वासया॒ मन्म॑ना॒ शुचिं॑ ज्यो॒तीर॑थं शु॒क्रव॑र्णं त॒मो॒हन॑म् ॥ १ ॥

वे॒दि॒ऽसदे॑ । प्रि॒यऽधा॑माय । सु॒ऽद्युते॑ । धा॒सिम्ऽइ॑व । प्र । भ॒र॒ । योनि॑म् । अ॒ग्नये॑ ।
वस्त्रे॑णऽइव । वा॒स॒य॒ । मन्म॑ना । शुचि॑म् । ज्यो॒तिःऽर॑थम् । शु॒क्रऽव॑र्णम् । त॒मः॒ऽहन॑म् ॥ १ ॥

**वेङ्कट०** दीर्घतमा औचथ्यः। वेद्यां सीदते प्रियस्थानाय अग्नये सुष्ठु द्योतमानाय हविः इव[4] निवासस्थानम् उपकल्पय। तत्र चैनं स्थापयित्वा वस्त्रेणेव[5] आच्छादय स्तोत्रेण शुद्धम् ज्योतींषि यस्य[6] रथास्तैरुह्यमानं[7] श्वेतवर्णम् तमसो हन्तारम् ॥ १ ॥

अ॒भि द्वि॒जन्मा॑ त्रि॒वृदन्न॑मृज्यते संवत्स॒रे वा॑वृधे ज॒ग्धमी॒ पुनः॑ ।
अ॒न्यस्या॒सा जि॒ह्वया॒ जेन्यो॒ वृषा॒ न्य१॒॑न्येन॑ व॒निनो॑ मृष्ट वा॒रणः॑ ॥ २ ॥

अ॒भि । द्वि॒ऽजन्मा॑ । त्रि॒ऽवृत् । अन्न॑म् । ऋ॒ज्य॒ते । सं॒व॒त्स॒रे । व॒वृ॒धे॒ । ज॒ग्धम् । ई॒म् इति॑ । पुन॒रिति॑ ।
अ॒न्यस्य॑ । आ॒सा । जि॒ह्वया॑ । जेन्यः॑ । वृषा॑ । नि । अ॒न्येन॑ । व॒निनः॑ । मृ॒ष्ट॒ । वा॒र॒णः॒ ॥ २ ॥

---

१-१. नास्ति वि[1] अ[1]. २. ईज्यमाने वि[1] ल; ईज्यमानो लपं. ३-३. नास्ति मूको. ४. °रिह वि[2] अ[1]. ५. °णवा वि[2] अ[1]. ६. नास्ति वि[1] अ[1]. ७. °रुह्यमानस्य मूको.

**वेङ्कट०** अभि विसृज्यते द्वयोर्लोकयोररण्योर्वा जायमानः त्रिवृत् अन्नम् आज्यौषधसोमरूपम्। अग्निना भक्षितम् एतज्जगत् पुनः संवत्सरे परिणमति। सोऽयं जेताऽग्निः एकस्य[१] यजमानेषु वर्तमानस्याग्नेः आस्येन जिह्वया च कामानां वर्षिता भवति। अथ अन्येन[२] दवाग्निना वनिनः वृक्षान् न्यङ् दहति वारणशीलः ॥ २ ॥

कृष्णप्रुतौ वेविजे अस्य सक्षिता उभा तरेते अभि मातरा शिशुम्।
प्राचाजिह्वं ध्वसयन्तं तृषुच्युतमा साच्यं कुपयं वर्धनं पितुः ॥ ३ ॥

कृष्णऽप्रुतौ। वेविजे इति। अस्य। सऽक्षितौ। उभा। तरेते इति। अभि। मातरा। शिशुम्।
प्राचाऽजिह्वम्। ध्वसयन्तम्। तृषुऽच्युतम्। आ। साच्यम। कुपयम्। वर्धनम। पितुः ॥ ३ ॥

**वेङ्कट०** कृष्णमार्गे दाहभयादत्यन्तं कम्पमाने अग्नेः अस्य सहनिवसन्त्यौ द्यावापृथिवी उभे अपि एनं पुत्रभूतम् अभिगच्छतः। त्वष्टुर्जायमानम् प्राङ्मुखज्वालाजिह्वम् तृणगुल्मादिकं विनाशयन्तम् शीघ्रं[३] दाह्यं प्रति गच्छन्तम् सेव्यं यजमानानाम् अयजमानानां कोपनम् पालयितुर्यजमानस्य वर्धनम् शिशुम् ॥ ३ ॥

मुमुक्ष्वो३ मनवे मानवस्यते रघुद्रुवः कृष्णसीतास ऊ जुवः।
असमना अजिरासो रघुष्यदो वातजूता उप युज्यन्त आशवः ॥ ४ ॥

मुमुक्ष्वः। मनवे। मानवस्यते। रघुऽद्रुवः। कृष्णऽसीतासः। ऊँ इति। जुवः।
असमनाः। अजिरासः। रघुऽस्यदः। वातऽजूताः। उप। युज्यन्ते। आशवः ॥ ४ ॥

**वेङ्कट०** कामान्[४] मोक्तुमिच्छन्तः मनवे मनुष्यानक्षुधितानिच्छते लघु शीघ्रं गच्छन्तः आकृष्टहलाः वेगवन्तः नानाविधरूपाः क्षिप्राः लघु च स्यन्दन्तोऽरण्यं दहन्तः वातेनाकृष्टाः सर्वैर्मानवैः उप[५] युज्यन्ते [६]तव रश्मयः[६] ॥ ४ ॥

आदस्य ते ध्वसयन्तो वृथेरते कृष्णमभ्वं महि वर्पः करिक्रतः।
यत् सीं महीमवनिं प्राभि मर्मृशदभिश्वसन्त्स्तनयन्नेति नानदत् ॥ ५ ॥

आत्। अस्य। ते। ध्वसयन्तः। ईरते। कृष्णम्। अभ्वम्। महि। वर्पः। करिक्रतः।
यत्। सीम्। महीम्। अवनिम्। प्र। अभि। मर्मृशत्। अभिऽश्वसन्। स्तनयन्। एति। नानदत् ॥५॥

**वेङ्कट०** अनन्तरमेव अस्य अग्नेः वृक्षादीन् ध्वंसयन्तः रश्मयः अनायासेनैव उत्तिष्ठन्ति कृष्णम्

---

१. एतस्य वि[१] लपं. २. °न्येनेवदा (न दावा) ग्निना वि[१]; °न्येनैव दाग्निना अ[१]. ३. क्षिप्रम् वि[१] अ[१]. ४. कामं वि[१]. ५. उपरि वि[१] लपं. ६-६. त्रुटितम् वि[१] अ[१].

अतिमानम्[1] महत् रूपम् कुर्वन्तः । यदा मन्त्रर्थम् सर्वतः परिगृह्य महतीम् भूमिम् पुनः-पुनरामृशन् नासिकाश्वासशब्दसदृशं शब्दं कुर्वन् गर्जितसदृशम्[2] [3]निर्घातसदृशं शब्दं[3] च कुर्वन् प्रकर्षेणाभिगच्छति ॥ ५ ॥

[4]इति द्वितीयाष्टके द्वितीयाध्याये पञ्चमो वर्गः[4] ॥

भूषन् न योऽधि बभ्रूषु नम्नते वृषेव पत्नीरभ्येति रोरुवत् ।
ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गा दविधाव दुर्गृभिः ॥ ६ ॥

भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषाऽइव । पत्नीः । अभि । एति । रोरुवत् ।
ओजायमानः । तन्वः । च । शुम्भते । भीमः । न । शृङ्गा । दविधाव । दुःऽगृभिः ॥ ६ ॥

**वेङ्कट०** सम्भवितुमिच्छन् इव यः ओषधीषु नमते[5] । सोऽयं पुमान् इव[6] पत्नीः अभिगच्छत्योषधीः[7] शब्दं कुर्वन् । बलमाचरन् अङ्गानि च शोभयति । भीमः ऋषभः इव शृङ्गाणि दोधवीति दुर्ग्रहो ज्वालाः ॥ ६ ॥

स संस्तिरो विष्टिरः सं गृभायति जानन्नेव जानतीर्नित्य आ शये ।
पुनर्वर्धन्ते अपि यन्ति देव्यमन्यद् वर्पः पित्रोः कृण्वते सचा ॥ ७ ॥

सः । सम्ऽस्तिरः । विऽस्तिरः । सम् । गृभायति । जानन् । एव । जानतीः । नित्यः । आ । शये ।
पुनः । वर्धन्ते । अपि । यन्ति । देव्यम् । अन्यत् । वर्पः । पित्रोः । कृण्वते । सचा ॥ ७ ॥

**वेङ्कट०** दाहेनात्मन्योषधीः[8] सङ्गृह्णन् विस्तारयंश्चौषधीः ज्वालाभिः सङ्गृह्णाति जानन् एव जानतीः ओषधीः अनवरतम् आशेते । पुनः वर्धन्ते वृद्धाश्च अपिगच्छन्त्यग्निम् । देवहितम् ता दह्यमानाः द्यावापृथिव्योः अन्यत् रूपं कृष्णम् कुर्वन्ति सह[9] ॥ ७ ॥

तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः ।
तासां जरां प्रमुञ्चन्नेति नानदद्सुं परं जनयञ्जीवमस्तृतम् ॥ ८ ॥

तम् । अग्रुवः । केशिनीः । सम् । हि । रेभिरे । ऊर्ध्वाः । तस्थुः । मम्रुषीः । प्र । आयवे । पुनरिति ।
तासाम् । जराम् । प्रऽमुञ्चन् । एति । नानदत् । असुम् । परम् । जनयन् । जीवम् । अस्तृतम् ॥ ८ ॥

**वेङ्कट०** अग्निम् चलनस्वभावाः पुत्रयुक्ताः ?[10] सम् हि रेभिरे । संरब्धाश्च सर्वमनुष्यार्थम् मृताः अपि पृथिव्यां निलीनाः पुनः ऊर्ध्वाः प्रतस्थुः । तासाम् ओषधीनां जीर्णानाम् जराम् प्रमुञ्चन् अयमुपरि गच्छति शब्दं कुर्वन् प्राणम् प्रकृष्टम् जीवितं च तासाम् जनयन् अहिंसितम् ॥ ८ ॥

---

१. अनिमा° वि[1] अ[1] लपं; अनि(व)मा वि[2]. २. °श शब्दं वि[2] अ[1]. ३-३. °शशब्दं वि[2] अ[1]. ४-४. नास्ति मूको. ५. नम्नते वि[2]. ६. इव शब्दे वि[1] ल लपं. ७. अधिग वि[1]. ८. दोहनात्मा अन्योषाधीः ल लपं ९. नास्ति वि[1] लपं. १०. यत्र' वि[2] अ[1]; पुत्र° वि[1] ल लपं.

अधीवासं परि मातू रिहन्नहं तुविग्रेभिः सत्वभिर्याति वि ज्रयः ।
वयो दधत् पद्वते रेरिहत् सदानु श्येनी सचते वर्तनीरह ॥ ९ ॥

अधीवासम् । परि । मातुः । रिहन् । अहं । तुविऽग्रेभिः । सत्वऽभिः । याति । वि । ज्रयः ।
वयः । दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनी । सचते । वर्तनिः । अहं ॥ ९ ॥

वेङ्कट० पृथिव्याम् अधिवसन्तमोषधीसङ्घम् परितः आस्वादयन् एव बहुशब्दं कुर्वद्भिः दह्यमानैः सत्त्वभिः वेगम् वि याति । जरदोषधिदाहात् द्विपदे चतुष्पदे च अन्नम् प्रयच्छन् सदा एव ओषधीश्चास्वादयन् तं कृष्णः[1] मार्गः अनु सचते । अह-शब्दः आश्चर्ये ॥ ९ ॥

अस्माकमग्ने मघवत्सु दीदिह्यध श्वसीवान् वृषभो दमूनाः ।
अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः ॥ १० ॥

अस्माकम् । अग्ने । मघवत्ऽसु । दीदिहि । अध । श्वसीवान् । वृषभः । दमूनाः ।
अवऽअस्य । शिशुऽमतीः । अदीदेः । वर्मऽइव । युत्ऽसु । परिऽजर्भुराणः ॥ १० ॥

वेङ्कट० [2]अस्माकम् अग्ने[2]! धनवत्स्वृत्विषु दीप्यस्व अध[3] श्वासं कुर्वन् वृषभः दममनाः । स त्वं त्वदीयाः शिशुमतीः बडवाः गमनार्थं विमुच्य दीप्यस्व वर्मेव युद्धेषु अस्मान्[4] अत्यन्तं परिचरन् ॥ १० ॥

[5]इति द्वितीयाष्टके द्वितीयाध्याये षष्ठो वर्गः[5] ॥

इदमग्ने सुधितं दुर्धितादधि प्रियादु चिन्मन्मनः प्रेयो अस्तु ते ।
यत् ते शुक्रं तन्वो रोचते शुचि तेनास्मभ्यं वनसे रत्नमा त्वम् ॥ ११ ॥

इदम् । अग्ने । सुऽधितम् । दुःऽधितात् । अधि । प्रियात् । ऊँ इति । चित् । मन्मनः । प्रेयः । अस्तु । ते ।
यत् । ते । शुक्रम् । तन्वः । रोचते । शुचि । तेन । अस्मभ्यम् । वनसे । रत्नम् । आ । त्वम् ॥ ११ ॥

वेङ्कट० इदम् स्तोत्रम् अनायासेन हितम्[6] प्रयत्नेन हितात्[7] प्रियतमात् स्तोत्रात् अपि अग्ने! तव प्रियतमम् भवतु । यत् तव दीप्तं रूपम् शरीरस्य रोचते शुद्धम् तेन अस्मभ्यम् आ प्रयच्छसि रत्नम् ॥ ११ ॥

रथाय नावमुत नो गृहाय नित्यारित्रां पद्वतीं रास्यग्ने ।
अस्माकं वीराँ उत नो मघोनो जनाँश्च या पारयाच्छर्म या च ॥ १२ ॥

रथाय । नावम् । उत । नः । गृहाय । नित्यऽअरित्राम् । पत्ऽवतीम् । रासि । अग्ने ।
अस्माकम् । वीरान् । उत । नः । मघोनः । जनान् । च । या । पारयात् । शर्म । या । च ॥ १२ ॥

---

१-१. °यन् कृ° ल. २. नास्ति वि[1] लपं. ३. नास्ति मूको. ४. नास्ति वि[2] अ[1]. ५-५. नास्ति मूको. ६. सहितम् मूको; सुहितम् वा ल शोधः. ७. सहितात् मूको.

**वेङ्कट०** सगृहः सरथो गच्छन्नुत्तितीर्षुः[1] नदीमाह । रथाय गृहाय चरणार्थम् दृढमेक्षणाम् तरणदण्डयुक्ताम् नावम् अस्मभ्यम् देहि अग्ने ! । अस्माकम् [2]वीरान् अपि धनवतः दासान् च या नदी पारयति[2], सुखम् च या करोति ॥ १२ ॥

**अभी नो अग्न उक्थमिज्जुगुर्या द्यावाक्षामा सिन्धवश्च स्वगूर्ताः ।**
**गव्यं यव्यं यन्तो दीर्घाहेषं वरमरुण्यो वरन्त ॥ १३ ॥**

अभि । नः । अग्ने । उक्थम् । इत् । जगुर्याः । द्यावाक्षामा । सिन्धवः । च । स्वऽगूर्ताः ।
गव्यम् । यव्यम् । यन्तः । दीर्घा । अहा । इषम् । वरम् । अरुण्यः । वरन्त ॥ १३ ॥

**वेङ्कट०** अस्माकम् अग्ने! उक्थम् एव सर्वदा त्वम् 'ओथामो देव' ( माश ४,३,२,१३ ) इति अभि जुगुर्याः । द्यावापृथिवी सिन्धवः च स्वभूतात्नाः[3] अभिगृणन्तु । गोहितम्[4] यवहितं च देशम् दीर्घेष्वहस्सु गच्छन्तः वरणीयम् अन्नम्[4] गावः अवृण्वन्नस्मदर्थम् ॥ १३ ॥

[5]इति द्वितीयाष्टके द्वितीयाध्याये सप्तमो वर्गः[5] ॥

## [ १४१ ]

[5]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । जगतीच्छन्दः, द्वादशीत्रयोदश्यौ त्रिष्टुभौ[5] ।

**बळित्था तद् वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।**
**यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ १ ॥**

बट् । इत्था । तत् । वपुषे । धायि । दर्शतम् । देवस्य । भर्गः । सहसः । यतः । जनि ।
यत् । ईम् । उप । ह्वरते । साधते । मतिः । ऋतस्य । धेनाः । अनयन्त । सऽस्रुतः ॥ १ ॥

**वेङ्कट०** तत् सत्यमेव इत्थम् । तदानीमेव हविषो निवपनाय निधीयते दर्शनीयम् अग्नेरस्य तेजः, यदैव[6] सहसः[7] जायते । यदि एनम् प्रति गच्छति साधयति स्तोताऽभिलषितम् । अग्नेः स्तुतीः अनयन्त यजमानाः समानं गच्छन्तः ॥ १ ॥

**पृक्षो वपुः पितुमान् नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ २ ॥**

पृक्षः । वपुः । पितुऽमान् । नित्यः । आ । शये । द्वितीयम् । आ । सप्तऽशिवासु । मातृषु ।
तृतीयम् । अस्य । वृषभस्य । दोहसे । दशऽप्रमतिम् । जनयन्त । योषणः ॥ २ ॥

**वेङ्कट०** अन्नस्य आवपनस्थानं भूमिम् अन्नवानग्निः अनवरतः[8] आ शेते । अथ द्वितीयम् अन्तरिक्षे सप्तनदीके ।

---

१. °तीर्षन् वि[1]. २. नास्ति मूको. ३-३. त्रुटितम् वि[2] अ[1]. ४. स्वभूता लपं; स्वभूत''' वि[1]. ५. त्रुटितम् वि[2] अ[1]. ६-६. नास्ति मूको. ७. यदेव ल; यं दैव वि[2]. ८. सहसा वि[2]. ९. °रतम् वि[1] ल लपं.

माताऽन्तरिक्षम्, तस्य शिवाः सप्त नद्यः सन्ति। तृतीयम् अस्य अग्नेः रूपम् आदित्यस्य दोहाय निहितम्। तमिमम् दश प्रमतयो मातरो यस्य तम् दिशः अजनयन्त ॥ २ ॥

निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ ३ ॥

निः। यत्। ईम्। बुध्नात्। महिषस्य। वर्पसः। ईशानासः। शवसा। क्रन्त। सूरयः।
यत्। ईम्। अनु। प्रऽदिवः। मध्वः। आऽधवे। गुहा। सन्तम्। मातरिश्वा। मथायति ॥ ३ ॥

वेङ्कट० महतः तेजसा[1] आच्छादयितुः बुध्नात् स्वर्गात् यदा एनम् देवाः प्रज्ञाबलेन तिष्ठन्तः पृथिव्यामकुर्वन्। यदा वा एनम् तदनु पुराणः मातरिश्वा मधुन उदकस्य आधवे [2]अन्तरिक्षे गुहायाम्[2] सन्तम् बलादाहृतवान् ॥ ३ ॥

प्र यत् पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति।
उभा यदस्य जनुषं यदिन्वत आदिद् यविष्ठो अभवद् घृणा शुचिः ॥ ४ ॥

प्र। यत्। पितुः। परमात्। नीयते। परि। आ। पृक्षुधः। वीरुधः। दम्ऽसु। रोहति।
उभा। यत्। अस्य। जनुषम्। यत्। इन्वतः। आत्। इत्। यविष्ठः। अभवत्। घृणा। शुचिः ॥

वेङ्कट० यदायमग्निः उत्तमात् स्वर्गात् परि देवैर्मातरिश्वना च पृथिव्याम् प्र नीयते तदानीम् अयमन्नेषु निधीयमानः वीरुधः दन्तेषु आरोहयति। द्यावापृथिवी यदा अस्य जन्म व्याप्नुतः[3], अनन्तरम् एव अयं युवतमः दीप्त्या शोचयिता भवति ॥ ४ ॥

आदिन्मातॄराविशद् यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे।
अनु यत् पूर्वा अरुहत् सनाजुवो नि नव्यसीष्ववरासु धावते ॥ ५ ॥

आत्। इत्। मातॄः। आ। अविशत्। यासु। आ। शुचिः। अहिंस्यमानः। उर्विया। वि। ववृधे।
अनु। यत्। पूर्वाः। अरुहत्। सनाऽजुवः। नि। नव्यसीषु। अवरासु। धावते ॥ ५ ॥

वेङ्कट० अनन्तरम् एव ओषधीः अयम् आ अविशत्। यासु पूर्वं दाहादाविवेश तासु च अहिंस्यमानः उरुत्वेन विविधम् वर्धते। यदा चायम् पूर्वाः दीर्घकालयोगिनीश्चिरप्ररूढाः अन्वारुहत्, अथ आसु जीर्णासु नवतरासु अवरकालजातासु[4] नि धावते, नवतरासु[5] ओषधीषु वर्तते इति ॥ ५ ॥

[6]इति द्वितीयाष्टके द्वितीयाध्याये अष्टमो वर्गः[6] ॥

आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋञ्जते।
देवान् यत् क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे ॥ ६ ॥

---

१. तेजसः ल. २-२. °रिक्षगु° अ[1]. ३. व्याप्नुवतः वि[2] अ[1]; व्याप्नुवन्तः वि[1] ल लपं. ४. अपरका° वि[1]. ५. °वतरं वि[2] अ[1] ल लपं; °वकरं वि[2]. ६-६. नास्ति मूको.

आत् । इत् । होतारम् । वृणते । दिविष्टिषु । भगम्ऽइव । पपृचानासः । ऋञ्जते ।
देवान् । यत् । क्रत्वा । मज्मना । पुरुऽस्तुतः । मर्तम् । शंसम् । विश्वधा । वेति । धायसे ॥६॥

वेङ्कट० अनन्तरम् एव अग्निम् वृणते[1] अह्वामागमनेषु, भाग्यम् इव अमुम् सम्पृचन्तः प्रसाधयन्ति । यस्मादयम् हविर्भाजो देवान् कर्मणा बलेन च बहुभिः स्तुतः मर्तम् च स्तुवन्तम् बहुधा अभिगच्छति धारणाय ॥ ६ ॥

वि यदस्थाद् यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः ।
तस्य पत्मन् दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ ७ ॥

वि । यत् । अस्थात् । यजतः । वातऽचोदितः । ह्वारः । न । वक्वा । जरणाः । अनाकृतः ।
तस्य । पत्मन् । धक्षुषः । कृष्णऽजंहसः । शुचिऽजन्मनः । रजः । आ । विऽअध्वनः ॥ ७ ॥

वेङ्कट० वि अस्थात् यदा यजनीयः वातप्रेरितः कुटिलः इव स्तेनः जीर्णा ओषधीः अपराङ्मुखः, तदा[2] तस्य दहतः कृष्णमार्गस्य शुद्धजन्मनः विविधमार्गस्य[3] मार्गे दग्धानामोषधीनाम् रज एव [4]आ तिष्ठति,[4] सर्वं भस्मीभवति ॥ ७ ॥

रथो न यातः शिक्वभिः कृतो द्यामङ्गेभिररुषेभिरीयते ।
आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेषथादीषते वयः ॥ ८ ॥

रथः । न । यातः । शिक्वऽभिः । कृतः । द्याम् । अङ्गेभिः । अरुषेभिः । ईयते ।
आत् । अस्य । ते । कृष्णासः । धक्षि । सूरयः । शूरस्यऽइव । त्वेषथात् । ईषते । वयः ॥ ८ ॥

वेङ्कट० [5]शक्तैः कृतः दृढाङ्गो[5] रथः इव[6] द्याम् अङ्गैरात्मीयैः आरोचमानैः गच्छति । अनन्तरम् अस्य ते कृष्णाः सरणमार्गाः दह्यन्ते । शूरस्येव अग्नेः दीप्तान्मार्गाद् भीताः पलायन्ते पक्षिणः ॥ ८ ॥

त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।
यत् सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥

त्वया । हि । अग्ने । वरुणः । धृतऽव्रतः । मित्रः । शाशद्रे । अर्यमा । सुऽदानवः ।
यत् । सीम् । अनु । क्रतुना । विश्वऽथा । विऽभुः । अरान् । न । नेमिः । परिऽभूः । अजायथाः ॥ ९ ॥

वेङ्कट० त्वया [7]हि अग्ने ! वरुणः[7] धृतकर्मा, मित्रः च तेजसा आच्छादयति,[8] अर्यमा च त्वयैव शोभनदानः । [9]यस्मात् त्वम् सर्वं[9] प्रति कर्मणा सर्वप्रकारम् विभवसि, वरुणादीनधितिष्ठसि ततस्त्वम् अरान् इव नेमिः परिभूः अभवः देवान् ॥ ९ ॥

---

१. वृणुते मूको. २. नास्ति मूको ३. द्विविध° वि[2] अ[1]. ४-४. अवतिष्ठति मूको. ५-५. नास्ति अ[1]. ६. इव कृतः मूको. ७-७. नास्ति वि[2] अ[1]. ८. आच्छदयतु अ[1]. ९-९. नास्ति वि[2] अ[1].

त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि ।
तं त्वा नु नव्यं सहसो युवन् वयं भगं न कारे महिरत्न धीमहि ॥ १० ॥

त्वम् । अग्ने । शशमानाय । सुन्वते । रत्नम् । यविष्ठ । देवऽतातिम् । इन्वसि ।
तम् । त्वा । नु । नव्यम् । सहसः । युवन् । वयम् । भगम् । न । कारे । महिऽरत्न । धीमहि ॥१०॥

वेङ्कट० 'त्वम् अग्ने'[1]! भजते सुन्वते च धनम् युवतम! देवैस्ततम् प्रेरयसि। तम् त्वां[2] क्षिप्रम् स्तुत्यम् वयम् [3]सहसः पुत्र[3]! भगम् इव स्तोत्रलक्षणे शब्दे कार्ये वा महाधन! निधीमहि ॥ १० ॥

अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिम् ।
रश्मीँरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च सुक्रतुः ॥ ११ ॥

अस्मे इति । रयिम् । न । सुऽअर्थम् । दमूनसम् । भगम् । दक्षम् । न । पपृचासि । धर्णसिम् ।
रश्मीन्ऽइव । यः । यमति । जन्मनी इति । उभे इति । देवानाम् । शंसम् । ऋते । आ । च । सुऽक्रतुः ॥

वेङ्कट० अस्मासु धनम् इव सुप्रयोजनम् दममनसम् भाग्यम्[4] बलम् इव सम्पृणक्षि धारकम् । यः भगः[5] सारथिः इव अश्वप्रग्रहार्थान् रश्मीन् अस्माकम् इदं[6] जन्म पारलौकिकं च सर्वं नियच्छति, देवानाम् स्तोत्रम् च अनुयच्छति यज्ञे सुकर्मा ॥ ११ ॥

उत नः सुद्योत्मा जीराश्वो होता मन्द्रः शृणवच्चन्द्ररथः ।
स नो नेषन्नेषतमैरमूरोऽग्निर्वामं सुवितं वस्यो अच्छ ॥ १२ ॥

उत । नः । सुऽद्योत्मा । जीरऽअश्वः । होता । मन्द्रः । शृणवत् । चन्द्रऽरथः ।
सः । नः । नेषत् । नेषऽतमैः । अमूरः । अग्निः । वामम् । सुवितम् । वस्यः । अच्छ ॥ १२ ॥

वेङ्कट० अपि च अस्मान् सुदीप्तिः क्षिप्राश्वः ह्वाता मदयिता[8] शृणोतु आह्लादकरथः[9] । सः अस्मान् नयतु नेतृतमैः अमूढः अग्निः धनम् सुष्ठु प्राप्यम् श्रेष्ठम् प्रति[10] ॥ १२ ॥

अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः ।
अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥ १३ ॥

अस्तावि । अग्निः । शिमीवत्ऽभिः । अर्कैः । साम्ऽराज्याय । प्रऽतरम् । दधानः ।
अमी इति । च । ये । मघऽवानः । वयम् । च । मिहम् । न । सूरः । अति । निः । ततन्युः ॥१३॥

---

१-१. नास्ति वि[२]. २. त्वा अ[१]. ३-३. त्रुटितम् वि[२] अ[१]. ४. सौभग्यम् अ[१]; संभाग्यम् वि[२]. ५. भागः लपं; अग्निः ल शोधः. ६. नास्ति वि[२] लपं. ७. यच्छति लपं. ८ मादयिता वि[१२] अ[१]. ९. आह्लादकरः वि[२] अ[१]; आह्लादकः वि[१] ल लपं. १०. भवति वि[२].

**वेङ्कट०** स्तुतः अग्निः कर्मवद्भिरस्माभिः[1] मन्त्रैः साम्राज्यार्थं धनानि अत्यन्तम् प्रयच्छन् । अमी[2] धनवन्तः ये ते च वयम् च तव स्तोत्राणि, यथा सूर्यः अत्यन्तम् वृष्टिं विस्तारयति, एवं निस्ततवन्तः ॥ १३ ॥

[3]इति द्वितीयाष्टके द्वितीयाध्याये नवमो वर्गः[3] ॥

## [ १४२ ]

[3]दीर्घतमा औचथ्य ऋषिः । त्रयोदशानाम् ऋचां क्रमेण १ इद्धः समिद्धो वाऽग्निः, २ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ देवीर्द्वारः, ७ उषासानक्ता, ८ दैव्यौ होतारौ प्रचेतसौ, ९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः, १३ इन्द्रो देवता । अनुष्टुप् छन्दः[3] ।

**समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे । तन्तुं तनुष्व पूर्व्यं सुतसोमाय दाशुषे ॥१॥**

सम्ऽइद्धः । अग्ने । आ । वह । देवान् । अद्य । यतऽस्रुचे ।
तन्तुम् । तनुष्व । पूर्व्यम् । सुतऽसोमाय । दाशुषे ॥ १ ॥

**वेङ्कट०** समिद्धः अग्ने! आ वह देवान् अद्य[4] यजमानाय। पूर्वैः सम्बद्धम्[5] अपत्यम् कुरु सुतसोमाय यजमानाय॥ १ ॥

**घृतवन्तमुप मासि मधुमन्तं तनूनपात् । यज्ञं विप्रस्य मावतः शशमानस्य दाशुषः ॥२॥**

घृतऽवन्तम् । उप । मासि । मधुऽमन्तम् । तनूऽनपात् ।
यज्ञम् । विप्रस्य । माऽवतः । शशमानस्य । दाशुषः ॥ २ ॥

**वेङ्कट०** घृतवन्तम्[6] समीपे करोषि सोमवन्तं च अग्ने! यज्ञम् मेधाविनः मत्सदृशस्य यजमानस्य प्रयच्छतः ॥ २ ॥

**शुचिः पावको अद्भुतो मध्वा यज्ञं मिमिक्षति । नराशंसस्त्रिरा दिवो देवो देवेषु यज्ञियः ॥३॥**

शुचिः । पावकः । अद्भुतः । मध्वा । यज्ञम् । मिमिक्षति ।
नराशंसः । त्रिः । आ । दिवः । देवः । देवेषु । यज्ञियः ॥ ३ ॥

**वेङ्कट०** शुचिः पावकः महान् आज्येन यज्ञम् सिञ्चति । सः नराशंसः स्वर्गाद् अह्नः त्रिः आ गच्छतु देवः देवमध्ये यज्ञार्हः ॥ ३ ॥

**ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् । इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यते ॥४॥**

ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् ।
इयम् । हि । त्वा । मतिः । मम । अच्छ । सुऽजिह्व । वच्यते ॥ ४ ॥

---

१. °र्मभिर° लपं. २. नास्ति वि[2] अ[1]. ३-३. नास्ति मूको. ४. नास्ति मूको. ५. सम्बन्धम् वि[2]. ६. नास्ति लपं.

**वेङ्कट०** **स्तुतस्त्वम्** अग्ने! आ वह **अस्मिन् कर्मणि पूज्यम्** प्रियम् इन्द्रम्। इयम् हि मम **स्तुतिः** सुजिह्व! **त्वाम्**[1] अच्छ **उच्यते** ॥ ४ ॥

स्तृणानासो यतस्रुचो बर्हिर्यज्ञे स्वध्वरे। वृञ्जे देवव्यचस्तममिन्द्राय शर्म सप्रथः ॥ ५ ॥

स्तृणानासः। यतऽस्रुचः। बर्हिः। यज्ञे। सुऽअध्वरे। वृञ्जे। देवव्यचःऽतमम्। इन्द्राय। शर्म। सऽप्रथः ॥

**वेङ्कट०** **स्तृणन्तः** ऋत्विजः बर्हिः यज्ञे **सुष्ठ्वहिंस्यमाने छिनद्मि। अतिशयेन**[2] **देवैर्व्याप्तम्** इन्द्राय च **आवासस्थानम् सर्वतः पृथुतमं बर्हिः** ॥ ५ ॥

वि श्रयन्तामृतावृधः प्रयै देवेभ्यो महीः। पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥ ६ ॥

वि। श्रयन्ताम्। ऋतऽवृधः। प्रऽयै। देवेभ्यः। महीः। पावकासः। पुरुऽस्पृहः। द्वारः। देवीः। असश्चतः ॥

**वेङ्कट०** **विवृतद्वाराः भवन्तु यज्ञस्य वर्धयित्र्यः** देवेभ्यः **प्रयातुम् मह्यः शोधयित्र्यः बहुभिः स्पृहणीयाः** द्वारः **देव्यः असज्यमानाः** ॥ ६ ॥

[3]**इति द्वितीयाष्टके द्वितीयाध्याये दशमो वर्गः**[3]।

आ भन्दमाने उपाके नक्तोषासा सुपेशसा। यह्वी ऋतस्य मातरा सीदतां बर्हिरा सुमत् ॥ ७ ॥

आ। भन्दमाने इति। उपाके इति। नक्तोषासा। सुऽपेशसा।
यह्वी इति। ऋतस्य। मातरा। सीदताम्। बर्हिः। आ। सुऽमत् ॥ ७ ॥

**वेङ्कट०** **स्तूयमाने परस्परासन्ने** नक्तोषासा **सुरूपे महत्यौ यज्ञस्य निर्मात्र्यौ सुष्ठु इदम् बर्हिः** आ सीदताम् ॥ ७ ॥

मन्द्रजिह्वा जुगुर्वणी होतारा दैव्या कवी। यज्ञं नो यक्षतामिमं सिध्रमद्य दिविस्पृशम् ॥ ८ ॥

मन्द्रऽजिह्वा। जुगुर्वणी इति। होतारा। दैव्या। कवी इति।
यज्ञम्। नः। यक्षताम्। इमम्। सिध्रम्। अद्य। दिविऽस्पृशम् ॥ ८ ॥

**वेङ्कट०** **मादयितृजिह्वौ सम्भक्तारौ स्तुवताम् दैव्यौ** होतारौ कवी यज्ञम् **अस्माकम्** इमम् **यजताम् साधकम्** अद्य **द्युलोकस्प्रष्टारम्** ॥ ८ ॥

शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती। इळा सरस्वती मही बर्हिः सीदन्तु यज्ञियाः ॥ ९ ॥

शुचिः। देवेषु। अर्पिता। होत्रा। मरुत्ऽसु। भारती।
इळा। सरस्वती। मही। बर्हिः। सीदन्तु। यज्ञियाः ॥ ९ ॥

---

१. ताम् वि[2] अ[1]. २. नास्ति मूको. ३-३. नास्ति मूको.

वेङ्कट० शुद्धा मरुत्सु देवेषु अर्पिता तदधिष्ठाना आदित्यस्य भार्या वाक् इडा सरस्वती च [1]महती तिस्र इमाः यज्ञार्हाः बर्हिः सीदन्तु[1] ॥ ९ ॥

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मनां। त्वष्टा पोषाय वि ष्यंतु राये नाभां नो अस्मयुः ।१०।

तत्। नः। तुरीपम्। अद्भुतम्। पुरु। वा। अरम्। पुरु। त्मनां।
त्वष्टा। पोषाय। वि। स्यतु। राये। नाभां। नः। अस्मऽयुः ॥ १० ॥

वेङ्कट० [2]तत् नः[2] तारकं रेतः महत् बहु[3] च पर्याप्तम् आत्मना च बहु त्वष्टा सन्तानपोषाय अन्तःप्रविष्टः [4]नाभाववस्थितं बन्धम्[4] अस्मत्कामः अस्माकम् राये विमुञ्चतु ॥ १० ॥

अवसृजन्नुप त्मनां देवान् यंक्षि वनस्पते। अग्निर्हव्या सुंषूदति देवो देवेषु मेधिरः॥ ११॥

अवऽसृजन्। उप। त्मनां। देवान्। यक्षि। वनस्पते।
अग्निः। हव्या। सुसूदति। देवः। देवेषु। मेधिरः॥ ११ ॥

वेङ्कट० वनस्पते! त्वम् आत्मनैव हविर्देवेषु अवसृजन् देवान् उपयज। अग्निः अयम् हव्यानि प्रेरयति देवानां मध्ये यज्ञियः ॥ ११ ॥

पूषण्वते मरुत्वते विश्वदेवाय वायवे। स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन ॥ १२ ॥

पूषण्ऽवते। मरुत्वते। विश्वऽदेवाय। वायवे। स्वाहा। गायत्रऽवेपसे। हव्यम्। इन्द्राय। कर्तन ॥१२॥

वेङ्कट० पूष्णा मरुद्भिश्च तद्वते[5] सर्वदेवाय वायवे स्वाहा कुरुत। गायत्रं साम यस्योत्थापकं तस्मै[6] हव्यम् इन्द्राय च ॥ १२ ॥

उत्तरा वैकल्पिकी निगदव्याख्याता।

स्वाहाकृतान्या गह्युप हव्यानि वीतये। इन्द्रा गहि श्रुधी हवं त्वां हवन्ते अध्वरे ॥१३॥

स्वाहाऽकृतानि। आ। गहि। उप। हव्यानि। वीतये।
इन्द्र। आ। गहि। श्रुधि। हवम्। त्वाम्। हवन्ते। अध्वरे ॥ १३ ॥

[7]इति द्वितीयाष्टके द्वितीयाध्याये एकादशो वर्गः[7]।

---

१-१. नास्ति अ[1]; त्रुटितम् वि[2]. २-२. त्रुटितम् वि[2]. ३. बहुषु वि[1] लपं. ४-४. 'स्थितो बद्धम् वि[2] अ[1]. ५-५. 'द्भिस्त' वि[1] ल लप. ६. नास्ति मूको. ७-७. नास्ति मूको.

[ १४३ ]

[1]दीर्घतमा औचथ्य ऋषिः। अग्निर्देवता। जगती छन्दः, अष्टमी त्रिष्टुप्[1]।

प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे।
अपां नपाद् यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीदहत्वियः ॥ १ ॥

प्र। तव्यसीम्। नव्यसीम्। धीतिम्। अग्नये। वाचः। मतिम्। सहसः। सूनवे। भरे।
अपाम्। नपात्। यः। वसुऽभिः। सह। प्रियः। होता। पृथिव्याम्। नि। असीदत्। ऋत्वियः ॥१॥

**वेङ्कट०** वृद्धिमतीम् नवतराम् धियं कर्म वाचः च[2] स्तुतिम् सहसः पुत्राय अग्नये प्र भरे। अपाम् नपात् यः वसुभिः सह सम्प्रियः [3]ह्वाता वेद्याम् निषीदति प्राप्तयागकालः[3] ॥ १ ॥

स जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने।
अस्य क्रत्वा समिधानस्य मज्मना प्र द्यावा शोचिः पृथिवी अरोचयत् ॥ २ ॥

सः। जायमानः। परमे। विऽओमनि। आविः। अग्निः। अभवत्। मातरिश्वने।
अस्य। क्रत्वा। सम्ऽइधानस्य। मज्मना। प्र। द्यावा। शोचिः। पृथिवी इति। अरोचयत् ॥ २ ॥

**वेङ्कट०** [4]सः प्रादुर्भवन् उत्तमे अन्तरिक्षे अग्निः प्रथमम् वायवे आविः अभवत्। तथा अस्य कर्मणा दीप्यमानस्य बलेन द्यावा पृथिवी तेजः प्र अरोचयत्[4] ॥२॥

अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः।
भात्वक्षसो अत्यक्तुर्न सिन्धवोऽग्ने रेजन्ते अससन्तो अजराः ॥ ३ ॥

अस्य। त्वेषाः। अजराः। अस्य। भानवः। सुऽसंदृशः। सुऽप्रतीकस्य। सुऽद्युतः।
भाऽत्वक्षसः। अति। अक्तुः। न। सिन्धवः। अग्नेः। रेजन्ते। अससन्तः। अजराः ॥३॥

**वेङ्कट०** अस्य अग्नेः भानवः दीप्ताः अजराः च। अस्य रश्मयः शोभनदर्शनस्य[5] शोभनावयवस्य सुष्ठु द्योतमानस्य दीप्तबलस्य, सेक्तुः पर्जन्यस्य आपः इव, अग्नेः अत्यन्तमितस्ततश्चरन्तः कम्पन्ते अस्वपन्तः जरावर्जिताः ॥ ३ ॥

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना।
अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥ ४ ॥

---

१-१. नास्ति मूको. २. नास्ति ल. ३-३. त्रुटितम् वि[२] अ[१]. ४-४. त्रुटितम् वि[१]; नास्ति अ[१]. ५. शोभनसन्दर्शना अस्य वि[१] अ[१].

यम् । आऽईरिरे । भृगवः । विश्वऽवेदसम् । नाभा । पृथिव्याः । भुवनस्य । मज्मना ।
अग्निम् । तम् । गीःऽभिः । हिनुहि । स्वे । आ । दमे । यः । एकः । वस्वः । वरुणः । न । राजति ॥४॥

**वेङ्कट०** यम् आभिमुख्येनानीतवन्तः भृगवः विश्वधनम् पृथिव्याः नाभौ भूतजातस्य बलार्थम् । अग्निम् तम् गीर्भिः स्वे आयतने प्रेरय । यः[1] स्वयमेव वरुणः इव धनस्य ईश्वरो भवति ॥ ४ ॥

**न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः ।**
**अग्निर्जम्भैस्तिगितैरत्ति भर्वति योधो न शत्रून्त्स वना न्यृञ्जते ॥ ५ ॥**

न । यः । वराय । मरुताम्ऽइव । स्वनः । सेनाऽइव । सृष्टा । दिव्या । यथा । अशनिः ।
अग्निः । जम्भैः । तिगितैः । अत्ति । भर्वति । योधः । न । शत्रून् । सः । वना । नि । ऋञ्जते ॥५॥

**वेङ्कट०** यः वारयितुम् न शक्यते । मरुतामिव स्वनः सेनेव च उद्युक्ता दिवि भवा[2] यथा अशनिः । अग्निः दंष्ट्राभिः तीक्ष्णाभिः वृक्षान् अत्ति खादति भक्षयति च । सः अयम्, भगः इव शत्रून्, वृक्षान् नितरां प्रसाधयति ॥ ५ ॥

**कुविन्नो अग्निरुचथस्य वीरसद् वसुष्कुविद् वसुभिः काममावरत् ।**
**चोदः कुवित् तुतुज्यात् सातये धियः शुचिप्रतीकं तमया धिया गृणे ॥ ६ ॥**

कुवित् । नः । अग्निः । उचथस्य । वीः । असत् । वसुः । कुवित् । वसुऽभिः । कामम् । आवरत् ।
चोदः । कुवित् । तुतुज्यात् । सातये । धियः । शुचिऽप्रतीकम् । तम् । अया । धिया । गृणे ॥६॥

**वेङ्कट०** बहु अस्माकम् उच्यमानस्य स्तोत्रस्य अग्निः कामयिता भवतु । वासयिता बहु अस्माकं धनैः कामान् आवृणोतु[3] । कामानां चोदयिता बहु प्रेरयतु भजनाय कर्माणि । निर्मलाङ्गम् तम्[4] अनया वाचा स्तौमि ॥ ६ ॥

**घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते ।**
**इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ॥ ७ ॥**

घृतऽप्रतीकम् । वः । ऋतस्य । धूःऽसदम् । अग्निम् । मित्रम् । न । समऽइधानः । ऋञ्जते ।
इन्धानः । अक्रः । विदथेषु । दीद्यत् । शुक्रऽवर्णाम् । उत् । ऊँ इति । नः । यंसते । धियम् ॥

**वेङ्कट०** घृतलिङ्गम् युष्माकम् यज्ञस्य धुरि सीदन्तम् अग्निम् मित्रम् इव धनैः समेधयन् काष्ठैः प्रसाधयति । स [5]समिध्यमानः रक्षोभिरनाक्रान्तः[5] यज्ञेषु दीप्यमानः निर्मलाम् उपद्रवाभावाद् अस्माकम् बुद्धिम् उत् यच्छति ॥ ७ ॥

---

१. नास्ति वि[1] अ[1] लपं. २. °वा वा वि[2] अ[1]. ३. कामयमाना वृणोतु वि[2] अ[1]. ४. तम् अहम् वि[1] अ[1]. ५-५. °नो ⋯ भि° वि[2] अ[1].

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः ।
अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥ ८ ॥

अप्रऽयुच्छम् । अप्रयुच्छत्ऽभिः । अग्ने । शिवेभिः । नः । पायुऽभिः । पाहि । शग्मैः ।
अदब्धेभिः । अदृपितेभिः । इष्टे । अनिमिषत्ऽभिः । परि । पाहि । नः । जाः ॥ ८ ॥

**वेङ्कट०** अप्रमाद्यन् अप्रमाद्यद्भिः अग्ने! कल्याणैः अस्मान् पाहि तेजोभिः शक्तैः । अहिंसितैः जागरूकैः अन्वेषणीय![1] निमेषमकुर्वद्भिः परितः अस्मान् रक्ष जायमानः ॥ ८ ॥

[2]इति द्वितीयाष्टके द्वितीयाध्याये द्वादशो वर्गः[2] ॥

## [ १४४ ]

[2]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । जगती छन्दः[2] ।

एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियम् ।
अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥ १ ॥

एति । प्र । होता । व्रतम् । अस्य । मायया । ऊर्ध्वाम् । दधानः । शुचिऽपेशसम् । धियम् ।
अभि । स्रुचः । क्रमते । दक्षिणाऽआवृतः । याः । अस्य । धाम । प्रथमम् । ह । निंसते ॥ १ ॥

**वेङ्कट०** अस्य अग्नेः कर्म यागाख्यम् होता प्रज्ञया उपगच्छति[3], उच्छ्रिताम् धारयन् शुद्धरूपाम् स्तुतिम् अध्वर्युभिर्दक्षिणा ह्रियमाणाः[4] स्रुचः च अभि क्रमते । याः स्रुचः अग्नेः स्थानमाज्यभागाद्यर्थम् प्रथमम् एव अभिनमन्ति ताः स्रुच आदापयितुमभिक्रमते ॥ १ ॥

अभीमृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः ।
अपामुपस्थे विभृतो यदावसदध स्वधा अधयद् याभिरीयते ॥ २ ॥

अभि । ईम् । ऋतस्य । दोहनाः । अनूषत । योनौ । देवस्य । सदने । परिऽवृताः ।
अपाम् । उपऽस्थे । विऽभृतः । यत् । आ । अवसत् । अध । स्वधाः । अधयत् । याभिः । ईयते ॥२॥

**वेङ्कट०** अभि एनम् अस्तुवन् सत्यस्याग्नेः दोहनाः स्तुतयः । योनौ यज्ञगृहे देवस्य सदनस्थाने सर्वतो वृताः । सोऽयम् अपाम् उपस्थानेऽन्तरिक्षे विभृतः बहुधाभूय ताः यदा आवसत् अथ जलानि पिबति, याभिः सह सङ्गच्छते ॥ २ ॥

युयूषतः सवयसा तदिद् वपुः समानमर्थं वितरित्रता मिथः ।
आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्त्समयंस्त सारथिः ॥ ३ ॥

---

१. नास्ति वि[2] अ[1]. २-२. नास्ति मूको. ३. °पाग° अ[1]. ४. त्रुटितम् वि[2] अ[1].

युयूषतः । सऽवयसा । तत् । इत् । वपुः । समानम् । अर्थम् । विऽतरित्रता । मिथः ।
आत् । ईम् । भगः । न । हव्यः । सम् । अस्मत् । आ । वोळ्हुः । न । रश्मीन् । सम् । अयंस्त । सारथिः ॥३॥

**वेङ्कट०** अहोरात्रे समानप्रमाणे तत् एव आग्नेयमुच्यमानं हविः मिश्रयतः समानम् सस्योत्पादनार्थं[1] कार्यम् हविःशेषेण कुर्वाणे परस्परम्[2] । अनन्तरम् एव तदुत्पन्नं हविः भगः इव सर्वैराह्वातव्योऽग्निः अस्मत्तः सम् आ दत्ते । यथा वोढुः अश्वस्य रश्मीन् सारथिः सम् यच्छते[3], तद्वद्धविः समादत्ते ॥ ३ ॥

**यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा ।**
**दिवा न नक्तं पलितो युवाजनि पुरू चरन्नजरो मानुषा युगा ॥ ४ ॥**

यम् । ईम् । द्वा । सऽवयसा । सपर्यतः । समाने । योना । मिथुना । समऽओकसा ।
दिवा । न । नक्तम् । पलितः । युवा । अजनि । पुरु । चरन् । अजरः । मानुषा । युगा ॥ ४ ॥

**वेङ्कट०** यम् एनम् द्वौ समानान्नौ पूजयतः अहश्च रात्रिश्च आहवनीयाख्ये एकस्मिन् आयतने स्थितम् स्वयं च मिथुनभूतौ[2] समानगृहौ एकस्मिन् काले परिवर्तमानत्वात् । सोऽयम् यथा अह्नि प्रातरादित्यात्मना जायते, एवम् श्वेतवर्णोऽसौ रात्रौ च दीप्तो जायते पुरूणि बह्वावर्तनानि मनुष्यहितानि युगानि सञ्चरन् जरावर्जितः ॥ ४ ॥

**तमीं हिन्वन्ति धीतयो दश व्रिशो देवं मर्तास ऊतये हवामहे ।**
**धनोरधि प्रवत आ स ऋण्वत्यभिव्रजद्भिर्वयुना नवाधित ॥ ५ ॥**

तम् । ईम् । हिन्वन्ति । धीतयः । दश । व्रिशः । देवम् । मर्तासः । ऊतये । हवामहे ।
धनोः । अधि । प्रऽवतः । आ । सः । ऋण्वति । अभिव्रजत्ऽभिः । वयुना । नवा । अधित ॥५॥

**वेङ्कट०** तम् एनम् प्रेरयन्ति अङ्गुलयः दश असंश्लिष्टाः । तम् देवम् वयम् मर्तासः रक्षणाय हवामहे । सः अग्निः प्रकर्षवतः उच्छ्रितादन्तरिक्षात् अधि[3] उदकानि भूम्यां प्रवेशयति[4] तथा उपरि व्रजद्भिरुदकैः प्रज्ञानानि मनुष्याणाम् नवानि धत्ते ॥ ५ ॥

**त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपाइव त्मना ।**
**एनी त एते बृहती अभिश्रिया हिरण्ययी वक्वरी बर्हिराशाते ॥ ६ ॥**

त्वम् । हि । अग्ने । दिव्यस्य । राजसि । त्वम् । पार्थिवस्य । पशुपाःऽइव । त्मना ।
एनी इति । ते । एते इति । बृहती इति । अभिऽश्रिया । हिरण्ययी इति । वक्वरी इति । बर्हिः । आशाते इति ॥

---

१. सत्योत्पा० वि[2] २. नास्ति मूको. ३. गच्छते वि[1] अ[1] ल. ४. निवे० वि[1] लपं.

**वेङ्कट०** त्वम् हि अग्ने! **दिवि भवस्य देवगणस्य ईश्वरो भवसि।** त्वम् पार्थिवस्य **गोपालः**[1] **इव पशूनाम् आत्मनैव। एवंविधस्य तव** एते[2] **इवेते बृहत्यौ अभिगमनस्वभावे हिरण्मयालङ्कारे गमनशीले जङ्घे** बर्हिः आशाते ॥ ६ ॥

अग्ने॒ जु॒षस्व॒ प्रति॑ हर्य॒ तद् वचो॒ मन्द्र॒ स्वधा॑व॒ ऋत॑जात॒ सुक्र॑तो ।
यो वि॒श्वत॑ः प्र॒त्यङ्ङसि॑ दर्श॒तो र॒ण्वः संदृ॑ष्टौ पितु॒माँ इ॑व॒ क्षय॑ः ॥ ७ ॥

अग्ने॑। जु॒षस्व॑। प्रति॑। ह॒र्य॒। तत्। वच॑ः। मन्द्र॑। स्वधा॑ऽवः। ऋत॑ऽजात। सुक्र॑तो इति॑ सुऽक्र॑तो।
यः। वि॒श्वत॑ः। प्र॒त्यङ्। असि॑। द॒र्श॒तः। र॒ण्वः। सम्ऽदृ॑ष्टौ। पि॒तु॒मान्ऽइ॑व। क्षय॑ः ॥७॥

**वेङ्कट०** अग्ने! तत् **इदम् वचनम् सेवस्व कामय च मादयितः! अन्नवन्! यज्ञजात!**[3] **सुप्रज्ञ!। यस्त्वं**[4] **प्रज्वलन् सर्वत एव अभिमुखः भवसि दर्शनीयः रमयिता सन्दर्शने मनुष्यस्य अन्नवान्** इव **निवासः ॥ ७ ॥**

[5]**इति द्वितीयाष्टके द्वितीयाध्याये त्रयोदशो वर्गः**[5] ॥

## [ १४५ ]

[5]**दीर्घतमा औचथ्य ऋषिः। अग्निर्देवता।** जगतीच्छन्दः, **पञ्चमी त्रिष्टुप्**[5]।

तं पृ॑च्छता॒ स ज॑गामा॒ स वे॑द॒ स चि॑कि॒त्वाँ ई॑यते॒ सा न्वी॑यते ।
तस्मि॑न्त्सन्ति प्र॒शिष॒स्तस्मि॑न्नि॒ष्टय॒ः स वाज॑स्य॒ शव॑सः शु॒ष्मिण॒स्पति॑ः ॥१॥

तम्। पृ॒च्छ॒त॒। सः। ज॒गा॒म॒। सः। वे॒द॒। सः। चि॒कि॒त्वान्। ई॒य॒ते॒। सः। नु। ई॒य॒ते॒।
तस्मि॑न्। स॒न्ति॒। प्र॒ऽशिष॑ः। तस्मि॑न्। इ॒ष्टय॑ः। सः। वाज॑स्य। शव॑सः। शु॒ष्मिण॑ः। पति॑ः ॥ १ ॥

**वेङ्कट०** **अग्निम्** [6]पृच्छत। सः देवेषु[6] **गच्छति,** वेद **चावगन्तव्यम्।** सः **ज्ञातैव गच्छति क्षिप्रम्।** तस्मिन् सन्ति **प्रशासनानि**[7] **अभिलषितानि च।** सः **बलस्य अन्नस्य च शोषयितुः स्वामी ॥ १ ॥**

तमित् पृ॑च्छन्ति॒ न सि॒मो वि पृ॑च्छति॒ स्वेने॑व॒ धीरो॒ मन॑सा॒ यदग्र॑भीत् ।
न मृ॑ष्यते प्रथ॒मं नाप॑रं॒ वचो॒ऽस्य क्रत्वा॑ सचते॒ अप्र॑दृपितः ॥ २ ॥

तम्। इत्। पृ॒च्छ॒न्ति॒। न। सि॒मः। वि। पृ॒च्छ॒ति॒। स्वेन॑ऽइव। धीर॑ः। मन॑सा। यत्। अग्र॑भीत्।
न। मृ॒ष्य॒ते॒। प्र॒थ॒मम्। न। अप॑रम्। वच॑ः। अ॒स्य। क्रत्वा॑। स॒च॒ते॒। अप्र॑ऽदृपितः ॥२॥

**वेङ्कट०** **अग्निम् एव सर्वे** पृच्छन्ति। **स तु बन्धकोऽग्निः** न **कञ्चन** वि[2] पृच्छति। **यथा मनुष्यः आत्मना ज्ञेयसमीपगतेनार्थं जानाति, एवमग्निरेकत्रावस्थित एव** मनसा **दूरस्थमपि गृह्णाति प्रज्ञावान्**

---

१. गोपाल ल. २. **नास्ति मूको.** ३. यज्ञे जा° लपं वि[1]; यज्ञाज्जा° **वि[2] अ[1].** ४. भूयस्त्वं **मूको.** **५-५. नास्ति मूको. ६-६. नास्ति वि[2] अ.[1]** ७. प्रशंसनानि **ल.**

यस्मादसावग्निः स्ववचनात् पूर्वम् उत्तरं वा परकीयं वचनम् न सहते । स्वयमेवासन्दिग्धं कथयतीत्यर्थः । दर्परहितश्चेद्, अग्नेः ज्ञानेन सक्तो भवति मनुष्यः ॥ २ ॥

**तमिद् गच्छन्ति जुह्व१स्तमर्वतीर्विश्वान्येकः शृणवद् वचांसि मे ।**
**पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशुरादत्त सं रभः ॥ ३ ॥**

तम् । इत् । गच्छन्ति । जुह्वः । तम् । अर्वतीः । विश्वानि । एकः । शृणवत् । वचांसि । मे ।
पुरुऽप्रैषः । ततुरिः । यज्ञऽसाधनः । अच्छिद्रऽऊतिः । शिशुः । आ । अदत्त । सम् । रभः ॥ ३ ॥

**वेङ्कट०** तम् एव होतारः गच्छन्ति, तम् एव शत्रुमत्यः प्रजाः । सः एकः सर्वाणि सूक्तानि शृणोतु मे । बहुप्रैषः, प्रैषाः स्तुतिविशेषाः, तरणकुशलः साधयिता यज्ञस्य अविच्छिन्नरक्षणः शिशुः सन् उद्युक्ताञ्छत्रून् वधार्थं [1]सम् आ अदत्त[1] ॥ ३ ॥

**उपस्थायं चरति यत् समारत सद्यो जातस्तत्सार युज्येभिः ।**
**अभि श्वान्तं मृशते नान्द्ये मुदे यदीं गच्छन्त्युशतीरपिष्ठितम् ॥ ४ ॥**

उपस्थायम् । चरति । यत् । सम्ऽआरत । सद्यः । जातः । तत्सार । युज्येभिः ।
अभि । श्वान्तम् । मृशते । नान्द्ये । मुदे । यत् । ईम् । गच्छन्ति । उशतीः । अपिऽस्थितम् ॥४॥

**वेङ्कट०** यद्यसौ केनचित् सङ्गच्छते स[2] ततः उपस्थायोपस्थाय चरति काले-काले उपतिष्ठते । तदानीमेव जातः तेजोभी राक्षसान् योद्धुम् छद्मना चरति । श्वमिः[3] श्रमिपर्यायः । नन्दनसाधने यज्ञे प्रजानां मुदे तासां श्रान्तिम्[4] अभिमार्ष्टि यदि एनम् गच्छन्ति कामयमानाः प्रजाः समीपे [5]एकभूतं स्थितम्[5] ॥ ४ ॥

**स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि ।**
**व्यब्रवीद् वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥ ५ ॥**

सः । ईम् । मृगः । अप्यः । वनर्गुः । उप । त्वचि । उपऽमस्याम् । नि । धायि ।
वि । अब्रवीत् । वयुना । मर्त्येभ्यः । अग्निः । विद्वान् । ऋतऽचित् । हि । सत्यः ॥ ५ ॥

**वेङ्कट०** अग्निः यजमानम् मृगयते । उदकहितः काष्ठानि गच्छन् समीपस्थायां भूम्यां बर्हिषि उप नि[6] धीयते च वि ब्रवीति च ज्ञानानि मनुष्येभ्यः [7]अग्निः हि[7] विद्वान् ऋतज्ञः सत्यकर्मा ॥ ५ ॥

[8]इति द्वितीयाष्टके द्वितीयाध्याये चतुर्दशो वर्गः[8] ॥

---

१-१. समादत्ते वि[1] ल लपं. २. नास्ति वि[2]. ३. त्वमि वि[1] अ[1] लपं; शमिः वि[2] अ[2] ल.
४. शन्तिम् वि[2] अ[1]. ५-५. °भूतास्थि° अ[1]. ६. नास्ति मूको. ७-७. नास्ति अ[1]; त्रुटितम् वि[2].
८-८. नास्ति मूको.

[ १४६ ]

[1]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे ।
निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥ १ ॥

त्रिऽमूर्धानम् । सप्तऽरश्मिम् । गृणीषे । अनूनम् । अग्निम् । पित्रोः । उपऽस्थे ।
निऽसत्तम् । अस्य । चरतः । ध्रुवस्य । विश्वा । दिवः । रोचना । आपप्रिऽवांसम् ॥ १ ॥

वेङ्कट० अग्निवायुसूर्यात्मकत्वाद् गार्हपत्यादिभेदाद्वा त्रिमूर्धानम्, आथर्वणिकैः 'काली कराली च करालजिह्वा' ( तु. मुंउ १, २, ४ ) इत्यधीतैः सप्तभिः रश्मिभिर्युक्तं स्तुहि द्यावापृथिव्योः उत्सङ्गे वर्तमानम् परिपूर्णम्। अग्नेः निषदनं स्थावरजङ्गमयोरभ्युदयाय भवति। तम् विश्वानि दिवः नक्षत्राणि स्वतेजसा पूरयन्तं स्तुहि ॥ १ ॥

उक्षा महाँ अभि ववक्ष एने अजरस्तस्थावितऊतिर्ऋष्वः ।
उर्व्याः पदो नि दधाति सानौ रिहन्त्यूधो अरुषासो अस्य ॥ २ ॥

उक्षा । महान् । अभि । ववक्षे । एने इति । अजरः । तस्थौ । इतःऽऊतिः । ऋष्वः ।
उर्व्याः । पदः । नि । दधाति । सानौ । रिहन्ति । ऊधः । अरुषासः । अस्य ॥ २ ॥

वेङ्कट० सेक्ता महान् द्यावापृथिव्यौ अभि वहति[2]। जरारहितः तिष्ठति अभिमुखरक्षणः दर्शनीयः [3]भूम्याः उत्थितः[3] उत्तरवेद्याम् पादम् निधत्ते। लिहन्ति च अस्य आरोचमाना रश्मयः उदकायतनं दिवम् ॥ २ ॥

समानं वत्समभि संचरन्ती विष्वग्धेनू वि चरतः सुमेके ।
अनपवृज्याँ अध्वनो मिमाने विश्वान् केताँ अधि महो दधाने ॥ ३ ॥

समानम् । वत्सम् । अभि । संचरन्ती इति सम्ऽचरन्ती । विष्वक् । धेनू इति । वि । चरतः । सुऽमेके इति सुऽमेके ॥ अनपऽवृज्यान् । अध्वनः । मिमाने इति । विश्वान् । केतान् । अधि । महः । दधाने इति ॥

वेङ्कट० [4]समानम् वत्सम् अभि[4] सञ्चरन्ती अहोरात्रे शोभमाने विष्वक् वि चरतः । [5]अपवर्जितुमशक्यान् दीर्घान् मार्गान्[5] गमनेन परिच्छिन्दती विश्वान् आवासान् प्रति तेजः दधाने ॥ ३ ॥

---

१-१. नास्ति मूको. २. °हसि वि[2] ल लपं. ३-३. भूम्या ··· उच्छ्रितः वि[2] अ[1]. ४-४. त्रुटितम् वि[2] अ[1]. ५-५. नास्ति वि[2] अ[1].

धीरा॑सः प॒दं क॒वयो॑ नयन्ति॒ नाना॑ हृ॒दा रक्ष॑माणा अजु॒र्यम् ।
सिषा॑सन्तः॒ पर्य॑पश्यन्त॒ सिन्धु॑मा॒विरे॑भ्यो अभव॒त् सूर्यो॑ नॄ॒न् ॥ ४ ॥

धीरा॑सः । प॒दम् । क॒वयः॑ । न॒य॒न्ति॒ । नाना॑ । हृ॒दा । रक्ष॑माणाः । अ॒जु॒र्यम् ।
सिसा॑सन्तः । परि॑ । अ॒प॒श्य॒न्त॒ । सिन्धु॑म् । आ॒विः । ए॒भ्यः॒ । अ॒भ॒व॒त् । सूर्यः॑ । नॄ॒न् ॥ ४ ॥

वेङ्कट० धीराः अग्निं स्थानम् नयन्ति कवयः । त्रिषु स्थानेषु हृदयेनैव जरावर्जितमग्निम् रक्षमाणाः । सम्भक्तुमिच्छन्तश्चाग्नेः [1]धनस्य स्यन्दनम् परितः[1] पश्यन्ति । अग्निं परिचरद्भ्यः एभ्यः सूर्यः अपि नेतॄन् रश्मीन् आविः भावयति ॥ ४ ॥

दि॒दृ॒क्षेण्यः॒ परि॒ काष्ठा॑सु॒ जेन्य॑ ई॒ळेन्यो॑ म॒हो अर्भा॑य जी॒वसे॑ ।
पु॒रु॒त्रा यदभ॑व॒त् सूरहै॑भ्यो॒ गर्भे॑भ्यो म॒घवा॑ वि॒श्वद॑र्शतः ॥ ५ ॥

दि॒दृ॒क्षेण्यः॑ । परि॑ । काष्ठा॑सु । जेन्यः॑ । ई॒ळेन्यः॑ । म॒हः । अर्भा॑य । जी॒वसे॑ ।
पु॒रु॒ऽत्रा । यत् । अभ॑वत् । सूः । अहं॑ । ए॒भ्यः॒ । गर्भे॑भ्यः । म॒घऽवा॑ । वि॒श्वऽद॑र्शतः ॥ ५ ॥

वेङ्कट० दर्शनीयः दिक्षु परितः जनयितव्यः स्तोतव्यः महतः पितुः बालजीवनार्थम् । यस्मादयम् पुरूणि धनानि[2] धनवान् विश्वस्य दर्शनीयः एभ्यः गर्भेभ्यः जीवनाय सूः एव भवति[3] ॥ ५ ॥

[4]इति द्वितीयाष्टके द्वितीयाध्याये पञ्चदशो वर्गः[4] ॥

## [ १४७ ]

[4]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[4] ॥

क॒था ते॑ अग्ने शु॒चय॑न्त आ॒योर्द॑दा॒शुर्वाजे॑भिराशु॒षाणाः॑ ।
उ॒भे यत् तो॒के तन॑ये॒ दधा॑ना ऋ॒तस्य॒ साम॑न् र॒णय॑न्त दे॒वाः ॥ १ ॥

क॒था । ते॒ । अ॒ग्ने॒ । शु॒चय॑न्तः । आ॒योः । द॒दा॒शुः । वाजे॑भिः । आ॒शु॒षा॒णाः ।
उ॒भे इति॑ । यत् । तो॒के इति॑ । तन॑ये । दधा॑नाः । ऋ॒तस्य॑ । साम॑न् । र॒णय॑न्त । दे॒वाः ॥ १ ॥

वेङ्कट० कथम् ते अग्ने! दीप्यमानाः गन्तुः प्रयच्छन्ति अन्नैः सह अश्नुवानाः । देवाः यदा पुत्रे त्वयि तोकभूते द्यावापृथिवी निदधानाः सत्यस्य तव स्तोत्रे रमन्ते[6] ॥ १ ॥

बोधा॑ मे अ॒स्य वच॑सो यविष्ठ॒ मंहि॑ष्ठस्य॒ प्रभृ॑तस्य स्वधावः ।
पीय॑ति त्वो॒ अनु॑ त्वो गृणाति व॒न्दारु॑स्ते त॒न्वं॑ वन्दे अग्ने ॥ २ ॥

1-1. नास्ति वि[2] अ[1]. 2. प्रयच्छन् इति वाक्यशेषः । 3. °वतीति अ[1]. 4-4. नास्ति मूको. 5. °त वि[1] लपं. 6. रमन्तो वि[2] अ[1]; रमन्तः वि[1] ल लपं.

बोध॑ । मे॒ । अ॒स्य । वच॑सः । य॒वि॒ष्ठ॒ । मंहि॑ष्ठस्य । प्रऽभृ॑तस्य । स्व॒धाऽवः॒ ।

पीय॑ति । त्वः॒ । अनु॑ । त्वः॒ । गृ॒णा॒ति॒ । व॒न्दारुः॑ । ते॒ । त॒न्व॑म् । व॒न्दे॒ । अ॒ग्ने॒ ॥ २ ॥

**वेङ्कट०** बुध्यस्व अग्ने! मम इदम् स्तोत्रम् युवतम! पूज्यतमम् सम्भृतम् अन्नवन्! । त्वामयजमानः कश्चित् हिनस्ति, यजमानः त्वाम् अनु स्तौति, तत्राहं[1] वन्दनकुशलः तव तनूम्[2] स्तौमि ॥ २ ॥

ये पा॒यवो॑ मामते॒यं ते॑ अग्ने॒ पश्य॑न्तो अ॒न्धं दु॑रि॒तादर॑क्षन् ।
र॒रक्ष॒ तान्त्सु॒कृतो॑ वि॒श्ववे॑दा॒ दिप्स॑न्त॒ इद्रि॒पवो॒ नाह॑ देभुः ॥ ३ ॥

ये । पा॒यवः॑ । मा॒म॒ते॒यम् । ते॒ । अ॒ग्ने॒ । पश्य॑न्तः । अ॒न्धम् । दुः॒ऽइ॒तात् । अर॑क्षन् ।

र॒रक्ष॑ । तान् । सु॒ऽकृतः॑ । वि॒श्वऽवे॑दाः । दिप्स॑न्तः । इत् । रि॒पवः॑ । न । अह॑ । दे॒भुः॒ ॥ ३ ॥

**वेङ्कट०** ये रश्मयः ते अग्ने! ममतायाः पुत्रम् बृहस्पतिशापात् अन्धीभूतं माम् पश्यन्तः उपद्रवात् चक्षुः-प्रदानेन[3] पुरा अरक्षन् । अथ [4]परोक्षः । तान्[4] अधुनापि शोभनस्य कर्तॄन् विश्वधनोऽग्निः रक्षति[5] । ततश्च मामिदानीम् दम्भितुमिच्छन्तः एव शत्रवः न एव देभुः । अत्र[6] शौनकः—

> 'द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः । आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥
> तां[7] कनीयान् बृहस्पतिर्मैथुनायोपचक्रमे । शुक्रस्योत्सर्गकाले[8] तु गर्भस्तं प्रत्यभाषत ॥
> [9]इहास्मि पूर्वसम्भूतो[9] न कार्यः शुक्रसङ्करः । तच्छुक्रप्रतिषेधं[10] तु न ममर्ष बृहस्पतिः ॥
> स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति । स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥' ( बृदे ४, ११-१४ ) इति ॥ ३ ॥

यो नो॑ अग्ने॒ अर॑रिवाँ अघा॒युर॑राती॒वा म॒र्चय॑ति द्व॒येन॑ ।
मन्त्रो॑ गु॒रुः पुन॑रस्तु॒ सो अ॑स्मा॒ अनु॑ मृक्षीष्ट त॒न्वं॑ दुरु॒क्तैः ॥ ४ ॥

यः । नः॒ । अ॒ग्ने॒ । अर॑रिऽवान् । अ॒घऽयुः । अ॒रा॒ति॒ऽवा । म॒र्चय॑ति । द्व॒येन॑ ।

मन्त्रः॑ । गु॒रुः । पुन॒रिति॑ । अ॒स्तु॒ । सः । अ॒स्मै॒ । अनु॑ । मृ॒क्षी॒ष्ट॒ । त॒न्व॑म् । दुः॒ऽउ॒क्तैः ॥ ४ ॥

**वेङ्कट०** यः अस्मान् अग्ने! अदाता अघमिच्छन् अरातिरववान् शत्रुः अदानेनाघेच्छया च बाधते । अस्मै मदीयः सः अयम् मन्त्रः पुनः[11] गुरुः भवतु । स मदीयैः दुरुक्तैः शरीरम् अनुलिम्पतु । गरिता[12] गुरुरिति ॥ ४ ॥

---

१. °हं त्वां ल लपं. २. तनु लपं वि[2] लपं; तनुवं अ[1]. ३. °प्रसादनेन वि[1] लपं. ४-४. °क्षस्थान् वि[2] अ[1]. ५. रक्षतु वि[2] अ[1]. ६. यो नो अग्ने मूको. ७. यवीयान् मूको. ८. °क्ल° वि[1] वि[2] अ[1] लपं. ९-९. इहास्मिन् पूर्वसम्भूते मूको. १०. तं शु° मूको. ११. पुनः पुनः वि[2] अ[1]. १२. गरयिता अ[1]; गरिमा वि[1,2] ल लपं.

उत वा यः सहस्य प्रविद्वान् मर्तो मर्तं मर्चयति द्वयेन ।
अतः पाहि स्तवमान स्तुवन्तमग्ने माकिर्नो दुरिताय धायीः ॥ ५ ॥

उत । वा । यः । सहस्य । प्रऽविद्वान् । मर्तः । मर्तम् । मर्चयति । द्वयेन ।
अतः । पाहि । स्तवमान । स्तुवन्तम् । अग्ने । माकिः । नः । दुःऽइताय । धायीः ॥ ५ ॥

वेङ्कट० अपि च सहसि भव! यः प्रकर्षेण जानन् मर्तः मर्तम् बाधते पूर्वोक्तेन द्वयेन, अस्मात् रक्ष स्तूयमान! स्तुवन्तम् । अग्ने! मा अस्मान् दुरिताय स्थापय ॥ ५ ॥

[1]इति द्वितीयाष्टके द्वितीयाध्याये षोडशो वर्गः[1] ॥

[ १४८ ]

[1]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

मथीद् यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।
नि यं दधुर्मनुष्यासु विक्षु स्व१र्ण चित्रं वपुषे विभावम् ॥ १ ॥

मथीत् । यत् । ईम् । विष्टः । मातरिश्वा । होतारम् । विश्वऽअप्सुम् । विश्वऽदेव्यम् ।
नि । यम् । दधुः । मनुष्यासु । विक्षु । स्वः । न । चित्रम् । वपुषे । विभाऽवम् ॥ १ ॥

वेङ्कट० बलादाजहार यदा एनम् एतस्यावासमनुप्रविष्टः वायुः होतारम् विश्वरूपम् विश्वदेवहितम् । यम् [2]च मातरिश्वनाहृतं[2] तदा[3] मनोरपत्यभूतासु प्रजासु भृगवः निदधुः आदित्यम् इव चित्ररूपम् सर्वरूपस्य प्रकाशार्थम् दीप्तम् । उत्तरत्र सम्बन्धः ॥ १ ॥

ददानमिन्न ददभन्त मन्माग्निर्वरूथं मम तस्य चाकन् ।
जुषन्त विश्वान्यस्य कर्मोपस्तुतिं भरमाणस्य कारोः ॥ २ ॥

ददानम् । इत् । न । ददभन्त । मन्म । अग्निः । वरूथम । मम । तस्य । चाकन् ।
जुषन्त । विश्वानि । अस्य । कर्म । उपऽस्तुतिम् । भरमाणस्य । कारोः ॥ २ ॥

वेङ्कट० हविः[4] प्रयच्छन्तम् एव शत्रूणां मननानि न हिंसन्ति[5], मम अपि तस्मै प्रयच्छतः सः अग्निः कवचम् कामयतु । असेवन्त विश्वानि[6] भूतानि अस्य स्तुतिकर्म अग्नेरुपस्तवम् कुर्वतः स्तोतुः ॥ २ ॥

नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः ।
प्र सू नयन्त गृभयन्त इष्टावश्वासो न रथ्यो रारहाणाः ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. °नाहृतं वि[२] अ[१] ३. तदानीं वि[२] अ[१]. ४. नास्ति अ[१]. ५. हिनस्ति वि[२].
६. 'नि च वि[२] अ[१].

नित्ये । चित् । नु । यम् । सदने । जगृभ्रे । प्रशस्तिऽभिः । दधिरे । यज्ञियासः ।
प्र । सु । नयन्त । गृभयन्तः । इष्टौ । अश्वासः । न । रथ्यः । ररहाणाः ॥ ३ ॥

वेङ्कट० गार्हपत्ये यम् कृण्वन्ति, यं च यज्ञसम्पादिनः[1] स्तुतिभिः धारयन्ति, तं सुष्ठु आहवनीयायतने प्र णयन्ति यज्ञार्थम् परिगृह्णन्तः, अश्वाः इव रथसम्बन्धिनः, वेगं कुर्वन्तः प्रणयनार्थम् ॥ ३ ॥

पुरूणि दस्मो नि रिणाति जम्भैराद् रोचते वन आ विभावा ।
आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् ॥ ४ ॥

पुरूणि । दस्मः । नि । रिणाति । जम्भैः । आत् । रोचते । वने । आ । विभाऽवा ।
आत् । अस्य । वातः । अनु । वाति । शोचिः । अस्तुः । न । शर्याम् । असनाम् । अनु । द्यून् ॥

वेङ्कट० बहूनि काष्ठानि दर्शनीयः जम्भैः विनाशयति । अनन्तरं च आ[2] रोचते अरण्ये दीप्तिमान् । अनन्तरम् अस्य देवस्याग्नेः[3] शोचिः वातः अनु गच्छति, क्षेप्तुः इव शरविषयम् निरसनं वायुः, दिवसान् लक्षीकृत्य ॥ ४ ॥

न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति ।
अन्धा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥ ५ ॥

न । यम् । रिपवः । न । रिषण्यवः । गर्भे । सन्तम् । रेषणाः । रेषयन्ति ।
अन्धाः । अपश्याः । न । दभन् । अभिऽख्या । नित्यासः । ईम् । प्रेतारः । अरक्षन् ॥ ५ ॥

वेङ्कट० न यम् शत्रवः न्यूनीकुर्वन्ति, न च रिषण्यवः व्याधादयः गर्भे सन्तम् । तम् अन्धाः अदर्शनाः इत्यात्मनो निर्देशः, ते न हिंसन्ति प्रज्ञानेन । किं तर्हि अनवरतोद्युक्ताः एनम्[4] तर्पयितारः हविर्भिः रक्षन्ति ॥ ५ ॥

[5]इति द्वितीयाष्टके द्वितीयाध्याये सप्तदशो वर्गः[5] ॥

## [ १४९ ]

[5]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । विराट् छन्दः[5] ।

महः स राय एषते पतिर्दन्निन इनस्य वसुनः पद आ ।
उप ध्रजन्तमद्रयो विधन्नित् ॥ १ ॥

महः । सः । रायः । आ । ईषते । पतिः । दन् । इनः । इनस्य । वसुनः । पदे । आ ।
उप । ध्रजन्तम् । अद्रयः । विधन् । इत् ॥ १ ॥

---

१. °संवादि° वि[2] अ[1]. २. नास्ति मूको. ३. देवाग्नेः वि[2] अ[1]. ४. एवम् वि[2] अ[1]. ५-५. नास्ति मूको.

**वेङ्कट०** महत् सः धनम् स्वामी प्रयच्छन् आगच्छति ईश्वरः ईश्वरस्य वासयितुर्यजमानस्य गृहे। तमागच्छन्तम् ग्रावाणः परिचरन्ति ॥ १ ॥

स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जीवपीतसर्गः ।
प्र यः सस्राणः शिश्रीत योनौ ॥ २ ॥

सः । यः । वृषा । नराम् । न । रोदस्योः । श्रवःऽभिः । अस्ति । जीवपीतऽसर्गः ।
प्र । यः । सस्राणः । शिश्रीत । योनौ ॥ २ ॥

**वेङ्कट०** सः यः वृषा यजमानानाम् च द्यावापृथिव्योः अन्नैः सह भवति प्राणिभिरुपयुक्तधन-विसर्गः । [1]यः च[1] अपवृत्ते[2] कर्मणि गार्हपत्ये सस्राणः प्रश्रितो[3] भवति ॥ २ ॥

आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा । सूरो न रुरुक्वाञ्छतात्मा ॥३॥

आ । यः । पुरम् । नार्मिणीम् । अदीदेत् । अत्यः । कविः । नभन्यः । न । अर्वा ।
सूरः । न । रुरुक्वान् । शतऽआत्मा ॥ ३ ॥

**वेङ्कट०** यः च नर्मणोऽसुरस्य पुरम् आ[4] अज्वलयत् अतनशीलः कविः, नभसि[5] भवो वायुः इव गमनशीलः, सूर्यः इव रोचमानः, अनेकशरीरः ॥ ३ ॥

अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।
होता यजिष्ठो अपां सधस्थे ॥ ४ ॥

अभि । द्विऽजन्मा । त्री । रोचनानि । विश्वा । रजांसि । शुशुचानः । अस्थात् ।
होता । यजिष्ठः । अपाम् । सधऽस्थे ॥ ४ ॥

**वेङ्कट०** अभि तिष्ठतु अरण्योर्जातः त्रीणि तेजांसि त्रींश्च लोकान् दीप्यमानः होता यष्टृतमः अन्तरिक्षे वर्तमानः ॥ ४ ॥

अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
मर्तो यो अस्मै सुतुको ददाश ॥ ५ ॥

अयम् । सः । होता । यः । द्विऽजन्मा । विश्वा । दधे । वार्याणि । श्रवस्या ।
मर्तः । यः । अस्मै । सुऽतुकः । ददाश ॥ ५ ॥

**वेङ्कट०** अयम् सः होता, यः अरण्योर्जातः विश्वानि दधे वरणीयानि अन्ननिमित्तानि, मनुष्यः यः अग्नये शोभनापत्यः प्रयच्छति ॥ ५ ॥

[6]इति द्वितीयाष्टके द्वितीयाध्याये अष्टादशो वर्गः[6] ॥

---

१-१. नास्ति वि[2] ल लपं. २. °वृक्ते वि[1] ल लपं. ३. प्राश्रितो वि[2] अ[1]. ४. नास्ति मूको. ५. न भवसि वि[1,2] लपं. ६-६. नास्ति मूको.

## [ १५० ]

[१]दीर्घतमा औचथ्य ऋषिः । अग्निर्देवता । उष्णिक् छन्दः[१] ॥

पुरु त्वा दाश्वान् वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ॥ १ ॥

पुरु । त्वा । दाश्वान् । वोचे । अरिः । अग्ने । तव । स्वित् । आ । तोदस्यऽइव । शरणे । आ । महस्य ॥

**वेङ्कट०** बहु त्वा हविः प्रयच्छन् स्तौमि । अभिगन्ता अग्ने! तव एव[२] आ भवति, प्रेरकस्य धनानाम् उदारस्य गृहे अभिगन्ता यथा आ भवति ॥ १ ॥

व्यनिनस्य धनिनः प्रहोषे चिदररुषः । कदा चन प्रजिगतो अदेवयोः ॥ २ ॥

वि । अनिनस्य । धनिनः । प्रऽहोषे । चित् । अररुषः । कदा । चन । प्रऽजिगतः । अदेवऽयोः ॥२॥

**वेङ्कट०** ईश्वरवर्जितस्य धनिनः अथापि प्रहोषे प्रकृष्टे यज्ञशब्दे अपि तद् धनम् अप्रयच्छतः कदा चिदपि स्वैरं गृहादन्यत्र प्रगच्छतः । यदा गन्तुमिच्छति तदानीमेव अनवेक्ष्याप्यतिथीन्[३] निर्गच्छतः । [४]देवांश्चानिच्छतः[४] कदर्यस्यारिः अभिगन्ता व्यृद्धो[५] भवति ॥ २ ॥

स चन्द्रो विप्र मर्त्यो महो व्राधन्तमो दिवि । प्रप्रेत् ते अग्ने वनुषः स्याम ॥३॥

सः । चन्द्रः । विप्र । मर्त्यः । महः । व्राधन्ऽतमः । दिवि । प्रऽप्र । इत् । ते । अग्ने । वनुषः । स्याम ॥३॥

**वेङ्कट०** सः ह्लादयिता देवमनुष्याणाम् [६]मेधाविन्! मनुष्यः[६] वर्धमानतमो भवति महान् स्वर्गलोके[७] । वयं च त्वत्प्रीत्यर्थं [८]प्रयच्छन्तः प्र स्याम[८] ॥ ३ ॥

[१]इति द्वितीयाष्टके द्वितीयाध्याये एकोनविंशो वर्गः[१] ॥

## [ १५१ ]

[१]दीर्घतमा औचथ्य ऋषिः । प्रथमाया मित्रो देवता, अन्यासां मित्रावरुणौ । जगती छन्दः[१] ॥

मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजनन् ।
अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥ १ ॥

मित्रम् । न । यम् । शिम्या । गोषु । गव्यवः । सुऽआध्यः । विदथे । अप्ऽसु । जीजनन् ।
अरेजेताम् । रोदसी इति । पाजसा । गिरा । प्रति । प्रियम् । यजतम् । जनुषाम् । अवः ॥१॥

---

१-१. नास्ति मूको. २. नास्ति मूको. ३. नास्ति अ[१]; त्रुटितम् वि[२]. ४. °श्च निच्छतः वि[१] लपं; °दचानि गच्छतः ··· वि[२] अ[१] लपं. ५. वृद्धो वि[१] अ ल लपं. ६. नास्ति वि[२] अ[१]. ७. स्वर्गे लो° वि[२] अ[१]. ८-८ नास्ति वि[२] अ[१].

वेङ्कट० सखायम् इव यम् कर्माभिलषितासु गोषु गा इच्छन्तः प्रादुर्भावयन्ति यज्ञे उदकार्थम् सुकर्माणः। तस्योद्यतो बलेन वाचा च द्यावापृथिव्यौ अरेजेताम्। तम् प्रियम् यजनीयं मित्रम् प्रति जन्मवतां मनुष्याणाम् रक्षणमास्ते, इयं मैत्री ॥ १ ॥

यद्ध त्यद् वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः।
अध क्रतुं विदतं गातुमर्चत उत श्रुतं वृषणा पस्त्यावतः ॥ २ ॥

यत्। ह। त्यत्। वाम्। पुरुऽमीळ्हस्य। सोमिनः। प्र। मित्रासः। न। दधिरे। सुऽआभुवः।
अध। क्रतुम्। विदतम्। गातुम्। अर्चते। उत। श्रुतम्। वृषणा। पस्त्यऽवतः ॥ २ ॥

वेङ्कट० यदा खलु वाम् इदम् यजमानस्य पुरुमीळ्हस्य ऋषेः ऋत्विजः मित्राणि इव मित्रम् अग्रतोऽकुर्वन् शोभनभवनाः[1]। अनन्तरम् युवयोरागमनम् श्रद्धानाय तस्मै प्रीत्यर्थम् तत् कर्म विदतम्[2]। अपिच अश्रृणुतं स्तुतिम् वर्षितारौ! गृहवतस्तस्य पुरुमीळ्हगृहस्थस्य ॥ २ ॥

आ वां भूषन् क्षितयो जन्म रोदस्योः प्रवाच्यं वृषणा दक्षसे महे।
यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या वीथो अध्वरम् ॥ ३ ॥

आ। वाम्। भूषन्। क्षितयः। जन्म। रोदस्योः। प्रऽवाच्यम्। वृषणा। दक्षसे। महे।
यत्। ईम्। ऋताय। भरथः। यत्। अर्वते। प्र। होत्रया। शिम्या। वीथः। अध्वरम् ॥ ३ ॥

वेङ्कट० युवयोः द्यावापृथिव्योः अहोरात्रात्मना जन्म सर्वाः प्रजाः अलङ्कुर्वन्ति स्तोत्रैः प्रकर्षेण वाच्यं वर्षितारौ! महते वर्धनाय[3] तत्। यत् यजमानम् अन्नम् अश्वं प्रति चाहरथः[4] तदानीम् तस्य यज्ञम् स्तुत्या होमादिकर्मणा च हेतुभ्याम् प्रगच्छथः[5] ॥ ३ ॥

प्र सा क्षितिरसुर या महि प्रिय ऋतावानावृतमा घोषथो बृहत्।
युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युञ्जाथे अपः ॥ ४ ॥

प्र। सा। क्षितिः। असुरा। या। महि। प्रिया। ऋतऽवानौ। ऋतम्। आ। घोषथः। बृहत्।
युवम्। दिवः। बृहतः। दक्षम्। आऽभुवम्। गाम्। न। धुरि। उप। युञ्जाथे इति। अपः ॥

वेङ्कट० प्रकृष्टा सा भवति पृथिवी हे बलवन्तौ! या अत्यन्तम् युवयोः प्रिया। सत्यवन्तौ! सत्यमन्धकारापनोदनेन अत्यन्तम् [6]आ घोषथः[6] प्रकाशयथः तेजसा। युवाम् दिवः महतः बलकरम्[7] आभवनशीलमश्वम् गाम् अनड्वाहम् इव धुरि उप युञ्जाथे जलायेति ॥ ४ ॥

---

१. नास्ति मूको. २. अविदतम् लपं. ३. °र्धमानाय मूको. ४. वाहरथः वि[1] अ[2]. ५. प्रगच्छतः वि[2] अ ल. ६-६ आघोषयथः वि[2] अ[1]. ७. बलतरम् वि[2] अ[1].

मही अत्र महिना वारमृण्वथोऽरेणवस्तुज आ सद्मन् धेनवः ।
स्वरन्ति ता उपरताति सूर्यमा निम्रुच उषसस्तक्ववीरिव ॥ ५ ॥

मही इति । अत्र । महिना । वारम् । ऋण्वथः । अरेणवः । तुजः । आ । सद्मन् । धेनवः ।
स्वरन्ति । ताः । उपरऽताति । सूर्यम् । आ । निऽम्रुचः । उषसः । तक्ववीःऽइव ॥ ५ ॥

**वेङ्कट०** महान्तौ अस्मिन् वरणीयं धनम् माहात्म्येन प्रक्षिपथः । अक्षयाः पयसः क्षेप्त्र्यः धेनवः मदीये गृहे आगच्छन्ति । ताः च धेनवः उपरमूले[1] ऊधसि ततम्[2] सुवीर्यं पयः प्रेरयन्ति । भवद्भ्यां प्रेर्यमाणा[3] रात्रयः दिवसाश्चान्योन्यसक्तम्[4] आगच्छन्ति, यथा स्तेनमनुधावंस्तेन[5] [6]संसक्तं गच्छति† तद्वत्[6] ॥ ५ ॥

आ वामृताय केशिनीरनूषत मित्र यत्र वरुण गातुमर्चथः ।
अव त्मना सृजतं पिन्वतं धियो युवं विप्रस्य मन्मनामिरज्यथः ॥ ६ ॥

आ । वाम् । ऋताय । केशिनीः । अनूषत । मित्र । यत्र । वरुण । गातुम् । अर्चथः ।
अव । त्मना । सृजतम् । पिन्वतम् । धियः । युवम् । विप्रस्य । मन्मनाम् । इरज्यथः ॥ ६ ॥

**वेङ्कट०** [7]मित्रावरुणौ! वाम् यज्ञार्थं दीर्घसत्रेषु केशिन्यः† प्रजाः आभिमुख्येन अस्तुवन् । मित्रावरुणौ! यत्र गमनम् पूजयथः, तत्र‡ आत्मनैव तेभ्यः कामान् अव सृजतम्, अपिन्वतञ्च§ तत्कर्माणि¶ । युवाम् मेधाविनः अभिलषितानाम्[7] ईश्वरौ भवथः ॥ ६ ॥

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः ।
उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥ ७ ॥

यः । वाम् । यज्ञैः । शशमानः । ह । दाशति । कविः । होता । यजति । मन्मऽसाधनः ॥ उप ।
अह । तम् । गच्छथः । वीथः । अध्वरम् । अच्छ । गिरः । सुऽमतिम् । गन्तम् । अस्मयू इत्यस्मऽयू ॥

**वेङ्कट०** यः वाम् यज्ञैः[8] भजमानः हविः प्रयच्छति, कविः होता यजति च मननीयानां साधयिता, तम् सुमतिम् उप[9] एव युवाम् गच्छथः, यज्ञं च तस्य कामयेथे । तथा सत्यस्माकं स्तुतीः प्रति अस्मत्कामौ आगच्छतम् ॥ ७ ॥

युवां यज्ञैः प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु ।
भरन्ति वां मन्मना संयता गिरोऽदृप्यता मनसा रेवदाशाथे ॥ ८ ॥

---

१. उपतिरमूल वि[2]. २. °स्थितम् वि[2]. ३. °माणं वि[1] लपं. ४. °न्यसंस° वि[2] अ[1]. ५. °मनुधावन्तेन वि[2] अ[1] ल; नास्ति वि[1] लपं. ६-६. नास्ति वि[1] लपं. † सङ्गच्छति (ते) ल. ७-७. नास्ति वि[1] लपं. † केशिनः मूको. ‡ तदा मूको. § अपि वि[2]. ¶ तत्कान् मूको. ८-८. नास्ति वि[1]. ९. नास्ति मूको.

युवाम् । यज्ञैः । प्रथमा । गोभिः । अञ्जते । ऋतऽवाना । मनसः । न । प्रऽयुक्तिषु ।
भरन्ति । वाम् । मन्मना । सम्ऽयता । गिरः । अदृप्यता । मनसा । रेवत् । आशाथे इति ॥८॥

**वेङ्कट०** युवाम् यज्ञैः[1] प्रथमौ गोविकारैश्च समञ्जन्ति यज्ञवन्तौ मनसः इव प्रेरणेषु । यथा[2] तत्तत् शीघ्रम् कुर्वन्ति कर्म तद्वत् । भरन्ति च युवाभ्याम् अभिलषितेन संयतेन हविषा सह स्तुतीः । युवां च गर्वरहितेन मनसा धनयुक्तम् आगच्छथः ॥ ८ ॥

**रेवद् वयो दधाथे रेवदाशाथे नरा मायाभिरितऊति माहिनम् ।**
**न वां द्यावोऽहभिर्नोत सिन्धवो न देवत्वं पणयो नानशुर्मघम् ॥ ९ ॥**

रेवत् । वयः । दधाथे इति । रेवत् । आशाथे इति । नरा । मायाभिः । इतःऽऊति । माहिनम् ।
न । वाम् । द्यावः । अहऽभिः । न । उत । सिन्धवः । न । देवऽत्वम् । पणयः । न । आनशुः । मघम् ॥९॥

**वेङ्कट०** धनयुक्तम् अन्नम् दधाथे, धनयुक्तञ्च आगच्छथः[4] नेतारौ! । कर्मभिः इतआगमनं युवयोर्धनं भवतु । युवयोः ऐश्वर्यम् धनं च द्यावः दिवसा नद्यः देवाश्च न आनशुः, न अपि असुराः ॥ ९ ॥

[5]इति द्वितीयाष्टके द्वितीयाध्याये एकविंशो वर्गः[5] ॥

## [ १५२ ]

[5]दीर्घतमा औचथ्य ऋषिः । मित्रावरुणौ देवता । त्रिष्टुप् छन्दः[5] ।

**युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।**
**अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥ १ ॥**

युवम् । वस्त्राणि । पीवसा । वसाथे इति । युवोः । अच्छिद्राः । मन्तवः । ह । सर्गाः ।
अव । अतिरतम् । अनृतानि । विश्वा । ऋतेन । मित्रावरुणा । सचेथे इति ॥ १ ॥

**वेङ्कट०** युवम् तेजांसि पीनौ वसाथे । युवयोः सन्तताः पूज्याः च धनविसर्गाः । सर्वाणि च अनृतानि वृत्रस्य तेजसा विनाशयथः । सत्येन प्रकाश्यमानौ[6] मित्रावरुणौ! सङ्गच्छेथे ॥ १ ॥

**एतच्चन त्वो वि चिकेतदेषां सत्यो मन्त्रः कविशस्त ऋघावान् ।**
**त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥ २ ॥**

एतत् । चन । त्वः । वि । चिकेतत् । एषाम् । सत्यः । मन्त्रः । कविऽशस्तः । ऋघावान् ।
त्रिःऽअश्रिम् । हन्ति । चतुःऽअश्रिः । उग्रः । देवऽनिदः । ह । प्रथमाः । अजूर्यन् ॥ २ ॥

---

१. हविर्भिः वि[2] अ[1]. २. यथा तद् वि[1] ल लपं. ४. °च्छतः वि[1] लपं. ५-५. नास्ति मूको. ६. प्रकाश्यमानेन वि[2] अ[1].

**वेङ्कट०** एषाम् मनुष्याणां मध्ये कश्चिदेव एतद्[1] वि जानाति। किं तत्। सत्यः पूजनीयः कविभिश्शस्तः हिंसावान्[2] असुरेषूद्गूर्णः चतुरश्रः सन् त्रिरश्रिम् हन्ति। त्रियामा रात्रिस्त्रिरश्रिरुच्यते। तां[3] गमयत्यहः। तस्यां वर्तमानायां राक्षसाः प्रथमाः एवाहर्मुख एव जीर्णा आसन्। सोऽयमहोरात्रविभागो मित्रावरुणकृतः॥ २॥

अपादेति प्रथमा पद्वतीनां कस्तद् वां मित्रावरुणा चिकेत।
गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नि तारीत्॥ ३॥

अपात्। एति। प्रथमा। पत्ऽवतीनाम्। कः। तत्। वाम्। मित्रावरुणा। आ। चिकेत।
गर्भः। भारम्। भरति। आ। चित्। अस्य। ऋतम्। पिपर्ति। अनृतम्। नि। तारीत्॥३॥

**वेङ्कट०** पादयुक्तानां प्रजानाम् अग्रे अपादयुक्तोषाः[4] आ गच्छति। युवयोः मित्रावरुणौ![5] कः[6] तत् इदं कर्म जानाति। यस्तथा जानाति[7] तस्य पुत्रः कुटुम्बभारम् आ वहति, सत्यं च पूरयति, अनृतम् नि[8] तरति[8]॥३॥

प्रयन्तमित् परि जारं कनीनां पश्यामसि नोपनिपद्यमानम्।
अनवपृग्णा वितता वसानं प्रियं मित्रस्य वरुणस्य धाम॥ ४॥

प्रऽयन्तम्। इत्। परि। जारम्। कनीनाम्। पश्यामसि। न। उपऽनिपद्यमानम्।
अनवऽपृग्णा। विऽतता। वसानम्। प्रियम्। मित्रस्य। वरुणस्य। धाम॥ ४॥

**वेङ्कट०** प्रगच्छन्तम् एवादित्यम् कन्यकानामुषसाम् जरयितारं वयम् परितः पश्यामः, न कदाचिदपि उपनिषीदन्तम् पृथिव्याम् अनवपृक्तान्यपतितानि तेजांसि विततानि आच्छादयन्तम् मित्रावरुणयोः प्रियम् आवासस्थानम्॥ ४॥

अनश्वो जातो अनभीशुरर्वा कनिक्रदत् पतयदूर्ध्वसानुः।
अचित्तं ब्रह्म जुजुषुर्युवानः प्र मित्रे धाम वरुणे गृणन्तः॥ ५॥

अनश्वः। जातः। अनभीशुः। अर्वा। कनिक्रदत्। पतयत्। ऊर्ध्वऽसानुः।
अचित्तम्। ब्रह्म। जुजुषुः। युवानः। प्र। मित्रे। धाम। वरुणे। गृणन्तः॥ ५॥

**वेङ्कट०** अश्ववर्जितः अभीशुवर्जितश्चानयो रथः गमनशीलः प्रादुर्भूतः शब्दं कुर्वन् पतति विस्तृतोर्ध्वभागः। तस्मिंश्च प्रादुर्भूते चित्तवर्जितम् स्तोत्रम् जुजुषुः युवानः मित्रे वरुणे स्थितम् तेजः प्र गृणन्तः॥ ५॥

---

१. एतं वि[2] अ[1]. २. हिंसमानः वि[1] लपं. ३. तं मूको. ४. पादवर्जितः वि[2] अ[1] ल; पादयु० वि[1] लपं. ५. नास्ति मूको. ६. नास्ति वि[1] लपं. ७. वेद वि[1] लपं. ८. चरति मूको.

आ धेनवो मामतेयमवन्तीर्ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन् ।
पित्वो भिक्षेत वयुनानि विद्वानासाविवासन्नदितिमुरुष्येत् ॥ ६ ॥

आ । धेनवः । मामतेयम् । अवन्तीः । ब्रह्मऽप्रियम् । पीपयन् । सस्मिन् । ऊधन् ।
पित्वः । भिक्षेत । वयुनानि । विद्वान् । आसा । आऽविवासन् । अदितिम् । उरुष्येत् ॥ ६ ॥

**वेङ्कट०** मामतेयम् माम् रक्षन्त्यः धेनवः युवयोः स्तोत्रप्रियम् माम् सर्वस्मिन् ऊधनि — यत्रयत्र[1] याचका याचन्ते तत्र सर्वत्र वर्तमानाः आ अपीपयन्[2] । ततोऽन्नम् भिक्षेत भिक्षामार्गम् जानन् अथ वाचा याचकं प्रयच्छामीति परिचरन्[3] याच्यः महान् दीनं रक्षेत् ॥ ६ ॥

आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्याम् ।
अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥ ७ ॥

आ । वाम् । मित्रावरुणा । हव्यऽजुष्टिम् । नमसा । देवौ । अवसा । ववृत्याम् ।
अस्माकम् । ब्रह्म । पृतनासु । सह्याः । अस्माकम् । वृष्टिः । दिव्या । सुऽपारा ॥ ७ ॥

**वेङ्कट०** मित्रावरुणौ ! देवौ ! यज्ञं प्रत्यहम् वाम् अन्नार्थम् रक्षणार्थं च [4]आवर्तयामि । तथा सति अस्माकम्[4] स्तोत्रम् युद्धेषु शत्रूनभिभवतु । अस्माकम् एव वृष्टिः सुष्ठु पारयित्री[5] भवतु दिवि भवेति ॥ ७ ॥

[6]इति द्वितीयाष्टके द्वितीयाध्याये द्वाविंशो वर्गः[6] ।

## [ १५३ ]

[6]दीर्घतमा औचथ्य ऋषिः । मित्रावरुणौ देवता । त्रिष्टुप् छन्दः[6] ।

यजामहे वां महः सजोषा हव्येभिर्मित्रावरुणा नमोभिः ।
घृतैर्घृतस्नू अध यद् वामस्मे अध्वर्यवो न धीतिभिर्भरन्ति ॥ १ ॥

यजामहे[7] । वाम् । महः । सऽजोषाः । हव्येभिः । मित्रावरुणा । नमःऽभिः ॥ घृतैः । घृतस्नू इति घृतऽस्नू । अध । यत् । वाम् । अस्मे इति । अध्वर्यवः । न । धीतिऽभिः । भरन्ति ॥ १ ॥

**वेङ्कट०** यजामहे वाम् महान्तौ सङ्गतौ हविर्भिः मित्रावरुणौ ! नमस्कारैश्च । घृतैः[8] †च घृतं प्रति गन्तारौ ! अध† यत्[9] युवयोः अस्माकम् अध्वर्यवः कर्मभिः न सम्भरन्ति तैश्च यजामहे ॥ १ ॥

---

१. नास्ति वि[2] अ[1]. २. त्रुटितम् वि[1]; नास्ति अ[1]. ३. पुरि वि[1]. ४-४. आवर्तय वि[2] अ[1]. ५. धार० वि[2]. ६-६. नास्ति मूको. ७. नास्ति वि[2]. ८. नास्ति वि[1] लपं. ९. नास्ति अ[2]. †-† नास्ति वि[2].

प्रस्तुतिर्वां धाम न प्रयुक्तिरयामि मित्रावरुणा सुवृक्तिः ।
अनक्ति यद् वां विदथेषु होता सुम्नं वां सूरिर्वृषणावियक्षन् ॥ २ ॥

प्रऽस्तुतिः । वाम् । धाम । न । प्रऽयुक्तिः । अयामि । मित्रावरुणा । सुऽवृक्तिः ।
अनक्ति । यत् । वाम् । विदथेषु । होता । सुम्नम् । वाम् । सूरिः । वृषणौ । इयक्षन् ॥ २ ॥

**वेङ्कट०** प्रस्तुतिः[1] युवयोः तेजः न आगमयति अभिगच्छामि मित्रावरुणौ! शोभनस्तुतिकः[2]। यदा वाम् यज्ञेषु होमं [3]कुर्वन्नध्वर्युः हविर्भिः[3] अनक्ति, सुखकरं हविः युवाभ्याम् प्रेरयन् वर्षितारौ! यष्टुमिच्छन् वाम् ॥ २ ॥

पीपाय धेनुरदितिर्ऋताय जनाय मित्रावरुणा हविर्दे ।
हिनोति यद् वां विदथे सपर्यन्त्स रातहव्यो मानुषो न होता ॥ ३ ॥

पीपाय । धेनुः । अदितिः । ऋताय । जनाय । मित्रावरुणा । हविःऽदे ।
हिनोति । यत् । वाम् । विदथे । सपर्यन् । सः । रातऽहव्यः । मानुषः । न । होता ॥ ३ ॥

**वेङ्कट०** वृद्धा पयसा गौः अदीना[4] यज्ञार्थम् जनाय मित्रावरुणौ! हविषां दात्रे युवाभ्याम् यदा हविः प्रेरयति यज्ञे परिचरन्। सः दत्तहविष्को धेनुः मानुषः इव होता हविषः प्रेरणात्। होतृसामानाधिकरण्याल्लिङ्गभेदः[5] ॥ ३ ॥

उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ।
उतो नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्रियायाः ॥ ४ ॥

उत । वाम् । विक्षु । मद्यासु । अन्धः । गावः । आपः । च । पीपयन्त । देवीः ।
उतो इति । नः । अस्य । पूर्व्यः । पतिः । दन् । वीतम् । पातम् । पयसः । उस्रियायाः ॥४॥

**वेङ्कट०** अपि च युवयोः प्रजासु मादयित्रीषु[6] पयोलक्षणमन्नम् गावः ओषधीनां वर्धयित्र्यः आपः च आप्याययन्ति देव्यः। अपि च अस्माकम् प्रत्नः सर्वस्य अस्य जगतः पतिः दमयिता इन्द्रश्चाप्याययति। कामयतम् पिबतं च उस्रियायाः पयः ॥ ४ ॥

[7]इति द्वितीयाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः[7] ।

---

१. त्य स्तु° वि² लपं; त्यक्तं स्तु° अ¹; त्यक्तुः स्तु° अ² वि¹. २. °तिकौ वि² ल. ३-३. नास्ति अ¹; त्रुटितम् वि². ४. नास्ति मूको. ५. होतॄणां सा° वि¹ ल लपं. ६. षु च वि² अ¹. ७-७. नास्ति मूको.

[ १५४ ]

[1]दीर्घतमा औचथ्य ऋषिः। मित्रावरुणौ देवता। त्रिष्टुप् छन्दः[2] ॥

**विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥**

विष्णोः। नु। कम्। वीर्याणि। प्र। वोचम्। यः। पार्थिवानि। विऽममे। रजांसि।
यः। अस्कभायत्। उत्ऽतरम्। सधऽस्थम्। विऽचक्रमाणः। त्रेधा। उरुऽगायः ॥ १ ॥

**वेङ्कट०** विष्णोः कर्माणि अहम् क्षिप्रमेव ब्रवीमि। यः पृथिव्यां भवान् लोकान् विममे। यः च द्याम् उत्तभ्नाति विक्रममाणः त्रेधा उरुगमनः उरुभिर्वा स्तोतव्यः ॥ १ ॥

**प्र तद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।**
**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥**

प्र। तत्। विष्णुः। स्तवते। वीर्येण। मृगः। न। भीमः। कुचरः। गिरिऽस्थाः।
यस्य। उरुषु। त्रिषु। विऽक्रमणेषु। अधिऽक्षियन्ति। भुवनानि। विश्वा ॥ २ ॥

**वेङ्कट०** प्र सः विष्णुः स्तूयते वीर्येण मृगः इव भयानकः कुत्सितकर्मचारी पर्वते वर्तमानः। यस्य विस्तीर्णेषु त्रिषु पदनिधानस्थानेषु सर्वाणि भूतानि अधिवसन्ति ॥ २ ॥

**प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे।**
**य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभिः ॥ ३ ॥**

प्र। विष्णवे। शूषम्। एतु। मन्म। गिरिऽक्षिते। उरुऽगायाय। वृष्णे।
यः। इदम्। दीर्घम्। प्रऽयतम्। सधऽस्थम्। एकः। विऽममे। त्रिऽभिः। इत्। पदेभिः ॥३॥

**वेङ्कट०** प्र गच्छतु विष्णवे बलकरम् स्तोत्रम् पर्वते वर्तमानाय महागमनाय वर्षित्रे। यः[2] च इदम् दीर्घम् प्रकर्षेण सम्बद्धम् त्रैलोक्यम् एकः त्रिभिः एव पदैः परिचिच्छेद ॥ ३ ॥

**यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति।**
**य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥**

यस्य। त्री। पूर्णा। मधुना। पदानि। अक्षीयमाणा। स्वधया। मदन्ति।
यः। ऊँ इति। त्रिऽधातु। पृथिवीम्। उत। द्याम्। एकः। दाधार। भुवनानि। विश्वा ॥४॥

---

१. नास्ति मूको. २. यत् मूको.

वेङ्कट० यस्य त्रीणि पदानि ओषध्यादिभिः स्वरसैः पूर्णानि अक्षीयमाणा अन्नेन माद्यन्ति । यः च पृथिवीम् च द्याम् च अन्तरिक्षसम्बन्धत्वात् त्रिसन्धानम् दाधार इति एतदेवोक्तम्—एको दाधार भुवनानि सर्वाणीति ॥ ४ ॥

तद॑स्य प्रि॒यम॒भि पाथो॑ अश्यां॒ नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।
उ॒रु॒क्र॒मस्य॒ स हि बन्धु॑रि॒त्था विष्णोः॑ प॒दे प॑र॒मे मध्व॒ उत्सः॑ ॥ ५ ॥

तत् । अ॒स्य॒ । प्रि॒यम् । अ॒भि । पाथः॑ । अ॒श्या॒म् । नरः॑ । यत्र॑ । दे॒व॒ऽयवः॑ । मद॑न्ति ।
उ॒रु॒ऽक्र॒मस्य॑ । सः । हि । बन्धुः॑ । इ॒त्था । विष्णोः॑ । प॒दे । प॒र॒मे । मध्वः॑ । उत्सः॑ ॥ ५ ॥

वेङ्कट० तत् [1]अस्य† विष्णोः प्रियम् स्थानम् अभि प्राप्नुयाम्, नरः यत्र देवकामाः मदन्ति । विस्तीर्णम् क्रममाणस्य स्तोत्रैर्बन्धनकृत् †सः हि† इत्थं तत्स्थानमभिप्राप्नोति । विष्णोः पदे परमे दिवि उदकस्य उत्पत्तिस्थानम्[1] ॥ ५ ॥

ता वां॒ वास्तू॑न्युश्मसि॒ गम॑ध्यै॒ यत्र॒ गावो॒ भूरि॑शृङ्गा अ॒यासः॑ ।
अत्राह॒ तदु॑रुगा॒यस्य॒ वृष्णः॑ पर॒मं प॒दमव॑ भाति॒ भूरि॑ ॥ ६ ॥

ता । वा॒म् । वास्तू॑नि । उ॒श्म॒सि॒ । गम॑ध्यै । यत्र॑ । गावः॑ । भूरि॑ऽशृङ्गाः । अ॒यासः॑ ।
अत्र॑ । अह॑ । तत् । उ॒रु॒ऽगा॒यस्य॑ । वृष्णः॑ । प॒र॒मम् । प॒दम् । अव॑ । भा॒ति॒ । भूरि॑ ॥ ६ ॥

वेङ्कट० तानि इन्द्राविष्णवोः स्थानानि कामयामहे गमनाय, यत्र रश्मयः बहुशिरस्काः गच्छन्तः । अत्र एव तत् महागतेः वर्षितुर्विष्णोः परार्धस्थम् पदम् अव[2] भासते विस्तीर्णम् ॥ ६ ॥

[3]इति द्वितीयाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः[3] ॥

## [ १५५ ]

[1]दीर्घतमा औचथ्य ऋषिः । आद्यस्य तृचस्य इन्द्राविष्णू देवता, द्वितीयस्य विष्णुः । जगती छन्दः[1] ॥

प्र वः॒ पान्त॒मन्ध॑सो धिया॒य॒ते म॒हे शूरा॑य॒ विष्ण॑वे चार्चत ।
या सानु॑नि॒ पर्व॑ताना॒मदा॑भ्या म॒हस्त॒स्थतु॒रर्व॑तेव सा॒धुना॑ ॥ १ ॥

प्र । वः॒ । पान्त॑म् । अन्ध॑सः । धि॒या॒ऽय॒ते । म॒हे । शूरा॑य । विष्ण॑वे । च॒ । अ॒र्च॒त॒ ॥
या । सानु॑नि । पर्व॑तानाम् । अदा॑भ्या । म॒हः । त॒स्थतुः॑ । अर्व॑ताऽइव । सा॒धुना॑ ॥ १ ॥

वेङ्कट० यूयम् सोमाख्यस्याऽन्नस्य पानीयम् सत्कर्म[4] कर्तुमिच्छते महते शूराय इन्द्राय विष्णवे च प्र यच्छत । यौ पर्वतानाम् उच्छ्रिते देशे[5] शत्रुभिरहिंस्यौ[6] महान्तौ तस्थतुः, यथा अश्वेन कल्याणेन कश्चित् तिष्ठति ॥ १ ॥

---

१-१. नास्ति वि[1] लपं. † नास्ति वि[2] अ[1]. †-† नास्ति वि[1] अ[1] ल. २. नास्ति मूको. ३-३. नास्ति मूको. ४. संकर्म वि[2]. ५. नास्ति वि[2] अ[1]. ६. °हिंस्या वि[2] अ[1].

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तुरसनामुरुष्यथः ॥२॥

त्वेषम् । इत्था । सम्ऽअरणम् । शिमीऽवतोः । इन्द्राविष्णू इति । सुतऽपाः । वाम् । उरुष्यति ।
या । मर्त्याय । प्रतिऽधीयमानम् । इत् । कृशानोः । अस्तुः । असनाम् । उरुष्यथः ॥ २ ॥

**वेङ्कट०** दीप्तम् इत्थम् सङ्गतम् कर्मवतोः इन्द्राविष्णू! सोमस्य पाता युवयोः वर्धयति । यौ मर्त्यहिंसार्थम् प्रतिधीयमानम् एव वैद्युतस्याऽग्नेरशनेः निरसितुः तेजः यजमानाद् रक्षथः, यथा स न विद्युद्धतो भवति ॥ २ ॥

ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे ।
दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥ ३ ॥

ताः । ईम् । वर्धन्ति । महि । अस्य । पौंस्यम् । नि । मातरा । नयति । रेतसे । भुजे ।
दधाति । पुत्रः । अवरम् । परम् । पितुः । नाम । तृतीयम् । अधि । रोचने । दिवः ॥ ३ ॥

**वेङ्कट०** ताः एतत् सोमपाव्नः महत् पौंस्यम्[1] वर्धयन्ति इन्द्राविष्णुभ्यां वृष्टा आपः । स द्यावापृथिवी भोगाय उदकाय च नि नयति । सः पुत्रः सन् गुह्यम् प्रसिद्धं च द्वे नामनी पितुः सकाशात्, अथ[2] बौधायनोक्तं 'सोमयाजी' इति तृतीयम् नाम दिवः रोचने यज्ञे धारयति ॥३॥

तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः ।
यः पार्थिवानि त्रिभिरिद् विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥ ४ ॥

तत्ऽतत् । इत् । अस्य । पौंस्यम् । गृणीमसि । इनस्य । त्रातुः । अवृकस्य । मीळ्हुषः ।
यः । पार्थिवानि । त्रिऽभिः । इत् । विगामऽभिः । उरु । क्रमिष्ट । उरुऽगायाय । जीवसे ॥ ४ ॥

**वेङ्कट०** तत्-तत् विष्णोः वीर्यम् स्तुमः ईश्वरस्य पालयितुः वृकवर्जितस्य, रक्षोवर्जितो हि यज्ञात्मा विष्णुः, कामानां सेक्तुः । यः देवः पार्थिवानि रजांसि त्रिभिः एव विविधगमनैः पदैः विस्तीर्णम् क्रान्तवान् रक्षसां हननेनोरुगमनाय भूतजाताय जीवितुमिति ॥ ४ ॥

द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति ।
तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥ ५ ॥

द्वे इति । इत् । अस्य । क्रमणे इति । स्वःऽदृशः । अभिऽख्याय । मर्त्यः । भुरण्यति ।
तृतीयम् । अस्य । नकिः । आ । दधर्षति । वयः । चन । पतयन्तः । पतत्रिणः ॥ ५ ॥

---

१. पास्यं वि' अ'; पौंस्यम् वि' लपं; पौंस्नम् ऊ शोधः. २. अथो वि' लपं.

वेङ्कट० सर्वे द्रष्टुः अस्य द्वे एव क्रमणे, पृथिवीमन्तरिक्षं च आभिमुख्येन दृष्ट्वा मर्त्यः तयोश्चरति। तृतीयम् अस्य पदम् न कश्चिदपि आधर्षयति। तथा पक्षयुक्ताः श्येनादयः च[1] पतयन्तः नाधर्षयन्ति ॥ ५ ॥

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।
बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥ ६ ॥

चतुःऽभिः। साकम्। नवतिम्। च। नामऽभिः। चक्रम्। न। वृत्तम्। व्यतीन्। अवीविपत्। बृहत्ऽशरीरः। विऽमिमानः। ऋक्वऽभिः। युवा। अकुमारः। प्रति। एति। आऽहवम् ॥६॥

वेङ्कट० चतुर्भिः पुरैः[2] सह शत्रूणाम् नवतिम् च पुराणि नमनसाधनैर्वीर्यैः[3], यथा रथचक्रम् प्रवृत्तम् तिर्यग्गच्छतो मनुष्यान् कम्पयत्येवम् अवीविपत् अकम्पयत्। 'इन्द्राविष्णू दृंहिताः शम्बरस्य' (ऋ ७, ९९, ५) इति मन्त्रः। 'शतं मेषान् वृक्ये चक्षदानम्' (ऋ १, ११६, १६) इत्येको मन्त्रः, 'ऋज्राश्वः शतमेकं च मेषान्' (ऋ १, ११७, १८) इत्यपरः। एवमत्रापि छन्दोऽनुविधानेन पञ्चानामनुपादानम्। अथवा चकारात् पञ्च चेत्यर्थो लभ्यत इति। महाशरीरः रसाहरणपरैस्तेजोभिः लोकान् विमिमानः युवा न कश्चित्कुमारः प्रतिगच्छति आहवम् इति ॥ ६ ॥

[4]इति द्वितीयाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः[4] ॥

## [ १५६ ]

[4]दीर्घतमा औचथ्य ऋषिः। विष्णुर्देवता। जगती छन्दः[4] ॥

भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः ।
अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ १ ॥

भव। मित्रः। न। शेव्यः। घृतऽआसुतिः। विभूतऽद्युम्नः। एवऽयाः। ऊँ इति। सऽप्रथाः। अध। ते। विष्णो इति। विदुषा। चित्। अर्ध्यः। स्तोमः। यज्ञः। च। राध्यः। हविष्मता ॥१॥

वेङ्कट० मित्रशब्दश्छन्दसि पुंलिङ्गश्च[5] दर्शनात्। मित्रम् इव त्वं सुखनिमित्तम् भव घृतेनाकृष्यमाणः व्याप्तयशाः। एवं गच्छन् सर्वतः पृथुतमः, तत्रतत्र प्रयोजनम् (?)। अनन्तरम् एव [6]ते हि विष्णो! त्वत्कृतं[6] जानता वर्धनीय[7] इति, एतद् विशदमाह स्तोम इति, स्तोमः यज्ञः च संसाधनीयः हविष्मता इति ॥ १ ॥

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति ।
यो जातमस्य महतो महि ब्रवत् सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥ २ ॥

---

१. नास्ति वि[1] लपं. २. परतै वि[2]; वुरतैः लपं; पुरत्रैः ल वि[1]; परत्रै अ[1]; पुत्रैः ल शोधः. ३. गमन° वि[1] लपं; मनन° वि[2]. ४-४. नास्ति मूको. ५. पुल्लिंगस्य द° वि[1] लपं. ६-६. नास्ति वि[2] अ[1]. ७. °नीयम् वि[2] अ[1].

यः । पूर्व्याय । वेधसे । नवीयसे । सुमत्ऽजानये । विष्णवे । ददाशति ॥ यः । जातम् । अस्य । महतः । महि । ब्रवत् । सः । इत् । ऊँ इति । श्रवःऽभिः । युज्यम् । चित् । अभि । असत् ॥ २ ॥

**वेङ्कट०** पूर्वस्मिन्[1] काले भवाय विधात्रे सर्वदा नवतराय, सुमच्छब्दः [2]सुशब्दपर्याय इत्युक्तम्[2], [3]शोभना जाया[3] भवत्यस्य तस्मै विष्णवे[4] यः हवींषि प्रयच्छति। यः वा अस्य महतः सञ्जातम् महत्त्वम् ब्रवीति । सः एव अन्नैः आत्मीयं शत्रुम् अभिभवति ॥ २ ॥

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन ।
आस्य जानन्तो नाम चिद् विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥ ३ ॥

तम् । ऊँ इति । स्तोतारः । पूर्व्यम् । यथा । विद । ऋतस्य । गर्भम् । जनुषा । पिपर्तन । आ । अस्य । जानन्तः । नाम । चित् । विवक्तन । महः । ते । विष्णो इति । सुऽमतिम् । भजामहे ॥३॥

**वेङ्कट०** तम् एव प्रत्नम् हे स्तोतारः! यथा पूजयितुं [4]जानीथ तथा यज्ञस्य[4] मध्ये वर्तमानम् जन्मवतौषध्यादिना हविषा पूरयत[5]। तथा [6]आ जानन्तः[6] अस्य [7]च नाम[7] विविधं ब्रूत— विष्णुर्विष्णुर्विष्णुरिति[8]। प्रत्यक्षः शेषः। [9]हे विष्णो![9] महतः तव शोभनां मतिम् भजामहे इति ॥३॥

तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ।
दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥ ४ ॥

तम् । अस्य । राजा । वरुणः । तम् । अश्विना । क्रतुम् । सचन्त । मारुतस्य । वेधसः । दाधार । दक्षम् । उत्ऽतमम् । अहःऽविदम् । व्रजम् । च । विष्णुः । सखिऽवान् । अपऽऊर्णुते ॥

**वेङ्कट०** मरुद्भिरानीयमानस्य विधातुः अस्य तत् यज्ञाख्यं कर्म राजा वरुणः सेवते अश्विनौ च। धारयति बलम्[10] उत्तमम् । अह्नो लम्भयितारम् गोव्रजम् च अयम् विष्णुः गवां प्रदानार्थं सहाययुक्तः[11] विवृतद्वारं करोति ॥ ४ ॥

आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः ।
वेधा अजिन्वत् त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥ ५ ॥

आ । यः । विवाय । सचथाय । दैव्यः । इन्द्राय । विष्णुः । सुऽकृते । सुकृत्ऽतरः । वेधाः । अजिन्वत् । त्रिऽसधस्थः । आर्यम् । ऋतस्य । भागे । यजमानम् । आ । अभजत् ॥५॥

---

१. यः पूर्वं °वि[1] ल लप. २-२. सुशब्द वि[2] अ[1]. ३-३. 'भनजाया वि[2] अ[1]. ४. नास्ति मूको. ५-५. नास्ति वि[2] अ[1]. ६. पूरय वि[2] अ[1]. ७-७. नास्ति मूको. ८-८. नाम च वि[2] अ[1]. ९. विष्णुर्विष्णुरिति वि[2] अ[1]. १०. फलम् मूको. ११. °युक्तोऽपि वि[2] अ[1].

**वेङ्कट०** यः आगच्छति सेव्याय दिवि भवः इन्द्राय शोभनकर्मकृते तथाविधः विष्णुः, स[1] विधाता प्रीणयति त्रिस्थानः आर्यम् इति। एतदेवाह—ऋतस्य इति। यज्ञस्य फले यजमानम् आ[1] भाजयति ॥ ५ ॥

[2]इति द्वितीयाष्टके द्वितीयाध्याये षड्विंशो वर्गः[2] ॥

## [ १५७ ]

[3]दीर्घतमा औचथ्य ऋषिः। अश्विनौ देवता। जगती छन्दः, पञ्चमीषष्ठ्यौ त्रिष्टुभौ[3]।

**अबोध्यग्निर्ज्म उदेति सूर्यो व्यु१षाश्चन्द्रा मह्यावो अर्चिषा।**
**आयुक्षातामश्विना यातवे रथं प्रासावीद् देवः सविता जगत् पृथक् ॥ १ ॥**

अबोधि। अग्निः। ज्मः। उत्। एति। सूर्यः। वि। उषाः। चन्द्रा। मही। आवः। अर्चिषा।
अयुक्षाताम्। अश्विना। यातवे। रथम्। प्र। असावीत्। देवः। सविता। जगत्। पृथक् ॥ १ ॥

**वेङ्कट०** होमार्थं प्रबुद्ध आसीत् अग्निः। पृथिव्याः पर्यन्तात् सूर्यः उत् गच्छति। ह्लादयित्री महती उषाः तेजसा अन्धकारम् वि वृणोति। अश्विनौ च गमनाय आत्मीयम् रथम् युक्तवन्तौ। सविता च[4] देवः जङ्गमम् स्वेस्वे कार्ये प्र असावीत्। आश्विनं सूक्तम् ॥ १ ॥

**यद् युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम्।**
**अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ २ ॥**

यत्। युञ्जाथे इति। वृषणम्। अश्विना। रथम्। घृतेन। नः। मधुना। क्षत्रम्। उक्षतम्।
अस्माकम्। ब्रह्म। पृतनासु। जिन्वतम्। वयम्। धना। शूरऽसाता। भजेमहि ॥ २ ॥

**वेङ्कट०** [5]यदि युञ्जाथे[5] वर्षितारम् अश्विनौ! रथम्, अथ क्षरता उदकेन अस्माकम् धनम्[6] सिञ्चतम्। अस्माकम् एव स्तोत्रम् सङ्ग्रामेषु कामप्रदानेन प्रीणयतम्। वयम् धनानि सङ्ग्रामे शत्रुभ्यः भजेमहि ॥ २ ॥

**अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः।**
**त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद् द्विपदे चतुष्पदे ॥ ३ ॥**

अर्वाङ्। त्रिऽचक्रः। मधुऽवाहनः। रथः। जीरऽअश्वः। अश्विनोः। यातु। सुऽस्तुतः।
त्रिऽवन्धुरः। मघऽवा। विश्वऽसौभगः। शम्। नः। आ। वक्षत्। द्विऽपदे। चतुःऽपदे ॥ ३ ॥

**वेङ्कट०** अस्मान्[7] आयातु त्रिचक्रः[8] रथः, मधु येनोह्यते स[2] क्षिप्राश्वः अश्विनोः ऋषिभिः सुष्ठु स्तुतः। त्रिसन्धानः धनवान् विश्वानि सौभाग्यानि यस्य सः[1] सुखम् अस्माकम् द्विपदे चतुष्पदे च आ वहतु ॥ ३ ॥

---

१. सं वि[1] लपं. २. नास्ति मूको. ३-३. नास्ति मूको. ४. नास्ति अ[1]. ५-५. नास्ति वि[1] लपं. ६. रथम् अ[1]. ७. अर्वाङ् वि[2] अ[1]. ८. °क्रे वि[2] अ[1].

आ नु ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम् ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ४ ॥

आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् । मधुऽमत्या । नः । कशया । मिमिक्षतम् ।
प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥४॥

**वेङ्कट०** आ वहतम् अस्मभ्यम् अन्नम् अश्विनौ! युवाम् मधुमत्या च भवतोः अश्वाजन्या अस्मान् सिञ्चतम्। आयुः च अस्माकम् वर्धयतम्। पापानि च शोधयतम्। द्वेष्टॄंश्च निवारयतम्। [1]भवतम् च अस्माकं[1] सहभुवौ ॥ ४ ॥

युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः ।
युवमग्निं च वृषणावपश्च वनस्पतींरश्विनावैरयेथाम् ॥ ५ ॥

युवम् । ह । गर्भम् । जगतीषु । धत्थः । युवम् । विश्वेषु । भुवनेषु । अन्तरिति ।
युवम् । अग्निम् । च । वृषणौ । अपः । च । वनस्पतीन् । अश्विनौ । ऐरयेथाम् ॥ ५ ॥

**वेङ्कट०** [1]युवाम् खलु ओषधीषु गर्भम् धत्थः। युवाम्† सर्वेषु च भुवनेषु अन्तः गर्भं धत्थः युवामेव अग्निम् वृषणौ! स्वकार्ये प्रेरयथः उदकानि च वनस्पतीन् च अश्विनौ![1] ॥ ५ ॥

युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या३ राथ्येभिः ।
अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान् मनसा ददाश ॥ ६ ॥

युवम् । ह । स्थः । भिषजा । भेषजेभिः । अथो इति । ह । स्थः । रथ्या । रथ्येभिरिति रथ्येभिः ।
अथो इति । ह । क्षत्रम् । अधि । धत्थः । उग्रा । यः । वाम् । हविष्मान् । मनसा । ददाश ॥

**वेङ्कट०** युवाम् खलु भवथः भेषजेभ्योऽपि भिषजौ। भवथः अपि च रथे नेतृभ्योऽपि अतिशयेन रथे नेतारौ। अपि च युवाम् उग्रौ! बलम् तस्मिन् अधि निधत्थः यः युवाभ्याम् यजमानः मनसा एव हविः प्रयच्छति ॥ ६ ॥

[2]इति द्वितीयाष्टके द्वितीयाध्याये सप्तविंशो वर्गः[2] ॥

द्वितीयस्याष्टकस्यायमध्यायं व्याकरोदिति ।
द्वितीयं माधवार्यस्य पौत्रः श्रीवेङ्कटात्मजः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
द्वितीयाष्टके द्वितीयोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये द्वितीयाष्टके द्वितीयोऽध्यायः ॥

---

१-१. नास्ति वि[1] लपं. † युवं वि[1] अ[1]. २-२. नास्ति मूको.

## अथ द्वितीयाष्टके तृतीयोऽध्यायः

वेङ्कट०

'वसू रुद्रा पुरुमन्तू' व्याचिख्यासति माधवः।
प्रदर्शयल्लँलङो वृत्तिं लुङश्च तदनन्तरम् ॥ १ ॥

भूतेऽनद्यतने लङ् स्याल्लङ्[१] स्मृतोऽद्यतनेऽपि च।
लिटः परोक्षे स्मरणाल्लङ् प्रत्यक्षेऽवशिष्यते ॥ २ ॥

लङ् 'इन्द्रो अरमाँ अरदत्'[२], 'अपाहन् वृत्रं परिधिम्'[२]।
'स्या वो मरुतः स्वधासीद् यन्मामेकं समधत्त'[३] ॥ ३ ॥

'किं यविष्ठो न आजगन्'[४], 'तद् वो देवा अब्रुवन्'[५] च।
'प्रत्यायं सिन्धुमावदन्'[६], उपातिष्ठन्त गिर्वणः'[६] ॥ ४ ॥

प्रत्यक्षाण्येव सर्वाणि परोक्षे चाऽपि दृश्यते।
'इन्द्रस्य नु वीर्याणी' ति[७] सूक्तं तत्र निदर्शनम् ॥ ५ ॥

कर्मणामत्र पारोक्ष्यं चकारेति प्रदर्शितम्।
एवं च सर्वे सूक्तस्थाः परोक्षाः स्युरमी लङः ॥ ६ ॥

परोक्षे लोकविज्ञाते प्रयोक्तुर्दृष्टिगोचरे।
लङं कात्यायनो[८] ब्रूते 'जिहीत पर्वतो गिरिः'[९] ॥ ७ ॥

परोक्षे लोकविज्ञाते बहवो वैदिका लङः।
प्रयोक्तुर्दर्शनायोग्ये विषयेऽपि स्थिता इति ॥ ८ ॥

'अधारयन्त वह्नयोऽभजन्त सुकृत्यया'[१०]।
'घनो वृत्राणामभवः'[११], 'सद्यो वृद्धो अजायथाः'[१२] ॥ ९ ॥

शक्नुवन्त्यृषयो द्रष्टुमतोऽदर्शनगोचराः।
लङोऽपि च समीचीना इति केचिदवस्थिताः ॥ १० ॥

---

१. °ल्लुङ् वि[१,२] ल लपं वेंऋअ. २. ऋ ३,३३,६. ३. ऋ १, १६५,६; °मदत्त वेंऋअ. ४. ऋ १, १६१, १. ५. ऋ १, १६१, २. ६. ऋ १, ११, ६. ७. ऋ १,३२,१ ८. तु. पावा ३, २, १११. ९. ऋ १, ३७, ७. १०. ऋ १, २०, ८. ११. ऋ १,४८. १२. ऋ १, ५, ६.

दृश्यतेऽद्यतने चापि लङ् 'आर्यमग्य सुकृतम्'[१] ।
'अर्वाचचक्षं पदमस्य'[२], 'उग्रं निंवातुरन्वायम्'[३] ॥ ११ ॥

प्रत्यक्षे वा परोक्षे वा लुङ् भूतेऽद्यतने भवेत् ।
'अभि स्तोमा अनूषत'[४], 'सनिं मेधामयासिषम्'[५] ॥ १२ ॥

'आपो अद्यान्वचारिषं रसेन समगस्महि'[६] ।
'उदगादयमादित्यः'[७], 'एषायुक्त परावतः'[८] ॥ १३ ॥

'वि सुपर्णो अन्तरिक्षाणि'[९], 'अयुक्त सप्त शुन्ध्युवः'[१०] ।
'अच्छा सिन्धुं मातृतमाम्'[११] अद्यतन्य इमा इति ॥ १४ ॥

अथापि भूतसामान्ये पश्यामोऽद्यतनीमिमाम्[१२] ।
'सं वो मदासो अग्मत'[१३], 'वधीर्हि दस्युं धनिनम्'[१४] ॥ १५ ॥

'अकारि रत्नधातमः'[१५] सूक्तादौ लुङ्[१६] प्रदृश्यते ।
मनसा निर्मितः स्तोमस्तस्य वक्तुमुपक्रमः ॥ १६ ॥

ननु भूतलकारेषु सङ्कीर्णेषु ततस्ततः ।
परोक्षादिविभागेऽस्मिन्[१७] निर्बन्धः केन पाणिनेः ॥ १७ ॥

विहितेषु लकारेषु भूतमात्रे ततो वयम् ।
तत्तद्वाक्यानुरूपेण[१८] वक्ष्यामोऽर्थांस्तथा तथा[१९] ॥ १८ ॥

नैवं[२०] युक्तं रूपभेदादर्थभेदश्च युज्यते ।
पश्यामोऽपि च वाक्येषु भेदं पाणिनिदर्शितम्[२१] ॥ १९ ॥

[२२]स्पष्टमेव लकारार्थान् पश्यामो[२२] ब्राह्मणेषु च ।
हरिश्चन्द्रो ह[२३] वैधसः[२४] शौनःशेपं निरीक्ष्यताम्[२५] ॥ २० ॥

तस्माद्यथा[२६] तथा[२७] भूते परोक्षाद्यतनादिकम् ।
प्रदर्शयेत् प्रयत्नेन मन्त्रेष्वपि च पण्डितः ॥ २१ ॥

---

१. ऋ १,१२५,३. २. ऋ ५,३०,२; °मद्य वेंऋअ. ३. ऋ ५,३०,२. ४. ऋ १,११,८. ५. ऋ १,१८,६. ६. ऋ १,२३,२३. ७. ऋ १,५०,१३. ८. ऋ १,४८,७. ९. ऋ १,३५,७. १०. ऋ १,५०,९. ११ ऋ ३,३३,३. १२. °मोऽव्यत° ल; °माद्यत° लपं. १३. ऋ १,२०,५. १४. ऋ १,३३,४. १५. ऋ १,२०,१. १६. लङ् वि[२] अ[१] वेंऋअ. १७. °विभागो° वि[२] ल लपं. १८. यत्तद्वाक्यानुसारेण वेंऋअ. १९. °मोऽतस्तथा° वि[२] अ[१]. २०. नैव वि[२] ल लपं. २१. °निदर्शनम् वि[१,२] अ[१] ल लपं. २२-२२. स्पष्ट…पश्या° वि[२] अ[१]. २३. नास्ति वि[२] अ[१]. २४. वैधनः वि[१] लपं; वैधसनः वि[२] अ[१]; तु. ऐब्रा ७,१३. २५. विशेषणम् वि[२] अ[१]. २६. निरीक्ष्यताम् वि[२] अ[१]. २७. यथा वि[१] लपं.

स्पष्टः संवादसूक्तेषु परोक्षाद्यतनादिकः[१] ।
तथान्येषु च सूक्तेषु न तं भेदं परित्यजेत् ॥ २२ ॥

न पश्यति यदा मन्त्रे तं विशेषं प्रयत्नतः ।
अपि वैकाङ्गविकलं [२]भवति च्छान्दसं[२] तदा[३] ॥ २३ ॥ इति[४] ।

## [ १५८ ]

[५]दीर्घतमा औचथ्य ऋषिः । अश्विनौ देवता । षष्ठी अनुष्टुप्, अन्यास्त्रिष्टुभः[५] ॥

वसू रुद्रा पुरुमन्तू वृधन्ता दशस्यतं नो वृषणावभिष्टौ ।
दस्रा ह यद् रेक्ण औचथ्यो वां प्र यत् सस्राथे अकवाभिरूती ॥ १ ॥

वसू इति । रुद्रा । पुरुमन्तू इति पुरुऽमन्तू । वृधन्ता । दशस्यतम् । नः । वृषणौ । अभिष्टौ ।
दस्रा । ह । यत् । रेक्णः । औचथ्यः । वाम् । प्र । यत् । सस्राथे इति । अकवाभिः । ऊती ॥

वेङ्कट० दीर्घतमाः । वासयितारौ घोरौ बहूनां ज्ञातारौ वर्धमानौ प्रयच्छतम् अस्मभ्यम् वृषणौ! अभ्येषणे । दर्शनीयौ! यत् धनम् औचथ्यः वाम् याचते, यत् च युवाम् अकुत्सिताभिः ऊतिभिः सह दाशुषे प्र सारयथः तत् दशस्यतम् ॥ १ ॥

को वां दाशत् सुमतये चिदस्यै वसू यद् धेथे नमसा पदे गोः ।
जिगृतमस्मे रेवतीः पुरंधीः कामप्रेणेव मनसा चरन्ता ॥ २ ॥

कः । वाम् । दाशत् । सुऽमतये । चित् । अस्यै । वसू इति । यत् । धेथे इति । नमसा । पदे । गोः ।
जिगृतम् । अस्मे इति । रेवतीः । पुरम्ऽधीः । कामप्रेणऽइव । मनसा । चरन्ता ॥ २ ॥

वेङ्कट० कः युवयोः सुमतये अस्यै महत्यै निष्कृत्यर्थं प्रयच्छति, यत् इदं युवाम् वासयितारौ! पशोः स्थाने अन्नेन सह यजमानान् दधाथे[६] । तौ युवां[७] युवयोः पशुमतीः प्रज्ञाः अस्मभ्यम् उज्जिगृतम्[८] कस्य कं कामं पूरयामीत्येवं कामप्रेणेव मनसा इतस्ततश्चरन्तौ ॥ २ ॥

युक्तो ह यद् वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः ।
उप वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः ॥ ३ ॥

---

१. °कम् अ[१] वि[२] वें ऋअ. २-२. भवन्ति छान्दसाः वि[२] अ[१]; °ति छान्दसः वि[१] लपं. ३. तथा अ[१].
४ नास्ति वें ऋअ °ति इति कारिका समाप्ता अ[१]. ५-५. नास्ति मूको. ६. ददाथे अ[१]. ७. वां अ[१].
८. °नतम् वि[२] अ[१]; °गृहम् लपं वि[१].

युक्तः । ह । यत् । वाम् । तौग्र्याय॑ । पेरुः । वि । मध्ये॑ । अर्ण॑सः । धायि॑ । पज्रः ।
उप॑ । वाम् । अवः । शरणम् । गमेयम् । शूरः । न । अज्म॑ । पतय॑त्ऽभिः । एवैः ॥ ३ ॥

**वेङ्कट०** अश्वैः युक्तः युवयोः तुग्रपुत्रपरिरक्षणार्थं[1] पारयिता गमनशीलः यद्रथः विहितः उदकमध्ये । ततोऽहं युवयोः पालनम् शरणम् उपगच्छेयम् । यथा कश्चन शूरः पतयद्भिः अश्वैः युद्धगृहं शीघ्रमभिगच्छति[2] ॥ ३ ॥

**उप॑स्तुतिरौचथ्यमुरुष्येन्मा मामिमे प॑तत्रिणी वि दुग्धाम् ।**
**मा मामेधो दश॑तयश्चितो धाक् प्र यद् वां बद्धस्त्मनि खाद॑ति क्षाम् ॥४॥**

उप॑ऽस्तुतिः । औचथ्यम् । उरुष्येत् । मा । माम् । इमे इति॑ । पतत्रिणी इति॑ । वि । दुग्धाम् ।
मा । माम् । एधः । दश॑ऽतयः । चितः । धाक् । प्र । यत् । वाम् । बद्धः । त्मनि॑ । खाद॑ति । क्षाम् ॥

**वेङ्कट०** उपेत्य क्रियमाणा स्तुतिः दीर्घतमसं रक्षतु । मा माम् इमे अहोरात्रे विदुग्धाम् । शरणं[3] विदोहः । मा च माम् दशभिः [4]काष्ठैर्निर्मितः अयं प्लवार्थः[4] एधः काष्ठसङ्घाटः धाक्षीत्[5] । यस्मात् युवयोः भूमिम् आत्मनि [6]बद्धः अयं[6] दीर्घतमाः प्र खादति अभिगच्छति । अङ्गदेशे अस्त्यश्विनोः सम्बन्धः ॥ ४ ॥

**न मा गरन् नद्यो॑ मातृत॑मा दासा यदीं सुस॑मुब्धमवाधुः ।**
**शिरो यद॑स्य त्रैतनो वितक्ष॑त् स्वयं दास उरो अंसावपि॑ ग्ध ॥ ५ ॥**

न । मा । गरन् । नद्यः॑ । मातृऽत॑माः । दासाः । यत् । ईम् । सुऽस॑मुब्धम् । अवऽअधुः॑ ।
शिरः॑ । यत् । अस्य । त्रैतनः । विऽतक्ष॑त् । स्वयम् । दासः । उरः॑ । अंसौ॑ । अपि॑ । ग्धेति॑ ग्ध ॥५॥

**वेङ्कट०**

'जीर्णं तु दीर्घतमसं खिन्नास्तत्परिचारिणः ।
दासा बद्ध्वा नदीतोये दृष्टिहीनमवादधुः ॥
तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत् ।
शिरश्चांसावुरश्चैव[7] स्वयमेव न्यकृन्तत ॥' (बृदे ४,२१-२२)
'अङ्गदेशसमीपे तु [8]तं नद्यः समुदक्षिपन्[8] ।' (बृदे ४, २४)
'जनयामास चोत्थाय कक्षीवत्प्रमुखानृषीन् ॥' (बृदे ४, २५)

न मा गरन् इमा आपः सर्वेषां मातृस्थानीयाः । दासाः यम् एनम् सु सम्यग् बद्धम् अप्स्ववादधुः

---

१. °ग्र प° मूको.; °ग्रस्य प° ल शोधः; तुग्र' वि[1],[2] अ[1] लपं. २. °भ्रमुपग° अ[1]. ३. नास्ति अ[1]. ४-४. °र्मितः अतः अयं प्लावा° ल. ५. °क्षीत् यत् ल. ६-६. बोधयत् वि[1] अ[2]. ७. शिरश्चासा° ल. ८-८. नद्यः सर्वाः समुद्वहन् मूको.

प्राक्षिपन् । तथा यदा अस्य शिरः त्रैतनः नाम छेत्तुं विप्रक्रान्तः । स्वयम् एव दासः आत्मीयम् उरः अंसौ च तेन शस्त्रेण अपि हन्तु ॥ ५ ॥

दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥ ६ ॥

दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे । अपाम् । अर्थम् । यतीनाम् । ब्रह्मा । भवति । सारथिः ॥

**वेङ्कट०** दीर्घतमाः मामतेयः जीर्णः दशमे युगे वार्धक्ये वर्तमानः[१] अपाम् प्रवणं गच्छन्तीनां ब्राह्मणः[२] भवति सारथिः[३] ॥ ६ ॥

[४]इति द्वितीयाष्टके तृतीयाध्याये प्रथमो वर्गः[४] ॥

## [ १५९ ]

[४]दीर्घतमा औचथ्य ऋषिः । द्यावापृथिवी देवता । जगती छन्दः[४] ॥

प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मही स्तुषे विदथेषु प्रचेतसा ।
देवेभिर्ये देवपुत्रे सुदंससेत्था धिया वार्याणि प्रभूषतः ॥ १ ॥

प्र । द्यावा । यज्ञैः । पृथिवी इति । ऋतऽवृधा । मही इति । स्तुषे । विदथेषु । प्रऽचेतसा ।
देवेभिः । ये इति । देवपुत्रे इति देवऽपुत्रे । सुऽदंससा । इत्था । धिया । वार्याणि । प्रऽभूषतः ॥१॥

**वेङ्कट०** द्यावा पृथिवी यज्ञैः सह उदकस्य वर्धयित्र्यौ महत्यौ सुमती यज्ञेषु स्तोतुमुपक्रमे । देवैः देवाः पुत्रा ययोर्भवन्ति[५] ते देवपुत्रे[६] सुकर्माणौ ये[७] इत्थं कर्मणा धनानि भावयतः[८] ॥ १ ॥

उत मन्ये पितुरद्रुहो मनो मातुर्महि स्वतवस्तद्धवीमभिः ।
सुरेतसा पितरा भूम चक्रतुरुरु प्रजाया अमृतं वरीमभिः ॥ २ ॥

उत । मन्ये । पितुः । अद्रुहः । मनः । मातुः । महि । स्वऽतवः । तत् । हवीमऽभिः ।
सुऽरेतसा । पितरा । भूम । चक्रतुः । उरु । प्रऽजायाः । अमृतम् । वरीमऽभिः ॥ २ ॥

**वेङ्कट०** उत ब्रवीमि दिवः अद्रोग्धुः[९] स्तोत्रम्, पृथिव्याश्च स्ववर्धनं तत् महत्त्वम् आह्वानैः स्तौमि । शोभनरेतस्के द्यावापृथिवी बहुतरं विस्तीर्णम् अमरणसाधनमन्नम् आत्मीयैः उरुत्वैः प्रजायाः देवमनुष्यादिकायाः चक्रतुः ॥ २ ॥

---

१. वर्धमानः वि[१] लपं. २. ब्रह्मणः वि[१] लपं. ३. °थिः इति विस्मयः वि[२] अ[१]. ४-४. नास्ति मूको. ५. °भवति वि[२] अ[१]. ६. तु. ऋ १,१०६,३. ७. ते मूको. ८. °यन्तः वि[१] ल लपं. ९. अद्रोग्ध्र्याः ल शोधः.

ते सूनवः स्वपसः सुदंससो मही जज्ञुर्मातरा पूर्वचित्तये ।
स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥ ३ ॥

ते । सूनवः । सुऽअपसः । सुऽदंससः । मही इति । जज्ञुः । मातरा । पूर्वऽचित्तये ।
स्थातुः । च । सत्यम् । जगतः । च । धर्मणि । पुत्रस्य । पाथः । पदम् । अद्वयाविनः ॥ ३ ॥

**वेङ्कट०** ते पुत्राः सुकर्माणः शोभनज्ञानाः महत्यौ द्यावापृथिव्यौ वृष्ट्यर्थं जानन्ति। स्थावरस्य जङ्गमस्य च धारणार्थम् आदित्यस्य भवतोः पुत्रस्य स्थानम् सत्यम्[१] रक्षथो युवां जरामरणरहितस्य ॥ ३ ॥

ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा ।
नव्यंनव्यं तन्तुमा तन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः ॥ ४ ॥

ते । मायिनः । ममिरे । सुऽप्रचेतसः । जामी इति । सयोनी इति सऽयोनी । मिथुना । समऽओकसा ।
नव्यम्ऽनव्यम् । तन्तुम् । आ । तन्वते । दिवि । समुद्रे । अन्तरिति । कवयः । सुऽदीतयः ॥४॥

**वेङ्कट०** ते कर्मवन्तः चक्रुः शोभनप्रज्ञानाः सबन्धू समानोत्पत्तिस्थाने समाननिलये[२] द्यावापृथिवी मिथुनभूते । ततश्च ते यज्ञैः नवतरं[३] नवतरं[४] तन्तुं विस्तारयन्ति । अन्तरिक्षस्य दीप्तस्य[५] अन्तः क्रान्तदर्शनाः शोभनद्योतनास्तेजसस्तन्तून् विस्तारयन्ति ॥ ४ ॥

तद् राधो अद्य सवितुर्वरेण्यं वयं देवस्य प्रसवे मनामहे ।
अस्मभ्यं द्यावापृथिवी सुचेतुना रयिं धत्तं वसुमन्तं शतग्विनम् ॥ ५ ॥

तत् । राधः । अद्य । सवितुः । वरेण्यम् । वयम् । देवस्य । प्रऽसवे । मनामहे ।
अस्मभ्यम् । द्यावापृथिवी इति । सुऽचेतुना । रयिम् । धत्तम् । वसुऽमन्तम् । शतऽग्विनम् ॥५॥

**वेङ्कट०** तत् धनम् अद्य सवितुः वरणीयं वयम् देवस्य सवितुः प्रसवे स्तुमो भवतीभ्यां दत्तम् । अस्मभ्यम् द्यावापृथिवी ! सुमत्या नानाविधमर्थजातं दत्तं धनवन्तं गोशतयुक्तम् ॥ ५ ॥

[६]इति द्वितीयाष्टके तृतीयाध्याये द्वितीयो वर्गः[६] ॥

## [ १६० ]

[६]दीर्घतमा औचथ्य ऋषिः । द्यावापृथिवी देवता । जगती छन्दः[६] ॥

ते हि द्यावापृथिवी विश्वशंभुव ऋतावरी रजसो धारयत्कवी ।
सुजन्मनी धिषणे अन्तरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥ १ ॥

---

१-१. नास्ति मूको. २. °निचये मूको. ३. °तरंते अ[१]. ४. नास्ति वि[२] लपं; नवतरतेः वि[२] अ[१].
५. °स्य अन्तरिक्षस्य वि[२] अ[१]. ६-६. नास्ति मूको.

ते इति॑ । हि । द्यावा॑पृथि॒वी इति॑ । वि॒श्वऽश॑म्भुवा । ऋ॒तव॑री इत्यृ॒तऽव॑री । रज॑सः । धा॒र॒यत्क॑वी इति॑ धा॒र॒यत्ऽक॑वी ॥ सु॒जन्म॑नी इति॑ सु॒ऽजन्म॑नी । धि॒षणे॒ इति॑ । अ॒न्तः । ई॒य॒ते । दे॒वः । दे॒वी इति॑ । धर्म॑णा । सूर्यः॑ । शुचिः॑ ॥ १ ॥

**वेङ्कट०** ते हि द्यावापृथिव्यौ[1] सर्वस्य सुखस्य भावयित्र्यौ उदकवत्यौ लोकार्थं भ्रियमाणस्तोत्रे शोभनजन्मानौ धृष्टे देवी[2] मध्येन सर्वस्य धारणार्थं [3]निर्मलः सूर्यः[3] देवः गच्छति ॥ १ ॥

उ॒रु॒व्यच॑सा म॒हिनी॑ अस॒श्चता॑ पि॒ता मा॒ता च॒ भुव॑नानि रक्षतः ।
सु॒धृष्ट॑मे वपु॒ष्ये॒३॒॑ न रोद॑सी पि॒ता यत् सी॑म॒भि रू॒पैरवा॑सयत् ॥ २ ॥

उ॒रु॒ऽव्यच॑सा । म॒हि॒नी इति॑ । अ॒स॒श्चता॑ । पि॒ता । मा॒ता । च॒ । भुव॑नानि । र॒क्ष॒तः ॥ सु॒धृष्ट॑मे॒ इति॑ सु॒ऽधृष्ट॑मे । व॒पु॒ष्ये॒३॒॑ इति॑ । न । रोद॑सी॒ इति॑ । पि॒ता । यत् । सी॒म् । अ॒भि । रू॒पैः । अवा॑सयत् ॥

**वेङ्कट०** बह्ववकाशे महत्यौ असक्ते द्यावापृथिव्यौ पितृमातृभूते भूतानि रक्षतः, सुधृष्टतमे वपुषे हिते च भवतः । यस्मात् एते सर्वतः सूर्यः परिगृह्य नक्षत्रैरोषधीभिश्च अभि वासयति ॥ २ ॥

स वह्निः॑ पु॒त्रः पि॒त्रोः प॒वित्र॑वान् पु॒नाति॒ धीरो॒ भुव॑नानि मा॒यया॑ ।
धे॒नुं च॒ पृश्निं॑ वृष॒भं सु॒रेत॑सं वि॒श्वाहा॑ शु॒क्रं पयो॑ अस्य दुक्षत ॥ ३ ॥

सः । वह्निः॑ । पु॒त्रः । पि॒त्रोः । प॒वित्र॑ऽवान् । पु॒नाति॑ । धीरः॑ । भुव॑नानि । मा॒यया॑ ॥ धे॒नुम् । च॒ । पृश्नि॑म् । वृ॒ष॒भम् । सु॒ऽरेत॑सम् । वि॒श्वाहा॑ । शु॒क्रम् । पयः॑ । अ॒स्य॒ । धु॒क्ष॒त ॥३॥

**वेङ्कट०** सः वोढा द्यावापृथिव्योः पुत्रः पवित्ररश्मियुक्तः शोधयति भुवनानि प्राज्ञः कर्मणा पृथिवीं च सस्यानामुत्पादयित्रीम् । उदकस्य सेक्तारम् शोभनरेतस्कं सर्वदा[4] दीप्तम् उदकस्य स्वभूतं कवयो दुहन्ति सारमिति ॥ ३ ॥

अ॒यं दे॒वाना॑म॒पसा॑म॒पस्त॑मो॒ यो ज॒जान॒ रोद॑सी वि॒श्वश॑म्भुवा ।
वि यो म॒मे रज॑सी सु॒क्र॒तू॒यया॒ऽजरे॑भिः॒ स्कम्भ॑नेभिः॒ समा॑नृचे ॥ ४ ॥

अ॒यम् । दे॒वाना॑म् । अ॒पसा॑म् । अ॒पःऽत॑मः । यः । ज॒जान॑ । रोद॑सी॒ इति॑ । वि॒श्वऽश॑म्भुवा ॥ वि । यः । म॒मे । रज॑सी॒ इति॑ । सु॒क्र॒तु॒ऽयया॑ । अ॒जरे॑भिः । स्कम्भ॑नेभिः । सम् । आ॒नृ॒चे॒ ॥ ४ ॥

**वेङ्कट०** [5]अयम् देवानाम्[5] व्याप्तानां व्याप्ततमः, यः जजान द्यावापृथिवी सर्वस्य सुखस्य भावयित्र्यौ । वि ममे च यः ते शोभनकर्मेच्छया, स देवः एते अजरैः उत्तम्भनसाधनैः रश्मिभिः इतरेतरावष्टब्धे[6] करोति ॥ ४ ॥

---

१. °थिवी अ[1]. २. देव्यौ ल शोधः. ३-३. निर्मलम्° वि[1,2] अ[1] लपं. ४. दिवसैः स° मूको; सदा लपं. ५-५. नास्ति वि[2]. ६. °ब्धैः वि[2] अ[1].

ते नो॑ गृणा॒ने म॑हि॒नी म॒हि श्रवः॑ क्ष॒त्रं द्या॑वापृथिवी धासथो बृ॒हत् ।
येना॒भि कृ॒ष्टीस्त॒तना॑म वि॒श्वहा॑ प॒नाय्य॒मोजो॑ अ॒स्मे समि॑न्वतम् ॥ ५ ॥

ते इति॑ । नः॒ । गृ॒णा॒ने इति॑ । म॒हि॒नी इति॑ । म॒हि । श्रवः॑ । क्ष॒त्रम् । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । धा॒स॒थः॒ । बृ॒हत् ॥ येन॑ । अ॒भि । कृ॒ष्टीः । त॒तना॑म । वि॒श्वहा॑ । प॒नाय्य॑म् । ओजः॑ । अ॒स्मे इति॑ । सम् । इ॒न्व॒त॒म् ॥

**वेङ्कट०** ते **अस्मभ्यं स्तूयमाने महती**[1] **महत् अन्नम् बलं च**[2] **महत्**[3] **युवाम्** द्यावापृथिवी ! **धत्तम्**[4] । **येन सर्वाः** प्रजाः **अभिभवेम सर्वदा तत् स्तुत्यं बलम् अस्मासु सम्प्रेरयतम्** ॥ ५ ॥

[5]इति द्वितीयाष्टके तृतीयाध्याये तृतीयो वर्गः[5] ॥

## [ १६१ ]

[4]**दीर्घतमा औचथ्य ऋषिः । ऋभवो देवता । जगती छन्दः, अन्त्या त्रिष्टुप्**[4] ॥

किमु॒ श्रेष्ठः॒ किं यवि॑ष्ठो न॒ आज॑गन् किमी॑यते दू॒त्यं१॒॑ कद् यदू॑चि॒म ।
न नि॑न्दि॒म च॑म॒सं यो म॑हाकु॒लोऽग्ने॑ भ्रातर्द्रु॒ण इद् भू॒तिमू॑दि॒म ॥ १ ॥

किम् । ऊँ इति॑ । श्रेष्ठः॑ । किम् । यवि॑ष्ठः । नः॒ । आ । अ॒ज॒ग॒न् । किम् । ई॒य॒ते॒ । दू॒त्य॑म् । कत् । यत् । ऊ॒चि॒म ॥ न । नि॒न्दि॒म॒ । च॒म॒सम् । यः । म॒हा॒ऽकु॒लः । अग्ने॑ । भ्रा॒त॒रिति॑ । द्रु॒णः॒ । इत् । भू॒तिम् । ऊ॒दि॒म॒ ॥

**वेङ्कट०** **देवसकाशाद् दूत्यार्थमागच्छन्नयं** किम् **वृद्धः आहोस्विद् युवा योऽस्मान्**[6] **आगच्छति** । किम् **अयमस्मान् प्रति देवप्रहितः** दूत्यम् **आगच्छति** , **किं वा** तत् यत् **वयमेनं कार्यार्थमागतं ब्रूमः** । **आगतश्चायमस्मानेकमिमं महातटम्**[7] 'चमसं चतुरः कृणोतन' ( ऋ १,१६१,२ ) **इति वक्ष्यति । तद्धि प्रस्तुतं देवेषु । वयं तेन चमसेन किं प्रयोजनमिति न निन्दामः । किन्तु** अग्ने ! भ्रातः ! **इत्यामन्त्र्य द्रुमस्य च बहुधा भावनम् एव वदामः** ॥ १ ॥

एकं॑ चम॒सं च॒तुरः॑ कृणोतन॒ तद् वो॑ दे॒वा अ॑ब्रुव॒न् तद् व॒ आग॑मम् ।
सौध॑न्वना॒ यद्ये॒वा क॑रि॒ष्यथ॑ सा॒कं दे॒वैर्य॒ज्ञिया॑सो भविष्यथ ॥ २ ॥

एक॑म् । च॒म॒सम् । च॒तुरः॑ । कृ॒णो॒त॒न॒ । तत् । वः॒ । दे॒वाः । अ॒ब्रु॒व॒न् । तत् । वः॒ । आ । अ॒ग॒म॒म् । सौध॑न्वनाः । यदि॑ । ए॒व । क॒रि॒ष्यथ॑ । सा॒कम् । दे॒वैः । य॒ज्ञिया॑सः । भ॒वि॒ष्य॒थ॒ ॥ २ ॥

**वेङ्कट०** **अग्निर्वदति** । **एकम् इमम्** चमसम्[8] चतुरः **चमसान् कृणुत**[9] । तत् **इदं कार्यं युष्माकं** देवाः अब्रुवन्, **अहं च** तत् **युष्माकम् आनीतवान्** । सौधन्वनाः ! यदि **एवं**[10] **यथोक्तम्** करिष्यथ[11] **ततः** **देवैः सह यूयमपि यज्ञार्हाः** भविष्यथ ॥ २ ॥

---

१. महत्यौ ल शोधः. २. नास्ति वि[2] अ[1]. ३. महती मूको. ४. विधत्तम् लपं. ५-५. नास्ति मूको. ६. सोऽस्मान् वि[1]. ७. महाततम् अ[1]; महाकटम् वि[1] लपं. ८. नास्ति वि[1] लपं. ९. नास्ति वि[1]. १०. एनम् वि[2] अ[1]. ११. अकरिष्यथ वि[2] ल; अवरिष्यतं वि[1] लपं; अकरिष्यत अ[1].

अग्निं दूतं प्रति यदब्रवीतनाश्वः कर्त्वो रथ उतेह कर्त्वः ।
धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातरनु वः कृत्व्येमसि ॥ ३ ॥

अग्निम् । दूतम् । प्रति । यत् । अब्रवीतन । अश्वः । कर्त्वः । रथः । उत । इह । कर्त्वः ।
धेनुः । कर्त्वा । युवशा । कर्त्वा । द्वा । तानि । भ्रातः । अनु । वः । कृत्वी । आ । इमसि ॥

वेङ्कट० देवलोकम् प्रति गच्छन्तम् अग्निम् दूतम् प्रति यत् उक्तवन्तः । इन्द्रस्य अश्वः कर्तव्यः, रथः चाश्विभ्याम् अस्मिन्नेव लोके । धेनुः च बृहस्पतये कर्तव्या । पितरौ च द्वावात्मीयौ युवत्ववन्तौ कर्तव्यौ । तानि एतानि कृत्वा अनन्तरमेकं चमसं चतुरः कृत्वा देवान् युष्मान् अग्ने! भ्रातः! अनुगच्छाम इत्युत्तरत्र सम्बन्धः ॥ ३ ॥

चकृवांस ऋभवस्तदपृच्छत क्वेदभूद्यः स्य दूतो न आजगन् ।
यदावाख्यच्चमसाञ्चतुरः कृतानादित् त्वष्टा ग्नास्वन्तर्न्यानजे ॥ ४ ॥

चकृऽवांसः । ऋभवः । तत् । अपृच्छत । क्व । इत् । अभूत् । यः । स्यः । दूतः । नः । आ । अजगन् ।
यदा । अवऽअख्यत् । चमसान् । चतुरः । कृतान् । आत् । इत् । त्वष्टा । ग्नासु । अन्तः । नि । आनजे ॥

वेङ्कट० एतत् सर्वं कृतवन्तः । पश्चाद् हे ऋभवः! तदा यूयम् अपृच्छत । क्व अधुना सः[1] अभूत् यः अयम् दूतः अस्मान् आजगाम, अग्निर्नूनमश्वादिकरणव्यासङ्गोपन्यासात् जगाम । यदा अग्निः चमसान् [2]चतुरः कृतान्[2] अवाख्यत् अप्रतीक्ष्यानादाय जगाम[3], अनन्तरम् त्वष्टा तानादाय देवपत्नीषु अन्तः निहितवान् ॥ ४ ॥

हनामैनाँ इति त्वष्टा यदब्रवीच्चमसं ये देवपानमनिन्दिषुः ।
अन्या नामानि कृण्वते सुते सचाँ अन्यैरेनान् कन्या नामभिः स्परत् ॥५॥

हनाम । एनान् । इति । त्वष्टा । यत् । अब्रवीत् । चमसम् । ये । देवऽपानम् । अनिन्दिषुः ।
अन्या । नामानि । कृण्वते । सुते । सचा । अन्यैः । एनान् । कन्या । नामऽभिः । स्परत् ॥५॥

वेङ्कट० अग्निनाऽवख्यातांश्चमसान् दृष्ट्वा यदा त्वष्टा अब्रवीत्, अत ऊर्ध्वम् ये देवानां सोमपानसाधनम् चमसं निन्दन्ति, तान् वयम् हनाम इति । तत[4] ऊर्ध्वं प्रमादाच्चमसानां निन्दा भवेदिति तत्परिहारार्थमृत्विजः यज्ञे सह अन्यानि नामानि कुर्वन्ति होताऽध्वर्युर्ब्रह्मोद्गातेति । तैश्च नामभिः तान् कवचभूतैः वाग्देवी स्पृशति रक्षायै[5] ॥ ५ ॥

[2]इति द्वितीयाष्टके तृतीयाध्याये चतुर्थो वर्गः[2] ॥

इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत ।
ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ॥ ६ ॥

१. नास्ति वि[2] अ.[1] २-२. नास्ति मूको. ३. आजगाम वि[1]. ४. नास्ति वि[1] लपं. ५. नास्ति अ[1].

इन्द्रः । हरी इति । युयुजे । अश्विना । रथम् । बृहस्पतिः । विश्वऽरूपाम् । उप । आजत ।
ऋभुः । विऽभ्वा । वाजः । देवान् । अगच्छत । सुऽअपसः । यज्ञियम् । भागम् । ऐतन ॥ ६ ॥

**वेङ्कट०** ऋभुभिः कृतौ द्वावश्वौ इन्द्रः स्वरथे युयुजे । अश्विनौ च रथम् आत्मीयैरश्वैर्युयुजाते । बृहस्पतिः च सर्वरूपामेभिः कृतां धेनुम् आत्मानम् उप निन्ये । एवं युष्माभिः कृतेषु शिल्पेषु देवैः परिगृहीतेषु ऋभ्वादयस्त्रयो यूयम् देवान् प्राप्तवन्तः । सुकर्माणः यज्ञियम् च भागम् प्राप्ताः ॥ ६ ॥

निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।
सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥ ७ ॥

निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः । या । जरन्ता । युवशा । ता । अकृणोतन ।
सौधन्वनाः । अश्वात् । अश्वम् । अतक्षत । युक्त्वा । रथम् । उप । देवान् । अयातन ॥ ७ ॥

**वेङ्कट०** मृतायाः गोश्चर्ममात्रादेव गाम् उत्पादितवन्तः कर्मभिः । यौ च जीर्णौ पितरौ, तौ युवत्व-युक्तौ[1] पुनः कृतवन्तः । सौधन्वनाः! अश्वात् द्वितीयम् अश्वम् कृतवन्तः, द्वावश्वावश्विनोः कृतवन्तः । एतत्सर्वं कृत्वा गमनार्थं कञ्चन रथम् युक्त्वा देवान् उप गताः ॥ ७ ॥

इदमुदकं पिबतेत्यब्रवीतनेदं वा घा पिबता मुञ्जनेजनम् ।
सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्वै ॥ ८ ॥

इदम् । उदकम् । पिबत । इति । अब्रवीतन । इदम् । वा । घ । पिबत । मुञ्जऽनेजनम् ।
सौधन्वनाः । यदि । तत् । नऽइव । हर्यथ । तृतीये । घ । सवने । मादयाध्वै ॥ ८ ॥

**वेङ्कट०** देवेष्वृभवः सोमपीथमैच्छन्, तान्देवा अब्रुवन् प्रातःसवने वसतीवरीः [2]पिबत इति[2] । माध्यन्दिने वा सोमनेजनम् उदकं पिबत इति । न तदैच्छन्नृभवः । ततो देवानिन्द्रः सन्दधाति, देवाः! यूयम् ऋभूनित्थमब्रूत इति देवानुक्त्वा ऋभूनेव वदति — हे सौधन्वनाः! यदि न एतत् एवम्[3] इच्छथ, तृतीये सवने सोमेनैव मादयाध्वै इति[4] ॥ ८ ॥

आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् ।
वधर्यन्तीं बहुभ्यः प्रैको अब्रवीदृता वदन्तश्चमसाँ अपिंशत ॥ ९ ॥

आपः । भूयिष्ठाः । इति । एकः । अब्रवीत् । अग्निः । भूयिष्ठः । इति । अन्यः । अब्रवीत् ।
वधःऽयन्तीम् । बहुऽभ्यः । प्र । एकः । अब्रवीत् । ऋता । वदन्तः । चमसान् । अपिंशत ॥ ९ ॥

---

१. युवत्वं युक्तवन्तौ वि[1] लपं. २-२. पिबत अ[1]. ३. नास्ति वि[1] लपं. ४. नास्ति अ[1].

वेङ्कट० ब्रह्मवद्यं[1] वदन्तः ऋभवः एस्य[2] इतरेतरं पृष्ट्वा, कश्चित् आपः सर्वेभ्यः पदार्थेभ्यः भूयिष्ठाः इति अब्रवीत्। अन्यः अग्निः सूक्ष्मरूपेण सर्वत्र व्याप्तः भूयिष्ठः इति अब्रवीत्। सीताप्रहारं गच्छन्ती पृथिवी सर्वेभ्यः प्ररिरिचे इति तृतीयः अब्रवीत्। इत्थं सत्यानि[3] वदन्तः एकस्माच्चमसात् त्रीन् चमसान् अपिंशत ॥ ९ ॥

श्रोणामेकं उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतम् ।
आ निम्रुचः शकृदेको अपाभरत् किं स्वित् पुत्रेभ्यः पितरा उपावतुः ॥ १० ॥

श्रोणाम् । एकः । उदकम् । गाम् । अव । अजति । मांसम् । एकः । पिंशति । सूनया । आऽभृतम् ।
आ । निऽम्रुचः । शकृत् । एकः । अप । अभरत् । किम् । स्वित् । पुत्रेभ्यः । पितरौ । उप । आवतुः ॥ १० ॥

वेङ्कट० [4]पित्रोः खञ्जाम् गाम्[4] एकः उदकम् प्रति पानाय विसृजति। मांसम् एकः पित्रोर्व्यञ्जनार्थम्[5] आहृतम्[6] असिना शकलीकरोति। अथापरः अस्तमयात् प्राक् शकृत् अप भरति। इत्थं शुश्रूषमाणेभ्यः पुत्रेभ्यः तौ पितरौ किम् स्वित् ररक्षतुः ॥ १० ॥

उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ।
अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥ ११ ॥

उद्वत्ऽसु । अस्मै । अकृणोतन । तृणम् । निवत्ऽसु । अपः । सुऽअपस्यया । नरः ।
अगोह्यस्य । यत् । असस्तन । गृहे । तत् । अद्य । इदम् । ऋभवः । न । अनु । गच्छथ ॥ ११ ॥

वेङ्कट० उद्गूहितुमशक्यस्य सवितुः गृहे यदा[7] अवर्तिध्वम्, तस्य उन्नतेषु क्षेत्रेषु ओषधीः अकृणुत, निम्नेषु च उदकानि शोभनकर्मेच्छया नेतारः!। तत् आश्रितरक्षणं मयि बाध्यमाने स्तोतरि न अनु गच्छथ न तथेदानीं कुरुथेति। यास्कस्त्वाह — "[8]तदद्येदमृभवो नानु गच्छथ[8]। आदित्योऽगूहनीयः। तस्य [9]'यदस्वपथ गृहे'। यावत्तत्र भवथ न तावदिह भवथेति[9]' ( ११,१६ ) इति[10] ॥ ११ ॥

संमील्य यद् भुवना पर्यसर्पत क्व स्वित् तात्या पितरा व आसतुः ।
अशपत यः करस्नं व आददे यः प्राब्रवीत् प्रो तस्मा अब्रवीतन ॥ १२ ॥

सम्ऽमील्य । यत् । भुवना । परिऽअसर्पत । क्व । स्वित् । तात्या । पितरा । वः । आसतुः ।
अशपत । यः । करस्नम् । वः । आऽददे । यः । प्र । अब्रवीत् । प्रो इति । तस्मै । अब्रवीतन ॥ १२ ॥

वेङ्कट० मनुष्याणां नेत्राणि सम्मीलयन्तः सर्वाणि भुवनानि यदा पर्यसर्पत सवित्रा सह गच्छन्तः, तदा युष्माकं मातापितरौ तातशब्दार्हौ क्व आसतुः। पितृशुश्रूषणपराणां[11] भवतामिदानीं क्व

---

१. ब्रह्मवाद्यं मूको. २. नास्ति वि[२]. ३. सत्यादीनि वि[२] अ[१]. ४-४. °खञ्जां वि[१,२]; पित्रोर-र्बञ्जाम् ल लपं; खञ्जाम् अ[१]. ५. °र्व्यंजना° मूको. ६. नास्ति लपं. ७. यथा अ[१]. ८-८. नास्ति मूको. ९-९. यदस्वपत ··· मृभवो नानुगच्छथ वि[२] अ[१]; °गृहे तदद्येमृभवो नानुगच्छथ वि[१] ल लपं. १०. नास्ति मूको. ११. °भूषां वि[१] लपं.

तावभवतामिति । यः वः प्रहरामीति करम् आदत्ते तं यूयं हुङ्कारेण अशपत । यो युष्मान् प्रकृष्टा भवन्त इति अस्तौत् तस्मै यूयमपि अधिकवचनम् अकुरुत ॥ १२ ॥

सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् ।
श्वानं बस्तो बोधयितारमब्रवीत् संवत्सर इदमद्या व्यख्यत ॥ १३ ॥

सुसुप्वांसः । ऋभवः । तत् । अपृच्छत । अगोह्य । कः । इदम् । नः । अबूबुधत् ।
श्वानम् । बस्तः । बोधयितारम् । अब्रवीत् । संवत्सरे । इदम् । अद्य । वि । अख्यत ॥ १३ ॥

**वेङ्कट०** रात्रौ सुषुप्वांसः ऋभवः! प्रातः तत् अपृच्छत हे सवितः! कः इदम् अस्मान् अबूबुधत् इति । तत्र श्वानम् बस्तः बोधयितारम् [1]अब्रवीत् । श्वेति संवत्सरमाह[1] । बस्तः इत्यात्मानम् । इत्थं यूयं संवत्सरमात्र एव तपःप्रभावाद्रश्मीभूताः सर्वम् इदम् अद्य[2] प्रकाशयथेत्यृषिवचनम् ॥ १३ ॥

दिवा यान्ति मरुतो भूम्याऽग्निरयं वातो अन्तरिक्षेण याति ।
अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छन्तः शवसो नपातः ॥ १४ ॥

दिवा । यान्ति । मरुतः । भूम्या । अग्निः । अयम् । वातः । अन्तरिक्षेण । याति ।
अत्ऽभिः । याति । वरुणः । समुद्रैः । युष्मान् । इच्छन्तः । शवसः । नपातः ॥ १४ ॥

**वेङ्कट०** द्युलोकेन गच्छन्ति मरुतः, भूम्या गच्छति अग्निः, अयम् वातः अन्तरिक्षेण याति[3], अद्भिः याति वरुणः नदीभिश्च, युष्मान् इच्छन्तः शवसः पुत्रा ऋभवः! । तदिदं सर्वं भवत्प्रणीतमिति ॥१४॥

[4]इति द्वितीयाष्टके तृतीयाध्याये षष्ठो वर्गः[4] ॥

## [ १६२ ]

[4]दीर्घतमा औचथ्य ऋषिः । अश्वो देवता । तृतीयाषष्ठ्यौ जगत्यौ, शिष्टास्त्रिष्टुभः[4] ॥

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् ।
यद् वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥ १ ॥

मा । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः । ऋभुक्षाः । मरुतः । परि । ख्यन् ।
यत् । वाजिनः । देवऽजातस्य । सप्तेः । प्रऽवक्ष्यामः । विदथे । वीर्याणि ॥ १ ॥

**वेङ्कट०** आयुः वायुः । मा अस्मान् मित्रादयः महान् इन्द्रः च निषेधन्तु । यत् बलवतः देवैर्जनितस्य अश्वस्य वक्तुं प्रक्रमामहे यज्ञे वीर्याणि । किमदेवोऽसौ स्तूयत इति परिख्यानसम्भवः ॥ १ ॥

---

१. अब्रवी…सं° वि[2] अ[1]. २. नास्ति मूको. ३. गच्छति अ[1]. ४-४ नास्ति मूको.

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥ २ ॥

यत् । निःऽनिजा । रेक्णसा । प्राऽवृतस्य । रातिम् । गृभीताम् । मुखतः । नयन्ति ।
सुऽप्राङ् । अजः । मेम्यत् । विश्वऽरूपः । इन्द्रापूष्णोः । प्रियम् । अपि । एति । पाथः ॥ २ ॥

**वेङ्कट०** यत् निर्णिक्तेन[1] मणिमयेन धनेन आच्छादितस्य घासं गृहीतम् मुखतः हरन्ति । 'अतिरिक्तम् अन्नम्[2] [3]अश्वायोपावहरति[3]' ( माश १३,२,६,८ ) इति अश्वमेधब्राह्मणम् । तदा सुष्ठ्वग्रतो गच्छन् अजः शब्दं कुर्वन् इन्द्रापूष्णोः प्रियम्[4] स्थानम् अपि गच्छति विश्वरूपः पर्यङ्गेषु । ऐन्द्रापौष्णः[5] पशुरश्वस्य ग्रीवासु ललाटे वा बध्यते । तदनयोः स्थानम् । 'आग्नेयं कृष्णग्रीवं[6] पुरस्ताल्ललाटे··· पौष्णमन्वञ्चम् ···ऐन्द्रापौष्णमुपरिष्टात्' ( तैब्रा ३,८,२३,१;२ ) इत्युक्तम् ॥ २ ॥

एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जिन्वति ॥ ३ ॥

एषः । छागः । पुरः । अश्वेन । वाजिना । पूष्णः । भागः । नीयते । विश्वऽदेव्यः ।
अभिऽप्रियम् । यत् । पुरोळाशम् । अर्वता । त्वष्टा । इत् । एनम् । सौश्रवसाय । जिन्वति ॥ ३ ॥

**वेङ्कट०** छागः बलवता अश्वेन सह पूष्णे दीयमानो यज्ञस्य देवेभ्यः[4] प्रतिवेदात्[7] सर्वदेवहितोऽश्वस्य पुरतः नीयते । अभिप्रियम् पशुपुरोडाशं यदा अश्वेन सह निर्वपन्ति तदानीम् अश्वम् त्वष्टा एव विशासनकुशलः शोभनान्नत्वाय संस्करोति ॥ ३ ॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥ ४ ॥

यत् । हविष्यम् । ऋतुऽशः । देवऽयानम् । त्रिः । मानुषाः । परि । अश्वम् । नयन्ति ।
अत्र । पूष्णः । प्रथमः । भागः । एति । यज्ञम् । देवेभ्यः । प्रतिऽवेदयन् । अजः ॥ ४ ॥

**वेङ्कट०** यदा हविषे हितमश्विं स्वेस्वे काले देवान्[8] प्रति गन्तारम् ऋत्विजः त्रिः अश्वम्[4] परि नयन्ति । तत उदङ् नीयमानस्याश्वस्य अग्रतः पूष्णः भागः गच्छति स्वकीयेन शब्देन यज्ञम् देवेभ्यः अश्वमेधम् निवेदयन् अजः ॥ ४ ॥

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥ ५ ॥

---

१. निर्णिजाक्तेन वि[1] लपं. २. नास्ति वि[1] लपं. ३-३. °योपहरन्ति मूको; अश्वायोवाह° वि लपं. ४. नास्ति मूको. ५. °न्द्रापूष्णः मूको. ६. ग्रीवम् मूको. ७. °दान् वि[1] लपं. ८. नास्ति वि[1] लपं.

होतां । अध्वर्युः । आऽवयाः । अग्निम्ऽइन्धः । ग्रावऽग्राभः । उत । शंस्ता । सुऽविप्रः ।
तेन । यज्ञेन । सुऽअरंकृतेन । सुऽइष्टेन । वक्षणाः । आ । पृणध्वम् ॥ ५ ॥

**वेङ्कट०** होता अध्वर्युः आभिमुख्येनाध्वर्युं प्रति गच्छन् प्रतिप्रस्थाता आग्नीध्रः[1] ग्राव्णः स्तोत्रेण गृह्णन् ग्रावस्तोता[2] मैत्रावरुणः ब्रह्मा च सर्वे एतेन[3] अन्नेन साध्वलङ्कृतेन स्विष्टेन च देवानां तृप्तिकराः नदीः परलोके आ[4] पूरयध्वम् ॥ ५ ॥

[5]इति द्वितीयाष्टके तृतीयाध्याये सप्तमो वर्गः[5] ॥

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।
ये चार्वते पचनं संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ६ ॥

यूपऽव्रस्काः । उत । ये । यूपऽवाहाः । चषालम् । ये । अश्वऽयूपाय । तक्षति ।
ये । च । अर्वते । पचनम् । सम्ऽभरन्ति । उतो इति । तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥६॥

**वेङ्कट०** यूपं ये वृश्चन्ति अपि च ये वहन्ति । चषालम् वा ये अश्वयूपस्य[6] तक्षन्ति । नकारलोपश्छान्दसः । ये च अश्वाय पचनोखां सम्भरन्ति अपि च । तेषाम् आगोरणम् उद्योगः अस्मान् व्याप्नोतु ॥ ६ ॥

उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥ ७ ॥

उप । प्र । अगात् । सुऽमत् । मे । अधायि । मन्म । देवानाम् । आशाः । उप । वीतऽपृष्ठः ।
अनु । एनम् । विप्राः । ऋषयः । मदन्ति । देवानाम् । पुष्टे । चकृम । सुऽबन्धुम् ॥ ७ ॥

**वेङ्कट०** देवान् उप प्र ऐत् अश्वः । शोभनपश्वादियुक्तम् अभिलषितं च मम अधायि । सोऽयमनुष्यैर्योद्धृभिरभिलषितपृष्ठः देवानाम् अभिलषितानि उपगच्छति[7] । उपगच्छन्तम्[8] च एनम् अश्वं मेधाविनः ऋषयः स्तोत्रैः अनु मदन्ति । देवानाम् पोषणाय कुर्मो वयम् एनं शोभनस्तुतिमिति ॥ ७ ॥

यद् वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद् वा घास्य प्रभृतमास्ये३ तृणं सर्वा ता ते अपि देवेष्वस्तु ॥ ८ ॥

यत् । वाजिनः । दाम । सम्ऽदानम् । अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य ।
यत् । वा । घ । अस्य । प्रऽभृतम् । आस्ये । तृणम् । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥

---

१. अ° मूको. २. ग्रावाणस्तोतारम् वि[२] अ. ३. °तेन अनेन वि[२] अ[१] ल. ४. नास्ति मूको. ५-५. नास्ति मूको. ६. अश्वयूपाय ल शोधः. ७. उपभवति मूको. ८. अपगच्छ° वि[१] ल लपं; अवग° वि[२] अ[१].

**वेङ्कट०** यद् बलवतः अश्वस्य पादबन्धनम् दाम, या च शिरसि भवा रशना अस्य नियमनी रज्जुः, यत् च अस्य[1] आस्ये निक्षिप्तम् तृणम्, सर्वाण्येवञ्जातीयकानि तव अश्व! देवेषु सन्तु ॥ ८ ॥

यद॑श्व॑स्य क्र॒विषो॒ मक्षि॒काश॒ यद् वा॒ स्वरौ॒ स्वधि॑तौ रि॒प्तमस्ति॑ ।
यद्धस्त॑योः शमि॒तुर्यन्न॒खेषु॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥ ९ ॥

यत् । अश्व॑स्य । क्र॒विषः॑ । मक्षि॑का । आश॑ । यत् । वा॒ । स्वरौ॑ । स्वऽधि॑तौ । रि॒प्तम् । अस्ति॑ ।
यत् । हस्त॑योः । श॒मि॒तुः । यत् । न॒खेषु॑ । सर्वा॑ । ता । ते॒ । अपि॑ । दे॒वेषु॑ । अ॒स्तु॒ ॥९॥

**वेङ्कट०** यत् अस्य मांसं पिपीलिका भक्षितवती, यत् वा अस्य स्वरुस्वधित्योः लिप्तं भवति, यत् च शमितुः हस्तनखेषु[2] ॥ ९ ॥

यदूव॑ध्यमु॒दर॑स्याप॒वाति॒ य आ॒मस्य॑ क्र॒विषो॑ ग॒न्धो अस्ति॑ ।
सु॒कृ॒ता तच्छ॑मि॒तारः॑ कृण्वन्तू॒त मेधं॑ शृत॒पाकं॑ पचन्तु ॥ १० ॥

यत् । ऊव॑ध्यम् । उ॒दर॑स्य । अ॒प॒ऽवाति॑ । यः । आ॒मस्य॑ । क्र॒विषः॑ । ग॒न्धः । अस्ति॑ ।
सु॒ऽकृ॒ता । तत् । श॒मि॒तारः॑ । कृ॒ण्व॒न्तु॒ । उ॒त । मेध॑म् । शृ॒त॒ऽपाक॑म् । प॒च॒न्तु॒ ॥ १० ॥

**वेङ्कट०** यत् ऊवध्यम् उदरात् अपगच्छति । यः च आमस्य मांसस्य गन्धः भवति निर्गतः सह मांसशकलैः, तानि सर्वाणि सुसंस्कृतानि शमितारः कृण्वन्तु । अपि च [3]अश्वं च[3] यथा सुष्ठु शृतं भवति तथा पचन्तु ॥ १० ॥

[4]इति द्वितीयाष्टके तृतीयाध्याये अष्टमो वर्गः[4] ॥

यत् ते॒ गात्रा॑द॒ग्निना॑ प॒च्यमा॑नाद॒भि शूलं॒ निह॑तस्याव॒धाव॑ति ।
मा तद् भूम्या॒मा श्रि॑ष॒न्मा तृणे॑षु दे॒वेभ्य॑स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु ॥ ११ ॥

यत् । ते॒ । गात्रा॑त् । अ॒ग्निना॑ । प॒च्यमा॑नात् । अ॒भि । शूल॑म् । निऽह॑तस्य । अ॒व॒ऽधाव॑ति ।
मा । तत् । भूम्या॑म् । आ । श्रि॒ष॒त् । मा । तृणे॑षु । दे॒वेभ्यः॑ । तत् । उ॒शत्ऽभ्यः॑ । रा॒तम् । अ॒स्तु॒ ॥

**वेङ्कट०** यत्[5] तव गात्रात् अग्निना पच्यमानात् सञ्ज्ञप्तस्य मांसं हृदयशूलम् अभि अवधावति । तत्र यल्लिप्तं भवति मा तद्धृदयशूलेन भूम्याम् तृणेषु वा श्लिष्टं भवतु । तदपि देवेभ्यः कामयमानेभ्यः प्रत्तम् अस्तु ॥ ११ ॥

ये वा॒जिनं॑ परि॒पश्य॑न्ति प॒क्वं य ई॑मा॒हुः सु॑र॒भिर्निर्ह॒रेति॑ ।
ये चार्व॑तो मां॑सभि॒क्षामु॒पास॑त उ॒तो तेषा॑म॒भिगू॑र्तिर्न इन्वतु ॥ १२ ॥

---

१. नास्ति वि[2] अ[1]. २. शिष्टोऽर्थः ८मे मं. द्र. ३-३. नास्ति वि[1] लपं. ४-४. नास्ति मूको. ५. यत्र वि[2] अ[1].

ये । वाजिनम् । परिऽपश्यन्ति । पक्वम् । ये । ईम् । आहुः । सुरभिः । निः । हर । इति ।
ये । च । अर्वतः । मांसऽभिक्षाम् । उपऽआसते । उतो इति । तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥

वेङ्कट० ये अश्वं परितः पश्यन्ति, किं पक्व उत नेति । ये च एनम् आहुः, सुरभिः अयं पक्वः, निर्हर इति । ये च अश्वस्य देवेभ्यः प्रदीयमानं मांसं रक्षणार्थं परिवसन्ति । तेषाम् सर्वेषाम् उद्यमनम् अस्माकमेव फलप्रदं भवतु ॥ १२ ॥

यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥ १३ ॥

यत् । निऽईक्षणम् । मांस्पचन्याः । उखायाः । या । पात्राणि । यूष्णः । आऽसेचनानि ।
ऊष्मण्या । अपिऽधाना । चरूणाम् । अङ्काः । सूनाः । परि । भूषन्ति । अश्वम् ॥ १३ ॥

वेङ्कट० शृतं मांसमुत नेति येन मांसपचनीम् उखाम् अवेक्षते दर्व्यादिना, येषु च[1] पात्रेषु यूष्णः आभिमुख्येन सेचनं भवति, यानि च तेषां पचनानाम्[2] ऊष्मनिरोधार्थानि अपिधानानि, यानि[3] च[4] अङ्गानां लक्षणानि, याश्चास्यादयो विशसनसाधनीभूताः, त इमे सर्वे[5] अश्वम्[6] अलङ्कुर्वन्ति ॥१३॥

निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः ।
यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ १४ ॥

निऽक्रमणम् । निऽसदनम् । विऽवर्तनम् । यत् । च । पड्बीशम् । अर्वतः ।
यत् । च । पपौ । यत् । च । घासिम् । जघास । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥१४॥

वेङ्कट० निक्रमणादयः क्रियाविशेषाः । विशिः[7] विक्षेपणकर्मा । पटिर्गतिकर्मा[8] । पादेन कृतो विक्षेपः पड्वीशम्[8] । यत् च उदकम् पपौ, यत् च तृणं भक्षितवान्[9] ॥१४॥

मा त्वाग्निर्ध्वनयीद् धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥ १५ ॥

मा । त्वा । अग्निः । ध्वनयीत् । धूमऽगन्धिः । मा । उखा । भ्राजन्ती । अभि । विक्त । जघ्रिः ।
इष्टम् । वीतम् । अभिऽगूर्तम् । वषट्ऽकृतम् । तम् । देवासः । प्रति । गृभ्णन्ति । अश्वम ॥१५॥

वेङ्कट० धूमगन्धः अग्निः पच्यमानम् त्वा मा शब्दं कारयेत् । मा च उखा दीप्ता क्षरन्ती विविक्ता[10] भिन्ना भवतु । याज्यया इष्टम् देवैः प्रार्थितम् अभिगूर्तम् वषट्कृतम् उच्चैर्वषट्कृतम् तम् इमम् देवाः प्रति गृह्णन्ति अश्वम् ॥ १५ ॥

[11]इति द्वितीयाष्टके तृतीयाध्याये नवमो वर्गः[11] ॥

---

१. नास्ति वि[1] ल लपं. २. पचमानानाम्° वि[2] अ[1]. ३. नास्ति वि[1] लपं. ४. वा वि[2] अ[1]. ५. नास्ति वि[2] अ[1]. ६. नास्ति लपं. ७. अवटि° वि[1] ल लपं; अवमि° वि[1]. ८. पड्वीशम् ल. ९. शिष्टोऽर्थः ८मे मं. द्र. १०. विभक्ता वि[1] अ[1]. ११-११. नास्ति मूको.

यदश्वा॑य॒ वास॑ उपस्तृ॒णन्त्य॑धीवा॒सं या हिर॑ण्यान्यस्मै ।
सं॒दान॒मर्व॑न्तं॒ पड्बी॑शं प्रि॒या दे॒वेष्वा या॑मयन्ति ॥ १६ ॥

यत् । अश्वा॑य । वासः॑ । उ॒प॒ऽस्तृ॒णन्ति॑ । अ॒धी॒वा॒सम् । या । हिर॑ण्यानि । अ॒स्मै ।
स॒म्ऽदान॑म् । अर्व॑न्तम् । पड्बी॑शम् । प्रि॒या । दे॒वेषु॑ । आ । य॒म॒य॒न्ति॒ ॥ १६ ॥

वेङ्कट० 'अश्वाय निहन्यमानायोपास्यति[1] बर्हिश्च शतपलं[2] च कृत्तिं चाधीवासं[3] च कशिपु[4] च' ( बौश्रौ १५, २८:२८ ) इति कल्पः । यत् अश्वाय निहन्यमानाय कृत्त्याख्यम् वासः अधीवासम् च उपस्तृणन्ति, यानि चालङ्कारार्थानि अस्मै हिरण्यानि निहितानि, तान्येतानि प्रियाणि संदितम् अश्वं पादेन विक्षिपन्तम् देवेषु प्रापयन्ति ॥ १६ ॥

यत् ते॑ सा॒दे मह॑सा॒ शूकृ॑तस्य॒ पार्ष्ण्या॑ वा॒ कश॑या वा तु॒तोद॑ ।
स्रु॒चेव॒ ता ह॒विषो॑ अध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्रह्म॑णा सूदयामि ॥ १७ ॥

यत् । ते॒ । सा॒दे । मह॑सा । शूकृ॑तस्य । पार्ष्ण्या॑ । वा॒ । कश॑या । वा॒ । तु॒तोद॑ ।
स्रु॒चाऽइ॑व । ता । ह॒विषः॑ । अ॒ध्व॒रेषु॑ । सर्वा॑ । ता । ते॒ । ब्रह्म॑णा । सू॒द॒या॒मि॒ ॥ १७ ॥

वेङ्कट० यत् तव अधिरोहणे बलेन शीघ्रगमनार्थं मुखनासिकाभ्यां शूत्कृतस्य[5] पार्ष्ण्या वा कशया वा अश्वारोहः तुतोद, तादृशानि तव सर्वाणि यज्ञेषु स्रुचा हवींषि इव[6] मन्त्रेण देवेषु प्रेरयामि ॥१७॥

चतु॑स्त्रिंशद् वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑तिः॒ समे॑ति ।
अच्छि॑द्रा॒ गात्रा॑ व॒युना॑ कृणोत॒ परु॑ष्परुरनु॒घुष्या॒ वि श॑स्त ॥ १८ ॥

चतुः॑ऽत्रिंशत् । वा॒जिनः॑ । दे॒वऽब॑न्धोः । वङ्क्रीः॑ । अश्व॑स्य । स्वऽधि॑तिः । सम् । ए॒ति॒ ।
अच्छि॑द्रा । गात्रा॑ । व॒युना॑ । कृ॒णो॒त॒ । परुः॑ऽपरुः । अ॒नु॒ऽघुष्य॑ । वि । श॒स्त॒ ॥ १८ ॥

वेङ्कट० चतुस्त्रिंशत्[7] बलवतः देवज्ञातेः अश्वस्य[7] पर्शून्[8] स्वधितिः विशसनार्थं सङ्गच्छते । यूयम् अच्छिद्राणि गात्राणि मार्गेण कुरुत । सर्वाण्येव शरीराण्यप्रमादार्थं समीपस्थानं विकथ्य[9] वि शस्त ॥ १८ ॥

एक॒स्त्वष्टु॒रश्व॑स्या विश॒स्ता द्वा य॒न्तारा॑ भवत॒स्तथ॑ ऋ॒तुः ।
या ते॒ गात्रा॑णामृतु॒था कृ॒णोमि॒ ताता॒ पिण्डा॑नां॒ प्र जु॑हो॒म्यग्नौ ॥ १९ ॥

एकः॑ । त्वष्टुः॑ । अश्व॑स्य । वि॒ऽश॒स्ता । द्वा । य॒न्तारा॑ । भ॒व॒तः॒ । तथा॑ । ऋ॒तुः ।
या । ते॒ । गात्रा॑णाम् । ऋ॒तु॒ऽथा । कृ॒णोमि॑ । ताऽता॑ । पिण्डा॑नाम् । प्र । जु॒हो॒मि॒ । अ॒ग्नौ ॥ १९ ॥

---

१. °पास्यन्ति मूको. २. शतबलम् मूको. ३. चाधिवा° मूको. ४. कशीशु वि[2] अ[1]. ५. शूकृ° ल; शुत्कृ° वि[1] अ[1]. ६. नास्ति वि[1] लपं. ७. नास्ति मूको. ८. पशून् मूको; पार्श्वास्थीनि ल शोधः. ९. प्रकथ्य वि[1] अ[1].

**वेङ्कट०** दीप्तस्य अश्वस्य प्रजापतिः एकः विशस्ता भवति। 'कस्त्वा छ्यति[1] कस्त्वा वि शास्ति' (तै ५, २, १२,१) इति मन्त्रः। द्वौ च देवेषु यन्तारौ भवतः तूपरो गोमृग इति, तथा कालश्च। अपि वा 'अध्रिगुश्चापापश्च'[2] (तैब्रा ३,६,६,४; शांश्रौ ५,१७,१०) कालश्चेति यन्तारः।[3] यानि तव गात्राणाम् यागकाले मांसानि छिनद्मि, मांसपिण्डानाम् तानितानि[3] अहम् अग्नौ प्र[4] जुहोमि॥ १९॥

मा त्वा तपत् प्रिय आत्मापियन्तं मा स्वधितिस्तन्व१ आ तिष्ठिपत् ते।
मा ते गृध्नुरविशस्तातिहाय च्छिद्रा गात्राण्यसिना मिथू कः॥ २०॥

मा। त्वा। तपत्। प्रियः। आत्मा। अपिऽयन्तम्। मा। स्वऽधितिः। तन्वः। आ। तिस्थिपत्। ते।
मा। ते। गृध्नुः। अविऽशस्ता। अतिऽहाय। छिद्रा। गात्राणि। असिना। मिथु। कुरिति कः॥

**वेङ्कट०** मा त्वा तापयतु प्रियं शरीरम् देवान् प्रति गच्छन्तम्। मा च स्वधितिः तन्वः[5] विशसने प्रवृत्ता तव आस्थानं करोतु न तिष्ठतु शीघ्रं छिनत्तु। मा च ते[3] मांसाध्यवीनां[6] शस्ता व्याधः अस्मानतिक्रम्य असिना छिन्नानि गात्राणि वृथा करोतु॥ २०॥

न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः।
हरी ते युञ्जा पृषती अभूतामुपास्थाद् वाजी धुरि रासभस्य॥ २१॥

न। वै। ऊँ इति। एतत्। म्रियसे। न। रिष्यसि। देवान्। इत्। एषि। पथिऽभिः। सुऽगेभिः।
हरी इति। ते। युञ्जा। पृषती इति। अभूताम्। उप। अस्थात्। वाजी। धुरि। रासभस्य॥२१॥

**वेङ्कट०** अश्व! न त्वम् एव एतत्[7] म्रियसे, न च विनष्टो भवसि, किन्तु देवान् एव गच्छसि मार्गैः सुगमैः। देवलोकं प्राप्तस्य इन्द्राग्नी तव[8] सहायौ भवतः, एवम् मरुतामश्वौ। सोऽयम् अश्विनोरश्वस्य धुरि [9]उप तिष्ठतु[9]॥ २१॥

सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वापुषं रयिम्।
अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान्॥ २२॥

सुऽगव्यम्। नः। वाजी। सुऽअश्व्यम्। पुंसः। पुत्रान्। उत। विश्वऽपुषम्। रयिम्।
अनागाःऽत्वम्। नः। अदितिः। कृणोतु। क्षत्रम्। नः। अश्वः। वनताम्। हविष्मान्॥२२॥

**वेङ्कट०** शोभनगोसमूहम् अश्वसमूहम् पुंसः च पुत्रान् उत सर्वस्य पोषकं धनं च अस्माकम् अश्वः करोतु। अनागास्त्वम् च अदीनः कृणोतु[10]। बलं च अस्मभ्यम् प्रयच्छतु अश्वः पर्यङ्गैर्युक्तः॥ २२॥

[11]इति द्वितीयाष्टके तृतीयाध्याये दशमो वर्गः[11]॥

---

१. श्यति वि[2] अ[1]. २. ऐब्रा २,७ अपापः निग्रभीतेत्युच्यते [ तु. C. शांश्रौ. ] ३. नास्ति अ[1]. ४. नास्ति वि[1] लपं. ५. नास्ति मूको. ६. मांसाध्यपीनाम् वि[1,2] अ[1]; मांसाध्यवीनां ल; मांसात्थ्यविनां लपं. ७. नास्ति वि[2] अ[1]; तद् वि[1] ल लपं. ८. ते वि[1] ल लपं. ९-९. भवति वि[1] लपं. १०. करोतु अ[1]. ११-११. नास्ति मूको.

[ १६३ ]

'दीर्घतमा औचथ्य ऋषिः । अश्वो देवता । त्रिष्टुप् छन्दः[1] ।

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥ १ ॥

यत् । अक्रन्दः । प्रथमम् । जायमानः । उत्ऽयन् । समुद्रात् । उत । वा । पुरीषात् ।
श्येनस्य । पक्षा । हरिणस्य । बाहू इति । उपऽस्तुत्यम् । महि । जातम् । ते । अर्वन् ॥ १ ॥

**वेङ्कट०** यदा त्वं शब्दं कृतवानसि पुरा जायमानः उद्यन् अन्तरिक्षात्, अपि वा जलात् । अद्भ्योऽन्तरिक्षाच्चाश्वो जातः । तदानीं शीघ्रं प्रादुर्भवतः श्येनस्य पक्षौ[2] पक्षावास्ताम् हरिणस्य बाहू बाहू[2], तत्[3] तव अश्व ! महत् जननम् उपस्तोतव्यम् ॥ १ ॥

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट ॥ २ ॥

यमेन । दत्तम् । त्रितः । एनम् । अयुनक् । इन्द्रः । एनम् । प्रथमः । अधि । अतिष्ठत् ।
गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् । वसवः । निः । अतष्ट ॥ २ ॥

**वेङ्कट०** यमेन त्रिताय दत्तम् अश्वम् स त्रिस्थानो वायुः आयुक्तवान् । इन्द्रः च एनम् पूर्वं जातम् अधि अतिष्ठत् । गन्धर्वः च अस्य रशनाम् अगृह्णात् । तमिमम् अश्वम् हे वसवः ! सूर्यात् उत्पादितवन्तः । 'वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः । ते अग्रेऽश्वमायुञ्जन्' ( तै १,७,७,२ ) इति मन्त्रः ॥ २ ॥

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ ३ ॥

असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन ।
असि । सोमेन । समया । विऽपृक्तः । आहुः । ते । त्रीणि । दिवि । बन्धनानि ॥ ३ ॥

**वेङ्कट०** अर्वन् ![4] देवगुह्येन कर्मणा त्वं यमादिः भवसि । तत्र मन्त्रः 'अग्निः पशुरासीत् तेनायजन्त स एतं लोकमजयत्' ( मा २३,१७ ) इत्येवम् । सोमेन सह सम्पृक्तः भवसि । तस्य तव दिवि[4] त्रीणि उत्पत्तिस्थानानि सन्तीति आहुः सूर्यस्त्वष्टा प्रजापतिरिति ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[1] ल कपं. ३. नास्ति वि[1] कपं. ४. नास्ति मूको.

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम् ॥ ४ ॥

त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्ऽसु । त्रीणि । अन्तरिति । समुद्रे ।
उतऽइव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् ॥ ४ ॥

**वेङ्कट०** त्रीणि ते कथयन्ति द्युलोके बन्धनानि उत्पत्तिस्थानानि, एवम् अन्तरिक्षे च त्रीणि स्थानानि सन्ति । त्रीणि च अन्तः समुद्रे । अपि च समुद्रमध्यस्थं तव परमम् जन्म समुद्राधिपतिः वरुणः एव मम शंसत्वस्मात्[1] स्थानादस्माच्चाश्वोऽजनीति । यत् तव वदन्ति उत्तमं जन्मेति ॥ ४ ॥

इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ।
अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥ ५ ॥

इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानाम् । सनितुः । निऽधाना ।
अत्र । ते । भद्राः । रशनाः । अपश्यम् । ऋतस्य । याः । अभिऽरक्षन्ति । गोपाः ॥ ५ ॥

**वेङ्कट०** [2]वाजिन्! ते अवमार्जनानि यैः[2] पिण्याकादिभिरश्वमवमृजन्ति[3] तानि इमानि । तथा इमानि शालां सम्भक्तुः तव शफानाम् निधानस्थानानि । अत्र तव शोभनाः रशनाः पश्यामि दर्भमयीमौञ्जीश्च[4], यज्ञस्य गोप्त्र्यः[5] याः अभिरक्षन्ति इति ॥ ५ ॥

[2]इति द्वितीयाष्टके तृतीयाध्याये एकादशो वर्गः[2] ॥

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् ।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥ ६ ॥

आत्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा । पतयन्तम् । पतङ्गम् ।
शिरः । अपश्यम् । पथिऽभिः । सुऽगेभिः । अरेणुऽभिः । जेहमानम् । पतत्रि ॥ ६ ॥

**वेङ्कट०** तव शरीरम् मनसा चक्षुःसहितेन[6] समीपेन पश्यामि । अधस्तात् पृथिव्यां पश्यामि दिवा गच्छन्तम् आदित्यम्[7] । आदित्यवदश्वः स्तूयते । ततस्तमेवाधः पश्याम्यश्वरूपमिति । शिरः च तव पश्यामि मार्गैः सुगमैः पांसुवर्जितैः गच्छत्[8] पतनशीलमिति ॥ ६ ॥

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥ ७ ॥

---

१. शंस त्वमस्मा° वि[२] अ[१] लपं. २-२. नास्ति मूको. ३. पिण्डयका° लपं; पिण्यका° वि[१]. ४. दर्भमयीं मौञ्जीं च वि[१] अ[१]. ५. गोप्तारः मूको. ६. समीपे वि[२] अ[१]. ७. नास्ति वि[१] लपं. ८. °च्छन् मूको.

अत्रं । ते । रूपम् । उत्ऽतमम् । अपश्यम् । जिगींषमाणम् । इषः । आ । पदे । गोः ।
यदा । ते । मर्तः । अनुं । भोगम् । आनट् । आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरिति ॥७॥

वेङ्कट० अत्र अश्वत्थे व्रज ऊर्ध्वमेकादशान्मासाद् बद्धस्य तव उत्तमम् रूपम् अहम् अपश्यम् जयशीलम् अन्नस्य पदे गन्तुः । आकारः सप्तम्यर्थस्य स्फुटीकरणार्थः । यदा तव मनुष्यः भोगसाधनं घासम् अग्रतोऽनुप्रापयति अनन्तरम् एव 'ग्रसितृतमः अश्व'! ताः ओषधीः भक्षयसीति[2] ॥ ७ ॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥ ८ ॥

अनुं । त्वा । रथः । अनुं । मर्यः । अर्वन् । अनुं । गावः । अनुं । भगः । कनीनाम् ।
अनुं । व्रातासः । तवं । सख्यम् । ईयुः । अनुं । देवाः । ममिरे । वीर्यम् । ते ॥ ८ ॥

वेङ्कट० रथः अन्नमाहरति सर्वेषाम् अथापि स त्वाम् अनु भवति । न त्वत्सममाहरतीत्यर्थः । एवं मर्यः अपि उदारः त्वाम् अनु भवति । तथा गावः च पयःप्रभृतेर्दात्र्यः त्वाम् अनु भवन्ति । कन्यकानां भगः सौभाग्यं च त्वाम् अनु भवति[3] । सुभगा हि कन्यका पितॄणां विक्रये बहुधनमावहति । अथवा सौभाग्यं पतिभ्यो धनमात्मन आहरति[4] । अश्वरक्षिणो व्राताः तव सख्यम् गताः । तव देवाः वीर्यम् अश्व! अजानन्निति[5] ॥ ८ ॥

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।
देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥ ९ ॥

हिरण्यऽशृङ्गः । अयः । अस्य । पादाः । मनःऽजवाः । अवरः । इन्द्रः । आसीत् ।
देवाः । इत् । अस्य । हविःऽअद्यम् । आयन् । यः । अर्वन्तम् । प्रथमः । अधिऽअतिष्ठत् ॥९॥

वेङ्कट० हिरण्मयैर्मणिभिरलङ्कृतः शिरोभागो हिरण्यशृङ्ग उच्यते । हिरण्यशृङ्गः अयं भवति । तथा अस्य पादाः अयोवद् दृढा भवन्ति । मनोवेगः सूर्यश्च अस्य गमने अवरः भवति । न सममनेन गच्छतीत्यर्थः । देवाः अस्य अदनीयं हविः अभिगच्छन्ति । यः भ्रातृव्यम् प्रथमम् अधितिष्ठति ॥ ९ ॥

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।
हंसाइव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥ १० ॥

---

१-१. °मोऽश्वः मूको. २. °यतीति अ[1]. ३. °भवन्ति वि[1] ल लपं. ४. °तीति अ[1]. ५. °जान वि[1] अ[1].

ईर्मऽअन्तासः । सिलिकऽमध्यमासः । सम् । शूरणासः । दिव्यासः । अत्याः ।
हंसाःऽइव । श्रेणिऽशः । यतन्ते । यत् । आक्षिषुः । दिव्यम् । अज्मम् । अश्वाः ॥ १० ॥

**वेङ्कट०** **यास्कः**—"समीरितान्ताः पृथ्वन्ता वा । सिलिकमध्यमाः[1] संसृतमध्यमाः शीर्षमध्यमा वा । अपि[2] वा[2] शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये [3]चैषां तिष्ठति[3] । इदमपीतरच्छिर एतस्मादेव । समाश्रितान्येतदिन्द्रियाणि भवन्ति । संशूरणासः । शूरः शवतेर्गतिकर्मणः । दिव्या दिविजाः । अत्या अतनाः । ××× हंसा हन्तेर्घ्नन्त्यध्वानम् । श्रेणिश्श्रयतेः । [3]समाश्रिता भवन्ति[3] । यदाक्षिषुर्यदापन् । दिव्यम् अज्ममजनिमाजिम् अश्वाः । अस्त्यादित्यस्तुतिरश्वस्य । आदित्यादश्वो निस्तष्ट[4] इति । 'सूरादश्वं वसवो निरतष्ट' ( ऋ १,१६३,२ ) इत्यपि निगमो भवति" ( ४,१३ ) इति ॥ १० ॥

[5]इति द्वितीयाष्टके तृतीयाध्याये द्वादशो वर्गः[5] ॥

**तव॒ शरी॑रं पतयि॒ष्ण्व॑र्व॒न् तव॑ चि॒त्तं वात॑इव॒ ध्रजी॑मान् ।**
**तव॒ शृङ्गा॑णि॒ विष्ठि॑ता पुरु॒त्रार॑ण्येषु॒ जर्भु॑राणा चरन्ति ॥ ११ ॥**

तव॑ । शरी॑रम् । प॒त॒यि॒ष्णु । अ॒र्व॒न् । तव॑ । चि॒त्तम् । वात॑ःऽइव । ध्रजी॑मान् ।
तव॑ । शृङ्गा॑णि । विऽस्थि॑ता । पु॒रु॒ऽत्रा । अर॑ण्येषु । जर्भु॑राणा । च॒र॒न्ति॒ ॥ ११ ॥

**वेङ्कट०** तव शरीरम् **पतनशीलम्** अर्वन्!, तव चित्तम् **च । त्वम्**[6] वात इव **वेगवान्** । तव शृङ्गाणि **विष्ठितानि बहुधा** अरण्येषु **शत्रूणां वीर्याणि हरमाणानि** चरन्ति ॥ ११ ॥

**उप॒ प्राग॒ाच्छस॑नं वा॒जयर्वा॑ दे॒व॒द्रीचा॒ मन॑सा॒ दीध्या॑नः ।**
**अ॒जः पु॒रो नी॑यते॒ नाभि॑र॒स्यानु॑ प॒श्चात् क॒वयो॑ यन्ति रे॒भाः ॥ १२ ॥**

उप॑ । प्र । अ॒गा॒त् । शस॑नम् । वा॒जी । अर्वा॑ । दे॒व॒द्रीचा॑ । मन॑सा । दीध्या॑नः ।
अ॒जः । पु॒रः । नी॒य॒ते॒ । नाभि॑ः । अ॒स्य॒ । अनु॑ । प॒श्चात् । क॒वय॑ः । य॒न्ति॒ । रे॒भाः ॥ १२ ॥

**वेङ्कट०** उप प्र **गच्छति विशसनस्थानं बलवान् अश्वः देवानञ्चता** मनसा **दीप्यमानः । तस्याश्वस्य बन्धुः** अजः **ललाटे नियुक्तः** पुरः नीयते । अनु यन्ति[7] **तमश्वम्** पश्चात् **क्रान्तदर्शनाः स्तोतारः** ॥ १२ ॥

**उप॒ प्राग॑ात् पर॒मं यत् स॒धस्थ॒मर्वा॒ँ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च ।**
**अ॒द्या दे॒वाञ्जुष्ट॑तमो॒ हि ग॒म्या अथा शास्ते॑ दा॒शुषे॒ वार्या॑णि ॥ १३ ॥**

उप॑ । प्र । अ॒गा॒त् । प॒र॒मम् । यत् । स॒धऽस्थ॑म् । अर्वा॑न् । अच्छ॑ । पि॒तर॑म् । मा॒तर॑म् । च॒ ।
अ॒द्य । दे॒वान् । जुष्ट॑ऽतमः । हि । ग॒म्याः । अथ॑ । आ । शा॒स्ते॒ । दा॒शुषे॑ । वार्या॑णि ॥ १३ ॥

---

१. नास्ति मूको. २-२. चोत्ति[०] वि[२] अ[१]. ३-३. श्रितो भवति मूको. ४. निरतष्ट मूको. ५-५. नास्ति मूको. ६. नास्ति ल. ७. नयन्ति मूको.

**वेङ्कट०** [1]उप प्र अगात्[1] यत् स्वर्गाख्यम् परमम् स्थानम् अर्वान् गमनवान् पितरम् मातरम् चात्मीयौ द्रष्टुम्। ननु न तौ मृतौ 'मातृमन्तं पितृमन्तम्' ( आपश्रौ २०,२,१० ) इति वचनात्। एवं तर्हि दैव्यं पितरं मातरं चाप्तुम्। अथ प्रत्यक्षः। अद्य देवान् पर्याप्ततमः गच्छ। अथाऽयम् आ शास्ते होता यजमानाय वरणीयान्यायुःप्रभृतीनि[2] ॥ १३ ॥

[3]इति द्वितीयाष्टके तृतीयाध्याये त्रयोदशो वर्गः[3]।

## [ १६४ ]

[3]दीर्घतमा औचथ्य ऋषिः। आद्यानामेकचत्वारिंशत ऋचां विश्वे देवा देवता, द्विचत्वारिंश्याः प्रथमस्यार्धर्चस्य वाक्, द्वितीयस्य आपः, त्रयश्चत्वारिंश्या आद्यस्यार्धर्चस्य शकधूमः द्वितीयस्य सोमः, चतुश्चत्वारिंश्याः केशिनः ( अग्निः सूर्यो वायुश्च ), पञ्चचत्वारिंश्या वाक्, षट्चत्वारिंशीसप्तचत्वारिंश्योः सूर्यः, अष्टचत्वारिंश्याः संवत्सरकालचक्रम्, एकोनपञ्चाशत्तमायाः सरस्वती, पञ्चाशत्तमायाः साध्याः, एकपञ्चाशत्तमायाः सूर्यः पर्जन्योऽग्नयो वा, द्विपञ्चाशत्तमायाः सरस्वान् सूर्यो वा। त्रिष्टुप् छन्दः, द्वादशीपञ्चदशीत्रयोविंश्येकोनत्रिंशीषट्त्रिंश्येकचत्वारिंश्यो जगत्यः, द्विचत्वारिंशी प्रस्तारपङ्क्तिः, एकपञ्चाशत्तमा अनुष्टुप्[3]।

**अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः।**
**तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥**

अस्य। वामस्य। पलितस्य। होतुः। तस्य। भ्राता। मध्यमः। अस्ति। अश्नः।
तृतीयः। भ्राता। घृतऽपृष्ठः। अस्य। अत्र। अपश्यम्। विश्पतिम्। सप्तऽपुत्रम् ॥ १ ॥

**वेङ्कट०** अस्य वननीयस्य सूर्यस्य पलितस्य रश्मिभिश्श्वेतैर्युक्तस्य[4] तस्य ह्वातव्यस्य भ्राता मध्यमः अपि अस्ति वायुः व्याप्तः। तृतीयः भ्राता घृतपृष्ठः अग्निः अस्य[5]। एषां मध्ये विशां पतिम् सप्तपुत्रम् अमुम् अपश्यम् [6]आदित्यम्। सप्त[6] आदित्यरश्मय इति वदन्तीति ॥ १ ॥

**सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।**
**त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ २ ॥**

सप्त। युञ्जन्ति। रथम्। एकऽचक्रम्। एकः। अश्वः। वहति। सप्तऽनामा।
त्रिऽनाभि। चक्रम्। अजरम्। अनर्वम्। यत्र। इमा। विश्वा। भुवना। अधि। तस्थुः ॥२॥

**वेङ्कट०** सप्तर्तवः कालरथं संवत्सरैकचक्रम् युञ्जन्ति। तम् एकः अश्वः वहति आदित्यः। सप्त रश्मयो यस्मै रसान् अभिसन्नामयन्ति। तत् त्रिनाभि चक्रम्। त्र्यृतुः संवत्सरः। ग्रीष्मो वर्षा हेमन्त इति नाभयः। अजरम् अनाश्रयम्। यस्मिंश्चक्रे सर्वाणि इमानि भूतानि[7] अधितिष्ठन्ति ॥

---

१-१. नास्ति वि[2]. २. °तीनि इति अ[1]. ३-३. नास्ति मूको. ४. °भिश्चैतैर्यु° वि[2] अ[1].
५. नास्ति लपं. ६-६. नास्ति वि[1] लपं अ[1].

'पञ्चधा च त्रिधा चैव षोढा द्वादशधैव च।
संवत्सरं चक्रवच्च पराभिः कीर्तयत्यृषिः॥' (बृदे ४,३५) इति शौनकः ॥ २ ॥

इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः।
सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम ॥ ३ ॥

इमम्। रथम्। अधि। ये। सप्त। तस्थुः। सप्तऽचक्रम्। सप्त। वहन्ति। अश्वाः।
सप्त। स्वसारः। अभि। सम्। नवन्ते। यत्र। गवाम्। निऽहिता। सप्त। नाम ॥ ३ ॥

**वेङ्कट०** इमम् **कालरथम्** ये अधि **तिष्ठन्ति**[1] **सप्तर्तवः सप्तर्तुचक्रम्** सप्त अश्वाः वहन्ति। सप्त स्वसारः **अश्वाः तस्मिन् रथेऽभिसम्पतन्ति**। यत्र **उदकानां नामकानि** सप्त **ज्योतींषि निहितानि** ॥ ३ ॥

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति।
भूम्या असुरसृगात्मा क्व स्वित् को विद्वांसमुप गात् प्रष्टुमेतत् ॥ ४ ॥

कः। ददर्श। प्रथमम्। जायमानम्। अस्थन्ऽवन्तम्। यत्। अनस्था। बिभर्ति।
भूम्याः। असुः। असृक्। आत्मा। क्व। स्वित्। कः। विद्वांसम्। उप। गात्। प्रष्टुम्। एतत् ॥ ४ ॥

**वेङ्कट०** **चक्रं स्तुत्वाऽऽदित्यमेव स्तौति**। कः **तम्**[2] ददर्श प्रथमम् **एव** जायमानम् **पुरुषम्** अस्थन्वन्तम् **यदि कश्चिद्** अनस्था बिभर्ति। भूम्याः **चालकः तां भूमिमविसृजन्**[3] **तस्या आत्मभूतः** क्व स्विद् **वर्तते**। **तादृशः** कः **इति** कः[4] विद्वांसम् प्रष्टुम् **उपगच्छति**। **भूमिः शरीरम्** 'सूर्य आत्मा जगतस्तस्थुषश्च' ( **ऋ** १०,११५,१ ) **इत्युक्तमिति** ॥ ४ ॥

पाकः पृच्छामि मनसाविजानन् देवानामेना निहिता पदानि।
वत्से बष्कयेऽधि सप्त तन्तून् वि तत्निरे कवय ओतवा उ ॥ ५ ॥

पाकः। पृच्छामि। मनसा। अविऽजानन्। देवानाम्। एना। निऽहिता। पदानि।
वत्से। बष्कये। अधि। सप्त। तन्तून्। वि। तत्निरे। कवयः। ओतवै। ऊँ इति ॥ ५ ॥

**वेङ्कट०** **पक्तव्यप्रज्ञस्तत्** मनसा **निरूपणेऽपि** अविजानन् पृच्छामि देवानाम् एना **निहितानि आवासस्थानानि**। 'द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश एतावन्तो वै देवलोकाः' ( तै ५,१,१०,३-४ ) **इति ब्राह्मणम्**। वत्से **एकहायने** अधि सप्त **दीर्घसूत्राणि तिर्यक्सूत्रैर्वातुम्** कवयः **देवाः वितेनिरे**। 'सप्तर्तवः संवत्सरः' (**माश** ६,६,१,१४) **इति**। **संवत्सर ऋतवो निहितास्तेषामहोरात्रैर्वानमिति** ॥ ५ ॥

[5]**इति द्वितीयाष्टके तृतीयाध्याये चतुर्दशो वर्गः**[5] ॥

---

१. अभिति° **ऊपं**. २. तद् वि° **अ**[१]. ३. °मपिसृ° **अ**[१]. ४. **नास्ति वि° ऊपं**. ५-५. **नास्ति मूको**.

अचिकित्वाञ्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान् ।
वि यस्तस्तम्भ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥ ६ ॥

अचिकित्वान् । चिकितुषः । चित् । अत्र । कवीन् । पृच्छामि । विद्मने । न । विद्वान् ।
वि । यः । तस्तम्भ । षट् । इमा । रजांसि । अजस्य । रूपे । किम् । अपि । स्वित् । एकम् ॥ ६ ॥

**वेङ्कट०** अजानन्नहं विदुषः चित् अत्र कवीन् पृच्छामि ज्ञानाय, न तु विद्वान् विजिगीषया पृच्छामि । यः देवः षट् इमान् ऋतून् वि तस्तम्भ मेधीभूतो[1] धारयति । तस्याजायमानस्य रूपे किम् अपि स्वित् एकम्[2] अस्ति । अनुवृत्तं रूपं किं स्विदस्ति[3] । ऋतुशः काल एक उपलभ्यत इत्युत्तरमिति ॥ ६ ॥

इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥ ७ ॥

इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य । निऽहितम् । पदम् । वेरिति वेः ।
शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य । वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥७॥

**वेङ्कट०** इह मत्समीपे ब्रवीतु, यः[4] एनम् अङ्ग वेत्ति । कञ्चन सम्बोधयत्यङ्गेति । अस्य वामस्य आदित्यस्य गच्छतः यत् पदम् निहितम् यत्रायं पदं निवृत्ते तद् वदतु । संवत्सरेऽस्य पदं निहितमिति । यद्वा संवत्सरः पदमस्य भवति । शिरस्तः क्षीरम् दुहन्ति गावः काश्चित् अस्य स्वभूताः,[5] न तु जघनार्धात् । आच्छादकं तेजोरूपम् वसानाः ता गावः उदकम् पादेन पिबन्ति, न त्वास्येनेति । रश्म्यभिप्रायः । रश्मयो हि विसृजन्त्याददते चोदकमिति ॥ ७ ॥

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥

माता । पितरम् । ऋते । आ । बभाज । धीती । अग्रे । मनसा । सम् । हि । जग्मे ।
सा । बीभत्सुः । गर्भऽरसा । निऽविद्धा । नमस्वन्तः । इत् । उपऽवाकम् । ईयुः ॥ ८ ॥

**वेङ्कट०** काचित् माता स्वपितरम् ऋतुकाले भेजे अभिमुखम् कर्मणा । तस्याग्रतः श्रद्धानेन मनसा सङ्गता [6]आसीत् । ततोऽनन्तरं[6] गृहीतरसा पितुः सकाशान्मिथुनीभावेन बीभत्समाना पित्रा च मैथुनानन्तरं परित्यक्ताऽभूत् । ततः अन्नवन्तो मनुष्या दरिद्रैः उपद्रवस्तत्यताम् अगच्छन्निति । आदित्यः पृथिवीमभिवर्षति वर्षासु, तत्रैतदुक्तमिति ॥ ८ ॥

---

१. मेधिभू° वि[1] लपं; वेदीभू° अ[1]; मेधीभू° ल. २. नास्ति मूको. ३. चिदस्ति अ. ४. नास्ति वि[1] लपं. ५. भूग वि[1,2] लपं. ६-६. सीता सीतास्ततो° वि[1] लपं सीतासीतास्तुतो° वि[3] अ[1]; सीनाऽऽसीत् । ततो° क.

युक्ता मातासीद् धुरि दक्षिणाया अतिष्ठद् गर्भो वृजनीष्वन्तः ।
अमीमेद् वत्सो अनु गामपश्यद् विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥

युक्ता । माता । आसीत् । धुरि । दक्षिणायाः । अतिष्ठत् । गर्भः । वृजनीषु । अन्तः ।
अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥

वेङ्कट० काचित् माता दक्षिणस्याम् धुरि पुत्रेण युक्ता आसीत् । अथैतेन[1] तस्यां मातरि निधास्यमानो गर्भः शोषिकासु कासुचिद्[2] दीप्तिषु वर्तत इति । दक्षिणायने वृष्ट्यन्मुखमादित्यं दृष्ट्वा वदति । शब्दं करोति कश्चन वत्सः, अनु पश्यति च गाम् मातरम् त्रिषु योजनेषु स्थितां नानारूपाम् । अन्तरिक्षेण व्यवहिता भूमिरादित्यस्य त्रिषु योजनेषु भवति । योजनशब्दो योगपर्यायः । '[3]यद्वा अस्यां[3] विश्वं भूतम् अधि प्रजायते तेनेयं चित्रा' ( तै २,४,६,१ ) इति ब्राह्मणमिति ॥ ९ ॥

तिस्रो मातॄस्त्रीन् पितॄन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥ १० ॥

तिस्रः । मातॄः । त्रीन् । पितॄन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्ति ।
मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्वऽविदम् । वाचम् । अविश्वऽमिन्वाम् ॥ १० ॥

वेङ्कट० दिवमन्तरिक्षं भूमिं च [3]तिस्रः मातॄः तासां† पुत्रभूतः कश्चित् त्रींश्च पितॄन् सूर्यं वायुमग्निं च धारयन् ऊर्ध्वं तिष्ठति । न च तम् अव ग्लपयन्ति[3] तेन[4] ध्रियमाणाः । स [5]चायमादित्यः यस्य[5] अमुष्य पृष्ठे विश्वस्य वेदयित्रीं सर्वैश्चाऽज्ञायमानपरिमाणां[6] वाचम् स्थिताम्[7] कथयन्ति । सर्वा वागादित्ये वर्तत इत्यृषयः कथयन्ति ॥ १० ॥

[8]इति द्वितीयाष्टके तृतीयाध्याये पञ्चदशो वर्गः[8] ॥

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥ ११ ॥

द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य ।
आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥ ११

वेङ्कट० द्वादशमासारं तत् चक्रम् नहि कदाचित् जरणाय भवति । तदिदं चक्रम् आदित्यस्य स्वभूतं दिवं परितः पुनःपुनर्वर्तते । अस्मिंश्च[9] चक्रे पुत्रस्थानीयाः अहोरात्रात्मकत्वाद् मिथुनभूताः[10] सप्त शतानि विंशतिः च अहोरात्राणां आ[11] तिष्ठन्ति । तमिममर्थमग्नेर्निवेदयति । सिद्धार्थान्वाख्यानेषु काञ्चन देवतामपि निवेशयन्तीति[12] वक्ष्यामः ॥ ११ ॥

---

१. अथ तेन वि[2] अ[1]. २. काचिद् लपं. ३-३. नास्ति वि[1] लपं. † तेषां वि[2] अ[1] ल. ४. न वि[1] लपं. ५-५. °त्यस्तस्य वि[1,2] अ[1]. ६. सर्वैस्वाज्ञाय° लपं. ७. स्वित वि[1,2] अ[1] ल; स्थित लपं. ८-८. नास्ति मूको. ९. तस्मिंश्च मूको. १०. मिथः वि[2] अ[1]. ११. नास्ति मूको. १२. निवेदय° वि[2] अ[1].

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥ १२ ॥

पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् । दिवः । आहुः । परे । अर्धे । पुरीषिणम् ।
अथ । इमे । अन्ये । उपरे । विऽचक्षणम् । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥ १२ ॥

**वेङ्कट०** पञ्चर्तुपादम् पितरम् द्वादशमासाकृतिम्[1] दिवः आहुः परस्मिन् अर्धे स्थितम् उदकवन्तम् । अथ इमे अन्ये दिवः उपरे मूले स्थितं विद्रष्टारं सप्तर्तुचक्रे षड्ऋत्वरे अर्पितम् आहुः । सोऽयं देवताभूतः पृथिव्याः पर्यन्ते दृश्यते, ततो दिवीत्युभयथावादः ॥ १२ ॥

पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥ १३ ॥

पञ्चऽअरे । चक्रे । परिऽवर्तमाने । तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा ।
तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । शीर्यते । सऽनाभिः ॥ १३ ॥

**वेङ्कट०** हेमन्तशिशिरयोः समासेन पञ्चारे संवत्सरचक्रे परिवर्तमाने तस्मिन् आ तिष्ठन्ति सर्वाणि भुवनानि । तस्य चक्रस्य अक्षभूतः [2]आदित्यः न कदाचित् तप्यते न नमति भारमहत्त्वेऽपि, न च शीर्यते चिरात् एव आरभ्य[2] नाभिसहितः । लौकिकं चक्रं नाभिपरिवर्तने शीर्णं भवति ॥ १३ ॥

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।
सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥ १४ ॥

सऽनेमि । चक्रम् । अजरम् । वि । ववृते । उत्तानायाम् । दश । युक्ताः । वहन्ति ।
सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् । तस्मिन् । आर्पिता । भुवनानि । विश्वा ॥ १४ ॥

**वेङ्कट०** मुहूर्ताः नेमयस्तद्युक्तं जरावर्जितं कालचक्रम् वि वर्तते । [3]युक्ताः दश[3] दिशस्तच्चक्रम् अस्यां भूम्याम् वहन्ति । सूर्यस्य दर्शनसाधनं तच्चक्रम् उदकेन परिवृतम् एति । तस्मिन् सर्वाण्येव भुवनानि अर्पितानि । [4]सूर्यस्तस्मिंश्चक्रेऽर्पितैः अहोरात्रैः[4] सर्वाणि भूतानि[5] पश्यति ॥ १४ ॥

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥ १५ ॥

---

१. °तिम् दिति तदिदं चक्रमादित्यस्य स्वभूतां दिवं परितः पुनः पुनर्वर्तते तस्मिंश्चक्रे पुत्रं वि[1] लपं. २-२. नास्ति वि[1] लपं. ३-३. नास्ति अ[1]. ४-४. °स्तषरिमैंश्च° वि[1] अ[1]. ५. भुवनानि वि लपं.

साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् । षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति ।
तेषाम् । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥ १५ ॥

**वेङ्कट०** सहजातानां मिथुनभूतानां सप्तमम् ऋतुम् एकजम् आहुः। षट् एव द्वाभ्यां मासाभ्यां संयुक्ताः सर्वस्य द्रष्टारः संवत्सराद् देवाज्जाता इति। तेषाम् ऋतूनां सम्बन्धीनि सर्वेषाम् इष्टानि ऋतुलिङ्गानि स्वेस्वे काले विहितानि इमानि[1], स्थात्रे संवत्सराय पुनःपुनरावर्तन्ते रूपशः विकृतानि, नानारूपाणि। ऋतुलिङ्गानि संवत्सरे पुनःपुनरावर्तन्त इति॥ १५ ॥

[2]इति द्वितीयाष्टके तृतीयाध्याये षोडशो वर्गः[2] ॥

**स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।**
**कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत् ॥ १६ ॥**

स्त्रियः । सतीः । तान् । ऊँ इति । मे । पुंसः । आहुः । पश्यत् । अक्षण्ऽवान् । न । वि । चेतत् । अन्धः ।
कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत । यः । ता । विऽजानात् । सः । पितुः । पिता । असत् ॥ १६ ॥

**वेङ्कट०** स्त्रीपुंविभागः शरीरकृतः, नात्मभूते सूर्ये स विशेषो भवति इति पश्यन् वदति[3]। अनात्मविदाम् स्त्रियः सतीः इमाः मम तत्त्वविदः पुंसः आहुः। तमिममर्थं चक्षुष्मानेव जानाति प्राज्ञः, न पुनः अन्धः वि जानाति। विद्वान् यः कस्यचित् पुत्रः भवति सः इममर्थम् आ जानाति। यः तान्येतानि भूतानि एवं वेद सः ज्ञानातिशयेन पितुः पिता भवति, न तु[4] पुत्र इति ॥ १६ ॥

**अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।**
**सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अन्तः ॥ १७ ॥**

अवः । परेण । परः । एना । अवरेण । पदा । वत्सम् । बिभ्रती । गौः । उत् । अस्थात् ।
सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् । क्व । स्वित् । सूते । नहि । यूथे । अन्तरिति ॥

**वेङ्कट०** परेण लोकेन अवः तथा परः च एनेन अवरेण लोकेन। द्यावापृथिव्योर्मध्यत इत्यर्थः। तत्र काचिद् गौः पदा कञ्चन[5] वत्सम् बिभ्रती उदतिष्ठद् अहराख्यम्। सा च गौः कञ्चिदर्धम् अहराख्यम् अञ्चन्ती[6] राज्याख्यम् कम् चित् अर्धम् अतीत्य प्रादुरभूत्। सा गौः तं वत्सं क्व स्वित् जनयतीति प्रश्नः। न तावत् गवां यूथमध्ये प्रसूत इत्युद्यन्तम् आदित्यं दृष्ट्वा वदति ॥ १७ ॥

**अवः परेण पितरं यो अस्यानुवेद पर एनावरेण ।**
**कवीयमानः क इह प्र वोचद् देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥**

---

१. नास्ति वि[1] लपं. २-२. नास्ति मूको. ३. वदन्ति वि[1] लपं. ४. नास्ति वि[2]. ५. कञ्च मूको ६. नास्ति वि[2]; अञ्चति वि[1] लपं.

अत्रः । परेण । पितरम् । यः । अस्य । अनुऽवेद । परः । एना । अवरेण ।
कविऽयमानः । कः । इह । प्र । वोचत् । देवम् । मनः । कुतः । अधि । प्रऽजातम् ॥ १८ ॥

**वेङ्कट०** अस्य वत्सस्य पितरम् परस्य लोकस्य अवस्तात्स्थितं[1] यः अनुवेद परस्ताच्च स्थितम् अस्य अवरस्य[2] लोकस्य, स कविमात्मानं कुर्वन् कः इह आगत्य तत् ब्रूयात्तस्य लक्षणम्। देवनशीलम् मनः कुतः अधि प्रजातम् इति प्रश्नेन[3] सूचयत्युदितादादित्याज्जायमानः। 'तस्मादन्तरेमौ लोकौ यन्। सर्वेषु सुवर्गेषु[4] लोकेष्वभितपन्नेति' (तैब्रा १,२,४,१) इति ब्राह्मणम् ॥ १८ ॥

ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः ।
इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥

ये । अर्वाञ्चः । तान् । ऊँ इति । पराचः । आहुः । ये । पराञ्चः । तान् । ऊँ इति । अर्वाचः । आहुः ।
इन्द्रः । च । या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ॥ १९ ॥

**वेङ्कट०** ये अर्वाञ्चः रश्मयः तान् एव पुनः पराचः आहुः। तथा ये पराञ्चः तान् एव अर्वाचः आहुः। इन्द्रः च। आदित्य इन्द्रः। स च सोमश्च[5] यानि तानि तथा चक्रथुः। तानि तेजांसि धुरा युक्ताः अश्वाः इव रथान् लोकान् वहन्ति। आदित्यचन्द्रमसावलातचक्रवदितरेतरं तेजोभिरापूरयन्तौ परिवर्तेते[6] तेजोभिर्जगद्धारयन्ताविति ॥ १९ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ २० ॥

द्वा । सुऽपर्णा । सऽयुजा । सखाया । समानम् । वृक्षम् । परि । सस्वजाते इति ।
तयोः । अन्यः । पिप्पलम् । स्वादु । अत्ति । अनश्नन् । अन्यः । अभि । चाकशीति ॥ २० ॥

**वेङ्कट०** द्वौ सुपतनौ आदित्यश्च सोमश्च[7] सह लोकनिर्वहणे युञ्जानौ सखायौ एकम् वृक्षम् संवत्सरम् आश्रित्य तिष्ठतः। तयोः एकः तस्य[8] स्वादु फलम् अत्ति। अनश्नन् अन्यः सोमः तम् अभि विपश्यति। सोममत्तीन्द्र इति ॥ २० ॥

[9]इति द्वितीयाष्टके तृतीयाध्याये सप्तदशो वर्गः[9] ॥

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥ २१ ॥

यत्र । सुऽपर्णाः । अमृतस्य । भागम् । अनिऽमेषम् । विदथा । अभिऽस्वरन्ति ।
इनः । विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥ २१ ॥

---

१. अधस्ता° अ[1]. २. अपर° वि[2] अ[1]. ३. नास्ति अ[1]. ४. नास्ति वि[1] लपं. ५. सोम ल शोधः. ६. °वर्तयेते वि[1] लपं. ७. सोम लपं. ८. वृक्षस्य वि[2] अ[1]. ९-९. नास्ति मूको.

**वेङ्कट०** यत्र सुपतनाः आदित्यरश्मयः अमृतस्य भागम् अनिमेषम् वेदनेन अभि प्रयच्छन्ति । ईश्वरः सर्वेषां भूतानां गोपायिताऽऽदित्यः सः मा धीरः पाकम् अत्र आ विवेश आदित्यः । उदकं रश्मयः सम्भरन्ति । स चाज्ञान् मनुष्यान् आत्मनाऽधितिष्ठति ॥ २१ ॥

यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥ २२ ॥

यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे ।
तस्य । इत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥ २२ ॥

**वेङ्कट०** यस्मिन् आदित्यवृक्षे मधुन उदकस्यात्तारः सुपतनाः पक्षिणो रश्मयः निविशन्ते । यस्माच्च अधि विश्वे सुपर्णाः सुवते । तस्य एव वृक्षस्य आहुः[1] पिप्पलम् स्वादुरसम् । तस्य अग्रे स्थितम् तत् पिप्पलम्[2] न उद् व्याप्नोति यः पितरम् आदित्यम् न [3]वेद इति[3] अनादित्यविदो निन्दा ॥ २२ ॥

यद् गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद् वा त्रैष्टुभं निरतक्षत ।
यद् वा जगज्जगत्याहितं पदं य इत् तद् विदुस्ते अमृतत्वमानशुः ॥ २३ ॥

यत् । गायत्रे । अधि । गायत्रम् । आऽहितम् । त्रैस्तुभात् । वा । त्रैस्तुभम् । निःऽअतक्षत ।
यत् । वा । जगत् । जगति । आऽहितम् । पदम् । ये । इत् । तत् । विदुः । ते । अमृतऽत्वम् । आनशुः ॥

**वेङ्कट०** यत् गायत्रे छन्दसि अधि निहितम् गायत्रम् । यत् वा पदम् [4]त्रैष्टुभात् छन्दसः[4] त्रैष्टुभम् निरतक्षत [5]पृथगकुर्वन्[5] । यत् वा जङ्गमस्वभावात् जगति आहितम् । ये एव तत् पदम् विदुः त एव अमृतत्वम् आनशुः । त्रीणि वैदिकानि छन्दांसि । तानि चामुमादित्यं वहन्ति । तस्मादेवादित्यो गायत्रस्त्रैष्टुभो जागतश्च भवति । यद्वा गायत्रादीनि सामानि वहन्ति । तदानीं जगदिति साम्नो विशेषणादुपपन्नं लिङ्गमिति ॥ २३ ॥

गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
वाकेन वाकं द्विपदा चतुष्पदाऽक्षरेण मिमते सप्त वाणीः ॥ २४ ॥

गायत्रेण । प्रति । मिमीते । अर्कम् । अर्केण । साम । त्रैस्तुभेन । वाकम् ।
वाकेन । वाकम् । द्विऽपदा । चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ॥ २४ ॥

**वेङ्कट०** प्रसङ्गादक्षरप्रशंसा क्रियते । ऋक्संहितायां कियन्तो मन्त्रा इति जिज्ञासमानो गायत्रेण पादेन मन्त्रं परिच्छिन्द्यात् । बहूनि हि गायत्राणि पदान्युष्णिक्ककुभोरनुष्टुभि पङ्क्त्यां च सम्भवात् ।

---

१. नास्ति वि' लपं.　२. फलं वि' अ'.　३-३. नास्ति वि' लपं.　४-४. ष्टुभाच्छा° अ'.
५-५. थक्कुर्व° अ'.

साम्नः परिच्छेदः अर्केण भवति। संस्थितायामृचि साम च संस्थितं भवति। अथ कियन्ति छन्दांसीति जिज्ञासुस्त्रैष्टुभं छन्दः प्रथमं प्रतिपद्येत। बहूनि त्रैष्टुभानि वाक्यानि भवन्ति। ततोऽवशिष्टं परिच्छिन्द्यात्। अथ सूक्तं परिच्छेत्तुकामः द्विपदा त्रिपदा चतुष्पदा चर्चा परिच्छिद्य द्वृचं तृचं चतुर्ऋचमिति ब्रूयात्। अथ किमियं गायत्री, उत्तोष्णिगिति परिच्छेत्तुमुपक्रान्ताः सप्त छन्दांसि अक्षरेण मिमते परिच्छिन्दन्ति। अष्टावक्षराणि[1] भवन्ति तस्मादियं गायत्रीति ॥ २४ ॥

जग॑ता॒ सिन्धुं॑ दि॒व्य॑स्तभाय॒द् र॑थंत॒रे सूर्यं॒ पर्य॑पश्यत् ।
गा॒य॒त्रस्य॑ स॒मिध॑स्ति॒स्र आ॑हु॒स्ततो॑ म॒ह्ना प्र रि॑रिचे महि॒त्वा ॥ २५ ॥

जग॑ता । सिन्धु॑म् । दि॒वि । अ॒स्त॒भा॒य॒त् । र॒थ॒म्ऽत॒रे । सूर्य॑म् । परि॑ । अ॒प॒श्य॒त् ।
गा॒य॒त्रस्य॑ । स॒म्ऽइध॑ः । ति॒स्रः । आ॒हु॒ः । तत॑ः । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वा ॥ २५ ॥

**वेङ्कट०** गायत्रं प्रशंसति[2]। गायत्रं प्रवृद्धाक्षरं भूत्वा जगता[3] अन्तरिक्ष आदित्ये वा उदकम् अस्तभायत्, रथन्तरे च सूर्यम् परि अपश्यत् यथा सूर्यो रथन्तरे तिष्ठति तथाऽकरोत्। जागतं सामोदकं धारयति, रथन्तरमादित्यमिति। गायत्रस्य साम्नः समेधिकाः तिस्रः आहुः गायत्रीं त्रिष्टुभं जगतीमिति। ततः तस्यैव महत्त्वं प्रकर्षेण रिरिचे। चतुर्षु छन्दःसु त्रीणि गायत्रीं समेधयन्ति। तां त्रिष्टुप् त्रिभिरक्षरैरुपैत्। सैकादशाक्षरा भूत्वा प्राजायत। तां जगत्येकेनाक्षरेणोपैत्। सा[4] द्वादशाक्षरा इति। अनुष्टुप्[4] गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति[5] ॥ २५ ॥

[6]इति द्वितीयाष्टके तृतीयाध्याये अष्टादशो वर्गः[6] ॥

उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभीद्धो॑ घ॒र्मस्तदु॒ षु प्र वो॑चम् ॥ २६ ॥

उप॑ । ह्व॒ये॒ । सु॒ऽदुघा॑म् । धे॒नुम् । ए॒ताम् । सु॒ऽहस्त॑ः । गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒ना॒म् ।
श्रेष्ठ॑म् । स॒वम् । स॒वि॒ता । सा॒वि॒ष॒त् । न॒ः । अ॒भिऽइ॑द्धः । घ॒र्मः । तत् । ऊँ इति॑ । सु । प्र । वो॒च॒म् ॥ २६ ॥

**वेङ्कट०** माध्यमिका वाग् गोरूपा भवति तां स्तौति। उप ह्वये सुदोहाम् धेनुम् एताम्। कल्याणहस्तः गोधुक् अपि च दोग्धि एनाम् श्रेष्ठम् सवम्। सविता प्रसौतु नः प्रेरयतु अस्मान्। अभीद्धः अयं घर्मः। ततोऽहमित्थं सु प्र ब्रवीमि दोहार्थम्[7] ॥ २६ ॥

हि॒ङ्कृ॒ण्व॒ती व॑सु॒पत्नी॒ वसू॑नां व॒त्समि॒च्छन्ती॒ मन॑सा॒भ्यागा॑त् ।
दु॒हाम॒श्विभ्यां॒ पयो॑ अ॒घ्न्येयं सा व॑र्धतां मह॒ते सौभ॑गाय ॥ २७ ॥

हि॒ङ्ऽकृ॒ण्व॒ती । व॒सु॒ऽपत्नी॑ । वसू॑नाम् । व॒त्सम् । इ॒च्छन्ती॑ । मन॑सा । अ॒भि । आ । अ॒गा॒त् ।
दु॒हाम् । अ॒श्विऽभ्या॑म् । पय॑ः । अ॒घ्न्या । इ॒यम् । सा । व॒र्ध॒ता॒म् । म॒ह॒ते । सौभ॑गाय ॥ २७ ॥

---

१. नास्ति अ[1] २. नास्ति वि[1] लपं. ३. नास्ति मूको. ४-४ स द्वादशाक्षरः सुरेत्यनुष्टुप् च वि[2] अ[1]. ५. पदेन पदेनानुष्टुभो भवतीति वि[2] अ[1]. ६-६. नास्ति मूको. ७. दोहाय अ[1].

**वेङ्कट०** 'वत्ससन्दर्शनात् हिङ्कृण्वती' **वसूनां पालयित्री** वत्सम् मनसा इच्छन्ती अभि आ अगात् । **दुग्धाम्** अश्विभ्याम् पयः **अहन्तव्या गौः** इयम् । सा **इयम् अस्माकम्** महते **सौभाग्याय** वर्धताम् ॥ २७ ॥

**गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।**
**सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥ २८ ॥**

गौः । अमीमेत् । अनु । वत्सम् । मिषन्तम् । मूर्धानम् । हिङ् । अकृणोत् । मातवै । ऊँ इति ।
सृक्वाणम् । घर्मम् । अभि । वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ २८ ॥

**वेङ्कट०** मिषन्तम्[2] वत्सम् **प्रति गौः शब्दं करोति** ॥ २८ ॥

**अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।**
**सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद् भवन्ती प्रति वव्रिमौहत ॥ २९ ॥**

अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता । मिमाति । मायुम् । ध्वसनौ । अधि । श्रिता ।
सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यम् । विऽद्युत् । भवन्ती । प्रति । वव्रिम् । औहत ॥ २९ ॥

**वेङ्कट०** येन **माध्यमिका वाग् देवी परिवृता शब्दं करोति ध्वंसने मेघे** अधि श्रिता । सा **कर्मभिः** नि **करोति** मर्त्यम् । विद्युत् भवन्ती **प्रत्यूहते च स्वं रूपम्** [3]**तिरो भवतीति**[3] ॥ २९ ॥

**अनच्छये तुरगातु जीवमेजद् ध्रुवं मध्य आ पस्त्यानाम् ।**
**जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ३० ॥**

अनत् । शये । तुरऽगातु । जीवम् । एजत् । ध्रुवम् । मध्ये । आ । पस्त्यानाम् ।
जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ ३० ॥

**वेङ्कट०** **यत् प्राणिति** जीवति **च तूर्णगमनं भूत्वा रात्रिषु शेते । तथा यदेजति तत् गृहाणाम् मध्ये** आ **गच्छति । किञ्चासौ**[4] जीवः रात्रिषु मृतस्य **पुरुषस्य दिवा भुक्तैरन्नैः धार्यमाणो वर्तते । अमरणधर्मा मरणधर्मणा समानस्थानः शरीरेणेति** रात्रिं **स्तौति** ॥ ३० ॥

[5]**इति द्वितीयाष्टके तृतीयाध्याये एकोनविंशो वर्गः**[5] ॥

**अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।**
**स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ ३१ ॥**

अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥ ३१ ॥

---

१-१. नास्ति वि[1]; ··· कृण्वती अ[1]. २. मिषर्ग वि[1] लपं. ३-३. °वन्ती° वि[1] लपं. ४. नास्ति वि[1] ल. ५-५. नास्ति मूको.

वेङ्कट० तथा राश्यां वर्तमानायामुदितं सूर्यं स्तौति । अत्र वाजसनेयकम् — " 'अपश्यं गोपामनिपद्यमानम्' इति । एष वै गोपा[1] य एव तपति । एष हीदं सर्वं गोपायति । अथो न निपद्यते तस्मादाह — 'अपश्यं गोपामनिपद्यमानमिति' 'आ च परा च पथिभिश्चरन्तम्' इति । आ च ह्येष परा च दर्वैः[2] पथिभिश्चरति । 'स[3] सध्रीचीः स विषूचीर्वसानः' इति । सध्रीचीश्च[4] ह्येषः[5] विषूचीश्च दिशो वस्ते । अथो[6] रश्मींश्च । 'आ वरीवर्ति भुवनेष्वन्तः' इति । पुनःपुनर्ह्येष एषु लोकेषु वरिवर्त्यमानश्चरति" ( माश १४,१,४,९;१० ) इति ॥ ३१ ॥

**य ईं च॒कार॒ न सो अ॒स्य वे॑द॒ य ईं द॒दर्श॒ हिरु॒गिन्नु तस्मा॑त् ।**
**स मा॒तुर्योना॒ परि॑वीतो अ॒न्तर्ब॑हुप्र॒जा निर्ऋ॑ति॒मा वि॑वेश ॥ ३२ ॥**

यः । ईम् । च॒कार॑ । न । सः । अ॒स्य । वे॒द॒ । यः । ईम् । द॒दर्श॑ । हिरु॑क् । इत् । नु । तस्मा॑त् ।
सः । मा॒तुः । योना॑ । परि॑ऽवीतः । अ॒न्तः । ब॒हु॒ऽप्र॒जाः । निःऽऋ॑तिम् । आ । वि॒वे॒श॒ ॥ ३२ ॥

वेङ्कट० यः एतच्छरीरं पिता चकार न सः अमुम् वेत्ति जीवं कुतोऽयमागच्छति[7] कीदृश इति । यः च एतत् पश्यति सख्यादिः[8] तस्मात् अपि अयमन्तर्हित एव भवति । सः अयं जीवः अन्तः मातुः योनौ जरायुपरिवृतः अनेकजननः कृच्छ्रम् आपद्यते । यद्येनं जानाति ततो मुच्यत इति ॥ ३२ ॥

**द्यौर्मे॑ पि॒ता ज॑नि॒ता नाभि॒रत्र॒ बन्धु॑र्मे मा॒ता पृ॑थि॒वी म॒हीयम् ।**
**उ॒त्ता॒नयो॑श्च॒म्वो॒३॒॑र्योनि॑र॒न्तरत्रा॑ पि॒ता दु॑हि॒तुर्गर्भ॒माधा॑त् ॥ ३३ ॥**

द्यौः । मे॒ । पि॒ता । ज॒नि॒ता । नाभिः॑ । अत्र॑ । बन्धुः॑ । मे॒ । मा॒ता । पृ॒थि॒वी । म॒ही । इ॒यम् ।
उ॒त्ता॒नयोः॑ । च॒म्वोः॑ । योनिः॑ । अ॒न्तः । अत्र॑ । पि॒ता । दु॒हि॒तुः । गर्भ॑म् । आ । अ॒धा॒त् ॥ ३३ ॥

वेङ्कट० द्यौः मे पिता[9] जनयिता वर्षणान्मम सन्नहनकृत् । शुक्रस्थं[9] तेजो दिवि भवति । 'पार्थिवैर्धातुभिः शरीरं बध्यते । ततश्च महती इयम् पृथिवी मम बन्धुः माता भवति । उत्तानयोः द्यावापृथिव्योः मध्ये अवकाशरूपमन्तरिक्षं भवति । तत्र दुहितुः अद्भ्यः पृथिवी जातेति पर्जन्यस्य दुहिता पृथिवी भवति । स तस्याः गर्भम् दधाति । ततः शुक्रशोणितसंसर्गाज्जीवः प्रादुर्भवतीति' ॥ ३३ ॥

**पृ॒च्छामि॑ त्वा॒ पर॒मन्तं॑ पृथि॒व्याः पृ॒च्छामि॒ यत्र॒ भुव॑नस्य॒ नाभिः॑ ।**
**पृ॒च्छामि॑ त्वा॒ वृष्णो॒ अश्व॑स्य॒ रेतः॑ पृ॒च्छामि॑ वा॒चः प॑र॒मं व्यो॑म ॥ ३४ ॥**

पृ॒च्छामि॑ । त्वा॒ । पर॑म् । अन्त॑म् । पृ॒थि॒व्याः । पृ॒च्छामि॑ । यत्र॑ । भुव॑नस्य । नाभिः॑ ।
पृ॒च्छामि॑ । त्वा॒ । वृष्णः॑ । अश्व॑स्य । रेतः॑ । पृ॒च्छामि॑ । वा॒चः । प॒र॒मम् । विऽओ॑म ॥ ३४ ॥

---

१. °पा देवानाम् मूको. २. दिव्यैः वि[1,2] ल लपं. ३. नास्ति अ[1]. ४. °श्च स अ[1]. ५. अध्येव लपं. ६. अथो वि[1,2] ल लपं. ७. °मागतः वि[2] अ[1]. ८. सङ्ख्यादि वि[1] ल लपं. ९-९. नास्ति वि लपं.

वेङ्कट० द्यौर्मे[1] पितेति पृथिव्याः प्रसङ्गात् अयं प्रश्नः। परमः अन्तः कास्याः पृथिव्याः भवति यत्र इयं सन्तिष्ठते। सर्वस्य जगतः धारकः यत्र वियत इति द्वितीयः प्रश्नः। पृच्छामि त्वा वर्षितुः कालाश्वस्य किं रेतः इति। पृच्छामि वाचः परमम् व्योम। केयं सर्वा वाग् वर्तत इति ॥ ३४ ॥

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥

इयम्। वेदिः। परः। अन्तः। पृथिव्याः। अयम्। यज्ञः। भुवनस्य। नाभिः।
अयम्। सोमः। वृष्णः। अश्वस्य। रेतः। ब्रह्मा। अयम्। वाचः। परमम्। विऽओम ॥ ३५ ॥

वेङ्कट० यद्यपि क्वचित्संस्थिता[2] भवति पृथिवी न स देशो दर्शयितुं शक्यते, मन्त्रेण परिगृहीतायां वेद्यां सन्निधानात् तत्र सर्वा सन्तिष्ठते। अयम् यज्ञः [3]सर्वस्य जगतो धारकः[3] इति। 'अग्नौ प्रास्ताहुतिः [4]सम्यगादित्यम् उपतिष्ठते[4]। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ( मैउ ६,३७ ) इति मैत्रायणी-ब्राह्मणं भवति। क देवदत्तो भवतीति पृच्छतः अयं[5] देवदत्तः इति अपि[5] उत्तरं सङ्गच्छते। अन्ये तु[4] पठन्ति 'पृच्छामि त्वा भुवनस्य नाभिम्' ( तै ७,४,१८,२ ) इति। [3]अयं सोमः वर्षितुः कालाश्वस्य रेतः[3]। ब्रह्मा अयं वाचः परमं व्योम इत्यादित्यं सर्वस्या एव वाचः स्थानमाह ॥ ३५ ॥

[3]इति द्वितीयाष्टके तृतीयाध्याये विंशो वर्गः[3] ॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥ ३६ ॥

सप्त। अर्धऽगर्भाः। भुवनस्य। रेतः। विष्णोः। तिष्ठन्ति। प्रऽदिशा। विऽधर्मणि।
ते। धीतिऽभिः। मनसा। ते। विपःऽचितः। परिऽभुवः। परि। भवन्ति। विश्वतः ॥ ३६ ॥

वेङ्कट० सप्त आदित्यरश्मयः अग्रप्रदेशेषु भुवनस्य कारणमुदकं[6] गर्भिताः विष्णोः आदित्यस्य तिष्ठन्ति योजनेन विविधे कर्मणि। ते कर्मभिः पुरुषं संयोजयन्ति। मनसा च[7] प्राज्ञाः परितोभवनशीलाः सर्वत एव भवन्ति ॥ ३६ ॥

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि।
यदा मागन् प्रथमजा ऋतस्यादिद् वाचो अश्नुवे भागमस्याः ॥ ३७ ॥

न। वि। जानामि। यत्ऽइव। इदम्। अस्मि। निण्यः। सम्ऽनद्धः। मनसा। चरामि।
यदा। मा। आ। अगन्। प्रथमऽजाः। ऋतस्य। आत्। इत्। वाचः। अश्नुवे। भागम्। अस्याः ॥

---

१. नास्ति वि[१] लपं. २. क संस्थिता वि[१] लपं. ३-३. नास्ति मूको. ४-४. °र्त्यं तिष्ठ° अ[१]. ५. नास्ति वि[२] अ[१]. ६. कारणभूतमु° वि[२] अ[१]. ७. नास्ति अ[१].

वेङ्कट० न वि जानामि यद्यप्यहम् इदम् अस्मि प्रकृतेः परः विषयपरेण मनसा सम्यग्बद्ध. अन्तर्हितः चरामि। यदा पुनः सर्वस्य सत्यभूतस्य प्रथमं जनयिता जगतः स्रष्टाऽऽदित्यः माम् प्रति आ जगाम, ततोऽनन्तरम् एव अस्याः सर्वस्याः वाचः भजनीयं ब्रह्म अश्नुवे इति ज्ञातात्मस्वरूप आहेति ॥ ३७ ॥

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।
ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम् ॥ ३८ ॥

अपाङ्। प्राङ्। एति। स्वधया। गृभीतः। अमर्त्यः। मर्त्येन। सऽयोनिः।
ता। शश्वन्ता। विषूचीना। विऽयन्ता। नि। अन्यम्। चिक्युः। न। नि। चिक्युः। अन्यम् ॥

वेङ्कट० अमरणधर्मा मरणधर्मणा समानस्थानो जीवः अन्नेन सह[1] धार्यमाणः अपाङ् प्राङ् च गच्छति। आदित्यो भूत्वा दिवि प्राङ्, जीवो भूत्वा पुरुषेऽपाङ्[2]। ताविमौ नित्यौ विश्वगञ्चनौ विविधं च देवमनुष्यादिषु गच्छन्तौ भवतः। तयोः अन्यम् आदित्यं सर्वे निश्चिन्वन्ति प्रत्यक्षं पश्यन्तः, न नि चिक्युः अन्यम् प्रकृतिसंसृष्टं घृतमिव पयसि निगूढमिति ॥ ३८ ॥

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥ ३९ ॥

ऋचः। अक्षरे। परमे। विऽओमन्। यस्मिन्। देवाः। अधि। विश्वे। निऽसेदुः।
यः। तत्। न। वेद। किम्। ऋचा। करिष्यति। ये। इत्। तत्। विदुः। ते। इमे। सम्। आसते ॥

वेङ्कट० अथादित्यस्य यद् वाचकमक्षरं तत् स्तौति[3]। यस्मादक्षरणस्वभावात् सर्वा ऋचः विनिर्गताः। यस्मिन् च सर्वे एव देवाः ऋक्षु दृश्यमाना अन्ये च वर्तन्ते। यः तत् अक्षरम् न वेत्ति सः किम् ऋचा करिष्यति। ये एव तत्[4] विदुः ते इमे नक्षत्ररूपेण दिवि सम्[5] आसते। 'ओमिति प्रतिपद्यन्ते[6]। एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परममक्षरम्। तदेतद् ऋचाऽभ्युक्तम् 'ऋचो अक्षरे परमे[7] व्योमन्'' ( तैआ २,११,१ ) इति ब्राह्मणम् ॥ ३९ ॥

सूयवसाद् भगवती हि भूया अथो वयं भगवन्तः स्याम।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ ४० ॥

सुयवसऽअत्। भगऽवती। हि। भूयाः। अथो इति। वयम्। भगऽवन्तः। स्याम।
अद्धि। तृणम्। अघ्न्ये। विश्वऽदानीम्। पिब। शुद्धम्। उदकम्। आऽचरन्ती ॥४०॥

---

१. नास्ति अ[1]. २. पुरुषेषु अवाङ् अ[1]. ३. स्तौमि अ[1] वि[1]. ४. यत् अ[1]. ५. नास्ति मूको ६. °द्यते मूको. ७. प्रथमे अ[1].

**वेङ्कट०** अथ सर्वस्या एव वाचः स्तुतिः । गोरूपा हि वागित्युक्तम् । शोभनस्य यवस्यात्त्री भगवती हि अभवः । अथ इदानीम् वयम् भगवन्तः स्याम । अद्धि तृणम् अहन्तव्ये! सर्वदा, पिब च शुद्धम् उदकम् इतस्ततः आचरन्ती इति ॥ ४० ॥

[1]इति द्वितीयाष्टके तृतीयाध्याये एकविंशो वर्गः[1] ॥

**गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।**
**अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥**

गौरीः । मिमाय । सलिलानि । तक्षती । एकऽपदी । द्विऽपदी । सा । चतुःऽपदी ।
अष्टाऽपदी । नवऽपदी । बभूवुषी । सहस्रऽअक्षरा । परमे । विऽओमन् ॥ ४१ ॥

**वेङ्कट०** गौरीः निर्मिमाय उदकानि कुर्वती । सा क्वचिद् एकपदी भवति लोके द्विपदी त्रिपदी चतुष्पदी च अन्ततो नवपदी । सेयं बह्वक्षरा भवन्ती[2] स्वस्मिन् स्थाने वर्तमाना । यास्कस्त्वाह — 'एकपदी मध्यमेन । द्विपदी मध्यमेन चादित्येन च[3] । चतुष्पदी दिग्भिः । अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन[4] च सहस्राक्षरा[5] बहूदका परमे व्यवने[6]' ( ११,४० ) इति ॥ ४१ ॥

**तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।**
**ततः क्षरत्यक्षरं तद् विश्वमुप जीवति ॥ ४२ ॥**

तस्याः । समुद्राः । अधि । वि । क्षरन्ति । तेन । जीवन्ति । प्रऽदिशः । चतस्रः ।
ततः । क्षरति । अक्षरम् । तत् । विश्वम् । उप । जीवति ॥ ४२ ॥

**वेङ्कट०** तस्याः वाचः उदकानि अधि वि क्षरन्ति । तेन वृष्टेनोदकेन सर्वाः दिशः जीवन्ति । तदेवाह— ततः क्षरति उदकम् । तत् सर्वाणि भूतानि उप जीवन्तीति ॥ ४२ ॥

**शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।**
**उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥ ४३ ॥**

शकऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता । परः । एना । अवरेण ।
उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ ४३ ॥

**वेङ्कट०** आदित्यः पशुरासीत्, तेनायन् तदानीं तस्य पशोः पाकार्थमग्निं शकैर्देवाः प्राज्वालयन् तस्याग्नेः शकमयं धूमम् समीपे अपश्यम् मेघभूतम् । शौनकः — 'वाचः समुद्रा अधि वि क्षरन्ति । आपोऽक्षरं मेघ एवात्र धूमः' इति ( तु. बृदे ४, ४१ ) । स च धूम उभयोः पार्श्वयोर्ज्वालायुक्तस्य अवमस्य अग्नेः परस्ताद् भवति । तस्मिन्नग्नौ उक्षाणं पृश्निम् अपचन्त देवाः । तानि पूर्वयुगजातानि धर्माणि आसन्[4] इति ॥ ४३ ॥

---

१-१. नास्ति मूको. २. °ती वि[2] अ[1]. ३. नास्ति वि[1] अ[1] लपं. ४. नाभिश्चादि° मूको. ५. नास्ति मूको. ६. स्थाने मूको.

त्रयः॑ के॒शिन॑ ऋतु॒था वि च॑क्षते संवत्स॒रे व॑पत॒ एक॑ एषाम् ।
विश्व॒मेको॑ अ॒भि च॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम् ॥ ४४ ॥

त्रयः॑ । के॒शिनः॑ । ऋ॒तु॒ऽथा । वि । च॒क्ष॒ते॒ । सं॒व॒त्स॒रे । व॒प॒ते॒ । एकः॑ । ए॒षा॒म् ।
विश्व॑म् । एकः॑ । अ॒भि । च॒ष्टे॒ । शची॑भिः । ध्राजिः॑ । एक॑स्य । द॒दृ॒शे॒ । न । रू॒पम् ॥ ४४ ॥

**वेङ्कट०** त्रयः रश्मियुक्ताः कालेकाले वि **पश्यन्ति । धूमेनाग्निः केशी, रजसा वायुः ।** संवत्सरे वपते एकः एषाम् इत्यग्निः पृथिवीं दहति । [1]**सर्वम्** एकः अभि **पश्यति**[1] **कर्मभिरादित्यः । गतिः एकस्य दृश्यते, न रूपम् मध्यमस्येति** ॥ ४४ ॥

च॒त्वारि॒ वाक् परि॑मिता प॒दानि॒ तानि॑ विदुर्ब्राह्म॒णा ये म॑नी॒षिणः॑ ।
गुहा॒ त्रीणि॒ निहि॑ता॒ नेङ्ग॑यन्ति तु॒रीयं॑ वा॒चो म॑नु॒ष्या॑ वदन्ति ॥ ४५ ॥

च॒त्वारि॑ । वाक् । परि॑ऽमिता । प॒दानि॑ । तानि॑ । वि॒दुः॒ । ब्रा॒ह्म॒णाः । ये । म॒नी॒षिणः॑ ।
गुहा॑ । त्रीणि॑ । निऽहि॑ता । न । इ॒ङ्ग॒य॒न्ति॒ । तु॒रीय॑म् । वा॒चः । म॒नु॒ष्याः॑ । व॒द॒न्ति॒ ॥ ४५ ॥

**वेङ्कट०** चत्वारि वाचः **परिमितानि** पदानि **चतुर्धा बुद्ध्या विभागात् ।** [2]**पदं शब्दः**[2] । तानि **सर्वाण्येव पदानि** जानन्ति ब्राह्मणाः ये विद्वांसो वेदविदः । **ततश्च गुहायां निहितानि**[3] त्रीणि **पदानि न चालयन्त्यात्मानम्, न प्रयुज्यन्ते**[4] **लौकिकैरमनीषिभिः** । वाचः तुरीयम् **एव पदम्**[5] मनुष्याः वदन्ति ॥४५॥

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमा॑हु॒रथो॑ दि॒व्यः स सु॑प॒र्णो ग॒रुत्मा॑न् ।
एकं॒ सद् विप्रा॑ बहु॒धा व॑दन्त्य॒ग्निं य॒मं मा॑त॒रिश्वा॑नमाहुः ॥ ४६ ॥

इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । आ॒हुः॒ । अथो॒ इति॑ । दि॒व्यः । सः । सु॒ऽप॒र्णः । ग॒रुत्मा॑न् ।
एक॑म् । सत् । विप्राः॑ । ब॒हु॒धा । व॒द॒न्ति॒ । अ॒ग्निम् । य॒मम् । मा॒त॒रिश्वा॑नम् । आ॒हुः॒ ॥ ४६ ॥

**वेङ्कट० अथापि ब्राह्मणं भवति,** 'अग्निः सर्वा देवताः' ( ऐब्रा २,३ ) **इति । तस्य इयं**[6] **भूयसे निर्वचनाय । इन्द्रादींश्च** अग्निम् आहुः । अथो दिव्यः सः[7] **सुपतनः गरणवानादित्यश्च** । एकम् **एव सन्तमग्निं बहुशरीरपरिग्रहात्**[8] बहुधा वदन्ति । अग्निम् एव यमम् मातरिश्वानम् **च** आहुः ॥ ४६ ॥

[9]**इति द्वितीयाष्टके तृतीयाध्याये द्वाविंशो वर्गः**[9] ॥

कृ॒ष्णं नि॒यानं॒ हर॑यः सुप॒र्णा अ॒पो वसा॑ना॒ दिव॒मुत्प॑तन्ति ।
त आव॑वृत्र॒न्त्सद॑नादृ॒तस्यादिद् घृ॒तेन॑ पृथि॒वी व्यु॑द्यते ॥ ४७ ॥

---

१-१. स मे लोकोऽभिप° अ[1]; समेकोऽभि° वि[2]. २-२. पदश° **मूको.** ३. निहितस्तदानीम् **वि[1] लपं.** ४. प्रयुञ्जते **लपं**; प्रयुञ्जते **वि[1] अ[1].** ५. पादं **वि[2] अ[1].** ६. इदं **वि[1] अ[1].** ७. **नास्ति लपं.** ८. परिग्रहाद् **वि[1] लपं.** ९-९. **नास्ति मूको.**

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति ।
ते । आ । अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवी । वि । उद्यते ॥४७॥

**वेङ्कट०** कृष्णम् **नियमनं रात्रिः आदित्यस्य** हरयः सुपर्णाः **हरणा आदित्यरश्मयः** । 'यदा खलु [1]वा असावादित्यो[1] न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' ( तै २,४,१०,२ ) **इति ब्राह्मणम्** । **ततश्चादित्यस्यात्मनो विविधं नियमनं नीचैर्गमनं वा दक्षिणायने भवतीति दक्षिणायनं कृष्णम् नियानम् उच्यते । तस्य च कार्ष्ण्यं मेघान्धकारावृतत्वात् । तं प्रत्यादित्यरश्मयः** अपः वसानाः **आत्मन्यासञ्जयन्तः** दिवम् उत् पतन्ति । **अत्र यास्कः**—'ते यदाऽमुतोऽर्वाञ्चः पर्यावर्तन्ते सहस्थानात् उदकस्यादित्यात्, अथ घृतेनोदकेन पृथिवी व्युद्यते' ( ७,२४ ) **इति ॥ ४७ ॥**

**द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।**
**तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥**

द्वादश । प्रऽधयः । चक्रम् । एकम् । त्रीणि । नभ्यानि । कः । ऊँ इति । तत् । चिकेत ।
तस्मिन् । साकम् । त्रिऽशताः । न । शङ्कवः । अर्पिताः । षष्टिः । न । चलाचलासः ॥ ४८ ॥

**वेङ्कट०** [2]एकम् चक्रम् **संवत्सरः**[2] । **तस्मिंश्चक्रे**[3] द्वादश प्रधयः **भवन्ति मासाः** । त्रीणि **नभ्यफलकानि ऋतवः** । तत् **चक्रम्** कः **वेद** । **तस्य लक्षणम्**—तस्मिन् **त्रीणि शतानि** षष्टिः **च अतिक्रमणस्वभावाः** शङ्कवः अर्पिताः **इत्यहोरात्राभिप्रायम्** । **समुच्चयार्थीयो नकारः ॥ ४८ ॥**

**यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।**
**यो रत्नधा वसुविद् यः सुदत्रः सरस्वति तमिह धातवे कः ॥ ४९ ॥**

यः । ते । स्तनः । शशयः । यः । मयःऽभूः । येन । विश्वा । पुष्यसि । वार्याणि ।
यः । रत्नऽधाः । वसुऽवित् । यः । सुऽदत्रः । सरस्वति । तम् । इह । धातवे । करिति कः ॥४९॥

**वेङ्कट०** **पुनश्च वाचं स्तौति** । यः ते **उरसि शिश्यानः** स्तनः, यः **सुखं भावयति,** येन **च विश्वान्येव वरणीयानि धनानि** पुष्यसि, यः **वसूनि लम्भयन् रत्नान्यपि प्रयच्छति शोभनधनः,** तम् **मेधाख्यं स्तनम्** इह सरस्वति ! **पानाय कुरु**[4] ॥ ४९ ॥

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**
**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ५० ॥**

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ ५० ॥

---

१-१. वासावा° **मूको.** २-२. **नास्ति मूको.** ३. कस्मिं° **वि**[२]; कस्मिंश्चित् चक्रे **अ**[१]. ४. **नास्ति मूको.**

**वेङ्कट०** 'अग्निः पशुरासीत्। तमालभन्त। तेनायजन्त' ( तु. तै ५,७,२६,१ ) इति ब्राह्मणम्। तानि धर्माणि पूर्वयुगीयानि आसन्। ते ह नाकम् महिमानः सेवन्ते। यस्मिन् नाके पूर्वे साध्याः भवन्ति देवाः ॥ ५० ॥

समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥

समानम् । एतत् । उदकम् । उत् । च । एति । अव । च । अहऽभिः ।
भूमिम् । पर्जन्याः । जिन्वन्ति । दिवम् । जिन्वन्ति । अग्नयः ॥ ५१ ॥

**वेङ्कट०** एकमेव इदम् उदकम् पश्चोषध्यात्मना[1] परिणतमस्माल्लोकादमुं लोकम् उत् च गच्छति। तत इह स्वरूपेण [2]अव च[2] गच्छति अहोरात्रैः। एतदेवोक्तम्। भूमिम् प्रत्यक्षेणोदकेन [3]'वराहवः स्वतवसः[3] विद्युन्महसः[4]' ( तैआ १,९,४ ) इत्याद्याः सप्त पर्जन्याः प्रीणयन्ति। दिवम् जिन्वन्ति अग्नयः परोक्षेण हविष्ट्वमापन्नेन इति ॥ ५१ ॥

दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् ।
अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥ ५२ ॥

दिव्यम् । सुऽपर्णम् । वायसम् । बृहन्तम् । अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् ।
अभीपतः । वृष्टिऽभिः । तर्पयन्तम् । सरस्वन्तम् । अवसे । जोहवीमि ॥ ५२ ॥

**वेङ्कट०** अन्ते चादित्यं स्तौति। दिवि भवम् सुपतनं गमनशीलं महान्तम्[5] आपो यत्र वसन्ति सोऽपां गर्भस्तं[6] दर्शयितारम् ओषधीनाम् अभिपततः सर्वानेव वृष्टिभिः प्रीणयन्तम् तम् सरस्वन्तम् रक्षणाय जोहवीमि। यद्वेयं[7] सरस्वतः स्तुतिः। माध्यमिका सरस्वती सूक्ते स्तुता, सरस्वांश्च स्तूयते इति ॥ ५२ ॥

[2]इति द्वितीयाष्टके तृतीयाध्याये त्रयोविंशो वर्गः[2] ॥

## [ १६५ ]

[2]प्रथमाद्वितीयाचतुर्थीषष्ठ्यष्टमीदशम्येकादशीद्वादशीनाम् इन्द्र ऋषिः, तृतीयापञ्चमीसप्तमीनवमीनां मरुतः, त्रयोदशीचतुर्दशीपञ्चदशीनाम् अगस्त्यो मैत्रावरुणिः ।
मरुत्वान् इन्द्रो देवता । त्रिष्टुप् छन्दः[2] ॥

कया शुभा सवयसः सनीळाः समान्या मरुतः सं मिमिक्षुः ।
कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया ॥ १ ॥

---

१. पश्चोष॰ वि[2] अ[1]. २-२. नास्ति मूको. ३-३. पराभवततवसो वि[1] लपं; पराह्वस्वतवसो वि[2]; पराभव तवसो ल; पराभव स्वतवसो अ[1]. ४. ॰धन्मयसः वि[1] अ[1] लपं ५. नास्ति मूको. ६. नास्ति वि[1] ल लपं. ७. गर्भस्थं वि[1] लपं. ८. यद्वयं अ[1]; यद्येय वि[2].

कया । शुभा । सऽवयसः । सऽनीळाः । समान्या । मरुतः । सम । मिमिक्षुः ।
कया । मती । कुतः । आऽइतासः । एते । अर्चन्ति । शुष्मम् । वृषणः । वसुऽया ॥ १ ॥

**वेङ्कट०** अगस्त्येन्द्रमरुतां[1] संवादः ।

'समागच्छन्मरुद्भिस्तु चरन् व्योम्नि शतक्रतुः ॥
दृष्ट्वा तुष्टाव तानिन्द्रस्ते [2]चेन्द्रमृषयोऽब्रुवन्[2] ।
तेषामगस्त्यः संवादं तपसा वेद तत्त्वतः ॥
स तानभिजगामाशु निरूप्यैन्द्रं हविस्तदा ।
[3]मरुतश्चाभितुष्टाव सूक्तैस्तन्त्विति च[3] त्रिभिः ॥' (बृदे ४,४६-४८) इति शौनकः ॥

केन शोभनेन समानवयस्काः सनीडाः एकस्मिन्नन्तरिक्षे प्रादुर्भवन्तः साधारणेन मरुतः सम्भूय मेहन्ति । कथं [4]यजमानैः स्तुताः[4] वर्षं कुर्वन्तीत्यर्थः । तदेवाह । कया स्तुत्या कुतः च प्रादुर्भूताः इमे स्वकीयं बलं पूजयन्ति वर्षितारः यजमानानां धनेच्छयेति ॥ १ ॥

**कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त ।**
**श्येनाँइव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम ॥ २ ॥**

कस्य । ब्रह्माणि । जुजुषुः । युवानः । कः । अध्वरे । मरुतः । आ । ववर्त ।
श्येनान्ऽइव । ध्रजतः । अन्तरिक्षे । केन । महा । मनसा । रीरमाम ॥ २ ॥

**वेङ्कट०** कस्य स्तोत्राणि सेवन्ते तरुणाः । कः वा एनान् अध्वरे आ वर्तयति श्येनानिव । शीघ्रम् अन्तरिक्षेण गच्छतः केन महता मनसा [5]वयमेनान्[5] मरुतः रमयामः ॥ २ ॥

**कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।**
**सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत् ते अस्मे ॥ ३ ॥**

कुतः । त्वम् । इन्द्र । माहिनः । सन् । एकः । यासि । सत्ऽपते । किम् । ते । इत्था ।
सम् । पृच्छसे । सम्ऽअराणः । शुभानैः । वोचेः । तत् । नः । हरिऽवः । यत् । ते । अस्मे इति ॥ ३ ॥

**वेङ्कट०** इत्थमिन्द्रेणोक्ता मरुत ऊचुः — कुतः देशात् त्वम् इन्द्र! महान् सन् एकः एव गच्छसि । सतां पते! किम् तव इत्थमस्माभिर्विधेयम् । त्वमस्माभिः सङ्गच्छमानः शोभनैर्वाक्यैः सम् पृच्छसे । तत्र ब्रूहि हरिवः! अस्माकं तत् यत् तव अस्मासु कार्यम् ॥ ३ ॥

---

१. °रुतां च वि[1] ल लपं. २-२. चैनं मरुतोऽब्रु° मूको. ३-३. मरुतश्चापि तुष्टाव सूक्तैस्तन्त्विति (°न्तदिति वि[1][2] अ[1] लपं) नु मूको. ४-४. नास्ति वि[1] अ[1]. ५-५. नास्ति अ; वयमेनं वि[1] लपं.

ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥ ४ ॥

ब्रह्माणि । मे । मतयः । शम् । सुतासः । शुष्मः । इयर्ति । प्रऽभृतः । मे । अद्रिः ।
आ । शासते । प्रति । हर्यन्ति । उक्था । इमा । हरी इति । वहतः । ता । नः । अच्छ ॥ ४ ॥

वेङ्कट० न किञ्चिन्ममान्येन विधेयमस्तीत्यभिप्रायेणेन्द्र आह । स्तोत्रशस्त्राणि मम पूजकानि । सुखकराः सोमाः । मया विसृष्टः वज्रः शोषको भूत्वा गच्छति । तथा मत्तः सर्वेऽपेक्षितं प्रार्थयन्ते । कामयन्ते च माम् उक्थानि । हरी च इमौ तान्युक्थानि प्रति मा वहतः ॥ ४ ॥

अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः ।
महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥ ५ ॥

अतः । वयम् । अन्तमेभिः । युजानाः । स्वऽक्षत्रेभिः । तन्वः । शुम्भमानाः ।
महःऽभिः । एतान् । उप । युज्महे । नु । इन्द्र । स्वधाम् । अनु । हि । नः । बभूथ ॥ ५ ॥

वेङ्कट० अस्मादेव कारणात् वयम् अन्तिकतमैः संयुञ्जानाः शत्रुभिः, स्वबलैश्च[1] आत्मशरीराणि अलङ्कुर्वाणाः, बलैः एतान् शत्रून् संयोजयामः क्षिप्रम्, यस्मात् त्वम् इन्द्र! अस्माकम् बलम् अनुभवसि, बलवतामस्माकं साहाय्यं करोषीति ॥ ५ ॥

[2]इति द्वितीयाष्टके तृतीयाध्याये चतुर्विंशो वर्गः[2] ॥

क्व स्या वो मरुतः स्वधासीद् यन्मामेकं समधत्ताहिहत्ये ।
अहं ह्युग्रस्तविषस्तुविष्मान् विश्वस्य शत्रोरनमं वधस्नैः ॥ ६ ॥

क्व । स्या । वः । मरुतः । स्वधा । आसीत् । यत् । माम् । एकम् । सम्ऽअधत्त । अहिऽहत्ये ।
अहम् । हि । उग्रः । तविषः । तुविष्मान् । विश्वस्य । शत्रोः । अनमम् । वधऽस्नैः ॥ ६ ॥

वेङ्कट० अमृष्यमाण इन्द्र आह । यदा यूयम् माम् एकम् एव अहिहनने समधत्त, तदानीं युष्माकम् मरुतः! तत् वीर्यम् क्व आसीत् । न तदानीं[3] दृष्टम् । अहम् एव हि उद्गूर्णः महान् बलवान् विश्वं शत्रुं प्रहारैः अनामयम् ॥ ६ ॥

भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।
भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद् वशाम ॥ ७ ॥

---

१. नास्ति अ[1]. २-२. नास्ति मूको. ३. इदानीं मूको.

भूरि । चकर्थ । युज्येभिः । अस्मे इति । समानेभिः । वृषभ । पौंस्येभिः ।
भूरीणि । हि । कृणवाम । शविष्ठ । इन्द्र । क्रत्वा । मरुतः । यत् । वशाम ॥ ७ ॥

वेङ्कट० अनया मरुत इन्द्रेण साम्यमापादयन्ति । बहूनि कर्माणि कृतवानसि सहायभूतैः अस्माभिः साधारणैः वृषभ! वीर्यैः । वयं च बहूनि कुर्मः बलवत्तम! इन्द्र! कर्मणा यदि कामयामहे मरुतः! वयम् ॥ ७ ॥

वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ॥ ८ ॥

वधीम् । वृत्रम् । मरुतः । इन्द्रियेण । स्वेन । भामेन । तविषः । बभूवान् ।
अहम् । एताः । मनवे । विश्वऽचन्द्राः । सुऽगाः । अपः । चकर । वज्रऽबाहुः ॥ ८ ॥

वेङ्कट० समानतामप्यसहमान[1] इन्द्र आह । मरुतः! मदीयेनैव इन्द्रियेण भवतां प्रत्यक्षमहमेव वृत्रम् हतवानस्मि स्वेन क्रोधेन महान् भूतः । तथा वृत्रं हत्वा अहम् एताः मनुष्येभ्यः सर्वस्य ह्लादयित्रीः अपः शोभनगमनाः कृतवानस्मि वज्रबाहुः[2] ॥ ८ ॥

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ९ ॥

अनुत्तम् । आ । ते । मघऽवन् । नकिः । नु । न । त्वाऽवान् । अस्ति । देवता । विदानः ।
न । जायमानः । नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रऽवृद्ध ॥ ९ ॥

वेङ्कट० मरुतः सम्प्रतिपद्यन्ते । मघवन्! तव अनुत्तं शत्रुजातम् न किञ्चिद् अस्ति । आकारः आश्चर्ये । न त्वत्सदृशः कश्चिदस्ति देवतासु ज्ञायमानः । न च जायमानः जातः वा व्याप्नोति, यानि कार्याणि कुरुषे त्वम् प्रवृद्ध! ॥ ९ ॥

एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान् कृणवै मनीषा ।
अहं ह्यु१ग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥ १० ॥

एकस्य । चित् । मे । विऽभु । अस्तु । ओजः । या । नु । दधृष्वान् । कृणवै । मनीषा ।
अहम् । हि । उग्रः । मरुतः । विदानः । यानि । च्यवम् । इन्द्रः । इत् । ईशे । एषाम् ॥ १० ॥

1-1. °नकामंव्यस° अ[1]; °नकामभ्यस° वि[1]. 2. °नाहम्° वि[1] अ[1].

वेङ्कट० एकस्य चित् असहायस्य एव मम अप्रतिहतम् अस्तु वीर्यम्। यानि कार्याणि क्षिप्रं धृष्टोऽहं प्रज्ञया कर्तुमिच्छामि, तेषु अहम् उद्गूर्णः मरुतः! सर्वस्य वेदिता। यानि वसूनि प्रतिगच्छामि, इन्द्रः अहम् [1]एव तेषाम्[1] ईश्वरो भवामि ॥ १० ॥

[2]इति द्वितीयाष्टके तृतीयाध्याये पञ्चविंशो वर्गः[2] ॥

**अमन्दन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।**
**इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥ ११ ॥**

अमन्दत् । मा । मरुतः । स्तोमः । अत्र । यत् । मे । नरः । श्रुत्यम् । ब्रह्म । चक्र ।
इन्द्राय । वृष्णे । सुऽमखाय । मह्यम् । सख्ये । सखायः । तन्वे । तनूभिः ॥ ११ ॥

वेङ्कट० मरुतः! भवदीयोऽयं स्तोमः माम्[2] अमन्दत् अस्मिन्सङ्गमे, यत् मे स्तोत्रं श्रोतव्यं नेतारः! यूयं कृतवन्तः इन्द्राय वृष्णे शोभनयज्ञाय मह्यम् सख्ये सखायः शरीरभूताय शरीरैः ॥ ११ ॥

**एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।**
**संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥ १२ ॥**

एव । इत् । एते । प्रति । मा । रोचमानाः । अनेद्यः । श्रवः । आ । इषः । दधानाः ।
सम्ऽचक्ष्य । मरुतः । चन्द्रऽवर्णाः । अच्छान्त । मे । छदयाथ । च । नूनम् ॥ १२ ॥

वेङ्कट० एवम् एव एते माम् प्रति दीप्यन्तः, अनिन्दनीयम् यशः अन्नानि च धारयन्तः, सम्यङ् मां दृष्ट्वा मरुतः! दीप्तवर्णाः पूर्वमपि मां युद्धे प्रविष्टं छादितवन्तः । सम्प्रति च आच्छादयत मां परिवार्य तिष्ठत ॥ १२ ॥

**को न्वत्र मरुतो मामहे वः प्र यातन सखींरच्छा सखायः ।**
**मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥ १३ ॥**

कः । नु । अत्र । मरुतः । ममहे । वः । प्र । यातन । सखीन् । अच्छ । सखायः ।
मन्मानि । चित्राः । अपिऽवातयन्तः । एषाम् । भूत । नवेदाः । मे । ऋतानाम् ॥ १३ ॥

वेङ्कट० अगस्त्यवचनम् । कः नु अस्मिँल्लोके मरुतः! वः पूजयितुं समर्थः । प्रतिगच्छत[3] सखीन् प्रति सखायः! धनानि प्रतिगमयन्तः चित्राः! यूयम् । एषाम् मदीयानां स्तोत्राणां ज्ञातारः[4] भवत[5] ॥ १३ ॥

**आ यद् दुवस्याद् दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।**
**ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥ १४ ॥**

---

१-१. एतेषाम् वि[२] अ[१]. २. नास्ति वि[१] लपं. ३. °च्छतः अ[१]; °च्छथः वि[२]. ४. °तारौ वि[२] अ[१]. ५. °वतः वि[२] अ[१].

आ । यत् । दुवस्यात् । दुवसे । न । कारुः । अस्मान् । चक्रे । मान्यस्य । मेधा ।
ओ इति । सु । वर्त्त । मरुतः । विप्रम् । अच्छ । इमा । ब्रह्माणि । जरिता । वः । अर्चत् ॥१४॥

**वेङ्कट०** योऽयमगस्त्यः[1] दुवः आभिमुख्येन कर्तुमिच्छति स्वामिपूजनाय दासादिः कारुः इव । यदा वाऽस्य मानभवस्य कुम्भयोनेः अगस्त्यस्य मेधा अस्मान् आ चक्रे इति भवतां[2] बुद्धिर्भवति, तदानीमेव सुष्ठु आवर्तत हे मरुतः! मेधाविनमेनं प्रति । इमानि स्तोत्राणि युष्माकम् स्तोता उच्चारयति ॥ १४ ॥

**एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।**
**एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १५ ॥**

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १५ ॥

**वेङ्कट०** एतत् वः स्तोत्रम् मरुतः![3] । इयम् च गीः इत्युक्थमाह । मन्दारो मदनात्, मन्दनकुशलः, मान्दार्यस्य मानभवस्य स्तोतुः ते । यूयम् आ गच्छत[4] शरीराय अन्नेन सह । कान्तिम् आयुर्वा लभेमहि वयम् अन्नम् बलं च क्षिप्रदानमिति ॥ १५ ॥

[5]इति द्वितीयाष्टके तृतीयाध्याये षड्विंशो वर्गः[5] ॥

अष्टकस्य द्वितीयस्य तृतीयं व्याकरोदिति ।
अध्यायं वेङ्कटार्यस्य तनयो माधवाह्वयः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने द्वितीयाष्टके तृतीयोऽध्यायः ॥

—*—

**इति ऋग्वेदे सभाष्ये द्वितीयाष्टके तृतीयोऽध्यायः ॥**



१. यदय° अ[1].　२. नास्ति वि[1] क ळपं.　३. नास्ति मूको.　४. गच्छत वि[2] अ[1].
५-५. नास्ति मूको.

## अथ द्वितीयाष्टके चतुर्थोऽध्यायः

वेङ्कट०[1]

अध्यायं 'तन्नु वोचाम' व्याचिख्यासति माधवः ।
प्रदर्शयल्लँलिङो वृत्तिं बहुष्वर्थेषु लिङ् स्मृतः ॥ १ ॥

कर्त्तव्यताप्रतीतिस्तु सर्वेष्वर्थेषु विद्यते ।
विध्यादयः काकुभेदात् षड् भवन्तीति पण्डिताः ॥ २ ॥

'न दुरुक्ताय स्पृहयेत्'[2], 'पृणीयात्'[3] इति चापरम् ।
विधावुदाहरन्त्येतौ प्रेषणं विधिरुच्यते ॥ ३ ॥

निमन्त्रणामन्त्रणयोर्भेदमाह पतञ्जलिः ।
एवं तर्हि नियोगतः[4] कर्तव्यं तन्निमन्त्रणम्[5] ॥ ४ ॥

आमन्त्रणं[6] कामचारः तत्र[7] नाकुर्वतो[8] भयम्[9] ।
अधीष्टं नाम सत्कारपूर्वो[10] व्यापारणां[11] विदुः ॥ ५ ॥

दृश्यन्ते बहवोऽस्माभिः प्रार्थनाविषया लिङः ।
'तयोरिदवसा वयम्'[12], 'सं युज्याव[13] सनिभ्य आ'[14] ॥ ६ ॥

'विदुर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः'[15] ।
'अवैनं राजा वरुण'[16], 'अन्तर्निहिताः केतवः स्युः'[17] ॥ ७ ॥

विधीयते चाशिषि [18]लिङ्गाशीर्धर्मः प्रयोक्तरि[18] ।
'मयोभुवा सुप्रणीती'[19], 'भूयाम वाजदाव्नाम्'[20] ॥ ८ ॥

हेतुहेतुमतोर्लिङ् स्याद् 'यदिन्द्राहं यथे'[21] ति सः ।
अधीष्टस्योदाहरणम् 'उतो न उत्पुपूर्याः'[22] ॥ ९ ॥

---

१. नास्ति वि[1] लपं. २. ऋ १,४१,९. ३. गुणीयात् वेंऋअ; ऋ १०,११७,५. ४. नियोगेन अ[1]. ५. निम° वि[1] लपं. ६. °न्त्रणा अ[1]; न्त्रणे वि[1] लपं वेंऋअ. ७. नास्ति अ[1]. ८. कुर्व° वि[2]. ९. भवम् वि[2] अ[1]. १०. पूर्या वि[2] अ[1]; पूर्वे वेंऋअ. ११. °रणं वेंऋअ. १२. ऋ १,१७,६. १३. नास्ति लपं. १४ ऋ ८,६२,११. १५. ऋ १,२३,२४. १६. ऋ १,२४,१३. १७. ऋ १,२४,७. १८-१८. °मंप्र° ल. १९. ऋ ५,४२,१८. २०. ऋ १,१७,४. २१. ऋ ८,१४,१. २२. ऋ ५,६,९.

'अद्या मुरीय'[1] लिङ्गद्वयं[2] विध्यादिषु न कश्चन ।
'अप्यू नु पत्नीः'[3] इति च[4] [5]दृश्यतेऽस्या विधा तथा[5] ॥ १० ॥

एवंप्रकारा बहवो लिङ्गोऽस्माभिः प्रदर्शिताः ।
सन्ति चान्येऽपि बहवः पश्येत्ताँश्चापि पण्डितः ॥ ११ ॥

## [ १६६ ]

[6]अगस्त्यो मैत्रावरुणिर्ऋषिः । मरुतो देवता । जगती छन्दः, चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ[6] ॥

तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे ।
ऐधेव यामन् मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ॥ १ ॥

तत् । नु । वोचाम । रभसाय । जन्मने । पूर्वम् । महिऽत्वम् । वृषभस्य । केतवे ।
ऐधाऽइव । यामन् । मरुतः । तुविऽस्वनः । युधाऽइव । शक्राः । तविषाणि । कर्तन ॥ १ ॥

वेङ्कट० मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे[7] कुम्भे रेतोऽपतत्, ततोऽगस्त्यवसिष्ठावजायेताम् । अथ[4] अगस्त्यार्षम् । तत् क्षिप्रम् वोचाम वेगवते मनुष्येषु जाताय प्रत्नं महत्त्वम् मेघस्य लिङ्गाय मारुताय गणाय[4] । वर्धनेनेव हे मरुतः! गमने बहुस्वनाः! युद्धेनेव शक्ता योद्धारः बलानि कुरुथ[8] ॥ १ ॥

नित्यं न सूनुं मधु बिभ्रत उप क्रीळन्ति क्रीळा विदथेषु घृष्वयः ।
नक्षन्ति रुद्रा अवसा नमस्विनं न मर्धन्ति स्वतवसो हविष्कृतम् ॥ २ ॥

नित्यम् । न । सूनुम् । मधु । बिभ्रतः । उप । क्रीळन्ति । क्रीळाः । विदथेषु । घृष्वयः ।
नक्षन्ति । रुद्राः । अवसा । नमस्विनम् । न । मर्धन्ति । स्वऽतवसः । हविःऽकृतम् ॥ २ ॥

वेङ्कट० औरसम् इव पुत्रम् उदकम्[9] धारयन्तः[10] उप क्रीडन्ति क्रीडनशीलाः यज्ञेषु वृक्षादीनां घर्षणशीलाः । व्याप्नुवन्ति रुद्रपुत्राः रक्षणेन हविष्मन्तम् । न हिंसन्ति स्वभूतबलाः यजमानम् ॥ २ ॥

यस्मा ऊमासो अमृता अरासत रायस्पोषं च हविषा ददाशुषे ।
उक्षन्त्यस्मै मरुतो हिताइव पुरू रजांसि पयसा मयोभुवः ॥ ३ ॥

---

१. ऋ ७,१०४,१५.　२. क लिङ्गद्वयं वि[1] लपं.　३. ऋ १,१७९,१.　४. नास्ति वि[1] लपं.　५-५. °न्यविधस्त° वेंऋअ.　६. नास्ति मूको.　७. वसतीवरी अ[1] कु वि[1].　८. कुरुत अ[1].　९. मदकं वि[1]; मदकरं अ[1].　१०. °यन्त वि[1] लपं.

यस्मै । ऊमा॑सः । अ॒मृताः॑ । अरा॑सत । रा॒यः । पोष॑म् । च॒ । ह॒विषा॑ । द॒दा॒शुषे॑ ।
उ॒क्षन्ति॑ । अ॒स्मै॒ । म॒रुतः॑ । हि॒ताःऽइ॑व । पु॒रु । रजां॑सि । पय॑सा । म॒यः॒ऽभुवः॑ ॥ ३ ॥

वेङ्कट० यस्मै रक्षितारः अमृताः धनस्य पोषम् प्रायच्छन् हविषा दानं कुर्वते तस्मै एतत् च कुर्वन्तीति चकारस्यान्वयः । सिञ्चन्ति अस्मै मरुतः मित्राणीव बहूनि उदकानि उदकेन सुखस्य भावयितारः ॥ ३ ॥

आ ये रजां॑सि॒ तवि॑षीभि॒रव्य॑त॒ प्र व॒ एवा॑सः॒ स्वय॑तासो अध्रजन् ।
भय॑न्ते॒ विश्वा॒ भुव॑नानि ह॒र्म्या॑ चि॒त्रो वो॒ यामः॒ प्रय॑तास्वृ॒ष्टिषु॑ ॥ ४ ॥

आ । ये । रजां॑सि । तवि॑षीभिः । अव्य॑त । प्र । वः॒ । एवा॑सः । स्वऽय॑तासः । अ॒ध्र॒जन् ।
भय॑न्ते । विश्वा॑ । भुव॑नानि । ह॒र्म्या॑ । चि॒त्रः । वः॒ । याम॑ः । प्रऽय॑तासु । ऋ॒ष्टिषु॑ ॥ ४ ॥

वेङ्कट० ये लोकान् स्वबलैः समगमयन्, हे मरुतः! वः ते गमनशीलाः [1]प्रत्यक्षा मरुतः[1] युष्माभिर्नियताः अन्तरिक्षे प्र आ अध्रजन् गन्तुं प्रवृत्ताः [2]आसन् । ततो[2] बिभ्यति सर्वाणि भूतानि गृहाः च[3] । चित्ररूपम् भवताम् आगमनम् उद्यतेषु भवतामायुधेषु ॥ ४ ॥

यत् त्वे॒षया॑मा न॒दय॑न्त॒ पर्व॑तान् दि॒वो वा॑ पृ॒ष्ठं नर्या॑ अचु॑च्यवुः ।
विश्वो॑ वो॒ अज्म॑न् भयते॒ वन॒स्पती॑ रथी॒यन्ती॑व॒ प्र जि॑हीत॒ ओष॑धिः ॥ ५ ॥

यत् । त्वे॒षऽया॑माः । न॒दय॑न्त । पर्व॑तान् । दि॒वः । वा॒ । पृ॒ष्ठम् । नर्याः॑ । अचु॑च्यवुः ।
विश्वः॑ । वः॒ । अज्म॑न् । भ॒य॒ते॒ । वन॒स्पतिः॑ । र॒थि॒यन्ती॑ऽइव । प्र । जि॒ही॒ते॒ । ओष॑धिः ॥ ५ ॥

वेङ्कट० यदा दीप्तगमनाः शब्दयन्ति शिलोच्चयान् मेघान् वा, यदा वा दिवः पृष्ठभूतं मेघम् मनुष्यहिताः प्राच्यावयन्, तदा युष्माकं गमने सर्वः वनस्पतिः बिभेति । गच्छन्तं रथं गच्छन्तीव प्र गच्छति ओषधिः । यथा गच्छता रथेन विविक्ताः भवन्ति ॥ ५ ॥

[4]इति द्वितीयाष्टके चतुर्थाध्याये प्रथमो वर्गः[4] ॥

यू॒यं न॑ उग्रा मरुतः सुचे॒तुनाऽरि॑ष्टग्रामाः सुम॒तिं पि॑पर्तन ।
यत्रा॑ वो दि॒द्युद् रद॑ति॒ क्रिवि॑र्दती रि॒णाति॑ प॒श्वः सुधि॑तेव ब॒र्हणा॑ ॥ ६ ॥

यू॒यम् । नः॒ । उ॒ग्राः॒ । म॒रु॒तः॒ । सु॒ऽचे॒तुना॑ । अरि॑ष्टऽग्रामाः । सु॒ऽम॒तिम् । पि॒प॒र्त॒न॒ ।
यत्र॑ । वः॒ । दि॒द्युत् । रद॑ति । क्रिवि॑ःऽदती । रि॒णाति॑ । प॒श्वः । सुधि॑ताऽइव । ब॒र्हणा॑ ॥ ६ ॥

---

१-१. प्रत्यक्षमारुता वि[२] अ[१]. २-२. आसत वि[२] अ[१]. ३. नास्ति वि[१] लपं. ४-४. नास्ति मूको.

**वेङ्कट०** यूयम् अस्माकम् उद्गूर्णाः ! मरुतः ![1] सुमत्या अक्षतगणाः अस्मदीयां भोगविषयां सुमतिम् पूरयत । यदा युष्माकम् आयुधम् क्रकचाकारम् मेघान्[2] विलिखति । यथा हिंसासाधनभूता स्वधितिः पशून् हिनस्ति एवं रदति[3] इति ॥ ६ ॥

प्र स्कम्भदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुताः ।
अर्चन्त्यर्कं मदिरस्य पीतये विदुर्वीरस्य प्रथमानि पौंस्या ॥ ७ ॥

प्र । स्कम्भऽदेष्णाः । अनवभ्रऽराधसः । अलातृणासः । विदथेषु । सुऽस्तुताः ।
अर्चन्ति । अर्कम् । मदिरस्य । पीतये । विदुः । वीरस्य । प्रथमानि । पौंस्या ॥ ७ ॥

**वेङ्कट** प्र अर्चन्ति[4] श्रद्धते धारकदानाः अविभ्रंशितयजमानधनाः अलमातर्दनाः शत्रूणामतिशयेन हिंसितारः[5] यज्ञेषु सुष्टुताः स्तोत्रम् सोमपानाय वीरस्य[6] पुरातनानि वीर्याणि जानन्ति ॥ ७ ॥

शतभुजिभिस्तमभिह्रुतेरघात् पूर्भी रक्षता मरुतो यमावत ।
जनं यमुग्रास्तवसो विरप्शिनः पाथना शंसात् तनयस्य पुष्टिषु ॥ ८ ॥

शतभुजिऽभिः । तम् । अभिऽह्रुतेः । अघात् । पूःऽभिः । रक्षत । मरुतः । यम् । आवत ।
जनम् । यम् । उग्राः । तवसः । विऽरप्शिनः । पाथन । शंसात् । तनयस्य । पुष्टिषु ॥ ८ ॥

**वेङ्कट०** शतगुणैः भवतां शरीरैः तम् यजमानम् अभिहिंसकात् दारिद्र्यात् रक्षत मरुतः ![7] यम् अरक्षतेति[8] । यम् जनम् [9]उद्गूर्णाः ! बलवन्तः ![9] महान्तः ! रक्षथ पुत्रस्य पुष्टिनिमित्तम् स्तुतेः, तमिति ॥ ८ ॥

विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृध्येव तविषाण्याहिता ।
अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि वावृते ॥ ९ ॥

विश्वानि । भद्रा । मरुतः । रथेषु । वः । मिथस्पृध्याऽइव । तविषाणि । आऽहिता ।
अंसेषु । आ । वः । प्रऽपथेषु । खादयः । अक्षः । वः । चक्रा । समया । वि । ववृते ॥ ९ ॥

**वेङ्कट०** सर्वाणि भद्राणि मरुतः ! रथेषु युष्माकं दृश्यन्ते । परस्परस्पर्धयेव भवद्भिः बलानि च आहितानि । तथा[10] अंसेषु[11] भवन्ति वः केचित्, ते च सामर्थ्यात् ऋष्टयः । प्रगतः पन्था यैस्तेषु पत्सु चक्राकाराण्यायुधानि निहितानि । युष्माकम् अक्षः चक्राणि यजमानानां समीपे वर्तयति ॥ ९ ॥

भूरीणि भद्रा नर्येषु बाहुषु वक्षःसु रुक्मा रभसासो अञ्जयः ।
अंसेष्वेताः पविषु क्षुरा अधि वयो न पक्षान् व्यनु श्रियो धिरे ॥ १० ॥

---

१. नास्ति मूको. २. मेघान् मूको. ३. रुदन्ति मूको. ४. °र्चयन्ति मूको. ५. हिंसितातः वि[२] अ[१]. ६. °रस्य चेन्द्रस्य वि[२] अ[१]. ७. नास्ति वि[१] लप. ८. रक्षतेति मूको. ९-९. °गूर्णबल° अ[१]. १०. यथा वि[१] लप. ११. °षु च अ[१].

भूरीणि । भद्रा । नर्येषु । बाहुषु । वक्षःऽसु । रुक्माः । रभसासः । अञ्जयः ।
अंसेषु । एताः । पविषु । क्षुराः । अधि । वयः । न । पक्षान् । वि । अनु । श्रियः । धिरे ॥१०॥

**वेङ्कट०** बहूनि कल्याणानि नृहितेषु बाहुषु भवतामायुधानि, वक्षस्सु च रुक्ममयाः दीप्तत्वात् वेगवत्य इव अञ्जयः कवचानि, तथा शोधकेषु अंसेषु अधि एताः तीक्ष्णाग्रा ऋष्टयो भवन्ति। पक्षिणः इव पक्षान्, एवंविधाः श्रियः मरुतो विधारयन्ति ॥ १० ॥

[1]इति द्वितीयाष्टके चतुर्थाध्याये द्वितीयो वर्गः[1] ॥

**महान्तो मह्ना विभ्वो३ विभूतयो दूरेदृशो ये दिव्या इव स्तृभिः ।**
**मन्द्राः सुजिह्वाः स्वरितार आसभिः संमिश्ला इन्द्रे मरुतः परिष्टुभः ॥ ११ ॥**

महान्तः । मह्ना । विऽभ्वः । विऽभूतयः । दूरेऽदृशः । ये । दिव्याःऽइव । स्तृऽभिः ।
मन्द्राः । सुऽजिह्वाः । स्वरितारः । आसऽभिः । सम्ऽमिश्लाः । इन्द्रे । मरुतः । परिऽस्तुभः ॥११॥

**वेङ्कट०** महत्त्वेन महान्तः, विभोरपि विभवः, तथा दूरेदृशः, तथा ये दिवि भवाः सूर्यादयः इव आच्छादकैस्तेजोभिः, ते मरुतः मदनशीलाः शोभनवाचः शब्दयितारः आस्यैः इन्द्रे च आत्मानं संयोजयन्तः परितः शब्दस्य कर्तारः ॥ ११ ॥

**तद् वः सुजाता मरुतो महित्वनं दीर्घं वो दात्रमदितेरिव व्रतम् ।**
**इन्द्रश्चन त्यजसा वि ह्रुणाति तज्जनाय यस्मै सुकृते अराध्वम् ॥ १२ ॥**

तत् । वः । सुऽजाताः । मरुतः । महिऽत्वनम् । दीर्घम् । वः । दात्रम् । अदितेःऽइव । व्रतम् ।
इन्द्रः । चन । त्यजसा । वि । ह्रुणाति । तत् । जनाय । यस्मै । सुऽकृते । अराध्वम् ॥ १२ ॥

**वेङ्कट०** तत् वः शोभनजननाः! मरुतः! महत्त्वम्, अविच्छिन्नम् युष्माकम् दानम्, भूमेरिव च धारणव्रतम् इन्द्रः न क्रोधेन विरुणद्धि। तत् यजमानाय यस्मै[2] शोभनकृते यूयं धनं प्रयच्छथ[3] ॥ १२ ॥

**तद् वो जामित्वं मरुतः परे युगे पुरू यच्छंसममृतास आवत ।**
**अया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे ॥ १३ ॥**

तत् । वः । जामिऽत्वम् । मरुतः । परे । युगे । पुरु । यत् । शंसम् । अमृतासः । आवत ।
अया । धिया । मनवे । श्रुष्टिम् । आव्य । साकम् । नरः । दंसनैः । आ । चिकित्रिरे ॥ १३ ॥

**वेङ्कट०** तत् युष्माकम् ज्ञातेयम् मरुतः! पूर्वस्मिन् काले, यत् यूयम् बहु आशंसनं यजमानानाम् हे अमृताः! रक्षथ[4]। अनेन कर्मणा मनुष्याय क्षिप्रत्वं समेत्य क्षेपणादिभिः कर्मभिः सह नेतारो मरुतः आभिमुख्येन ज्ञायन्ते, प्रादुर्भवन्ति शीघ्रम् ॥ १३ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[1] लपं. ३. °च्छत वि[1] लपं. ४. रथाः वि[1] अ[1] क लपं; रथेन वि[2].

येन॑ दी॒र्घं म॑रुतः शू॒शवा॑म यु॒ष्माके॑न॒ परी॑णसा तुरासः ।
आ यत् त॒तन॑न् वृ॒जने॒ जना॑स ए॒भिर्य॒ज्ञेभि॒स्तद॒भीष्टि॑मश्याम् ॥ १४ ॥

येन॑ । दी॒र्घम् । म॒रु॒तः॒ । शू॒शवा॑म । यु॒ष्माके॑न । परी॑णसा । तु॒रा॒सः॒ ।
आ । यत् । त॒तन॑न् । वृ॒जने॑ । जना॑सः । ए॒भिः । य॒ज्ञेभिः॑ । तत् । अ॒भि । इ॒ष्टिम् । अ॒श्या॒म् ॥ १४ ॥

**वेङ्कट०** येन चिरकालम् हे मरुतः! वर्धेमहि[1] युष्मद्दत्तेन बहुना धनेन हे क्षिप्राः!। यत् च युद्धे समुपस्थिते तदीया जनाः आतन्वन्ति, तत् एतैः यज्ञैः अभिमतम् प्राप्नुयामिति[2] ॥ १४ ॥

ए॒ष वः॒ स्तोमो॑ मरुत इ॒यं गीर्मा॑न्दा॒र्यस्य॑ मा॒न्यस्य॑ का॒रोः ।
एषा या॑सीष्ट त॒न्वे॑ व॒यां वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ १५ ॥

ए॒षः । वः॒ । स्तोमः॑ । म॒रु॒तः॒ । इ॒यम् । गीः । मा॒न्दा॒र्यस्य॑ । मा॒न्यस्य॑ । का॒रोः ।
आ । इ॒षा । या॒सी॒ष्ट॒ । त॒न्वे॑ । व॒याम् । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥ १५ ॥

**वेङ्कट०** एषा पूर्वम् ( १,१६५,१५ ) व्याख्याता ॥ १५ ॥

[3]इति द्वितीयाष्टके चतुर्थाध्याये तृतीयो वर्गः[3] ॥

[ १६७ ]

[4]अगस्त्यो मैत्रावरुणिर्ऋषिः। आद्याया इन्द्रो देवता, अन्यासां मरुतः। त्रिष्टुप् छन्दः, दशमी पुरस्ताज्ज्योतिः[4]।

स॒हस्रं॑ त इन्द्रो॒तयो॑ नः स॒हस्र॒मिषो॑ हरिवो गू॒र्तत॑माः ।
स॒हस्रं॒ रायो॑ माद॒यध्यै॑ सह॒स्रिण॒ उप॑ नो यन्तु॒ वाजाः॑ ॥ १ ॥

स॒हस्र॑म् । ते॒ । इ॒न्द्र॒ । ऊ॒तयः॑ । नः॒ । स॒हस्र॑म् । इषः॑ । ह॒रि॒ऽवः॒ । गू॒र्तऽत॑माः ।
स॒हस्र॑म् । रायः॑ । मा॒द॒यध्यै॑ । स॒ह॒स्रिणः॑ । उप॑ । नः॒ । य॒न्तु॒ । वाजाः॑ ॥ १ ॥

**वेङ्कट०** [5]इन्द्र! अस्मद्विषयाणि[5] त्वदीयानि सहस्रम् रक्षणानि, सहस्रम् च अन्नानि हरिवः! उद्गूर्णतमानि[5]। सहस्रम् धनानि च अस्मान् मादयितुम् सहस्रसंख्याकानि[6] बलानि अस्मान् [7]उपगच्छन्तु। आद्यैन्द्री[7] ॥ १ ॥

आ नो॑ऽवो॒भिर्म॒रुतो॑ या॒न्त्वच्छा॒ ज्येष्ठे॑भिर्वा बृ॒हद्दि॑वैः सुमा॒याः ।
अध॒ यदे॑षां नि॒युतः॑ पर॒माः स॑मु॒द्रस्य॑ चिद् ध॒नय॑न्त पा॒रे ॥ २ ॥

१. वर्धयामहि अ[1]. २. प्राप्नवानिति क; प्र प्नवा ··· वि[2] अ[1]. ३-३. नास्ति मूको. ४-४. स्मद्वि° अ[1]. ५. °गूर्ण वि[2] अ[1]. ६. °संख्यानि वि[1,2] अ[1]. ७-७. °च्छ ··· न्द्री अ[1].

आ । नः । अवःऽभिः । मरुतः । यान्तु । अच्छ । ज्येष्ठेभिः । वा । बृहत्ऽदिवैः । सुऽमायाः ।
अध । यत् । एषाम् । निऽयुतः । परमाः । समुद्रस्य । चित् । धनयन्त । पारे ॥ २ ॥

**वेङ्कट०** आ यान्तु अस्मान् अभि रक्षणैः सह मरुतः श्रेष्ठतमैः महादीप्तिभिः च धनैः सुप्रज्ञाः । अध यत् एषाम् अश्वाः उत्तमाः अन्तरिक्षस्य पर्यन्ते रमन्ते, ताश्चायान्त्विति ॥ २ ॥

**मिम्यक्ष येषु सुधिता घृताची हिरण्यनिर्णिगुपरा न ऋष्टिः ।**
**गुहा चरन्ती मनुषो न योषा सभावती विदथ्येव सं वाक् ॥ ३ ॥**

मिम्यक्ष । येषु । सुऽधिता । घृताची । हिरण्यऽनिर्निक् । उपरा । न । ऋष्टिः ।
गुहा । चरन्ती । मनुषः । न । योषा । सभाऽवती । । विदथ्याऽइव । सम् । वाक् ॥ ३ ॥

**वेङ्कट०** सङ्गता येषु तीक्ष्णधारत्वात् सुष्ठु निधानयोग्या उदकमञ्चन्ती हिरण्यरूपा दृषदुपलयोः उपला इव दीर्घा ऋष्टिः । सेयम् अपवरकादौ च चरन्ती मनुष्यस्य इव स्त्री दुर्धर्षा भवति । पर्षद्युक्ता यज्ञभवा वाक् यथा यज्ञेन सङ्गता तद्वद्दृष्टिर्मरुद्भिः सङ्गतेति ॥ ३ ॥

**परा शुभ्रा अयासो यव्या साधारण्येव मरुतो मिमिक्षुः ।**
**न रोदसी अप नुदन्त घोरा जुषन्त वृधं सख्याय देवाः ॥ ४ ॥**

परा । शुभ्राः । अयासः । यव्या । साधारण्याऽइव । मरुतः । मिमिक्षुः ।
न । रोदसी इति । अप । नुदन्त । घोराः । जुषन्त । वृधम् । सख्याय । देवाः ॥ ४ ॥

**वेङ्कट०** परमया शोभमाना गमनस्वभावा युवत्या वाचा मरुतः सङ्गच्छन्ते बहवः, यथा साधारण्या कयाचन स्त्रिया धूर्ताः । घोराः अप्येते न द्यावापृथिव्यौ कदाचिदपि अप नुदन्ति । वर्धयन्तं यजमानम् सख्याय[1] सेवन्ते देवाः ॥ ४ ॥

**जोषद् यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः ।**
**आ सूर्येव विधतो रथं गात् त्वेषप्रतीका नभसो नेत्या ॥ ५ ॥**

जोषत् । यत् । ईम् । असुर्या । सचध्यै । विसितऽस्तुका । रोदसी । नृऽमनाः ।
आ । सूर्याऽइव । विधतः । रथम् । गात् । त्वेषऽप्रतीका । नभसः । न । इत्या ॥ ५ ॥

**वेङ्कट०** सेवते यदा[2] एनं मरुद्गणम् असुराणां हन्त्री[3] सचितुम्[4] विश्लिष्टजवना[5] रुद्रपत्नी वाक् माध्यमिका, यस्या नृषु मनोऽनुकम्प्येषु । सा तदानीम् सूर्येव विधतः सोमस्य मरुद्गणस्य रथम् आ जगाम दीप्तावयवा आदित्यस्य इव [6]अभिगन्तव्या दीप्तिः[6] ॥ ५ ॥

[7]इति द्वितीयाष्टके चतुर्थाध्याये चतुर्थो वर्गः[7] ॥

---

१. सख्याय च वि[2] अ[1]. २. यत् वि[1] लपं. ३. नास्ति वि[1] लपं. ४. सेवितुम् वि[2] अ[1]. ५. विष्टज॰ वि[1] लपं. ६-६. 'न्तव्यदीप्तिः वि[2] अ[1]. ७-७. नास्ति मूको.

आस्थापयन्त युवतिं युवानः शुभे निमिश्लां विदथेषु पज्राम् ।
अर्को यद् वो मरुतो हविष्मान् गायद् गाथं सुतसोमो दुवस्यन् ॥ ६ ॥

आ । अस्थापयन्त । युवतिम् । युवानः । शुभे । निऽमिश्लाम् । विदथेषु । पज्राम् ।
अर्कः । यत् । वः । मरुतः । हविष्मान् । गायत् । गाथम् । सुतऽसोमः । दुवस्यन् ॥ ६ ॥

**वेङ्कट०** अथ ताम् युवतिम् वाचम्[1] युवानः मरुतः आ अस्थापयन्त यज्ञेषु[2] पज्रकुलजाताम्[3] उदके नियमेन मिश्रिताम् । अथ प्रत्यक्षः। होता यत् वः मरुतः! हविष्मान् गायत्रम्[4] गायति सुतसोमः परिचरँस्तस्मिन्नाग्निमारुते शस्त्रे । तत्र हि पावीरवी[5] शस्यते ॥ ६ ॥

प्र तं विवक्मि वक्म्यो य एषां मरुतां महिमा सत्यो अस्ति ।
सचा यदीं वृषमणा अहंयुः स्थिरा चिज्जनीर्वहते सुभागाः ॥ ७ ॥

प्र । तम् । विवक्मि । वक्म्यः । यः । एषाम् । मरुताम् । महिमा । सत्यः । अस्ति ।
सचा । यत् । ईम् । वृषऽमनाः । अहम्ऽयुः । स्थिरा । चित् । जनीः । वहते । सुऽभागाः ॥७॥

**वेङ्कट०** प्र ब्रवीमि तम् महिमानम्, यः एषाम् मरुताम् स्तोतृभिः प्रवाच्यः महिमा सत्यभूतः विद्यते । सखा यत् एषाम्[6] रेतोवर्षणपरमनाः अहंयुः भवेत्, अहमस्मीति मानादहंयुरित्युच्यते, स स्थिराणि धनानि सुभगाः च जायाः मरुतां प्रसादात् वहते येन महिम्ना, तमिति ॥ ७ ॥

पान्ति मित्रावरुणाववद्याच्चयत ईमर्यमो अप्रशस्तान् ।
उत च्यवन्ते अच्युता ध्रुवाणि वावृध ईं मरुतो दातिवारः ॥ ८ ॥

पान्ति । मित्रावरुणौ । अवद्यात् । चयते । ईम् । अर्यमो इति । अप्रऽशस्तान् ।
उत । च्यवन्ते । अच्युता । ध्रुवाणि । ववृधे । ईम् । मरुतः । दातिऽवारः ॥ ८ ॥

**वेङ्कट०** रक्षन्ति मरुतः मित्रावरुणौ अवद्यात् । यथाऽहोरात्रयोर्बाधा न भवति तथा कुर्वन्ति । मरुद्भिः प्रहितोऽर्यमा प्रातः इमान् राक्षसान् बाधते । अपि च च्यवन्ते स्थिराणि उदकान्यन्तरिक्षात् । मरुतः! यो वो दत्तवरणीयधनः स वर्धते ॥ ८ ॥

नही नु वो मरुतो अन्त्यस्मे आरात्ताच्चिच्छवसो अन्तमापुः ।
ते धृष्णुना शवसा शूशुवांसोऽर्णो न द्वेषो धृषता परि ष्ठुः ॥ ९ ॥

---

१. नास्ति वि[१] लपं  २. यज्ञे वि[१] लपं.  ३. वज्रकु° वि[२] अ[१] लपं.  ४. स्तोत्रं वि[१] अ[१].
५. पवी° लपं.  ६. एनान् मूको.

नहि । नु । वः । मरुतः । अन्ति । अस्मे इति । आरात्तात् । चित् । शवसः । अन्तम् । आपुः ।
ते । धृष्णुना । शवसा । शुशुऽवांसः । अर्णः । न । द्वेषः । धृषता । परि । स्थुः ॥९॥

वेङ्कट० हे [१]मरुतः! ये अस्माकम्[१] अन्तिके दृश्यन्ते, ये वा दूराद् वर्तन्ते, उभयेऽपि[२] भवताम् न बलस्य अन्तम् अपि गच्छन्ति । ते अमी धर्षकेण बलेन वर्धमानाः उदकम् इव द्वेष्टॄञ्छत्रूनपि तेन धृषता बलेन परि तिष्ठन्ति ॥ ९ ॥

वयमद्येन्द्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये ।
वयं पुरा महि च नो अनु द्यून् तन्न ऋभुक्षा नरामनु ष्यात् ॥ १० ॥

वयम् । अद्य । इन्द्रस्य । प्रेष्ठाः । वयम् । श्वः । वोचेमहि । सऽमर्ये ।
वयम् । पुरा । महि । च । नः । अनु । द्यून् । तत् । नः । ऋभुक्षाः । नराम् । अनु । स्यात् ॥१०॥

वेङ्कट० व्यवहारार्थं तिष्ठन्नस्तं यन्तमादित्यमनयोपतिष्ठेतेत्युक्तम्[३] । वयम् अद्य इन्द्रस्य प्रियतमाः स्पर्धमाने मनुष्य उत्तरमुक्तवन्तः तथा श्वः च वोचेमहि । वयम् पुरा चोक्तवन्तः सर्वेषु[४] दिवसेषु महत्त्वम् एव अस्माकमस्तु । तद् वचनम् नेतॄणाम् अस्माकम् महानिन्द्रः [५]अनु भवतु[५] मरुतां प्रसादादिति ॥ १० ॥

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

वेङ्कट० गतम् ( ऋ १,१६५,१५ द्र. )॥ ११ ॥

[६]इति द्वितीयाष्टके चतुर्थाऽध्याये पञ्चमो वर्गः[६] ।

[ १६८ ]

[६]अगस्त्यो मैत्रावरुणिर्ऋषिः । मरुतो देवता । जगती छन्दः, अन्त्यास्तिस्रस्त्रिष्टुभः[६] ॥

यज्ञायज्ञा वः समना तुतुर्वणिर्धियंधियं वो देवया उ दधिध्वे ।
आ वोऽर्वाचः सुविताय रोदस्योर्महे ववृत्यामवसे सुवृक्तिभिः ॥ १ ॥

यज्ञाऽयज्ञा । वः । समना । तुतुर्वणिः । धियम्ऽधियम् । वः । देवऽयाः । ऊँ इति । दधिध्वे ।
आ । वः । अर्वाचः । सुविताय । रोदस्योः । महे । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥ १ ॥

---

१-१. ···स्माकम् वि[२] अ[१]. २. भ्येऽपि ते वि[२] अ[१]. ३. °न्ष्ठिते° वि[१,२] अ[१], लपं ४. °षु च वि[२] अ[१]. ५-५. भवतु वि[१] लपं. ६-६. नास्ति मूको.

**वेङ्कट०** यज्ञेयज्ञे युष्माकम् समानाकारा भवति त्वरणा । छान्दसः अभ्यासः[1] । सर्वाणि कर्माणि[2] धारयथ[3] यूयम् देवकामाः । युष्मान् इतोमुखान् द्यावापृथिव्योः सकाशात् अभ्युदयार्थम् आ वर्तयामि महते रक्षणाय स्तोत्रैः ॥ १ ॥

वव्रासो न ये स्वजाः स्वतवस इषं स्वरभिजायन्त धूतयः ।
सहस्रियासो अपां नोर्मय आसा गावो वन्द्यासो नोक्षणः ॥ २ ॥

वव्रासः । न । ये । स्वऽजाः । स्वऽतवसः । इषम् । स्वः । अभिऽजायन्त । धूतयः ।
सहस्रियासः । अपाम् । न । ऊर्मयः । आसा । गावः । वन्द्यासः । न । उक्षणः ॥ २ ॥

**वेङ्कट०** कूपाः इव ये स्वस्मादेव जायमाना भवन्तः सर्वम् अन्नम् अभ्यजायन्त स्ववृद्धयः वृक्षादीनां कम्पयितारः । कूपसाम्यं वर्षणान्ते । सहस्रसङ्ख्याः अपाम् ऊर्मयः इव श्रेणिश आगच्छन्ति । ते[2] आस्येन वन्द्याः बहुक्षीराः गावः इव[4] सेक्तार उदकानाम् ॥ २ ॥

सोमासो न ये सुतास्तृप्तांशवो हृत्सु पीतासो दुवसो नासते ।
ऐषामंसेषु रम्भिणीव रारभे हस्तेषु खादिश्च कृतिश्च सं दधे ॥ ३ ॥

सोमासः । न । ये । सुताः । तृप्तऽअंशवः । हृत्ऽसु । पीतासः । दुवसः । न । आसते ।
आ । एषाम् । अंसेषु । रम्भिणीऽइव । ररभे । हस्तेषु । खादिः । च । कृतिः । च । सम् । दधे ॥३॥

**वेङ्कट०** सोमाः[5] इव ये[6] मरुतः[4] सुताः सम्पूर्णलताः सुखा भवन्ति, हृत्सु पीताः सुराः[7] इव च आसते । अंसेषु एषाम् संरम्भिणी सकामा स्त्रीव ऋष्टिः अरब्धाऽऽसीत् । हस्तेषु खाद्यायुधम् खड्गः च सह[2] निहिताविति ॥ ३ ॥

अव स्वयुक्ता दिव आ वृथा ययुरमर्त्याः कशया चोदत त्मना ।
अरेणवस्तुविजाता अचुच्यवुर्दृळ्हानि चिन्मरुतो भ्राजदृष्टयः ॥ ४ ॥

अव । स्वऽयुक्ताः । दिवः । आ । वृथा । ययुः । अमर्त्याः । कशया । चोदत । त्मना ।
अरेणवः । तुविऽजाताः । अचुच्यवुः । दृळ्हानि । चित् । मरुतः । भ्राजत्ऽऋष्टयः ॥४॥

**वेङ्कट०** दिवसेनैव युक्ता मरुतः अनायासेन अधस्तात् आगताः हे अमर्त्याः ! भवताम् अश्वाजन्या आत्मनैव अश्वांश्चोदयत । रेणुवर्जिताः बहुजननाः च्यावयन्ति दृढानि अपि मरुतः दीप्तायुधाः ॥ ४ ॥

---

१. भूस्वः (भूस्व वि[1] अ[1] लपं.) मूको.　२. नास्ति वि[1] लपं.　३. धारय मूको.　४. नास्ति लपं.
५. सोमासः वि[1] लपं.　६. ते वि[1] लपं　७. सुताः वि[1] लपं; वैप १,१६५४f द्र.

को वोऽन्तर्मरुत ऋष्टिविद्युतो रेजति त्मना हन्वेव जिह्वया ।
धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्यो३ नैतशः ॥ ५ ॥

कः । वः । अन्तः । मरुतः । ऋष्टिऽविद्युतः । रेजति । त्मना । हन्वाऽइव । जिह्वया ।
धन्वऽच्युतः । इषाम् । न । यामनि । पुरुऽप्रैषाः । अहन्यः । न । एतशः ॥ ५ ॥

वेङ्कट० कः युष्माकम् मध्ये मरुतः! ऋष्ट्या विद्योतमानाः! हन्वोरिव जिह्वा इति छन्दोऽनुविधानार्थ-मन्यत्रापि विभक्तिव्यत्यय ऋगन्तेषु दृष्टः। यथा —'उदूपथुरश्विना वन्दनाय' (ऋ १,११७,५)। यथा हन्वोर्मध्ये जिह्वा विचलति[1] तद्वच्चलति। स नूनमिन्द्रः। अन्तरिक्षे च्यवमानाः अन्नानाम् इव गमनार्थं गच्छत यस्मादागमनानन्तरमन्नानि प्रादुर्भवन्तीति बहुप्रसवाः अहनि भवः इव श्वेतवर्ण आदित्यः ॥ ५ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये षष्ठो वर्गः[2] ॥

क्व स्विदस्य रजसो महस्परं क्वावरं मरुतो यस्मिन्नायय ।
यच्च्यावयथ विथुरेव संहितं व्यद्रिणा पतथ त्वेषमर्णवम् ॥ ६ ॥

क्व । स्वित् । अस्य । रजसः । महः । परम् । क्व । अवरम् । मरुतः । यस्मिन् । आऽयय ।
यत् । च्यवयथ । विथुराऽइव । सम्ऽहितम् । वि । अद्रिणा । पतथ । त्वेषम् । अर्णवम् ॥ ६ ॥

वेङ्कट० यस्मिन् अन्तरिक्षे यूयं गच्छथ, यत्र[3] वाऽसहायानीव तृणानि अनायासेन संहतं वृक्षादिकम्[4] च्यावयथ[5]। तत्र दीप्तम् उदकवन्तम् मेघम् वज्रेण वि पातयथ। तस्य अस्य भवतां विधेयस्य अन्तरिक्षस्य महतः क्व परम् पारम् क्व वा अवरम्[6] हे मरुतः! ॥ ६ ॥

सातिर्न वोऽमवती स्वर्वती त्वेषा विपाका मरुतः पिपिष्वती ।
भद्रा वो रातिः पृणतो न दक्षिणा पृथुज्रयी असुर्येव जञ्जती ॥ ७ ॥

सातिः । न । वः । अमऽवती । स्वःऽवती । त्वेषा । विऽपाका । मरुतः । पिपिष्वती ।
भद्रा । वः । रातिः । पृणतः । न । दक्षिणा । पृथुऽज्रयी । असुर्याऽइव । जञ्जती ॥ ७ ॥

वेङ्कट० दानम् न युष्माकम् रोगयुक्तम् अभ्युदययुक्तम् दीप्तम् विशिष्टोदकम् मरुतः! भूयोभूयः प्रादुर्भावात्पेषणवत्। तदेवाह। भद्रम् वः दानम् प्रयच्छतः उदारस्य इव दक्षिणा, पृथुवेगा च असुराणां स्वभूता सेनेव। जजिर्योधनकर्मा ॥ ७ ॥

प्रति ष्टोभन्ति सिन्धवः पविभ्यो यदभ्रियां वाचमुदीरयन्ति ।
अव स्मयन्त विद्युतः पृथिव्यां यदी घृतं मरुतः प्रुष्णुवन्ति ॥ ८ ॥

---

१. चलति वि[1] लपं. २-२. नास्ति मूको. ३. तत्र मूको. ४. नास्ति वि[2] अ[1]. ५ नास्ति अ[1]. ६. अपरम् वि[2] अ[1].

प्रति । स्तोभन्ति । सिन्धवः । पविऽभ्यः । यत् । अभ्रियाम् । वाचम् । उत्ऽईरयन्ति ।
अव । स्मयन्त । विऽद्युतः । पृथिव्याम् । यदि । घृतम् । मरुतः । प्रुष्णुवन्ति ॥ ८ ॥

**वेङ्कट०** युष्माकमायुधेभ्यः प्रति चलन्ति आपः, यदा अभ्र्याम् वाचम् उदीरयन्ति । पृथिवीं लक्षीकृत्य विद्युतः च अव स्मयन्त हसन्ति, यदि उदकम् मरुतः सिञ्चन्ति ॥ ८ ॥

**असूत पृश्निर्महते रणाय त्वेषमयासां मरुतामनीकम् ।**
**ते सप्सरासोऽजनयन्ताभ्वमादित् स्वधामिषिरां पर्यपश्यन् ॥ ९ ॥**

असूत । पृश्निः । महते । रणाय । त्वेषम् । अयासाम् । मरुताम् । अनीकम् ।
ते । सप्सरासः । अजनयन्त । अभ्वम् । आत् । इत् । स्वधाम् । इषिराम् । परि । अपश्यन् ॥ ९ ॥

**वेङ्कट०** मरुतां माता पृश्निः महते रणाय दीप्तम् गमनशीलानाम् मरुताम् सङ्घम् असूत । ते समानरूपाः[1] [2]मेघानां हिंसका वा[2] हिंसाकर्मा वा स्पृणोतिः, उदकम् जनयन्ति । तदनन्तरम् एव मनुष्याः सर्वम् एषणीयम् अन्नम् पृथिव्याः परितः पश्यन्ति ॥ ९ ॥

**एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।**
**एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥**

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥

**वेङ्कट०** [2]एषा पूर्वं (ऋ १,१६५, १५) व्याख्याता[2] ॥ १० ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये सप्तमो वर्गः[2] ॥

## [ १६९ ]

[2]अगस्त्यो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः, द्वितीया चतुष्पदा विराट्[2] ।

**महश्चित् त्वमिन्द्र यत एतान् महश्चिदसि त्यजसो वरुता ।**
**स नो वेधो मरुतां चिकित्वान्त्सुम्ना वनुष्व तव हि प्रेष्ठा ॥ १ ॥**

महः । चित् । त्वम् । इन्द्र । यतः । एतान् । महः । चित् । असि । त्यजसः । वरुता ।
सः । नः । वेधः । मरुताम् । चिकित्वान् । सुम्ना । वनुष्व । तव । हि । प्रेष्ठा ॥ १ ॥

**वेङ्कट०** इन्द्र! महतो मरुतः यतः[3] एतान् त्वम् नियच्छसि । महतः असि त्यागस्य सम्भक्ता । सः अस्मभ्यम् विधातः! मरुताम् प्राज्ञस्त्वम् सुखानि[4] देहि । सन्ति हि तव प्रियतमानि सुखानि ॥ १ ॥

---

१. समानशीलाः वि[1] लपं.　२-२. नास्ति मूको.　३. नास्ति मूको　४. °नि म वि[1,2] क लपं.

अयुञ्जन्त इन्द्र विश्वकृष्टीर्विदानासो निष्षिधो मर्त्यत्रा ।
मरुतां पृत्सुतिर्हासमाना स्वर्मीळ्हस्य प्रधनस्य सातौ ॥ २ ॥

अयुञ्जन् । ते । इन्द्र । विश्वऽकृष्टीः । विदानासः । निःऽसिधः । मर्त्यऽत्रा ।
मरुताम् । पृत्सुतिः । हासमाना । स्वःऽमीळ्हस्य । प्रऽधनस्य । सातौ ॥ २ ॥

**वेङ्कट०** युक्ता आसन् मरुतः इन्द्र! परिपूर्णकर्षणाः ज्ञातारः त्यजन्तो धनानि मर्त्येषु[1] । मरुताम् एषाम् सेना दीप्यमाना सर्वसेचनस्य युद्धस्य भजने ॥ २ ॥

अम्यक् सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति ।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥ ३ ॥

अम्यक् । सा । ते । इन्द्र । ऋष्टिः । अस्मे इति । सनेमि । अभ्वम् । मरुतः । जुनन्ति ।
अग्निः । चित् । हि । स्म । अतसे । शुशुक्वान् । आपः । न । द्वीपम् । दधति । प्रयांसि ॥ ३ ॥

**वेङ्कट०** अम्यक्[2] तत् तव इन्द्र![3] आयुधम् अस्मदर्थम् त्वयि । ततश्च तत्साहाय्यात्[4] मरुतः पुराणम् उदकम् प्रेरयन्ति । अग्निः इव अतसे शुशुक्वान् ज्वालाः, आपः इव द्वीपम्[5], सर्वे मनुष्याः धारयन्ति अन्नानि ॥ ३ ॥

त्वं तू न इन्द्र तं रयिं दा ओजिष्ठया दक्षिणयेव रातिम् ।
स्तुतश्च यास्ते चकनन्त वायोः स्तनं न मध्वः पीपयन्त वाजैः ॥ ४ ॥

त्वम् । तु । नः । इन्द्र । तम् । रयिम् । दाः । ओजिष्ठया । दक्षिणयाऽइव । रातिम् ।
स्तुतः । च । याः । ते । चकनन्त । वायोः । स्तनम् । न । मध्वः । पीपयन्त । वाजैः ॥ ४ ॥

**वेङ्कट०** त्वम् हि क्षिप्रम् इन्द्र! अस्मभ्यम् त्वदीयम् रयिम् देहि, यथा यजमाना बलवत्तमया दक्षिणया सह धनं प्रयच्छन्ति । याः स्तुतयः त्वाम् अकामयन्त गन्तारम्, ताः स्तोतारं पयसा स्तनम् इव अन्नैः पूरयन्ति ॥ ४ ॥

त्वे राय इन्द्र तोशतमाः प्रणेतारः कस्य चिदृतायोः ।
ते षु णो मरुतो मृळयन्तु ये स्मा पुरा गातूयन्तीव देवाः ॥ ५ ॥

त्वे इति । रायः । इन्द्र । तोशऽतमाः । प्रऽनेतारः । कस्य । चित् । ऋतऽयोः ।
ते । सु । नः । मरुतः । मृळयन्तु । ये । स्म । पुरा । गातुयन्तिऽइव । देवाः ॥ ५ ॥

---

१. मान्येषु वि॰ लप. २. अभ्यक्तं अ॰. ३. नास्ति मूको. ४. साहा॰ वि॰ लप. ५. नास्ति वि॰ लप.

**वेङ्कट०** त्वयि स्थितानि धनानि इन्द्र![1] अयजमानस्य बाधकानि भवन्ति प्रणेतारः च कस्य चित् यज्ञमिच्छतः तव स्वभूताः। ते मरुतः अस्मान् सुष्ठु सुखयन्तु ये स्म देवाः शीघ्रम् यजमानेषु गमनमिच्छन्तीव कामान् प्रदातुम् ॥ ५ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्यायेऽष्टमो वर्गः[2] ॥

प्रति प्र याहीन्द्र मीळ्हुषो नॄन् महः पार्थिवे सदने यतस्व।
अध यदेषां पृथुबुध्नास एतास्तीर्थे नार्यः पौंस्यानि तस्थुः ॥ ६ ॥

प्रति। प्र। याहि। इन्द्र। मीळ्हुषः। नॄन्। महः। पार्थिवे। सदने। यतस्व।
अध। यत्। एषाम्। पृथुऽबुध्नासः। एताः। तीर्थे। न। अर्यः। पौंस्यानि। तस्थुः ॥ ६ ॥

**वेङ्कट०** कामैर्यजमानान्[3] सेक्तॄन् मरुतः प्रति इन्द्र! गच्छ। अथ तैः सह महांस्त्वम्[4] पार्थिवे लोके गच्छ। यस्मात् तव गमनध्यानानन्तरमेव मरुताम् पृथुमूलावबद्धा नियुतश्च एताः तव गमनाय स्वबलानि अधितिष्ठन्ति। यथा स्वामी युद्धे[5] बलानि तद्वदिति ॥ ६ ॥

प्रति घोराणामेतानामयासां मरुतां शृण्व आयतामुपब्दिः।
ये मर्त्यं पृतनायन्तमूमैर्ऋणावानं न पतयन्त सर्गैः ॥ ७ ॥

प्रति। घोराणाम्। एतानाम्। अयासाम्। मरुताम्। शृण्वे। आऽयताम्। उपब्दिः।
ये। मर्त्यम्। पृतनाऽयन्तम्। ऊमैः। ऋणऽवानम्। न। पतयन्त। सर्गैः ॥ ७ ॥

**वेङ्कट०** घोररूपाणाम् एतवर्णानां गच्छताम् आगच्छतां च शब्दः प्रति श्रूयते मरुताम्। ये मारकम् इन्द्रम् पृतनामिच्छन्तम् रक्षणैः अभिगच्छन्ति। ऋणिनम् इव अर्थविसर्गैः ॥ ७ ॥

त्वं मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः।
स्तवानेभिः स्तवसे देव देवैर्विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥

त्वम्। मानेभ्यः। इन्द्र। विश्वऽजन्या। रद। मरुत्ऽभिः। शुरुधः। गोऽअग्राः।
स्तवानेभिः। स्तवसे। देव। देवैः। विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥ ८ ॥

**वेङ्कट०** [6]त्वम् मानपुत्रेभ्यः इन्द्र! विश्वजनहितया विलिख ऋष्टया मरुद्भिः सह अपः पशुमुखाः। स्तूयमानैः मरुद्भिः त्वं स्तूयसे देव! इति[6]। [2]शिष्टं गतम्[2] ( ऋ १,१६५,१५ ) ॥ ८ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये नवमो वर्गः[2] ॥

---

१. नास्ति मूको. २-२. नास्ति मूको. ३. °मानानां वि[२] अ[१]. ४. महंस्त्वम् वि[२] अ[१]. ५. युद्ध स्व वि[२] अ[१]. ६-६. एतत्स्थाने महांस्त्वमित्यारभ्य तद्वदित्यन्तः षष्ठमन्त्रस्थः पाठः आपतितः वि[२] ळपं.

[ १७० ]

[1]प्रथमातृतीयाचतुर्थीनामिन्द्र ऋषिः, द्वितीयापञ्चम्योरगस्त्यो मैत्रावरुणिः।
इन्द्रो देवता। प्रथमाया बृहती छन्दः, द्वितीया-
चतुर्थ्योरनुष्टुप्, पञ्चम्यास्त्रिष्टुप्[1]॥

न नूनमस्ति नो श्वः कस्तद् वेद यदद्भुतम्।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥ १ ॥

न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् । अद्भुतम् ।
अन्यस्य । चित्तम् । अभि । सम्ऽचरेण्यम् । उत । आऽधीतम् । वि । नश्यति ॥ १ ॥

वेङ्कट० 'अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्साञ्चकार। स इन्द्र एत्य परिदेवयाञ्चक्रे' (या १,५)। नूनमिति विचिकित्सितार्थः[2]। न नूनम् अस्ति अद्यतनम्, नो एव श्वस्तनम्। कः तत् जानाति यत् अभूतम्[3] भविष्यत्। यद्धस्तस्थं भवति तदेव विश्वसनीयं[4] भवति। अन्यस्य चित्तम् अभिसञ्चारि। अपि च आध्यातमपि वि नश्यति ॥ १ ॥

किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव।
तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥ २ ॥

किम् । नः । इन्द्र । जिघांससि । भ्रातरः । मरुतः । तव ।
तेभिः । कल्पस्व । साधुऽया । मा । नः । सम्ऽअरणे । वधीः ॥ २ ॥

वेङ्कट० अगस्त्य इन्द्रमाह। किम् अस्मान् इन्द्र! त्वं जिघांससि। मरुतः अमी भ्रातरः तव भवन्ति। तैः त्वमेकीभव साधुना मार्गेण। मा अस्मान् सङ्गमने[5] हिंसीः। शौनकः—

'किं न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ॥
मरुद्भिः सम्प्रकल्पस्व वधीर्मा नः[6] शतक्रतो।' ( बृदे ४,५१;५२ ) इति[7] ॥२॥

किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे।
विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥ ३ ॥

किम् । नः । भ्रातः । अगस्त्य । सखा । सन् । अति । मन्यसे ।
विद्म । हि । ते । यथा । मनः । अस्मभ्यम् । इत् । न । दित्ससि ॥ ३ ॥

वेङ्कट० इन्द्र आह। किम् नः इति निगदव्याख्यानम्। 'किं नो भ्रातरिति त्वस्यामिन्द्रो मान्य-मुपालभत्' ( बृदे ४,५२ ) इति शौनकः ॥ ३ ॥

१-१. नास्ति मूको. २. °कित्सार्थः वि[2] अ[1]. ३. अद्भुतम् वि[2]. ४. विश्वजनीयं वि[1] अ[1] लपं. ५. 'ङ्गमेन वि[1] लपं. ६. च वि[2] अ[1]. ७. नास्ति मूको.

अरं कृण्वन्तु वेदिं समग्निमिन्धतां पुरः । तत्रामृतस्य चेतनं यज्ञं ते तनवावहै ॥४॥

अरम् । कृण्वन्तु । वेदिम् । सम् । अग्निम् । इन्धताम् । पुरः ।
तत्रं । अमृतस्य । चेतनम् । यज्ञम् । ते । तनवावहै ॥ ४ ॥

**वेङ्कट०** शौनकः—"अगस्त्यस्त्वरमित्यस्यां क्षुब्धमिन्द्रं[1] प्रशामयत्' ( बृदे ४, ५३ ) इति । शीघ्रमृत्विजः वेदिम् अलङ्कृण्वन्तु सम् इन्धताम् च अग्निम् । आहवनीये तस्मिन् हविषश्च प्रज्ञापनं भवति आसन्नस्य । यज्ञम् तुभ्यम् तनवावहै[2] ॥ ४ ॥

त्वमीशिषे वसुपते वसूनां त्वं मित्राणां मित्रपते धेष्ठः ।
इन्द्र त्वं मरुद्भिः सं वदस्वाध प्राशान ऋतुथा हवींषि ॥ ५ ॥

त्वम् । ईशिषे । वसुऽपते । वसूनाम् । त्वम् । मित्राणाम् । मित्रऽपते । धेष्ठः ।
इन्द्र । त्वम् । मरुत्ऽभिः । सम् । वदस्व । अर्ध । प्र । अशान । ऋतुऽथा । हवींषि ॥ ५ ॥

**वेङ्कट०** [3]त्वम् ईशिषे[3] वसुपते! वसूनाम् त्वम् मित्राणाम् मित्रपते! धातृतमः । इन्द्र! त्वम् एव मरुद्भिः प्रथमं संवादं कुरु । तदनन्तरम् काले हवींषि प्रकर्षेण भुङ्क्ष्व इति[4] ॥ ५ ॥

[5]इति द्वितीयाष्टके चतुर्थाध्याये दशमो वर्गः ॥[5]

## [ १७१ ]

[5]अगस्त्यो मैत्रावरुणिर्ऋषिः । आद्ययोर्मरुतो देवता, शिष्टानां मरुत्वानिन्द्रः । त्रिष्टुप् छन्दः[5] ॥

प्रति व एना नमसाहमेमि सूक्तेन भिक्षे सुमतिं तुराणाम् ।
रराणता मरुतो वेद्याभिर्नि हेळो धत्त वि मुचध्वमश्वान् ॥ १ ॥

प्रति । वः । एना । नमसा । अहम् । एमि । सुऽउक्तेन । भिक्षे । सुऽमतिम् । तुराणाम् ।
रराणता । मरुतः । वेद्याभिः । नि । हेळः । धत्त । वि । मुचध्वम् । अश्वान् ॥ १ ॥

**वेङ्कट०** 'प्रादात् संवननं[6] कृत्वा तेभ्य एव च तद्धविः ॥
सुते चकार सोमेऽथ[7] तानिन्द्रः सोमपीथिनः ।
तस्माद् '[8]विद्याग्निपातेन[8] ऐन्द्रेषु मरुतः स्तुतान् ॥
प्रीतात्मा पुनरेवर्षिस्ताँस्तुष्टाव पृथक्पृथक्[9] ।
मरुतः प्रति सूक्ताभ्यामिन्द्रं षड्भिः परैस्तु सः ॥' (बृदे ४,५३-५५) इत्युक्तम् ।

प्रति एमि युष्मान् अहम् अनेन नमस्कारेण सुवचनेन । याचे शोभमानां मतिम् शीघ्रगामिनाम् । हे मरुतः! रममाणेन तदर्थम् मदीयाभिः स्तुतिभिः युष्मदीयं क्रोधं नि धत्त त्यजत । अथ गमनार्थं वि मुचध्वम् अश्वान् ॥ १ ॥

---

१-१. °रमित्यृग्भ्यां क्रुद्धमिन्द्रं मूको. २. °वामहै वि[1] लपं. ३-३. नास्ति वि[2]. ४. नास्ति वि[2] अ[1]. ५-५. नास्ति मूको. ६. सस्वनं वि[2] अ.[1] ७. °मे च मूको. ८-८. विद्यां नि° मूको. ९. पुनः पृथ° मूको.

एष वः स्तोमो मरुतो नमस्वान् हृदा तष्टो मनसा धायि देवाः ।
उपेमा यात मनसा जुषाणा यूयं हि ष्ठा नमस इद् वृधासः ॥ २ ॥

एषः । वः । स्तोमः । मरुतः । नमस्वान् । हृदा । तष्टः । मनसा । धायि । देवाः ।
उप । ईम् । आ । यात । मनसा । जुषाणाः । यूयम् । हि । स्थ । नमसः । इत् । वृधासः ॥२॥

**वेङ्कट०** एषः युष्माकम् स्तोमः मरुतः![1] अन्नवान् मया हृदयेन अन्यूनानतिरिक्तं कृतः । मया मनसा धार्यते देवाः![1] । तथा सति इमं स्तोमम्[2] उप आ गच्छत मनसा सेवमानाः । यूयम् हि भवथ अन्नस्य वर्धयितारः ॥ २ ॥

स्तुतासो नो मरुतो मृळयन्तूत स्तुतो मघवा शंभविष्ठः ।
ऊर्ध्वा नः सन्तु कोम्या वनान्यहानि विश्वा मरुतो जिगीषा ॥ ३ ॥

स्तुतासः । नः । मरुतः । मृळयन्तु । उत । स्तुतः । मघऽवा । शम्ऽभविष्ठः ।
ऊर्ध्वा । नः । सन्तु । कोम्या । वनानि । अहानि । विश्वा । मरुतः । जिगीषा ॥ ३ ॥

**वेङ्कट०** स्तुताः मरुतः अस्मान् सुखयन्तु । अपि च स्तुतः मघवा सुखस्य भावयितृतमः । कमिपर्यायः कुमिः । ऊर्ध्वानि सन्तु अस्माकम् कमनीयानि अरण्यानि । सर्वेष्वपि अहस्सु हे मरुतः! भवतां गमनेच्छास्तु ॥ ३ ॥

अस्मादहं तविषादीषमाण इन्द्राद् भिया मरुतो रेजमानः ।
युष्मभ्यं हव्या निशितान्यासन् तान्यारे चकृमा मृळता नः ॥ ४ ॥

अस्मात् । अहम् । तविषात् । ईषमाणः । इन्द्रात् । भिया । मरुतः । रेजमानः ।
युष्मभ्यम् । हव्या । निऽशितानि । आसन् । तानि । आरे । चकृम । मृळत । नः ॥४॥

**वेङ्कट०** अस्मात् प्रवृद्धात् इन्द्रात् अहम् भयात् पलायमानः हे मरुतः! कम्पमानः । तथा सति युष्मभ्यम् हव्यानि प्रथमं सुसंस्कृतानि आसन्, तानि वयं भीत्या दूरे कृतवन्तः । सुखयत अस्मान् अस्वाधीनान् ॥ ४ ॥

येन मानासश्चितयन्त उस्रा व्युष्टिषु शवसा शश्वतीनाम् ।
स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभिः स्थविरः सहोदाः ॥ ५ ॥

येन । मानासः । चितयन्ते । उस्राः । विऽउष्टिषु । शवसा । शश्वतीनाम् ।
सः । नः । मरुत्ऽभिः । वृषभ । श्रवः । धाः । उग्रः । उग्रेभिः । स्थविरः । सहःऽदाः ॥ ५ ॥

---

१. नास्ति मूको. २. स्तोत्रम् मूको.

वेङ्कट० येन इन्द्रेण प्रज्ञापकाः रश्मयोऽर्थान् उषसाम् व्युष्टिषु वेगेन प्रज्ञापयन्ति । सः त्वम् अस्मभ्यम् मरुद्भिः सह [1]वर्षितः! अन्नम्[1] देहि उद्गूर्णः स्थविरः बलस्य दाता ॥ ५ ॥

त्वं पाहीन्द्र सहीयसो नॄन् भवा मरुद्भिरवयातहेळाः ।
सुप्रकेतेभिः सासहिर्दधानो विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

त्वम् । पाहि । इन्द्र । सहीयसः । नॄन् । भव । मरुत्ऽभिः । अवयातऽहेळाः ।
सुऽप्रकेतेभिः । ससहिः । दधानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम ॥ ६ ॥

वेङ्कट० त्वम् रक्ष इन्द्र! अभिभवितॄन् नेतॄन् मरुतः । भव च मरुद्भिः सह अपगतक्रोधः । शोभनप्रज्ञानैः अभिमतानि प्रयच्छन् शत्रूणामभिभविता । [2]गतमन्यत्[2] ( ऋ १,१६५,१५ ) ॥ ६ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये एकादशो वर्गः[2] ॥

## [ १७२ ]

[2]अगस्त्यो मैत्रावरुणिर्ऋषिः । मरुतो देवता । गायत्री छन्दः[2] ॥

चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः । मरुतो अहिभानवः ॥ १ ॥

चित्रः । वः । अस्तु । यामः । चित्रः । ऊती । सुऽदानवः । मरुतः । अहिऽभानवः ॥ १ ॥

वेङ्कट० हे सुदानाः![3] वः चित्रम् यानमिह अस्तु रक्षणार्थम् मरुतः! आहन्तृदीप्तयः! ॥ १ ॥

आरे सा वः सुदानवो मरुत ऋञ्जती शरुः । आरे अश्मा यमस्यथ ॥ २ ॥

आरे । सा । वः । सुऽदानवः । मरुतः । ऋञ्जती । शरुः । आरे । अश्मा । यम् । अस्यथ ॥२॥

वेङ्कट० हे सुदानाः! मरुतः! युष्मान् अलङ्कुर्वती सा हिंसित्री ऋष्टिः दूरे भवतु, तथा अश्मा च, यम् यूयं क्षिपथेति ॥ २ ॥

तृणस्कन्दस्य नु विशः परि वृङ्क्त सुदानवः । ऊर्ध्वान् नः कर्त जीवसे ॥३॥

तृणऽस्कन्दस्य । नु । विशः । परि । वृङ्क्त । सुऽदानवः । ऊर्ध्वान् । नः । कर्त । जीवसे ॥ ३ ॥

वेङ्कट० तृणस्कन्दस्य[5] राज्ञः विशः अस्मच्छत्रुभूताः[4] बाधध्वम् सुदानाः! । ऊर्ध्वान् अस्मान् कुरुत जीवनाय ॥ ३ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये द्वादशो वर्गः[2] ॥

## [ १७३ ]

[2]अगस्त्यो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः, चतुर्थी विराट्स्थाना विषमपदा वा[2] ॥

गायत् साम नभन्यं१ यथा वेरर्चाम तद् वावृधानं स्वर्वत् ।
गावो धेनवो बर्हिष्यदब्धा आ यत् सद्मानं दिव्यं विवासान् ॥ १ ॥

---

१-१. वर्षितातोन्नं वि॰ लपं. २-२. नास्ति मूको. ३. सुदान वि॰ लपं. ४. नास्ति लपं. ५. [5]भूतान् मूको.

गार्यत् । सार्म । नभन्र्यम् । यथा । वेः । अर्चाम । तत् । वव॒धानम् । स्वः॑ऽवत् ।
गार्वः । धेनवः । बर्हिषि । अदब्धाः । आ । यत् । सद्मानम् । दिव्यम् । विवासान् ॥ १ ॥

**वेङ्कट०** गायति साम हिंसनसाधनम्, 'साम वै रक्षोहा' (तै ६,६,३१) इति ब्राह्मणम्, यथा जानात्युद्गाता। वयं च तत् अनुशंसाम[1] वर्धमानम् शोभनयुक्तम्। गावः प्रीणयित्र्यः यज्ञे अनुपहिंसिताः, हविष्प्रदानेन यदा दिवि भवम् सद्मानम् इन्द्रं सीदन्ति यस्मिन् देवास्तम् परिचरन्ति, तदानीं गायन्तीति ॥ १ ॥

**अर्चद् वृषा वृषभिः स्वेदुहव्यैर्मृगो नाश्नो अति यज्जुगुर्यात् ।**
**प्र मन्दयुर्मनां गूर्त होता भरते मर्यो मिथुना यजत्रः ॥ २ ॥**

अर्चत् । वृषा । वृषऽभिः । स्वऽइंदुहव्यैः । मृगः । न । अश्नः । अति । यत् । जुगुर्यात् ।
प्र । मन्दयुः । मनाम् । गूर्त । होता । भरते । मर्यः । मिथुना । यजत्रः ॥ २ ॥

**वेङ्कट०** अर्चति[2] इन्द्रः मरुद्भिः स्वभूतसोमहविष्कैः, मृगः इव अशनपरः, यदि[3] अत्यन्तम् उद्युक्तो भवेत्। प्र भरते च मदयिता स्तुतीनाम् हे उद्गूर्ण! होता मिथुनानि याज्यां चानुवाक्यां यजनकुशलः मनुष्यः ॥ २ ॥

**नक्षद्धोता परि सद्म मिता यन् भरद् गर्भमा शरदः पृथिव्याः ।**
**क्रन्ददश्वो नयमानो रुवद् गौरन्तर्दूतो न रोदसी चरद् वाक् ॥ ३ ॥**

नक्षत् । होता । परि । सद्म । मिता । यन् । भरत् । गर्भम् । आ । शरदः । पृथिव्याः ।
क्रन्दत् । अश्वः । नयमानः । रुवत् । गौः । अन्तः । दूतः । न । रोदसी इति । चरत् । वाक् ॥ ३ ॥

**वेङ्कट०** परितः व्याप्नोति होता सम्मितानि देवयजनानि यत्रयत्र कार्यं[4] तत्र गच्छन्। अथेन्द्रः शरदः गर्भम् उदकम् पृथिव्याः आ हरति। शब्दायन्[5] अश्वः [6]नीयमानः रुवन्निव च गौः[6] इन्द्रः शब्दं कुर्वन् भवति। तस्य वाक् द्यावापृथिव्योः अन्तः दूतः इव चरति गर्जितलक्षणा ॥ ३ ॥

**ता कर्मार्षतरास्मै प्र च्यौत्नानि देवयन्तो भरन्ते ।**
**जुजोषदिन्द्रो दस्मवर्चा नासत्येव सुग्म्यो रथेष्ठाः ॥ ४ ॥**

ता । कर्म । अर्षऽतरा । अस्मै । प्र । च्यौत्नानि । देवऽयन्तः । भरन्ते ।
जुजोषत् । इन्द्रः । दस्मऽवर्चाः । नासत्याऽइव । सुग्म्यः । रथेऽस्थाः ॥ ४ ॥

---

१. °सने नाम मूको. २. अर्चित वि[1] लपं. ३. यजमान अ[1] कु. ४. °र्यं तत्र कार्यं वि[1] लपं.
५. शब्दायन् मूको. ६-६. °नीय ··· गौ वि[1] अ[1].

**वेङ्कट०** तानि कुर्मः अभिलषिततराणि इन्द्राय। प्र भरन्ते बलकराणि ऋत्विजो हवींषि। सेवतामुभयान्यपि इन्द्रः दर्शनीयवर्चाः अश्विनाविव रथे तिष्ठन् सुखकरः ॥ ४ ॥

तमु॑ ष्टुहीन्द्रं॒ यो ह॒ सत्वा॒ यः शूरो॑ म॒घवा॒ यो र॑थे॒ष्ठाः ।
प्र॒तीच॑श्चि॒द् योधी॑या॒न् वृष॑ण्वान् व॒व्रुष॑श्चि॒त्तम॑सो वि॒ह॒न्ता ॥ ५ ॥

तम् । ऊँ इति॑ । स्तु॒हि॒ । इन्द्र॑म् । यः । ह॒ । सत्वा॑ । यः । शूरः॑ । म॒घऽवा॑ । यः । र॒थे॒ऽस्थाः ।
प्र॒तीचः॑ । चि॒त् । योधी॑यान् । वृष॑ण्ऽवान् । व॒व्रुषः॑ । चि॒त् । तम॑सः । वि॒ऽह॒न्ता ॥ ५ ॥

**वेङ्कट०** तम् एव स्तुहि इन्द्रम्, यः युद्धेषु गच्छति, यः च शृणाति शत्रुम् धनवान्, यः च रथे तिष्ठति, यः च अभिमुखान् अपि शत्रून् अत्यन्तम् युध्यति[1] वर्षणवान् वारकस्य अपि तमसः वारयिता ॥ ५ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये त्रयोदशो वर्गः[2] ॥

प्र यदि॒त्था म॑हि॒ना नृभ्यो॒ अस्त्यरं॒ रोद॑सी क॒क्ष्ये॒३ नास्मै॑ ।
सं वि॑व्य॒ इन्द्रो॑ वृ॒जनं॒ न भूमा॒ भर्ति॑ स्व॒धावाँ॑ ओप॒शमि॑व॒ द्याम् ॥ ६ ॥

प्र । यत् । इ॒त्था । म॒हि॒ना । नृऽभ्यः॑ । अस्ति॑ । अर॑म् । रोद॑सी इति॑ । क॒क्ष्ये॒३ इति॑ । न । अ॒स्मै॒ ।
सम् । वि॒व्ये॒ । इन्द्रः॑ । वृ॒जन॑म् । न । भूम॑ । भर्ति॑ । स्व॒धाऽवा॑न् । ओ॒प॒शम्ऽइ॑व । द्याम् ॥ ६ ॥

**वेङ्कट०** प्रकर्षेण विद्यते यत्[3] इत्थम् महत्त्वेन मनुष्येभ्यस्तेजः, तस्मै तेजसे द्यावापृथिवी सञ्चरणस्थाने न [4]अलं भवतः[4]। तेन तेजसा इन्द्रः भूमिम् आच्छादयति, यथा बलं [5]सेनालक्षणं निष्क्रान्तम्[5]। बिभर्ति अन्नवानिन्द्रः संदंशः इव दिवम्। स्थूणा वौपशः[6] ॥६॥

स॒मत्सु॑ त्वा शूर स॒तामु॑रा॒णं प्र॑प॒थिन्त॑मं परितंस॒यध्यै॑ ।
स॒जोष॑स॒ इन्द्रं॒ मदे॑ क्षो॒णीः सू॒रिं चि॒द् ये अ॑नु॒मद॑न्ति॒ वाजैः॑ ॥ ७ ॥

स॒मत्ऽसु॑ । त्वा॒ । शू॒र॒ । स॒ताम् । उ॒रा॒णम् । प्र॒प॒थिन्ऽत॑मम् । प॒रि॒ऽतं॒स॒यध्यै॑ ।
स॒ऽजोष॑सः । इन्द्र॑म् । मदे॑ । क्षो॒णीः । सू॒रिम् । चि॒त् । ये । अ॒नु॒ऽमद॑न्ति । वाजैः॑ ॥ ७ ॥

**वेङ्कट०** समत्सु त्वा शूर! सताम् बहु कुर्वाणम् अतिशयेन प्रकृष्टमार्गं जिगमिषुम् शत्रूणां परितंसनाय परिपेषणाय सोमेन मदयितुम् ईश्वरम् प्रजाः ऐकमत्यं गता भवन्ति। ये एनम् प्राज्ञम् अन्नैः च तर्पयन्ति, तांश्चानुमन्यते[7] ॥ ७ ॥

---

१. युद्ध्यति (ते) ल. २-२. नास्ति मूको. ३. °त् इदम् वि[1] अ[1]. ४-४. अल बतः मूको. ५-५. सेनानिष्क्रान्तम् वि[1] लपं. ६. बोपशः मूको. ७. °न्यन्ते वि[1] अ[1]; °भवते लपं.

एवा हि ते शं सवना समुद्र आपो यत् त आसु मदन्ति देवीः ।
विश्वा ते अनु जोष्या भूद् गौः सूरींश्चिद् यदि धिषा वेषि जनान् ॥ ८ ॥

एव । हि । ते । शम् । सवना । समुद्रे । आपः । यत् । ते । आसु । मदन्ति । देवीः ।
विश्वा । ते । अनु । जोष्या । भूत् । गौः । सूरीन् । चित् । यदि । धिषा । वेषि । जनान् ॥८॥

**वेङ्कट०** समुन्दने सति त्रीण्यपि तव सवनानि एवम् प्रजानां शङ्कराणि भवन्ति । यत् त्वदीयाः इमाः[1] आपः देव्यस्त्वया विसृष्टाः आसु नदीषु मदन्ति । स त्वं यदि प्राज्ञान् अस्मान् प्रज्ञया गच्छसि, ततः सर्वा ते वाक् सेव्या अनन्तरमेव भवति ॥ ८ ॥

असाम यथा सुषखाय एन स्वभिष्टयो नरां न शंसैः ।
असद् यथा न इन्द्रो वन्दनेष्ठास्तुरो न कर्म नयमान उक्था ॥ ९ ॥

असाम । यथा । सुऽसखायः । एन । सुऽअभिष्टयः । नराम् । न । शंसैः ।
असत् । यथा । नः । इन्द्रः । वन्दनेऽस्थाः । तुरः । न । कर्म । नयमानः । उक्था ॥ ९ ॥

**वेङ्कट०** अनेनेन्द्रेण वयम् यथा शोभनसखायः भवेम, यथा वा शोभनाभीष्टाः नराणाम् इव उदाराणां स्तोत्रैर्दरिद्राः, यथा भवेत् इन्द्रः अस्माकम् वन्दनेष्ठाः क्षिप्रकारीव पुरुषः लौकिकं कर्म उक्थानि प्रापयन्नात्मानम् । उत्तरत्र सम्बन्धः ॥ ९ ॥

विष्पर्धसो नरां न शंसैरस्माकासदिन्द्रो वज्रहस्तः ।
मित्रायुवो न पूर्पतिं सुशिष्टौ मध्यायुव उप शिक्षन्ति यज्ञैः ॥ १० ॥

विऽस्पर्धसः । नराम् । न । शंसैः । अस्माक । असत् । इन्द्रः । वज्रऽहस्तः ।
मित्रऽयुवः । न । पूःऽपतिम् । सुऽशिष्टौ । मध्यऽयुवः । उप । शिक्षन्ति । यज्ञैः ॥ १० ॥

**वेङ्कट०** यथा नराम् स्तुतिभिः नरोऽन्यो विगतस्पर्धो भवति । एवम् अस्माकम् विस्पर्धः भवतु इन्द्रः वज्रहस्तः । यथा रक्षकं मित्रमिच्छन्तः पुरां पालयितारं राजानम् असाधूनां शासनार्थमिच्छन्ति । एवं मध्यकामाः[2] इन्द्रं प्रत्यात्मानम् उप शिक्षन्ति वशीकुर्वन्ति यज्ञैः । मध्यो मदनाद्[3] 'रक्षकमिच्छन्त इति ॥ १० ॥

[4]इति द्वितीयाष्टके चतुर्थाध्याये चतुर्दशो वर्गः[4] ॥

यज्ञो हि ष्मेन्द्रं कश्चिदृन्धञ्जुहुराणश्चिन्मनसा परियन् ।
तीर्थे नाच्छा तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वा ॥ ११ ॥

यज्ञः । हि । स्म । इन्द्रम् । कः । चित् । ऋन्धन् । जुहुराणः । चित् । मनसा । परिऽयन् ।
तीर्थे । न । अच्छ । ततृषाणम् । ओकः । दीर्घः । न । सिध्रम् । आ । कृणोति । अध्वा ॥११॥

---

१. इव वि[2] अ[1]. २. मथनात् अ[1]. ३. वैप १,२४३०j द्र. ४-४. नास्ति मूको.

वेङ्कट० श्रद्धयाऽनुष्ठीयमानः कः चित् एव यज्ञः भवति इन्द्रम् वर्धयन्। पुनःपुनराह्वयन् अपि मनसा परिचरन्नपि कश्चिदेव वर्धयतीन्द्रम्। तीर्थस्थितम्[1] आत्मीयं गृहम् प्राप्तुम् ततृषाणम्[2] दूरस्थम् दीर्घः अध्वा यथा न आ कृणोति, एवं साधयितारमिन्द्रं [3]न कश्चिदप्यभिमुखं करोति। यः कश्चिदेव भाग्ययुक्त[3] आकरोति यथा गमने प्रवृत्तो यः कश्चिदेव गृहं गच्छति तद्वदिति। तीर्थशब्दः स्वावासवचनः। प्रथमो नकार उपमार्थीयः ॥ ११ ॥

मो षू णं इन्द्रात्रं पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद् यस्यं मीळ्हुषों यव्या हविष्मतो मरुतो वन्दते गीः ॥ १२ ॥

मो इति । सु । नः । इन्द्र । अत्र । पृत्ऽसु । देवैः । अस्ति । हि । स्म । ते । शुष्मिन् । अवऽयाः ।
महः । चित् । यस्य । मीळ्हुषः । यव्या । हविष्मतः । मरुतः । वन्दते । गीः ॥ १२ ॥

वेङ्कट० इन्द्र! अस्माकम् एषु सङ्ग्रामेषु अन्यैः देवैः शोभनम् मा भूत्। अस्ति हि ते बलवन्! शत्रूणामवयजनं[4] नाशनम्। महतः मीढुषः यव्या मिश्रयित्री हविष्मतः मरुतः च स्तौति अस्माकं वागिति ॥ १२ ॥

एष स्तोमं इन्द्र तुभ्यंमस्मे एतेनं गातुं हरिवो विदो नः ।
आ नों ववृत्याः सुवितायं देव विद्यामेषं वृजनं जीरदानुम् ॥ १३ ॥

एषः । स्तोमः । इन्द्र । तुभ्यम् । अस्मे इति । एतेन । गातुम् । हरिऽवः । विदः । नः ।
आ । नः । ववृत्याः । सुविताय । देव । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १३ ॥

वेङ्कट० एषः स्तोमः इन्द्र! त्वत्प्रीत्यर्थम् अस्माभिः कृतः। एतेन स्तोत्रेण हरिवः![5] अस्मान् मार्गम् लम्भय। आ वर्तय देव![5] अस्मान् पुनःपुनरभ्युदयार्थम्[6] ॥ १३ ॥

[7]इति द्वितीयाष्टके चतुर्थाध्याये पञ्चदशो वर्गः[7] ॥

## [ १७४ ]

[7]अगस्त्यो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[7]।

त्वं राजेन्द्र ये च देवा रक्षा नॄन् पाह्यसुर त्वमस्मान् ।
त्वं सत्पतिर्मघवा नस्तरुत्रस्त्वं सत्यो वसवानः सहोदाः ॥ १ ॥

त्वम् । राजा । इन्द्र । ये । च । देवाः । रक्ष । नॄन् । पाहि । असुर । त्वम् । अस्मान् ।
त्वम् । सत्ऽपतिः । मघऽवा । नः । तरुत्रः । त्वम् । सत्यः । वसवानः । सहःऽदाः ॥ १ ॥

---

१. °र्थस्थम् अ[१]. २. नास्ति वि[२] अ[१]. ३-३. त्रुटितम् वि[२] अ[१]. ४. अपयानं लपं; अवयानं वि[२]. ५. नास्ति मूको. ६. शिष्टोऽर्थः ऋ १,१६५,१५ द्र. ७-७. नास्ति मूको.

वेङ्कट० ये मनुष्याणामधिपतयः देवाः तेषामपि त्वम् इन्द्र! राजा भवसि। रक्ष मानुषान्[1], अस्मान् च पाहि बलवन्!। त्वम् सतां पाता धनवान् अस्माकम् तारकः। त्वम् सत्यकर्मा आच्छादयिता तेजसा वीर्यस्य च दाता ॥ १ ॥

दनो विश इन्द्र मृध्रवाचः सप्त यत् पुरः शर्म शारदीर्दर्त् ।
ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ॥ २ ॥

दनः । विशः । इन्द्र । मृध्रऽवाचः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् ।
ऋणोः । अपः । अनवद्य । अर्णाः । यूने । वृत्रम् । पुरुऽकुत्साय । रन्धीः ॥ २ ॥

वेङ्कट० शरन्नाम्नोऽसुरस्य यदा सप्त पुरः दारितवानसि, जगतः शर्मणे तदानीं तदीयान् मृध्रवाचः परुषवचनान् मनुष्यान् खण्डितवानसि। हे अनवद्य! नदीः अपः त्वम् ऋणोः। यूने भवद्भक्ताय पुरुकुत्साय शत्रुम् वशमनयः। 'दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु'[2] इति यास्कः (६,३१) ॥ २ ॥

अजा वृत इन्द्र शूरपत्नीर्द्यां च येभिः पुरुहूत नूनम् ।
रक्षो अग्निमशुषं तूर्वयाणं सिंहो न दमे अपांसि वस्तोः ॥ ३ ॥

अर्ज । वृतः । इन्द्र । शूरऽपत्नीः । द्याम् । च । येभिः । पुरुऽहूत । नूनम् ।
रक्षो इति । अग्निम् । अशुषम् । तूर्वयाणम् । सिंहः । न । दमे । अपांसि । वस्तोः ॥ ३ ॥

वेङ्कट० गच्छ परिवृतः इन्द्र! दासपत्नीः अपः, द्याम् च गच्छ येभिः गच्छद्भिर्मरुद्भिः सह पुरुहूत! सम्प्रति। स त्वं वृष्ट्युत्पादनेन रक्ष दवाग्निम् शोषरहितम् तूर्णगमनम्। यथा सिंहः तूर्णं गच्छत्येवमग्निश्च यजमानगृहे देवानां कर्माणि वासयितुमिति ॥ ३ ॥

शेषन्नु त इन्द्र सस्मिन् योनौ प्रशस्तये पवीरवस्य मह्ना ।
सृजदर्णांस्यव यद् युधा गास्तिष्ठद्धरी धृषता मृष्ट वाजान् ॥ ४ ॥

शेषन् । नु । ते । इन्द्र । सस्मिन् । योनौ । प्रऽशस्तये । पवीरवस्य । मह्ना ।
सृजत् । अर्णांसि । अव । यत् । युधा । गाः । तिष्ठत् । हरी इति । धृषता । मृष्ट । वाजान् ॥

वेङ्कट० शेरताम् क्षिप्रम् ते[3] इन्द्र! स्वकीये स्थाने अभ्युदयार्थम् तव आयुधस्य महत्त्वेन। अव असृजत् यत् अगन्तृणि उदकानि युद्धेनेन्द्रस्तदा अश्वौ अधितिष्ठति। तथा[4] स्वबलेन प्रगल्भेन शत्रुबलानि परिमार्ष्टि ॥ ४ ॥

---

१. मनुष्यान् वि[२] अ[१]. २. कुर्वन्ति मूको. ३. नास्ति मूको. ४. यथा वि[१] लपं.

वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वा ।
प्र सूरश्चक्रं वृहतादभीकेऽभि स्पृधो यासिषद् वज्रबाहुः ॥ ५ ॥

वह । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । स्यूमन्यू इति । ऋज्रा । वातस्य । अश्वा ।
प्र । सूरः । चक्रम् । वृहतात् । अभीके । अभि । स्पृधः । यासिषत् । वज्रऽबाहुः ॥ ५ ॥

**वेङ्कट०** [1]वह कुत्सम्[1] प्रति[2] इन्द्र!, यस्मिन् कामयसे गन्तुम्, सन्ततगमनमिच्छन्तौ ऋजू[3] गच्छन्तः[4] तवाश्वौ। सूर्यस्य रथचक्रम् [5]प्र वृहतात्[5] सङ्ग्रामे इन्द्रः। अभि यातु च शत्रून् स्पर्धमानान् इन्द्रः वज्रबाहुः[6] ॥ ५ ॥

[7]इति द्वितीयाष्टके चतुर्थाध्याये षोडशो वर्गः[7] ॥

जघन्वाँ इन्द्र मित्रेरूञ्चोदप्रवृद्धो हरिवो अदाशून् ।
प्र ये पश्यन्नर्यमणं सचायोस्त्वया शूर्ता वहमाना अपत्यम् ॥ ६ ॥

जघन्वान् । इन्द्र । मित्रेरून् । चोदऽप्रवृद्धः । हरिऽवः । अदाशून् ।
प्र । ये । पश्यन् । अर्यमणम् । सचा । आयोः । त्वया । शूर्ताः । वहमानाः । अपत्यम् ॥ ६ ॥

**वेङ्कट०** हतवानसि इन्द्र! आत्मनो मित्राणां प्रेरयितॄन् प्रवृद्धचोदनः[8] त्वम् हरिवः! अदानशीलान् अयजमानान्। ये प्र पश्यन्ति पुत्रपौत्रैः सह अन्नस्य[9] प्रेरयितारम्[10] त्वया [11]धनाप्रदानेन हिंसिताः[11] पुत्रपौत्रान् वहमानाः। 'यः खलु वै ददाति सोऽर्यमा' (तै २,३,४,१) इति ब्राह्मणम्। एतत्[12] एव तेषां हननम् ॥ ६ ॥

रपत् कविरिन्द्रार्कसातौ क्षां दासायोपबर्हणीं कः ।
करत् तिस्रो मघवा दानुचित्रा नि दुर्योणे कुयवाचं मृधि श्रेत् ॥ ७ ॥

रपत् । कविः । इन्द्र । अर्कऽसातौ । क्षाम् । दासाय । उपऽबर्हणीम् । कुरिति कः ।
करत् । तिस्रः । मघऽवा । दानुऽचित्राः । नि । दुर्योणे । कुयवाचम् । मृधि । श्रेत् ॥ ७ ॥

**वेङ्कट०** अस्तौत्[13] त्वाम् उशनाः अन्नभजननिमित्तम्। तस्मै क्षीणाय त्वम् पृथिवीम् वर्धयित्रीम् कृतवानसि। तिस्रः भूमीः चित्रदानाः करोति, तथा दुर्योणाख्ये देशे कुयवाचनामानमसुरम् युद्धे हिंसितवान् इन्द्रः ॥ ७ ॥

सना ता त इन्द्र नव्या आगुः सहो नभोऽविरणाय पूर्वीः ।
भिनत् पुरो न भिदो अदेवीर्ननमो वधरदेवस्य पीयोः ॥ ८ ॥

---

१-१. नास्ति वि[२]. २. व्रति वि[२] अ[१]. ३. ऋजे वि[१] लपं; ऋजु वि[२] अ[१] ल. ४. गच्छन्तौ ल शोधः. ५-५. बृहता लपं. ६. °बाहुम् वि[२] अ[१]. ७-७. नास्ति मूको. ८. °नः प्रवृद्धनोदनः वि[२] अ[१]. ९. अस्य लपं. १०. °रम् उद्यारम् वि[२] अ[१]. ११-११. °न···सिताः वि[२] अ[१]. १२. नास्ति लपं. १३. नास्ति वि[२] अ[१].

सना॑ । ता । ते॒ । इ॒न्द्र॒ । नव्याः॑ । आ । अ॒गुः॒ । सहः॑ । नभः॑ । अवि॑ऽरणाय । पू॒र्वीः ।
भि॒नत् । पुरः॑ । न । भिदः॑ । अदे॑वीः । न॒नमः॑ । वधः॑ । अदे॑वस्य । पी॒योः ॥ ८ ॥

**वेङ्कट०** इन्द्र! ते सनातनानि तानि धनानि नूतनाः स्तोतारः प्राप्नुवन्ति। सोढवानसि अविरणस्य बह्वीः हिंसाः। नभतिर्हिंसाकर्मा ( तु. निघ २,१९ )। असुरपुराणि इव आसुरीः हिंसाः भिन्नवान्। तथा हिंसकस्य असुरस्य वधार्थम् आत्मीयमायुधमत्यन्तं नमितवानसि ॥ ८ ॥

**त्वं धुनि॑रिन्द्र॒ धुनि॑मतीॠ॒णोर॒पः सी॒रा न स्रव॑न्तीः ।**
**प्र यत् स॑मु॒द्रमति॑ शूर॒ पर्षि॑ पा॒रया॑ तु॒र्वशं॒ यदुं॑ स्व॒स्ति ॥ ९ ॥**

त्वम् । धुनिः॑ । इ॒न्द्र॒ । धुनि॑ऽमतीः । ऋ॒णोः । अ॒पः । सी॒राः । न । स्रव॑न्तीः ।
प्र । यत् । स॒मु॒द्रम् । अति॑ । शू॒र॒ । पर्षि॑ । पा॒रय॑ । तु॒र्वश॑म् । यदु॑म् । स्व॒स्ति ॥ ९ ॥

**वेङ्कट०** त्वम् कम्पयिता इन्द्र![1] कम्पयित्रीः अपः मेघेभ्यो विद्धवानसि नदीः[2] इव निर्गच्छन्तीः। यदा त्वम् शूर![1] तुर्वशम् यदुम् च समुद्रमध्यस्थौ समुद्रम् प्रकर्षेण अति नयसि, तदा तौ[3] अविनाशेन पारय इति ॥ ९ ॥

**त्वम॒स्माक॑मिन्द्र वि॒श्वध॑ स्या अवृ॒कत॑मो न॒रां नृ॑पा॒ता ।**
**स नो॒ विश्वा॑सां स्पृ॒धां स॑हो॒दा वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ १० ॥**

त्वम् । अ॒स्माक॑म् । इ॒न्द्र॒ । वि॒श्वध॑ । स्याः॒ । अ॒वृ॒कऽत॑मः । न॒राम् । नृ॒ऽपा॒ता ।
सः । नः॒ । विश्वा॑साम् । स्पृ॒धाम् । स॒हः॒ऽदाः । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥ १० ॥

**वेङ्कट०** त्वम् अस्माकम् इन्द्र! सर्वकालम् अस्तेनतमः नृणां[4] च पाता भव। सः त्वम् विश्वासाम् स्पर्धमानानां सेनानां बलस्य खण्डयिता भव ॥ १० ॥

[5]इति द्वितीयाष्टके चतुर्थाध्याये सप्तदशो वर्गः[5] ॥

## [ १७५ ]

[5]अगस्त्यो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। आद्या स्कन्धोग्रीवी बृहती, षष्ठीत्रिष्टुप्, शिष्टा अनुष्टुभः[5]।

**मत्स्यपा॑यि ते॒ महः॒ पात्र॑स्येव हरिवो मत्स॒रो मदः॑ ।**
**वृषा॑ ते॒ वृष्ण॒ इन्दु॑र्वा॒जी स॑हस्र॒सात॑मः ॥ १ ॥**

मत्सि॑ । अपा॑यि । ते॒ । महः॑ । पात्र॑स्यऽइव । ह॒रि॒ऽवः॒ । म॒त्स॒रः । मदः॑ ।
वृषा॑ । ते॒ । वृष्णे॑ । इन्दुः॑ । वा॒जी । स॒ह॒स्र॒ऽसात॑मः ॥ १ ॥

---

१. नास्ति मूको. २. नद्यः मूको. ३. नौ मूको. ४. नृ॒णां वि[1] लपं. ५-५. नास्ति मूको.

**वेङ्कट०** माद्यस्व, पीतः त्वया महान् मदः सोमः मधुपानपात्रस्य सम्बन्धी। हरिवः! मत्सरः सुरादिवद्रसः[1]। पुमान् त्वया पुंसा सोमः बलवान् बहूनां वीराणामतिशयेन सम्भक्ता ॥ १ ॥

आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः।
सहावाँ इन्द्र सानसिः पृतनाषाळमर्त्यः ॥ २ ॥

आ। नः। ते। गन्तु। मत्सरः। वृषा। मदः। वरेण्यः।
सहऽवान्। इन्द्र। सानसिः। पृतनाषाट्। अमर्त्यः ॥ २ ॥

**वेङ्कट०** अस्माकमयं सोमः तव आ गच्छतु, तर्पयिता वर्षिता[2] वरणीयः[3] शत्रूणां सहनवान् इन्द्र! सम्भजनशीलः[4] सेनानां सोढा अमरणधर्मा ॥ २ ॥

त्वं हि शूरः सनिता चोदयो मनुषो रथम्।
सहावान् दस्युमव्रतमोषः पात्रं न शोचिषा ॥ ३ ॥

त्वम्। हि। शूरः। सनिता। चोदयः। मनुषः। रथम्।
सहऽवान्। दस्युम्। अव्रतम्। ओषः। पात्रम्। न। शोचिषा ॥ ३ ॥

**वेङ्कट०** त्वम् हि शूरः सङ्ग्रामं सम्भक्ता चोदितवानसि मनोः रथम् पुरः। सङ्ग्रामे सहनवान् अयजमानं तं स्वशत्रुम् दग्धवानसि आममिव पात्रम् अग्निना ॥ ३ ॥

मुषाय सूर्यं कवे चक्रमीशान ओजसा। वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥ ४ ॥

मुषाय। सूर्यम्। कवे। चक्रम। ईशानः। ओजसा। वह। शुष्णाय। वधम्। कुत्सम्। वातस्य। अश्वैः ॥ ४ ॥

**वेङ्कट०** द्विकर्मको मुष्णातिः। बलेन सूर्यम् देवम्[5] कवे![6] सर्वेश्वरस्त्वम् रथचक्रम् अमुष्णाः। प्रापय शुष्णवधार्थम् आत्मीयं वज्रम्। तथा कुत्सम् ऋषिं प्रति वातसमैः अश्वैः गच्छ ॥ ४ ॥

शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः।
वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥ ५ ॥

शुष्मिन्ऽतमः। हि। ते। मदः। द्युम्निन्ऽतमः। उत। क्रतुः।
वृत्रऽघ्ना। वरिवःऽविदा। मंसीष्ठाः। अश्वऽसातमः ॥ ५ ॥

---

१. सुरादिवस वि[1] लपं; सुदिरिवरसं वि[2] अ[1]; सुरादिवरसः ल. २. नास्ति लपं. ३. सोमः व° मूको. ४. संभरणशीलः अ[1]. ५. नास्ति अ[1]. ६. नास्ति मूको.

**वेङ्कट०** शत्रूणां शोषयितृतमः तव मदः अतिशयेन धनयुक्तम् च कर्म। ताविमौ अवर्तेः[1] हन्तारौ धनस्य लम्भयितारौ पूजयेस्त्वम् अश्वयोः सम्भक्तृतमः ॥ ५ ॥

यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

यथा । पूर्वेभ्यः । जरिऽतृभ्यः । इन्द्र । मयःऽइव । आपः । न । तृष्यते । बभूथ ।
ताम् । अनु । त्वा । निऽविदम् । जोहवीमि । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

**वेङ्कट०** यथा मधुच्छन्दःप्रभृतिभ्यः स्तोतृभ्यः त्वम् इन्द्र! तृष्यते जनाय सुखकरमन्नमिव उदकानि इव च त्वं बभूविथ[2]। तादृशीं मदीयाम् वाचम् प्रति त्वाम् अत्यन्तमाह्वयामि। [3]गतम् अन्यत्[3] ( ऋ १,१६५,१५ ) ॥ ६ ॥

[3]इति द्वितीयाष्टके चतुर्थाध्याये अष्टादशो वर्गः[3] ॥

## [ १७६ ]

[4]अगस्त्यो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। अनुष्टुप् छन्दः, षष्ठी त्रिष्टुप्[4]।

मत्सि नो वस्यइष्टय इन्द्रमिन्दो वृषा विश ।
ऋघायमाण इन्वसि शत्रुमन्ति न विन्दसि ॥ १ ॥

मत्सि । नः । वस्यःऽइष्टये । इन्द्रम् । इन्दो इति । वृषा । आ । विश ।
ऋघायमाणः । इन्वसि । शत्रुम् । अन्ति । न । विन्दसि ॥ १ ॥

**वेङ्कट०** माद्य अस्माकम् अभ्युदयार्थम् इन्द्र!। त्वं च सोम! वर्षिता[5] इन्द्रम् [5]आ विश[5]। सपत्नान् बाधमानः गच्छसि। शत्रुम्[6] च अन्तिके न लभसे कञ्चन[7] ॥ १ ॥

तस्मिन्ना वेशया गिरो य एकश्चर्षणीनाम् ।
अनु स्वधा यमुप्यते यवं न चर्कृषद् वृषा ॥ २ ॥

तस्मिन् । आ । वेशय । गिरः । यः । एकः । चर्षणीनाम् ।
अनु । स्वधा । यम् । उप्यते । यवम् । न । चर्कृषत् । वृषा ॥ २ ॥

**वेङ्कट०** [8]तस्मिन् स्तुतीः आ वेशय, यः प्रधानः[8] मनुष्याणाम्, यम्[9] लक्षीकृत्य वर्षत्ययमिति बुद्ध्वा [10]अन्नम् उप्यते। सः यवम् इव पुनःपुनः कृषन्[10] बलीवर्दो भवति। बलीवर्दे हि सति बीजान्यावपन्ति ॥ २ ॥

---

१. अवन्तेः वि[१] लपं; अन्ते वि[२] अ[१]; वृत्रस्य ल प्रस्तावः. २. बभूथ वि[२] अ[१]. ३-३. नास्ति मूको.
४. नास्ति मूको. ५-५. नास्ति वि[२] अ[१]. ६. शत्रून् वि[१] लपं. ७. नास्ति वि[२] अ[१].
८. त्रुटितम् वि[२] अ[१]. ९. यः वि[२] अ[१]. १०-१०. °नरकु° वि[१] ल लपं; अन्नमपि ··· पुनरवृषन् वि[२] अ[१].

यस्य विश्वानि हस्तयोः पञ्च क्षितीनां वसु ।
स्पाशयस्व यो अस्मध्रुग् दिव्येवाशनिर्जहि ॥ ३ ॥

यस्य । विश्वानि । हस्तयोः । पञ्च । क्षितीनाम् । वसु ।
स्पाशयस्व । यः । अस्मऽध्रुक् । दिव्याऽइव । अशनिः । जहि ॥ ३ ॥

**वेङ्कट०** यस्य विश्वानि[1] धनानि हस्तयोः निवसन्ति पञ्चानाम् क्षितीनाम् अर्थाय, स त्वम् यः अस्मभ्यं द्रोग्धा तं[2] बुध्यस्व । बुद्ध्वा च[3] दिवि भवा अशनिः इव तम् जहि ॥ ३ ॥

असुन्वन्तं समं जहि दूणाशं यो न ते मयः ।
अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥ ४ ॥

असुन्वन्तम् । समम् । जहि । दुःऽनशम् । यः । न । ते । मयः ।
अस्मभ्यम् । अस्य । वेदनम् । दद्धि । सूरिः । चित् । ओहते ॥ ४ ॥

**वेङ्कट०** अयजमानम् सर्वं जगत्[4] नाशय नाशयितुमशक्यम् । यः न ते सुखं करोति, अस्मभ्यम् अस्य धनम् देहि । तव स्तोता हि वहते[5] धनम् ॥ ४ ॥

आवो यस्य द्विबर्हसोऽर्केषु सानुषगसत् ।
आजाविन्द्रस्येन्दो प्रावो वाजेषु वाजिनम् ॥ ५ ॥

आवः । यस्य । द्विऽबर्हसः । अर्केषु । सानुषक् । असत् ।
आजौ । इन्द्रस्य । इन्दो इति । प्र । आवः । वाजेषु । वाजिनम् ॥ ५ ॥

**वेङ्कट०** यस्य इन्द्रस्य द्विगुणबर्हणस्य बलवतः स्तोत्रेषु यः सानुषङ्गः भवति, तम् इन्दो![6] त्वं रक्षसि । तथाऽस्येन्द्रस्य यो हविष्मान् भवति तम् युद्धे बलेषु प्रकर्षेण रक्षसि ॥ ५ ॥

यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

यथा । पूर्वेभ्यः । जरितृऽभ्यः । इन्द्र । मयःऽइव । आपः । न । तृष्यते । बभूथ ।
ताम् । अनु । त्वा । निऽविदम् । जोहवीमि । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

---

१. नास्ति वि[२]. २. नास्ति वि[२] अ[१]. ३. च न वि[२] अ[१]. ४. जनं वि[२] अ[१]. ५. तव ते वि[१] लपं. ६. इन्द्र अ[१]; इन्द्रो वि[२].

वेङ्कट० [1]एषा पूर्वं ( ऋ १,१७५,६ ) व्याख्याता[1] ॥ ६ ॥

[1]इति द्वितीयाष्टके चतुर्थाध्याये एकोनविंशो वर्गः[1] ॥

[ १७७ ]

[1]अगस्त्यो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः ।
स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥ १ ॥

आ । चर्षणिऽप्राः । वृषभः । जनानाम् । राजा । कृष्टीनाम् । पुरुऽहूतः । इन्द्रः ।
स्तुतः । श्रवस्यन् । अवसा । उप । मद्रिक् । युक्त्वा । हरी इति । वृषणा । आ । याहि । अर्वाङ् ॥

वेङ्कट० मनुष्याणां पूरयिता वर्षिता[2] च तेषाम् राजा च पुरुहूतः इन्द्रः स्तुतः सन् अन्नमिच्छन् अन्नेन सह मदभिमुखम् उप आ याहि वृषणौ अश्वौ स्वरथे युक्त्वा इतोमुखः ॥ १ ॥

ये ते वृषणो वृषभास इन्द्र ब्रह्मयुजो वृषरथासो अत्याः ।
ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् हवामहे त्वा सुत इन्द्र सोमे ॥ २ ॥

ये । ते । वृषणः । वृषभासः । इन्द्र । ब्रह्मऽयुजः । वृषऽरथासः । अत्याः ।
तान् । आ । तिष्ठ । तेभिः । आ । याहि । अर्वाङ् । हवामहे । त्वा । सुते । इन्द्र । सोमे ॥२॥

वेङ्कट० ये तव इन्द्र! वर्षितारः वर्षितुः मन्त्रेण रथे[3] युज्यमानाः कामानां वर्षितृरथाः अश्वाः । शिष्टं स्पष्टम् ॥ २ ॥

आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिषिक्ता मधूनि ।
युक्त्वा वृषभ्यां वृषभ क्षितीनां हरिभ्यां याहि प्रवतोप मद्रिक् ॥ ३ ॥

आ । तिष्ठ । रथम् । वृषणम् । वृषा । ते । सुतः । सोमः । परिऽसिक्ता । मधूनि ।
युक्त्वा । वृषऽभ्याम् । वृषभ । क्षितीनाम् । हरिऽभ्याम् । याहि । प्रऽवता । उप । मद्रिक् ॥ ३ ॥

वेङ्कट० परिषिक्तानि मधूनि मधुसदृशा.[4] सुतस्य सोमस्य ग्रहाः परितः पात्रेषु सिक्ता इति । प्रवान् मार्गः प्रवणः । शिष्टं स्पष्टम् ॥ ३ ॥

अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिन्द्र सोमः ।
स्तीर्णं बर्हिरा तु शक्र प्र याहि पिबा निषद्य वि मुचा हरी इह ॥ ४ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[1] लपं. ३. रथेन वि[1] लपं; रथैः वि[2] अ[1]. ४. °दृशः अ[1].

अयम् । यज्ञः । देवऽयाः । अयम् । मियेधः । इमा । ब्रह्माणि । अयम् । इन्द्र । सोमः ।
स्तीर्णम् । बर्हिः । आ । तु । शक्र । प्र । याहि । पिब । निऽसद्य । वि । मुच । हरी इति । इह ॥

**वेङ्कट०** त्वदर्थं तायमानः[1] यज्ञः देवान् प्रति गच्छन् अयम्, तथा अयम्[2] [3]पशुः । एवमुत्तरत्रापि[3] । इदं च विस्तीर्णमस्माभिः बर्हिः ॥ ४ ॥

**ओ सुष्टुत इन्द्र याह्यर्वाङुप ब्रह्माणि मान्यस्य कारोः ।**
**विद्याम वस्तोरवसा गृणन्तो विद्यामेषं वृजनं जीरदानुम् ॥ ५ ॥**

ओ इति । सुऽस्तुतः । इन्द्र । याहि । अर्वाङ् । उप । ब्रह्माणि । मान्यस्य । कारोः ।
विद्याम । वस्तोः । अवसा । गृणन्तः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ५ ॥

**वेङ्कट०** इन्द्र![4] सुष्ठु मया स्तुतः[5] त्वम् मान्यस्य कारोः इमानि ब्रह्माणि उप याहि रक्षणार्थम् इन्द्रं स्तुवन्तो वयम् वासम् लभेमहि ॥ ५ ॥

[6]इति द्वितीयाष्टके चतुर्थाध्याये विंशो वर्गः[6] ॥

## [ १७८ ]

[6]अगस्त्यो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[6] ।

**यद्ध स्या त इन्द्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती ।**
**मा नः कामं महयन्तमा धग्विश्वा ते अश्यां पर्याप आयोः ॥ १ ॥**

यत् । ह । स्या । ते । इन्द्र । श्रुष्टिः । अस्ति । यया । बभूथ । जरितृऽभ्यः । ऊती ।
मा । नः । कामम् । महयन्तम् । आ । धक् । विश्वा । ते । अश्याम् । परि । आपः । आयोः ॥

**वेङ्कट०** इन्द्र! यत्[7] खलु ते क्षिप्रता इयम् विद्यते, यया भवसि स्तोतृभ्यः रक्षायै । तस्मात् अस्माकम् कामम् वर्धमानम् मा आ धाक्षीः । विश्वानि त्वदीयानि कर्माणि परि अश्याम्[8] अहम् गन्तुः । आपः इति दीर्घश्छान्दसः[9] ॥ १ ॥

**न घा राजेन्द्र आ दभन्नो या नु स्वसारा कृणवन्त योनौ ।**
**आपश्चिदस्मै सुतुका अवेषन् गमन्न इन्द्रः सख्या वयश्च ॥ २ ॥**

न । घ । राजा । इन्द्रः । आ । दभत् । नः । या । नु । स्वसारा । कृणवन्त । योनौ ।
आपः । चित् । अस्मै । सुऽतुकाः । अवेषन् । गमत् । नः । इन्द्रः । सख्या । वयः । च ॥ २ ॥

---

१. नाय° वि[1] लपं. २. नास्ति वि[1] ल लपं. ३-३. पशुरेव ( शिष्टं स्पष्टं ) मुत्तर° वि[1] लपं.
४. नास्ति वि[1]. ५. °तः तत्र वि[2] अ[1]. ६-६. नास्ति मूको. ७. या ल प्रस्तावः. ८. °मि अ[1].
९. दीर्घं छान्दसम् अ[1].

वेङ्कट० राजा सन् इन्द्रः अस्माकम् तानि न आभिमुख्येन हिनस्तु स्वस्यानागमनेन, यानि कर्माणि द्यां च पृथिवीं च स्थाने कृण्वन्ति। कर्मभिर्हि द्यावापृथिव्योर्धारणं भवति। वसतीवरीलक्षणाः आपः च [१]अस्मै प्रीतये[१] शोभनसोमापत्याः व्याप्नुवन्तु। सोऽयमिन्द्रः अस्माकं सख्यानि गच्छतु, हविर्लक्षणमन्नं च ॥ २ ॥

जेता नृभिरिन्द्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः ।
प्रभर्ता रथं दाशुष उपाक उद्यन्ता गिरो यदि च त्मना भूत् ॥ ३ ॥

जेता । नृऽभिः । इन्द्रः । पृत्ऽसु । शूरः । श्रोता । हवम् । नाधमानस्य । कारोः ।
प्रऽभर्ता । रथम् । दाशुषः । उपाके । उत्ऽयन्ता । गिरः । यदि । च । त्मना । भूत् ॥ ३ ॥

वेङ्कट० मरुद्भिः सह इन्द्रः शूरः युद्धेषु शत्रून्[२] जयति, याचमानस्य स्तोतुः आह्वानं च शृणोति। सः रथम् यजमानस्य समीपे प्रभरति, तस्य स्तुतीश्च उद्यच्छति। यदि [३]चेद् इन्द्रः[३] स्वयमेव इह भवति ॥ ३ ॥

एवा नृभिरिन्द्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत् ।
समर्य इषः स्तवते विवाचि सत्राकरो यजमानस्य शंसः ॥ ४ ॥

एव । नृऽभिः । इन्द्रः । सुऽश्रवस्या । प्रऽखादः । पृक्षः । अभि । मित्रिणः । भूत् ।
सुऽमर्ये । इषः । स्तवते । विऽवाचि । सत्राऽकरः । यजमानस्य । शंसः ॥ ४ ॥

वेङ्कट० एवं[४] मरुद्भिः सह इन्द्रः शोभनस्य यशस इच्छया सोमलक्षणस्यान्नस्य प्रकर्षेण खादिता मैत्रीं कुर्वतः शत्रून् [५]अभि भवति[५]। विविधवाचि सङ्ग्रामे शत्रूणामेषणशीलः सन् वीरैः स्तूयते सत्यस्य कर्मणः कर्ता यजमानस्य शंसनीयः ॥ ४ ॥

त्वया वयं मघवन्निन्द्र शत्रूनभि ष्याम महतो मन्यमानान् ।
त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजनं जीरदानुम् ॥ ५ ॥

त्वया । वयम् । मघऽवन् । इन्द्र । शत्रून् । अभि । स्याम । महतः । मन्यमानान् ।
त्वम् । त्राता । त्वम् । ऊँ इति । नः । वृधे । भूः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ५ ॥

वेङ्कट० त्वया वयम् मघवन्! इन्द्र! शत्रून् महतः अभिमन्यमानान् अभिभवेम। त्वम् रक्षकः, त्वम् एव अस्माकं वर्धनाय भव ॥ ५ ॥

[६]इति द्वितीयाष्टके चतुर्थाध्याये एकविंशो वर्गः[६] ॥

---

१-१. अस्य प्रीत्यै, प्रीत्यै वा ल प्रस्तावः. २. शत्रु वि[१] अ[१]. ३-३. चेन्द्र वि[१] लपं. ४ °वम् भयं वि[१] अ[१]. ५-५. नास्ति वि[१] लपं. ६-६. नास्ति मूको.

[ १७९ ]

[1]प्रथमाद्वितीययोः लोपामुद्रा ऋषिः, तृतीयाचतुर्थ्योरगस्त्यो मैत्रावरुणिः, पञ्चमीषष्ठ्योः अगस्त्यशिष्यो ब्रह्मचारी । रतिर्देवता । त्रिष्टुप् छन्दः, पञ्चमी बृहती[1]।

पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयन्तीः ।
मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥ १ ॥

पूर्वीः । अहम् । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयन्तीः ।
मिनाति । श्रियम् । जरिमा । तनूनाम् । अपि । ऊँ इति । नु । पत्नीः । वृषणः । जगम्युः ॥ १ ॥

**वेङ्कट०** शौनकः — '[2]ऋतौ स्नातामृषिर्भार्यां[2] लोपामुद्रां यशस्विनीम् ।
उपजल्पितुमारेभे रहःसंयोगकाम्यया ॥
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितम्[3] ।
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ॥
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ।
श्रुत्वैनः[4] कृतवानस्मि ब्रह्मचार्युत्तमे जगौ ॥' (बृदे ४,५७-५९) इति ।

बह्वीः अहम् शरदः तपसा श्रममाणा रात्रीः अहानि उषसः च गमयन्त्यभवम् । तत्र हस्तपादादीनां शोभाम् जरिमा नाशयति । अपि इदानीम् पत्नीः पुमांसः सङ्गच्छेरन्[5] इत्यृषिपत्न्या विलपितम् ॥ १ ॥

ये चिद्धि पूर्व ऋतसाप आसन्त्साकं देवेभिरवदन्नृतानि ।
ते चिदवासुर्नह्यन्तमापुः समू नु पत्नीर्वृषभिर्जगम्युः ॥ २ ॥

ये । चित् । हि । पूर्वे । ऋतऽसापः । आसन् । साकम् । देवेभिः । अवदन् । ऋतानि ।
ते । चित् । अव । असुः । नहि । अन्तम् । आपुः । सम् । ऊँ इति । नु । पत्नीः । वृषऽभिः । जगम्युः ॥ २ ॥

**वेङ्कट०** ये चित् हि पुरातनाः तपःस्पृशः आसन् । साकम् देवैश्च प्रत्यक्षदृष्टैः ब्रह्मवद्यानि[6] अवदन् । ते च अवसिताः नहि अन्तम् गतास्तपसा । तथा सति पत्न्यः पुंभिः सङ्गच्छेरन् ॥ २ ॥

न मृषा श्रान्तं यदवन्ति देवा विश्वा इत् स्पृधो अभ्यश्नवाव ।
जयावेदत्र शतनीथमाजिं यत् सम्यञ्चा मिथुनावभ्यजाव ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. ऋतुस्ना॰ मूको. ३. ॰कीर्षतः मूको. ४. उक्त्वैनः मूको. ५. नच्छेरन् मूको; गच्छेयुः ल प्रस्तावः ६. ब्रह्मवाद्यानि मूको.

न । मृषा । श्रान्तम् । यत् । अवन्ति । देवाः । विश्वाः । इत् । स्पृधः । अभि । अश्नवाव ।
जयाव । इत् । अत्र । शतऽनीथम् । आजिम् । यत् । सम्यञ्चा । मिथुनौ । अभि । अजाव ॥३॥

वेङ्कट० न व्यर्थं तपः, यस्मात् रक्षन्ति देवाः । आवां[1] पुत्रानुत्पाद्य सर्वान् एव[2] शत्रून् अभिभवेव, जयाव एव च अस्मिंस्तपसि बहुनयप्रकारम् सङ्ग्रामम्, यदा अभिमुखौ मिथुनीभूतौ स्वाभिमुख्येन अभि अजाव ॥ ३ ॥

नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् ।
लोपामुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसन्तम् ॥ ४ ॥

नदस्य । मा । रुधतः । कामः । आ । अगन् । इतः । आऽजातः । अमुतः । कुतः । चित् ।
लोपामुद्रा । वृषणम् । निः । रिणाति । धीरम् । अधीरा । धयति । श्वसन्तम् ॥ ४ ॥

वेङ्कट० स्तोतुर्ऋषेः मम निरुन्धानस्येन्द्रियम् कामः आगमत् । इतः आगतः अमुतः वा अज्ञाताद्[3] देशात् । इत इत्यात्मनो निर्देशः, अमुत इति पत्न्याः । लोपामुद्रा भर्तारम् आकर्षति[4] । धृष्टम् अधृष्टा पिबति श्वसन्तम् ॥ ४ ॥

इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे ।
यत् सीमागश्चकृमा तत् सु मृळतु पुलुकामो हि मर्त्यः ॥ ५ ॥

इमम् । नु । सोमम् । अन्तितः । हृत्ऽसु । पीतम् । उप । ब्रुवे ।
यत् । सीम् । आगः । चकृम । तत् । सु । मृळतु । पुलुऽकामः । हि । मर्त्यः ॥ ५ ॥

वेङ्कट० इमम्[5] सोमम्[6] इदानीम् आऽन्तात्[7] यावदवकाशं जठरेषु पीतम् पररहस्यदर्शनप्रायश्चित्तार्थं स्तौमि । यत् सर्वतो वयं पापम् चकृम, तत्र अस्मान् पापविनाशनेन सोमः सुखयतु । बहुकामो हि मनुष्यः पररहस्यानि चावशः पश्यति ॥ ५ ॥

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।
उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ ६ ॥

अगस्त्यः । खनमानः । खनित्रैः । प्रऽजाम् । अपत्यम् । बलम् । इच्छमानः ।
उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ ६ ॥

---

१. आवं च वि[2] अ[1]. २. अपि वि[1] लपं. ३. °ताद् वा वि[1] अ[1]. ४. र्षतीति अ[1]. ५. मम् वि[2] अ[1]. ६. °मम् नु वि[1] अ[1]. ७. अन्तिकात् ल प्रस्तावः.

**वेङ्कट०** वानप्रस्थविधिना अगस्त्यः मूलादानार्थम् खनित्रैः पृथिवीम् खनमानः गृहस्थवत् प्रजादिकं च इच्छन्। उभौ इमावाकारौ अयम् ऋषिः उग्रः पुपोष । [1]आयुराशास्त इत्यादिकाश्च आशिषः[1] देवेषु यथार्थाः प्राप्तवान् ॥ ६ ॥

[2]इति द्वितीयाष्टके चतुर्थाध्याये द्वाविंशो वर्गः[2] ॥

[ १८० ]

[2]अगस्त्यो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[2] ।

युवो रजांसि सुयमासो अश्वा रथो यद् वां पर्यर्णांसि दीयत् ।
हिरण्यया वां पवयः प्रुषायन् मध्वः पिबन्ता उषसः सचेथे ॥ १ ॥

युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वाम् । परि । अर्णांसि । दीयत् ।
हिरण्ययाः । वाम् । पवयः । प्रुषायन् । मध्वः । पिबन्तौ । उषसः । सचेथे इति ॥ १ ॥

**वेङ्कट०** [3]अश्विनौ! युवयोः यदा रथः[3] उदकानि परितः सञ्चरति तदानीं ताँस्ताँल्लोकान् सुयमाः अश्वाः च सञ्चरन्ति। तथा हिरण्मयाः पानसाधनभूताः पाव्यो मधुपूर्णाः [4]युवयो रथे[4] उज्ज्वलन्ति[5]। युवां मधुसदृशं सोमम् पिबन्तौ उषसः सेवेथे ॥ १ ॥

युवमत्यस्यावं नक्षथो यद् विपत्मनो नर्यस्य प्रयज्योः ।
स्वसा यद् वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे च ॥ २ ॥

युवम् । अत्यस्य । अव । नक्षथः । यत् । विऽपत्मनः । नर्यस्य । प्रऽयज्योः ।
स्वसा । यत् । वाम् । विश्वगूर्ती इति विश्वऽगूर्ती । भराति । वाजाय । ईट्टे । मधुऽपौ । इषे । च ॥

**वेङ्कट०** युवम्[6] अतनशीलस्यादित्यस्य अधस्तात् व्याप्नुथो[7] गच्छथः, विविधपतनस्य नृहितस्य प्रकर्षेण यष्टव्यस्यादित्यस्य स्वसा उषाः यदा वाम् विश्वैराहूयमानौ पृथिवीं प्रति भरति, यदा च वां बलाय च अन्नाय च[8] सोमपौ! स्तौति ॥ २ ॥

युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।
अन्तर्यद् वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥ ३ ॥

युवम् । पयः । उस्रियायाम् । अधत्तम् । पक्वम् । आमायाम् । अव । पूर्व्यम् । । गोः ।
अन्तः । यत् । वनिनः । वाम् । ऋतप्सू इत्यृतऽप्सू । ह्वारः । न । शुचिः । यजते । हविष्मान् ॥

---

१-१. नास्ति अ[1]; °स्त···शिषे वि[1]. २-२. नास्ति मूको. ३-३. नास्ति वि[1] अ[1]. ४-४. °योस्थ ल. ५. उज्व° लपं. ६. युवाम् अ[1]. ७. °प्नुतो वि[1]. ८. नास्ति अ[1].

**वेङ्कट०** युवम् पयः गवि अधत्तम् पक्वम् आमायाम् ऊधःप्रदेशे बहु गोः, पुरातनं वा तस्याः[1]। तदिदं शयवे कृतम्। यदा हे सत्यरूपौ! वाम् वनिनः वृक्षस्य अन्तः अरण्यमध्ये स्तेनः इव छन्नः शुचिः शयुर्नामर्षिः यजते स्म हविष्मान्। अभिशस्यमानः स्तेनोऽरण्ये यजते ॥ ३ ॥

युवं ह घर्मं मधुमन्तमत्रयेऽपो न क्षोदोऽवृणीतमेषे।
तद् वां नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति यन्ति मध्वः ॥ ४ ॥

युवम्। ह। घर्मम्। मधुऽमन्तम्। अत्रये। अपः। न। क्षोदः। अवृणीतम्। एषे।
तत्। वाम्। नरौ। अश्विना। पश्वःऽइष्टिः। रथ्याऽइव। चक्रा। प्रति। यन्ति। मध्वः ॥ ४ ॥

**वेङ्कट०** युवम् खलु दीप्तमग्निम् उदकवन्तम् अत्रये असुरैरग्नौ प्रक्षिप्ताय, उदकानि तटः इव, अवारयेथाम् वामिच्छते। तस्मिन्नाश्रये[2] कृते सति नेतारौ! अश्विनौ! देवैः वाम् पशोर्यागः कल्पितः। तथा तदानीं रथ्यायां चक्राणि इव सोमाश्च मधुसदृशाः प्रति यन्ति ॥ ४ ॥

आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः।
अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥ ५ ॥

आ। वाम्। दानाय। ववृतीय। दस्रा। गोः। ओहेन। तौग्र्यः। न। जिव्रिः।
अपः। क्षोणी इति। सचते। माहिना। वाम्। जूर्णः। वाम्। अक्षुः। अंहसः। यजत्रा ॥५॥

**वेङ्कट०** आ वर्तयामि वाम् दानाय दर्शनीयौ!, यथा उदकस्य ओघेन समुद्रमध्येऽपह्रियमाणः[3] भुज्युर्वाम् आजुहाव जीर्णः। अन्तरिक्षं द्यावापृथिव्यौ च सेवते महत्त्वेन युवयोः रथः तथा यष्टव्यौ! वाम् सम्भक्तुमिच्छन् अवर्तेः[4] जीर्णो भवति ॥ ५ ॥

[5]इति द्वितीयाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः[5] ॥

नि यद् युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिम्।
प्रेषद् वेषद् वातो न सूरिरा महे ददे सुव्रतो न वाजम् ॥ ६ ॥

नि। यत्। युवेथे इति। निऽयुतः। सुदानू इति सुऽदानू। उप। स्वधाभिः। सृजथः। पुरम्ऽधिम्।
प्रेषत्। वेषत्। वातः। न। सूरिः। आ। महे। ददे। सुऽव्रतः। न। वाजम् ॥ ६ ॥

**वेङ्कट०** हे शोभनदानौ! यदा वर्षार्थम् नियुतः वायोरश्वाः युवाम् [6]नि मिश्रयथः[6], तदानीमन्नैः उप सृजथः पृथिवीं बहुनो दात्रीम्। प्रीणयति[7] च व्याप्नोति च वाम् वातः इव स्तोत्रैः स्तोता। अथ महत्त्वाय आ दत्ते च भवद्दत्तमन्नं[8] सुकर्मा इव कर्षकः ॥ ६ ॥

---

१. नास्ति लपं. २. अस्मिन्ना° मूको. ३. °ध्ये च भ्रियमाणः वि[1] अ[1] ल लपं. ४. अवर्ते वि[2] लपं; अवर्त्ते वि[1] अ[1]; अवर्ते? ल. ५-५. नास्ति मूको. ६-६. निशामयथः अ[1]. ७. नास्ति वि[2] अ[1]. ८. °न्नं चादत्ते मूको.

वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।
अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदेवम् ॥ ७ ॥

वयम् । चित् । हि । वाम् । जरितारः । सत्याः । विपन्यामहे । वि । पणिः । हितऽवान् ।
अध । चित् । हि । स्म । अश्विनौ । अनिन्द्या । पाथः । हि । स्म । वृषणौ । अन्तिऽदेवम् ॥७॥

**वेङ्कट०** वयम् अपि वाम् स्तोतारः सत्यवचनाः स्तुमः । युवयोः हि स्तोता हितयुक्तो भवति । अथ अश्विनौ ! अनिन्द्यौ ! रक्षथः वर्षितारौ ! अन्तिकस्थदेवं स्तोतारम् ॥ ७ ॥

युवां चिद्धि ष्माश्विनावनु द्यून् विरुद्रस्य प्रस्रवणस्य सातौ ।
अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत् सहस्रैः ॥ ८ ॥

युवाम् । चित् । हि । स्म । अश्विनौ । अनु । द्यून् । विऽरुद्रस्य । प्रऽस्रवणस्य । सातौ ।
अगस्त्यः । नराम् । नृषु । प्रऽशस्तः । काराधुनीऽइव । चितयत् । सहस्रैः ॥ ८ ॥

**वेङ्कट०** हे अश्विनौ ! युवाम् दिवसेषु अशन्या दीप्तिरहितत्वाद् विगतरुद्रभावस्य वर्षस्य सम्भजनार्थम् अगस्त्यः मनुष्याणां नेतृषु देवेषु प्रशस्यमानः स्तौति । यथा शङ्खस्य ध्माता रौपुरांश ऋषिः स्तोत्रसहस्रैः अचेतयत्[1], तद्वच्च चेतयति ॥ ८ ॥

प्र यद् वहेथे महिना रथस्य प्र स्पन्द्रा याथो मनुषो न होता ।
धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥ ९ ॥

प्र । यत् । वहेथे इति । महिना । रथस्य । प्र । स्पन्द्रा । याथः । मनुषः । न । होता ।
धत्तम् । सूरिऽभ्यः । उत । वा । सुऽअश्व्यम् । नासत्या । रयिऽसाचः । स्याम ॥ ९ ॥

**वेङ्कट०** रथस्य महत्त्वेन यदा युवाम् प्र आप्नुथः, तदा[2] स्यन्दनशीलौ ! प्र याथः च, यथा [3]मनुष्यस्य होता[3] यज्ञादावागतो यज्ञान्ते गच्छति । दत्तं स्तोतृभ्यः अपि च शोभनाश्वसङ्घम्[4] । नासत्यौ ! धनस्य सम्भक्तारः वयम् स्याम ॥ ९ ॥

तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यम् ।
अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥

---

१. अचोदयत् वि[२]; चोदयति अ[१]. २. तथा अ[१]. ३-३. °नुष्य होता वि[२] अ[१]. ४. °श्वसंख्यम् वि[१] लपं; °श्वसख्यम् वि[२] अ[१,२] ल.

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । स्तोमैः । अश्विना । सुविताय । नव्यम् ।
अरिष्टऽनेमिम् । परि । द्याम् । इयानम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥

**वेङ्कट०** तम् युवयोः रथम् वयम् इदानीम् आह्वयामः स्तोमैः अश्विनौ! अभ्युदयाय स्तोतव्यम् अक्षतचक्रधारम् परि गच्छन्तम् द्याम्[१] ॥ १० ॥

[२]इति द्वितीयाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः[२] ॥

## [ १८१ ]

[२]अगस्त्यो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[२] ।

**कदु प्रेष्ठाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् ।**
**अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥ १ ॥**

कत् । ऊँ इति । प्रेष्ठौ । इषाम् । रयीणाम् । अध्वर्यन्ता । यत् । उत्ऽनिनीथः । अपाम् ।
अयम् । वाम् । यज्ञः । अकृत । प्रऽशस्तिम् । वसुधिती इति वसुऽधिती । अवितारा । जनानाम् ॥

**वेङ्कट०** कदा[३] खलु स कालो भवति, प्रियतमौ युवाम् अन्नानाम् रयीणाम् चार्थम् अध्वरमिच्छन्तौ यदा[४] [५]अपाम् इति[५] कर्मणि षष्ठी, अपः उन्निनीथः । अयम् युवयोः यज्ञः प्रशस्तिम् अकृत धनानां दातारौ! रक्षितारौ! जनानाम् ॥ १ ॥

**आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः ।**
**मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहन्तु ॥ २ ॥**

आ । वाम् । अश्वासः । शुचयः । पयःऽपाः । वातऽरंहसः । दिव्यासः । अत्याः ।
मनःऽजुवः । वृषणः । वीतऽपृष्ठाः । आ । इह । स्वऽराजः । अश्विना । वहन्तु ॥ २ ॥

**वेङ्कट०** वाम् युवयोः एवंविधा अश्वाः इह आ वहन्तु उदकस्य रक्षितारः[६] वातवेगाः दिवि भवाः अतनशीलाः मनोवेगाः वर्षितारः कान्तपृष्ठाः प्रभवः ॥ २ ॥

**आ वां रथोऽवनिर्न प्रवत्वान्त्सृप्रवन्धुरः सुविताय गम्याः ।**
**वृष्णः स्थातारा मनसो जवीयानहंपूर्वो यजतो धिष्ण्या यः ॥ ३ ॥**

आ । वाम् । रथः । अवनिः । न । प्रवत्वान् । सृप्रऽवन्धुरः । सुविताय । गम्याः ।
वृष्णः । स्थातारा । मनसः । जवीयान् । अहम्ऽपूर्वः । यजतः । धिष्ण्या । यः ॥ ३ ॥

---

१. दधात् वि[१] अ[१]. २-२. नास्ति मूको. ३. तदा वि[२]. ४. तदा वि[२] अ[१]; °दा युवाम् मूको.
५-५. अपामपामिव वि[१] अ[१]. ६. °तारो वि[१] लर्.

**वेङ्कट०** युवयोः[1] रथः पृथिवी इव विस्तीर्णावकाशः प्रसृतफलकासङ्घाटः[2] अभ्युदयाय गच्छतु । हे मेघस्याधिष्ठातारौ! मनसः अपि वेगवान् युवयोर्गमनावसरे अहम् पूर्वं इत्युपतिष्ठन् यष्टव्यः यः भवति स्तुत्यौ! ॥ ३ ॥

इहेह जाता समवावशीतामरेपसा तन्वाई नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥ ४ ॥

इहऽइह । जाता । सम् । अवावशीताम् । अरेपसा । तन्वा । नामऽभिः । स्वैः ।
जिष्णुः । वाम् । अन्यः । सुऽमखस्य । सूरिः । दिवः । अन्यः । सुऽभगः । पुत्रः । ऊहे ॥ ४ ॥

**वेङ्कट०** अत्रात्र प्रादुर्भूतौ सह कामयेतां[3] पापेनालिप्यमानया तन्वा नामभिः च स्वैः दस्रा अश्विनावित्यादिभिः । जयशीलः[4] ॥ ४ ॥

प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूपः सदनानि गम्याः ।
हरी अन्यस्य पीपयन्त वाजैर्मथ्ना रजांस्यश्विना वि घोषैः ॥ ५ ॥

प्र । वाम् । निऽचेरुः । ककुहः । वशान् । अनु । पिशङ्गऽरूपः । सदनानि । गम्याः ।
हरी इति । अन्यस्य । पीपयन्त । वाजैः । मथ्ना । रजांसि । अश्विना । वि । घोषैः ॥ ५ ॥

**वेङ्कट०** युवाम्[5] लोकान् मथितारौ भवथः गर्जितशब्दैः वायुघोषैश्च ॥ ५ ॥

[6]इति द्वितीयाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः[6] ॥

प्र वां शरद्वान् वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।
एवैरन्यस्य पीपयन्त वाजैर्वेषन्तीरूर्ध्वा नद्यो न आगुः ॥ ६ ॥

प्र । वाम् । शरत्ऽवान् । वृषभः । न । निष्षाट् । पूर्वीः । इषः । चरति । मध्वः । इष्णन् ।
एवैः । अन्यस्य । पीपयन्त । वाजैः । वेषन्तीः । ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥ ६ ॥

**वेङ्कट०** युवयोः विशरणवान् वृषभः इव पर्वतादीनामभिभविता वायुः यज्ञमुखे स्थितानि अन्नानि प्र चरति मादकं सोमम् इच्छन् । अथाऽऽदित्यस्य गमनशीलैः तत्प्रेरितैरन्नैः मनुष्या वर्धन्ते । प्राप्नुवत्यः दिवि स्थिताः नदनशीलाः आपः युवयोः प्रसादाद् अस्मान् आ गच्छन्तु ॥ ६ ॥

असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरन्ती ।
उपस्तुताववतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥ ७ ॥

---

१. नास्ति वि[2] अ[1]. २. °घाटे वि[2] अ[1]. ३. अकामये° वि[2] अ[1]; कामयेयाम् ल प्रस्तावः.
४. °शीलौ वि[2] अ[1]. ५. °वाम् ( अन्नानां रयीणाञ्चार्थमध्वरमिच्छन्तौ ) लपं. ६-६. नास्ति मूको.

असर्जि । वाम् । स्थविरा । वेधसा । गीः । बाळ्हे । अश्विना । त्रेधा । क्षरन्ती ।
उपऽस्तुतौ । अवतम् । नाधमानम् । यामन् । अयामन् । शृणुतम् । हवम् । मे ॥ ७ ॥

वेङ्कट० सृष्टा युवयोः वृद्धा स्तोत्रा मया स्तुतिः बाधे सञ्जाते अश्विनौ ! त्रेधा क्षरन्ती, उच्चनीचमध्यमैस्त्रिप्रकारत्वम्, त्रैस्वर्येण क्षरन्ती । मया उपस्तुतौ युवां याचमानं रक्षतम् । गमने च[1] अगमने च[2] शृणुतम् स्तोत्रं मे ॥ ७ ॥

**उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन् ।**
**वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥ ८ ॥**

उत । स्या । वाम् । रुशतः । वप्ससः । गीः । त्रिऽबर्हिषि । सदसि । पिन्वते । नॄन् ।
वृषा । वाम् । मेघः । वृषणा । पीपाय । गोः । न । सेके । मनुषः । दशस्यन् ॥ ८ ॥

वेङ्कट० अपि च एषा युवयोः उज्ज्वलस्य रूपस्य स्तुतिः त्रिभिर्बर्हिषो[3] धातुभिः स्तीर्णायां वेद्याम् आप्याययति मनुष्यान् । वर्षिता युवयोः सम्बन्धी [4]मेघः हे वर्षितारौ ! प्याययति बहुक्षीरायाः गोः इव ऊधः पृथिव्याः सेके मनुष्यान्† अन्नानि प्रयच्छन्[4] ॥ ८ ॥

**युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान् ।**
**हुवे यद् वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुम् ॥ ९ ॥**

युवाम् । पूषाऽइव । अश्विना । पुरम्ऽधिः । अग्निम् । उषाम् । न । जरते । हविष्मान् ।
हुवे । यत् । वाम् । वरिवस्या । गृणानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ९ ॥

वेङ्कट० [5]विश्वस्य धर्ता[5] [6]पूषा इव[6] युवाम्[7] अश्विनौ ! भवथः । तथा[8] वां [4]यजमानः अग्निम् उषसञ्च न स्तौति[4] । यस्मात् अहमाह्वयामि, परिचर्यया सह स्तुवन्[9] भवामि । ततो विद्यामेति गतम् ( ऋ १,१६५,१५ ) ॥ ९ ॥

[10]इति द्वितीयाष्टके चतुर्थाध्याये षड्विंशो वर्गः[10] ॥

## [ १८२ ]

[10]अगस्त्यो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । जगती छन्दः, षष्ठ्यष्टम्यौ त्रिष्टुभौ[10] ।

**अभूदिदं वयुनमो षु भूषता रथो वृषण्वान् मदता मनीषिणः ।**
**धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥ १ ॥**

अभूत् । इदम् । वयुनम् । ओ इति । सु । भूषत । रथः । वृषण्ऽवान् । मदत । मनीषिणः ।
धियम्ऽजिन्वा । धिष्ण्या । विश्पलावसू इति । दिवः । नपाता । सुऽकृते । शुचिऽव्रता ॥ १ ॥

---

१. वा वि[2] अ[1]. २. वा वि[2]. ३. त्रिभिर्हविषो वि[2] अ[1]. ४-४. त्रुटितम् वि[2] अ[1]. † मनुष्येभ्यः इत प्रस्तावः? ५-५. नास्ति वि[2] अ[1]. ६-६ नास्ति वि[2]. ७. नास्ति अ[1]. ८. तदा अ[1], ९. स्तुवन् अ[1] वि[2]. १०-१०. नास्ति मूको.

वेङ्कट० उषस्यपाम् अभूत् इदम् प्रज्ञानम्। हे मनुष्याः! मत्समीपे सुष्ठु वा भवत। अश्विनोरयं वर्षणवान् रथः आजगाम, स्तुत हे मनीषिणः!। कर्मणां तर्पयितारौ स्तोतव्यौ [1]विश्पलाछिन्नजङ्घायाः वासयितारौ[1] दिवः पुत्रौ शोभनकर्मणे शोभनकर्माणौ ॥ १ ॥

इन्द्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा ।
पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥ २ ॥

इन्द्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा । रथ्या । रथिऽतमा ।
पूर्णम् । रथम् । वहेथे इति । मध्वः । आऽचितम् । तेन । दाश्वांसम् । उप । याथः । अश्विना ॥

वेङ्कट० ईश्वरतमौ हि स्तोतव्यौ गन्तृतमौ दस्रौ अतिशयेन दर्शनीयौ रथ्यायां रथे नेतारौ मधुपूर्णं रथम् वहेथे मधुनः आचितम्। शिष्टं स्पष्टम् ॥ २ ॥

किमत्र दस्रा कृणुथः किमासाथे जनो यः कश्चिदहविर्महीयते ।
अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृणुतं वचस्यवे ॥ ३ ॥

किम् । अत्र । दस्रा । कृणुथः । किम् । आसाथे इति । जनः । यः । कः । चित् । अहविः । महीयते ।
अति । क्रमिष्टम् । जुरतम् । पणेः । असुम् । ज्योतिः । विप्राय । कृणुतम् । वचस्यवे ॥ ३ ॥

वेङ्कट० किम् अस्मिन्नहोतरि दर्शनीयौ! कृणुथः। किम् च तस्मिन् आसाथे[2], जनः यः कः चित् अहोता भवद्भ्यां गमनेन पूज्यते। तस्मात् तम् अति क्रमिष्टम्, हिंसतं च तस्यासुरस्य प्राणम्, ज्योतिः विप्राय कृणुतम् स्तुतिमिच्छते ॥ ३ ॥

जम्भयतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।
वाचंवाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥ ४ ॥

जम्भयतम् । अभितः । रायतः । शुनः । हतम् । मृधः । विदथुः । तानि । अश्विना ।
वाचम्ऽवाचम् । जरितुः । रत्निनीम् । कृतम् । उभा । शंसम् । नासत्या । अवतम् । मम ॥ ४ ॥

वेङ्कट० अश्विनौ! अभितः शब्दयतः शुनः [3]जम्भयोः कुरुतम्[3] हतम् च सङ्ग्रामस्य कर्तॄन् हिंसकान्। एवञ्जातीयकानि[4] कर्तुं जानीथः। स्तोतुः सर्वां वाचं रत्नवतीम् कृतम्। उभौ सहितौ नासत्यौ मम! आशंसनं रक्षतम् ॥ ४ ॥

युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कम् ।
येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥ ५ ॥

---

१-१. विश्पलाछिन्नजङ्घाक्षम्यां वासिता मूको. २. अशयाथे लपं. ३-३. °मोटकु° वि[2] अ[1]. ४. अभवज्जानी° वि[2] अ[1].

युवम् । एतम् । चक्रथुः । सिन्धुषु । प्लवम् । आत्मन्ऽवन्तम् । पक्षिणम् । तौग्र्याय । कम् ।
येन । देवऽत्रा । मनसा । निःऽऊहथुः । सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥ ५ ॥

वेङ्कट० युवाम् एतम् कृतवन्तौ उदकेषु प्लवसाधनं[1] युष्मदीयं पक्षयुक्तं तुग्रपुत्राय[2]। येन प्लवेन[3] देवान् युवाम् मनसा[4] प्रत्युदूहथुः, युवामपि तेन प्लवेन सुपतने[5] महतः उदकात् यज्ञं प्रति पेतथुः[6] ॥ ५ ॥

[7]इति द्वितीयाष्टके चतुर्थाध्याये सप्तविंशो वर्गः[7] ॥

**अवविद्धं तौग्र्यमप्स्व१न्तरनारम्भणे तमसि प्रविद्धम् ।**
**चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयन्ति ॥ ६ ॥**

अवऽविद्धम् । तौग्र्यम् । अप्ऽसु । अन्तः । अनारम्भणे । तमसि । प्रऽविद्धम् ।
चतस्रः । नावः । जठलस्य । जुष्टाः । उत् । अश्विऽभ्याम् । इषिताः । पारयन्ति ॥ ६ ॥

वेङ्कट० अपां मध्ये पित्राऽपविद्धं[8] तुग्रपुत्रम्[2] अनालम्भने अन्धकारे समुद्रमध्ये प्रक्षिप्तम् चतस्रः नावः जठरस्य पर्याप्ता विस्तीर्णोदराः अश्विभ्याम् प्रेषिताः समुद्रमध्यात् उत् पारयन्ति ॥ ६ ॥

**कः स्विद् वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।**
**पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कम् ॥ ७ ॥**

कः । स्वित् । वृक्षः । निःऽस्थितः । मध्ये । अर्णसः । यम् । तौग्र्यः । नाधितः । परिऽअसस्वजत् ।
पर्णा । मृगस्य । पतरोःऽइव । आऽरभे । उत् । अश्विना । ऊहथुः । श्रोमताय । कम् ॥ ७ ॥

वेङ्कट० उदकस्य मध्ये कः सः वृक्षः निष्ठितः यम् वृक्षम् भुज्युः अश्विनौ स्तुवन्[9] परिष्वक्तवानिति नावमभिप्रेत्याह । अवसन्नः स भुज्युस्तदानीमेव यस्या नावः पर्णानि आरब्धवान् शीघ्रं गच्छतः मृगस्येव लोमानि । तमथ अश्विनौ! उत् ऊहथुः श्रोमतकुलजाताय[10] पित्रे ॥ ७ ॥

**तद् वां नरा नासत्यावनु ष्याद् यद् वां मानास उचथमवोचन् ।**
**अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥**

तत् । वाम् । नरा । नासत्यौ । अनु । स्यात् । यत् । वाम् । मानासः । उचथम् । अवोचन् ।
अस्मात् । अद्य । सदसः । सोम्यात् । आ । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

वेङ्कट० हे नेतारौ! नासत्यौ! तत् युवयोः सन्निधाने भवतु । यत् स्तोत्रम् वाम् कुम्भभवाः उक्तवन्तः । यत् अद्य अस्मात् सोमार्हात्[11] यज्ञादुत्थितम् तत् वाम् अनु स्यात् इति[12] ॥ ८ ॥

[7]इति द्वितीयाष्टके चतुर्थाध्याये अष्टाविंशो वर्गः[7] ॥

---

१. प्लवनसा° वि[2] अ[1]. २. तु उग्रपु° वि[2]; तूग्रपु° अ[1]. ३. प्लवने वि[2] अ[1]. ४. °साप्रज्ञम् वि[2] अ[1]. ५. °तनौ ल प्रस्तावः ६. पेदथुः वि[2] अ[1] लपं. ७-७. नास्ति मूको. ८. °त्रावपि शुद्धम् वि[2] अ[1]. ९. स्तुन्वन् वि[2] अ[1] लपं. १०. श्रोत्रमथकूल° वि[2] अ[1]. ११. °र्हत् लपं. १२. °ष्यादि वि[2] अ[1].

## [ १८३ ]

[1]अगस्त्यो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[1] ।

**तं युञ्जाथां मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।**
**येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥ १ ॥**

तम् । युञ्जाथाम् । मनसः । यः । जवीयान् । त्रिऽवन्धुरः । वृषणा । यः । त्रिऽचक्रः ।
येन । उपऽयाथः । सुऽकृतः । दुरोणम् । त्रिऽधातुना । पतथः । विः । न । पर्णैः ॥ १ ॥

**वेङ्कट०** तम् रथम् युञ्जाथाम्, मनसः अपि यः जववान् त्रिफलकासङ्घाटः[2] वर्षितारौ! त्रिचक्रः । येन[3] उपगच्छथः यजमानगृहम्, तेन त्रिफलकेन यज्ञेषु पतथः, पक्षी इव पर्णैः ॥ १ ॥

**सुवृद् रथो वर्तते यन्नभि क्षां यत् तिष्ठथः क्रतुमन्तानु पृक्षे ।**
**वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥ २ ॥**

सुऽवृत् । रथः । वर्तते । यन् । अभि । क्षाम् । यत् । तिष्ठथः । क्रतुऽमन्ता । अनु । पृक्षे ।
वपुः । वपुष्या । सचताम् । इयम् । गीः । दिवः । दुहित्रा । उषसा । सचेथे इति ॥ २ ॥

**वेङ्कट०** सुवर्तनः रथः वर्तते गच्छन् पृथिवीं प्रति, यदा कर्मवन्तौ युवां तमधितिष्ठथः अन्नाय । अनुर्लक्षणे । [4]युवयोः वपुः[4] वपुषे[5] योग्या इयम् स्तुतिः सेवताम् । युवां[6] दिवः दुहित्रा उषसा सह प्रादुर्भवन्त्या सचेथे यजमानम् ॥ २ ॥

**आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।**
**येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ३ ॥**

आ । तिष्ठतम् । सुऽवृतम् । यः । रथः । वाम् । अनु । व्रतानि । वर्तते । हविष्मान् ।
येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च ॥ ३ ॥

**वेङ्कट०** आ तिष्ठतम् शोभनावर्तं तम्, यः वाम् रथः कर्माणि अनु वर्तते[7] यजमानदत्तैर्हविर्भिस्तद्वान् । येन [8]हे नेतारौ![8] नासत्यौ! अन्नं कर्तुं मार्गम् याथः पुत्राय पित्रे च ॥ ३ ॥

**मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तम् ।**
**अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनाम् ॥ ४ ॥**

---

१-१. नास्ति मूको. २. त्रिधाफल° अ[1]. ३. 'न च वि[1] अ[1]. ४-४. नास्ति वि[1] लपं. ५. °पुषे वि[1] लपं. ६. नास्ति अ[1]. ७. °ने ते वि[1] ल लपं. ८-८. नास्ति मूको.; तु. वे. ऋ १,१८२,८.

मा । वाम् । वृकः । मा । वृकीः । आ । दधर्षीत् । मा । परि । वक्तम् । उत । मा । अति । धक्तम् ।
अयम् । वाम् । भागः । निऽहितः । इयम् । गीः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥४॥

वेङ्कट० मत्समीपं गच्छन्तौ वृकः वृकी च आदित्यश्चोषाश्च मा अभिभूताम्[1] । अथवा लौकिकावेव वृकौ । तथा सति मा अस्मान् परि वर्जयतम् । मा च अतीत्य अस्मान् अन्यस्मै दत्तम् । अयम् युवयोः भागः निहितः । इयम् च युवयोः स्तुतिः । हे दर्शनीयौ ! इमानि[2] वाम् सोमानां पात्राणि ॥४॥

युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान् ।
दिशं न दिष्टामृजूयेव यन्ता मे हवं नासत्योप यातम् ॥ ५ ॥

युवाम् । गोतमः । पुरुऽमीळ्हः । अत्रिः । दस्रा । हवते । अवसे । हविष्मान् ।
दिशम् । न । दिष्टाम् । ऋजुयाऽइव । यन्ता । आ । मे । हवम् । नासत्या । उप । यातम् ॥५॥

वेङ्कट० हे दस्रौ ! गोतमः यजमानः रक्षणार्थम् युवाम् एव हवते तथा पुरुमीळ्हः[3] अत्रिः च । तौ युवाम्, उपदिष्टाम् दिशम् इव अकुटिलेन मार्गेण सारथिः, मदीयम् आह्वानम् उप आ गच्छतम् ॥ ५ ॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् । स्तोमः । अश्विनौ । अधायि ।
आ । इह । यातम् । पथिऽभिः । देवऽयानैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

वेङ्कट० रात्रिकृतस्य तमसः पारम् वयम् अतारिष्म । व्युष्टा रात्रिरित्यर्थः । तथा[4] युवयोः स्तोमः काले प्रति अधायि । ततः आ यातम् इह पथिभिः देवयानैः ॥ ६ ॥

[5]इति द्वितीयाष्टके चतुर्थाध्याये एकोनत्रिंशो वर्गः[5] ॥

[6]व्याख्यत् पौत्रश्चिन्तयन्त्यास्तुरीयं[6] माधवाह्वयः ।
अध्यायं वेङ्कटसुतो द्वितीयाष्टकगोचरम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने द्वितीयाष्टके चतुर्थोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये द्वितीयाष्टके चतुर्थोऽध्यायः ॥



१. अभूद् मूको. २. इमे मूको. ३. °मीढो अ[1]. ४. ततो वि[2] अ[1]. ५-५. नास्ति मूको.
६-६. व्याख्यातं पुत्रश्चितव° वि[1] लपं.

अथ द्वितीयाष्टके पञ्चमोऽध्यायः

वेङ्कट०

'ता वामद्य तावपरम्' व्याचिख्यासति माधवः
लोटः प्रदर्शयन् वृत्तिं लेटश्च तदनन्तरम् ॥

लोड्लेटावपि[1] विध्यादौ स्मृतौ यत्र लिङो विधिः ।
'ऋजीति परि वृङ्धि नः'[2] विधिराशीश्च याचनम् ॥

'नाहमतो निरया'ति[3] लोटः सर्वे विधायकाः ।
वचनव्यक्तिभेदस्तु वाक्यसंयोगतः कृतः ॥

'समुच्चयेऽन्यतरस्याम्'[4] अस्योदाहरणं विदुः ।
'प्रेह्यभीहि धृष्णुही'ति[5] शत्रुष्वित्थं करोति सः ॥

दृश्यन्ते बहवो लेटः प्रार्थनाविषया इह ।
'स देवाँ एह वक्षति'[6], 'यक्षच्च प्रियच्च नः'[7] ॥

'त्रिमूर्धानं सप्तरश्मिम्'[8] अयं 'लेट् स्याद्विधायकः'[9] ।
अथापि वर्तमानेऽर्थे "यो यजाति यजात[9] इत्"[10] ॥

[11]'अग्निना रयिमश्नवत्'† बहवः‡ सन्ति तादृशाः ।
'आ घा गमद्यदि श्रवत्'$[11] हेतुहेतुमतोरिमौ ॥

वाक्यार्थानुगुण लोटो लेटश्चार्थं प्रदर्शयेत् ;
व्युत्पत्त्यर्थमिमाः काश्चिदृचोऽस्माभिः प्रदर्शिताः ॥ इति ॥

[ १८४ ]

[12]अगस्त्यो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[12] ॥

ता वा॒मद्य ताव॑प॒रं हु॑वे॒मोच्छन्त्या॑मु॒षसि॒ वह्नि॑रु॒क्थैः ।
नास॑त्या॒ कुह॑ चि॒त् सन्ता॑व॒र्यो दि॒वो नपा॑ता सु॒दास्त॑राय ॥ १ ॥

ता । वा॒म् । अ॒द्य । तौ । अ॒प॒रम् । हु॒वे॒म॒ । उ॒च्छन्त्या॑म् । उ॒षसि॑ । वह्नि॑ः । उ॒क्थैः ।
नास॑त्या । कुह॑ । चि॒त् । सन्तौ॑ । अ॒र्यः । दि॒वः । नपा॑ता । सु॒दाःऽत॑राय ॥ १ ॥

---

१. लेड्लोटा° वि[2]. २. ऋ ६, ७५, १२. ३. ऋ ४,१८,२ ४. पा ३,४,३. ५. ऋ १, ८०,३. ६. ऋ १,१,२. ७. ऋ ८, ३९,९. ८. ऋ १,१४६,१. ९-९. त्रुटितम् वि[2]; नास्ति अ[1]. १०. ऋ ८,३१,१. ११-११. त्रुटितम् वि[2]; नास्ति अ[1]. † ऋ १,१,३. ‡ समन्वयौ नासत्यौ वह° वि[2] लपं. $ ऋ १,३०,८. १२-१२. नास्ति मूको.

वेङ्कट० अगस्त्यः। तौ युवां वयम् अद्य आह्वयामः। तौ एव इवश्च व्युच्छन्त्याम् उषसि भवतोः काले वोढा स्तौत्रैः, एकवचनबहुवचनयोः पादभेदात् समन्वयः, नासत्यौ! क्व अपि गूढदेशे वर्तमानौ स्तोमानां स्वामी दिवः पुत्रौ शोभनदानाय यजमानाय ॥ १ ॥

अस्मे ऊ षु वृषणा मादयेथामुत् पणीँर्हतमूर्म्या मदन्ता।
श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः ॥ २ ॥

अस्मे इति। ऊँ इति। सु। वृषणा। मादयेथाम्। उत्। पणीन्। हतम्। ऊर्म्या। मदन्ता।
श्रुतम्। मे। अच्छोक्तिऽभिः। मतीनाम्। एष्टा। नरा। निऽचेतारा। च। कर्णैः ॥ २ ॥

वेङ्कट० अस्मासु एव हे वृषणौ![1] सुष्ठु मादयेथाम्, असुरांश्च उत् हतम् सोमोर्म्या [2]माद्यन्तौ। स्तोत्राणामभिमुखवचनैः मयाऽभिलषितं† शृणुतं हे नरौ! युवां ‡स्तुतीनाम् एष्टारौ‡ कर्मणश्च तासां निचेतारौ श्रुत्कर्णौ¶ [2] ॥ २ ॥

श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः।
वच्यन्ते वां ककुहा अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ॥ ३ ॥

श्रिये। पूषन्। इषुकृताऽइव। देवा। नासत्या। वहतुम्। सूर्यायाः।
वच्यन्ते। वाम्। ककुहाः। अप्ऽसु। जाताः। युगा। जूर्णाऽइव। वरुणस्य। भूरेः ॥ ३ ॥

वेङ्कट० [3]पूषन्! त्वया सूर्यायाः वहतुम्[3] सोमं राजानं प्रति श्रयितुम् इमौ देवौ नासत्यौ इषुरिव कृतौ शीघ्रगामिनाम्। उच्यन्ते वाम् स्तुतयः अन्तरिक्षविषये जाताः। तत्रत्यैर्हि कर्मभिरेतयोः स्तुतिर्भवति। युगानि क्षणानि जीर्णानीव रात्रेः भूरेः। व्युच्छति न वेति हि सन्देहः[4]। अश्विनोः[5] स्तुतिः ॥ ३ ॥

अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः।
अनु यद् वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदन्ति ॥ ४ ॥

अस्मे इति। सा। वाम्। माध्वी इति। रातिः। अस्तु। स्तोमम्। हिनोतम्। मान्यस्य। कारोः।
अनु। यत्। वाम्। श्रवस्या। सुदानू इति सुऽदानू। सुऽवीर्याय। चर्षणयः। मदन्ति ॥ ४ ॥

वेङ्कट० [6]अस्मासु सा वाम्[6] हे मदयितारौ! रातिः दानम् अस्तु। स्तोमम् प्रति आगच्छतम् मान्यस्य स्तोतुः। यस्मात् वाम् अन्नेच्छया हे शोभनदानौ! सुवीर्यार्थञ्च अमी मनुष्याः अनु मदन्ति ॥ ४ ॥ स्पष्टोत्तरव्याख्या[7] अन्तिमा[8] च[9] ॥

---

१. वृषणा वि[2] अ[1]. २-२. नास्ति अ[1]; त्रुटितम् वि[2]. † मुमाभि° वि[1] लपं. ‡-‡ स्तुतीरेष्टारौ वि[1] लपं. ¶ तु. वें. ऋ १,४४,१३. ३-३. नास्ति वि[2] अ[1]. ४. सन्देहे वि[1] लपं. ५. नास्ति वि[2] अ[1]. ६-६. नास्ति लपं. ७. स्पष्टा अन्तरव्याख्या वि[2]. ८. अन्तिमेति अ[1]. ९. नास्ति मूको.

**एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति ।**
**यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदन्ता ॥ ५ ॥**

एषः । वाम् । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना । सुऽवृक्ति ।
यातम् । वर्तिः । तनयाय । त्मने । च । अगस्त्ये । नासत्या । मदन्ता ॥ ५ ॥

**वेङ्कट०** स्पष्टा व्याख्या ( तु. ऋ १,१८४,४ ) ॥ ५ ॥

**अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।**
**एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥**

अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् । स्तोमः । अश्विनौ । अधायि ।
आ । इह । यातम् । पथिऽभिः । देवऽयानैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

**वेङ्कट०** = ऋ १,१८३,६ ॥ ६ ॥

[1]इति द्वितीयाष्टके पञ्चमाध्याये प्रथमो वर्गः[1] ॥

## [ १८५ ]

[1]अगस्त्यो मैत्रावरुणिर्ऋषिः । द्यावापृथिव्यौ देवता । त्रिष्टुप् छन्दः[1] ॥

**कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।**
**विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ १ ॥**

कतरा । पूर्वा । कतरा । अपरा । अयोः । कथा । जाते इति । कवयः । कः । वि । वेद ।
विश्वम् । त्मना । बिभृतः । यत् । ह । नाम । वि । वर्तेते इति । अहनी इति । चक्रियाऽइव ॥

**वेङ्कट०** कतरा पूर्वा कतरा अपरा **अनयोः द्यावापृथिव्योः**[2], **कथं वा** जाते हे **मेधाविनः! एते,** कः[3] **जानाति । सर्वम् आत्मनैव धारयतः** यत् ह नाम **किञ्चिदस्ति ।** [4]वि वर्तेते[4] **वै अनयोर्मध्ये अहोरात्रे चक्रयुक्ते** इव[5] ॥ १ ॥

**भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते ।**
**नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ २ ॥**

भूरिम् । द्वे इति । अचरन्ती इति । चरन्तम् । पत्ऽवन्तम् । गर्भम् । अपदी इति । दधाते इति ।
नित्यम् । न । सूनुम् । पित्रोः । उपऽस्थे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥२॥

---

१-१. नास्ति मूको. २. अवरायो॰ वि[1] लपं. ३. नास्ति मूको. ४-४. विवतते वि[1] ल लपं; ॰र्तते वि[1] अ[1]. ५. नास्ति अ[1].

वेङ्कट० पृथुं द्यावापृथिवी स्वस्थाने स्थिते चरन्तम् पादयुक्तम् आदित्यम् स्वयम् अपदी धारयतः औरसम् इव पुत्रम् पित्रोः उपस्थे वर्तमानम् । द्यावापृथिवी! अस्मान् महतो भयात् रक्षतम् ॥ २ ॥

अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।
तद् रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ३ ॥

अनेहः । दात्रम् । अदितेः । अनर्वम् । हुवे । स्वःऽवत् । अवधम् । नमस्वत् ।
तत् । रोदसी इति । जनयतम् । जरित्रे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥३॥

वेङ्कट० अनुपद्रवं दानम् अदितेः अप्रस्खलितं ह्वयामि सुखयुक्तं हिंसारहितम् अन्नयुक्तम् । तत् दानं द्यावापृथिव्यौ! स्तोत्रे प्रादुर्भावयतम् ॥ ३ ॥

अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे ।
उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ४ ॥

अतप्यमाने इति । अवसा । अवन्ती इति । अनु । स्याम । रोदसी इति । देवपुत्रे इति देवऽपुत्रे ।
उभे इति । देवानाम् । उभयेभिः । अह्नाम् । द्यावा । रक्षतम । पृथिवी इति । नः । अभ्वात् ॥४॥

वेङ्कट० केन चिदप्यबाध्यमाने रक्षणेन सर्वान् रक्षन्त्यौ वयम् अनु स्याम द्यावापृथिव्यौ, ययोः सर्वे[1] देवा हि[2] पुत्रास्ते । अपि अह्नाम् उभे उभयेभिः अहोरात्रैः देवानाम् भोगसाधने भवत इति ॥ ४ ॥

संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे ।
अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ५ ॥

संगच्छमाने इति सम्ऽगच्छमाने । युवती इति । समन्ते इति सम्ऽअन्ते । स्वसारा । जामी इति । पित्रोः । उपऽस्थे ॥ अभिजिघ्रन्ती इत्यभिऽजिघ्रन्ती । भुवनस्य । नाभिम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ५ ॥

वेङ्कट० परस्परम् सङ्गच्छमाने युवती सङ्गतान्ते मातापित्रोः[3] उत्सङ्गे वर्तमाने स्वसारौ कन्यके भुवनस्य नाभिम् आदित्यम् अभिजिघ्रन्ती ॥ ५ ॥

[4]इति द्वितीयाष्टके पञ्चमाध्याये द्वितीयो वर्गः[4] ॥

उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री ।
दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ६ ॥

---

१. सर्वे एव अ[१]. २. एव ल; नास्ति वि[२] अ[१]. ३ मात्रापित्रोः वि[१] ल लपं. ४-४. नास्ति मूको.

उर्वी इति । सद्मनी इति । बृहती इति । ऋतेन । हुवे । देवानाम् । अवसा । जनित्री इति । दधाते इति । ये इति । अमृतम् । सुप्रतीके इति सुऽप्रतीके । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ६ ॥

वेङ्कट० विस्तीर्णे स्थानभूते उच्छ्रिते स्तोत्रेण हुवे देवानाम् अन्नेन जनयित्र्यौ । धारयतः ये उदकम् शोभनाङ्गे[1] ॥ ६ ॥

उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन् ।
दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ७ ॥

उर्वी इति । पृथ्वी इति । बहुले इति । दूरेअन्ते इति दूरेऽअन्ते । उप । ब्रुवे । नमसा । यज्ञे । अस्मिन् । दधाते इति । ये इति । सुभगे इति सुऽभगे । सुप्रतूर्ती इति सुऽप्रतूर्ती । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ७ ॥

वेङ्कट० महती[2] विस्तीर्णे बहूनां पर्याप्ते दूरे ययोः पर्यन्तः ते, अहमुपस्तौमि हविषा अस्मिन् यज्ञे । धारयेते ये मनुष्यान् सुधने शोभनप्रतरणे ॥ ७ ॥

देवान् वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।
इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ८ ॥

देवान् । वा । यत् । चकृम । कत् । चित् । आगः । सखायम् । वा । सदम् । इत् । जाःपतिम् । वा । इयम् । धीः । भूयाः । अवऽयानम् । एषाम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ८ ॥

वेङ्कट० यज्ञाननुष्ठानाद् अनृतवचनाच्च देवान् वा यत् वयम् कत् चित् आगः[3] कृतवन्तः सखायम् वा मनुष्यं सदा एव जामातरं वा । एतत् स्तोत्रलक्षणं कर्माङ्गसाम[4] एषाम् अवयापनम्[5] भवतु ॥ ८ ॥

उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् ।
भूरि चिदर्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥ ९ ॥

उभा । शंसा । नर्या । माम् । अविष्टाम् । उभे इति । माम् । ऊती इति । अवसा । सचेताम् । भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदन्तः । इषयेम । देवाः ॥ ९ ॥

---

१. शोभनाङ्गम् ल; °नाङ्गो अ[1]; °नाङ्ग वि[1] लपं. २. महत्यौ ल. ३. पापं वि[2] अ[1]. ४. °ङ्गानाम् अ[1]. ५. अवयानम् अ[2] ल,

**वेङ्कट०** उभौ मनुष्यभवौ प्रत्यक्षपरोक्षशंसौ माम् रक्षताम् । उभयपक्षस्थौ मार्गौ च माम् अन्नेन सेवेताम् । बहु अपि धनम् उदारो मह्यं प्रयच्छतु अतिशयेन सुष्ठु हविः प्रयच्छते । वयम् अन्नेन मदन्तः दरिद्राणाम् इषं कुर्वीमहि द्यावापृथिव्योः प्रसादेन देवाः ! ॥ ९ ॥

ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।
पातामवद्याद् दुरितादभीके पिता माता च रक्षतामवोभिः ॥ १० ॥

ऋतम् । दिवे । तत् । अवोचम् । पृथिव्यै । अभिऽश्रावाय । प्रथमम् । सुऽमेधाः ।
पाताम् । अवद्यात् । दुःऽइतात् । अभीके । पिता । माता । च । रक्षताम् । अवःऽभिः ॥१०॥

**वेङ्कट०** द्यावापृथिव्योः अभिश्रवणार्थम् तत् इदम् सुमेधाः स्तोत्रम् अवोचम् पूर्वमेव । ते माम् पाताम् अवद्यात् दुरितात् च[1] । सङ्ग्रामे पिता द्यौः माता च[1] पृथिवी रक्षताम् मां रक्षणैः ॥ १० ॥

इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥

इदम् । द्यावापृथिवी इति । सत्यम् । अस्तु । पितः । मातः । यत् । इह । उपऽब्रुवे । वाम् ।
भूतम् । देवानाम् । अवमे इति । अवःऽभिः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

**वेङ्कट०** हे द्यावापृथिवी ! इदम् सत्यम् अस्तु, पितः ! मातः ! च यत् इह वाम् अहं याचे । भवतं च देवानाम् आसन्ने[2] रक्षणैः ॥ ११ ॥

[3]इति द्वितीयाष्टके पञ्चमाध्याये तृतीयो वर्गः[3] ॥

## [ १८६ ]

[3]अगस्त्यो मैत्रावरुणिर्ऋषिः । विश्वे देवाः देवता । त्रिष्टुप् छन्दः[3] ॥

आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु ।
अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥ १ ॥

आ । नः । इळाभिः । विदथे । सुऽशस्ति । विश्वानरः । सविता । देवः । एतु ।
अपि । यथा । युवानः । मत्सथ । नः । विश्वम् । जगत् । अभिऽपित्वे । मनीषा ॥ १ ॥

**वेङ्कट०** [4]आ गच्छतु[4] अस्मान् अन्नैः[5] यज्ञे शोभनशंसनं यथा विश्वे यस्य प्रेष्या नरा विश्वान् वा यः प्रत्यृतः, सविता देवः । अपि च यथा प्रेरयिता वैश्वानरः हे युवानः ! अस्मान् यूयं च मादयथ विश्वम् जगत् अभिप्राप्तौ प्रज्ञया तथाऽऽगच्छत[6] ॥ १ ॥

---

१. नास्ति वि[1] लपं. २. °सन्नै लपं. ३-३. नास्ति मूको. ४-४. आगच्छ त्वम् अ[1] ल.
५. न्नैः च वि[1] लपं. ६. तदा गच्छत वि[2] अ[2]; °था गच्छतं वि[1] लपं; °था गच्छथ ल.

आ नो विश्व आस्क्रा गमन्तु देवा मित्रो अर्यमा वरुणः सजोषाः ।
भुवन् यथा नो विश्वे वृधासः करन्त्सुषाहा विथुरं न शवः ॥ २ ॥

आ । नः । विश्वे । आस्क्राः । गमन्तु । देवाः । मित्रः । अर्यमा । वरुणः । सऽजोषाः ।
भुवन् । यथा । नः । विश्वे । वृधासः । करन् । सुऽसहा । विथुरम् । न । शवः ॥ २ ॥

**वेङ्कट०** आ गच्छन्तु अस्मान् विश्वे देवाः शत्रूणामास्कन्दितारः मित्रादयः सङ्गताः । त इमे यथा अस्माकम् अभवन् विश्वे वर्धयितारः तथाऽस्माकं [1]शत्रूणां बलम् असहायम्[1] इव पराभूतं[2] कुर्वन्तु ॥ २ ॥

प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः ।
असद् यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः ॥ ३ ॥

प्रेष्ठम् । वः । अतिथिम् । गृणीषे । अग्निम् । शस्तिऽभिः । तुर्वणिः । सऽजोषाः ।
असत् । यथा । नः । वरुणः । सुऽकीर्तिः । इषः । च । पर्षत् । अरिऽगूर्तः । सूरिः ॥ ३ ॥

**वेङ्कट०** [3]प्रियतमं त्वाम् अतिथिम् स्तौमि अग्निम् स्तुतिभिः तूर्णसम्भजनः[3] पुत्रपौत्रयुक्तः । भवति यथा अस्माकम् वरुणः शोभनकीर्तनः तथा च [4]कुरु, तं च स्तुहि[4] । अन्नानि च अस्मान् अतिनयति अरीणामाह्वाता वरुणः प्राज्ञः ॥ ३ ॥

उप व एषे नमसा जिगीषोषासानक्ता सुदुघेव धेनुः ।
समाने अहन् विमिमानो अर्कं विषुरूपे पयसि सस्मिन्नूधन् ॥ ४ ॥

उप । वः । आ । ईषे । नमसा । जिगीषा । उषसानक्ता । सुदुघाऽइव । धेनुः ।
समाने । अहन् । विऽमिमानः । अर्कम् । विषुऽरूपे । पयसि । सस्मिन् । ऊधन् ॥ ४ ॥

**वेङ्कट०** हे देवाः! युष्मान् शत्रुविजिगीषया अहम् अन्नेन उप आ गच्छामि[5], अहोरात्रे शोभनदोहना[6] धेनुः इव भवतः, एकस्मिन् अहनि विविधरूपम्[7] अन्नम् उत्पादयन् नानारूपे उदके समाने ऊधनि मेघे देवस्तोत्रेणोत्पादयन् ॥ ४ ॥

उत नोऽहिर्बुध्न्यो मयस्कः शिशुं न पिप्युषीव वेति सिन्धुः ।
येन नपातमपां जुनाम मनोजुवो वृषणो यं वहन्ति ॥ ५ ॥

---

१-१. नास्ति अ[1]; त्रुटितम् वि[2]. २. पराभूताः मूको. ३-३. °तम……°भजनः अ[1] वि[2].
४-४. कुरु स्तुहि? ल. ५. उपग° वि[1] ल लपं. ६. °दोहा वि[1] अ[1]. ७. °विधं रू° वि[1] लपं.

उत । नः । अहिः । बुध्न्यः । मयः । करिति कः । शिशुम् । न । पिप्युषीऽइव । वेति । सिन्धुः । येन । नपातम् । अपाम् । जुनाम । मनःऽजुवः । वृषणः । यम् । वहन्ति ॥ ५ ॥

**वेङ्कट०** अपि[1] च अस्माकम् अन्तरिक्षभवः मेघः सुखं करोतु । शिशुम् इव आप्याययन्ती माता सरस्वती अस्मानागच्छति । यस्माद् वयम् अपाम् नपातम् देवम् अभिगच्छामः, मनोवेगाः अश्वाः यम् वहन्ति ॥ ५ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये चतुर्थो वर्गः[2] ॥

**उत न ईं त्वष्टा गन्त्वच्छा स्मत् सूरिभिरभिपित्वे सजोषाः ।**
**आ वृत्रहेन्द्रश्चर्षणिप्रास्तुविष्टमो नरां न इह गम्याः ॥ ६ ॥**

उत । नः । ईम् । त्वष्टा । आ । गन्तु । अच्छ । स्मत् । सूरिऽभिः । अभिऽपित्वे । सऽजोषाः । आ । वृत्रऽहा । इन्द्रः । चर्षणिऽप्राः । तुविःऽतमः । नराम् । नः । इह । गम्याः ॥ ६ ॥

**वेङ्कट०** अपि च अस्मान् त्वष्टा अभ्यागच्छतु शोभनम् देवैः प्रातः[3] सहितः । वृत्रहा इन्द्रः च पूरयिता[4] मनुष्याणां वृद्धतमः नराम्[5] अस्माकम् इह आगच्छतु ॥ ६ ॥

**उत न ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहन्ति ।**
**तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसन्त ॥ ७ ॥**

उत । नः । ईम् । मतयः । अश्वऽयोगाः । शिशुम् । न । गावः । तरुणम् । रिहन्ति । तम् । ईम् । गिरः । जनयः । न । पत्नीः । सुरभिःऽतमम । नराम् । नसन्त ॥ ७ ॥

**वेङ्कट०** अपि च अस्माकं स्तुतयः[6] व्याप्तयोजनाः वत्सम् इव गावः तरुणम् इन्द्रं लिहन्ति आश्रयन्ते । तम् एनं[7] जनयित्र्यः पत्न्यः इव पतीन्[8] नेतृणां स्तुतयः जिघ्रन्ति अत्यन्तसुगन्धिम्[9] ॥ ७ ॥

**उत न ईं मरुतो वृद्धसेनाः स्मद् रोदसी समनसः सदन्तु ।**
**पृषदश्वासोऽवनयो न रथा रिशादसो मित्रयुजो न देवाः ॥ ८ ॥**

उत । नः । ईम् । मरुतः । वृद्धऽसेनाः । स्मत् । रोदसी इति । सऽमनसः । सदन्तु । पृषत्ऽअश्वासः । अवनयः । न । रथाः । रिशादसः । मित्रऽयुजः । न । देवाः ॥ ८ ॥

---

१. अथ वि[1] लपं. २-२. नास्ति मूको. ३. वृतः वि[1]; प्राप्तः अ[1]. ४. °ता मित्राणां अ[1]. ५. नराणाम् अ[1]; °(णा)म् वि[2]. ६. नास्ति अ[1]. ७. °नं स्तुतयः मूको. ८. पतिं वि[1] अ[1]. ९. अन्त-सुगन्धम् मूको.

**वेङ्कट०** अपि च अस्माकम् मरुतः प्रवृद्धसेनाः शोभनं द्यावापृथिवी समनसः सन्तः अधितिष्ठन्तु। पृषद्वर्णाश्वाः[1] गन्तारः इव रथाः हिंसितॄणामसितारः मित्रयुक्ताः इवेतरेतरं सङ्गमनात् मरुतः देवाः ॥ ८ ॥

**प्र नु यदेषां महिना चिकित्रे प्र युञ्जते प्रयुजस्ते सुवृक्ति ।**
**अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायन्त सेनाः ॥ ९ ॥**

प्र । नु । यत् । एषाम् । महिना । चिकित्रे । प्र । युञ्जते । प्रऽयुजः । ते । सुऽवृक्ति ।
अध । यत् । एषाम् । सुऽदिने । न । शरुः । विश्वम् । आ । इरिणम् । प्रुषायन्त । सेनाः ॥ ९ ॥

**वेङ्कट०** प्र ज्ञायते यदा मरुतां महिमा क्षिप्रम्, अथ प्र युञ्जते स्तुतीः[2] शोभनप्रवृत्तीः[3]। [4]अथ यदा एषाम्[4] सुदिने इव मेघः सर्वं पार्थिवम् इरिणम् वर्षणेन आदहन्ति सेनाः, तदा च प्रयुञ्जत इति ॥ ९ ॥

**प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि सन्ति ।**
**अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥ १० ॥**

प्रो इति । अश्विनौ । अवसे । कृणुध्वम् । प्र । पूषणम् । स्वऽतवसः । हि । सन्ति ।
अद्वेषः । विष्णुः । वातः । ऋभुक्षाः । अच्छ । सुम्नाय । ववृतीय । देवान् ॥ १० ॥

**वेङ्कट०** हे मनुष्याः! यूयम् अश्विनौ युष्माकं रक्षणाय प्र कृणुध्वम्। प्र कृणुध्वं[5] च पूषणम्। स्वबलाः मरुतः च सन्ति, तानपि प्रकृणुध्वम्[6]। अशत्रुः विष्णुः वातः महानिन्द्रश्च। तानिमान् सर्वान् देवान् सुखार्थम् आवर्तयामः ॥ १० ॥

**इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।**
**नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥**

इयम् । सा । वः । अस्मे इति । दीधितिः । यजत्राः । अपिऽप्राणी । च । सदनी । च । भूयाः ।
नि । या । देवेषु । यतते । वसुऽयुः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

**वेङ्कट०** [7]हे यष्टव्या देवाः![7] युष्माकम् अस्मासु इदं स्तुतिलक्षणं कर्म। सा इयम् अपिपूरणी[8] अस्माकं भूयात् सादनी च। या इयम् देवेषु आभिमुख्येन गच्छति वसूयुः ॥ ११ ॥

[9]इति द्वितीयाष्टके पञ्चमाध्याये पञ्चमो वर्गः[9] ॥

---

१. °द्वर्णा अश्वाः वि[1] लपं. २. स्तुतिं वि[1] लपं. ३. °वृत्तिः वि[2] अ[1]. ४-४. यथाथदेनां वि[1] लपं; यथाथयथेनां वि[2] अ[1]; यथातदेनां ल. ५. नास्ति मूको. ६. च कृणुध्वम् लपं. ७-७. °व्यदे° वि[1] ळपं. ८. अपि कर्मपूरणी वि[2] अ[1]. ९-९. नास्ति मूको.

[ १८७ ]

[1]अगस्त्यो मैत्रावरुणिर्ऋषिः । अन्नं देवता । तृतीयापञ्चमीषष्ठीसप्तम्येकादशीनामनुष्टुप्, एकादश्याः बृहती वा, द्वितीयाचतुर्थ्यष्टमीनवमीदशमीनां गायत्री[1] ।

**पि॒तुं नु स्तो॑षं म॒हो ध॒र्माणं॒ तवि॑षीम् । यस्य॑ त्रि॒तो व्योज॑सा वृ॒त्रं विप॑र्वम॒र्दय॑त् ॥१॥**

पि॒तुम् । नु । स्तो॒षम् । म॒हः । ध॒र्माण॑म् । तवि॑षीम् ।
यस्य॑ । त्रि॒तः । वि । ओज॑सा । वृ॒त्रम् । त्रिऽप॑र्वम् । अ॒र्दय॑त् ॥ १ ॥

**वेङ्कट०** अन्नस्तुतिः अन्नं स्तौमि महतः धारयितारः बलस्य यस्य बलेन त्रितः त्रिस्थानः इन्द्रः वृत्रम् विपर्वाणं[2] व्यावर्तयत् ॥ १ ॥

**स्वादो॑ पितो॒ मधो॑ पितो व॒यं त्वा॑ ववृमहे । अ॒स्माक॑मवि॒ता भ॑व ॥ २ ॥**

स्वादो॒ इति॑ । पि॒तो॒ इति॑ । मधो॒ इति॑ । पि॒तो॒ इति॑ । व॒यम् । त्वा॒ । व॒वृ॒म॒हे॒ । अ॒स्माक॑म् । अ॒वि॒ता । भ॒व॒ ॥२॥

**वेङ्कट०** निगदसिद्धा[3] ॥ २ ॥

**उप॑ नः पित॒वा च॑र शि॒वः शि॒वाभि॑रू॒तिभि॑ः ।**
**म॒यो॒भुर॑द्वि॒षे॒ण्यः सखा॑ सु॒शेवो॒ अद्व॑याः ॥ ३ ॥**

उप॑ । न॒ः । पि॒तो॒ इति॑ । आ । च॒र॒ । शि॒वः । शि॒वाभि॑ः । ऊ॒तिऽभि॑ः ।
म॒यः॒ऽभुः । अ॒द्वि॒षे॒ण्यः । सखा॑ । सु॒ऽशेव॑ः । अद्व॑याः ॥ ३ ॥

**वेङ्कट०** हे पितो! अस्मान् उपागच्छ शिवकरः कल्याणैः रक्षणैः सुखस्य भावयिता द्वेष्यजनवर्जितः सखा सुसुखः अमायावी ॥ ३ ॥

**तव॒ त्ये पि॑तो॒ रसा॒ रजां॒स्यनु॒ विष्ठि॑ताः । दि॒वि वाता॑इव श्रि॒ताः ॥ ४ ॥**

तव॑ । त्ये । पि॒तो॒ इति॑ । रसा॑ः । रजां॑सि । अनु॑ । विऽस्थि॑ताः । दि॒वि । वाता॑ःऽइव । श्रि॒ताः ॥४॥

**वेङ्कट०** तव ते अन्न! रसाः[4] लोकान् अनु तिष्ठन्ति । यथा अन्तरिक्षे वाताः तिष्ठन्ति व्याप्ताः ॥ ४ ॥

**तव॒ त्ये पि॑तो॒ दद॑त॒स्तव॑ स्वादि॑ष्ठ॒ ते पि॑तो ।**
**प्र स्वा॒द्मानो॒ रसा॑नां तुवि॒ग्रीवा॑इवेरते ॥ ५ ॥**

तव॑ । त्ये । पि॒तो॒ इति॑ । दद॑तः । तव॑ । स्वादि॑ष्ठ॒ । ते । पि॒तो॒ इति॑ ।
प्र । स्वा॒द्मान॑ः । रसा॑नाम् । तु॒वि॒ग्रीवा॑ःऽइव । ई॒र॒ते॒ ॥ ५ ॥

---

१-१. नास्ति मूको. २. विपर्याणम् वि[2] अ[1]. ३. नास्ति वि[1] ल लपं. ४. रसान् मूको.

**वेङ्कट०** हे स्वादुतम! अमी त्वाम् ददतः भवन्ति। पूरणभूयिष्ठो द्वितीयः पादः। तथा रसानाम् स्वदितारः अनेककण्ठाः इव बह्वीर्वाचः प्रेरयन्त्येककण्ठा अपि[1] ॥ ५ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये षष्ठो वर्गः[2] ॥

त्वे पि॑तो म॒हानां॑ दे॒वानां॒ मनो॑ हि॒तम्। अका॑रि॒ चारु॑ के॒तुना॒ तवाहि॒मव॒सा॑वधीत् ॥६॥

त्वे इति॑। पि॒तो इति॑। म॒हाना॑म्। दे॒वाना॑म्। मनः॑। हि॒तम्।
अका॑रि। चारु॑। के॒तुना॑। तव॑। अहि॑म्। अव॑सा। अ॒व॒धी॒त् ॥ ६ ॥

**वेङ्कट०** हे पितो! त्वयि महतामपि देवानाम् मनः निहितम्। अकारि चारु प्रज्ञानेन। तव रक्षणेन इन्द्रश्च अहिम् अवधीत् ॥ ६ ॥

यद॒दो पि॑तो॒ अज॑गन् वि॒वस्व॒ पर्व॑तानाम्।
अत्रा॑ चिन्नो मधो पि॒तोऽरं॑ भ॒क्षाय॑ गम्याः ॥ ७ ॥

यत्। अ॒दः। पि॒तो इति॑। अज॑गन्। वि॒वस्व॑। पर्व॑तानाम्।
अत्र॑। चि॒त्। नः॒। म॒धो इति॑। पि॒तो इति॑। अर॑म्। भ॒क्षाय॑। ग॒म्याः॒ ॥ ७ ॥

**वेङ्कट०** हे पीयमानसोमान्न! यद्यपि इदं त्वमितो गच्छसि। यद्यपि च पर्वतानाम् विवासनमाच्छादनं करोषि। तथापि अत्र च अस्माकं मादयितः! भक्षणाय अलं यथा तथा गम्याः। सशेषं गन्तव्यमित्यर्थः ॥ ७ ॥

यद॒पामोष॑धीनां परि॒ंशमा॑रि॒शाम॑हे। वाता॑पे॒ पीव॒ इद्भ॑व ॥ ८ ॥

यत्। अ॒पाम्। ओष॑धीनाम्। प॒रि॒ंशम्। आ॒ऽरि॒शाम॑हे। वाता॑पे। पीव॑ः। इत्। भ॒व ॥ ८ ॥

**वेङ्कट०** अन्नयः ओषधीभ्यश्च यः सारः परिशेते, तं त्वां[3] यदा वयमास्वादयामः, तदा हे अन्न! त्वमस्माकम् आप्यायकम् एव भव। असुरस्य वा भक्षितस्यान्नत्वकरणमिल्वलभ्रातुः ॥ ८ ॥

यत् ते॑ सोम॒ गवा॑शिरो॒ यवा॑शिरो॒ भजा॑महे। वाता॑पे॒ पीव॒ इद्भ॑व ॥ ९ ॥

यत्। ते॒। सो॒म॒। गोऽआ॑शिरः। यव॑ऽआशिरः। भजा॑महे। वाता॑पे। पीव॑ः। इत्। भ॒व ॥९॥

**वेङ्कट०** हे सोम! यस्मात् तव पयोमिश्रितं यवमिश्रितं[4] वा तत् भजामहे ॥ ९ ॥

क॒र॒म्भ ओ॑षधे भव॒ पीवो॑ वृ॒क्क उ॑दार॒थिः। वाता॑पे॒ पीव॒ इद्भ॑व ॥ १० ॥

---

१. °पि च मूको. २-२. नास्ति मूको. ३. त्वा वि॰ लपं. ४. नास्ति मूको.

क॒र॒म्भः । ओष॑धे । भव॑ । पीवः॑ । वृ॒क्कः । उ॒दा॒र॒थिः । वाता॑पे । पीवः॑ । इत् । भव॑ ॥ १० ॥

**वेङ्कट०** **मन्थसंयुतम्**[1] करम्भः **इत्याचक्षते । सः त्वम्** ओषधे! भव **अस्माकम्**[2] । **एवम्** [3]**अस्थ्यन्तर्गता मज्जा**[3] पीवः । **पिण्डाकारः** वृक्कः[4] । उदारथिः **अवगन्तव्यः** ॥ १० ॥

तं त्वा॑ व॒यं पि॑तो॒ वचो॑भि॒र्गावो॒ न ह॒व्या सु॑षूदिम ।
दे॒वेभ्य॑स्त्वा सध॒माद॑म॒स्मभ्यं॑ त्वा सध॒माद॑म् ॥ ११ ॥

तम् । त्वा॒ । व॒यम् । पि॒तो॒ इति॑ । वचः॑ऽभिः । गावः॑ । न । ह॒व्या । सु॒सू॒दि॒म ।
दे॒वेभ्यः॑ । त्वा॒ । स॒ध॒ऽमाद॑म् । अ॒स्मभ्य॑म् । त्वा॒ । स॒ध॒ऽमाद॑म् ॥ ११ ॥

**वेङ्कट०** तम् त्वा वयम् **अन्न! स्वादुतमैः** वचोभिः **स्तुवन्तः** गावः इव **हव्यानि स्वादुतमानि स्तोत्राणि प्रेरितवन्तः देवानां प्रीत्यर्थं तैः सह माद्यन्तम्** अस्मभ्यम् **च** सधमादम् ॥ ११ ॥

[5]इति द्वितीयाष्टके पञ्चमाध्याये सप्तमो वर्गः[5] ॥

## [ १८८ ]

[5]अगस्त्यो मैत्रावरुणिर्ऋषिः । एकादशानामृचां क्रमेण १ इध्मः समिद्धो वाऽग्निः, २ तनूनपात्, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः देवता । गायत्री छन्दः[5] ।

समि॑द्धो अ॒द्य रा॑जसि दे॒वो दे॒वैः स॑हस्रजित् । दू॒तो ह॒व्या क॒विर्व॑ह ॥ १ ॥

सम्ऽइ॑द्धः । अ॒द्य । रा॒ज॒सि॒ । दे॒वः । दे॒वैः । स॒ह॒स्र॒ऽजि॒त् । दू॒तः । ह॒व्या । क॒विः । व॒ह ॥ १ ॥

**वेङ्कट०** **स्पष्टः**[6] ॥ १ ॥

तनू॑नपादृ॒तं य॒ते मध्वा॑ य॒ज्ञः सम॑ज्यते । दध॑त् सह॒स्रिणी॒रिषः॑ ॥ २ ॥

तनू॑ऽनपात् । ऋ॒तम् । य॒ते । मध्वा॑ । य॒ज्ञः । सम् । अ॒ज्य॒ते॒ । दध॑त् । स॒ह॒स्रिणीः॑ । इषः॑ ॥२॥

**वेङ्कट०** हे तनूनपात्! **यज्ञं गच्छते तुभ्यम्**[7] **आज्येन** हविः सम् अज्यते । **प्रयच्छन् सहस्रसङ्ख्याकानि**[8] **अन्नानि च त्वम्** ॥ २ ॥

आ॒जुह्वा॑नो न॒ ईड्यो॑ दे॒वाँ आ व॑क्षि य॒ज्ञिया॑न् । अग्ने॑ सहस्र॒सा अ॑सि ॥ ३ ॥

---

१. मन्थं सं° ल लपं. २. अस्मासु वि[1]. ३-३. °र्गतम° वि[1] ल लपं. ४. मृगवृक अ[1]. ५-५. नास्ति मूको. ६. स्पष्टम् वि[1] ल; नास्ति अ[1]. ७. त्वया मूको. ८. सहस्रसहस्रं° वि[2]; सहस्रं सहस्रं° अ[1].

आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि । यज्ञियान् । अग्ने । सहस्रऽसाः । असि ॥३॥

**वेङ्कट०** आहूयमानः अस्माकं स्तोतव्यः देवान् आ वह यज्ञार्हान् । अग्ने त्वं[१] ! सहस्राणां दाता भवसि ॥ ३ ॥

प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथ ॥ ४ ॥

प्राचीनम् । बर्हिः । ओजसा । सहस्रऽवीरम् । अस्तृणन् । यत्र । आदित्याः । विऽराजथ ॥ ४ ॥

**वेङ्कट०** प्रागग्रम् बर्हिः । बलेनानेन तदेव वीरयुक्तम् अस्तृणन् । यस्मिन् हे देवाः ! यूयम् विराजथ ॥ ४ ॥

विराट् सम्राड् विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यक्षरन् ॥५॥

विऽराट् । सम्ऽराट् । विऽभ्वीः । प्रऽभ्वीः । बह्वीः । च । भूयसीः । च । याः । दुरः । घृतानि । अक्षरन् ॥

**वेङ्कट०** नानाजातीयमनुष्यपरिवृतानि[२] द्वाराणि भवन्ति । तत्र क्वचित् विराट् उच्यते, क्वचित्[३] सम्राट् उच्यते राजद्वारम् । एवम् बह्वीः भूयसीः इति मनुष्यपरिवृता उच्यन्ते । एवंविधाः [४]द्वारः† बह्वीरित्यादिष्वपि द्रष्टव्यम् । अस्माकम्[४] उदकानि[५] क्षरन्तु ॥ ५ ॥

[६]इति द्वितीयाष्टके पञ्चमाध्यायेऽष्टमो वर्गः[६] ॥

सुरुक्मे हि सुपेशसाधि श्रिया विराजतः । उषासावेह सीदताम् ॥ ६ ॥

सुरुक्मे इति सुऽरुक्मे । हि । सुऽपेशसा । अधि । श्रिया । विऽराजतः ।
उषसौ । आ । इह । सीदताम् ॥ ६ ॥

**वेङ्कट०** शोभनरुक्माभरणे[७] हि मांसले उषासानक्ते । शोभया अधि विराजतः[८] । ते[९] इह आ सीदताम् ॥६॥

प्रथमा हि सुवाचसा होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ॥ ७ ॥

प्रथमा । हि । सुऽवाचसा । होतारा । दैव्या । कवी इति । यज्ञम् । नः । यक्षताम् । इमम् ॥७॥

**वेङ्कट०** पूर्वौ हि सुवचसौ दैव्यौ होतारौ कवी भवतः । तथा सति इमम् नः यज्ञम् यक्षताम् ॥ ७ ॥

भारतीळे सरस्वति या वः सर्वा उपब्रुवे । ता नश्चोदयत श्रिये ॥ ८ ॥

भारति । इळे । सरस्वति । याः । वः । सर्वाः । उपऽब्रुवे । ताः । नः । चोदयत । श्रिये ॥ ८ ॥

---

१. येन वि[१]. २. °जातिवयमनुष्य° वि[१] लपं. ३. नास्ति मूको. ४-४. नास्ति अ[१]; त्रुटितम् वि[२]. † नास्ति वि[१] लपं. ५. नास्ति वि[१] लपं. ६-६ नास्ति मूको. ७. °रुग्मा° वि[१] अ[१] लपं. ८. ततश्च वि[२] अ[१]. ९ ते उषासानक्ते वि[१] अ[१].

वेङ्कट० निगदसिद्धा ॥ ८ ॥

त्वष्टा रूपाणि हि प्रभुः पशून् विश्वान्त्समानजे । तेषां नः स्फातिमा यज ॥ ९ ॥

त्वष्टा । रूपाणि । हि । प्रऽभुः । पशून् । विश्वान् । सम्ऽआनजे । तेषाम् । नः । स्फातिम् । आ । यज ॥

वेङ्कट० त्वष्टा रूपाणि हि प्रभुः द्विपदश्चतुष्पदश्च पशून् प्रति संयोजयति । त्वष्टः! तेषाम् पशूनां वृद्धिम् अस्मभ्यं देहि ॥ ९ ॥

उप त्मन्या वनस्पते पाथो देवेभ्यः सृज । अग्निर्हव्यानि सिष्वदत् ॥ १० ॥

उप । त्मन्या । वनस्पते । पाथः । देवेभ्यः । सृज । अग्निः । हव्यानि । सिस्वदत् ॥ १० ॥

वेङ्कट० उप सृज वनस्पते! त्वमात्मनैव अन्नम् देवेभ्यः । अग्निः हव्यानि स्वादूनि कृतवान् ॥ १० ॥

पुरोगा अग्निर्देवानां गायत्रेण समज्यते । स्वाहाकृतीषु रोचते ॥ ११ ॥

पुरःऽगाः । अग्निः । देवानाम् । गायत्रेण । सम् । अज्यते । स्वाहाऽकृतीषु । रोचते ॥ ११ ॥

वेङ्कट० पुरो गन्ता अग्निः देवानाम् गायत्रसाम्ना आच्छाद्यते, स्वाहाकृतीषु रोचते ॥ ११ ॥

[1]इति द्वितीयाष्टके पञ्चमाध्याये नवमो वर्गः[1] ॥

## [ १८९ ]

[2]अगस्त्यो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[2] ॥

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥

अग्ने । नय । सुऽपथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् ।
युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमःऽउक्तिम् । विधेम ॥ १ ॥

वेङ्कट० [2]अग्ने! नय[2] शोभनेन मार्गेण धनाय अस्मान् विश्वानि देव! प्रज्ञानानि जानन् । [3]पृथक् कुरु[3] अस्मत्तः [4]कुटिलत्वमाचरत् एनः[4] । भूयिष्ठम् नमोवचनं तव कुर्मः ॥ १ ॥

अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ २ ॥

---

१-१. नास्ति मूको. २-२. नास्ति लपं. ३-३. पृथक् लपं; पृथुकुर्वन् वि[1]. ४-४. °माचरत् एनः वि[1] ल लपं; °माचतेनः वि[2] अ[1].

अग्ने । त्वम् । पा॒र॒य॒ । नव्यः॑ । अ॒स्मान् । स्व॒स्तिऽभिः॑ । अति॑ । दुः॒ऽगानि॑ । विश्वा॑ ।
पूः । च॒ । पृ॒थ्वी । ब॒हु॒ला । नः॒ । उ॒र्वी । भव॑ । तो॒काय॑ । तन॑याय । शम् । योः ॥ २ ॥

वेङ्कट० [1]अग्ने ! त्वम्[1] पारय स्तुत्यः[2] अस्मान् । कल्याणैः दुर्गाणि अति पारय सर्वाणि । त्वमेवास्माकं[3] विस्तीर्णं पुरं भव, विस्तीर्णा च पृथिवी । भव च पुत्राय च तत्पुत्राय च शम् च योः च ॥ २ ॥

अग्ने॒ त्वम॒स्मद् यु॑यो॒ध्यमी॑वा॒ अन॑ग्नित्रा अ॒भ्यम॑न्त कृ॒ष्टीः ।
पुन॑र॒स्मभ्यं॑ सुवि॒ताय॑ देव॒ क्षां विश्वे॑भिर॒मृते॑भिर्यजत्र ॥ ३ ॥

अग्ने॑ । त्वम् । अ॒स्मत् । यु॒यो॒धि॒ । अमी॑वाः । अन॑ग्निऽत्राः । अ॒भि । अम॑न्त । कृ॒ष्टीः ।
पुन॑रिति॑ । अ॒स्मभ्य॑म् । सु॒वि॒ताय॑ । दे॒व॒ । क्षाम् । विश्वे॑भिः । अ॒मृते॑भिः । य॒ज॒त्र॒ ॥ ३ ॥

वेङ्कट० अग्ने ! त्वम् अस्मत्तः रोगान् पृथक् कुरु, रक्षसो वा । येऽग्निना मनुष्या न रक्ष्यन्ते ते रोगैः अभिभूता भवन्ति । पुनः अपि मुमूर्षुभ्यः अस्मभ्यम् अभ्युदयाय देव ! सर्वैः देवैः सह इमां पृथिवीं कुरु यष्टव्य ! ॥ ३ ॥

पा॒हि नो॑ अग्ने पा॒युभि॒रज॑स्रैरु॒त प्रि॒ये सद॑न॒ आ शु॑शु॒क्वान् ।
मा ते॑ भ॒यं ज॑रि॒तारं॑ यविष्ठ नू॒नं वि॑द॒न्माप॒रं स॑हस्वः ॥ ४ ॥

पा॒हि । नः॒ । अ॒ग्ने॒ । पा॒युऽभिः॑ । अज॑स्रैः । उ॒त । प्रि॒ये । सद॑ने । आ । शु॒शु॒क्वान् ।
मा । ते॒ । भ॒यम् । ज॒रि॒तार॑म् । य॒वि॒ष्ठ॒ । नू॒नम् । वि॒द॒त् । मा । अ॒प॒रम् । स॒ह॒स्वः॒ ॥ ४ ॥

वेङ्कट० रक्ष अस्मान् अग्ने ! तेजोभिः अजस्रैः । अपि च प्रियायाम् उत्तरवेद्यां दीप्तः । तव स्तोतारं युवतम ! मा भयम् गच्छतु अद्य च श्वश्च बलवन् ! ॥ ४ ॥

मा नो॑ अ॒ग्नेऽव॑ सृजो अ॒घाया॑वि॒ष्यवे॑ रि॒पवे॑ दु॒च्छुना॑यै ।
मा द॒त्वते॒ दश॑ते॒ माद॑ते नो॒ मा रीष॑ते सहसाव॒न् परा॑ दाः ॥ ५ ॥

मा । नः॒ । अ॒ग्ने॒ । अव॑ । सृ॒जः॒ । अ॒घाय॑ । अ॒वि॒ष्यवे॑ । रि॒पवे॑ । दु॒च्छुना॑यै ।
मा । द॒त्वते॑ । दश॑ते । मा । अ॒दते॑ । नः॒ । मा । रिष॑ते । स॒ह॒सा॒ऽव॒न् । परा॑ । दाः॒ ॥ ५ ॥

वेङ्कट० मा अस्मान् अग्ने ! प्रयच्छ आहन्त्रे, योऽध्वन्यागतानपि न मुञ्चति सोऽविष्युः, विलेपनाद् रिपुः, दुर्बुद्धिर्दुच्छुना, तस्मै । दन्तयुक्ताय दंशनं कुर्वते मा परा दाः, मा च भक्षणं कुर्वते हिंसित्रे च बलवन् ! ॥ ५ ॥

[4]इति द्वितीयाष्टके पञ्चमाध्याये दशमो वर्गः[4] ॥

---

१-१. नास्ति लपं. २. स्तुतयः वि[1] ल. ३. त्वमस्माकम् अ[1]. ४-४. नास्ति मूको.

वि घ त्वावाँ ऋतजात यंसद् गृणानो अग्ने तन्वे३ वरूथम् ।
विश्वाद् रिरिक्षोरुत वा निनित्सोरभिह्रुतामसि हि देव विष्पट् ॥ ६ ॥

वि । घ । त्वाऽवान् । ऋतऽजात । यंसत् । गृणानः । अग्ने । तन्वे । वरूथम् ।
विश्वात् । रिरिक्षोः । उत । वा । निनित्सोः । अभिऽह्रुताम् । असि । हि । देव । विष्पट् ॥ ६ ॥

वेङ्कट०[1] ॥ ६ ॥

त्वं ताँ अग्न उभयान् वि विद्वान् वेषि प्रपित्वे मनुषो यजत्र ।
अभिपित्वे मनवे शास्यो भूर्ममृजेन्य उशिग्भिर्नाक्रः ॥ ७ ॥

त्वम् । तान् । अग्ने । उभयान् । वि । विद्वान् । वेषि । प्रऽपित्वे । मनुषः । यजत्र ।
अभिऽपित्वे । मनवे । शास्यः । भूः । मर्मृजेन्यः । उशिक्ऽभिः । न । अक्रः ॥ ७ ॥

वेङ्कट० मायाविनः[2] अमायाविनः च जानन् विविच्य अभिगच्छसि प्राप्तौ यष्टव्य! यजमानस्य । तथा त्वम् अभिप्राप्तौ यजमानाय हविर्वहनायानुशासनीयः भवसि, परिचरणीयः ऋत्विग्भिः, असुरैश्च न आक्रान्तः ॥ ७ ॥

अवोचाम निवचनान्यस्मिन् मानस्य सूनुः सहसाने अग्नौ ।
वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥

अवोचाम । निऽवचनानि । अस्मिन् । मानस्य । सूनुः । सहसाने । अग्नौ ।
वयम् । सहस्रम् । ऋषिऽभिः । सनेम । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

वेङ्कट० अग्नेराभिमुख्यानि वक्तव्यानि स्तोत्रवचनानि वयम् अवोचाम अग्नौ । कुम्भसूनुः शत्रुषु सहरुकुर्वेति अग्नौ स्तोत्रमुवाच । वयम् दृश्यमानैर्मन्त्रैः धनसहस्रं लभेमहि, अग्नेर्वा तेजोभिः ॥ ८ ॥

[3]इति द्वितीयाष्टके पञ्चमाध्याये एकादशो वर्गः[3] ॥

[ १९० ]

[3]अगस्त्यो मैत्रावरुणिर्ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः[3] ॥

अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः ॥ १ ॥

अनर्वाणम् । वृषभम् । मन्द्रऽजिह्वम् । बृहस्पतिम् । वर्धय । नव्यम् । अर्कैः ।
गाथान्यः । सुऽरुचः । यस्य । देवाः । आऽशृण्वन्ति । नवमानस्य । मर्ताः ॥ १ ॥

---

१. भाष्याभावः. २. नास्ति वि' लपं. ३-३. नास्ति मूको.

वेङ्कट० अप्रस्तृतम् वृषभम् मोदनजिह्वम् बृहस्पतिम् वर्धय स्तुत्यं मन्त्रैः। सुरुचः यस्य बृहस्पतेः गाथानां प्रेरयितुः कारोः देवाः मनुष्याश्च आशृण्वन्ति स्तूयमानस्य। अन्येषु तु[1] देवेषु स्तूयमानेषु न देवाः शृण्वन्ति ॥ १ ॥

तमृत्विया उप वाचः सचन्ते सर्गो न यो देवयतामसर्जि ।
बृहस्पतिः स ह्यञ्जो वरांसि विभ्वाऽभवत् समृते मातरिश्वा ॥ २ ॥

तम् । ऋत्वियाः । उप । वाचः । सचन्ते । सर्गः । न । यः । देवऽयताम् । असर्जि ।
बृहस्पतिः । सः । हि । अञ्जः । वरांसि । विऽभ्वा । अभवत् । सम् । ऋते । मातरिश्वा ॥ २ ॥

वेङ्कट०[2] ॥ २ ॥ बृहस्पतिरुद्गातृणाम् —

उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत् सवितेव प्र बाहू ।
अस्य क्रत्वाहन्यो३ यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥ ३ ॥

उपऽस्तुतिम् । नमसः । उत्ऽयतिम् । च । श्लोकम् । यंसत् । सविताऽइव । प्र । बाहू इति ।
अस्य । क्रत्वा । अहन्यः । यः । अस्ति । मृगः । न । भीमः । अरक्षसः । तुविष्मान् ॥ ३ ॥

वेङ्कट० [3]उपस्तुतिम्[3] प्रयच्छति[4] स्तुध्वमिति। एवमध्वर्यूणां हविषः उद्यतिम् अनुजानाति। होतुः च श्लोकम् यच्छति। सवितेव चोदयन् प्रसवाय बाहू प्रेरयति। [5]यः अस्मिल्लँोके[5] शत्रूणामहन्तव्यः भवति सः अस्य प्रज्ञानेन तथा भवति। सोऽयम् मृगः इव भयङ्करः राक्षसवर्जितः वृद्धिमान् ॥ ३ ॥

अस्य श्लोको दिवीयते पृथिव्यामत्यो न यंसद् यक्षभृद् विचेताः ।
मृगाणां न हेतयो यन्ति चेमा बृहस्पतेरहिमायाँ अभि द्यून् ॥ ४ ॥

अस्य । श्लोकः । दिवि । ईयते । पृथिव्याम् । अत्यः । न । यंसत् । यक्षऽभृत् । विऽचेताः ।
मृगाणाम् । न । हेतयः । यन्ति । च । इमाः । बृहस्पतेः । अहिऽमायान् । अभि । द्यून् ॥ ४ ॥

वेङ्कट० अस्य स्तोत्रं देवेषु वर्तते, पृथिव्याम् च। सोऽयम् अश्वः इव भ्रातृव्यं प्रयच्छति पूजाया[6] भर्ता स्तोतारं बिभर्तीति वा विविधप्रज्ञानः। मृगाणाम् हननाय व्याधानाम् इव [7]आयुधानि यस्य[7] इमाः वाचः बृहस्पतेः अहन्तव्यमायान्[8] द्योतमानान् राक्षसान् अभि यन्ति ॥ ४ ॥

ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः ।
न दूढ्ये३ अनु ददासि वामं बृहस्पते चयस इत् पियारुम् ॥ ५ ॥

---

१. नास्ति लपं. २. भाष्याभावः. ३-३. नास्ति मूको. ४. प्रयच्छ ल प्रस्तावः ५-५. यस्मिल्लोके अ[१]; योऽस्ति लोके वि[२]. ६. आजाया मूको. ७-७. आयुधान्यस्य वि[२] अ[१]. ८. °मानान् वि[२] लपं.

ये । त्वा । देव । उस्रिकम् । मन्यमानाः । पापाः । भद्रम् । उपऽजीवन्ति । पज्राः ।
न । दुःऽध्ये । अनु । ददासि । वामम । बृहस्पते । चयसे । इत् । पियारुम् ॥ ५ ॥

**वेङ्कट०** ये त्वा[1] देव[2]! अजवालमिव[3] मन्यमानाः साधुम् पापाः जनम्[4] उपजीवन्ति बलिनः । न दुर्बुद्धिभ्यस्तेभ्यः धनं तत् अनु क्रमेण ददासि । किन्तु बृहस्पते![5] तं हिंसकम् चयसे एव । चयतिर्वधकर्मा[6] ॥५॥

[7]इति द्वितीयाष्टके पञ्चमाध्याये द्वादशो वर्गः[7] ॥

**सुप्रैतुः सूयवसो न पन्था दुर्नियन्तुः परिप्रीतो न मित्रः ।**
**अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवन्तो अस्थुः ॥ ६ ॥**

सुऽप्रैतुः । सुऽयवसः । न । पन्थाः । दुःऽनियन्तुः । परिऽप्रीतः । न । मित्रः ।
अनर्वाणः । अभि । ये । चक्षते । नः । अपिऽवृताः । अपऽऊर्णुवन्तः । अस्थुः ॥ ६ ॥

**वेङ्कट०** सुष्ठु प्रकर्षेण गन्तव्यः [8]शोभनयवसः इव मार्गः दुर्नियमश्च शत्रूणां त्यक्तप्रीतिः इव[9] मित्रः । बृहस्पते! ये अस्मान् अभि पश्यन्ति ते अनश्वास्तिष्ठन्तु[10] अवरूढाः । तथा[11] अवगुण्ठिताश्चेत्[12] अपोर्णुवन्तः[13] तिष्ठन्तु । 'क्रीते सोमेऽपोर्णुते'[14] (तै ६,१,३,३) इत्यादि ब्राह्मणम् ॥ ६ ॥

**सं यं स्तुभोऽवनयो न यन्ति समुद्रं न स्रवतो रोधचक्राः ।**
**स विद्वाँ उभयं चष्टे अन्तर्बृहस्पतिस्तर आपश्च गृध्रः ॥ ७ ॥**

सम् । यम् । स्तुभः । अवनयः । न । यन्ति । समुद्रम् । न । स्रवतः । रोधऽचक्राः ।
सः । विद्वान् । उभयम् । चष्टे । अन्तः । बृहस्पतिः । तरः । आपः । च । गृध्रः ॥ ७ ॥

**वेङ्कट०** यम् स्तुतयः[15] ग्राममिव मार्गाः सम् यन्ति, समुद्रम् इव च स्रवन्त्यः नद्यः । [16]सः प्राज्ञः[16] द्यावापृथिव्योः अन्तः वर्तमानः[17] उभयम् पश्यति बृहस्पतिः, तरति च उदकानि काङ्क्षिता शत्रुधनानाम् ॥७॥

**एवा महस्तुविजातस्तुविष्मान् बृहस्पतिर्वृषभो धायि देवः ।**
**स नः स्तुतो वीरवद् धातु गोमद् विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥**

एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः । वृषभः । धायि । देवः ।
सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥८॥

**वेङ्कट०** एवं[18] महान्[19] बहुजननः वृद्धिमान् [20]बृहस्पतिः वृषभः[20] अन्तरिक्षे निहितः देवः । सः नः स्तुतः वीरवत् गोमत् च धनं प्रयच्छतु ॥ ८ ॥

[7]इति द्वितीयाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[7] ॥

---

१. त्वां वि[2] अ[1]. २. नास्ति लपं. ३. अश्वपाल° वि[1]; अजपाल° ल प्रस्तावः ४. धनम् लपं. ५. नास्ति मूको. ६. चरतिर्व° वि[2] अ[1] लपं. ७-७. नास्ति मूको. ८. इन्तव्यः वि[1] लपं. ९. एव वि[1]. १०. नश्चातिष्ठन्तु ल. ११. तदा अ[1]. १२. अवकुण्ठिता° मूको. १३. एवोर्णवोन्त° लपं; अपोर्णवन्तः वि[2] अ[1]. १४. °मे पौ.(पो वि[2].)र्णः मूको. १५. °ये वि[2] अ[1]. १६-१६. सुप्राज्ञ अ[1]. १७. °मानम् लपं. १८. एव लपं. १९. महा लपं. २०-२०. वृद्धि···वृषभः वि[2] अ[1].

[ १९१ ]

[1]अगस्त्यो मैत्रावरुणिर्ऋषिः । अप्तृणसूर्याः देवता (विषघ्नोपनिषद्)।
अनुष्टुप् छन्दः, दशम्यादिद्वादशान्तानां महापङ्क्तिः,
त्रयोदश्या महाबृहती[1] ।

**कङ्कतो न कङ्कतोऽथो सतीनकङ्कतः। द्वाविति प्लुषी इति न्य१दृष्टा अलिप्सत ॥ १ ॥**

कङ्कतः। न। कङ्कतः। अथो इति। सतीनऽकङ्कतः। द्वौ। इति। प्लुषी इति। इति। नि। अदृष्टाः। अलिप्सत ॥ १ ॥

**वेङ्कट०** शौनकः— 'बृहस्पतेरनर्वाणं कङ्कतोपनिषत्परम्।
अपां तृणानां सूर्यस्य [2]केचिदेतां[2] स्तुतिं विदुः ॥
ददर्श तदगस्त्यो वा[3] विषघ्नं विषशङ्कया।
अदृष्टाख्यो नष्टरूपः सूक्तस्यान्त्योऽत्र तु द्व्यृचः ॥' ( बृदे ४, ६३-६४) इति।

कङ्कतशब्दो 'यत्सीमन्तं कङ्कतस्ते' (तैब्रा २,७,१७,३) इति दर्शनाद् विलेखकवचनः। [4]किमयं कङ्कतः[4] उताहो न कङ्कतः। अपि वा उदकजः कश्चन कङ्कतसर्पोऽपि[5] कङ्कतो भवति विलेखनात्। कृतस्ते[6] द्वौ इमौ दन्तौ भवतः शरीरस्थौ, मम दाहकौ च तौ ततश्च माम् अदृष्टाः प्रच्छन्नचारिणः सर्पा एव नि अलिप्सत, न तु पुनः कण्टकेन कृत्तोऽहमिति[7] ॥ १ ॥

**अदृष्टान् हन्त्यायत्यथो हन्ति परायती। अथो अवघ्नती हन्त्यथो पिनष्टि पिंषती ॥ २ ॥**

अदृष्टान्। हन्ति। आऽयती। अथो इति। हन्ति। पराऽयती।
अथो इति। अवऽघ्नती। हन्ति। अथो इति। पिनष्टि। पिंषती ॥ २ ॥

**वेङ्कट०** सर्पान् हन्ति काचिदागच्छन्त्योषधिर्वीर्यवत्तमा। अथापरा दष्टशरीरे परागच्छन्ती हन्ति[8] मध्यमा। अथो अल्पवीर्या हन्यमाना[9] हन्ति दृषदुपलयोः। अथापरा शरीरे[10] पिष्यमाणा विषम् पिनष्टि ॥ २ ॥

**शरासः कुशरासो दर्भासः सैर्या उत। मौञ्जा अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत ॥ ३ ॥**

शरासः। कुशरासः। दर्भासः। सैर्याः। उत। मौञ्जाः। अदृष्टाः। वैरिणाः। सर्वे। साकम्। नि। अलिप्सत ॥

**वेङ्कट०** शरादयः तीक्ष्णाग्रा ओषधिविशेषाः, अदृष्टाः सर्पाः, त इमे सर्वे सह मा नि अलिप्सत इति दाहातिशयादाह ॥ ३ ॥

**नि गावो गोष्ठे असदन् नि मृगासो अविक्षत।
नि केतवो जनानां न्य१दृष्टा अलिप्सत ॥ ४ ॥**

---

१-१. नास्ति मूको. २-२. नास्ति वि[2] अ[1]. ३. हि मूको. ४-४. किं क° ल. ५. कङ्कतः स° वि[1] अ[2]. ६. कृतं ते वि[1,2] अ[1]. ७. कृत्तो हरति वि[2] अ[1]. ८. नास्ति वि[1] ल लपं. ९. °ल्पवीर्याऽहन्यः ल; °र्या अह्न्य° ल शोधः. १०. शारीरं वि[1] ल लपं.

नि । गार्वः । गोऽस्थे । असदन् । नि । मृगार्सः । अविक्षत ।
नि । केतर्वः । जनानाम् । नि । अदृष्टाः । अलिप्सत ॥ ४ ॥

**वेङ्कट०** **प्रदोषवेलायां स्वापार्थम्** गावः गोष्ठे नि असदन् । **तथा मृगाश्च** नि अविक्षत । **तथा सुषुप्सूनां** जनानाम् **प्रज्ञानानि चोपरमन्ति । अस्यां वेलायां सर्पाः बिलादुत्थाय[1] विषेण मामलिम्पन्** ॥ ४ ॥

**एत उ त्ये प्रत्यदृश्रन् प्रदोषं तस्करा इव । अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥५॥**

एते । ऊँ इति । त्ये । प्रति । अदृश्रन् । प्रऽदोषम् । तस्कराःऽइव ।
अदृष्टाः । विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥ ५ ॥

**वेङ्कट०** **अपि च अमी रात्रिमुखम्[2]** प्रति **दृश्यन्ते चोरा** इव । **तेऽमी सर्वैः** अदृष्टाः **स्वयं सूक्ष्मेण चक्षुषा दृष्टविश्वजनाः । यूयम्** प्रतिबुद्धाः **स्थ[3]** ॥ ५ ॥

[4]**इति द्वितीयाष्टके पञ्चमाध्याये चतुर्दशो वर्गः**[4] ॥

**द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा ।**
**अदृष्टा विश्वदृष्टास्तिष्ठतेलयता सु कम् ॥ ६ ॥**

द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा ।
अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत । इलयत । सु । कम् ॥ ६ ॥

**वेङ्कट०** [5]"ये वामी रोचने[5] दिवो ये वा सूर्यस्य रश्मिषु । [5]येषामप्सु सदस्कृतं[5] तेभ्यः सर्पेभ्यो **नमः**' ( मा १३,८ ) **इति मन्त्रः । यूयमेवंविधाभिजनाः[6] यथासुखम्** तिष्ठत[7] **सञ्चरत च[8] शोभनम्** ॥ ६ ॥

**ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः ।**
**अदृष्टाः किं चनेह वः सर्वे साकं नि जस्यत ॥ ७ ॥**

ये । अंस्याः । ये । अङ्ग्याः । सूचीकाः । ये । प्रऽकङ्कताः ।
अदृष्टाः । किम् । चन । इह । वः । सर्वे । साकम् । नि । जस्यत ॥ ७ ॥

**वेङ्कट०** ये **अंसेन प्रहरन्ति[9]** ये[10] **च अङ्गैः** ये **वा पुच्छाग्रैः ये वा दन्तैः प्रकृन्तन्ति[11] तेषां सर्वेषां** किम् **अस्मिन् मनुष्ये कार्यम् । शीघ्रमस्मात्[12]** साकम् **नितराम् उपक्षीणा भवत** ॥ ७ ॥

**उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।**
**अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ८ ॥**

---

१. बलादु° वि[1]. २. रात्रिषु मुख्यम् वि[1]; रात्रिमुख्यम् लपं. ३. स्थः लपं. ४-४. नास्ति मूको. ५-५. यो दो राच° वि[2]; ये दा रो° लपं. ६. °भिर्जना वि[2] अ[1]. ७. तिष्ठथ मूको; हे नराः ! इति वाक्यशेषः. ८. नास्ति वि[2] लपं. ९. वहन्ति वि[2] लपं. १०. यैः वि[1]. ११. प्रकृन्ति वि[2] लपं. १२. अस्मान् मूको.

उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा ।
अदृष्टान् । सर्वान् । जम्भयन् । सर्वाः । च । यातुऽधान्यः ॥ ८ ॥

वेङ्कट० एभिः[1] मन्त्रैर्विभीषिका[2] क्रियते । हे सर्पाः! असौ सूर्यः पुरस्तात् उत् एति दृष्टसर्वजनः सर्पाणां हन्ता सर्वान् एव सर्पान् विनाशयन् सर्वाः च रात्रौ वर्तमाना हिंसानिलयभूता यातुधानजातीः ॥ ८ ॥

**उदपप्तदसौ सूर्यः पुरु विश्वानि जूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥९॥**

उत् । अपप्तत् । असौ । सूर्यः । पुरु । विश्वानि । जूर्वन् । आदित्यः ।
पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥ ९ ॥

वेङ्कट० उत्पपात असौ सूर्यः पुरूणि व्याप्तानि रक्षांसि हिंसन् आदित्यः उदयपर्वतेभ्यः ॥ ९ ॥

**सूर्ये विषमा सजामि दृतिं सुरावतो गृहे ।**
**सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१०॥**

सूर्ये । विषम् । आ । सजामि । दृतिम् । सुराऽवतः । गृहे ॥ सः । चित् । नु । न । मराति ।
नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१०॥

वेङ्कट० सूर्ये अहम्[3] एतद् विषम् आ सजामि यथा सुरार्थी दृतिम् सुराकारगृहे प्रातरेवासजति । सः च सूर्यः कदाचिद् अपि विषलिप्तोऽपि न म्रियते तथैव वयम् अपि न म्रियेमहि । दूरे विषस्य योजनम् इन्द्रः करोतु । मधुरा सूर्ये दीप्तिः सुषुम्णाख्या च[4] चन्द्रमसमाप्याययन्ती विष! त्वा मधु करोतु ॥ १० ॥

[5]इति द्वितीयाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[5] ॥

**इयत्तिका शकुन्तिका सका जघास ते विषम् ।**
**सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥११॥**

इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् ॥ सो इति । चित् । नु । न । मराति ।
नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥

वेङ्कट० इयत्येषा[6] भवतीति प्रादेशमात्रपरिमाणां शकुन्तिकां निर्दिशति, पिण्डमात्रां[7] वा । ताम्रवर्णा सर्पघातिनीम् । हत्वा सा तव सर्प! विषम् भक्षयति[8] ॥ ११ ॥

---

१. एवं वि[1] लपं. २. °षित लपं. ३. तम् वि[1] लपं. ४. नास्ति वि[1] लपं. ५-५. नास्ति मूको. ६. इयतत्येषा वि[1] ल लपं. ७. °मात्रं मूको. ८. भक्षति वि[2].

त्रिः सप्त विंष्पुलिङ्गका विषस्य पुष्यमक्षन् ।
ताश्चिन्नु न मरन्ति नो वयं मरामारे अस्य योजनं हरिष्ठा मधुं त्वा मधुला चकार ॥१२॥

त्रिः । सप्त । विष्पुलिङ्गकाः । विषस्यं । पुष्यम् । अक्षन् ॥ ताः । चित् । नु । न । मरन्ति । नो इतिं । वयम् । मराम् । आरे । अस्य । योजनम् । हरिऽस्थाः । मधुं । त्वा । मधुला । चकार ॥१२॥

वेङ्कट० अयं तान्त्रिकाणां भणितिप्रकारः । विषचटिका[1] विष्पुलिङ्गकाः[2] सङ्घीभूताः[3] सर्पानतितिष्ठन्ति । एकविंशतिः विष्पुलिङ्गकाः [4]विषस्य अग्रम्[4] अश्नन्ति ॥ १२ ॥

नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधुं त्वा मधुला चकार ॥ १३ ॥

नवानाम् । नवतीनाम् । विषस्यं । रोपुषीणाम् ।
सर्वासाम् । अग्रभम् । नामं । आरे । अस्य । योजनम् । हरिऽस्थाः । मधुं । त्वा । मधुला । चकार ॥१३॥

वेङ्कट० ओषधीनामेकोनशतं[5] विषघ्नं भवति । रुपिश्छेदनकर्मा । तासां सर्वासाम् एवाहम् नाम अग्रभम् [6]इयमेवन्नाम्नीति[6] ॥ १३ ॥

त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः । तास्ते विषं वि जंभ्रिर उदकं कुम्भिनीरिव ॥१४॥

त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ।
ताः । ते । विषम् । वि । जभ्रिरे । उदकम् । कुम्भिनीःऽइव ॥ १४ ॥

वेङ्कट० एकविंशतिः मयूर्यः, सप्त च स्वयं सरन्त्यः[7] गङ्गाद्या नद्यः[8], ताः ते सर्प! विषम् विविधं हरन्ति, यथा उदकम् कुम्भवत्यः स्त्रियः ॥ १४ ॥

इयत्तकः कुषुम्भकस्तकं भिनद्म्यश्मना । ततो विषं प्र वांवृते पराचीरनुं संवतः ॥१५॥

इयत्तकः । कुषुम्भकः । तकम् । भिनद्मि । अश्मना ।
ततः । विषम् । प्र । ववृते । पराचीः । अनुं । सम्ऽवतः ॥ १५ ॥

वेङ्कट० इयत्प्रमाणः नकुलः, स नेदानीं[9] यदि तव विषं हन्ति, ततः तकम् अयुक्तकारिणम् अहम् अश्मना भिनद्मि । ततश्च भीतः स इहागच्छति । ततः च विषम् हन्तुम् उद्युक्तो भवति दूरस्थाः भूमीः प्रति ॥ १५ ॥

---

१. °चमिका वि[२] अ[१]. २. विष्फुलि° वि[१] लपं; हविष्फुलि° वि[२] अ[१]. ३. संघटीभुताः ( ता ) वि[१]; सङ्घीभूत्वाः वि[२] अ[१] ल लपं. ४-४. विषं साग्रं अ[१]; विषं प्राग्रं लपं; विषस्राग्र ( °ग्रा वि[१] )म् वि[१, २]. ५. एकोनशतम् वि[२] अ[१]. ६-६. इयमेव नाम्नि भवति इयमेवे नाम्नीति वि[१]. ७. सरस्वत्यः वि[१, २] अ[१] लपं. ८. नास्ति वि[१] लपं. ९. वेदानीं वि[१] ल लपं.

**कुषुम्भकस्तदब्रवीद् गिरेः प्रवर्तमानकः। वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥१६॥**

कुषुम्भकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः ।
वृश्चिकस्य । अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥ १६ ॥

**वेङ्कट०** गिरेः चरणार्थं प्रवर्तमानः नकुलः तत् इदं वचनम्[1] अब्रवीत्, वृश्चिकस्य विषम् अरसम् भवति। अरसम् वृश्चिक! ते विषम् इति ॥ १६ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये षोडशो वर्गः[2] ॥

—※—

इति ऋग्वेदे सभाष्ये प्रथमं मण्डलं समाप्तम् ॥



१. नास्ति वि[2] अ[1]. २-२. नास्ति मूको.

# शोधपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८५ | ५ | बद्वधे | बद्वधे |
| ,, | १८ | तयापि | तथापि |
| ,, | २५ | नास्ति६ | नास्ति |
| ,, | ३० | तथापि | तयापि |
| ५८८ | ७ | वृष्ठ्या | वृष्ट्या |
| ५९५ | ५ | यद्धात् | न्यद्धात् |
| ६०१ | ७ | शस्तैश्च | शस्त्रैश्च |
| ६०३ | ५ | °श्रवणे न | °श्रवणेन |
| ६०४ | १३ | सह गन्ध्यः | सहगन्ध्यः |
| ६०८ | १६ | °रमिश्च° | °रश्मिश्च° |
| ६१० | २६ | ध्रवेभिः | ध्रुवेभिः |
| ६१३ | २ | देवताः | देवता |
| ६१७ | ८ | इच्छमानः | इच्छमानाः |
| ,, | २६ | °रित्येषु | °रित्येष |
| ६२१ | ८ | देवताः | देवता |
| ,, | १३ | शृणत | शृणुत |
| ६२६ | ३ | देवताः | देवता |
| ६३१ | ५ | पतत् | पतत |
| ,, | १० | देवताः | देवता |
| ६३६ | १० | देवताः | देवता |
| ६३९ | २४ | शुभम्° | शुभम्° |
| ६४२ | २५ | देवताः | देवता |
| ६५७ | ४ | सामथ्या- | सामर्थ्या- |
| ६५९ | २६ | वर्ति' | वर्तिः' |
| ६६७ | २३ | व्रतानि | व्रतानि |
| ६७१ | २ | °वर्त्तनो | °वर्तनी |
| ,, | २३ | देवते | देवता |
| ६७६ | ४ | वर्षितारौ | वर्षितारौ ! |
| ६७९ | १५ | सम्यग्गाम° | सम्यग्गम° |
| ६८० | १ | 'दवा | 'देवा |
| ,, | ११ | सऽवीर्यं° | सुऽवीर्यं° |
| ६८३ | १ | अध्वर्यु: | अध्वर्युः |
| ६८६ | ७ | रथेभ्यः | रथेभ्यः |
| ६९२ | ३ | दिवाश्च° | दिवाश्रि° |
| ६९७ | २५ | ययमी° | यंयमी° |
| ७०७ | १५ | °पावर्तते | °पावर्तत |
| ७१३ | २५ | काञ्चि° | कञ्चि° |
| ७२२ | २० | रवशब्दः | रवथशब्दः |
| ७२७ | ४ | सिन्धुः । | अदितिः । सिन्धुः । |
| ७३४ | १ | हरिऽभिः | हरिऽभिः |
| ७३९ | १६ | °काश्चा- | °कश्चा- |
| ७४० | ११ | °ब्दमनुषक्तव्यम् | °ब्दोऽनुषक्तव्यः |
| ७४३ | १७ | इन्दियम् | इन्द्रियम् |
| ७४७ | २ | अविन्दत् | अविन्दत् |
| ,, | ४ | पुष्टम् | पुष्टम् |
| ,, | ९ | °न्यादयः | °न्यादीः |
| ७५० | २२ | चिन्तस° | चित्तान्तस्° |
| ७५५ | २० | इन्द्रिया | इन्द्रियाय |
| ७५९ | १२ | °ययभ्य° | °यमभ्य° |
| ,, | १७ | देवताः | देवता |
| ,, | २२ | °तारयेत्य° | °तारयतेत्य° |
| ७६१ | २० | रोदसी | रोदसी |
| ७६३ | १ | चक्षसम् | चक्षणम् |
| ,, | ६,१० | महत्वम् | महत्त्वम् |
| ७६५ | १४ | अतता | आतता |
| ७६६ | २४ | तरन्तम् | तरन्तम् |
| ७६९ | २ | वेदः | देवः |
| ,, | १३ | हृदा | हृदा |
| ७७० | २७ | जानीथ | न जानीथ |
| ७७२ | ५ | त्वुदित° | तूदित° |
| ७७४ | २० | दवाः ! | देवाः ! |
| ७७७ | १ | निवध्यमनो | निबध्यमानो |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७७७ | २१ | मृ॒ळय॒न्तः | मृ॒ळयन्तः |
| ७७९ | ११ | म॒म॒न्हु॒ता॒म् | म॒म॒हु॒न्ता॒म् |
| ७९९ | ६ | °विभ्वावा° | °विभ्ववा° |
| ८०३ | ४ | पूजययि° | पूजयि° |
| ८०६ | १० | ॐ॒ इ॒तिं | ॐ॒ इतिं |
| ८०८ | १ | निं° | नि° |
| ,, | ९ | युवन्नरा | युवं नरा |
| ८०९ | २४ | असुरः | असुरैः |
| ८०९ | २६ | स्वः | स्वः आदित्यम् |
| ८१० | १३ | °द्रादुद्रा° | °द्रादुद्रा° |
| ८११ | २२ | वारये° | अवारये° |
| ८१८ | २८ | सनर्थौ | सन्नर्थौ |
| ८१९ | ४ | न | नः |
| ८२४ | १ | सुरामश्वि° | सुराममश्वि° |
| ,, | २१ | सरडा | सरडो |
| ८२७ | ७ | °मेवा | °मेव |
| ८३२ | १० | दीप्ताः | दीप्तः |
| ८३४ | २५ | दशना° | दर्शना° |
| ८४१ | १७ | °न्धिनमेवं° | °न्धि एवं |
| ८४२ | ८ | प्रथमाः | प्रथमा |
| ८४७ | ५ | कतुम् | कर्तुम् |
| ८७२ | ४ | भोक्तारौ | भोक्तारौ! |
| ८७३ | २६ | °यसीमेयो° | °यसीमयो° |
| ८८८ | १६ | पदेवेऽ° | पेदवेऽ° |
| ८९६ | २९ | वेष्टयित्रो | वेष्टयित्री |
| ९०५ | २६ | यतम् | रयतम् |
| ९०७ | १ | छिन्नङ्घा° | छिन्नजङ्घा° |
| ९०९ | ६ | हुवे | हवे |
| ,, | १४ | मनोजवम् | मनोजुवम् |
| ९२६ | २३ | °दिकरेण | °दिकरणेन |
| ९२७ | ९ | दृक्ष | तृक्ष |
| ९३१ | ३ | निरोध्री | निरोद्ध्री |
| ९३२ | १५ | वर्तमा° | वर्धमा° |
| ,, | ३० | °नासि | °नसि |
| ९३६ | २६ | दुर्हणा° | दुर्हणा° |
| ९६३ | १५ | °श्वमुखः | °श्वसुखः |
| ९६६ | ९ | शत्रभ्यो | शत्रुभ्यो |
| ९७२ | ८ | °रयुज्जत | °रयुञ्जत |
| ९७४ | २२ | तुज्जतें | तुञ्जतें |
| ९७७ | ४ | °ध्यऽये | °ध्याये |
| ९९५ | २० | रात्रीः | रात्रिः |
| ९९६ | ४ | आ॒श्र॒वन्यतः | आ॒श्र॒वयन्तः |
| ९९७ | २ | उप दसद् | उपदस्तं |
| १००० | २२ | ई॒र॒ते । | वृथा। ई॒र॒ते |
| १००३ | ६ | जगयाः | जुगुर्याः |
| १००४ | २० | धावते | धावते |
| १००८ | २४ | यज्ञियाः | यज्ञियाः |
| १०१२ | ३ | °युच्छम् | °युच्छन् |
| १०२० | ८ | द्यन् | द्यून् |
| १०२३ | १९ | युज्जाथे | युञ्जाथे |
| १०२७ | १ | °ब्रं प्रि° | °ब्रह्मप्रि° |
| १०५० | २५ | °मुभिर्गू° | °मभिर्गू° |
| १०६१ | ६ | वृष्टयन्मु° | वृष्ट्युन्मु° |
| १०६७ | २३ | विषूची° | विषूची° |
| १०७१ | २४ | तेनायन् | तेनायनन् |
| १११९ | २२ | °त्यौ मम! | °त्यौ! मम |
| ११२१ | १२ | कर्मवन्तो | कर्मवन्तौ |
| ११२३ | १६ | °गुण | गुणं |
| ११२७ | ६ | बंहूले | बंहुले |
| ११२९ | १६ | °न्नर्धन् | °न्नूर्धन् |
| ११३२ | ६ | °यितारः | °यितारम् |
| ११४० | २४ | °जननंः | °जननः |
| ११४२ | १९ | °कुङ्कताः | °कुङ्कताः |
| ११४४ | ४ | मराम् | मराम |



